


# चक्रदत्तः ।

( चिकित्सासंग्रहग्रन्थः )

श्रीचक्रपाणिना विरचितः ।

श्रीशिवदाससेनविरचितया

तत्त्वचन्द्रिकासमाख्यया व्याख्यया समलङ्कृतः ।

पण्डितकुलपति बि, ए, उपाधिधारि-

श्रीमज्जीवानन्दविद्यासागरभट्टाचार्य्यात्मजाभ्यां

पण्डित-श्रीआशुबोध-विद्याभूषण-पण्डित-श्रीनित्यबोध-

विद्यारत्नाभ्यां प्रतिसंस्कृतः प्रकाशितश्च ।

चतुर्थसंस्करणम् ।

कलिकातामहानगर्य्याम्

वाचस्पत्ययन्त्रे

मुद्रितः ।

इं १९१४



चतुर्मुद्रार्घं ।

# चक्रदत्तः ।

( चिकित्सासंग्रहग्रन्थः )




## श्रीचक्रपाणिना विरचितः ।

श्रीशिवदाससेनविरचितया

तत्त्वचन्द्रिकासमाख्यया व्याख्यया समलङ्कृतः ।

पण्डितकुलपति बि, ए, उपाधिधारि-

श्रीमज्जीवानन्दविद्यासागरभट्टाचार्य्यात्मजाभ्यां

पण्डित-श्रीआशुबोध-विद्याभूषण-पण्डित-श्रीनित्यबोध-

विद्यारत्नाभ्यां प्रतिसंस्कृतः प्रकाशितश्च ।

चतुर्थसंस्करणम् ।

कलिकातामहानगर्य्याम्

वाचस्पत्ययन्त्रे

मुद्रितः ।

ई १८१४



चतुर्द्दार्घ.।

प्रकाशक—{ पण्डित-श्रीआशुबोध-विद्याभूषण
तथा
पण्डित-श्रीनित्यबोध-विद्यारत्न ।

प्राप्तिस्थान—२न०, रमानाथ मजुमदार ष्ट्रीट्, कलिकाता ।
ह्यारिसन रोड—पोष्ट अफिस ।

प्रिण्टर—वि, वि, मुखर्जी ।
२ न०, रमानाथ मजुमदार ष्ट्रीट्, कलिकाता ।

# सूचीपत्रम् ।

## ज्वरचिकित्सा ।

( Fever. )

## उन्मादचिकित्सा ।
( Insanity. )



## अपस्मारचिकित्सा ।
( Epilepsy. )



## वातव्याधिचिकित्सा ।
( Nervous diseases. )

✓ श्लीपदचिकित्सा ।
(Elephantiasis.)



विद्रधिचिकित्सा ।
(Deep-seated Abscess.)



व्रणशोथचिकित्सा ।
(Boils, Inflammation of wound.)



नाड़ीव्रणचिकित्सा ।
(Sinus, Fistula.)



भगन्दरचिकित्सा ।
(Fistula in Ano.)



उपदंशचिकित्सा ।
(Syphilis, soft Chancre.)



शूकदोषचिकित्सा ।
(On the disease of the penis, arising from the application of the poisonous insects to promote its growth.)



भग्नचिकित्सा ।
(Fracture.)

समाप्तम् ।

---

# चक्रदत्तः ।

गुणत्रयविभेदेन मूर्त्तित्रयमुपेयुषे ।
त्रयीभुवे त्रिनेत्राय त्रिलोकीपतये नमः ॥ १ ॥
नानायुर्वेदविख्यात-सद्योगैश्चक्रपाणिना ।
क्रियते संग्रहो गूढ़-वाक्यबोधकवाक्यवान् ॥ २ ॥

---

यः समर्थदिशीथो दधार धरणीधरम् ।
कलभसकर वन्दे तं देवं देवकौसुतम् ॥
तात. किमत्र भातेति य दृष्टा दृष्टपूर्वकम् ।
चभूत् स्कन्देऽपि सन्देहस्तं देह शिवयोर्भजे ॥
टीका रत्नप्रभा चक्र-दत्तनिर्म्मितसंग्रहे ।
यथाभ्यासे तथाप्येष सचेपात्र समीयाम. ॥
विस्तरोक्तश्च सचिन्त्य प्रतिविम्बं च दुर्वच ।
व्याख्यान्तरञ्च निश्चिन्त्य टीकेयं क्रियते मया ॥

विशिष्टशिष्टाचारानुमितश्रुतिबोधितकर्त्तव्यताक प्रारिप्सितग्रन्थसमाप्तिफलक तत्प्रति-बन्धकविघ्नध्वंसनात्मकमकं वा स्वकृतमिष्टदेवतानमस्कारं शिष्यशिक्षार्थमादौ निबध्नाति, गुणत्रयेत्यादि।—गुणत्रय सत्त्वरजस्तमोरूपम्, मूर्त्तित्रयं ब्रह्महरिहरस्वरूपम् ॥ १ ॥

प्रेक्षावतां प्रवृत्त्यर्थं सम्बन्धाभिधेयप्रयोजनमाह, नानेत्यादि।—सदिति निबद्धम्। गूढवाक्य गूढार्थं वचनम्, तद्बोधक तदर्थप्रतिपादकं यद् वचनं तद्युतम्, यथा—नवज्वरे षडङ्गादिभेषजविधानं, तथा तत्रैव "न दद्यात् तत्र भेषजम्" इति भेषजनिषेधोऽपि, अतो विधिनिषेधयोरेकविषयत्वेन विरोध. स्यात्, अतस्तत्परिहारार्थं "मुख्यभेषजसम्बन्धो निषिद्ध" इत्यादि वचनं निबद्धमिति। सदृष्टेन सह सद्योगानां वाच्य-वाचकलक्षण. सम्बन्ध., सद्योगा एवाभिधेया, अवान्तर-प्रयोजनं चिकित्सितम्, मुख्यन्तु आरोग्यमिति ॥ २ ॥

# चक्रदत्तः ।

गुणत्रयविभेदेन मूर्त्तित्रयमुपेयुषे ।
त्रयीभुवे त्रिनेत्राय त्रिलोकीपतये नमः ॥ १ ॥
नानायुर्वेदविख्यात-सद्योगैश्चक्रपाणिना ।
क्रियते संग्रहो गूढ़-वाक्यबोधकवाक्यवान् ॥ २ ॥

---

यः समस्तदेहीयो दधार धरणीधरम् ।
कंसध्वंसकरं वन्दे तं देवं देवकीसुतम् ॥
तातः किमयं भातीति यं दृष्ट्वा दृष्टपूर्वकम् ।
अभूत् स्कन्देऽपि सन्देहस्तं देवं शिवयोर्भजे ॥
टीका रत्नप्रभा चक्र-दत्तनिर्मितसंग्रहे ।
यद्यप्यास्ते तथाप्येष सङ्क्षेपाय समीयम ॥
विस्तरोक्तश्च संक्षिप्य प्रतिक्षिप्य च दुर्बधः ।
व्याख्यान्तरश्च निक्षिप्य टीकेयं क्रियते मया ॥

विशिष्टशिष्टाचारानुमितश्रुतिबोधितकर्त्तव्यताकं प्रारिप्सितग्रन्थसमाप्तिफलकं तत्प्रतिबन्धकविघ्नध्वंसफलकं वा स्वग्रन्थकृतमिष्टदेवतानमस्कारं शिष्यशिक्षार्थमादौ निबध्नाति, गुणत्रयेत्यादि ।—गुणत्रयं सत्त्वरजस्तमोरूपम्, मूर्त्तित्रयं ब्रह्मविष्णुहरस्वरूपम् ॥ १ ॥

प्रेक्षावतां प्रवृत्त्यर्थं सम्बन्धाभिधेयप्रयोजनमाह, नानेत्यादि ।—सदिति निरूपकम् । गूढवाक्यं गूढार्थं वचनम्, तद्बोधकं तदर्थप्रतिपादकं यद् वचनं तद्युक्तम्, यथा—नवज्वरे षडङ्गादिभेषजविधानं, तथा तत्रैव "न दद्यात् तत्र भेषजम्" इति भेषजनिषेधोऽपि, अतो विधिनिषेधयोरेकविषयत्वेन विरोधः स्यात्, अतस्तत्परिहारार्थं "मुख्यभेषजसम्बन्धो निषिद्धः" इत्यादि वचनं निबद्धमिति । ग्रन्थेन सह सद्योगानां वाच्य-वाचकलक्षणः सम्बन्धः, सद्योगा एवाभिधेयाः, अवान्तरप्रयोजनं चिकित्सितम्, मुख्यन्तु आरोग्यमिति ॥ २ ॥

# अथ ज्वर-चिकित्सा ।

रोगमादौ परीक्षेत तदनन्तरमौषधम् ।
ततः कर्म्म भिषक् पश्चाज्ज्ञानपूर्व्वं समाचरेत् ॥ १ ॥

नवज्वरे दिवास्वप्न-स्नानाभ्यङ्गान्नमैथुनम् ।
क्रोधप्रवातव्यायाम-कषायांश्च विवर्ज्जयेत् ॥ २ ॥

ज्वरे लङ्घनमेवादावुपदिष्टमृते ज्वरात् ।
क्षयानिलभयक्रोध-कामशोकश्रमोद्भवात् ॥ ३ ॥

---

अथ चिकित्साक्रममाह, रोगमित्यादि ।—आदौ निदानपूर्व्वरूपादिभिः रोगं परीक्षेत । तदनन्तरं रोगपरीक्षानन्तरमौषधं परीक्षेत । ज्ञानपूर्व्वमिति कर्म्मदर्शन-जनितज्ञानपूर्व्वम्, ज्ञायते अनेनेति ज्ञानं शास्त्रं, तत्पूर्व्वकमिति वा ॥ १ ॥

अथ ज्वरस्य सर्व्वरोगप्रधानत्वात् प्रथमं तच्चिकित्सिते वक्तव्ये क्रममपि भिषक् निदानसेवनादवर्ज्जनमिव भवतीति निदानपरिवर्ज्जनस्यैव दरीयस्त्वात् प्रथमं निदान परिवर्ज्जनमेव चिकित्सितमाह, नवज्वर इत्यादि ।—अन्नात् गुर्व्वन्नं, लघुन्नस्य विधानात् । अत एवोक्तं हारीते—"गुर्व्वन्नभोजनाच्चापि विदग्धो दोष-कोपनम्" इति । कषायांश्चेति—"न तु कल्पनमुद्दिश्य कषायः प्रतिषिध्यते" इति चरकवाक्यस्वरसात्, कषायशब्देन कषायरसमात्रमुच्यते, न तु स्वरसादिः । अत एव तन्त्रान्तरेऽपि—"कषायरसयुक्तस्निग्धशालाभ्यञ्जनं नवज्वरे वर्ज्जयेत्" इत्युक्तम् । हरिचन्द्रेणापि "नात्र स्वरसादीनां निषेधः" इत्युक्तम् । तथा—"स्तभ्यन्ते न विपच्यन्ते कुर्व्वन्ति विषमज्वरम् । दोषा बद्धाः कषायेण स्तम्भित्वात् तरुणज्वरे" इति चरकवचने स्तम्भित्वा-दित्यत्र हेतुः कषायरसवर्ज्जनाभिप्रायेणैव सङ्गच्छते । उक्तं हि "कषायः स्तम्भन शीतः" इति । स्तभ्नाति येन सः स्तम्भनः । वाग्भटेऽप्युक्तं—"पित्तश्लेष्मज्वरेऽपि कषायस्तु न शस्यते । नवज्वरे मलस्तम्भात् कषायो विषमज्वरम् । कुरुतेऽरुचिहृल्लास-हिक्काऽऽध्मानादिकानपि" इति ॥ २ ॥

"आमाशयसमुत्थानां पूर्व्वं लङ्घनमौषधम्" इत्युक्तम् ; ज्वरोऽप्यामाशयसमुत्थः, अत-स्तत्र लङ्घनमुपदिशति, ज्वरे लङ्घनमित्यादि ।—यद्यपि लङ्घनसंज्ञायां "चतुष्प्रकारा संशुद्धि" इत्यादिना दशविधमेव लङ्घनमुक्तं, तथापि व्यायामप्रवातयोर्वर्ज्जनीयत्वेनैव

आमाशयस्थो हत्वाग्निं सामो मार्गान् पिधापयन् ।
विदधाति ज्वरं दोषस्तस्माल्लङ्घनमाचरेत् ॥ ६ ॥
अनवस्थितदोषाग्नेर्लङ्घनं दोषपाचनम् ।

---

क्षमत्वात् संशोधनादीनामावस्थाविशेषनियतत्वात् पारिशेष्यादुपवास एव लङ्घन-शब्देनोच्यते। अत एव लङ्घनमेवेत्येवकारेण संशोधनादिरूपं लङ्घनं निषिध्यते। तेन ज्वरस्य पूर्वरूपे यवागूपानादिविधानं तस्य न निषेधः। वाग्भटेनापि "सामा अप्रवृद्धेऽपि परिशेषात् लङ्घनम्" इत्यनेन नवज्वरे वमनादिरूपलङ्घनापेक्षया परि-शेषलङ्घनप्रतिषेधं कुर्वता संशोधनादिरूपं लङ्घनं निषिध्यते। किं वा चरकेण निदानस्थाने "हितं लघ्वशनमपतर्पणं वा" इति यदुक्तम्, तत् पूर्वरूपावस्थायाम्, अत्रावस्थायान्तु लङ्घनमेवेत्येवकारेण लघ्वशनमपि निषिध्यते इति ज्ञेयम्। ननु लङ्घन-हयोर्वि कफपित्तज्वरव्याधिषु मध्ये ज्वरं पठित्वा उक्तं—"पाचनैस्तान् भिषक् प्राज्ञः प्रायेणादावुपाचरेत्" इति, इह तु लङ्घनमेवादावित्यतो विरोधः? नैवम्, तद्वचनप्रयोगस्यादौ पाचनं, न तु ज्वरस्यादावित्यवगम्यते। किं वा आदावेव लङ्घनं कार्यमिति योज्यम्। तेन जीर्णज्वरे न लङ्घनं कार्यमिति बोधयति। उक्तं हि वाग्भटे—"मुक्तवातक्षयागन्तु-जीर्णज्वरेषु लङ्घनम्। नेष्यते तेष्वभिहितं शमनं यत्र कर्त्तव्यम्" इति। हारीतेन तु—"पित्तश्लेष्मविघातार्थं कुर्याद्वमनमादितः" इति यदुक्तं, तत् कफप्रधानामिष्यादिविषयामामावस्थायां ज्ञेयम्। आमाशयशब्देन धातुक्षयकृतं ज्वरं किं वा रागरक्तकृतं ज्वरं व्यवच्छिनत्ति। अग्निशब्देन निरामाग्निग्रहणम्, उक्तं हि "मुक्तवातक्षयागन्तुजीर्णज्वरेषु लङ्घनम्। नेष्यते" इति। किं वा अयानिल-शब्देन धातुक्षयकुपितानिलग्रहणम्। यदुक्तं—"वायोर्धातुक्षयात् कोपो मार्गस्यावरणेन च" इति। यस्तु वायुर्मार्गावरणेन कुप्यति, स आवरकधर्मितया प्रायेण सामो भवति। तत्र लङ्घनं मात्रया कर्त्तव्यमेव। यदुक्तं "सामे वातेऽपि लङ्घनम्" इति। अनिलज्वरमभिधायापि कामादिज्वराभिधानम्, कामादिज्वरेषु कामादिभिरेव वातकोपो भवति, तेन प्रथममपि वातसम्बन्धे कामादिज्वराणाम् अलङ्घनीयत्वोपदर्शनार्थम् ॥ ५ ॥

लङ्घनोपपत्त्यर्थं ज्वरस्य सम्प्राप्तिमाह, आमाशयस्थ इत्यादि।—साम टक। अत्र धातुदोर्निःसरणस्थानं रक्षादिति लभ्यते ॥ ६ ॥

लङ्घनफलमाह, अनवस्थितेत्यादि।—सुगमम्। अनवस्थितौ स्वस्थाने समाने

ज्वरघ्नं दीपनं काङ्क्षा-रुचिलाघवकारकम् ॥ ७ ॥
प्राणाविरोधिना चैनं लङ्घनेनोपपादयेत् ।
बलाधिष्ठानमारोग्यं यदर्थोऽयं क्रियाक्रमः ॥ ८ ॥
तत्तु मारुतक्षुत्तृष्णा-मुखशोषभ्रमान्विते ।
कार्य्यं न बाले वृद्धे वा न गर्भिण्यां न दुर्ब्बले ॥ ९ ॥
वातमूत्रपुरीषाणां विसर्गे गात्रलाघवे ।
हृदयोद्गारकण्ठास्य-शुद्धौ तन्द्राक्लमे गते ॥
स्वेदे जाते रुचौ चापि क्षुत्पिपासासहोदये ।
कृतं लङ्घनमादेश्यं निर्व्यथे चान्तरात्मनि ॥ १० ॥
पर्व्वभेदोऽङ्गमर्दश्च कासः शोषो मुखस्य च ।
क्षुत्प्रणाशोऽरुचिस्तृष्णा दौर्ब्बल्यं श्रोत्रनेत्रयोः ॥

---

आमवर्ज्जितौ दोषाग्नी यस्य स तथा। काङ्क्षा अन्नप्रार्थना, रुचिः अभ्यवहार-पाटवम् ॥ ७ ॥

एतच्च लङ्घनं तथा कार्य्यं, यथा न बलहानिः स्यादित्याह, प्राणाविरोधिनेत्यादि।— प्राणो बलं, विरोधश्चातिक्षय इहोच्यते। हेतुमाह, बलाधिष्ठानमित्यादि।— अधिष्ठानमाश्रयः, अत्र बहुव्रीहिः। अत एवोक्तम्, "यस्माद्बलवतः सर्व्वक्रियाप्रवृत्तिस्तस्माद्बलमेव प्रधानमधिकरणानाम्" इति। यदर्थः आरोग्यार्थः ॥ ८ ॥

अलङ्घनीयमाह, तत्त्वित्यादि ॥ ९ ॥

सम्यक्कृतस्य लङ्घनस्य लक्षणमाह, वातमूत्रेत्यादि।—हृदयस्य शुद्धिः गौरवादिराहित्यं, कण्ठस्य शुद्धिः कफलिप्तत्वादिविरहः, आस्यस्य शुद्धिः अविकृतरसत्वं, तन्द्रा निद्रावत् ग्लानिः, क्लमो देहस्य ग्लानिः। क्षुत्पिपासासहोदय इति—क्षुत्पिपासयोर्युगपदुदय इत्यर्थः। वाग्भटेऽप्युक्तं "क्षुत्तृट्सहोदयः शुद्ध-हृदयोद्गारकण्ठता" इति। किन्तु—"सृष्टमारुतविण्मूत्रं क्षुत्पिपासासहं लघुम्। प्रसन्नात्मेन्द्रियं क्षामं नरं विद्यात् सुलङ्घितम्" इति सुश्रुतदर्शनात्, क्षुत्पिपासयोरसहोऽसह्य उदय इति चक्रेण व्याख्यातम्; किन्तु न सहते इत्यसहः, पचाद्यजन्तः कर्त्तरि दृश्यते, तेन असहशब्दस्यासह्यार्थकल्पने कष्टं स्यादिति। कृतमिति—सम्यक्कृतम्। अन्तरात्मनीति—अन्तरिन्द्रिये मनसीत्यर्थः ॥ १० ॥

मनसः सम्भ्रमोऽभीच्णमूर्द्ध्ववातस्तमो हृदि।
देहाग्निबलहानिश्च लङ्घनेऽतिकृते भवेत्॥ ११॥
सद्योभुक्तस्य वा जाते ज्वरे सन्तर्पणोत्थिते।
वमनं वमनार्हस्य शस्तमित्याह वाग्भटः॥ १२॥
कफप्राधानानुत्क्लिष्टान् दोषानामाशयस्थितान्।
बुद्धा ज्वरकरान् काले वम्यानां वमनैर्हरेत्॥ १३॥
अनुपस्थितदोषाणां वमनं तरुणे ज्वरे।
हृद्रोगं श्वासमानाहं मोहञ्च कुरुते भृशम्॥ १४॥
तृष्यते सलिलञ्चोष्णं दद्याद्वातकफज्वरे।
मद्योत्थे पैत्तिके चापि शीतलं तिक्तकैः शृतम्॥ १५॥

---

अतिलङ्घितलक्षणमाह, पर्वभेद इत्यादि।—अरुचि, सत्यामपि बुभुक्षायाम् अन्नानभिनन्दनम्, श्रोत्रनेत्रयोर्गन्थस्य स्वविषयग्रहणासामर्थ्यम्। सम्भ्रमोऽनवस्थितत्वं, भ्रमिरित्यन्ये। अभीक्ष्णमित्यतिशयेन। ऊर्द्ध्ववातः हिक्काश्वासकासज्म्भादयः, स पुनरुद्गारविशेषः, अतिलङ्घनेन वायुकोपात्। स च पुनः कफक्षीणाद् भवति, यदुक्तम्—"कफः प्रतिहतो वायुः श्लेष्मणा मारुतेन च। करोति विविधानुद्गारमूर्द्ध्ववातः स उच्यते॥" इति। तमः हृदि मोह इत्यर्थः॥ ११॥

ज्वरारम्भ एव वमनावस्थामाह, सद्य इत्यादि।—सन्तर्पणोत्थित इत्यत्र "आमविशेषत" इति वाग्भटे पाठो दृश्यते॥ १२॥

लङ्घनादपरज्वरे अवस्थाविशेषे अविशेषेण वमनमाह, कफप्रधानानित्यादि।—चरकस्य। कफः प्रधानो येषां ते कफप्रधानाः। उत्क्लिष्टान् हृल्लासादिना बहिर्निर्गन्तुमुद्यतान्। काले यथोक्तामावस्थायां वम्यानामिति वमनयोग्यानां, तेन गर्भिण्यादिनिषेधः, यदुक्तं वमनावमनाधिकारे॥ १३॥

उक्तावस्थाव्यतिरेकेण वमने दोषमाह, अनुपस्थितेत्यादि।—चरकस्य। अनुपस्थितदोषाणाम् अनुत्क्लिष्टदोषाणामित्यर्थः॥ १४॥

लङ्घनकाले तृष्यतः जलमाह, तृष्यते इत्यादि।—चरकस्य। वातकफज्वर इति।—वातज्वरे कफज्वरे वातकफज्वरे च उष्णं सलिलमर्द्धावशेषम्। यदाह चक्रदत्तः—"क्वाथ्यमानन्तु यत् तोयं निष्फेनं निर्मलीकृतम्। अर्द्धावशिष्टञ्च तदुष्णो-

दीपनं पाचनञ्चैव ज्वरघ्नमुभयञ्च तत् ।
स्रोतसां शोधनं बल्यं रुचिस्वेदप्रदं शिवम् ॥ १६ ॥

षडङ्गपानीयम् ।

मुस्तपर्पटकोशीर-चन्दनोदीच्यनागरैः ।
शृतशीतं जलं दद्यात् पिपासाज्वरशान्तये ॥ १७ ॥
मुख्यभेषजसम्बन्धो निषिद्धस्तरुणे ज्वरे ।
तोयपेयादिसंस्कारे निर्दोषं तेन भेषजम् ॥ १८ ॥

---

दकमुष्णं ॥" मद्योत्थ इत्यादि ।—रूपस्य चक्षुर्ग्राह्यत्वादम्लत्वाच्च पित्तकर्तृत्वात् मद्यात्यज्वरस्य पित्तजत्वेन परिग्रहे सिद्धेऽपि पुनस्तदभिधानम् अन्यत्रापि मद्योत्थरोगे तिक्तकशृतजलस्यैव यौगिकत्वबोधनार्थमित्याहुः । तिक्तकैः शृतमिति अमृतानागमुस्तादिभिस्तिक्तकैः शृतम् । ज्वरघ्नमुभयञ्च तदिति उभयमुष्णं, तथा तिक्तकशृतशीतञ्च । शृतं दीपनमपि न पाचनं, उष्णं पाचनमपि न दीपनमित्यतः पदद्वयोक्तिः । यद्यपि त्रिदोषजकफपित्तज्वरयोः पानीयं शीतं, तथापि सामान्येन विमानस्थाने यदुक्तं "किं तु खलु ज्वरितेभ्यः पानीयमुष्णं प्रयच्छन्ति" इत्यादिना, तत्प्रामाण्यादुष्णमेव जलं देयम् । वातपित्तज्वरेऽप्यर्थदाहकारके शीतमर्द्धशृतं जलं देयमित्यपि विमाने एवात्यर्थपित्तोत्सन्दे इत्यादिना ग्रन्थेन सूचितम् ॥ १५ ॥ १६ ॥

तिक्तकैः शृतमिति यदुक्तं तदाह, मुस्तेत्यादि ।—चन्दनं रक्तचन्दनं; यदुक्तम् "उक्ते चन्दनशब्दे तु प्रयाति रक्तचन्दनम्" । उदीच्यं बालकम् । अत्र तु शुण्ठी अतितीक्ष्णत्वात्पदुष्टिकारणकत्वज्वरहितत्वादिहिता । वाग्भटे तु पर्पटकस्थ पठ्यते न तु शुण्ठी ॥ १७ ॥

ननु "ज्वरित षडहेऽतीते" इत्यादिना, सप्ताहानन्तरमेवौषधदानं वक्ष्यति, अत तु सप्ताहाभ्यन्तर एव षडङ्गाद्यौषधविधानम्, अतः पूर्वापरग्रन्थविरोध निराचिकीर्षुराह, मुख्यभेषजसम्बन्ध इत्यादि ।—अन्नपानादिसंस्कारकतया यदौषधमुपयुज्यते तत् प्रधानं, तद्भिन्न पुनरप्रधानमिति । तेन प्रधानौषधस्यैव तरुणज्वरे निषेधः; नाप्रधानस्य षडङ्गादेः । उपयुज्यते इत्यनेन भेषजविषय उपयोगो विवक्षितः, तेन स्वेदानीनामप्रधानत्वात् तरुणज्वरे न निषेधः । अष्टाङ्गाद्यवलेहोऽपि प्रधानत्वात् तरुणज्वरे देय एव । यतस्त्रिदोषजज्वरे तु सप्ताहाभ्यन्तर एव तस्य विधानं तदनन्तरादष्टमेनेति उत्सर्गापवादरूपतया विधिनिषेधयोर्न विरोधः ॥ १८ ॥

यदप्सु शृतशीतासु षडङ्गादि प्रयुज्यते ।
कर्षमात्रं ततो द्रव्यं साधयेत् प्रास्थिकेऽम्भसि ॥
अर्धशृतं प्रयोक्तव्यं पाने पेयादिसंविधौ ॥ १८ ॥
वमितं लङ्घितं काले यवागूभिरुपाचरेत् ।
यथास्वौषधसिद्धाभिर्मण्डपूर्वाभिरादितः ॥ २० ॥
लाजपेयां सुखजरां पिप्पलीनागरैः शृताम् ।

---

उक्तषडङ्गतोयसाधनार्थं यथा यवागूसाधनार्थं च पेयादेः साधनार्थञ्च भेषजजलमानव्यवस्थापिकां वृद्धवैद्यव्यवहारसिद्धां परिभाषामाह, यदप्सु इत्यादि ।—शृतशीतं शृतशीतलजलनिमित्तं यत् षडङ्गादि द्रव्यं प्रयुज्यते, तत् कर्षमात्रम् । आदिशब्देन पेयादिसम्पादनार्थमन्नसंस्कारकधान्यकपिप्पलीपञ्चमूलीधान्यपञ्चकादिग्रहः । पेयादिसंविधावित्यादिग्रहणात् तु यूषरसादीनां ग्रहणम् । अत्र मन्दवीर्यस्यापि षडङ्गादेः कर्षो मन्दानलगुरुत्वविषयतया ज्ञेयः, मध्यवीर्यस्य हि द्रव्यस्यार्धपलप्रमाणमपि व्यवस्थापनीयम् । प्रास्थिक इति द्रव्यैर्गुणोत्कर्षार्थं चतुष्टये, "हिंस्रायाः कुडवाहुर्यं प्रस्थादिशुक्तिमानतः" इत्युक्ते । इमाञ्च परिभाषां कायचिकित्सायवागूविषयत्वेन वृद्धाः प्रायः समाद्रियन्ते ॥१८॥

वमनलङ्घनयोरनन्तरं यद्विधेयं तदाह, वमितमित्यादि ।—चरकस्य । अवस्थावशात् कदाचिद्वमितं, कदाचिल्लङ्घितं, कदाचिच्च वमितलङ्घितम् । वमनानन्तरं हि यदि सम्यग्विरूक्षितो भवति, तदा तदहर्लङ्घनमपि क्रियते इत्यत उक्तम्,—काले इत्यन्नदानयोग्यकाले । यथास्वौषधसिद्धाः यथास्वौषधं यद्देशं पिप्पलीनागरादि वाच्यं, तत्सिद्धाभिः । किं वा यस्मिन् ज्वरे यदयौषधं पाचनं वाच्यं तत्सिद्धाभिः, उक्तं हि सुश्रुते "अन्नकाले हिता पेया यथास्वं पाचनैः कृता" इति । यद्यप्यथास्वमिति वीप्सायामव्ययीभावः । मण्डपूर्वाभिरिति ।—मण्डः पूर्वं प्रधानोऽम्भस्तया यासां ताभिरित्यर्थः । एतेन पेयाया ग्रहणं, तस्या एव बहुद्रवत्वेन मण्डप्रधानत्वात्, विलेप्यास्तु निरासः, तस्या अल्पद्रवत्वेन मण्डप्राधान्याभावात् । अन्ये तु मण्डः पूर्वं प्रथमाभ्यवहार्यो यासां ता इत्यर्थः, तेन प्रथमं स्वच्छभागं खादित्वा ततो घनभागं खादेदित्याहुः ॥ २० ॥

लाजपेयामित्यादि ।—चरकस्य । अत्र लाजपेयामित्यादिना शृतभक्तः ज्वरापहाम्

पिबेज्ज्वरी ज्वरहरां क्षुद्वानल्पाग्निरादितः ॥ २१ ॥
पेयां वा रक्तशालीनां पार्श्वबस्तिशिरोरुजि ।
श्वदंष्ट्राकण्टकारीभ्यां सिद्धां ज्वरहरां पिबेत् ॥ २२ ॥
कोष्ठे विबद्धे सरुजि पिबेत् पेयां शृतां ज्वरी ।
मृद्वीकापिप्पलीमूल-चव्यचित्रकनागरैः ॥ २३ ॥
पञ्चमूल्या लघीयस्या गुर्व्या ताभ्यां सधान्यया ।
कणया यूषपेयादि साधनं स्याद्यथाक्रमम् ॥
वातपित्ते वातकफे त्रिदोषे श्लेष्मपित्तजे ।
यवागूः स्यात् त्रिदोषघ्नी व्याघ्रीदुःस्पर्शगोक्षुरैः ॥ २४ ॥
कर्षार्द्धं वा कणाशुण्ठ्योः कल्कद्रव्यस्य वा पलम् ।

---

इत्यनेन चरके दश यवाग्वोऽभिहिताः। तत्र पिप्पलीनागरैः प्रसाधितया दीपनीति हरिचन्द्रः। अन्ये तु लाजपेया सुखजरामित्येका, पिप्पलीनागरैः प्रसाधितेति द्वितीयाम्, एवं शेषाभिः सममेकादश पेया इति व्याचक्षते। किन्तु "प्राक् लाजपेया सुजरां सशुण्ठीम्" इति वाग्भटदर्शनात् हरिचन्द्रपक्ष एव समीचीनः, यतोऽस्मिन् प्रकरणे तत्र लाजपेया नोच्यते ॥ २१ ॥

पेयामित्यादि।—चरकस्य। श्वदंष्ट्रा गोक्षुरं, मृद्वीका द्राक्षा, चित्रकं रक्तचित्रकं मांसगत्वात्। पञ्चमूल्येत्यादि चत्वारो योगाः चक्रपाणिनैव व्याख्याताः। यवागूः स्यादित्यादौ व्याघ्री कण्टकारी, दुःस्पर्शा दुरालभा ॥ २२—२४ ॥

कल्कसाध्ययवागूसाधनार्थं परिभाषामाह, कर्षार्द्धं वेत्यादि।—कर्षार्द्धं इति कर्षार्द्धं प्रत्येकम्। त्रिविधं हि भेषजद्रव्यं वीर्य्यभेदात्; तीक्ष्णवीर्य्यं यथा,—शुण्ठ्यादि, मध्यवीर्य्यं—चित्रकाग्निमन्थादि, मृदुवीर्य्यमामलकादि। तत्र कणाशुण्ठ्योरिति तीक्ष्णद्रव्योपलक्षणं, तेन तीक्ष्णद्रव्यमात्रस्यैव कर्षार्द्धप्रमाणमिति ज्ञापितम्। कल्कद्रव्यस्य वा पलमिति मृदुद्रव्योपलक्षणं, तेनान्यस्यापि मृदुवीर्य्यद्रव्यस्यामलकादेः पलं ग्राह्यमिति ज्ञापयति। एतेन तीक्ष्णमृदुद्रव्ययोः कर्षपलमानव्यवस्थया मध्यवीर्य्यस्य चित्राग्निमन्थादेरनुक्तमप्यर्द्धपलमानं सामर्थ्यादेव ज्ञेयम्। यत् पुनर्मध्यवीर्य्यस्य चक्रेण कर्षप्रमाणमुक्तं, तन्मन्दानलपुरुषाभिप्रायेणोक्तमेव। विनीयेति कल्कीकृत्य, प्रक्षिप्य इति वा। अपरामित्यत्र, अयतश्च कषायसाध्ययवागूमपेक्ष्य, तेन कल्कसाध्या-

यवागूर्बहुसिक्था स्याद्विलेपी विरलद्रवा ॥ २८ ॥
अन्नं पञ्चगुणे साध्यं विलेपी तु चतुर्गुणे।
मण्डश्चतुर्दशगुणे यवागूः षड्गुणेऽम्भसि ॥ २९ ॥
पांशुधाने यथा वृष्टिः क्लेदयत्यतिकर्दमम्।
तथा श्लेष्मणि संवृद्धे यवागूः श्लेष्मवर्द्धनी ॥ ३० ॥

---

क्वचिन्मण्डगुणो मण्डोपयोगो वा सूच्यते सोऽप्यस्यैव बोध्यः। ननु मण्डश्चतुर्दशगुणजलसाध्यः, यवागूश्च षड्गुणजलसाध्या इत्यनन्तरमेव वक्ष्यति; तत् कथमुच्यते यवाग्वा उपरितनभागो मण्डः? नैवम्। तत्र यवागूशब्देन पेया विवक्षिता। तेन पेयायाः पृथगनभिधानं बोद्धव्यम्। द्रवसिक्थसमन्वितत्वमेव यवागूसामान्यलक्षणं, तेन चतुर्दशगुणजलनिष्पन्नस्यापि मण्डस्य सिक्थसमन्वितावस्थायां यवागूत्वमेव, तेन सुष्ठूक्तं यवाग्वा उपरितनभागो मण्ड इति। पेया इति संज्ञावचनात् बहुद्रवत्वमल्पसिक्थत्वञ्च ज्ञेयम्। तेन सिक्थसमन्विता यवागूः पेयेति, पेयालक्षणे बहुद्रवत्वमल्पसिक्थत्वञ्च लक्षणतया बोध्यम्। तथा विरलद्रवा बहुसिक्था च यवागूर्विलेपीति विलेपीलक्षणं बोध्यम्। तेन पेयाविलेप्यतिरेकेण पृथग्यवागूर्नास्तीत्याहुः। अत एव वाग्भटेऽपि यवागूगुणः पृथङ्नोक्तः। तदुक्तं—"मण्डपेयाविलेपीनामोदनस्य च लाघवम्। यथापूर्वं निबध्य मन्दोऽग्निकालानुयोजनैः॥" इति। तथा चरकेऽप्यन्नपानेऽध्याये मण्डपेयाविलेप्योदनानामेव गुणो दर्शितः; न पृथग्यवाग्वा इति। यत्तु द्रव्यगुणे माधवकरेण पेयाविलेपीगुणं पठित्वा लिखितं,—"तृष्णापनयनी लघ्वी दीपनी वस्तिशोधनी। ज्वरे चैवातिसारे च यवागूः सर्वदा हिता।" इति, तत सामान्यगुणाभिप्रायेण बोध्यं, सामान्यतो गुणकथनम्। यत्तु प्रयोगरत्नाकरे—"चतुर्विधं भवेदन्नं जलदानप्रमाणतः। तत्र भक्तं विलेपी च यवागूः पेयया सह।" इति; तत्र मण्ड एव पेयाशब्देन विवक्षितः; अत एवान्यत्रैव पेयाया चतुर्दशगुणजलमुक्तं, तत्रैव—"पञ्चगुणे जले भक्तं विलेपी च चतुर्गुणे। यवागूः षड्गुणे तोये चतुर्दशगुणे पेयाम्" इति॥ २८॥

यवागूपाकार्थं जलपरिमाणमाह, अन्नमित्यादि।—सुगमम्। यवागूरत्र पेया॥ २९॥

यवागूः कफिनां विरुद्धेति वर्णयन्नाह, पांशुधान इत्यादि। पांशुधाने पांशुसञ्चये, अतिकर्दमं यथा स्यात् तथा, क्लेदयति क्लेदं जनयति॥ ३०॥

मदात्यये मद्यनित्ये ग्रीष्मे पित्तकफाधिके ।
ऊर्द्धगे रक्तपित्ते च यवागूरहिता ज्वरे ॥
तत्र तर्पणमेवाग्रे प्रदेयं लाजशक्तुभिः ।
ज्वरापहैः फलरसैर्युक्तं समधुशर्करम् ॥
द्रवेणालोडितास्ते स्युस्तर्पणं लाजशक्तवः ॥ ३१ ॥

---

मदात्यये इत्यादि।—चरकस्य। चरके एतद्वचनस्योपरि "बले सत्यनुबन्धिनाम्" इत्यस्ति, तेन मद्यकारणके ज्वरे यवागूर्निषिद्धैव। तेन मदात्यये व्याधौ तथा मद्यनित्ये मद्ये योऽभ्यहितुकोऽपि ज्वरः सोऽपि पेयानर्हः। तथा ग्रीष्मे यो ज्वरः, तथा पित्तकफाधिको यो ज्वरः, तथा ऊर्द्धगरक्तपित्तिनो यो ज्वरः, तेषु सर्वेषु यवागूर्न हितेति। एष मदात्ययादीनां पेयानर्हत्वेन तेषु जातोऽपि ज्वरः पेयानर्हः। पित्तकफाधिक इत्यनेन पित्तकफरोगाभिभावोऽस्मि सति पेयाया अहितत्वं बोधयति। तेन कफजे ज्वरे, पित्तजे ज्वरे चानुद्भूतदोषे पेया देया। उक्तं हि—"कफजेऽपि यदा क्षीणो भक्तच्छेदि-कृशान् कफः। शक्त एव यथावस्थं तत्र पित्तेऽप्ययं क्रमः" इति। अत एव चरके "पैत्तिके चाथ शीता मधुयुता विलेपीयवागूम्" इत्यनेन पित्तेऽपि यवागूरुक्ता। पाश्चात्ये यथा इत्यादिरित्यादि हारीतवचनमपि अतिलङ्घनविषयं ज्ञेयम्। अन्ये तु निश्चितपित्तकफाधिके पुरुषे यवागूप्रतिषेधमाहुः। ऊर्द्धगे कफपित्ते चेति पाठान्तर-मनार्षं ; पित्तकफाधिक इत्यनेनैव तदर्थस्य लाभात्। सुश्रुतेऽपि—"कफपित्तपरीतस्य कण्ठोरःशिरसि गलयोः" इत्युक्तम्। अन्ये तु ऊर्द्धग इति ऊर्द्धगरक्तपित्ते कफपित्ते चेति, कफयुक्तपित्ते पित्तस्थानगते कफे इत्यर्थः। उक्तं हि वाग्भटे—"मद्योद्भवे मद्यनित्ये पित्त स्थानगते कफे। ग्रीष्मे तयोर्वाऽधिकयोस्तृड्दाहच्छर्दिपीडिते। ऊर्द्ध प्रवृत्ते रक्ते च पेया नेच्छन्ति तेषु तु ॥" इति व्याख्याय कफपित्ते चेति पाठमुपपादयन्ति। यद्यपि चरके "ऊर्द्धगे तर्पणं पूर्वम्" इति वचसा यवागू बाधित्वा ऊर्द्धगे रक्तपित्ते तर्पणं विहितमेव, तथाप्यूर्द्धगरक्तपित्तिनो यो ज्वरस्तत्रापि तर्पणादिक्रमः कार्यः इत्याह, तत्रे-त्यादि।—ज्वरापहाणि फलानि द्राक्षादाडिमादीनि, उक्तं हि—"द्राक्षादाडिमखर्ज्जूरप्रियालैः सपरूषकैः। तर्पणार्हेषु कर्त्तव्यं तर्पणं ज्वरनाशनम् ॥" इति। तर्पणशब्दार्थमाह,—द्रवेणालोडितास्ते स्युरित्यादि ॥ ३१ ॥

श्रमोपवासानिलजे हितो नित्यं रसौदनः ।
मुद्गयूषौदनश्चापि देयः कफसमुद्भवे ।
स एव सितया युक्तः शीतः पित्तज्वरे हितः ॥ ३२ ॥
रक्तशाल्यादयः शस्ताः पुराणाः षष्टिकैः सह ।
यवाग्वोदनलाजार्थे ज्वरितानां ज्वरापहाः ॥ ३३ ॥
मुद्गामलकयूषस्तु वातपित्तात्मके हितः ।
ह्रस्वमूलकयूषस्तु कफवातात्मके हितः ॥
निम्बकूलकयूषस्तु हितः पित्तकफात्मके ॥ ३४ ॥

---

श्रमेत्यादि ।—नित्यमिति सर्वदा, नवे पुराणे च । रसो मांसरसः, तेनोपमिश्र ओदनः रसौदनः । एवं मुद्गयूषौदन इत्यत्रापि व्याख्येयम् । अयञ्च रसौदनः दीप्ताग्निं प्रति बोध्यः ; उक्तं हि सुश्रुते—"उपवासश्रमकृते ज्वरे वाताधिके तथा । दीप्ताग्निं भोजयेत् प्राज्ञो नरं मांसरसौदनम् ॥" इति । मुद्गयूषौदनश्चापीति कफजे मुद्गयूषौदनो देयो यवाग्वा अहितत्वात् । स एवेति मुद्गयूषौदनः ॥ ३२ ॥

रक्तशाल्यादय इत्यादि ।—चरकस्य । चरके पुराणा इत्यत्र "शालयः" इति पठन्ति, तेन यवकादीनां निरास इत्याहुः । ये तु पुराणा इति पठन्ति, तन्मते यद्यपि "शूकधान्यं शमीधान्यं समातीतम्" इत्यनेन पुराणस्योपयोगो लब्धः, तथापि प्रमादादतिनवस्य तथातिपुरातनस्य च ग्रहणं मा भूदित्येतदर्थं पुराणा इत्युक्तम् ॥ ३३ ॥

सम्प्रति द्वन्द्वजेष्वाहारविधिमाह, मुद्गामलकेत्यादि ।—आमलकापेक्षया मुद्गस्य भूयसी मात्रा, आहारद्रव्यत्वात् । योगोऽयं यद्यपि सुश्रुतेन अन्नपानाध्याये कफपित्तज्वरहरत्वेन निर्दिष्टः, तथापीह वातपित्तज्वरेऽभिधानाद् वातपित्तज्वरहरत्वमपि वचनबलादेवाधारणीयम् । ह्रस्वमूलको बालमूलकः । अत्र शमीधान्यस्य यूषयोनित्वात् मुद्गादपि बोध्यम् । एवं यत्र नास्ति तत्र सर्वत्र । किंवा व्यञ्जनपरो यूषः । निम्बकूलकेत्यादि ।—सुश्रुतस्य । निम्बस्य पत्रं, तथा कूलकस्य पटोलस्य च पत्रम् ॥ ३४ ॥

मुद्गान् मसूरांश्चणकान् कुलत्थान् समुकुष्टकान्।
आहारकाले यूषार्थे ज्वरिताय प्रदापयेत्॥ ३५॥
पटोलपत्रं वार्त्ताकुं मूलकं कारवेल्लकम्।
कर्कोटकं पर्पटकं गोजिह्वां बालमूलकम्।
पत्रं गुडूच्याः शाकार्थे ज्वरिताय प्रदापयेत्॥ ३६॥
ज्वरितो हितमश्नीयाद् यद्यप्यस्यारुचिर्भवेत्।
अन्नकाले ह्यभुञ्जानः क्षीयते म्रियतेऽथवा॥ ३७॥

---

मुद्गानित्यादि।—सुगमम्। मकुष्टो वनमुद्गः॥ ३५॥

पटोलेत्यादि।—सुगमम्। वार्त्ताकुः वार्त्ताकुफलं, मूलकमपि पटोलवत्, कर्कोटक: काकरोल इति ख्यातः, गोजिह्वा दार्वीशाक:॥ ३६॥

इदानीं ज्वरितस्यारुच्यामपि हितभोजनं नियमयन्नाह, ज्वरित इत्यादि।—अस्या-रुचिरपि यदि भवेत् तथापि ज्वरितो हितमेवाश्नीयादेव, इत्युभयथापि नियमः। यतो दिनान्ते भोजनेऽन्निमत्वेन भुक्ति-क्रिया विहितेव। "न हि तस्याहित भुञ्ज-मायुषे वा सुखाय वा" इत्यादिना हितमपि विहितम्, अत. सिद्धे सत्यारम्भो नियमाय भवति। विपक्षे दण्डमाह अन्नकाले क्षीयत्यादि।—यतोऽन्नकाले हितम् अभुञ्जानः पुरुषः क्षीयते म्रियते वा। अत्र तु अरुचौ सत्याम् अहितभोजने इच्छा-भावात् अहितस्य निवृत्तमेव भोजयित्वा नर्मं प्रतिश्यायात्यथा व्याख्यायते।—अथ यदि अरुचिर्भवेत् तदा अहितमप्यश्नीयात्, कुतः?—इत्याह, अन्नकाले क्षीयत्यादि, यतोऽभुञ्जा-नस्य धातुक्षयो मरणं वा स्यात् तस्मादहितमश्नीयादित्यर्थः। न चैवंव्याख्याने गुर्वभिष्यन्दकाले चेत्यादुत्तरग्रन्थविरोधः स्यादिति वाच्यम्, यतस्तेनापि ग्रन्थेन अहितं न प्रतिषिध्यते, अन्यथा व्याख्यानात्। तथा हि ज्वरी ना पुरुषः गुर्वभिष्यन्द-काले च अयथम कदाचिदप्यात् सम्प्रक्षीतेत्यर्थः। यतो भुक्तं भोजनम् आयुषे वा सुखाय वा न अहितं किन्तु हितमेव। हिशब्दस्थाने तुशब्दपाठेऽपि तुशब्द निपातस्यानेकार्थत्वात् हीति व्याख्येयः। नन्वेषा व्याख्या तदैव सङ्गच्छते, यदि अहितार्थमुपदेशः क्वापि शास्त्रे तिष्ठति, किं तर्हि?—हितस्यैव सर्वत्रोपदेशः। अवस्थाया तदपि हितमिति चेत्, तर्हि अहितमिति व्याहतम्? सत्य, प्रायः सर्वदा सुखादि-वत्र हितमिति कृत्वा अहितमित्युच्यते, अत एवाह—"मनोऽनुकूलं यदपथ्यं तदपि क्रियत एव" इति। यदुक्तं चरके "मनसोऽप्यानुकूल्येन तुष्टिरूर्जा रुचिर्बलम्।

अरुचौ मातुलुङ्गस्य केशरं साज्यसैन्धवम्।
धात्रीद्राक्षासितानां वा कल्कमास्येन धारयेत् ॥ ३८ ॥
सातत्यात् स्वाद्वभावाद् वा पथ्यं द्वेष्यत्वमागतम्।
कल्पनाविधिभिस्तैस्तैः प्रियत्वं गमयेत् पुनः ॥ ३९ ॥
ज्वरितं ज्वरमुक्तं वा दिनान्ते भोजयेल्लघु।

---

मुखोपभोगिता च स्याद्याधियर्पि वर्जयेत्." इति। किन्तु जेज्जटमते एषा व्याख्या न सङ्गच्छते, यतो ज्वरितो हितमित्यादेरनन्तरमेव हितविधायकमहितप्रतिषेधकं "सततं नियमं हापि" इत्यादि "वर्जयेच्च समासतः." इत्यन्तं ग्रन्थं जेज्जटः पठति, तन्मध्ये च गुर्वभिष्यन्दीत्यादिपद्योऽप्यस्ति, ततो गुर्वभिष्यन्दीत्यादिवाक्यस्याहितविधायकत्वव्याख्याने प्रकरणमसङ्गतं स्यात्। तथा चन्द्रिकाकारेणापि "ज्वरितस्य मन्दाग्नेर्गुर्वन्नपाकेऽजीर्णम्, अभिष्यन्दिनः स्रोतोरोधकत्वेन ज्वरवृद्धिः." इत्यादि व्याख्यातम्। एवञ्च गुर्वभिष्यन्दीत्यादिपद्योऽप्यहितप्रतिषेधकपरतया जेज्जटमार्गेण व्याख्येयः। ज्वरितो हितमश्नीयादित्यादावपि हितविधायकतया एव व्याख्येयम्। अहितस्य रोगवर्द्धकत्वेन सर्वत्र निषेधात्, उत्तरीया गुर्वभिष्यन्दीत्यादिपद्यविरोधाच्चेति ॥ ३७ ॥

इदानीं ज्वरस्योपद्रवत्वेनारुचेः प्रतीकारमाह,—अरुचावित्यादि। योगान्तरमाह—धात्रीत्यादि ॥ ३८ ॥

अथ हितमेव यदि सततोपयोगादनभिमतत्वादियोगाद्वा रुचिविषयो न स्यात्, तदा किं कार्यम्? इत्याह, सातत्यादित्यादि।—हठवचनम्। सातत्यादिति सततोपयोगात्। सततोपयोगाद्धि स्वादुतममपि अप्रियं भवतीत्यनुभवसिद्धम्, अस्वादु तु स्वत एवाप्रियम्। स्वादुरभीष्टो रसः। तैस्तैः कल्पनाविधिभिरिति स्वरसकल्कादिमद्यशास्त्रोक्तविधानैः पुनः प्रियत्वं गमयेत् ॥ ३९ ॥

अन्नकालमाह, ज्वरितमित्यादि।—वाग्भटस्य। दिनान्त इत्यपराह्णे, सुश्रुतेऽप्युक्तं—"सर्वज्वरेषु सुलघु मात्रावद्भोजनं हितम्। दिवसान्तेऽन्यथा तद्धि ज्वरवेगाभिवर्द्धनम्" इति। ज्वरितमित्यादिवाक्यानन्तरं वाग्भटवचनं यथा—"यथोचितेऽथवा काले देशसात्म्यानुरोधतः। प्राग्लघ्वग्निर्बलो न हि जीर्येन्न दीप्यते" इति। तेन यस्य पुरुषस्य य उचित आहारकालः, तस्मिन्नेव स भोजनीयः। यथोचिते हि काले देशसात्म्यानुरोधतः प्रायः क्षुद्बोधो भवति, तदतिक्रमे च क्षुधाप-

श्लेष्मचयविद्वदोषा बलवाननलस्तदा ॥ ४० ॥
गुर्वभिष्यन्दिकाले च ज्वरी नाद्यात् कथञ्चन ।
न हि तस्याहितं भुक्तमायुषे वा सुखाय वा ॥ ४१ ॥
लङ्घनं स्वेदनं कालो यवाग्वस्तिक्तको रसः ।
पाचनान्यविपक्वानां दोषाणां तरुणे ज्वरे ॥ ४२ ॥
आसप्तरात्रं तरुणं ज्वरमाहुर्मनीषिणः ।
मध्यं द्वादशरात्रन्तु पुराणमत उत्तरम् ॥ ४३ ॥

---

गमो भवति, तेन तस्य दिनान्तापेक्षा च न कर्त्तव्येत्याह,—प्रातरित्यादि। अल्पवह्निरिति कादाचित्कैर्हितैः सेवनात् ज्वरितोऽल्पवह्निरेव भवति। देशसात्म्यानुरोधात् अल्पवह्निरपि प्रातरेव पूर्वाह्णेऽपि भुञ्जानोऽजीर्णेन न पीड्यते न बाध्यते इत्यर्थः ॥ ४० ॥

ननु कदाऽपि सन्ध्या हितमेव भोक्तव्यम्, नाहितमित्युक्तम्, अतएव किमहितं यन्न भोक्तव्यम्? इत्याह, गुर्वित्यादि।—सुश्रुतस्य। गुरु पिष्टकादि, अभिष्यन्दि दोषधातुमलस्रोतसां क्लेदजनकम् अम्लिकादि। नाद्यात् न खादेत्। तथा अकाले अप्राप्ते अतीते च काले हितमपि नाद्यात्। कथञ्चन कदाचिदपि। अत हेतुर्नहीत्यादि ॥ ४१ ॥

इदानीं लङ्घनमेवादाविति यदुक्तं, तस्य पाचनतां दर्शयन्, प्रसङ्गात् स्वेदादीनामपि पाचनतामाह, लङ्घनमित्यादि।—कालः इत्यष्टाहः। तिक्तकरसोऽत्र यवागूपानीयादिसंस्कारकत्वेन ज्ञेयः। स्वतन्त्रभेषजप्रयोगस्य तरुणे निषेधात्। उक्तञ्च "भेषजं ह्यामदोषस्य भूयो ज्वलयति ज्वरम्" इति। अविपक्वानामित्युक्तापि यत् तरुणज्वरे इत्युक्तं, तदष्टाहादूर्द्ध्वमतरुणे ज्वरे अपक्वेषु दोषेषु पाचनकषायस्य प्राधान्यमावेदयति, न तु लङ्घनादीनाम्। किंवा अविपक्वदश्वमष्टाहादूर्द्ध्वमपि मानवामुपतिष्ठतीति सूचनार्थम्। अत एवाष्टाहादूर्द्ध्वमपि आमपाचनार्थं पाचनशमनीयं पेयादि वक्ष्यति ॥ ४२ ॥

ननु ज्वरस्य तरुणता कियन्तं कालं तिष्ठति? इत्याह, आसप्तरात्रमित्यादि।—सप्तरात्रं व्याप्य। आङत्र अभिविधौ न मर्य्यादायाम्, अष्टाहस्य निरामज्वरकालत्वेनोक्तत्वात्। मध्यं द्वादशरात्रमिति पाठः साधीयान्, न तु मध्यं चतुर्दशाहमिति, लङ्घने "जीर्णज्वरोऽदशदिवस" इत्युक्तत्वात्। अत उत्तरमिति द्वादशाहानन्तर

पाचनं शमनीयं वा कषायं पाययेत् तु तम्।

---

ज्वरोदयदिवसमारभ्य, पुराणमिति जीर्णज्वरमाह। यत्तु—"त्रिसप्ताहव्यतीतस्तु ज्वरो यस्तनुतां गतः। प्लीहाग्निमान्द्यं कुरुते स जीर्णज्वर उच्यते" इति तन्त्रान्तरम्, तदतिजीर्णाभिप्रायेण बोध्यम्। यद्यपि तरुणज्वर एवात्र प्रक्रान्तस्तथापि मध्यपुराणयो-रत्राभिधानमेकवाक्यनिबद्धत्वात् ॥ ४२ ॥

ननु लङ्घनानन्तरं किं कर्त्तव्यम्? इत्याह, पाचनमित्यादि।—एतच्च विकल्पद्वयं योग्यतया यथाक्रममामदोष-पक्वदोषविषयं ज्ञेयम्। तेन पाचनं सामस्य, निरामस्य शमनमिति ज्ञेयम्। षडहेऽतीते इति ज्वरोत्पाददिनमारभ्य षडहेऽतिक्रान्ते सप्तमेऽहनि लघ्वन्नप्रतिभोजितं ज्वरितम् अष्टमेऽहनि पाचनं शमनीयं वा पाययेदिति योजना। एवञ्च सप्ताहो निरामज्वरलक्षणमिति पूर्ववाक्येन, तथा "निःसृता निरामज्वरलक्षणम्" इति खरनादवाक्येन, तथा "सप्तरात्रात् परं केचिन्मन्यन्ते देयमौषधम्" इति सुश्रुतवाक्येन, तथा "सप्ताहादौषधं केचित्" इति वाग्भट-वचनेन सहैकवाक्यता उपपन्ना भवति। अन्ये पुनरमुमेवार्थं प्रकारान्तरेणोच्यन्ति—षडहे अतीते इति ज्वरोत्पाददिनं परित्यज्य गणना कार्य्या वर्त्तिदिनपरिहारेण परिहारगणनावत्, तेन षडहे अतीते इत्यस्य सप्तमे अतीते इत्येवार्थो भवति। भट्टारहरिचन्द्रेणापि सप्तमे दिने कषायपानं यद्व्याख्यातं, तत्राप्ययमभिप्रायः उन्नेयः; अन्यथा सुश्रुतादिविरोधो दुष्परिहर इति। चन्द्रिकाकारेणोक्तम् "अचिरोग-दिनचतुष्टयवत् ज्वरस्य सप्ताहं सामतावस्थाः, तत्र न पाचनं न वा शमनं न शोधनम्" इति। यत्तु पेयानन्तरं हारीतेनोक्तम् "एतां क्रियां प्रयुञ्जीत षड्रात्रं सप्तमे-ऽहनि। पिबेत् कषाययोगांस्तु ज्वरघ्नान् साधुसाधितान्" इति, तथा "इति षाड्रात्रिकः प्रोक्तो नवज्वरहितो विधिः। ततः परं पाचनीयं शमनं वा ज्वरे हितम्" इति खरनाद-वचनञ्च पूर्वोक्तरीत्या सप्ताहप्रतिपादकमेव ज्ञेयम्। अथवा पैत्तिकज्वराभिप्रायेण तद् वचनद्वयं व्याख्येयम्। यतः सुश्रुते "सप्तरात्रात् परं केचिन्मन्यन्ते देयमौषधम्" इत्यभि-धाय "पैत्तिके वा ज्वरे देयमल्पकालसमुत्थिते। अचिरज्वरितस्यापि भेषजं दोषपाकतः" इत्युक्तम्; वाग्भटेनापि—"मृदुर्ज्वरो लघुर्देहश्चलिताश्च मला यदा। अचिरज्वरितस्यापि भेषजं योजयेत् तदा" इति यदुक्तम्, तदपि सुश्रुतसंवादात् पित्तज्वरपरमेव ज्ञेयम्। एतद्वचनद्वयं सप्ताहादर्वागपि पाचनकषायदानप्रतिपादकमनुद्धतसाम-तायामेव ज्ञेयम्। उद्धतसामतायान्तु भेषजदानस्य अनर्थापादकत्वात्। अत

**ज्वरितं षडहेऽतीते लघ्वन्नप्रतिभोजितम् ॥ ४४ ॥**
**सप्ताहात् परतोऽस्तब्धे सामे स्यात्पाचनं ज्वरे।**

---

यदाह वाग्भटः—"सप्ताहादौषधं केचिदाहुरन्ये दशाहतः। केचिल्लघ्वन्नभुक्तस्य योज्यमामोल्बणे न तु। तीव्रज्वरपरीतस्य दोषवेगोदये यतः। दोषेऽथवाऽतिनिचिते तन्द्रास्तैमित्यकारिणि। अपच्यमानं भैषज्यं भूयो ज्वलयति ज्वरम्" इति। सर्वथैव ज्वरे तु षडहं यावत् सप्ताहादर्वाक् पाचनमपि न देयमेव। सप्ताहानन्तरमपि यदि सम्यग्दोषपाकलक्षणानि ज्वरमार्दवलघुत्वादीनि न भवन्ति तदा पाचनम्, अन्यथा तु शमनं देयम्। एतदभिप्रायेणैव—"मृदौ ज्वरे लघौ देहे प्रचलेषु मलेषु च। पक्वं दोषं विजानीयाज्ज्वरे देयं तदौषधम्" इति सुश्रुतवचनं ज्ञेयम्। न चैतद्वचनं ज्वरमार्दवादौ दोषपाकलक्षणे सप्ताहे सत्येव भेषजस्य देयतां बोधयति। तत्र च सप्ताहानन्तरमपि नियमो नास्तीति वाच्यम्। सप्तरात्रात् परं केचि-दित्यादिवचनैः सप्ताहानन्तरमेव भेषजदानस्य बोधितत्वात्, तेन सप्ताहादर्वाक् पाचनं शमनञ्च न देयमिति स्थितम्। व्याख्यानान्तरम् "ज्वरे पेयाः कषायाश्च" इत्यादि-व्याख्यानावसर एव व्याख्येयम्। ननु सप्तरात्रादूर्ध्वं ज्वरस्य निरामत्वात् किमर्थं तत्र पाचनं दीयते? यदुक्तम् "सप्ताहो निरामज्वरलक्षणम्" इति। सत्यम्, सप्ताहोऽपि यदि न निरामत्वं, तदा लक्षणमेव न स्यात् सामनिरामसाधारणत्वात्। असाधारण-धर्मो हि लक्षणं भवति। यदाह—द्विविधा हि सामता, एका—दोषस्य तरुणत्व-रूपा, तरुणत्वञ्च सप्ताहमात्रं, तदुक्तं सुश्रुतेन "आ सप्तरात्रं तरुणम्" इत्यादि। द्वितीया तु—रसस्य गुरुत्वविष्टम्भत्वादिरूपा। तत्र प्रथमा—सप्ताहादपैति, यत्र हरिचन्द्रेण चोक्तम् "सप्तानां धातूनां धात्वग्निना सप्ताहेनामपाकात् सप्ताहे ज्वरे नैराम्यम्" इति। उक्तञ्च—"सप्ताहेनैव पच्यन्ते सप्तधातुगता मलाः। निराम-श्चायतः प्रोक्तो ज्वरः प्रायोऽष्टमेऽहनि" इति। द्वितीया पुनः—सप्ताहात् परतोऽपि कदाचिद्दोषबाहुल्यादग्निमान्द्याद्वानुवर्तते। उक्तञ्च—"दोषाणामतिबहुत्वात् ज्वरः प्रायः कफाधिकः। परिपाकं न सप्ताहे नापि याति कदाचन" इति। अतएव पाचनमुचितमेव। अत एवाह सुश्रुतः—"बहुदोषस्य मन्दाग्नेः सप्तरात्रात् परं ज्वरे। लङ्घनाद्यैरुपक्रान्तैर्यदा दोषो न पच्यते। तदा तं मुखवैरस्यतृष्णारोचकनाशनैः। कषायैः पाचनैर्हृद्यैर्ज्वरघ्नैः समुपाचरेत्" इति ॥ ४४ ॥

इदानीं सप्ताहानन्तरमेव यस्यामवस्थायां पाचनं सम्यक् देयं तदाह, सप्ताहा-दित्यादि।—अस्तब्धे सामे इति लक्षणप्रतीक इत्यादि यथानामत्र स्तब्धसामतालक्षणस्य

निरामे शमनं स्तब्धे सामे नौषधमाचरेत् ॥ ४५ ॥

रससामतालक्षणमाह ।

लालाप्रसेको हृल्लास-हृदयाशुद्ध्यरोचकाः ।
तन्द्रालस्याविपाकास्य-वैरस्यं गुरुगात्रता ॥
क्षुन्नाशो बहुमूत्रत्वं स्तब्धता बलवान् ज्वरः ।
आमज्वरस्य लिङ्गानि न दद्यात् तत्र भेषजम् ।
भेषजं ह्यामदोषस्य भूयो ज्वलयति ज्वरम् ॥ ४६ ॥

आमपाकलक्षणमाह ।

मृदौ ज्वरे लघौ देहे प्रचलेषु मलेषु च ।
पक्वं दोषं विजानीयाज्ज्वरे देयं तदौषधम् ॥ ४७ ॥

---

निरग्नौ मन्दाग्नौ प्राप्तमधुभावे मधुभाण्डावलेपन्यायेन स्थितस्य कोष्ठावलिप्तस्याम भावस्य पाकार्थं पाचनं देयम्। निरामे शमनमिति पाचनेन कोष्ठावलिप्तस्याम भावस्य पाकात् सम्यग्निरामत्वे सतीत्यर्थः। सम्यग्निरामता च दशरात्रात् परमेव दोषसामता-रससामतयोः सर्वथा निवृत्त्या प्रायशो भवतीति। अत एव "दशरात्रात् परं कैश्चिद्दातव्यमिति निश्चितम्" इति सुश्रुतेनोक्तम्। किंवा यत्र दोषाणामनति-दुष्टत्वात् सप्ताहेनैव रससामतापि निवर्तते, तत्र सप्ताहादनन्तरमपि शमनादि देयम्। "स्तब्धे सामे नौषधमाचरेत्" इति लालाप्रसेकादिरससामतालक्षणानां स्तब्धमात्र सद्भावे सप्ताहानन्तरमपि पाचनं शमनञ्च न देयमित्यर्थः ॥ ४५ ॥

रससामतालक्षणमाह,—लालाप्रसेक इत्यादि। हृदयाशुद्धिः हृदयगौरवम्। न दद्यादित्यत्र हेतुमाह,—भेषजमित्यादि ॥ ४६ ॥

पाकलक्षणमाह, मृदावित्यादि।—सुश्रुतस्य। मृदौ मन्दीभूते। मान्द्यञ्च ज्वर-स्यामरसस्य पाकात् स्रोतसि शुद्धे पुनः कोष्ठगते चोष्मणि भवति। प्रचलेषु प्रति-बन्धकस्यामरसस्य व्यपगमात् अविरुद्धेषु मलेषु वातपित्तकफशकृदादिषु। पक्वमिति निरामम्। दोषमित्यनेन दुष्टिकारकत्वात् शकृदप्युच्यत इत्याह। देयं तदौषध मिति अल्पदोषे अल्पामतायां पाचनं, सर्वथा निरामत्वे तु शमनं शोधनं यथा-वस्थं देयम्। एतदनन्तरम् यद्यपि पक्वलक्षणम् एकीयमतेन सुश्रुतेनोक्तं, यथा,— "दोषप्रकृतिवैकृत्यादिकं पक्वलक्षणम्" इति। ज्वरारम्भकाले यो दोषस्वभावः सम्प्राप्ति-

नागरं देवकाष्ठञ्च धन्याकं बृहतीद्वयम् ।
दद्यात् पाचनकं पूर्वं ज्वरिताय ज्वरापहम् ॥ ४८ ॥

सर्वज्वरेषु ।

पीताम्बुर्लङ्घितः क्षीणोऽजीर्णी भुक्तः पिपासितः ।
न पिबेदौषधं जन्तुः संशोधनमथेतरत् ॥ ४९ ॥

वीर्याधिकं भवति भेषजमन्नहीनम्
हन्यात् तदाममसंशयमाशु चैव ।
तद्बालवृद्धयुवतीमृदुभिश्च पीतम्
ग्लानिं परां नयति चाशु बलक्षयञ्च ॥ ५० ॥

अनुलोमोऽनिलः स्वास्थ्यं क्षुत् तृष्णा सुमनस्कता ।
लघुत्वमिन्द्रियोद्गार-शुद्धिर्जीर्णौषधाकृतिः ॥ ५१ ॥

क्लमो दाहोऽङ्गसदनं भ्रमो मूर्च्छा शिरोरुजा ।
अरतिर्बलहानिश्च सावशेषौषधाकृतिः ॥ ५२ ॥

---

कम्, तस्यान्यथात्वादम्लत्वादिकेषां मते पञ्चमवर्णमिति। अन्ये तु प्रथमा प्रकृति-र्नागरसमभूर्छिताना ज्वरजननसमर्थाना मवाद्यस्य ज्वरतीव्रत्व दिङ्गुरुत्व-मल-विषमादिकृत्पादन, ततो विपर्ययो वैलक्षण्य। प्रथमा प्रकृतिरव्याप्त एव। यदुक्तं—"प्रथमा दोषदृष्टिश्च किञ्चिदाम प्रचक्षते" इति ॥ ४७ ॥

इदानीं सर्वज्वरसाधनार्थं पाचनकषायमाह, नागरमित्यादि।—भिन्नस्य। योगो-ऽयं द्रव्यगुणपर्यालोचनया वातकफघ्न इति भद्र, व्याधिप्रत्यनीकतया तु पित्तेऽपि हितत्वमस्याभ्युपगम्य सर्वज्वरविषयत्व सिद्धमित्याह सर्वज्वरेष्विति। अत एव तत्रापि एतप्रभृतियोगानि पठ्यते "सर्वज्वरेषु पथ्यानि यथादोषस्य भूति" इति ॥ ४८ ॥

यैर्भेषजं न पेयं तानाह, पीताम्बुरित्यादि।—भुक्त इति कर्तरि क्त, अथशब्द-समुच्चये निपातस्यानेकार्थत्वात्, तेनेतरत् शमनञ्च न पिबेदित्यर्थः ॥ ४९ ॥

परिणामप्रयुक्तभेषजगुणमाह, वीर्याधिकमित्यादि।—भोजनसमयक्रियमाणो यथापेक्षया वीर्येणोत्कृष्टमित्यर्थः। अन्नहीनमिति हेतुगर्भविशेषणम्,। यतोऽन्नहीन भेषजमावरकदोषाभावादखिलमेव वीर्यं प्रतिपद्यते कोष्ठञ्च सम्यग्भावयति। अन्नहीन इति पाठान्तरे कोष्ठ इति शेषः ॥ ५० ॥

भेषजपाकलक्षणमाह,—अनुलोमोऽनिल. स्वास्थ्यमित्यादि ॥ ५१ ॥

भेषजशेषे भुक्तं पीतञ्च तथौषधं समीपेऽन्ये ।
न करोति गदोपशमं प्रकोपयत्यन्यरोगांश्च ॥ ५३ ॥
शीघ्रं विपाकमुपयाति बलं न हिंस्यात्
अन्नावृतं न च मुहुर्वदनान्निरेति ।
प्राग्भुक्तसेवितमथौषधमेतदेव
दद्याच्च वृद्धशिशुभीरुवराङ्गनाभ्यः ॥ ५४ ॥
मात्राया नास्त्यवस्थानं दोषमग्निं बलं वयः ।
व्याधिं द्रव्यञ्च कोष्ठञ्च वीक्ष्य मात्रां प्रयोजयेत् ॥ ५५ ॥
उत्तमस्य पलं मात्रा त्रिभिश्चाक्षैश्च मध्यमे ।
जघन्यस्य पलार्द्धेन स्नेहक्वाथ्यौषधेषु च ॥ ५६ ॥
कर्षादौ तु पलं यावद्दद्यात् षोडशिकं जलम् ।

---

भेषजस्याभ्यवहार्यकालमाह,—क्रम इत्यादि ॥ ५२ ॥

भेषजाजीर्णे भोजने चान्नाजीर्णेऽपि भेषजोपयोगे दोषमाह, भेषजशेष इत्यादि ।—भुक्तं भोजनम् एतच्चाभ्यवहारोपलक्षणं तेन लेह्यादीनामपि ग्रहणम् । भुक्तनियम सम्बन्धे न करोति गदोपशममित्यन्वयबोधितो व्यर्थो न्यायः, यतः भक्तजत्वादौषधमेव गदोप शमकं युक्तम्, तेनायमर्थः,—भेषजाजीर्णे भोजनमौषधमेव गदोपशमं न कारयतीत्यर्थः । पीतमित्यत्र परिमाणाभिप्रायेणोक्तम्, तेन लेह्यादीनामपि ग्रहणम् । समीपेऽन्ये इत्येव पाठः, अन्यथा छन्दोभङ्गः स्यात् ॥ ५३ ॥

भोजनसमयोपयुज्यमानस्यापि औषधस्य विषयविशेषे गुणमाह, शीघ्रमित्यादि ।—शीघ्रपाकिता बुभुक्षितस्य बलवदग्नौ सम्बन्धादित्यभिसन्धिः । प्राग्भुक्तसेवितमिति भक्तात् पूर्वमव्यवहितकाले सेवितम् ॥ ५४ ॥

तदौषधं किंपरिमाणमित्याह, मात्राया इत्यादि ।—अवस्थानमिति नैयत्यम्, अत एव चरकेणाप्युक्तं "मात्रा खलु व्याध्यपेक्षिणी" इति ॥ ५५ ॥

तर्हि मन्दबुद्धेरनध्यवसायः स्यात् ? इत्यतः क्वाथस्य मानं प्रसङ्गात् स्नेहस्याप्याह, उत्तमस्येत्यादि ।—स्नेहक्वाथ्यौषधेष्विति स्नेहरूपाणि क्वाथरूपाणि चौषधानि तेषु, किंवा चौषधं स्वरसगुडादि ॥ ५६ ॥

क्वाथस्य तावत् पलमानं, तच्च कियता जलेन क्वथनीयमतस्तन्मानमाह, कर्षादीति-

ततस्तु कुड़वं यावत् तोयमष्टगुणं भवेत् ।
क्वाथ्यद्रव्यपले कुर्य्यात् प्रस्थार्द्धं पादशेषितम् ॥ ५७ ॥
द्वात्रिंशन्माषकैर्माषश्चरकस्य तु तैः पलम् ।
अष्टाचत्वारिंशता स्यात् सुश्रुतस्य तु माषकः ।
द्वादशभिर्धान्यमाषैश्चतुःषष्ट्या तु तैः पलम् ॥ ५८ ॥
एतच्च तुलितं पञ्च-रक्तिमाषात्मकं पलम् ।

---

त्यादि ।—अग्निवेशस्य क्वाथविषये परिभाषा, पलं यावदित्येकपदम् । षोडशिकं जलमिति षोडशकर्षादिरूपम् । अत एव कर्षादिमानक्वाथ्यापेक्षया दीयमानस्य षोडशगुणजलस्य अनुमत्या कुड़वादिमानत्वेऽपि न वैगुण्यं, जलमानस्यापि कर्षादिरूपतया निर्दिष्टत्वात् । तथा हि—"रक्तिकादिषु मानेषु यावन्न कुड़वो भवेत् । शुष्कद्रवार्द्रयोश्चापि तुल्यं मानं प्रकीर्त्तितम्" इति । रक्तिकादिष्विति रक्तिकादिरूपतया निर्दिष्टेष्वित्यर्थः । तत इति एकपलादूर्द्ध्वं पलद्वयमारभ्य कुड़वपर्य्यन्तमित्यर्थः । अत्र पलं यावदित्यनन्तरं वचनस्य पेयक्वाथविषयता, ततस्तु कुड़वं यावदित्यादि तु सम्पूर्णश्लोकानुरोधादित्युक्तम् । अत एव पलं यावदित्यस्य पेयक्वाथविषयत्वं द्रढयन् पादावशिष्टत्वञ्च बोधयन् तन्त्रान्तरोक्तवचनमुपन्यस्यति, क्वाथ्यद्रव्यपले कुर्य्यादित्यादि ।—प्रस्थार्द्धमिति द्रववैगुण्यात् षोडश पलानि, अत एवोक्तमन्यत्र —"क्वाथ्यद्रव्यपले वारि द्विरष्टगुणमिष्यते । चतुर्भागावशिष्टञ्च पेयं पलचतुष्टयम्" इति । द्विरष्टगुणमिति षोड़शगुणमित्यर्थः । एतेन पले क्वाथ्ये दीयमानस्यापि षोडशगुण जलस्य पादावशिष्टताकथनेन कर्षादौ दीयमानस्य षोडशगुणजलस्य पादावशिष्टता क्वाथ्येति सूचयति । चक्रश्चाप्याह—"द्रव्यमापोथितं क्वाथ्यं दत्त्वा षोडशिकं जलम् । पादावशिष्टं कर्त्तव्यमेष क्वाथविधिः स्मृतः" इति ॥ ५७ ॥

इदानीं क्वाथस्य पलचिकर्षादिकमित्यादि यदुक्तं, तत् सर्व्वमकिञ्चित्करं, यतो रक्तिकादिज्ञानाधीनं माषकज्ञानं, माषकज्ञानाधीनञ्च कर्षपलादिज्ञानं सदैव मूल निर्णीतम्, अतो माषकादिमानं व्यवस्थापयितुं परिभाषामाह, द्वात्रिंशन्माषकैरित्यादि ।—द्वात्रिंशद्धान्यमाषकैरित्यर्थः । तेन द्वात्रिंशता व्रीहिमाषैः साधारणो माषकः, तैश्च माषकैरष्टाचत्वारिंशता चरकमते पलं स्यादिति योज्यम्, सुश्रुतमते पुनर्व्रीहिमाषैर्द्वादशभिर्माषकः, तैर्माषकैश्चतुःषष्ट्या सुश्रुतमते पलमित्यर्थः ॥ ५८ ॥

इदानीं सुश्रुतचरकमते यावतीभी रक्तिभिर्माषको भवति तदाह, एतच्चेत्यादि ।—

चरकार्द्धपलोन्मानं चरके दशरक्तिकैः ॥
माषैः पलं चतुःषष्ट्या यद्भवेत् तत् तयेरितम् ॥ ५९ ॥
तस्मात् पलं चतुःषष्ट्या माषकैर्दशरक्तिकैः ।
चरकानुमतं वैद्यैश्चिकित्सासूपयुज्यते ॥ ६० ॥

वातज्वर-चिकित्सा ।

बिल्वादिपञ्चमूलस्य क्वाथः स्याद्वातिके ज्वरे ।
पाचनं पिप्पलीमूल-गुडूचीविश्वजोऽथवा ॥ ६१ ॥

---

एतदिति द्वादशधान्यमाषकैर्यत्,चत्वा माषकैः सुश्रुतेन यत् पलमुक्तं तत् रक्तिकाभिस्तुलितं सत् पञ्चरक्तिमाषात्मकं भूत्वा चरकार्द्धपलोन्मानं भवतीत्यर्थः। एतदेव विशदयति चरके दशरक्तिकैरित्यादि।—यत्सुश्रुते द्वात्रिंशन्माषकमाय शतैरष्टाचत्वारिंशन्माषकैः यत् पलमीरितमुक्तं, तद्दशरक्तिकैश्चतुःषष्ट्या माषकैस्तुलितं सत् तथा तावन्मात्रमेव भवेत्, यतश्चतुर्विंशत्या माषकानामर्द्धरक्तिकात्तुल्या भवन्ति, ततश्च दशरक्तिकमानाच्चतुःषष्टिमाषकाश्चतुर्विंशतिमाषकानामर्द्धगुणिताः सन्तः षट्-त्रिंशदधिकपञ्चदशशतमाषकमाया भवन्ति। एवं चरकमतेऽपि द्वात्रिंशन्माषकात्मक-प्रमाणा येऽष्टाचत्वारिंशन्माषकास्ते द्वात्रिंशता गुणिताः सन्तः षट्त्रिंशदधिकपञ्च-दशशतमाषकमायाः स्युरिति, दशरक्तिकमाषकृतपलमानेन सह द्वात्रिंशन्माषकात्मक-प्रमाणमाषकृतपलमानस्य तुल्यता। सुश्रुतमते पुनर्द्वादशमाषकमाया माषकाः, ते चतुःषष्टिः पलमित्युक्तम्। ते चतुःषष्टिमाषका द्वादशमाषकमायगुणिताः सन्तो-ऽष्टपञ्चाशदधिकसप्तशतमाषकमाया भवन्तीति चरकोक्तपलमानादर्द्धेन सुश्रुतोक्तपल-मानमिति ॥ ५९ ॥

इदानीं चरकसुश्रुतोक्तमानयोर्मध्ये चरकोक्तमानमेव व्यवहारोपयौगिकमित्याह, तस्मादित्यादि।—यस्माच्चरकोक्तमानमेव वैद्यैश्चिकित्सासूपयुज्यते, तस्माद्दशरक्तिकैश्चतुःषष्ट्या माषकैर्यत् पलं, तदेव व्यवहारसिद्धमिति शेषः ॥ ६० ॥

*पाचनद्वयमाह*, बिल्वादीत्यादि।—बिल्वादिपञ्चमूलं महत् पञ्चमूलम्। अव-धारणाप्यनेन क्रियते। पिप्पलीमूलेत्यादिनान्तु क्वाथविधिर्भवेति, क्वाथोक्तपाचनयोगेन गणरूपेणैव अवचारणा क्रियते, न पुनरगणरूपेण, अवचारणायोगेनापि गणरूपेणैव कषायोऽपि क्रियते। तेन धान्यपिप्पल्यादिना कषायविधिरित्याहुः ; केचित्तु क्वाथोक्त-पाचनयोगेनागणरूपेणापि अवचारणामाहुः ॥ ६१ ॥

किराताब्दामृतोदीच्य-बृहतीद्वयगोक्षुरैः।
सस्थिराकलसीविश्वैः क्वाथो वातज्वरापहः ॥ ६२ ॥
रास्ना वृषादनी दारु सरलं सैलवालुकम्।
कषायः शर्कराक्षौद्र-युक्तो वातज्वरापहः ॥ ६३ ॥
प्रक्षेपः पादिकः क्वाथ्यात् स्नेहे कल्कसमो मतः ॥ ६४ ॥
परिभाषामिमामन्ये प्रक्षेपेऽप्युचिरे यथा।
कार्षश्चूर्णस्य कल्कस्य गुडिकानाञ्च सर्वशः ॥
द्रवशुक्त्या स लेढव्यः पातव्यश्च चतुर्द्रवः।
मात्रा क्षौद्रघृतादीनां स्नेहक्वाथेषु चूर्णवत् ॥ ६५ ॥
बिल्वादिपञ्चमूली च गुडूच्यामलकं तथा।

---

किरातेत्यादि।—किरातः चिरातेति ख्यातम्, अब्दो मुस्तकम्, अमृता गुडूची, उदीच्यं बालकम्, स्थिरा शालपर्णी, कलसी पृश्निपर्णी, विश्वं शुण्ठी, विश्वस्थाने बिल्वस्य क्वचित् पाठः। "शीतवात परं वायुः" इति चित्तगुप्ते पाठभेदोऽयं योज्य इति निश्चयः ॥ ६२ ॥

रास्नेत्यादि।—वृषादनी वन्दा, एलवालुकं स्वनामख्यातम्, वातीतोऽयं योगः; किन्तु तन्त्रोत्तरार्कैमन्यथा पठ्यते, "कोष्णं सगुडसर्पिष्कं पिबेद्वातज्वरापहम्" इति, एवं चक्रादेऽपि। शर्कराक्षौद्रपाठस्तु बहुषयत्पुस्तकेष्वस्ति, अतः पाठेनापि भवितव्यम्। अतः चित्रसेनगुप्ते तत्प्रक्षेपो योज्यः। अय योगो गुडमात्रप्रक्षेपादपि रक्तिगुप्ते न पठ्यते ॥ ६३ ॥

क्षौद्रशर्करयोर्मानार्थं परिभाषामाह, प्रक्षेप इत्यादि।—क्वाथ्यात् क्वथनीयद्रव्यात् रास्नादेः उत्तमपुरुषापेक्षया मानात् पादिकः कर्ष इत्यर्थः। एवं मध्यमाधमापेक्षया यथायथं ज्ञेयम्। स्नेहे कल्कसमो मत इति।—"कल्कस्तु स्नेहपादिकः" इत्युक्तेः कल्कसमः पादिक इत्यर्थः। [illegible]र्गनिति यथाम्नायाम्। कर्ष इत्यादावपि क्षौद्रादीनां मात्रा चूर्णवदित्यतिदेशेन कर्ष एवार्थः। अत एकार्थत्वादनुमतैव। एवं "क्षितौपम्नागुरुसाद सामान्यायप्रकल्पना" इति वचनस्यापि "प्रक्षेपः पादिकः क्वाथ्यात्" इति वचनेन सहैकवाक्यता ज्ञेया। तथा हि क्षितौपलादिकमत्रोपलक्षणं, तेन मध्वादिकमपि ज्ञेयम्। क्वाथ्यमुक्तं [illegible] [illegible]पलकर्षं यत् क्वाथ्यद्रव्यमान तच्चतुर्भागद्वयेन प्रकल्पना येषां [illegible] तथा। तेनापि क्वाथ्यात् पादिक एव प्रक्षेपो ज्ञेयः। सामान्येयो प्रकल्पनेति

मधूतैः स्याच्छिरोलेप-स्तथादाहार्त्तिशान्तये ॥ ८६ ॥
उत्तानसुप्तस्य गभीरताम्र-कांस्यादिपात्रं प्रणिधाय नाभौ ।
तत्राम्बुधारा बहुला पतन्ती निहन्ति दाहं त्वरितं सुशीता ॥८७
पीतकाञ्जिकवस्त्राव-गुण्ठनं दाहनाशनम् ॥ ८८ ॥
जिह्वातालुगलक्लोम-शोषे मूर्द्धि तु दापयेत् ।
केशरं मातुलुङ्गस्य मधुसैन्धवसंयुतम् ॥ ८९ ॥

कफज्वरचिकित्सा ।

मातुलुङ्गशिफाविश्व-ब्राह्मीग्रन्थिकसम्भवम् ।
कफज्वरेऽम्बु सक्षारं पाचनं वा कषादिकम् ॥ ९० ॥
पिप्पली-पिप्पलीमूल-चव्यचित्रकनागरम् ।
मरिचैलाजमोदेन्द्र-पाठारेणुकजीरकम् ॥
भार्गी महानिम्बफलं हिङ्गु रोहिणिसर्षपम् ।
विडङ्गातिविषे मूर्वा चेत्ययं कीर्त्तितो गणः ॥
पिप्पल्यादिः कफहरः प्रतिश्यारोचकज्वरान् ।
निहन्त्याद्दीपनो गुल्म-शूलघ्नस्त्वामपाचनः ॥ ९१ ॥

---

कालेयेत्यादि ।—कालेयं कालीयकाष्ठम्; चन्दना चन्दनमूलं, बद बदरफलम् । मधूतैरिति ।—घृतमत्र शतधौतं प्रयच्छन्ति वृद्धाः ॥ ८६ ॥

उत्तानेत्यादि ।—सर्वत्रैव कफसम्बन्धं विना यथा गात्रे चम्बुकणा न पतन्ति, तथा कार्यम् ॥ ८७ ॥

पीतेत्यादि ।—पश्चात् सम्यगापीड्य क्रियते ॥ ८८ ॥

जिह्वेत्यादि ।—सुश्रुतस्य । लेपोऽयम् । क्लोम पिपासास्थानम्; मूर्द्ध्नि शिरस्तालुमध्ये ॥ ८९ ॥

मातुलुङ्गेत्यादि ।—शिफा मूलम्; ब्राह्मी ब्राह्मीशाकम्, ग्रन्थिक पिप्पलीमूलम् । सक्षारमिति मातुलुङ्गशिफाविशेषणमेव, न तु कषादिकमित्यस्य, यतस्तन्त्रान्तरे पिप्पल्यादिकस्य पाचनं कफजे ज्वरे ह्युक्तम् । न तु सक्षारमपीति । कषादिकमिति ।—सुश्रुतोक्तपिप्पल्यादिगणः पाचनमेव गणं निर्दिशति ।—पिप्पलीत्यादि ॥ ९० ॥ ९१ ॥

कटुकं चित्रकं निम्बं हरिद्रातिविषे वचा।
कुष्ठमिन्द्रयवं मूर्वां पटोलञ्चापि साधितम्॥
पिबेन्मरिचसंयुक्तं सक्षौद्रं श्लैष्मिके ज्वरे॥ ८२॥
निम्बविश्वामृता दारु शटी भूनिम्बपौष्करम्।
पिप्पल्यौ बृहती चेति क्वाथो हन्ति कफज्वरम्॥ ८३॥
सिन्धुवारदलक्वाथः सोषणः कफजे ज्वरे।
जङ्घयोश्च बले क्षीणे कर्णे वा रुधिरे पिबेत्॥ ८४॥
आमलक्यभया कृष्णा चित्रकश्चेत्ययं गणः।
सर्वज्वरकफातङ्क-भेदी दीपनपाचनः॥ ८५॥
त्रिफला पटोलवासाच्छिन्नरुहातिक्तरोहिणीषड्ग्रन्थाः।
मधुना श्लेष्मसमुत्थे दशमूलीवासकस्य वा क्वाथः॥ ८६॥
मुस्तं वत्सकवीजानि त्रिफला कटुरोहिणी।

---

कटुकमित्यादि।—चक्रसंग्रहः। सुश्रुते "हरिद्रा चित्रकं निम्बमुशीरातिविषे वचा" इति दर्शनात् कटुकस्थाने उशीरमिति नियम्य पठन्ति। कटुकेत्यादि वचान्त एको योगः, कुष्ठादिपटोलान्तो द्वितीयः, अत एव ग्रन्थे पूर्वार्द्धं परित्यज्य कुष्ठमित्यादि द्वितीयार्द्धमेव पठ्यते। वस्तुतस्तु एकयोगत एव सुश्रुतटीकाकारा व्याख्यातवान्। पटोलमिति पटोलपत्रम्, "पटोलादेश्छदस्तथा" इति वचनात्। साधितमित्यनन्तरं क्वाथमिति शेषः। मरिचस्य मधु तु मधुरं प्रक्षेप्य शीतवीर्यत्वादिति चक्रः॥ ८२॥

निम्बेत्यादि।—पौष्करमूलं, तदभावे कुष्ठम्, एवं सर्वत्र। बृहती कण्टकारी॥ ८३॥

सिन्धुवारेत्यादि।—आयुर्वेददीपस्य। सोषण इति मरिचयुक्तः, अत एव क्वाथश्च इति पठ्यते; अन्ये तु ऊषणशब्देन मरिचं व्याख्यानयन्ति व्यवहरन्ति च॥ ८४॥

आमलक्यादि व्यक्तम्॥ ८५॥

त्रिफलेत्यादि।—छिन्नरुहा गुडूची। तिक्तरोहिणी कटुरोहिणी, षड्ग्रन्था वचा, अत्र योगे दशमूलीवासककाथसाहचर्यात् क्वाथ एव, दशमूलीवासकाभ्यां मिलिताभ्यां क्वाथः। अत्रापि मधु प्रक्षिपन्ति॥ ८६॥

परूषकाणि च क्वाथः कफज्वरविनाशनः ॥ ९७ ॥

चातुर्भद्रावलेहिका ।

कट्फलं पौष्करं शृङ्गी कृष्णा च मधुना सह ।
कासश्वासज्वरहरः श्रेष्ठो लेहः कफान्तकृत् ॥ ९८ ॥
कर्षश्चूर्णस्य कल्कस्य गुडिकानाञ्च सर्वशः ।
द्रवशुक्त्या स लेढव्यः पातव्यश्च चतुर्द्रवः ॥ ९९ ॥
ऊर्द्ध्वजत्रुगरोगघ्नी सायं स्यादवलेहिका ।
अधोरोगहरी या तु सा पूर्वं भोजनाश्रिता ॥ १०० ॥
क्षौद्रोपकुल्यासंयोगः कासश्वासज्वरापहः ।
प्लीहानं हन्ति हिक्काञ्च बालानाञ्च प्रशस्यते ॥ १०१ ॥

द्वन्द्वज्वरचिकित्सा ।

संसृष्टदोषेषु हितं संसृष्टमथ पाचनम् ॥ १०२ ॥

वातपित्तज्वर-चिकित्सा ।

गदाः — विश्वामृताब्दभूनिम्बैः पञ्चमूलीसमन्वितैः ।
कृतः कषायो हन्त्याशु वातपित्तोद्भवं ज्वरम् ॥ १०३ ॥
त्रिफलाशाल्मलीरास्ना-राजवृक्षाटरूषकैः ।
शृतमम्बु हरेत् तूर्णं वातपित्तोद्भवं ज्वरम् ॥ १०४ ॥

---

मुस्तमित्यादि ।—मुस्तकम् । वत्सकः कुटजः ॥ ९७ ॥

कट्फलमित्यादि ।—कट्फलं स्वनामख्यातं, शृङ्गी कर्कटशृङ्गी ॥ ९८ ॥

कर्ष इत्यादि ।—परिभाषा व्याख्याता पूर्वमेव, किन्तु इह कर्षमानम् उत्तमपुरुषमपेक्षया कथितं, तेन मध्यमजघन्यापेक्षया कर्षमानादपकर्षो ज्ञेयः । व्यवहारस्तु [illegible]माषकैरिति ॥ ९९ ॥

अवलेहप्रयोगार्थं समयमाह—ऊर्द्ध्वेत्यादि ॥ १०० ॥

क्षौद्रोपकुल्येत्यादौ—उपकुल्या पिप्पली ॥ १०१ ॥

द्वन्द्वजानां चिकित्सामाह, संसृष्टेत्यादि ।—संसृष्टं मिलितं वातकफादिभिः ॥ १०२ ॥

विश्वामृतेत्यादि ।—अमृता गुडूची, पञ्चमूली स्वल्पा पञ्चमूली ॥ १०३ ॥

त्रिफलेत्यादि ।—शाल्मलीवृक्षस्य मूलम् । राजवृक्षस्य [illegible] फलम्, [illegible] परिमाणं स्यादिति [illegible], अटरूषको वासकः ॥ १०४ ॥

किराततिक्तममृता-द्राक्षामामलकीशटीम्।
निष्क्वाथ्य पित्तानिलजे क्वाथं तं सगुड़ं पिबेत्॥ १०५॥
निदिग्धिकाबलारास्ना-त्रायमाणामृतायुतैः।
मसूरविदलैः क्वाथो वातपित्तज्वरं जयेत्॥ १०६॥
पञ्चभद्रम्।—गुडूची पर्पटं मुस्तं किरातं विश्वभेषजम्।
वातपित्तज्वरे देयं पञ्चभद्रमिदं शुभम्॥ १०७॥
मधुकं शारिवे द्राक्षा मधूकं चन्दनोत्पलम्।
काश्मरी पद्मकं लोध्रं त्रिफलां पद्मकेशरम्॥
परूषकं मृणालञ्च न्यसेदुत्तमवारिणि।
मधुलाजसितायुक्तं तत् पीतमुषितं निशि॥
वातपित्तज्वरं दाह-तृष्णामूर्च्छा-वमिभ्रमान्।
शमयेद्रक्तपित्तञ्च जीमूतानिव मारुतः॥ १०८॥

अथ पित्तश्लेष्मज्वरचिकित्सा।

पटोलादि।—पटोलं चन्दनं मूर्वा तिक्ता पाठामृता गणः।

---

किराततिक्तमित्यादि।—सुगमम्। अमृता गुडूची॥ १०५॥

निदिग्धिकेत्यादि। निदिग्धिका कण्टकारी। मसूरविदलैरिति।—व्रीहिमसूरविदलैरिति वक्तव्ये। अन्ये तु मसूरविदलं श्यामलतामाहुः, यद्यप्यस्याः पर्याये मसूरविदला पठ्यते, तथापि त्रिवृन्मसिद्ध भौकार्थ्यत्वात इति शिष्टे समादर। अध्याय द्रव्यगुणे ज्वरहन्तृत्वमस्ति, व्यवहारस्तु क्वचिदनया क्वचिद्व्रीहिमसूरेणेति॥ १०६॥

पञ्चभद्रस्य पित्तकफहन्तृत्वमपि बोध्यम्, यदाह हारीत,—"किरात पर्पटं मुस्त गुडूची विश्वभेषजम्। पित्तश्लेष्मज्वरे कुर्य्यात् पाचन ज्वरनाशनम्" इति॥ १०७॥

मधुकमित्यादि।—द्वे शारिवे श्यामलतानन्तमूले; मधूकं मधूकपुष्पम्, उत्पलं नीलोत्पलम्, काश्मरी गाम्भारी, अस्या फल ग्रहोपदेशात्। पद्मस्य केशरं किञ्जल्कं, मृणालमुशीरम्, उत्तमवारिणि तण्डुलोदके। एतत् सर्वं शीतकषायविधिना गृहीत्वा पेयम्॥ १०८॥

पित्तश्लेष्मारुचिच्छर्दि-ज्वरकण्डूविषापहः॥ १०८॥

गुडूच्यादिः।—गुडूची निम्बधन्याकं पद्मकं चन्दनानि च।
एष सर्वज्वरान् हन्ति गुडूच्यादिस्तु दीपनः॥
हृल्लासारोचकच्छर्दि-पिपासादाहनाशनः॥ ११०॥

चातुर्भद्रक पाठासप्तकौ।

किरातं नागरं मुस्तं गुडूचीञ्च कफाधिके।
पाठोदीच्यमृणालैस्तु सह पित्ताधिके पिबेत्॥ १११॥

कण्ठकार्य्यादिः।—कण्ठकार्य्यमृताभार्गी-नागरेन्द्रयवासकम्।
भूनिम्बं चन्दनं मुस्तं पटोलं कटुरोहिणी॥
कषायं पाययेदेतत् पित्तश्लेष्मज्वरापहम्।
दाहतृष्णारुचिच्छर्दि-कासहृत्पार्श्वशूलनुत्॥ ११२॥
मधुकपुष्पवासाया रसः क्षौद्रसितायुतः।
कफपित्तज्वरं हन्ति सास्रपित्तं सकामलम्॥ ११३॥

---

पित्तकफज्वरचिकित्सामाह, पटोलमित्यादि।—सुगमम्। गणोक्तत्वात् क्वाथकल्कादिकल्पनात्र बोध्या॥ १०९॥

गुडूच्यादि।—पद्मकं पद्मकाष्ठम्। यत्र पद्ममित्युक्तं तत्र प्रायः पद्मकेशरमेव गृह्यते। अत्र वमथदाहपिपासाया ग्रहाः शीतीकृत्य मधु प्रक्षिपन्ति। तत्र बहुधा दृष्टफलम्॥ ११०॥

किरातमित्यादि।—"पाठोदीच्यमृणालैस्तु सह पित्ताधिके पिबेत्" इति किरातादिपाठादिभिः सह मिलित्वा पिबेत्; अत, पाठासप्तकत्वम्। यथाक्रमप्रयोगम्। पित्ताधिक इयत्र वाक्य इति शेषः। अतुकार्य्योऽप्युक्तं—"भूनिम्ब-घन-गुडूची-यवान्यु वासक-भार्ग्यभयाशाठी" इति॥ १११॥

कण्टकार्य्यादि।—भार्गी बामनहाटी; इन्द्र इन्द्रयवः; यवासकं दुरालभा। एष योगः पित्ताधिके कफ इति केचित्॥ ११२॥

मधूकेत्यादि।—रसः स्वरसः तस्य गुरुत्वात् चतुर्थांशं सर्वत्रोपयुज्यते। सितामधुनोस्तु प्रत्येकं षट्‌शिक इत्य प्रदेय इति॥ ११३॥

पटोलं पिचुमर्दश्च त्रिफला मधुकं बला ।
साधितोऽयं कषायः स्यात् पित्तश्लेष्मोद्भवे ज्वरे ॥ ११४ ॥

अमृताष्टक ।—गुडूचीन्द्रयवारिष्ट-पटोलं कटुरोहिणी ।
नागरं चन्दनं मुस्तं पिप्पलीचूर्णसंयुतम् ॥
अमृताष्टक इत्येष पित्तश्लेष्मज्वरापहः ।
हृल्लासारोचकच्छर्दि-तृष्णादाहनिवारणः ॥ ११५ ॥
पटोलयवधन्याकं मुस्तामलकचन्दनम् ।
पैत्तिके श्लेष्मपित्तोत्थे ज्वरे तृट्छर्दिदाहनुत् ॥ ११६ ॥

पञ्चतिक्तम् ।

क्षुद्रामृताभ्यां सह नागरेण सपौष्करञ्चैव किराततिक्तम् ।
पिबेत् कषायन्त्विह पञ्चतिक्तं ज्वरं निहन्त्यष्टविधं समग्रम् ॥११७॥
नागरं रामठञ्चाम्ब्वा कटुकामुस्तवारिणा ।
पीत्वा ज्वरं जयेज्जन्तुः कफपित्तसमुद्भवम् ॥ ११८ ॥
दीपनं कफविच्छेदि वातपित्तानुलोमनम् ।

---

पटोलमित्यादौ—पिचुमर्दो निम्बः ॥ ११४ ॥

अमृताष्टके—अरिष्टो निम्बः ॥ ११५ ॥

पटोलेत्यादि ।—स्पष्टम् ॥ ११६ ॥

क्षुद्रेत्यादि ।—क्षुद्रा कण्टकारी, नागरस्य कटुत्वेऽपि अविरोधो गन्धभौमि न्यायात् पञ्चतिक्तकमत्र ॥ ११७ ॥

नागरमित्यादि ।—मुस्तकम् । शाल्वकाम्यनेयम । कट्वङ्गाकटुरोहिण्यौ, मिलिता समभागेन कर्षः । वैद्यकसारकेऽपि समभाग एवोक्तः । अथवा सर्वांशात् एतद्गुणत्वात् कटुकायाः प्राधान्यात् कटुकायाः शब्दस्थापकाः सितायास्तत्वार इति, तथा, चक्र-वैद्यमते—"सिता कटुकया युक्ता पीता शीतेन वारिणा । कोष्णं ज्वरं हन्त्येषा कफपित्तकृतं ज्वरम्" इत्यत्र सितायाः एव प्राधान्येन निर्देशात् । तस्मात् "क्वचिदप्यनुक्ते समता विधेया" इति वचनात् समभागेनैव युक्ता ॥ ११८ ॥

ज्वरघ्नं पाचनं भेदि शृतं धान्यपटोलयोः ॥ ११८ ॥

वातश्लेष्मज्वरचिकित्सा ।

कफवातज्वरे स्वेदान् कारयेद्रूक्षनिर्मितान् ।
स्रोतसां मार्दवं कृत्वा नीत्वा पावकमाशयम् ।
हृत्वा वातकफस्तम्भं स्वेदो ज्वरमपोहति ॥ १२० ॥
खर्परभृष्टपटस्थितकाञ्जिकसिक्तो हि वालुकास्वेदः ।
शमयति वातकफामयमस्तकशूलाङ्गभङ्गादीन् ॥ १२१ ॥
मुस्तनागरभूनिम्बं त्रयमेतत् त्रिकार्षिकम् ।
कफवातामशमनं पाचनं ज्वरनाशनम् ॥ १२२ ॥
पञ्चकोलः—पिप्पलीपिप्पलीमूल-चव्यचित्रकनागरम् ।
दीपनीयः स्मृतो वर्गः कफानिलगदापहः ॥ १२३ ॥
पिप्पलीभिः शृतं तोयमनभिष्यन्दि दीपनम् ।
वातश्लेष्मविकारघ्नं प्लीहज्वरविनाशनम् ॥ १२४ ॥

---

दीपनमित्यादि ।—अत्र धान्यकस्य दश भागकाः, पटोलस्य द्वयभागकाः । पटोलस्य तु षड्भागका इति केचित्, तन्न, समभागबाधकाभावात् । मतं चात्र:, व्यवहारस्तु व्यस्तेनैव ॥ ११९ ॥

वातश्लेष्मज्वरचिकित्सामाह, कफवातेत्यादि ।—रूक्षनिर्मितेत्यादि ।—रूक्षनिर्मिता-निति करीषाद्युपायाचार्यनिर्मितान् । यद्यपि वातश्लेष्मणि स्निग्धरूक्ष एव स्वेदो युक्तः, यदुक्तम्—"स्निग्धोऽग्निमि स्निग्धरूक्षौ वातश्लेष्मणि मध्यमे" इति, तथापि आमाशयगतस्यैव दोषस्य ज्वरारम्भकत्वात् वातेऽपि रूक्ष एव स्वेद उक्तः । उक्तं हि—"आमाशयगते वाते रूक्षपूर्वः प्रयस्यते" ॥ १२० ॥

तमेव रूक्षस्वेदमाह खर्परेत्यादि ।—स्विद्यते अनेनेति स्वेदः, वालुका एव स्वेदः, वालुकास्वेदः, तेन खर्परभृष्टेत्यादि विशेषणं सङ्गच्छते । वालुकाप्रकर इत्यपि पाठः ॥१२१॥

मुस्तेत्यादि ।—प्रत्येकं कर्षः ॥ १२२ ॥

पिप्पल्यादि ।—[illegible] कार्यमपि क्रियते; प्रत्येकं कोलप्रमाण-योगादस्य पञ्चकोल इति संज्ञा ज्ञेया ॥ १२३ ॥

पिप्पलीभिः शृतमित्यादि ।—पिप्पल्यादीनामल्पवीर्यत्वात् [illegible] अस्य क्वा-

आरग्वधग्रन्थिकमुस्ततिक्ता-हरीतकीभिः क्वथितः कषायः ।
सामे सशूले कफवातयुक्ते ज्वरे हितो दीपनपाचनश्च ॥ १२५ ॥

क्षुद्रादिः ।

क्षुद्रामृतानागरपुष्कराह्वयैः कृतः कषायः कफमारुतोद्भवे ।
सश्वासकासारुचिपार्श्वरुक्करे ज्वरे त्रिदोषप्रभवे च शस्यते ॥ १२६ ॥

दशमूलीरसः पेयः कणायुक्तः कफानिले ।
अविपाकेऽतिनिद्रायां पार्श्वरुक्श्वासकासके ॥ १२७ ॥
मुस्तं पर्पटकः शुण्ठी गुडूची सदुरालभा ।
कफवातारुचिच्छर्दि-दाहशोषज्वरापहः ॥ १२८ ॥
दारुपर्पटभार्ग्यब्द-वचाधान्यककट्फलैः ।
साभयाविश्वपूतीकैः क्वाथो हिङ्गुमधूत्कटः ॥
कफवातज्वरे पीतो हिक्काश्वासगलग्रहान् ।
कासश्वासप्रमेकांश्च हन्यात् तरुमिवाशनिः ॥
मात्रा चोद्दिष्टनादीनां स्नेहक्वाथेषु चूर्णवत् ।

---

पलादिमानेन क्वाथो न दृश्यते । तत्र कर्षमितमात्र वा गृहीत्वा कषायं कार्यं । [illegible] पानं च [illegible] । इदानीं [illegible] व्यवहरन्ति, षडङ्गपानं गृहीत्वा [illegible] कुर्वन्ति ॥ १२४ ॥

आरग्वधेत्यादि ।—आरग्वधः शोणालुकं, ग्रन्थिकं पिप्पलीमूलं, तिक्ता कटुकी । दीपनपाचनश्चेत्यत्र, "दीपनकफशोषी" इत्यपि पाठः ॥ १२५ ॥

क्षुद्रेत्यादि ।—क्षुद्रा कण्टकारी ॥ १२६ ॥

दशमूलीत्यादि ।—रसः क्वाथः । अविपाके दोषाणामपरिपाके, तेन [illegible] ॥ १२७ ॥

मुस्तेत्यादि ।—[illegible] ॥ १२८ ॥

दार्वित्यादि ।—पूतिको लताकरञ्ज इति विजयः । किन्तु पूतीक इति [illegible] दृश्यते, न च टीकया न व्याख्यातः । [illegible] । हि[illegible]- [illegible] प्रमेकांश्च [illegible], मात्रेत्यादि ।—चूर्णवदिति [illegible] । [illegible]

मापिकं हिङ्गुसिन्धूत्थ-जरणाद्यास्तु शाणिकाः ॥ १२९ ॥
मातुलुङ्गफलकेशरो घृतः सिन्धुजन्ममरिचान्वितो मुखे ।
हन्ति वातकफरोगमास्यगं शोषमाशु जडतामरोचकम् ॥१३०॥

सन्निपातज्वर-चिकित्सा ।

लङ्घनं वालुकास्वेदो नस्यं निष्ठीवनं तथा ।
अवलेहोऽञ्जनञ्चैव प्राक् प्रयोज्यं त्रिदोषजे ॥
सन्निपातज्वरे पूर्वं कुर्यादामकफापहम् ।
पश्चात् श्लेष्मणि संक्षीणे शमयेत् पित्तमारुतौ ॥ १३१ ॥

---

पलं मात्रेति पक्षे द्रयं मात्रा ज्ञेया; मापिकं हिङ्ग्विति च्छेदः। जरणाद्येन सैन्धव-सौवर्चल-मरिचादयः ॥ १२९ ॥

मातुलुङ्गेत्यादि ।—सिन्धुजन्म सैन्धवम् ॥ १३० ॥

सन्निपातज्वरचिकित्सामाह, लङ्घनमित्यादि ।—यद्यपि सन्निपातज्वरस्त्रिदोषारब्धः, तथापि आमाशयस्य कफस्थानत्वात्, स्थायित्वेन च कफ [illegible] वर्त्मनो, अतः श्लेष्मप्रत्यनीकचिकित्सा प्रथमतो विधेया। अतः कफप्रत्यनीकमेव लङ्घनादिकं प्रथमं कर्त्तव्यम् इत्याह, लङ्घनमित्यादि ।—अत एवोक्तमन्यत्र—"श्लेष्माणमेवादौ कुर्यात् व्याधौ त्रिदोषजे" इति, यत् पुनस्तन्त्रान्तरे—"शमयेत् पित्तमेवादौ ज्वरेषु सम वायिषु । दुर्निवारतमं तद्धि ज्वरार्त्तेषु विशेषतः ॥" तथा—"वातस्थानु जयेत् पित्तं पित्तस्थानु जयेत् कफम् । त्रयाणां वा जयेत् पूर्वं यो भवेद्बलवत्तम ॥" इत्युक्तं, तत्पुनरवस्थाविशेषे बोध्यम्। तथाहि सामज्वरे कफमेवादितः प्रतिकुर्यात्, आमपाकान्ते पित्तमेवादौ, चिरजे मारुतमेवादाविति। अयमर्थो तन्त्रान्तरे—"ज्वरे त्रिदोषजे सामे शमयेत् कफमादितः। पाकात्ययागमे पित्तं चिरजे विषमेऽनिलम्" इति। अन्ये पुनः—"वातस्थानु जयेत् पित्तम्" इत्यादिश्लोकमतीसारविषयतया वर्णयन्ति। ननु वातादीनां विभिन्नसमयप्रकोपादीनां युगपदुपस्थानाभावात् कथं सम्भूय सान्निपातिकत्वाद्यारम्भकत्वम्? अत्र समाधानं—त्रिदोषकरनिदानसेवने प्रकोपादेर्युगपदुपस्थितिरिति, तदपि न मनोरमं, यतस्तथाविधनिदानोपसेवनेऽपि दोषाणां विपरीतगुणैः परस्परोपघातात् युगपत्प्रकोपस्य अनुपपत्तेः। अत्रोच्यते—न खलु दोषाणां विविध एव सर्वो विपरीतः, समानस्यापि कतिपयगुणस्य सद्भावात् समानेन हि गुणेन दोषाणामन्योन्यप्रकोपस्यापि सम्भवात्। तथाहि,—

लङ्घनम् ।—त्रिरात्रं पञ्चरात्रं वा दशरात्रमथापि वा ।
लङ्घनं सन्निपातेषु कुर्य्यादारोग्यदर्शनात् ॥
दोषाणामेव सा शक्तिर्लङ्घने या सहिष्णुता ।
न हि दोषक्षये कश्चित् सहते लङ्घनादिकम् ॥ १३२ ॥

निष्ठीवनम् ।—आर्द्रकस्वरसोपेतं सैन्धवं कटुकत्रयम् ।
आकण्ठं धारयेदास्ये निष्ठीवेच्च पुनः पुनः ।
तेनास्य हृदयात् श्लेष्मा मन्यापार्श्वशिरोगलात् ।
लीनोऽप्याकृष्यते शुष्को लाघवञ्चास्य जायते ॥
पर्व्वभेदोऽङ्गमर्दश्च मूर्च्छाकासगलामयाः ।
मुखाक्षिगौरवं जाड्यमुत्क्लेशश्चोपशाम्यति ॥
सकृद्द्वित्रिश्चतुः कुर्य्यात् दृष्ट्वा दोषबलाबलम् ।
एतद्धि परमं प्राहुर्भेषजं सन्निपातिनाम् ॥ १३३ ॥

नस्यम् ।—मातुलुङ्गार्द्रकरसं कोष्णं त्रिलवणान्वितम् ।

शीतलाभावस्योष्णत्वेन पित्तं प्रकोपयति, पित्तस्य वर्धनेन वायुः, वायुरपि [illegible] कफं, कफोऽपि तथा वायुं, पित्तञ्च द्रवत्वेन कफं, कफोऽपि तथा पित्तमिति गुणसाम्यम् । न बाध्यम्, विपरीतन्तु गुणी भूयान् यस्य समासगुणमपि [illegible] मारमयत्येव, कुतो न करोत्येव यतो दृष्यापेक्षया विशेषकरत्वमभावात् [illegible] द्रवपि पर्व [illegible] प्रशमयतीति । तदुक्तम्—"[illegible] न [illegible] परस्परम् । दोषाः सहजसात्म्यत्वात् घोरं विषमहीनिव ॥" इति । [illegible] [illegible] ॥ १३१ ॥

लङ्घनं दर्शयित्वा दोषभेदेन तदवधिमाह, त्रिरात्रमित्यादि । त्रिरात्र [illegible] त्रिविधिकाणो यथाक्रममनुबन्धतारतम्यापेक्षया ज्ञेयः । कुर्य्यादारोग्यदर्शनादिति [illegible] समाप्ततदोषबलापेक्षया बलवत्तरो च ज्ञेयम् । [illegible] कथं [illegible]—दोषाणामित्यादि ।—"लङ्घन दिनम्" [illegible] [illegible] ॥ १३२ ॥

निष्ठीवनमाह आर्द्रकेत्यादि ।—आर्द्रकस्वरसयुक्तं [illegible] सैन्धवादिचूर्णं [illegible] कृत्वा निष्ठीवनमुपदिष्टमिति शङ्कः ॥ १३३ ॥

अन्यदा सिद्धिविहितं तीक्ष्णं नस्यं प्रयोजयेत् ॥
तेन प्रभिद्यते श्लेष्मा प्रभिन्नश्च प्रसिच्यते ।
शिरोहृदयकण्ठास्य-पार्श्वरुक् चोपशाम्यति ॥ १२४ ॥

मधूकसारादिः ।

मधूकसारसिन्धूत्थ-वचोषणकणाः समाः ।
श्लक्ष्णं पिष्टाम्भसा नस्यं कुर्यात् संज्ञाप्रबोधनम् ॥ १२५ ॥
सैन्धवं श्वेतमरिचं सर्षपं कुष्ठमेव च ।
वस्तमूत्रेण पिष्टानि नस्यं तन्द्रानिवारणम् ॥ १२६ ॥
अञ्जनमाह ।—शिरीषबीजगोमूत्र-कृष्णामरिचसैन्धवैः ।
अञ्जनं स्यात् प्रबोधाय सरसोनशिलावचैः ॥ १२७ ॥

अष्टाङ्गावलेहिका ।

कट्फलं पौष्करं शृङ्गी व्योषं यासश्च कारवी ।
श्लक्ष्णचूर्णीकृतश्चैतन्मधुना सह लेहयेत् ॥
एषावलेहिका हन्ति सन्निपातं सुदारुणम् ।
हिक्कां श्वासञ्च कासञ्च कण्ठरोगं नियच्छति ॥

---

नस्यमाह, मातुलुङ्गेत्यादि ।—मवबवश्च सैन्धव-सौवर्चल विड्म् । सिद्धिविहितमिति ।—अस्य योगस्य भानुकितत्वोक्तत्वात् भानुकितत्वस्यैव सिद्धित्वात् ज्ञेयम् ॥ १२४ ॥

मधूकसारेत्यादि ।—मधूकं फलविशेषकस्य सारः मज्जास्थि. कणा' मरिचम् ; अम्भसा जलेन ॥ १२५ ॥

सैन्धवमित्यादि ।—श्वेतमरिचं शोभाञ्जनबीजम् ॥ १२६ ॥

अञ्जनमाह, शिरीषेत्यादि ।—शिला मनःशिला । सरसोनेत्यादिविशेषणादेको योगः, पृथक्पाठात् पृथग्योगोऽपि बोध्यः । यदुक्तमायुर्वेदसारे—"शुकनाशबीज गोमूत्र-कणा-मरिच-सैन्धवैः । शिलागन्धारसोनैर्वा अञ्जनं स्यात् प्रबोधनम् ॥" इति ॥ १२७ ॥

अवलेहमाह, कट्फलमित्यादि ।—यासो दुरालभा, कारवी कृष्णजीरकम् । सन्निपाते मे दश सर्वदा हितत्वेन अविसंवादसम्भूतं देहस्य अवनं, मधु च इष्टं विदधते,

ऊर्द्ध्वगश्लेष्महरणे तथा स्वेदादिकर्म्मणि।
विरोध्युष्णे मधु त्यक्ता कार्य्यमार्द्रकजै रसैः ॥ १३८ ॥

---

अतएव मधु त्यक्ता आर्द्रकस्वरसेनावलेहः कार्य्य इत्याह, ऊर्द्ध्वग इत्यादि।—एकमुष्ण इति पदं स्वेदादिविशेषणम्, अपरत्रोपपत्त्यर्थम्। तथात् उष्णविरोधि मधु ततो मधु त्यक्ता इत्यर्थः। ननु—“क्रियायास्तु गुणालाभे क्रियामन्यां प्रयोजयेत्। पूर्व्वस्यां शान्तवेगायां न क्रियासङ्करो हितः ॥” इत्यनेन सुश्रुते क्रियासङ्करो निषिद्धः, तत् कथं मधुनिष्ठीवनादीनां युगपदेव सन्निपातज्वरे विधानम्? अत्रोच्यते,—क्रियासङ्करो ह्यनेकक्रियामेलकः, तत्र च दूषकत्वं न सङ्करत्वमात्रेण, किं तर्हि अतिमात्रत्वेन अग्निमान्द्यजनकतया तथा परस्परगुणविरोधादुभयोरपि निष्फलतया च। एतच्चोभयमन्तःपरिमार्जने एव सम्भवति, न पुनर्बहिःपरिमार्जने नस्यनिष्ठीवनादौ। एतदभिसन्धाय इन्दौऽपि समाधानमुक्तवान्, यथा,—“क्रियाभिस्तुल्यरूपाभिः क्रियासाङ्कर्य्यमिष्यते। भिन्नरूपतया यास्तु ताः कुर्व्वन्ति न दूषणम् ॥” इति। तुल्यरूपता चान्तःपरिमार्जनत्वेनैव बोध्या। तेनायमर्थः,—एकस्मिन् अन्तःपरिमार्जने उपयुक्ते यद्यपरमन्तःपरिमार्जनमुपयुज्यते, तदैव क्रियासाङ्कर्य्यस्य उक्तदोषा दूषकत्वं, न बहिःपरिमार्जने नस्यादाविति। कषायादिभेषजोपयोगानन्तरं पुनरवलेहादिदाने च यद्यपि क्रियासाङ्कर्य्यदोषो भवत्येव, तथापि कालान्तरतया न विरोधः। तदुक्तं पानादिकृत्यबहुत्वात्, दोषानुपपत्तेश्च बोध्यम्। किं वा क्रियासाङ्कर्य्यस्य दोषसाम्यतया कफरोधादिनिबन्धनप्रशमकतया च निषिद्धमप्यवलेहादिकमवस्थाविशेषे अङ्गीक्रियते। यथा पीतविषे कालान्तरे वमनम्। अन्ये तु अन्यतया तुल्यरूपतां व्याख्याय कषायावलेहयोर्युगपत्प्रयोगेऽपि कल्पनाभेदान्न साङ्कर्य्यमित्याहुः। तन्न, सुश्रुते अग्निमान्द्यादिहेतुत्वेन क्रियासङ्करमात्रस्यैव दोषत्वमुक्तम्। अत्र चातुल्यरूपता तुल्यरूपता वेति विशेषो नास्ति। वैद्यवृन्देन कषायमध्वादीनां सन्निपाते युगपत्प्रयुज्यमानानामविरोधार्थं क्रियाभिस्तुल्यरूपाभिरिति वचनं निबद्धम्। तत्र क्रियाद्वयं कल्पनया तुल्यरूपमतुल्यरूपं वा भवतु, उभयथाप्यतिमात्रादिनाग्निमान्द्यादिहेतुतया निषिद्धमेव। तेनाभिन्नकल्पनात्मकेऽपि भेषजद्वये युगपद्युक्ते अतिमात्रत्वादिना अग्निमान्द्यादिहेतुत्वं दूषकताबीजमवधेयम्। तस्मात् अन्तःपरिमार्जनत्वेनैव तुल्यरूपत्वं, बहिःपरिमार्जने च भिन्नरूपत्वं व्याख्याय कषायमध्वावलेहादिषु क्रियासाङ्कर्य्यदोषत्वं परिहरणीयम् ॥ १३८ ॥

पञ्चमुष्टिकः ।—यवकोलकुलत्थानां मुद्गमूलकशुष्कयोः ।
एकैकमुष्टिमाहृत्य पचेदष्टगुणे जले ॥
पञ्चमुष्टिक इत्येष वातपित्तकफापहः ।
शस्यते गुल्मशूले च श्वासे कासे क्षये ज्वरे ॥ १३८ ॥

चातुर्भद्रकपञ्चमूलकम् ।

पञ्चमूलीकिराताद्यैर्गणो योज्यस्त्रिदोषजे ।
पित्तोत्कटे च मधुना कणया च कफोत्कटे ॥ १४० ॥

दशमूलम् ।—बिल्वश्योणाकगाम्भारी-पाटलागणिकारिकाः ।
दीपनं कफवातघ्नं पञ्चमूलमिदं महत् ॥
शालपर्णीपृश्निपर्णी-बृहतीद्वयगोक्षुरम् ।
वातपित्तहरं वृष्यं कनीयः पञ्चमूलकम् ॥
उभयं दशमूलन्तु सन्निपातज्वरापहम् ।
कासे श्वासे च तन्द्रायां पार्श्वशूले च शस्यते ॥
पिप्पलीचूर्णसंयुक्तं कण्ठहृद्ग्रहनाशनम् ॥ १४१ ॥

---

यवेत्यादि।—प्रत्येकं यवादीनां मुष्टिमन्तर्मानं, न तु पलं द्रव्यमानमात्रात्। अष्टगुणेन पक्वः प्रकारो। एकैकं द्रव्यमाहृत्य समुदितानामपि मिलित्वा पक्वमावं पचेदित्यर्थे। यतः पुनर्यवादीनामाहारद्रव्यत्वात् प्रत्येकं पक्वमानत्वेऽपि न दोष इत्याह। एतेन योगस्य धान्यपञ्चकीयोगात् पञ्चमुष्टिक इत्यपि नाम। यदुक्तं,—"यवकोलकुलत्थैश्च मुद्गमूलकशुण्ठकैः। धान्यकविश्वसंयुक्तैर्यवः स्यात् पञ्च मुष्टिकः" ॥ १३८ ॥

पञ्चमूलीत्यादि।—वातपित्तोल्वणज्वरे योग एवायम्। अत्र पुनर्मधुयोगात् पित्तोल्वणविदोषहन्तृत्वं, पिप्पलीयोगाच्च कफोल्वणविदोषहन्तृत्वमस्य ज्ञेयम्। अत्र कनीयस एव पञ्चमूलस्य व्यवहारः। अन्ये पुनः श्लेष्मोल्वणे महतीं पञ्चमूलीमाहुः ॥ १४० ॥

दशमूलस्य एकत्वादुत्कृष्टस्याश्रयानुरोधाय पञ्चमूलद्वयमाह, बिल्वेत्यादि।—महातरुसम्भवत्वात् बिल्वादिपञ्चमूलस्य महत्त्वं, स्वल्पतरुसम्भवत्वात् शालपर्ण्यादीनां

चतुर्दशाङ्गः ।

चिरज्वरे वातकफोत्थे वा त्रिदोषजे वा दशमूलमिश्रः ।
किराततिक्तादिगणः प्रयोज्यः शुद्धयर्थिने वा त्रिवृता विमिश्रः ॥ १४२॥

वातश्लेष्महरोऽष्टादशाङ्गः ।

दशमूली शटी शृङ्गी पौष्करं सदुरालभम् ।
भार्गी कुटजबीजञ्च पटोलं कटुरोहिणी ॥
अष्टादशाङ्ग इत्येष सन्निपातज्वरापहः ।
कासहृद्ग्रहपार्श्वार्त्ति-श्वासहिक्कावमीहरः ॥ १४३ ॥

पित्तश्लेष्महरोऽष्टादशाङ्गः ।

भूनिम्बदारुदशमूलमहौषधाब्द-
तिक्तेन्द्रबीजधनिकेभकणाकषायः ।
तन्द्रीप्रलापकसनारुचिदाहमोह-
श्वासादियुक्तमखिलं ज्वरमाशु हन्ति ॥

मुस्ताद्यौषध ।—मुस्तपर्पटकोशीर-देवदारुमहौषधम् ।
त्रिफला धन्वयासश्च नीली कम्पिल्लकं त्रिवृत् ॥
किराततिक्तकं पाठा बला कटुकरोहिणी ।
मधुकं पिप्पलीमूलं मुस्ताद्यो गण उच्यते ॥
अष्टादशाङ्गमुदितमेतद्वा सन्निपातनुत् ।

---

सम्यक् ज्ञेयम् । सुश्रुते तु गोक्षुरस्थाने एरण्डमूलं पठ्यते, चरके तु गोक्षुर इति । तेन सुश्रुतप्रयोगेषु एरण्डमूलेन, चरकादिप्रयोगेषु गोक्षुरेणैव व्यवहार इति । शान्ति श्रीवादादयस्त्वेरण्डमूलेनैवेति ॥ १४१ ॥

चिरज्वर इत्यादि ।—वातकफोत्थ इत्युभयत्रापि सम्बध्यते । शुद्धयर्थिने वा त्रिवृतादिविमिश्र इति मलविबन्धे सति शोधनार्थं त्रिवृत्सुखविरेचनचूर्णप्रक्षेपकाणां प्रक्षेप इत्याह. ॥ १४२ ॥

दशमूलीत्यादि ।—स्पष्टम् ॥ १४३ ॥

भूनिम्बेत्यादि ।—इन्द्रबीजम् इन्द्रयव. । मुस्तेत्यादि ।—नीली नीलबुह्ना,

पित्तोत्तरे सन्निपाते हितश्चोक्तं मनीषिभिः ।
मन्यास्तम्भ उरोघात उरःपार्श्वशिरोग्रहे ॥ १४४ ॥

शट्यादिगणः ।—शटी पुष्करमूलञ्च व्याघ्री शृङ्गी दुरालभा ।
गुडूची नागरं पाठा किरातं कटुरोहिणी ॥
एष शट्यादिको वर्गः सन्निपातज्वरापहः ।
कासहृद्ग्रहपार्श्वार्त्ति-श्वासे तन्द्रासु शस्यते ॥ १४५ ॥

बृहत्यादिगणः ।—बृहन्यौ पुष्करं भार्गी शटी शृङ्गी दुरालभा ।
वत्सकस्य च वीजानि पटोलं कटुरोहिणी ॥
बृहत्यादिर्गणः प्रोक्तः सन्निपातज्वरापहः ।
कासादिषु च सर्वेषु देयः सोपद्रवेषु च ॥ १४६ ॥

भार्ग्यादिः ।—भार्गी पुष्करमूलञ्च रास्नां विल्वं यमानिकाम् ।
नागरं दशमूलञ्च पिप्पलीश्चाप्सु साधयेत् ॥
सन्निपातज्वरे देयं हृत्पार्श्वानाहशूलिनाम् ।
कासश्वासाग्निमन्दत्वं तन्द्रीञ्च विनिवर्त्तयेत् ॥

चतुर्दशाङ्गः ।—द्विपञ्चमूली षड्ग्रन्था विश्वगज्जनखोद्भवम् ।
कफवातहरः क्वाथः सन्निपातहरः परः ॥ १४७ ॥

---

कलिङ्गक गुडूचीत्यर्थः । यवान्यानि क्वचित् न पाठः, आयुर्वेददीपिकायां समानपाठात् ॥ १४३ ॥

शट्यादि ।—किरातस्थाने केचित् पटोलं पठन्ति, तन्न, हारीत सुश्रुतादि-निर्दिष्टेषु किरातस्यैव पाठादिति ॥ १४५ ॥

बृहत्यादिरित्यादि ।—कासादिविषय इत्यादिग्रहणात् मन्याग्रहहृद्ग्रहादीनां ग्रहणम् । पाठं हि शट्यादिगणस्य सोदरत्वात् ॥ १४६ ॥

भार्ग्यादित्यादि ।—भार्गी । किन्तु बिल्वमूलं पौष्टिकमर्दकत्वात् । दश-मूलमिति पाठपक्षेऽपि भागैकं तस्य ग्राह्यं, किन्तु केचित् "नागरञ्च दशमूलञ्च पिप्पलीञ्च" इति पाठं कुर्वन्ति एवं चक्रटीकायां, तत एकभागत्वमिति युक्तम् । द्विपञ्चमूली

अभिन्यासज्वरचिकित्सामाह।

कारवीपुष्करैरण्ड-त्रायन्तीनागरामृताः।
दशमूलीशटीशृङ्गी-यासभार्गीपुनर्नवाः॥
तुल्या मूत्रेण निष्क्राथ्य पीताः स्रोतोविशोधनाः।
अभिन्यासज्वरं घोरमाशु घ्नन्ति समुद्धतम्॥ १४८॥
मातुलुङ्गाश्मभिद्बिल्व-व्याघ्रीपाठोरुबूकजः।
क्वाथो लवणमूत्राढ्योऽभिन्यासानाहशूलनुत्॥ १४९॥
निद्रोपेतमभिन्यासं क्षीणं विद्याद्धतौजसम्॥ १५०॥
कण्ठरोधकफश्वास-हिक्कासन्न्यासपीड़ितः।
मातुलुङ्गार्द्रकरसं दशमूलाम्भसा पिबेत्॥ १५१॥
व्योषाम्लफलातिक्ता-पटोलारिष्टवासकैः।
सभूनिम्बामृतायासैः-स्त्रिदोषज्वरनुज्जलम्॥ १५२॥

---

त्यादि। विषघ्नमूली दशमूली, षड्ग्रन्था वचा, यथनक्षीवय कावाक्रदा गुडूचीकाण्डिलीमेदाल, गजपिप्पलीमिदादा॥ १४७॥

सन्निपातज्वरभेदस्याभिन्यासस्य चिकित्सामाह, कारवीत्यादि।—कारवी कृष्णजीरकम, त्रायन्ती त्रायमाणा, मूत्रेण गोमूत्रेण॥ १४८॥

मातुलुङ्गेत्यादि।—अश्मभित् पाषाणभेदी, बिल्वस्य मूलं, लवणं सैन्धवं, मूत्रं गोमूत्रम। गोमूत्रसैन्धवे प्रक्षिप्य क्वाथ: पेय। गतप्रयोगदर्शनात् गोमूत्रेण क्वाथ प्रयोगश्च लवणमित्येके॥ १४९॥

सन्निपातिकी अभिन्यासज्वरस्य अनुकल्पात् लक्षणमिदैवाह, निद्रोपेतमित्यादि।—सन्निपातज्वरमेव निद्रोपेतमभिन्यासं विद्यात्। क्षीणं विद्याद्धतौजसमिति।—क्षीणमिति क्षीणधातुगतम्। अभिन्यासज्वरमेव सन्निपातज्वरमेव क्षीणधातुगतं हतौजसं विद्यात्। तथा सुश्रुते—"अभिन्यासन्तु तं प्राहुर्हतौजसमथापरे। सन्निपातज्वरं कृच्छ्रमसाध्यमपरे जगुः॥" इति॥ १५०॥

कण्ठरोधेत्यादि।—दशमूलक्वाथमेव मातुलुङ्गार्द्रकरसे प्रक्षिप्य पिबेदित्यर्थः॥ १५१॥

व्योषेत्यादि।—अरिष्टो निम्बः, तस्य त्वक्, जलं क्वाथ:॥ १५२॥

त्रिवृद्विशालात्रिफला-कटुकारग्वधैः कृतः ।
सक्षारो भेदनः क्वाथः पेयः सर्वज्वरापहः ॥ १५३ ॥
स्वेदोद्गमे ज्वरे देयश्चूर्णो भृष्टकुलत्थजः ।
घर्षेज्जिह्वां जडां सिन्धु-त्र्यूषणैः साम्लवेतसैः ॥
उत्कृष्य स्फुटितां जिह्वां द्राक्षया मधुपिष्टया ।
लेपयेत् सघृतयास्यं सन्निपातात्मके ज्वरे ॥ १५४ ॥
काकजङ्घा जटा निद्रां जनयेच्छिरसि स्थिता ॥ १५५ ॥
सन्निपाते प्रकम्पन्तं प्रलपन्तं न बृंहयेत् ।
तृष्णादाहाभिभूतेऽपि न दद्याच्छीतलं जलम् ॥ १५६ ॥
सन्निपातज्वरस्यान्ते कर्णमूले सुदारुणः ।
शोथः सञ्जायते तेन कश्चिदेव प्रमुच्यते ॥
रक्तावसेचनैः पूर्वं सर्पिःपानैश्च तं जयेत् ।
प्रदेहैः कफपित्तघ्नैर्वमनैः कवलग्रहैः ॥
गैरिकं पांशुजं शुण्ठी-वचाकटुककाञ्जिकैः ।
कर्णशोथहरो लेपः सन्निपातज्वरे शुभम् ॥ १५७ ॥
कुलत्थकट्फले शुण्ठी कारवी च समांशिकैः ।
सुखोष्णैर्लेपनं कार्यं कर्णमूले मुहुर्मुहुः ॥ १५८ ॥

---

त्रिवृदित्यादि ।—विशाला गोरक्षकर्कटी, यवक्षार. भवेयः ॥ १५३ ॥

स्वेदोद्गम इत्यादि ।—सन्निपातात्मके ज्वर इत्यन्तं स्पष्टम् ॥ १५४ ॥

काकजङ्घा इत्यादि ।—जटा मूलम् ॥ १५५ ॥

सन्निपात इत्यादि ।—स्पष्टम् ॥ १५६ ॥

सन्निपातज्वरस्यान्ते शेषे सन्निपातज्वरे वा गते इत्यर्थः । रक्तावसेचनैरिति बहुवचनात् रक्तावसेचनं जैलन्यैर्वा बोध्यम् । तत्तुक्तम्—"शस्त्रजलौकाभिः" इत्युक्तत्वात् । सर्पिरत्र पञ्चतिक्तत्रिफलाद्युक्तादि । चकारात् वातकफघ्नस्वेदोऽपि बोध्यः । यदुक्तं तत्रैव—"लङ्घनं कफवातघ्नाः कार्याः सक्रमशः क्रियाः । तिक्तकाद्युतपानं वा बलं ज्ञात्वा समाचरेत्" ॥ इति ॥ १५७ ॥

कुलत्थेति ।—स्पष्टम् । दशमूलेनापि सुखोष्णेनात्र लेपमुपदिशन्ति ॥ १५८ ॥

जीर्णज्वरचिकित्सामाह। निदिग्धिकादिः---

निदिग्धिकानागरकामृतानां क्वाथं पिबेन्मिश्रितपिप्पलीकम्।
जीर्णज्वरारोचककासशूल श्वासाग्निमान्द्यार्दितपीनसेषु ॥
हृच्छूलगामयं प्रायः सायं तेनोपयुज्यते ॥ १५८ ॥
पिप्पलीचूर्णसंयुक्तः क्वाथश्छिन्नरुहोद्भवः।
जीर्णज्वरकफध्वंसी पञ्चमूलीकृतोऽथवा ॥
कासाजीर्णारुचिश्वास-हृत्पाण्डुकृमिरोगनुत्।
जीर्णज्वरेऽग्निसादे च शस्यते गुडपिप्पली ॥ १६० ॥

विषमज्वर-चिकित्सामाह।

कलिङ्गकाः पटोलस्य पत्रं कटुकरोहिणी।
पटोलं शारिवा मुस्तं पाठा कटुकरोहिणी ॥
निम्बं पटोलं त्रिफला मृद्वीका मुस्तवत्सकौ।
किराततिक्तममृता चन्दनं विश्वभेषजम् ॥
गुडूच्यामलकं मुस्तमर्द्धश्लोकसमापनाः।

---

जीर्णज्वरचिकित्सामाह, निदिग्धिकेत्यादि।—निदिग्धिका कण्टकारी, नागरकं क्रियते, पित्तानुबन्धे पिप्पलीं त्यक्त्वा मधु प्रक्षिपन्ति वृद्धाः। पिप्पलीचूर्णस्य मात्रा च पलैकस्य प्रक्षेपप्रकारादिति कश्चित्। पुराणमतिसारेऽप्ययं योगो हितकमः। अन्येन योगस्य जीर्णज्वरे विशेषप्रयोगकालमाह, हृच्छूलेत्यादि।—छिन्न विन्दुमाते मात समयोऽप्ययम्। यथा—"दोषकालबलाबलाद् मन्दाग्नेर्दीपनाय च। अतएव निशायां वा प्रातश्चाज्ञं तं पिबेत् ॥" इति। तथा चन्दोऽप्याह—"सद्य रात्रिन्दिवं सायमन्यत्र प्रातरिष्यते" इति ॥ १५८ ॥

पिप्पलीत्यादि।—छिन्नरुहा गुडूची; पञ्चमूली च महती। योगद्वयेऽपि पिप्पलीचूर्णप्रक्षेपः। पित्तानुबन्धे मधु उपदिशन्ति वृद्धाः। इदञ्च योगद्वयं प्रायः सायमुपयुज्यते। कासेत्यादौ गुडपिप्पली, प्रत्येकं मात्रकतयैव व्यवहरन्ति वृद्धाः ॥ १६०

विषमज्वरचिकित्सामाह, कलिङ्गका इत्यादि।—वाग्भटस्य। एते पञ्च योगाः

कषायाः शमयन्त्याशु पञ्च पञ्चविधान् ज्वरान् ॥
सन्ततं सततान्येद्युस्तृतीयकचतुर्थकान् ॥ १६१ ॥
गुडप्रगाढां त्रिफलां पिबेद्वा विषमार्दितः ।
दीर्घपत्रककर्णाख्य-नेत्रं खदिरसंयुतम् ॥
ताम्बूलैस्तद्दिने भुक्तं प्रातर्विषमनाशनम् ।
गुडूचीमुस्तधात्रीणां कषायं वा समाक्षिकम् ॥ १६२ ॥

मुस्तादिः ।—

मुस्तामलकगुडूचीविश्वौषधकण्टकारिकाक्काथः ।
पीतः सकणाचूर्णः समधुर्विषमज्वरं हन्ति ॥
महौषधामृतामुस्ता-चन्दनोशीरधान्यकैः ।
क्काथस्तृतीयकं हन्ति शर्करामधुयोजितः ॥
वासाधात्रीस्थिरादारु-पथ्यानागरसाधितः ।
सितामधुयुतः क्काथ-श्चतुर्थकनिवारणः ॥
मधुना सर्वज्वरनुत्-शेफालीदलजो रसः ॥ १६३ ॥

---

पञ्चसु सन्तत-सततान्येद्युष्क-तृतीयक-चतुर्थकेषु यथासंख्यं देयाः । अन्ये तु सर्वे पञ्च योगाः सर्वत्र इत्याहुः । तत्र यथासंख्यमेव युक्तम् । सततोद्देशेन पटोलादि योगस्य, तथा निम्बादेरन्येद्युष्कोद्देशेन, गुडूच्यादेश्च चतुर्थकोद्देशेन पाठपाठो दृष्टत्वात् । "सन्ततं सततान्येद्युस्तृतीयक-चतुर्थकान्" इति पादस्तु वाग्भटे चरके नास्ति, वृन्देऽपि नास्ति । नैनायमर्द्धश्लोकः संग्रहे केनापि प्रमादात् लिखितः ॥ १६१ ॥

गुडप्रगाढामित्यादि ।—गुडप्रगाढ़ ।—त्रिफलामित्यत्र कथितामिति शेष इति चक्रः । गुडोऽत्र प्रक्षेप्यः । दीर्घपत्रकेत्यादि ।—कर्णाख्यः काकामाचीति ख्यातः । तस्य विशेषणं दीर्घपत्रेति । नेत्रं मूलं, तदपि यत्कर्देनजातं ताम्बूल दिशन्ति वृद्धाः । गुडूचीत्यादि ।—गुडूच्या अयं योगो यद्यपि पूर्वं चतुर्थके दर्शित, तथापि मधुयोगात् विषमज्वरमात्रकृत्त्वमस्य बोध्यम् । अन्यथा यद्यपि योगोऽयं विषमज्वरे पठितः तथापि समानतन्त्रोक्तत्वात् विषमज्वरविशेषे चतुर्थके प्रयोग बोध्य इत्याह ॥ १६२ ॥

मुस्तादिमहौषधादौ—स्पष्टौ । वासादौ ।—वासास्थाने चन्द्रटे दाहा पठ्यते ,

यवभाजी गुड़संयुक्ता विषमज्वरनाशिनी ।
अग्निसादं जयेत् सम्यग्वातरोगांश्च नाशयेत् ॥ १६४ ॥
रसोनकल्कं तिलतैलमिश्रं योऽश्नाति नित्यं विषमज्वरार्त्तः ।
विमुच्यते सोऽप्यचिराज्ज्वरेण वातामयैश्चापि सुघोररूपैः ॥१६५
प्रातः प्रातः ससर्पिर्वा रसोनमुपयोजयेत् ।
पिप्पलीवर्द्धमानं वा पिबेत् क्षीररसाशनः ।
षट्पलं वा पिबेत् सर्पिः पथ्यां वा मधुना लिहेत् ॥ १६६ ॥
पयस्तैलं घृतञ्चैव विदारीक्षुरसं मधु ।
सम्मूर्च्छ्य पाययेदेतद् विषमज्वरनाशनम् ॥ १६७ ॥
पिप्पलीशर्करा क्षौद्रं घृतं क्षीरं यथाबलम् ।
खजेन मथितं पेयं विषमज्वरनाशनम् ॥ १६८ ॥
पयसा वृषदंशस्य शकृद्वेगागमे पिबेत् ।
वृषस्य दधिमण्डेन सुरया वा ससैन्धवम् ॥ १६९ ॥

---

व्यवहारतः वामदेव । स्थिरा शालपर्णी । पथ्या हरीतकी । मधनेत्यादौ ।—सब ज्वरनुत विषमाविषमज्वरनुत् ॥ १६३ ॥

यवभाजीत्यादि ।—यवागूभक्त कृष्णजीरकमिति चक्रः, सितजीरकमित्यन्ये ॥ १६४ ॥

रसोनकल्कमित्यादि ।—भक्तात पूर्वं भक्षणीयम्, यदाह चरकः—"रसोनस्य सतैलस्य प्राग्भक्तमुपसेवनम्" इति ॥ १६५ ॥

प्रातरित्यादि ।—पिप्पलीवर्द्धमानं क्षीरभुजो । षट्पलं सर्पिरत्रैव वक्ष्यमाणम् ॥ १६६ ॥

पय इत्यादि ।—दुग्धं प्रस्थं बोध्यम । विदारीक्षुरसमिति ।—इक्षुरसस्थाने स्वरस इति न पाठः, उक्तं हि हारीते—"विदारीक्षुरस सर्पिर्मधुतैलं प्रस पयः । पिबेच्चतुर्थकश्वासकासमवातज्वरापहम् ॥" इति । अन्ये तु विदारीस्वरसौ विषमज्वरनाशने, चतुर्थे इक्षुरसात् योगान्तरमाहुः ॥ १६७ ॥

पिप्पलीत्यादि ।—दुग्धं प्रस्थ बोध्यम् ॥ १६८ ॥

पयसेत्यादि ।—वृषदंशो बिडालः । वृषस्यापि शकृदित्यर्थः ॥ १६९ ॥

नीलिनीमजगन्धाञ्च त्रिवृतां कटुरोहिणीम् ।
पिबेज्ज्वरस्यागमने स्नेहस्वेदोपपादितः ॥ १३० ॥
सुरां समण्डां पानार्थे भक्ष्यार्थे चरणायुधान् ।
तित्तिरींश्च मयूरांश्च प्रयुञ्ज्याद्विषमज्वरे ॥ १३१ ॥
अङ्कोटजसहस्रेण दलेन सुकृतां पिबेत् ।
पेयां घृतप्लुतां जन्तुश्चातुर्थककहरां वरहम् ॥ १३२ ॥
सैन्धवं पिप्पलीनाञ्च तण्डुलाः समनःशिलाः ।
नेत्राञ्जनं तैलपिष्टं विषमज्वरनाशनम् ॥
व्याघ्रीवसा हिङ्गुसमा नस्यं तद्वत् ससैन्धवा ॥ १३३ ॥
कृष्णाम्बरदृढाबद्ध-गुग्गुलूलूकपुच्छजः ।
धूपश्चातुर्थकं हन्ति तमः सूर्य इवोदितः ॥ १३४ ॥
शिरीषपुष्पस्वरसो रजनीद्वयसंयुतः ।
नस्यं सर्पिःसमायोगाच्चातुर्थकज्वरं जयेत् ॥
नस्यं चतुर्थकं हन्ति रसो वागस्त्यपत्रजः ॥ १३५ ॥

षडङ्गधूपः ।

पलङ्कषा निम्बपत्रं वचा कुष्ठं हरीतकी ।

---

विषमज्वरे विरेकार्थमाह, नीलिनीत्यादि ।—नीलिनी नीलबुह्ना । आगमने आगमनदिवसे ॥ १३० ॥

सुरामित्यादि ।—चरकस्य स्पष्टम् ॥ १३१ ॥

अङ्कोटजत्यादि ॥ १३२ ॥

सैन्धवमित्यादि ।—चरकस्य । पञ्चनयनं, कृष्णनेत्रेऽपि वर्णने, तन्निरासाय नेत्रपदम् । व्याघ्रीत्यादौ स्त्रीलिङ्गनिर्देशात् लिङ्गमेव प्रयोजकं न तु जातिः ॥ १३३ ॥

कृष्णाम्बरेत्यादि ।—कृष्णवस्त्र दृढबद्ध गुग्गुलूलूकपुच्छाभ्याम्, धूमकः धूपकः ॥ १३४ ॥

नस्यमाह, शिरीषेत्यादि ।—रजनीद्वयचूर्णं सर्पिश्च प्रक्षेप्यम् । नस्यमित्यादौ वागस्त्यपत्रं वकपुष्पपत्रम् ॥ १३५ ॥

सर्षपाः सयवाः सर्पिर्धूपनं ज्वरनाशनम् ॥ १७६ ॥

अपराजिताधूपः ।

पुरध्यामवचासर्ज-निम्बार्कागुरुदारुभिः ।
सर्वज्वरहरो धूपः कार्य्योऽयमपराजितः ॥ १७७ ॥
वैडालं वा शकृद् योज्यं वेपमानस्य धूपने ।
अपामार्गजटा कट्यां लोहितैः सप्ततन्तुभिः ।
बद्धा वारे रवेस्तूर्णं ज्वरं हन्ति तृतीयकम् ॥ १७८ ॥
काकजङ्घा बला श्यामा ब्रह्मदण्डी कृताञ्जलिः ।
पृश्निपर्णी त्वपामार्गस्तथा भृङ्गरजोऽष्टमः ॥
एषामन्यतमं मूलं पुष्येणोद्धृत्य यत्नतः ।
रक्तसूत्रेण संवेष्ट्य बद्धमैकाहिकं जयेत् ॥ १७९ ॥
मूलं जयन्त्याः शिरसा धृतं सर्वज्वरापहम् ॥ १८० ॥

भूतानुबन्धिनोस्तृतीयक-चतुर्थकयोश्चिकित्सा ।

कर्मसाधारणं जह्यात् तृतीयक-चतुर्थकौ ।
आगन्तुरनुबन्धो हि प्रायशो विषमज्वरे ॥ १८१ ॥

---

पलङ्कषेत्यादि ।—पलङ्कषा गुग्गुलु ॥ १७६ ॥

पुरेत्यादि ।—पुरो गुग्गुलु, ध्याम गन्धतृणम् ॥ १७७ ॥

वैडालमित्यादि स्पष्टम् । अपामार्गस्य जटा मूलं, पृष्ठे पादं कृत्वा बध्नं कार्य्यं इत्याह । बन्धनविधिरायुर्वेदमाने यथा—"अपामार्गस्य मूलञ्च सम्यगुत्पाटितं नर । षष्ठीवासरहस्तेन सर्वज्वरविमोक्षणम् ॥ १७८ ॥

काकजङ्घेत्यादि ।—काकजङ्घा ख्याताधात्री, श्यामा वृद्धदारक, ब्रह्मदण्डी ब्रह्मयष्टिका ; कृताञ्जलि लाजालिका ॥ १७९ ॥

मूलमित्यादि ।—जयन्त्या श्वेताया इत्याहुः, मूलमस्या इत्यन्ये ॥ १८० ॥

भूतानुबन्धिनोस्तृतीयक-चतुर्थकयोश्चिकित्सामाह, कर्मेत्यादि ।—दैवव्यपाश्रयं बलि-मङ्गलादि, युक्तिव्यपाश्रयञ्च कषायादि, एतदुभयमपि चिकित्सितं साधारणमङ्ग-मानोयते । जह्यादिति कर्मभूतमप्येतदिदं, तेन साधारणं चिकित्सितं कुर्वीत

"गङ्गाया उत्तरे कूले अपुत्रस्तापसो मृतः।
तस्मै तिलोदकं दद्यान्मुच्यत्यैकाहिको ज्वरः"॥
एतन्मन्त्रेण चाश्वत्थ-पत्रहस्तः प्रतर्पयेत्।
सोमं सानुचरं देवं समातृगणमीश्वरम्॥
पूजयन् प्रयतः शीघ्रं मुच्यते विषमज्वरात्॥ १८२॥
विष्णुं सहस्रमूर्द्धानं चराचरपतिं विभुम्।
स्तुवन् नामसहस्रेण ज्वरान् सर्वान् व्यपोहति॥ १८३॥

ज्वरे घृतप्रयोगः।

ज्वराः कषायैर्वमनैर्लङ्घनैर्लघुभोजनैः।

---

चतुर्थकौ कर्मरूपौ अस्मात् स्थापयेत्, निराकुर्यादित्यर्थः। ननु ज्वरान्तरे सर्वत्र युक्तिव्यपाश्रयं कषायादिकमेवोपदिष्टं, न दैवव्यपाश्रयम्, अत्र पुनः किमर्थं दैवव्यपाश्रयमपि कर्त्तव्यत्वेन उपदिश्यते ? इत्याह,—आगन्तुरित्यादि।—आगन्तुर्भूतादि। विषमज्वरशब्देन तृतीयक-चतुर्थकावेवाभिमतौ। तृतीयक-चतुर्थकशब्देनात्र तद्विपर्ययस्यापि ग्रहणम्। अन्ये तु यद्यप्यागन्तुरनुबन्धो हि इत्यादिवचनबलात् विषमज्वरमात्र एव दैवव्यपाश्रयं कर्म कर्त्तव्यमित्यायाति, तथापि तृतीयक-चतुर्थकाविति यदुक्तं तद्विशेषार्थम्। तेन तृतीयक-चतुर्थकयोः प्रायेण भूतानुबन्धसम्भवात् तयोरेव विशेषेण दैव-व्यपाश्रयं कर्म कर्त्तव्यमित्याहुः। अन्ये तु साधारणशब्देन दोषमात्रसाधारणं युक्तिव्यपाश्रयमात्रं कर्मोच्यते। तत्रादित्यस्य व्यक्तोऽर्थः, तेन तृतीयक-चतुर्थके युक्तिव्यपाश्रयमात्रं न कार्यं, किन्तूभयमपि कार्यम्। एवञ्च गन्तुरनुबन्धो दोषेत्यादि द्वितीयार्द्धमपि सङ्गच्छत इत्याहुः॥ १८१॥

गङ्गाया इत्यादि।—एक-हस्तया, पुष्करिण्या अकाशवादिने पानीयं गृहीत्वा नेतव्यम्; उदिते च रवौ पान्तिदिने तर्पणं कार्यम्। अत्र कुशा यवा कुसुमानि च उत्क्षिप्तमाषभक्तादिना बलिश्चेत्युपदिशन्ति वृद्धाः। अत्र मन्त्रस्य कैश्चिदाद्यश्लोकं पठन्ति यथा।—"वट वृक्ष-कलिङ्गेषु सौराष्ट्रमगधेषु च। वाराणस्यां यद्वृत्तं तत्र स्मरसि हे ज्वर॥" इति। सोममित्युमया सहितम्; अनुचरैर्नन्द्यादिभिश्च सहितम्॥ १८२॥

विष्णुमित्यादि।—नामसहस्रेण महाभारतोक्तेन॥ १८३॥

रूक्षस्य ये न शाम्यन्ति सर्पिस्तेषां भिषग्जितम् ॥
निर्दशाहमपि ज्ञात्वा कफोत्तरमलङ्घितम् ।
न सर्पिः पाययेत् प्राज्ञः शमनैस्तमुपाचरेत् ॥
यावल्लघुत्वादशनं दद्यान्मांसरसेन तु ॥ १८४ ॥
मांसार्थमेणलावादीन् युक्त्या दद्याद्विचक्षणः ।
कुक्कुटांश्च मयूरांश्च तित्तिरिं क्रौञ्चमेव च ॥
गुरूष्णत्वान्न शंसन्ति ज्वरे केचिच्चिकित्सकाः ।
लङ्घनेनानिलबलं ज्वरे यद्यधिकं भवेत् ॥
भिषङ्मात्राविकल्पज्ञो दद्यात् तानपि कालवित् ॥ १८५ ॥

---

इदानीं घृतप्रयोगान् विवक्षुः घृतस्य कालं विवृण्वन्नाह,—ज्वरा' कषायैरित्यादि ।—अत्र कषायैरित्यसमासनिर्देशेन व्यस्तैरपि कषायादिप्रयोगैः रूक्षस्य सर्पिःपानं कर्त्तव्यमिति दर्शयति ।—वमनैरित्यनेन वमनादिशोधनप्रयोगात् सर्पिःपानपूर्वभाविता दर्शयति,—लङ्घनैरित्यनेन च लङ्घनं स्वेदनं कालं यवाग्वादीनि लङ्घनसमानफलानि खेदादयोऽपि गृह्यन्ते । रूक्षस्येति वचनेन कषायादिप्रयोगे सत्यपि यद्यपि आमानुबन्धत्वात् कफोत्तरतया वा यत्र रूक्षत्वं न भवति, तत्र सर्पिर्न दातव्यमिति दर्शयति । भिषग्जितं चिकित्सितम् । दशाहादूर्ध्वं हि घृतपानावस्था चरकेणोक्ता, इदानीं तदपवादमाह, निर्दशाहमपीत्यादि ।—निर्गतो दशाहान्निर्दशाहः । अलङ्घितमिति असम्यग्लङ्घितकफम्, इयञ्चावस्था प्रचलसामदोषारब्धत्वाद् ज्वरस्य, तथा चासम्यगुपचाराद् भवतीति ज्ञेयम् । यावल्लघुत्वादिति च्छेदः । लघुत्वे तु जाते कफोत्तरतालङ्घितता चापयाति, तेन तदा सर्पिःपानमनुज्ञातं कर्त्तव्यमित्यर्थः । यावदिति ।—यावल्लघुत्वात् लघुत्वपर्यन्तं शमनैरुपाचरेत्, लघुत्वे सति सर्पिःपानम्, अथवा यावत् तावत् नित्ययोगित्वात् लघुत्वात् यावत्पर्यन्तं शमनैरुपाचरेत् तावत् मांसरसेन । शमनन्तु निर्दशाहज्वरे कफोत्तरेऽप्यलङ्घितेऽपि मांसरसेन देयमित्याह,—अशनं दद्यान्मांसरसेनेति ।—ननु किमर्थमेतादृशमशनं कफविरुद्धमपि कफप्रधानावस्थायां दीयते ? सत्यं, मांसरसस्य बलजननत्वात्, बलस्य च दोषनिग्रहसमर्थकत्वात्, अत एवोक्तं तत्रैव—"बलं ह्यलं निग्रहाय दोषाणां बलकृच्च तत्" इति ॥ १८४ ॥

एणलावादीनित्यादिशब्दात् कपिञ्जलादीनां ग्रहणम् । मात्राविकल्पज्ञ इति ।—

पिप्पल्याद्यं घृतम् ।

पिप्पल्यश्चन्दनं मुस्तमुशीरं कटुरोहिणी ।
कलिङ्गकास्तामलकी शारिवातिविषे स्थिरा ॥
द्राक्षामलकबिल्वानि त्रायमाणा निदिग्धिका ।
सिद्धमेतैर्घृतं सद्यो ज्वरं जीर्णमपोहति ॥
क्षयं कासं शिरःशूलं पार्श्वशूलं हलीमकम् ।
अंसाभितापमग्निञ्च विषमं सन्नियच्छति ॥
पिप्पल्याद्यमिदं चापि तन्त्रे क्षीरेण पच्यते ॥ १८६ ॥

---

विकल्पो विशिष्टकल्पना, संस्कार इत्यर्थः। मात्राशो विकल्पयेदित्यर्थः। तेन तावती मात्रा कर्त्तव्या, तादृशः संस्कारः कार्यः, यथा लघुत्वगुरुत्वे भवत इत्यर्थः ॥ १८५ ॥

सर्पिःपानावस्थां प्रतिपाद्य सर्पींष्याह, पिप्पल्य इत्यादि।—कलिङ्गक इन्द्रयवः, तामलकी भूम्यामलकी; शारिवा अनन्तमूलं, बिल्वं बिल्वशलाटुः द्राक्षादिकल्क-साहचर्यात्। अत्र यद्यपि घृतस्य मानं नोक्तं, तथापि द्रवैकदेशव्यवहारात् प्रस्थमानं गम्यते, अत एवोक्तम्—"अनिर्दिष्टप्रमाणानां स्नेहानां प्रस्थ इष्यते। चतुर्गुणं क्वाथमानं न पात्रमिकं प्रशस्यते ॥" इति। अन्ये पञ्चगव्यघृतस्य मानानिर्देशे अर्थव्यवस्थित-मानमेवेच्छन्तः पचन्तीति। यत्र तु प्रस्थादिमाननिर्देशं करोति, तत्र तावन्मात्रेणैव स्नेहेन प्रायो रोगोपशमो भवतीति ज्ञेयम्। तथा हि वातव्याध्यादौ भूरिस्नेह-साध्ये भूयसीमेव स्नेहमात्रां वक्ष्यति। तथा प्रमेहशरीरकार्श्यमध्ये योगितया स्नेहस्य कुडवमानमेवोक्तम्। कुष्ठेकतिक्तषट्पलादौ तु पञ्चप्रसृतसंविधानेन तथैव पकस्य घृतस्य कार्यकारित्वं भवतीति भेषजमात्रादर्शी महर्षिर्निर्दिशति। तत्र यदि कुष्ठस्य दीर्घरोगतया भूयसा तिक्तषट्पलेन प्रयोजनं, तदा पुनःपुनः षट्पलमानं घृतं पक्तव्यं "यथा कुर्वन्ति स उपायः" इति वचनात्। एवं पानीयकल्याणकमन्यहरी-तक्यादावपि प्रतिनियतमानकथनप्रयोजनं वाच्यम्। तथात्र यादृच्छिकमाचार्यस्य [illegible] क्वचिदिति। अत्र केचित् पुस्तके हलीमकमिति पाठं, 'क्वचिद्रोचकमिति पाठद्वयमपि न प्रतिषेधनीयम्। यतः सुश्रुते,—"जीर्णज्वर-शिरःशूल-गुल्मोदर-हलीमकान्" इति दृश्यते। वाग्भटे च—"पिप्पलीन्द्रयवधान्य-तिक्ता शारिवामलकामलकीभिः। बिल्वमुस्तहिमपाक्षिनिदिग्धी- द्राक्षयातिविषया

यत्राधिकरणेनोक्तिर्गणे स्यात् स्नेहसंविधौ ।
तत्रैव कल्कनिर्य्यूहाविष्येते स्नेहवेदिना ॥
एतद्वाक्यबलेनैव कल्कसाध्यपरं घृतम् ॥ १८७ ॥
जलस्नेहौषधानान्तु प्रमाणं यत्र नेरितम् ।
तत्र स्यादौषधात् स्नेहः स्नेहात् तोयं चतुर्गुणम् ॥
अनुक्ते द्रवकार्य्ये तु सर्व्वत्र सलिलं मतम् ॥ १८८ ॥
घृततैलगुड़ादींश्च नैकाहादवतारयेत् ।
व्युषितास्तु प्रकुर्व्वन्ति विशेषेण गुणान् यतः ॥
स्नेहकल्को यदाङ्गुल्या वर्त्तितो वर्त्तिवद्भवेत् ।
वह्नौ क्षिप्ते च नो शब्दस्तदा सिद्धिं विनिर्दिशेत् ॥
शब्दस्योपरमे प्राप्ते फेनस्योपरमे तथा ।
गन्धवर्णरसादीनां सम्पत्तौ सिद्धिमादिशेत् ॥ १८९ ॥

---

स्थिरया च ॥ घृतमाशु निहन्ति सार्वितं ज्वरमपि विषमं सशोफकम् । अरुचिं भ्रमतापमंसशीर्षमथु पार्श्वरुजं क्षयम् ॥" इति दृश्यते, तस्मात् पाठद्वयमेव युक्तम् ॥ १८६ ॥

अत्र केचित् "कल्ककाथाद्यनिर्देशे गणात् तस्मात् प्रसाधयेत्" इति सुश्रुतवचनात् पिप्पल्यादीनां कल्कत्वं कषायत्वञ्च वदन्ति । अन्ये तु कल्कत्वमेव ब्रुवते । अत एतत् मतद्वयनिरासार्थं परिभाषामाह, यत्रेत्यादि ।—अधिकरणेनेत्यधिकारितया ; तेन यत्रैवाचार्य्येण गणत्वमभिहितं, तत्रैव विदारिगन्धादिगणादौ कल्ककषायकल्पना । यत्र त्वविकृतगणत्वं नास्ति, तत्र कल्ककल्पनैव । एतेन सुश्रुतोक्ता "कल्ककाथाद्यनिर्देशे" इत्यादिका परिभाषा अधिकृतगणविषयैव, न तु केवलसमुच्चमात्रविषया इति । ननु मा भूदुभयकल्पना अनियमेन कदाचित् कल्ककल्पना, कदाचित् क्वाथकल्पना कुतो न स्यात् ?—इति चेन्नैवम् । कषायकल्पनाया द्रव्यं न साक्षात् प्रधानभूतं स्नेहसाधने व्यवह्रियते । कल्कस्तु साक्षादेव स्नेहमध्ये पच्यते इति कल्कस्य प्राधान्यात् तथा प्रवृद्धव्यवहारार्थमाह—एतद्वाक्यबलेनैवेत्यादि ॥ १८७ ॥

जलस्नेहेत्यादौ जलशब्दो द्रवमात्रोपलक्षकः ॥ १८८ । १८९ ॥

क्षीरषट्पलकं घृतम्।

पञ्चकोलैः ससिन्धूत्थैः पलिकैः पयसा समम्।
सर्पिःप्रस्थं शृतं प्लीह-विषमज्वरगुल्मनुत्॥
अत्र द्रवान्तरानुक्तौ क्षीरमेव चतुर्गुणम्।
द्रवान्तरेण योगे हि क्षीरं स्नेहसमं भवेत्॥ १८०॥

दशमूलषट्पलकं घृतम्।

दशमूलीरसे सर्पिः सक्षीरे पञ्चकोलकैः।
सक्षारैर्हन्ति तत्सिद्धं ज्वरकासाग्निमन्दताः॥
वातपित्तकफव्याधीन् प्लीहानञ्चापि पाण्डुताम्॥ १८१॥
क्वाथाच्चतुर्गुणं वारि पादस्थं स्याच्चतुर्गुणम्।

---

पञ्चकोलैरित्यादि।—अत्रत्य सममित्यस्य समशब्दस्य तुल्यार्थतास्वीकारेण स्नेहसमं क्षीरम्, त्रिगुणञ्च जलमत्रोऽधिकारोऽस्य षट्पलघृतस्यादात्। तद्यथा,—"सक्षारैः पञ्चकोलैस्तु पलिकैस्त्रिगुणोदके। समक्षीरं घृतप्रस्थं ज्वरघ्नं प्लीहगुल्मनुत्॥" इति। "क्षीरद्रव्याम्बुनान्वेषु पाको यत्रोदितः क्वचित्। चतुर्गुणं जलं तत्र योज्यं भागार्थमानतः॥" परिभाषेयमनार्षेति कृत्वा कैश्चित् नाद्रियते। अन्ये तु क्षीरादिसाधनविषयेयमित्याहुः। चक्रस्तु सममित्यस्य सहार्थतामाश्रित्याह,—अत्रेत्यादि। एतच्चान्ये दूषयन्ति, यतः सुश्रुतोक्तोदरचिकित्सिते—"षट्पलकेऽपि च घृतप्रस्थ तुल्यक्षीरम्" इति पठ्यते। चरकेऽप्युक्तं गुल्मे—"घृतप्रस्थं विपाचयेत क्षीरप्रस्थेन" इति। व्यवहारस्तु क्वचित् त्रिगुणोदकेन, क्वचिच्चतुर्गुणोदकेनेति॥ १८०॥

दशमूलीरस इत्यादि।—रसः क्वाथः, अत्रात्र क्वाथचतुर्गुणः, क्षीरन्तु स्नेहसमम्। न हि क्वाथाच्चतुर्गुणं वारीत्यादि परिभाषार्थमनुवृत्ता क्षीरयोगे सर्वत्रैव पाकं व्याचष्टे। चक्रस्त्वाह,—अत्र क्वाथः क्षीरञ्चास्ति तत्र क्षीरेण सह स्नेहाच्चतुर्गुणो द्रव क्वाथः, यतः स्नेहपाके चतुर्गुण एव द्रव इत्युत्सर्गसिद्धः। "स्नेहात् तोयं चतुर्गुणम्" इत्यत्र तोयस्य द्रवोपलक्षणत्वात्। अतः क्वाथोऽत्र त्रिगुणं क्षीरञ्च स्नेहसममिति। पञ्चकोलयवक्षाराः प्रत्येकं पलिकाः पूर्वोक्तषट्पलकसाहचर्यात् षट्पलत्वानुपपत्तेरिति॥ १८१॥

दशमूले क्वाथार्थं परिभाषामाह, क्वाथादित्यादि।—स्नेहसमं क्षीरमिति यत्र

पञ्चप्रभृति यत्र स्युर्द्रव्याणि स्नेहसंविधौ।
तत्र स्नेहसमान्याहुरर्वाक् च स्याच्चतुर्गुणम्॥ १८२॥

वासाद्यं घृतम्।

वासां गुडूचीं त्रिफलां त्रायमाणां यवासकम्।

---

पञ्चम्य स्नेहपादिकत्वं घटते। चतुष्पलत्वे कल्कपलस्य स्नेहापेक्षया चतुर्भागत्वमेव भवेदिति। एतच्च नातिसाधु, यतः सुश्रुत एव—"स्नेहकुडवे साध्ये क्वाथ्यद्रव्यप्रस्थो विधेयः" इत्युक्तम्। तत्र कुडवेनैव यदि स्नेहपलचतुष्टयं गृह्यते तदा चतुःपलस्नेहे षोडशपलक्वाथ्यद्रव्यं स्यात्। न च तथा व्यवहरन्ति क्वाथ्यषोडशपलं हि चतुष्पल एव स्नेहे गृह्यते, तस्मादस्माकमेतत् कुडवाद्द्वैगुण्यमस्तीति, द्वैगुण्यं कुडवे युक्तम्। अगस्त्यहरीतक्यां मधुनः कुडवं यदुक्तं तन्त्रान्तरे "मधुनश्च पलाष्टकम्" इति पठ्यते, तथा तन्त्रान्तरे—"त्रायमाणाचतुष्पलं पक्त्वा दशकेऽम्भसि शेषिते। कुडवे गुडकान् मर्दितौ क्षीरधात्रीरसात् पचेत्॥" इत्युक्तम्। तत्र यदि चतुःपलं कुडवः स्यात् तदा चक्रोक्तत्रायमाणाघृतेन सह विरोधः स्यात्। तथाहि—"जले दशगुणे साध्यं त्रायमाणाचतुष्पलम्" इत्यादि यावत्—"रसस्यामलकानाञ्च क्षीरस्य च घृतस्य च। पलानि पृथगष्टौ दत्त्वा सम्यग्विपाचयेत्॥" तथान्यत्राप्युक्तम्।—"आर्द्रद्रव्यद्रवद्रव्यपलैरष्टाभिरेव च। शुष्कद्रव्यचतुष्केण कुडवः समुदाहृतः॥" इति। तस्मात् कुडवे द्वैगुण्यं साधु, यत्तु चतुष्पलेऽपि स्नेहे कल्कस्य पलमानत्वं, तत् स्वरसमात्रस्नेहाभिप्रायेण पुष्पकल्काभिप्रायेण वा ज्ञेयम्। यदुक्तं,—"स्नेहे सिध्यति शुद्धाम्बुनिःक्वाथस्वरसैः क्रमात्। कल्कस्य योजयेदंशं चतुर्थं षष्ठमष्टमम्॥" तथा—"प्रस्थस्य कोविदारस्य कर्बुदारस्य शाल्मलेः। कल्काध्ययनात् पुष्पकल्कं प्रयच्छन्ति चतुःपलम्॥" इति। अत्र स्नेहप्रस्थापेक्षया चतुःपलं कल्कं स्नेहाष्टमभाग एव भवतीत्यादि विशेषवचनेन "कल्कश्च स्नेहपादिकः" इति सामान्यवचनस्य बाधा क्वचिद्विषयविशेषे भवतीह न विरोधमावहतीति। अस्मन्मतिप्रपञ्चेन सर्वथा वृद्धव्यवहारानुगतमेव कर्मानुसरणीयमस्माभिरिति संक्षेपः। विस्तरः पुनरस्मदीयचरकतत्त्वप्रदीपिकायामेव गवेषणीय इति। पञ्चप्रभृतीत्यादिपरिभाषार्थं पुनर्वासाद्यघृतव्याख्यावसर एव व्यक्तीकरिष्यामः॥ १८२॥

वासामित्यादि।—यवासकं दुरालभा। अत्र चकारात् त्रायमाणादिक्वाथ्योऽपि घृताद्द्विगुण इत्याहुः। युक्तञ्चैतत्, यतः स्नेहपाके चतुर्गुणमेव द्रवमुक्तमस्तीदम्;—"स्नेहात्

पक्त्वा तेन कषायेण पयसा द्विगुणेन च॥
पिप्पलीमूलमृद्वीका-चन्दनोत्पलनागरैः।
कल्कीकृतैश्च विपचेद् घृतं जीर्णज्वरापहम्॥ १८३॥

---

तोयं चतुर्गुणम्" इति वचनात्। तोयशब्दोऽपि अत्र द्रवमात्रोपलक्षक इति। अत्र ताभ्यामपि चातुर्गुण्यमित्यादि परिभाषयैव क्षीरकषाययोः प्रत्येकं द्वैगुण्ये सिद्धे चकारोऽयं क्वाथचातुर्गुण्यार्थं इति केचित्। अन्ये तु परिभाषाबलात् यद्यपि क्षीरकषाययोः द्विगुण एव लभ्यते, तथापि स्पष्टार्थं क्षीरद्वैगुण्याभिधानमित्याहुः, तन्न, क्षीरस्य हि मानागुक्तौ—"क्वाथ्याच्चतुर्गुणं वारि पादस्थं स्याच्चतुर्गुणम्। स्नेहात् स्नेहसमं क्षीरं कल्कस्तु स्नेहपादिकः॥" इति वचनात् क्षीरस्य द्रवान्तरसान्निध्ये सति, स्नेहसमत्वमेव स्यात्। ततः कषायभागद्वयं क्षीरभागश्चैक इति कृत्वा ताभ्यामपि चातुर्गुण्यमिति परिभाषार्थोऽप्यनुगृहीतो भवति। तस्मात् कर्तव्यं क्षीरद्वैगुण्याभिधानम्। अन्ये तु ताभ्यामपि चातुर्गुण्यमिति परिभाषायां प्रत्येकमेव द्रवैः चातुर्गुण्यमिच्छन्ति। तन्मतेऽत्र कषायस्य चातुर्गुण्ये क्षीरस्य द्वैगुण्यमेव—"पयसा द्विगुणेन च" इति वचनात् तत्र, एकेनापि चातुर्गुण्यं, ताभ्यामपि चातुर्गुण्यं, त्रिभिरपि चातुर्गुण्यं, चतुर्भिः सममिति वचनेन चतुर्भिः स्नेहसमताभिधानेन स्नेहाच्चातुर्गुण्यमेव द्रवस्योक्तम्। अतो ताभ्यां त्रिभिरपि तथा चातुर्गुण्यं कार्यम्। यथा स्नेहचातुर्गुण्यं स्यात्, तथा च मिलित्वैव चातुर्गुण्यं सिध्यति, न प्रत्येकमित्यर्थः। किञ्च यदि प्रत्येकं चातुर्गुण्यं विवक्षितं स्यात् तदा एकोक्त्यैव वा चातुर्गुण्यमिति कुर्यात्। तृतीयानिर्देशेन हि साहित्यं सूचयता मिलितयोरेव चातुर्गुण्यं प्रतीयत इति। अत एवैतत्परिभाषाव्याख्याने—"पञ्चप्रभृति यत्र स्युर्द्रवाणि स्नेहसंविधौ। तत्र स्नेहसमान्याहुरर्वाक् स्याच्चतुर्गुणम्॥" इति मिलित्वैव चातुर्गुण्यम्। अन्यथा एतद्वचनयोर्विरोधो दुष्परिहरः स्यात्। अन्ये तु—"अर्वाक् च स्याच्चतुर्गुणम्" इति प्रत्येकमेव चातुर्गुण्यम्। अन्यथा यत्र यत्र स्नेहपाके चत्वारि द्रवाणि सन्ति तत्र यदि द्रवचतुष्टयस्य मिलित्वा चातुर्गुण्यं स्यात्, तदा स्नेहसमान्याहुरित्येतावतापि द्रवचतुष्टयस्य मिलित्वा चातुर्गुण्ये सिद्धे, अर्वाक् च स्यात् चतुर्गुणमिति वचनं तावदेकद्वित्रिद्रवविषये चरितार्थमेव। यत्र वा द्रवचतुष्टयविषये अचरितार्थमित्युच्यते तावतापि न वस्तुचति'। यथादृष्टेनापि चातुर्गुण्यमित्यादि चतुर्भिः सममित्यस्य परि-

## गुडूच्यादिघृतानि ।

गुडूच्याः क्वाथकल्काभ्यां त्रिफलाया वृषस्य च ।
मृद्वीकाया बलायाश्च सिद्धाः स्नेहा ज्वरच्छिदः ॥ १८४ ॥
ज्वरे पेयाः कषायाश्च सर्पिः क्षीरं विरेचनम् ।

---

भावना द्रवचतुर्थांशविषये सार्वमितिवा चातुर्गुण्यं सिद्धमेव। तदिदानीं प्रत्येकं स्नेहसमत्वेन साध्यताम्; "पञ्चाल् स्यात् चतुर्गुणम्" इति वचनेन साध्यतामिति। अन्ये पुनरनयैवानुपपत्त्या चतुःप्रस्थानीति पठन्ति। जीवकोऽपि गुडाधिकारे परिभाषायामस्यां चतुःप्रस्थानीति पाठमेव स्वीकृतवान् ॥ १८३ ॥

गुडूच्या इत्यादि।—श्लोकद्वयम्। गुडूच्यादीनां पञ्चानां पृथक् पृथक् क्वाथकल्काभ्यां सिद्धानि पञ्च घृतानि बोध्यानि ॥ १८४ ॥

अथ पेयादिकं यदिदानीं तदप्यावस्थिकप्रयोगविशेषापेक्षमिति प्रतिपादयन् क्षीरादिकमभिधातुं भूमिकां रचयति,—ज्वरे पेया इत्यादि।—अत्र पेया-कषाय-सर्पिः-क्षीर-विरेचनानामुक्तोक्तविषया ज्वरकालादारभ्य षडहे यथाक्रमं देयत्वमुच्यते। तेन—"वमितं लङ्घितं काले यवागूभिरुपाचरेत्" इत्यादि विशेषवचनात् लङ्घनादि-षडहातिक्रमेऽपि यत् पेयादिदानमुक्तं तत्र विरोधमावहति, सामान्यविधेः विशेष-विधिना बाधकस्य सर्वैरेवानुमतत्वात्। ननु पेयादिप्रयोगे—"यावज्ज्वर-मृदूभावात् षडहं वा विचक्षणः" इत्यादिना षडहं यावत् यवागूरेवेति चरकेणोक्तं, तथा अत्रापि षडहे पेयादानमुक्तं; तदयं षडहः, किं ज्वरोत्पाददिनं गृहीत्वा भवतु अतून-लङ्घनदिनं हित्वा वा? नाद्यः, लङ्घनक्रम-लङ्घनवैयर्थ्यात्। लङ्घनं ह्यस्य पूर्वोपक्रमः। यदुक्तं—"ज्वरे लङ्घनमेवादौ" इति। नापि द्वितीयः,—"ज्वरितं षडहेऽतीते लघ्वन्नप्रतिभोजितम्" ज्वरदिनादारभ्याष्टमे पाचनं शमनीयं वा पाययेदित्युक्तत्वात् ज्वरदिनस्य प्रोक्तत्वेनाष्टाहः, यदुक्तं,—"अष्टाहो निरामज्वरलक्षणम्" इति। अत्राहुः ज्वरोत्पाददिनं गृहीत्वैवाष्टाहः प्रयोक्तव्यः।—"यावज्ज्वरमृदूभावात् षडहं वा विचक्षणः" इत्यनेनापि ज्वरोत्पाद-दिनमारभ्यैव षडहपर्यन्तं पेयाप्रयोग उच्यते। पेया हि ज्वरे प्राधान्येन दोष-पाचनार्थं क्रियते; यदुक्तं—"लङ्घनं स्वेदनं कालो यवाग्वस्तिक्तको रसः। पाच-नान्यविपक्वानां दोषाणां तरुणे ज्वरे॥" इति। न तु यस्मिन् षडहे पेया, तस्मिन्नेव षडहे लङ्घनादिकमपोति। लङ्घनादिभिर्निरवकाशतया पेया षडहस्य निर्विषयत्व-

षड़हे षड़हे देयं कालं वीक्ष्यामयस्य च ॥ १८५ ॥
जीर्णज्वरे कफे क्षीणे क्षीरं स्यादमृतोपमम् ।

मिति वाच्यम्, तस्य वातज्वरविषयत्वात्। वातज्वरो ह्यलङ्घनीयः। यदुक्तं —"ऋते ज्वरात् क्षयानिलभयक्रोधकामशोकश्रमोद्भवात्" इति तेनालङ्घनीये वातज्वरे पेया समयमेव षडहं व्याप्नोति। एकद्वित्रिदिन लङ्घिते पेया न दोषपाचनार्थं क्रियते। क्रियतेऽपि ज्वरे पञ्चचतुस्त्रिदिनं यावत् पेयादिक्रमेवेति नातो निर्विषयत्वम् ? पेया षडहस्य यत्र तु दोषाणामतिसामतया सन्निपातज्वरे वा लङ्घनमेव षड्रात्रातिक्रमेणापि क्रियते। तत्र प्राशस्त्ये विधौ पेयाया. षड्रात्रनियम औत्सर्गिकः प्रवर्त्तते। ननु पेया दोषपाचनार्थं क्रियते, तर्हि चतिलङ्घिते पेया कथं क्रियते ? लङ्घनेनैव दोष पाकसिद्धत्वात्। नैवम्, चतिलङ्घिते पेया न दोषपाचनार्थं क्रियते किं तर्हि षडुपवासक्षीणाग्निसन्धुक्षणाय। तस्माग्निसन्धुक्षणे जाते पुनरौषधपानमेव भवति। ज्वरे पेयाः कषायार्थेत्यादावपि समानकार्य्यार्था लङ्घनादीनामुपलक्षणभूता पेया। यत्र पेया यत्र प्रतिषिद्धा मद्योत्थे ज्वरादौ तर्पणमेवापि षडहो ग्राह्यः। तत्र प्रथमषडहे यत्सर्गेण लङ्घनादि पाचनं कार्य्यमिति पेया षडहे देयेति वचनेनोच्यते, कषायषडहोऽपि ज्वरोत्पादात् सप्तमदिन परित्यज्याष्टमाहमारभ्यैव ज्ञेया। सप्तमी ज्वरस्य तरुणत्वेन कषायपाननिषेधात्। यत्तु हारीते लङ्घनोष्णोदकसुप्तादिषड्रात्रजन्यपानीयपानपेयाविधानानन्तरमुक्तम्,—"एता क्रिया प्रयुञ्जीत षड्रात्र सप्तमेऽहनि। पिबेत् कषायसंयोगान् ज्वरघ्नान् साधुसाधितान्॥" इति, तथा खरनादेनापि—"लङ्घितालङ्घितं तस्मात् षण्मितं वा ज्वरार्दितम्। दशाहात्स्वादतस्ताभिरादौ ज्वरमुपाचरेत॥" इति यवागूभिर्यत्वा दोषमित्यादि तर्पणादिक्रममभिधायोक्तम्,—"इति षड्भाविषः प्रोक्तो नवज्वरहितो विधिः। तत परं पाचनीयं शमनं वा ज्वरे हितम्॥" इति, तदपि प्रागुक्तरीत्या षडाहे एव कषायपानविधायकमिति प्रागेव प्रतिपादितम्। यद्यपि सप्तमाष्टमाहकषायपानविधायकाना वचनानामदूरान्तरत्वात् एव परस्परविरोध इत्युक्तम्। एतन्मतेऽप्यनुद्भूतसामताया सप्तमदिन एव कषायपानम्। उद्भूतसामतायान्तु अष्टमेऽहनि इति व्यवस्था। तेनैतस्मिन् व्याख्याने हारीतखरनादवचनं यथाश्रुतमेव सङ्गच्छते। तथा ज्वरे पेयाः कषायाश्चेत्यादिनापि पेया षड्हमन्तरमेव सप्तमे दिने यत् कषायपानमुक्तं तदप्यनुद्भूतसामताभिप्रायेणेति न विरोधमावहति। कालं वीक्ष्यामयस्य चेति ज्वरस्यावस्थामवस्थावस्थारूपं कालं वीक्ष्य षडहे यथाक्रमं पेयादि देयमित्यर्थः॥ १८५॥

सदैव तरुणे पीतं विषवद्धन्ति मानवम् ॥ १८६ ॥
कासाच्छ्वासात् शिरःशूलात् पार्श्वशूलात् सपीनसात् ।
मुच्यते ज्वरितः पीत्वा पञ्चमूलीशृतं पयः ॥ १८७ ॥
द्रव्यादष्टगुणं क्षीरं क्षीरात् तोयं चतुर्गुणम् ।
क्षीरावशेषः कर्त्तव्यः क्षीरपाके त्वयं विधिः ॥ १८८ ॥
त्रिकण्टकबलाव्याघ्री-गुडनागरसाधितम् ।
वर्च्चोमूत्रविबन्धघ्नं शोथज्वरहरं पयः ॥ १८९ ॥
वृश्चीरबिल्ववर्षाभू-पयसोदकमेव च ।
पचेत् क्षीरावशिष्टन्तु तद्धि सर्वज्वरापहम् ॥ २०० ॥
शीतं वोष्णं ज्वरे क्षीरं यथास्वैरौषधैर्युतम् ॥ २०१ ॥
एरण्डमूलसिद्धं वा ज्वरे सपरिकर्त्तिके ॥ २०२ ॥
ज्वरिभ्यो बहुदोषेभ्य ऊर्द्ध्वञ्चाधश्च बुद्धिमान् ।
दद्यात् संशोधनं काले कल्पे यदुपदेक्ष्यते ॥ २०३ ॥

---

क्षीरपानव्याप्याह, जीर्णज्वरे इत्यादि।—आमे क्षीरं इति, कफक्षयात् वातपित्तोत्तरतायां क्षीरगतत्वात् पथ्यं.। यदुक्तं—"दाहतृष्णापरीतस्य वातपित्तोत्तरं ज्वरम् । बद्धप्रच्युतदोषं वा निरामं पयसा जयेत् ॥" इति ॥ १८६ ॥

कासादित्यादि।—पञ्चमूली स्वल्पा वातपित्तहरत्वात् ॥ १८७ ॥

क्षीरसाधनपरिभाषामाह—द्रव्यादित्यादि। त्रिकण्टकेत्यादौ गुड. प्रक्षेप्य, गुडपाकस्य निष्प्रयोजनत्वादित्याहुः ॥ १८८ ॥ १८९ ॥

वृश्चीरेत्यादि।—वृश्चीरः श्वेतपुनर्नवा, वर्षाभूः रक्तपुनर्नवेति। पयोदकक्षीरौषधमानं पूर्ववदेव मानम् ॥ २०० ॥

शीतं वेत्यादि।—विकल्पः स्वरादिविशेषतः, किंवा वाते उष्णं, पित्ते शीतमिति ॥ २०१ ॥

एरण्डेत्यादि।—यत्र छिन्नकर्त्तनमिव दुःखमपि बोध्यं, चरकोक्तत्वात्। गुदे कर्त्तनवत् पीडा परिकर्त्तिका ॥ २०२ ॥

संशोधनमव्याप्याह, ज्वरिभ्य इत्यादि।—बहुदोषेभ्य इति चन्द्रदोषेषु संशोधन-

मदनं पिप्पलीभिर्वा कलिङ्गैर्मधुकेन वा।
युक्तमुष्णाम्बुना पीतं वमनं ज्वरशान्तये ॥ २०४ ॥
आरग्वधं वा पयसा मृद्वीकानां रसेन वा।
त्रिवृतां त्रायमाणां वा पयसा ज्वरितः पिबेत् ॥ २०५ ॥
ज्वरक्षीणस्य [redacted] हितं वमनं न विरेचनम्।
कामन्तु पयसा तस्य निरूहैर्वा हरेन्मलान् ॥
प्रयोजयेज्ज्वरहरान् निरूहान् सानुवासनान्।
पक्वाशयगते दोषे वक्ष्यन्ते ये च सिद्धिषु ॥ २०६ ॥
गौरवे शिरसः शूले विबद्धेष्विन्द्रियेषु च।
जीर्णज्वरे रुचिकरं दद्याच्छीर्षविरेचनम् ॥ २०७ ॥
अभ्यङ्गांश्च प्रदेहांश्च सस्नेहान् सानुवासनान्।
विभज्य शीतोष्णकृतान् दद्याज्जीर्णज्वरे भिषक् ॥
तैराशु प्रशमं याति बहिर्मार्गगतो ज्वरः।
लभन्ते सुखमङ्गानि बलं वर्णश्च वर्द्धते ॥ २०८ ॥

---

निषेधार्थमुक्तम्। काम इति यथोक्तवमन-विरेचनयोग्यज्वरावस्थायाम्। कल्प इति कल्पस्थाने वक्ष्ये यदुपदेक्ष्यते तद्देयम् ॥ २०३ ॥

वमनयोगत्रयमाह, मदनमित्यादि।—मदनं पिप्पलीयुक्तं कार्यं। कलिङ्गम् इन्द्रयवः, तद्युक्तं पित्तकफे, यष्टिमधुयुक्तन्तु दाहमात्र इत्याहुः ॥ २०४ ॥

चतुरो विरेचनयोगानाह, आरग्वधमित्यादि।—अत्र चरके वाग्भटे च त्रिवृता स्थाने त्रिफला पाठो दृश्यते, टीकाकारैश्च त्रिफलैव व्याख्यायते ॥ २०५ ॥

ज्वरक्षीणस्येत्यादि।—स्पष्टम्। सिद्धिषु सिद्धिस्थानोक्ताध्यायेषु ॥ २०६ ॥

नस्यावचारमाह, गौरव इत्यादि।—विबद्धेष्विति स्वविषयग्रहणासमर्थेषु ॥ २०७ ॥

जीर्णज्वरेऽभ्यङ्गादीनाह, अभ्यङ्गानित्यादि।—विभज्येति शीतोष्णसमुत्थज्वर-विभागेनेत्यर्थः, तेन उष्णोत्थे जीर्णज्वरे शीतद्रव्यकृताः प्रदेहादय, शीतोत्थे तु उष्णद्रव्यकृता देया इत्यर्थः। बहिर्मार्गस्त्वगादि.। उक्तं हि—"शाखा रक्तादयो धातवस्त्वक् च स बाह्यो रोगमार्गः" इति ॥ २०८ ॥

षट्कट्वरतैलम्—

सुवर्चिकानागरकुष्ठमूर्वा-लाक्षानिशालोहितयष्टिकाभिः।
तैलं ज्वरे षड्गुणकट्वरसिद्ध-मभ्यञ्जनाच्छीतविदाहनुत् स्यात्॥
दध्नः ससारकस्याव तक्रं कट्वरमिष्यते।
घृतवत् तैलपाकोऽपि तैले फेनोऽधिकः परः॥ २०९॥

अङ्गारकं तैलम्—

मूर्वा लाक्षा हरिद्रे द्वे मञ्जिष्ठा सेन्द्रवारुणी।
बृहती सैन्धवं कुष्ठं रास्ना मांसी शतावरी॥
आरनालाढकेनैव तैलप्रस्थं विपाचयेत्।
तैलमङ्गारकं नाम सर्वज्वरविमोक्षणम्॥ २१०॥

लाक्षादितैलम्—

लाक्षाहरिद्रामञ्जिष्ठा-कल्कैस्तैलं विपाचयेत्।
षड्गुणेनारनालेन दाहशीतज्वरापहम्॥ २११॥
यवचूर्णार्द्धकुडवं मञ्जिष्ठार्द्धपलेन तु।
तैलप्रस्थः शतगुणे काञ्जिके साधितो जयेत्॥
ज्वरं दाहं महावेगमङ्गानाञ्च प्रहर्षनुत्॥ २१२॥
सर्जकाञ्जिकसंसिद्धं तैलं शीताम्बुमर्दितम्।

---

सुवर्चिकेत्यादि।—सुवर्चिका सर्जिकाक्षारः, लोहितयष्टिका मञ्जिष्ठा, सुश्रुतहृद्वाग्भटादिबहुसम्मतपाठात्। अन्ये तु लोहितं चन्दनम्, यष्टिका मञ्जिष्ठा इति द्वन्द्वसमासादित्याहुः। व्यवहारस्तु पूर्वव्याख्ययैव। शीतविदाहहन्तृत्वञ्च योगस्य अचिन्त्यशक्तित्वात्। तैलपाके विशेषं दर्शयति घृतवदित्यादि॥ २०९॥

मूर्वेत्यादि।—इन्द्रवारुणी गोरक्षकर्कटी; अङ्गारको मङ्गलः, तत्तुल्यत्वादङ्गारकसंज्ञा॥ २१०॥

लाक्षादितैलं स्पष्टम्।—अत्रापि दाहशीतहरत्वं प्रभावात्॥ २११॥

यवेत्यादि।—मञ्जिष्ठा अर्द्धपलेनेत्यत्र द्विपलेनेति न पाठः, मधुकचन्द्रटादौ अर्द्धपलेनेति पाठात्॥ २१२॥

ज्वरदाहापहं लेपात् सद्यो यातास्रदाहनुत् ॥ २१३ ॥
चन्दनाद्यमगुर्वाद्यं तैलं चरककीर्त्तितम्।
तथा नारायणं तैलं जीर्णज्वरहरं परम् ॥ २१४ ॥
अभिघातज्वरो न स्यात् पानाभ्यङ्गेन सर्पिषः।
क्षतानां व्रणितानाञ्च क्षतव्रणचिकित्सया ॥ २१५ ॥

आगन्तुज्वरचिकित्सामाह।

ओषधीगन्धविषजौ विषपीतप्रबाधनम्।
जयेत् कषायैर्मतिमान् सर्वगन्धकृतैस्तथा ॥ २१६ ॥
अभिचाराभिशापोत्थौ ज्वरौ होमादिना जयेत्।
दानस्वस्त्ययनातिथ्यैरुत्पातग्रहपीड़जौ ॥ २१७ ॥

क्रोधकामादिज्वरचिकित्सामाह।

क्रोधजे पित्तजित् काम्या अर्थाः सद्वाक्यमेव च।

---

अरिष्टमाह सर्जं इत्यादि। सर्जो धुनकः अम्बः, काञ्जिकं अनुशंकम्, सिद्धं पक्वम्। तत् शीताम्बुनादि तं शीतजलप्रेन तैलं संमर्द्य मालाभ्यङ्गं कार्य्यं ॥ २१२ ॥

नारायणतैलं वातव्याधौ वक्ष्यमाणम् ॥ २१४ ॥

अभिघातेत्यादि।—न स्यात् न भवेत् प्राप्त्यतीत्यर्थः। क्षतानामित्युत्र क्षता-नाम्। अत्रापि ज्वरो न स्यादिति योज्यम् ॥ २१५ ॥

ओषधीत्यादि।—मुग्धतम। प्रबाधनं चिकित्सितम्। विषपीतप्रबाधनमिति पाठे,—विषपीतस्य यानि चिकित्सितानि तैरित्यर्थः। सर्वगन्धकृतैरिति—सर्वगन्ध शीतम एलादिकृतैः, स एवात्र त्रिकटुमात्रादिभिः, न तु "चातुर्जातकर्पूरकं काकोलीकस्तूरिका। आगुरुकस्तूरिकादि ॥ चन्दनसहितमेव सर्वगन्धं विनिर्दिष्टम्" इति निघण्टूक्तोऽत्र पाठः। तस्योद्वर्त्तनादिमात्रविषयत्वात् ॥ २१६ ॥

अभिचारेत्यादि।—मुग्धतम। अभिचारोऽथर्ववेदोक्त श्येनादियाग। अभिशापो गुर्वादीनामनिष्टाभिधानम्। होमादिनेत्यादिशब्दात् प्रायश्चित्तनियमव्रता-दयो गृह्यन्ते। उत्पातो निर्घातादिः। ग्रहपीड़ाजनित ग्रहपीड़ाजन्यम्। "उत्पाते ग्रहावेशजो भैरवम्" इति चौखाम्बापाठः प्रसिद्धम्। सुश्रुते तु "उत्पात ग्रहपीड़जम्" इति पाठो दृश्यते ॥ २१७ ॥

आश्वासेनेष्टलाभेन वायोः प्रशमनेन च ।
हर्षणैश्च शमं यान्ति कामक्रोधभयज्वराः ।
कामात् क्रोधज्वरो नाशं क्रोधात् कामसमुद्भवः ॥
याति ताभ्यामुभाभ्याञ्च भयशोकसमुद्भवः ॥ २१८ ॥

भूतज्वरचिकित्सामाह ।

भूतविद्यासमुद्दिष्टैर्बन्धावेशनताड़नैः ।
जयेद्भूताभिषङ्गोत्थं मनःशान्त्यैव मानसम् ॥ २१९ ॥

वर्जनीयविधिमाह ।

व्यायामञ्च व्यवायञ्च स्नानं चङ्क्रमणानि च ।
ज्वरमुक्तो न सेवेत यावन्नो बलवान् भवेत् ॥ २२० ॥

ज्वरमुक्तिलक्षणम्—

देहो लघुर्व्यपगतक्लममोहतापः
पाको मुखे करणसौष्ठवमव्यथत्वम् ।

---

क्रोधज इत्यादि ।—अत्र चरकः—"काम्यैरर्थैर्मनोज्ञैश्च पित्तघ्नैश्चाप्युपक्रमैः । सद्यश्चैव शमं याति ज्वरः कामसमुद्भवः ॥" इति । आश्वासेनेत्यादि ।—चरकस्य पाठस् । कामादिजन्यान् ज्वरान् कामादयः परस्परं नाशयन्तीत्याह,—कामादित्यादि ।—चरकस्य ॥ २१८ ॥

भूतविद्येत्यादि ।—सुश्रुतस्य । भूतानां यक्षराक्षसादीनां ज्ञानार्थं प्रशमनार्थं च विद्या, सा च सुश्रुतोत्तरतन्त्रादावनुसरणीया । बन्धावेशनताडनैरिति बन्धनं इह भूतस्य पुनरपसरतो मन्त्रेण संयमनं बन्धः । मन्त्रेणाकृष्य मनसि निवेशनम् आवेशनम् । ताडनं मन्त्रैः सर्षपादिभिरभिहननम् । ताडनैरित्यत्र पूजनैरित्येव पाठः सुश्रुते दृश्यते । टीकाकृतोऽपि पूजनैः बल्युपहारस्तुत्यादिभिरिति व्याख्यानयन्ति । भूताभिषङ्गोत्थमिति, भूताभिसम्बन्धोत्थम् । मानसं कामक्रोधादिजम् । मनःशान्तैरिति मनःप्रसादनैः । मनःशान्त्यैवेत्यत्र विज्ञानाद्यैरित्यपि पाठः सुश्रुते दृश्यते । टीकाकृतो ऽप्यादिशब्दात् धृतिस्मृतिधैर्यादीनां ग्रहणमिति व्याचक्षते ॥ २१९ ॥

ज्वरमुक्तेन यत् सेव्यं तदाह, व्यायाममित्यादि ।—यातमुक्तमपि ज्वरं प्रत्याययति, तदुक्तं—"बलमाप्य ज्वरं कुर्यादज्वरमुक्तस्य देहिनः । तस्मान्मुक्तज्वरः यावत् विषयान् परिवर्जयेत् ॥" इति ॥ २२० ॥

पाठेन्द्रयवभूनिम्ब-मुस्तपर्पटकामृताः ।
जयन्त्यामसतीसारं सज्वरं समहौषधाः ॥ ३ ॥

नागरादिः—नागरातिविषामुस्ता-भूनिम्बामृतवत्सकैः ।
सर्वज्वरहरः क्वाथः सर्वातीसारनाशनः ॥ ४ ॥

ह्रीवेरादिः—ह्रीवेरातिविषामुस्त-बिल्वधान्यकनागरैः ।
पिबेत् पिच्छाविबन्धघ्नं शूलदोषामपाचनम् ॥
सरक्तं हन्त्यतीसारं सज्वरं वाथ विज्वरम् ॥ ५ ॥

गुडूच्यादिः—गुडूच्यतिविषाधान्य-शुण्ठीबिल्वाब्दबालकैः ।
पाठाभूनिम्बकुटज-चन्दनोशीरपद्मकैः ॥
कषायः शीतलः पेयो ज्वरातीसारशान्तये ।
हृल्लासारोचकच्छर्दि-पिपासादाहनाशनः ॥ ६ ॥

उशीरादिः—उशीरं बालकं मुस्तं धन्याकं विश्वभेषजम् ।
समङ्गा धातकी लोध्रं बिल्वं दीपनपाचनम् ॥
हन्त्यरोचकपिच्छामं विबन्धं सातिवेदनम् ।
सशोणितमतीसारं सज्वरं वाथ विज्वरम् ॥ ७ ॥

---

...आदि।—सुश्रुते त्वस्मिन् योगे बालकमपि दृश्यते, यथा—"पृश्निपर्णीबला बिल्वधान्य-कोत्पलबालकैः। समागमैः पिबेत् पेयां साधितामुदरामयी" ॥ १ । २ ॥

पाठेत्यादि प्रयोगः क्वाथेन ॥ ३ ॥

नागरेत्यादि।—वत्सक इन्द्रयवः। सिद्धसारे—"छिन्नाभूनिम्बमुस्ताश्च कलिङ्गाति-विषाक्षम." इत्युक्तत्वात् ॥ ४ ॥

ह्रीवेरादिर्यज्ञसेनीयोऽपीति वृद्धाः। योगोऽयमवस्थायामपि। बिल्व बिल्वशलाटु, ग्राहकत्वात्; एवं सर्वत्रापि ॥ ५ ॥

गुडूच्यादौ कुटजेन तत्फलं, मधुरत्वात् पाचनत्वाच्च। अयं योगः पित्तश्लेष्म-श्रौत्यपि व्यवहृते ॥ ६ ॥

उशीरमित्यादि।—यद्यपि समङ्गाशब्देन मञ्जिष्ठाप्युच्यते, तथापि वराहक्रान्तैव व्यवहारेण वृद्धाः ॥ ७ ॥

पञ्चमूल्यादिः—पञ्चमूलीबलाबिल्व-गुडूचीमुस्तनागरैः ।
पाठाभूनिम्बह्रीवेर-कुटजत्वक्‌फलैः शृतम् ॥
हन्ति सर्वानतीसारान् ज्वरदोषं वमिं तथा ।
सशूलोपद्रवं श्वासं कासं हन्यात् सुदारुणम् ॥ ८ ॥
कलिङ्गातिविषाशुण्ठी-किराताम्बुयवासकम् ।
ज्वरातीसारसन्तापं नाशयेदविकल्पतः ॥ ८ ॥
वत्सकस्य फलं दारु रोहिणी गजपिप्पली ।
श्वदंष्ट्रा पिप्पली धान्यं बिल्वं पाठा यमानिका ॥
द्वावप्येतौ सिद्धयोगौ श्लोकार्द्धेनाभिभाषितौ ।
ज्वरातिसारशमनौ विशेषाद्दाहनाशनौ ॥ १० ॥
नागराम्रतभूनिम्ब-बिल्वबालकवत्सकैः ।
समुस्तातिविषोशीरै-र्ज्वरातीसारशान्तिकम् ॥ ११ ॥
मुस्तकबिल्वातिविषापाठाभूनिम्बवत्सकैः क्वाथः ।
मकरन्दगर्भयुक्तो ज्वरातीसारौ जयेद् घोरौ ॥ १२ ॥
घनजलपाठातिविषापथ्योत्पलधान्यरोहिणीबिल्वैः ।
सेन्द्रयवैः शतमथः सातीसारं ज्वरं जयति ॥ १३ ॥

कलिङ्गाद्यगुडिका ।

कलिङ्गबिल्वजम्ब्वाम्र-कपित्थं सरसाञ्जनम् ।
लाक्षा हरिद्रे ह्रीबेरं कट्‌फलं शुकनासिकाम् ।
लोध्रं मोचरसं शङ्खं धातकीवटशुङ्गकम् ॥

---

पञ्चमूल्यादौ मन्ति—"पञ्चमूलीति सामान्यात् धीमता [illegible] बृहतीद्वयम् । [illegible] पञ्चमूलीति [illegible] तथा" इति [illegible], तथापि [illegible] [illegible] । ८ ।

कलिङ्गादौ [illegible] [illegible] [illegible] [illegible] । [illegible] [illegible] ॥ ९—११ ॥

कलिङ्गाद्यौ [illegible] [illegible] [illegible] [illegible], [illegible]

पिष्ट्वा तण्डुलतोयेन वटकानक्षसम्मितान्।
छायाशुष्कान् पिबेत्क्षौद्रं ज्वरातीसारशान्तये।
रक्तप्रसादनाश्चैते शूलातीसारनाशनाः॥ १४॥
उत्पलं दाडिमत्वक् च पद्मकेशरमेव च।
पिबेत् तण्डुलतोयेन ज्वरातीसारनाशनम्॥ १५॥

व्योषाद्यचूर्णम्—

व्योषं वत्सकबीजञ्च निम्बभूनिम्बमार्कवम्।
चित्रकं रोहिणीं पाठां दार्वीमतिविषां समाम्॥
श्लक्ष्णचूर्णीकृतान् सर्वांस्तत्तुल्यां वत्सकत्वचम्।
सर्वमेकत्र संयुज्य प्रपिबेत् तण्डुलाम्बुना॥
सक्षौद्रं वा लिहेदेतत् पाचनं ग्राहि भेषजम्।
तृष्णारुचिप्रशमनं ज्वरातीसारनाशनम्॥
कामलां ग्रहणीदोषान् गुल्मं प्लीहानमेव च।
प्रमेहं पाण्डुरोगञ्च श्वयथुञ्च विनाशयेत्॥ १६॥
दशमूलीकषायेण विश्वमक्षसमं पिबेत्।
ज्वरे चैवातिसारे च सशोथे ग्रहणीगदे॥ १७॥

---

शुष्काः। अन्नमूलकमध्येऽपि पाकम्। हरिद्रे इति हरिद्राद्वयम्। तण्डुलोदकञ्च—"अक्षमष्टगुणं दत्त्वा पलं कण्डिततण्डुलात्। भावयित्वा ततो ग्राह्यं तण्डुलोदककर्मणि॥" इत्यनेन ग्राह्यम्। शुक्तमाषिका चर्मकारवटकः॥ १४॥

उत्पलेत्यादौ—दाडिमफलस्य त्वक्,—"फलं स्याद्दाडिमादीनाम्" इति वचनात्। एवमन्यत्रापि बोध्यम्। पद्मं इत्यत्वमाहुः। पद्मस्य केशरः किञ्जल्कः। सर्वं पिबेज्ज्वरे योगोऽयमित्याहुः॥ १५॥

व्योषादौ तण्डुलाम्बु वत्सकत्वचमिति मिलितव्योषादिचूर्णतुल्याम्॥ १६॥

दशमूलीत्यादि।—अत्र प्रक्षेप्यस्य शुण्ठीचूर्णस्य यत् कर्षमानत्वमुक्तं, तत् द्व्यध्यस्य दशमूलस्य पलद्वयात्मकमानापेक्षया; तेन मध्यमाधममात्रानुसारेण शुण्ठीचूर्णस्य ह्रासोऽपि बोध्यः। तेनात्र "प्रक्षेपः पादिकः क्वाथ्यात्" इत्येव परिभाषा प्रवर्तते, न तु "पादमाद्य चतुर्दश" इति वचनात् विश्वशब्दापेक्षया दशमूलीक्वाथस्य

बिड़ङ्गातिविषामुस्तं दारुपाठाकलिङ्गकम्।
मरिचेन समायुक्तं शोथातिसारनाशनम्॥ १८॥
किराताब्दामृताविश्व-चन्दनोदीच्यवत्सकैः।
शोथातिसारशमनं विशेषाज्ज्वरनाशनम्॥ १९॥
किराताब्दामृतोदीच्य-मुस्तचन्दनधान्यकैः।
शोथातिसारतृड्दाह-शमनो ज्वरनाशनः॥ २०॥

इति ज्वरातिसारचिकित्सा।

---

र्णं कार्यः। अत्र, बिल्वचूर्णापेक्षया दशमूलस्य पाचनदीपनत्वेन यौगिकत्वात् प्राधान्यम्। अपि च क्वाथकरणं हि क्वाथ्यमानापेक्षम्, क्वाथ्यमानञ्च उत्तमपुरुषाद्यपेक्षम्। अतएव पञ्चविकर्षादिपञ्चमानमुत्सर्गतो व्यवस्थितमप्येवं, तदपेक्षया च क्वाथ्यस्य उत्तमपुरुषाद्यपेक्षया व्याधिनिवृत्त्यै प्रयुज्यमानस्य न्यूनत्वकरणे भेषजस्याल्पभावत्वदोषात् व्याधिनिवृत्तिरेव न स्यादिति विषये दोषदर्शनात् यथाव्यवस्थितचतुर्भागावशिष्टक्वाथप्रयोगाय क्वाथस्यैव प्रधानता। ततश्च यदि पानस्यास्य चतुर्दश इत्यनुसारात् बिल्वचूर्णापेक्षया दशमूलीक्वाथचतुर्गुणो गृह्यते, तदा प्रधानस्य क्वाथस्य न्यूनता स्यात्, चतुर्भागावशिष्टक्वाथानुसारेण वा यदि चतुर्भागं चूर्णं गृह्यते, तदा चूर्णबाहुल्यं स्यादिति। तेन यत्र क्वाथेन चूर्णपानं, तत्र "प्रक्षेप पादिकः क्वाथात्" इत्यस्यैव विषयः, न तु "पानस्य चतुर्दश" इत्यस्येति निश्चयः। एवमन्यत्रापि क्वाथेन चूर्णस्य कल्कस्य वा पाने क्वाथस्य प्राधान्यमनुसन्धेयम्। अत एव वचनान्तरेणोक्तं टीकाकृता— "क्वाथेन चूर्णपानं यत् तत्र क्वाथप्रधानता। प्रक्षेपो न तेनात्र चूर्णादेर्वा चतुर्दश॥" इति। चूर्णापेक्षो चूर्णमानापेक्षोऽयम्॥ १७। १८॥

किरातेत्यादि स्पष्टम्॥ १९। २०॥

इति ज्वरातिसारचिकित्साविवृतिः।

---

# अथातीसार-चिकित्सा ।

आमपक्वक्रमं हित्वा नातिसारे क्रिया यतः ।
अतः सर्वातिसारेषु ज्ञेयं पक्वामलक्षणम् ॥ १ ॥
मज्जत्यामा गुरुत्वाद्विट् पक्वा तूत्प्लवते जले ।
विनातिद्रवसङ्घात-शैत्यश्लेष्मप्रदूषणात् ॥ २ ॥
शकृद्दुर्गन्धि साटोप-विष्टम्भार्त्तिप्रसेकिनः ।
विपरीतं निरामन्तु कफात् पक्वञ्च मज्जति ॥ ३ ॥
आमे विलङ्घनं शस्तमादौ पाचनमेव च ।
कार्य्यञ्चानशनस्यान्ते प्रद्रवं लघुभोजनम् ॥ ४ ॥

---

ज्वरोपद्रवत्वादतीसारस्य चिकित्सामभिधाय सम्प्रति स्वतन्त्रस्यातीसारस्य चिकित्सामाह आमेत्यादि ।—सुगमम् । क्रिया चिकित्सा ॥ १ ॥

आमपक्वलक्षणमाह, मज्जतीत्यादि ।—चरकस्य । आमेति आमान्विता विट् जले मज्जति । गुरुत्वादिति आमाश्रितगुरुत्वात् । पक्वेति निरामा ; प्लवते निरामत्वेन लघुत्वादित्यर्थः । द्वयोरप्यामपक्वलक्षणयोरपवादमाह, विनातिद्रवेत्यादि ।—अतिद्रवत्वात् आमापि प्लवते ; तथा अतिसङ्घातात् अतिकाठिन्यात् पक्वापि मज्जति , तथा शैत्यसंहतिश्लेष्मप्रदूषणात् कफसम्बन्धजगौरवेण पक्वापि मज्जति । शैत्यस्थाने श्वैत्यपाठे—श्वेतवर्णता । अनेनातिद्रवत्वादिकं विना मज्जनप्लवने आमनिरामलक्षणतया ज्ञेये इत्यर्थः ॥ २ ॥

आमत्वनिरामत्वयोः सम्यग्ज्ञानार्थमपरमपि लक्षणमाह, शकृदित्यादि ।—साटोप-विष्टम्भार्त्तिमतां तच्छकृत् । किंवा आर्त्तिः शूलम् ; आटोपो गुडगुडाशब्दपूर्वक उदर क्षोभः ; विष्टम्भः सशब्दशूलमल्पप्रवृत्तिः ; प्रसेकिनः कफप्रसेकिनः ; किंवा प्रसेक-स्तोकस्तोकमल्पसरणम् । कफात् पक्वञ्च मज्जतीत्यस्य तन्त्रान्तरीयवचनत्वान्न पौन-रुक्त्यमाशङ्कनीयम् । इह तु सम्पूर्णश्लोकानुरोधात् पठितम् ॥ २ ॥

आम इत्यादि ।—प्रद्रवमिति प्रकृष्टद्रवम् ; प्रकर्षश्चात्र शास्त्रविहितत्वेन ज्ञेयः । तेनाशास्त्रविहितद्रवान्ननिषेधार्थं, विहितलाजमण्डादिविधानार्थञ्च प्रद्रवोपादानं ज्ञेयम् । अतः—"वर्जयेद्द्विदलं शूली कुष्ठी मांसं ज्वरी स्त्रियम् । द्रवमन्नमतीसारी सर्वंञ्च तरुणज्वरी" इत्यादि वचनेन सहास्य न विरोधः । अन्ये तु प्रद्रवमिति

लङ्घनमेकं मुक्त्वा न चान्यदस्तीह भेषजं बलिनः।
समुदीर्णं दोषचयं शमयति तत् पाचयत्यपि च ॥ ५ ॥
ह्रीवेरशृङ्गवेराभ्यां मुस्तपर्पटकेन वा।
मुस्तोदीच्यशृतं तोयं देयं वापि पिपासवे ॥
युक्तेऽन्नकाले क्षुत्क्षामं लघून्यन्नानि भोजयेत् ॥ ६ ॥
धोषधसिद्धाः पेया लाजानां शक्तवोऽतिसारहिताः।
वस्त्रप्रस्रुतमण्डः पेया च मसूरयूषश्च ॥ ७ ॥
गुर्वी पिण्डी खरात्यर्थं लघ्वी सैव विपर्ययात्।
शक्तूनामाशु जीर्य्येत मृदुत्वादवलेहिका ॥ ८ ॥

बृहच्छालपर्ण्यादिः।
शालपर्णी पृश्निपर्णी बृहती कण्टकारिका।
बलाश्वदंष्ट्राबिल्वानि पाठानागरधान्यकम् ॥
एतदाहारसंयोगे हितं सर्वातिसारिणाम् ॥ ९ ॥

---

दाय्याद्वे विरोधं परिहरन्ति। अपरे तु—विरुद्धत्वानिर्धारणात् धन्वन्तर दिवद्धेतां व्याख्यानयन्ति। अन्ये तु—केवलद्रवत्वेन निषेधो न तु मात्रमन्नादिविषयः ॥ ४ ॥

लङ्घनमेकमित्यत्र लङ्घनस्य प्राधान्यमाह, लङ्घनमित्यादि।—स्पष्टम् ॥ ५ ॥

ह्रीवेरेत्यादि तोयमयं षडङ्गविधिना साधितं तोयम्। मुस्तेति वाक्यम् ॥ ६ ॥

मण्डं लघ्वौषधमिति यद्युक्तं तदेव दर्शयति औषधसिद्धा इत्यादि।—औषधं धान्यनागरबिल्वादि धान्यपञ्चकादिकम्। पेया चेति।—पेया च वस्त्रप्रस्रुता, अत एवोक्तं,—"वस्त्रपूता यवागूर्वाऽनन्तरमण्डकम्" इति ॥ ७ ॥

गुर्वीत्यादि।—अत्यर्थं खरा कठिना शक्तुपिण्डिका गुर्वी स्यात्। सैव विपर्ययादिति मृद्वी सा लघ्वी भवति। अवलेहिका अवलेहरूपेण विलीना ॥ ८ ॥

बृहच्छालपर्ण्यादौ—बिल्वानि बिल्वफलस्य मध्यानि बिल्वम्। सुश्रुत—"बालबिल्वानि' लोके बिल्वं भवति दीपनम्। कटुतिक्तकषायोष्णं बिल्वमामकफापहम् ॥" इति। तत्र सर्वत्र बालबिल्वं ग्राह्यम्। चक्रोऽपि बिल्वस्य गुणं वदन्,—"बिल्वमूलं ग्रहण्यतिसारघ्नं न तु बिल्वम्" इति सुश्रुतवचनात्। आहारसंयोग

स्वल्पशालपर्ण्यादिः।

शालपर्णीबलाबिल्वैः पृश्निपर्ण्या च साधिता।
दाड़िमाम्ला हिता पेया पित्तश्लेष्मातिसारिणाम् ॥ १० ॥
यवागूमुपभुञ्जानो न तु व्यञ्जनमाचरेत्।
शाकमांसफलैर्युक्ता यवाग्वोऽम्लाश्च दुर्जराः ॥ ११ ॥
धान्यपञ्चकसंसिद्धो धान्यविश्वकृतोऽथवा।
आहारो भिषजा योज्यो वातश्लेष्मातिसारिणाम् ॥ १२ ॥
वातपित्ते पञ्चमूल्या कफे वा पञ्चकोलकैः ॥ १३ ॥
धान्योदीच्यशृतं तोयं तृष्णादाहातिसारनुत्।
आभ्यामेव सपाठाभ्यां सिद्धमाहारमाचरेत् ॥ १४ ॥
दोषाः सन्निचिता यस्य विदग्धाहारमूर्च्छिताः।
अतिसाराय कल्पन्ते भूयस्तान् सम्प्रवर्त्तयेत् ॥ १५ ॥
न तु संग्रहणं दद्यात् पूर्वमामातिसारिणे।
दोषा ह्यादौ रुध्यमाना जनयन्त्यामयान् बहून् ॥
शोथपाण्ड्वामयप्लीह-कुष्ठगुल्मोदरज्वरान्।

---

इति चाहारस्य सम्भोजने संस्कार इति यावत्। सर्वातिसारिणामिति आमपक्वाम पक्वातिसारिणां, प्रत्येकद्वन्द्वसन्निपातातिसारिणां वा ॥ ९ ॥

स्वल्पशालपर्ण्यादिः।—वाग्भटस्य ॥ १० ॥

यवाग्वोऽम्ला इति।—पथ्या अम्लविपाकाः ॥ ११ ॥

धान्यपञ्चकेत्यादि स्पष्टम्। वातपित्ते पञ्चमूल्या इति स्वल्पपञ्चमूल्या ॥ १२ । १३ ॥

आभ्यामिति धान्योदीच्याभ्याम् ॥ १४ ॥

दोषा इत्यादि।—सन्निचिता इति सञ्चयं प्राप्ताः। विदग्धग्रहणेनात्राविदग्धा-हारवाचिना चतुर्विधमप्याम-विदग्ध-विष्टब्ध-रसशेषरूपमजीर्णमुच्यते। मूर्च्छिता इति वर्द्धिताः। सम्प्रवर्त्तयेदिति स्वयं प्रवर्त्तमानदोषस्य उपेक्षया प्रवर्त्तनं कारयेत्। उक्तं हि,—"तेषूपेक्षैव भेषजम्" इति, तदा स्तोकं स्तोकं विबद्धं वा विरेचनयोगेन प्रवर्त्तयेत्। अत एव वक्ष्यति स्तोकं स्तोकं विबद्धं चेत्यादि ॥ १५ ॥

न तु संग्रहणमित्यादौ—पूर्वमिति विशेषणेनोत्तरकालमामातिसारिणेऽपि अति-

दण्डकालसकाध्मान-ग्रहण्यर्शोगदांस्तथा ॥ १६ ॥
क्षीणधातुबलार्त्तस्य बहुदोषोऽतिनिस्रुतः ।
आमोऽपि स्तम्भनीयः स्यात् पाचनान्मरणं भवेत् ॥ १७ ॥
स्तोकं स्तोकं विबद्धं वा सशूलं योऽतिसार्यते ।
अभयापिप्पलीकल्कैः सुखोष्णैस्तं विरेचयेत् ॥ १८ ॥
धान्यपञ्चकम् ।—धान्यकं नागरं मुस्तं बालकं बिल्वमेव च ।
आमशूलविबन्धघ्नं पाचनं वह्निदीपनम् ॥
इदं धान्यचतुष्कं स्यात् पित्ते शुण्ठीं विना पुनः ॥ १९ ॥
पिप्पलीं नागरं धान्यं भूतीकमभयां वचाम् ।
ह्रीवेरभद्रमुस्तानि बिल्वं नागरधान्यकम् ॥
पृश्निपर्णी श्वदंष्ट्रा च समङ्गा कण्टकारिका ।

---

निवृत्तवह्निदीपनत्वात् क्षीणधातवे सग्रहणं देयमिति दर्शयति। अत एव पठति क्षीणधातुबलार्त्तस्येति। अन्ये तु पूर्वं सग्रहणं न देयमिति वचनेन प्रथममल्पा आमज शूलादिसग्रहणं न देयमिति बोधयति, सुक्षीणेत्यादि तु पाचन ग्रहणस्य यत्, पूर्वमपि देयमित्याह ॥ १६ ॥

अस्याशयामोऽपि संग्रह्य देयमित्याह, क्षीणेत्यादि।—पाचनादिति बलपाचनात्, पाचनजन्यनाशु हितमेव ॥ १७ ॥

विरेचनमप्याह, स्तोकमित्यादि।—सुश्रुतस्य। अभयापिप्पलीकल्कस्य सुखोष्णता कटुत्वयोगेन ज्ञेया ॥ १८ ॥

धान्यकमित्यादि।—अयं योगः सामपित्ते बोध्यः। यदुक्तमायुर्वेदसारे—"स्निग्ध-पित्त धनोद्दीपन धान्यकैः कथितं जलम्। आमपित्तातिसारघ्नं दीपनं धान्यपञ्चकम् ॥" धान्यपञ्चकं यदुक्तं तत् शुण्ठ्यतिरिक्तेन वर्णितमित्यभिप्रायात् "इदं धान्यचतुष्कं स्यात्" इत्यादि। भोजेऽप्युक्तं —"धान्यकं बालकं मुस्तं बिल्वं पित्ते प्रदीपनम्। आमशूलविबन्धघ्नं पाचनं वह्निदीपनम् ॥" इति। तदान्यत्राप्युक्तं —"धान्यकं बालकं मुस्तं बिल्वं पित्ते तु दीपनम्। आमशूलविबन्धघ्नं पाचनं नागरान्वितम् ॥" इति ॥ १९ ॥

पिप्पलीमित्यादि।—प्रमथ्याख्यं चरकस्य। अत्र भूतीकं यमानी, भद्रमुस्त

वातातिसारिणे देयास्तक्रेणान्यतमेन वा ॥ २९ ॥

कच्छटादि।—कच्छटजम्बूदाडिमशृङ्गाटकपत्रबिल्वह्रीवेरम्।
जलधरनागरसहितं गङ्गामपि वेगिनीं रुन्ध्यात् ॥ ३० ॥
कृत्वालवालं सुदृढं पिष्टैरामलकैर्भिषक्।
आर्द्रकस्वरसेनाशु पूरयेन्नाभिमण्डलम्।
नदीवेगोपमं घोरमतीसारं निरोधयेत् ॥ ३१ ॥
किराततिक्तकं मुस्तं वत्सकं सरसाञ्जनम्।
पित्तातिसाररोगघ्नं सक्षौद्रं वेदनापहम् ॥ ३२ ॥
पलं वत्सकबीजस्य श्रपयित्वा जलं पिबेत्।

---

पञ्चमूल्यादौ पञ्चमूली महती लघ्वी वा। धातक्युत्पलबिल्वका इति बिल्वका बिल्वशलाटवः। अन्ये तु बिल्वका इत्यत्र कल्पना इति पठन्ति, तेनाविशेषात् सर्वकल्पनैव कार्येत्याहुः। तन्न, स्वरसस्य सत्त्वात् तत्कल्पनाया गुरुत्वात्; अत एव कल्कोऽपि न ग्राह्य इति, कषायचूर्णौ वा योग्यत्वादित्याहुः। अन्यतमेनेति काञ्जिकजलादीनामन्यतमेन। क्वाथपक्षे तक्रादौ षडंशं देयम् ॥ २९ ॥

कच्छटादौ।—कच्छटादीनां चतुर्णां पत्रम्। नागरान्तैरष्टाभिः कषायः ॥ ३० ॥

कृत्वेत्यादि स्पष्टम् ॥ ३१ ॥

किराततिक्तकमित्यादि।—अत्र तण्डुलोदकमपि योज्यम्। तेन एषां चूर्णं मधुसहिततण्डुलोदकेन पिबेदित्यर्थः। यदाह वाग्भटः—"किराततिक्तकं मुस्तं वत्सकं सरसाञ्जनम्। कटङ्कटेरी ह्रीवेरं बिल्वमध्यं दुरालभा। तिला मोचरसो लोध्रं समङ्गा कमलोत्पलम्। नागरं धातकीपुष्पं दाडिमस्य त्वगुत्पलम्। अर्द्धश्लोकैः स्मृता योगाः सक्षौद्रास्तण्डुलाम्बुना ॥" इति। चरकेऽप्युक्तं—"किराततिक्तकं मुस्तं वत्सकं सरसाञ्जनम्। बिल्वं दारुहरिद्रात्वक् ह्रीवेरं सदुरालभम्। चन्दनञ्च मृणालञ्च नागरं लोध्रमुत्पलम्। तिला मोचरसो लोध्रं समङ्गा कमलोत्पलम्। नागरं धातकीपुष्पमुत्पलं दाडिमत्वचः। कट्फलं नागरं पाठा जम्ब्वाम्रास्थि दुरालभा। योगाः षडेते सक्षौद्रास्तण्डुलोदकसंयुताः। पेयाः पित्तातिसारघ्नाः श्लोकार्द्धेषु निदर्शिताः ॥" इति। नियमस्तु बालेष्वादौ क्वाथविधिरिति जेज्जट इत्याह ॥ ३२ ॥

यो रसाशी जयेच्छीघ्रं स पैत्तं जठरामयम् ॥ ३३ ॥
मधूकं कट्फलं लोध्रं दाडिमस्य फलत्वचम् ।
पित्तातिसारे मध्वाक्तं पाययेत् तण्डुलाम्बुना ॥ ३४ ॥
कुटजातिविषामुस्तं हरिद्रापर्णिनीद्वयम् ।
सक्षौद्रशर्करं शस्तं पित्तश्लेष्मातिसारिणाम् ॥ ३५ ॥
कुटजत्वक्फलं मुस्तं क्वाथयित्वा जलं पिबेत् ।
अतीसारं जयत्याशु शर्करामधुयोजितम् ॥ ३६ ॥
बिल्वचूताम्रनिर्य्यूहः पीतः मक्षौद्रशर्करः ।
निहन्याच्छर्दतीसारं वैश्वानर इवाहुतिम् ॥ ३७ ॥
पटोलयवधन्याक-क्वाथः पेयः सुशीतलः ।
शर्करामधुसंयुक्तश्छर्दतीसारनाशनः ॥ ३८ ॥
प्रियङ्ग्वञ्जनमुस्ताख्यं पाययेत् तु यथाबलम् ।
तृष्णातिसारच्छर्दिघ्नं सक्षौद्रं तण्डुलाम्बुना ॥ ३९ ॥
कलिङ्गक-वचामुस्तं दारु सातिविषं समम् ।
कल्कं तण्डुलतोयेन पिबेत् पित्तानिलामयी ॥ ४० ॥
कुटजादि ।—कुटजं दाडिमं मुस्तं धातकीबिल्वबालकम् ।
लोध्रचन्दनपाठाश्च कषायं मधुना पिबेत् ॥

---

पथमित्यादि ।—पाश्चात्य । रसाशी शाकमांसरसेन भुञ्जानः ॥ ३३ ॥
मधूकमित्यादि ।—पूर्वविधया योगोऽयम् ॥ ३४ ॥
कुटजेत्यादौ ।—हरिद्राद्वयम्, पर्णिनीद्वयं माषपर्णी मुद्गपर्णी । [illegible] योगः ॥ ३५ ॥
कुटजत्वगित्यादि योगद्वयं स्पष्टम् ॥ ३६ ॥
बिल्वेत्यादि स्पष्टम् ॥ ३७ ॥
पटोलेत्यादि स्पष्टम् ॥ ३८ ॥
प्रियङ्ग्वित्यादौ अञ्जनं रसाञ्जनम् । पूर्वविधया योगोऽयम् । ३९
कलिङ्गेत्यादौ सातिविषमिति कलिङ्गादिविशेषणम् ॥ ४० ॥

रसाञ्जनं सातिविषं कुटजस्य फलं त्वचम् ।
धातकीशृङ्गवेरञ्च प्रपिबेत् तण्डुलाम्बुना ॥
क्षौद्रेण युक्तं नुदति रक्तातिसारमुल्वणम् ।
मन्दं दीपयते चाग्निं शूलञ्चापि निवर्त्तयेत् ॥ ५१ ॥
विडङ्गातिविषा मुस्तं दारु पाठा कलिङ्गकम् ।
मरिचेन समायुक्तं शोथातिसारनाशनम् ॥ ५२ ॥

वत्सकादिः ।

सवत्सकः सातिविषः सबिल्वः सोदीच्यमुस्तश्च कृतः कषायः ।
सामे सशूले सहशोणिते च चिरप्रवृत्तेऽपि हितोऽतिसारे ॥ ५३ ॥
कषायो मधुना पीतस्त्वचो दाडिम-वत्सकात् ।
सद्यो जयेदतीसारं सरक्तं दुर्निवारकम् ॥ ५४ ॥
गुडेन खादयेद्बिल्वं रक्तातिसारनाशनम् ।

---

पृश्निपर्ण्या एको योगः । अन्ये तु—"पृश्निपर्ण्या च साधितः" इति पृथक्पाठः, पृश्निपर्णीक्वाथेन साधित इत्यर्थः । मेषादीनां क्षीरादवन्धं पृश्निपर्णीक्वाथैर्मिलित्वा पाकः कार्यः । तच्च हि वाग्भटे—"पयस्यर्द्धोदके छागे ह्रीबेरोत्पलनागरैः । पेया रक्तातिसारघ्नी पृश्निपर्णी रसान्विता" इति ब्रुवते ॥ ५० ॥

रसाञ्जनमित्यादि ।—अत्र कुटजस्य फलं त्वक् च । सुश्रुतेऽप्युक्तं—"रसाञ्जनं सातिविषं सक्षौद्रं कौटजं यथा । धातकीं नागरञ्चैव पाययेत् तण्डुलाम्बुना । सशूलं रक्तज हन्ति योगो मधुसमन्वितः ॥" इति ॥ ५१ ॥

विडङ्गेत्यादि ।—अत्र मरिचस्य प्रक्षेप्यत्वमित्याहुः ॥ ५२ ॥

वत्सकादौ वत्सकः कुटजः । तस्य त्वगिति चन्द्रकलाटीकाकारः वैद्यप्रमाणकाय । अन्ये तु—"बिल्वयवाम्बुदवाला‍तिविषाकृतः । कषायो हन्त्यतीसारं सामं पित्तसमुद्भवम् ॥" इति सुश्रुतसंवादात् फलमेवेत्याहुः । किन्तु मायो व्यवहारस्त्वचा, फलेनापि ज्वरे रक्तप्रावृत्ते च । यदुक्तं,—"कुटजः कटुकस्तिक्तः कषायो दीपनो ग्राही त्वग्दोषार्शोऽतिसारजित् । तद्बीजं रक्तपित्तातीसारज्वरहरं हिमम् ॥" इति ॥ ५३ ॥

कषाय इत्यादौ—दाडिमात् कोमलत्वक् ॥ ५४ ॥

आमशूलविबन्धघ्नं कुक्षिरोगविनाशनम् ॥ ५५ ॥
बिल्वाम्रधातकीपाठा-शुण्ठीमोचरसाः समाः।
पीता रुन्धन्त्यतीसारं गुड़तक्रेण दुर्जयम् ॥ ५६ ॥
शल्लकीबदरीजम्बू पियालाम्राऽर्जुनत्वचः।
पीताः क्षीरेण मध्वाढ्याः पृथक् शोणितनाशनाः ॥ ५७ ॥
जम्ब्वाम्रामलकीनान्तु पल्लवानथ कुट्टयेत्।
संगृह्य स्वरसं तेषामजाक्षीरेण योजयेत्।
तं पिबेन्मधुना युक्तं रक्तातीसारनाशनम् ॥ ५८ ॥
बिल्वं छागपयःसिद्धं सितामोचरसान्वितम्।
कलिङ्गचूर्णसंयुक्तं रक्तातिसारनाशनम् ॥ ५९ ॥
ज्येष्ठाम्बुना तण्डुलीयं पीतश्च ससितामधु।
पीत्वा शतावरीकल्कं पयसा क्षीरभुग्जयेत्।
रक्तातिसारी पीत्वा वा तया सिद्धं घृतं नरः ॥ ६० ॥

---

गुड़ तैयादि।—अत्र गुड़बिल्वयोः समभाग., बिल्वञ्च बिल्वशलाटु, तत्र पानीयेनोत्स्विद्य ग्राह्यम्। चक्रदत्तोऽप्येवमाह ॥ ५५ ॥

बिल्वादेत्यादि। गुड़ेन मधुरीकृत तक्रं गुड़तक्रम्। पेयमपि तक्रेण, चक्रदत्तमतमपि ॥ ५६ ॥

शल्लकीत्यादी—क्षीरमात्र यथाविधानम् ॥ ५७ ॥

जम्ब्वित्यादी स्वरस-च्छागक्षीरयो. समभाग., मधुनोऽपि मात्रा पूर्ववदेव, "मात्रा क्षीरस्वरसादीनां" इत्यादि पूर्वोक्तविधिः ॥ ५८ ॥

बिल्वं छागपय सिद्धमित्यादि।—बिल्वशलाटुस्विन्नक्षीरेण कायद्रव्येण किञ्चित् पानीयमादिशित्वोत्स्विद्य ततः सितादिना संयोज्य पेयम्। अत्र बिल्वशलाटुमात्र-काटक, सितायाः एकमाषकः, मोचरस-कलिङ्गयोश्चूर्णं मिलित्वा माषकम् इति वृद्ध-व्यवहारः। चक्रदत्तमप्येवमाह ॥ ५९ ॥

ज्येष्ठाम्बुनेत्यादावपि रक्तातिसारनाशनमिति शेषः। ज्येष्ठाम्बु तण्डुलाम्बु, तण्डुलीयकम् अल्पमारिषम् मूलम्। पीत्वेत्यादि।—शतकल्क। क्षीरं पिबेत्

कुटजलेहः—शतं कुटजमूलस्य क्षुण्णं तोयार्मणे पचेत् ।
क्काथे पादावशेषेऽस्मिन् लेहं पूते पुनः पचेत् ॥
सौवर्चलयवक्षार-विड़सैन्धवपिप्पली ।
धातकीन्द्रयवाजाजी-चूर्णं दत्त्वा पलद्वयम् ।
लिह्यादटरमात्रं तत् पीतं क्षौद्रेण संयुतम् ।
पक्कापक्कमतीसारं नानावर्णं सवेदनम् ।
दुर्वारं ग्रहणीरोगं जयेच्चैव प्रवाहिकाम् ॥ ६७ ॥

कुटजाष्टकः ।

तुलामथार्द्रां गिरिमल्लिकायाः संक्षुद्य पक्का रसमाददीत ।
तस्मिन् सुपूते पलसम्मितानि श्लक्ष्णानि पिष्ट्वा सह शाल्मलेन ॥
पाठां समङ्गातिविषां समुस्तां विल्वञ्च पुष्पाणि च धातकीनाम् ।
प्रक्षिप्य भूयो विपचेत् तु तावद्दर्वीप्रलेपः स्वरसस्तु यावत् ।
पीतस्त्वसौ कालविदा जलेन मण्डेन वाऽजापयसाऽथवापि ।
निहन्ति सर्वन्त्वतिसारमुग्रं कृष्णं सितं लोहितपीतकं वा ॥
दोषं ग्रहण्या विविधञ्च रक्तं शूलं तथार्शांसि सशोणितानि ।

---

क्वाथ्य पद्मकेशरसंयुतम् । काश्मरीपद्मपत्रैश्चाभिश्च सूत्रेण तु दृढम् ॥" इति तुल्य मितीति । श्योणाकस्य त्वचं पद्मकेशरञ्च समभागं कृत्वा संपिष्य, तं पिण्डं गाम्भारी-पत्र पद्मपत्रयोः पुटे निक्षिप्य, सूत्रेणावेष्ट्य मृत्तिकया चावलिप्य निर्धूमावह्निनाङ्गारेषु पुटपाकविधिना पक्का रसो ग्राह्य इति व्याख्यानयन्ति टीकाकृत । अत्र श्योणाक-पुटपाके वाग्भटमतादात् मध्वास्थाने शर्कराप्रक्षेपोऽपि बोध्यः ॥ ६६ ॥

शतमित्यादि ।—अर्मणो द्रोणः । लेहमिति लेहाकारं यथा भवति तथा पचेत् । पलद्वयमिति मिलित्वा । आमस्रपाके चूर्णप्रक्षेपः । यवक्षारस्थाने गुड-क्षारपाठो न प्रसिद्धः । बदरमात्रमित्यष्टमाषकम् । माषचतुष्टयेन व्यवहारः । क्षौद्रयुक्तमित्युपयोगकाले अनुरूपं मधु दत्त्वा उपयोज्यम् ॥ ६७ ॥

तुलामित्यादि ।—तुलाद्रव्ये जलद्रोण इति वचनात् । रसश्च पादावशिष्ट परी-भाषासिद्धः । पलसम्मितानीति प्रत्येकं, द्रव्यप्रधानत्वान्निर्देशस्य । समङ्गा वराह-क्रान्ता । शाल्मलेनेति शाल्मलीवेष्टकेन । अत्र केचित् चूर्णं दत्त्वैव पाकं,—"प्रक्षिप्य

असृग्दरञ्चैवमसाध्यरूपं निहन्त्यवश्यं कुटजाष्टकोऽयम् ॥
तुलाद्रव्ये जलद्रोणो द्रोणे द्रव्यतुला मता ॥ ६८ ॥

षडङ्गघृतम्—वत्सकस्य च बीजानि दार्व्याश्च त्वच उत्तमाः।
पिप्पली शृङ्गवेरञ्च लाक्षा कटुकरोहिणी ॥
षड्भिरेभिर्घृतं सिद्धं पेयं मण्डावचारितम्।
अतीसारं जयेच्छीघ्रं त्रिदोषमपि दारुणम् ॥ ६९ ॥

क्षीरिद्रुमाद्यं घृतम्।

क्षीरिद्रुमाभीरुरसे विपक्वं तज्जैश्च कल्कैः पयसा च सर्पिः।
सितोपलार्द्धं मधुपादयुक्तं रक्तातीसारं शमयत्युदीर्णम् ॥ ७० ॥
जीर्णेऽमृतोपमं क्षीरमतीसारे विशेषतः।
छागं तद्वत्तजैः सिद्धं देयं वा वारिसाधितम् ॥ ७१ ॥

---

भूयो विपचेत्" इति वचनात् प्रचारार्थमाह। अन्ये तु अभिनवं मृदुनं भूयः पचेत्; ततो मनाक् दर्वीप्रलेपनाशयाथां आत्माक्षीविष्टकादिचूर्णं प्रक्षिप्य, ततो रसः पीत इति योज्यन्। एतेन—"प्रायो न पाकचूर्णानां भूरिचूर्णस्य योगत" इत्यपि वचनमनुगृहीतं भवतीत्याह.। व्यवहार्यत्वामेतेनैवेति। अमीनेति।—शीतलजलेनाग्निमान्द्ये; मण्डेन बलिष्टे, छागीदुग्धेन रक्ते ॥ ६८ ॥

षडङ्गघृते "दार्व्याश्च त्वच उत्तमाः" इति सर्वत्र दार्व्यास्त्वच एव ग्राह्या उत्तमगुणत्वात्। तस्य दुर्लभत्वात् अत्र काष्ठमेव गृह्यते। षड्भिरिति पदं यथालाभद्रव्यनिषेधार्थम्। एभि कल्कैरर्धाष्टगुणमेव जलं देयम्। इदमेव घृतं कुटजत्वचा सनाथं भवति, तदुक्तं वैद्यप्रदीपे—"अनेन पेयं तत्सर्पिः सनाथं कुटजत्वचा" इति ॥ ६९ ॥

क्षीरिद्रुमेत्यादौ।—क्षीरिणो द्रुमा वटोदुम्बरादय। एषामन्यतमस्य शतावरीरसेन च क्वाथः। शतावरीरसश्च घृतापेक्षया मिलित्वा चिगुणः। कल्कोऽप्येषामेव। पयश्च खेदसमम्। घृतमपेक्षा च मिताया अर्द्धं षोडशपलमित्यर्थं। मधुनोऽपि घृतमपेक्षैव पादिकत्वं ज्ञेयम् ॥ ७० ॥

क्षीरपानविषयमाह, जीर्णे इत्यादि।—तद्वत्तजैरिति—अतिसारघ्नभेषजैः। "देयं वा वारिसाधितम्" इति केवलेन त्रिगुणेन जलेन साधितमित्यर्थः। तत्र हि सुश्रुते—

बालबिल्वं गुडं तैलं पिप्पली विश्वभेषजम् ।
लिह्याद्वाते प्रतिहते सशूले सप्रवाहिके ॥ ७२ ॥
पयसा पिप्पलीकल्कः पीतो वा मरिचोद्भवः ।
त्र्यहात् प्रवाहिकां हन्ति चिरकालानुबन्धिनीम् ॥ ७३ ॥
कल्कः स्याद्बालबिल्वानां तिलकल्कश्च तत्समः ।
दध्नः सरोऽम्लः स्नेहाढ्यः खडो हन्यात् प्रवाहिकाम् ॥ ७४ ॥
बिल्वापणं गुडं लोध्रं तैलं लिह्यात् प्रवाहणे ॥ ७५ ॥
दध्ना ससारेण समाक्षिकेण भुञ्जीत निश्चारकपीडितस्तु ।
सुतप्तकुप्याक्वथितेन वापि क्षीरेण शीतेन मधुप्लुतेन ॥ ७६ ॥
दोषाग्निनिष्पुरीषो यः सार्य्यते फेनिलं शकृत् ।
स पिबेत् फाणितं शुण्ठी-दधितैलपयोघृतम् ॥ ७७ ॥
शोथं शूलं ज्वरं तृष्णां कासं श्वासमरोचकम् ।

---

"यथाप्तं तथा क्षीरमतीसारेषु पूजितम् । विरोधित्वेऽपि तत् पेयमपो भागैस्त्रिभिः समम्" ॥ ७१ ॥

बालबिल्वमित्यादि ।—चरकस्य । वाते प्रतिहत इति विबद्धवाते ॥ ७२ ॥

पयसेत्यादि ।—दुग्ध प्र १, पिप्पली माष ४, अथवा मरिचचूर्णं माष २, एवं व्यवहरन्ति । अविभ्राग्नौ प्रवाहिकायामयं योगः ॥ ७३ ॥

कल्कः स्यादित्यादि ।—चरकस्य । अत्र स्नेहाढ्यता तिलदधिसरयोगात् । खड इत्यस्यैव योगस्य संज्ञा । चरके खडस्थाने मद्य इति पाठान्तरम् ॥ ७४ ॥

बिल्वापणमित्यादौ बिल्वं बिल्वमात्रः, ऊषणं मरिचम् । यदुक्तं—"बिल्वपेशीं गुडं लोध्रं तैलं मरिचचूर्णितम्" इति । तैलेन स्नेहः ॥ ७५ ॥

दध्नेत्यादि ।—सुश्रुतस्य । ससारेण अनुद्धृतनवनीतेन । निश्चारकः प्रवाहिका; यदाह पराशरः—"निर्वाहयेत् सफेनस्तु पुरीषं यो मुहुर्मुहुः । प्रवाहिकेति सा ख्याता केचिन्निश्चारकश्च सः ॥" इति । सुतप्तकुप्याक्वथितेनेति ।—अत्यन्ततप्तप्रभूतपाषाणजलेतरन्नोद्वमयेतल् क्वथितेन । अन्ये तु कपटितं दध्यादि कुप्यमात्वशने । केचित्तु कुप्यस्थाने कूर्पं पठन्ति, व्याचक्षते च ।—"कूर्पः पाषाणभेदो दधिव्याप्ये ख्यातः शङ्खनाभ्याकृतिः" इति ॥ ७६ ॥

छर्दिं मूर्च्छाञ्च हिक्काञ्च दृष्ट्वातीसारिणं त्यजेत् ।
बहुमेही नरो यस्तु भिन्नविट्को न जीवति ॥ ७८ ॥
स्नानाभ्यङ्गावगाहांश्च गुरुस्निग्धातिभोजनम् ।
व्यायाममग्निसन्तापमतीसारी विवर्जयेत् ॥ ७९ ॥

इत्यतीसार-चिकित्सा ।

---

## अथ ग्रहणी-चिकित्सा ।

ग्रहणीमाश्रितं दोषमजीर्णवदुपाचरेत् ।
अतीसारोक्तविधिना तस्यामञ्च विपाचयेत् ॥ १ ॥
शरीरानुगते सामे रसे लङ्घनपाचनम् ।
विशुद्धामाशयायास्मै पञ्चकोलादिभिर्युतम् ।
दद्यात् पेयादि लघ्वन्नं पुनर्योगांश्च दीपकान् ॥ २ ॥
कपित्थबिल्वचाङ्गेरी-तक्रदाडिमसाधिता ।

---

दीप्ताग्निरिति ।—सुश्रुतस्य । एतत्सर्वमालोच्य पेयम् ॥ ७७—७९ ॥

इति अतीसारचिकित्साविवृतिः ।

---

ग्रहण्यतीसारयोः परस्परं कार्यकारणभावसम्बन्धोऽस्तीत्यनन्तरं ग्रहणीचिकित्सितमुच्यते, ग्रहणीमाश्रितमित्यादि ।—वाग्भटस्य । ग्रहणी पुनराधारनाडी, तदुक्तम्—"अग्न्यधिष्ठानमन्नस्य ग्रहणाद्ग्रहणी मता" इति । अजीर्णवदुपाचरेदिति ।—आमाजीर्णवत् यथा बुभुक्षानुपवासो दीपनपाचनौषधम्, तदित्यर्थः । अतीसारोक्तविधिनेति ।—लङ्घनपञ्चमूलपाचनादिना ॥ १ ॥

शरीरानुगत इत्यादि ।—चरकस्य । शरीरानुगते शरीरव्यापके । "सामे रसे" इति आमयुक्तोऽत्र रसप्रधानः, तेन आमरसस्याभिहितस्य ग्रहणम् । एवं दृष्टाकार रसे । विशुद्धामाशयायेति ।—वमनविरेचनलङ्घनैर्यथायोग्यतया निर्हृतामदोषाय ॥ २ ॥

कपित्थेत्यादि ।—चरकस्य । कपित्थबिल्वयोः फलम्, दाडिमफलस्य तु त्वक्,

धान्यकातिविषोदीच्य-यमानीमुस्तनागरम्।
बला-द्विपर्णीबिल्वञ्च दद्याद्दीपनपाचनम् ॥ ६ ॥

चित्रकाद्य गुडिका।—चित्रकं पिप्पलीमूलं द्वौ क्षारौ लवणानि च।
व्योषहिङ्ग्वजमोदाञ्च चव्यञ्चैकत्र चूर्णयेत् ॥
गुडिका मातुलुङ्गस्य दाड़िमस्य रसेन वा।
कृता विपाचयत्यामं दीपयत्याशु चानलम् ॥
सौवर्चलं सैन्धवञ्च विड़मौद्भिदमेव च।
सामुद्रेण समं पञ्च लवणान्यत्र योजयेत् ॥ ७ ॥

श्रीफलादिः।

श्रीफलशलाटुकल्को नागरचूर्णेन मिश्रितः सगुड़ः।
ग्रहणीगदमत्युग्रं तक्रभुजा शीलितो जयति ॥ ८ ॥

पथ्यपक्ष्म।—जम्बूटाड़िमशृङ्गाट-पाठाकञ्चटपल्लवैः।
पक्वं पर्य्युषितं बाल-बिल्वं सगुड़नागरम्।
हन्ति सर्वानतीसारान् ग्रहणीमतिदुस्तराम् ॥ ९ ॥

---

धान्यकेत्यादियोग स्पष्टः ॥ ६ ॥

चित्रकमित्यादि।—चरकस्य। अत्र कपिलमातिकरणञ्च-व्याख्यात् केचिन्नैतच-मयमिच्छन्ति, तत्र,—"षट्पि [illegible] द्वौ क्षारौ मरिच पञ्चकोलकम्। दीप्यकं हिङ्गु गुडिका बीजपूरकसे कृता। कोलदाड़िमतोये वा पर्दं पाचन-दीपनी॥" इति वाग्भटवचनात्। अत एव चक्रोऽप्याह, सौवर्चलमित्यादि।—चौड़िद शाम्बरिमवचम्, मुक्तादिवैश्यम्। सामुद्रक करकचम्। गुडिकैग्रमाद्रैकरसेनापि योज्या, वाग्भटमारदर्शनात् ॥ ७ ॥

श्रीफलेत्यादि। नागरचूर्णं कटुत्वमात्रकम्। सगुड इति समगुड़ं। अत्रं शीलो वति स्यात्. ॥ ८ ॥

जम्बूदाड़िमेत्यादि।—एषां पल्लवैरामलच कृत्वा चतुष्पञ्च जलं दत्त्वा बाल-बिल्वमुन्मेदं पर्य्युषितं कार्य्यम्। सगुडनागरमिति।—त्रिभागो गुड, नागरचूर्णन्तु कटुत्वमात्रकारकम्। पक्वे तु नागरं न देयम्। जम्बादिमध्येवञ्चचतुर्भिरित्याहुः ॥ ९ ॥

नागरातिविषामुस्त-क्वाथः स्यादामपाचनः ।
चूर्णं हिङ्ग्वष्टकं वात-ग्रहण्यान्तु घृतानि च ॥ १० ॥

नागराद्यं चूर्णम्—

नागरातिविषामुस्तं धातकीं सरसाञ्जनम् ।
वत्सकत्वक्फलं विल्वं पाठां कटुकरोहिणीम् ॥
पिबेत् समांशं तच्चूर्णं मधौद्रेः तण्डुलाम्बुना ।
पैत्तिके ग्रहणीदोषे रक्तं यच्चोपवेश्यते ॥
अर्शांस्यथ गुदे शूलं जयेच्चैव प्रवाहिकाम् ।
नागराद्यमिदं चूर्णं कृष्णात्रेयेण पूजितम् ॥
शीतकषायमानेन तण्डुलोदककल्पना ।
केऽप्यष्टगुणतोयेन प्राहुस्तण्डुलभावनाम् ॥ ११ ॥

भूनिम्बाद्यं चूर्णम्—

भूनिम्बकटुकाव्योष-मुस्तकेन्द्रयवान् समान् ।
द्वौ चित्रकाद् वत्सकत्वग्भागान् षोडश चूर्णयेत् ॥
गुडशीताम्बुना पीतं ग्रहणीदोषगुल्मनुत् ।

---

नागरेत्यादि स्पष्टम् । हिङ्ग्वष्टकमग्निमान्द्ये वक्ष्यमाणम् ॥ १० ॥

नागराद्यचूर्णे मधौद्रमिति मधुप्रक्षेपयुक्तम् । कृष्णात्रेयः पुनर्वसुः । तण्डु-लाम्बुनेत्यादि ।—तण्डुलाम्बुना तण्डुलधावनाम्बुना । तच्च तण्डुलाम्बु कथं कर्त्तव्यम् ? इति जिज्ञासायां स्वमतं वृन्दमतञ्चोपन्यस्यति शीतकषायमानेनेत्यादि ।—शीतकषायविधानञ्च—"षण्मुखाभसि सृष्टं शीतमाहुश्चिकित्सकाः" इति । तन्मतं तण्डुलस्येन्न षड्गुणं ग्राह्यम् । उक्तं हि—"षड्भिः पलैश्चतुर्भिर्वा सलिलाद्धौत काष्ठयोः" इति । वृन्दमतमाह, केऽपीत्यादि ।—अन्ये तु द्विगुणमम्बु तण्डुलेन समं विरचितं तण्डुलाम्बु वदन्ति । अपरे तु अनियततण्डुलकनियतजलेन प्रक्षाल्य जलं गृह्णन्ति ॥ ११ ॥

भूनिम्बेत्यादि ।—द्वौ चित्रकात् तथा वत्सकत्वग्भागान् षोडशेति प्रथमभागा-पेक्षया द्विभागषोडशभागपरिग्रहः । गुडयुक्तं शीताम्बु; गुडशीताम्बु गुडयत

कामलाज्वरपाण्डुत्व-मेहारुच्यतिसारनुत् ।
गुडयोगाद् गुडाख्य स्याद् गुडवर्णरसान्वितम् ॥ १२ ॥
ग्रहण्यां श्लेष्मदुष्टायां वमितस्य यथाविधि ।
कट्वम्ललवणक्षारैस्तीक्ष्णैश्चाग्निं विवर्द्धयेत् ॥ १३ ॥
समूलां पिप्पलीं क्षारौ द्वौ पञ्च लवणानि च ।
मातुलुङ्गाभयारास्ना-शटीमरिचनागरम् ।
कृत्वा समांशं तच्चूर्णं पिबेत् प्रातः सुखाम्बुना ॥
श्लैष्मिके ग्रहणीदोषे बलवर्णाग्निवर्द्धनम् ।
एतैर्वौषधैः सिद्धं सर्पिः पेयं समारुते ॥ १४ ॥

भल्लातकक्षारः ।

भल्लातकं त्रिकटुकं त्रिफला लवणत्रयम् ।
अन्तर्धूमं द्विपलिकं गोपुरीषाग्निना दहेत् ॥
स क्षारः सर्पिषा पेयो भोज्ये वाप्यवचारितः ।
हृत्पाण्डुग्रहणीदोष-गुल्मोदावर्त्तशूलनुत् ॥ १५ ॥
सर्वजायां ग्रहण्यान्तु सामान्यो विधिरिष्यते ॥ १६ ॥

---

गुडवर्णतामाधुर्य्यापादनको देय इत्याह, गुडयोगादित्यादि ।—वैद्यप्रसारके तु—सर्वचूर्णसमो गुडः, शीतलजलेन च पानमित्युक्तम् । व्यवहारस्तु पूर्ववैव । पैत्तिकग्रहण्यां रक्तपित्तचिकित्सितमपि बोध्यम् । तदुक्तं वैद्यप्रदीपे—"यच्चपित्तहितं यच्च पानभोजनभेषजम् । पैत्तिके ग्रहणीदोषे तत्सर्वमुपकल्पयेत् ॥" इति ॥ १२ ॥

ग्रहण्यामित्यादि स्पष्टम् ॥ १३ ॥

समूलामित्यादि । मातुलुङ्गस्यात्र मूलम् । एतैरिति ।—पिप्पलीमूलादिभिः कल्कैः ॥ १४ ॥

भल्लातकमित्यादि ।—चरकस्य । गोपुरीषाग्निनेति ।—अचिन्त्यप्रभावात् प्रयोगमाहात्म्यमिति । स क्षार इति ।—भल्लातकादीनामन्तर्धूमदाहात् यः क्षारः स एव सर्पिषा पेयः । भोज्ये व्यञ्जने वा स क्षारो देयः ॥ १५ ॥

सर्वजायामित्यादि ।—सामान्यो विधिरिति ।—प्रत्येकदोषोक्तचिकित्सामिलनेन त्रिदोषग्रहणीचिकित्सा कर्त्तव्या ॥ १६ ॥

चूर्णं मरिचमहौषधकुटजत्वग्भवं क्रमाद्द्विगुणम् ।
गुडमिश्रमथितपीतं ग्रहणीदोषापहं ख्यातम् ॥ १७ ॥

पाठाद्यं चूर्णम् ।

पाठाबिल्वानलव्योष-जम्बूदाडिमधातकी ।
कटुकातिविषामुस्त-दार्वीभूनिम्बवत्सकैः ॥
सर्वैरेतैः समं चूर्णं कौटजं तण्डुलाम्बुना ।
सक्षौद्रञ्च पिबेच्छर्दि-ज्वरातिसारशूलवान् ।
हृद्दाहग्रहणीदोषारोचकानलसादजित् ॥ १८ ॥

कपित्थाष्टकचूर्णम् ।

यमानीपिप्पलीमूल-चातुर्जातकनागरैः ।
मरिचाग्निजलाजाजी-धान्यसौवर्चलैः समैः ॥
वृक्षाम्लधातकीकृष्णा-बिल्वदाडिमतिन्दुकैः ।
त्रिगुणैः षड्गुणसितैः कपित्थाष्टगुणैः कृतः ॥

---

चूर्णमित्यादि । गुडमिश्रमथिताभ्यां पीतमित्यर्थः ॥ १७ ॥

पाठादिचूर्णे जम्बूफलास्थि, एतत्साहचर्यात् दाडिमफलस्यापि बीजम् । वत्सक इन्द्रयवः ॥ १८ ॥

यमानीत्यादि ।—अयं योगो वाग्भटे अतीसारचिकित्सिते लिखितः । अग्निश्चित्रकः, जलं बालकम् । समैरिति समभागैः । वृक्षाम्लं महार्द्रकम् । त्रिगुणैरिति ।—एकभागापेक्षया वृक्षाम्लादीनां पञ्चानां प्रत्येकं त्रिगुणत्वम् । षड्गुणसितैः कपित्थाष्टगुणैः कृत इति सिताकपित्थयोरपि षड्गुणाष्टगुणत्वे एकगुणापेक्षयैव, एतैः कृतश्चूर्ण इति योज्यम् । अरुणदत्तस्तु वाग्भटटीकायां षड्गुणसितैरिति पदं वृक्षाम्लादितिन्दुकान्तानां विशेषणं व्याख्याय मिलितवृक्षाम्लादिद्रव्यषट्कापेक्षया सितायाः षड्गुणत्वमाह । तथा सति सिताभागानां शतमष्टाधिकं भवति । अन्ये तु—षड्गुणसिते कपित्थाष्टगुणे इति पठन्ति, व्याख्यानयन्ति च—"एकभागापेक्षया कपित्थस्याष्टगुणत्वम्, अष्टगुणकपित्थापेक्षया च सितायाः षड्गुणत्वम्" इति ; तथा सति सिताया अष्टचत्वारिंशद्भागा भवन्तीति । अपरे तु—"षड्गुणसिते कपित्थाष्टगुणीकृते इति चूर्णविशेषणं

चूर्णोऽतीसारग्रहणी-क्षयगुल्मगलामयान्।
कासश्वासाग्निसादार्शः-पीनसारोचकान् जयेत्॥ १९॥

दाड़िमाष्टकः।

कर्पूरश्मिता तुगाक्षीरी चातुर्जातं द्विकार्षिकम्।
यमानीधान्यकाजाजी-ग्रन्थिव्योषं पलांशिकम्॥
पलानि दाड़िमादष्टौ सितायाश्चैकतः क्षतः।
गुणैः कपित्थाष्टकवच्चूर्णोऽयं दाड़िमाष्टकः॥ २०॥

वार्त्ताकुगुड़िका।

चतुष्पलं सुधाकाण्डात् त्रिपलं लवणत्रयात्।
वार्त्ताकुकुडवश्चार्कादष्टौ द्वे चित्रकात् पले॥
दग्ध्वा रसेन वार्त्ताकोर्गुड़िका भोजनोत्तराः।
भुक्तं भुक्तं पचन्त्याशु कासश्वासार्शसां हिताः।
विसूचिकाप्रतिश्याय-हृद्रोगशमनाश्च ताः॥ २१॥

---

कृत्वा समुदितचूर्णापेक्षया विकाशिकाशि षड्गुणात्गुणत्वं स्यात्। तत्रत्वात्-त्रयमपि न व्यवहारसिद्धं, सर्वत्राग्निसोतेनिवृत्यादिति। तस्मादेकभागापेक्षयैव षड्गुणात्गुणत्वमिति। कपित्थभागाधिक्यादस्य कपित्थाष्टक इति संज्ञा॥ १९॥

कर्पूरेत्यादि।—वाग्भटस्य। तुगाक्षीरी वंशलोचना, चातुर्जातं त्वगेला-पत्रकेशरम्। द्विकार्षिकमिति प्रत्येकं, निर्देशस्य द्रव्यप्रधानत्वात्। एवं यमान्यादिकमपि प्रत्येकं पलांशिकम्। ग्रन्थिकं पिप्पलीमूलम्, दाड़िमस्यात्र फलम्,—"फलम् दाड़िमादीनाम्" इत्युक्तेः। एवमन्यत्रापि। चकारात् सितया चाष्टौ पलानि॥ २०॥

चतुष्पलमित्यादि।—वाग्भटस्य। त्रिपलं लवणत्रयादिति मिलित्वा, निर्देशस्य मानप्रधानत्वात्। त्रिकत्रा लवणानि चेति ये पठन्ति, ते त्रिकटुलवणत्रयं मिलित्वा चतुष्पलं वदन्ति, पूर्वोक्तचतुष्पलमित्यस्यापि मध्यपात्; तदयाचिदेरयात् पठेदेवात्र। वार्त्ताकुकुडव इति।—कुडवं वार्त्ताकुफलचतुष्टयं, व्यवहारात्। चत्वारि विति चर्वणात्। दध्ना रसेन वार्त्ताकोरिति।—चतुर्भिं दध्ना स्थाल्याद्य वार्त्ताकु-

अष्टपलं घृतम्।

व्योषत्रिफलाकल्के विल्वमात्रे गुडात् पले।
सर्पिषोऽष्टपलं पक्त्वा मात्रां मन्दानलः पिबेत् ॥ २२ ॥

विल्वगर्भघृतम्।—मसूरस्य कषायेण विल्वगर्भं पचेद्घृतम्।
हन्ति कुक्ष्यामयान् सर्वान् ग्रहणीपाण्डुकामलाः।
केवलं श्रीहिमाषाख्य-क्वाथो व्युष्टस्तु दोषलः ॥ २३ ॥

शुण्ठीघृतम्।—विश्वौषधस्य गर्भेण दशमूलजले शृतम्।
घृतं निहन्याच्छ्वयथुं ग्रहणीसामतामयम् ॥ २४ ॥

नागरघृतम्।—घृतं नागरकल्केन सिद्धं वातानुलोमनम्।
ग्रहणीपाण्डुरोगघ्नं प्लीहकासज्वरापहम् ॥ २५ ॥

---

रसेन गुडिकाः कार्या इत्यर्थः। दध्यानि वार्ताकुरस इति च पाठः। भोजनात् परा इति।—भोजनमुत्तरं पश्चात्कालीनं यासां तथा, किंवा भोजनादुत्तराः। भुक्ता भुक्तं पचनीत्यत्र भुक्तं भुक्तमित्यपि पाठः ॥ २१ ॥

व्योषेत्यादौ।—विल्वमात्र इति षड्भिर्मिलित्वा पलमात्रं, कल्कस्य पादिक त्वात्। चतुर्गुणजलेनाष्टपलघृतस्याव पाकः। इत्यमेव मन्दानलस्यस्य भव-तीति महर्षिवचनादुन्नीयते। मात्रामिति।—वह्निबलानुरूपपरिमाणम् ॥ २२ ॥

मसूरस्येत्यादि।—मसूरस्य क्वाथोऽत्यन्तसिद्धिमपेक्षितं बहु कार्यः। एवं माषकुलत्थादीनामपि। विल्वगर्भमिति।—विल्वशलाटुकल्कम्। घृतमत्र प्रस्थमानमेव। श्रीहिमाषक्वाथस्य गदहृत्कार्यतामाह, केवलमित्यादि।—अन्यद्रव्यं शाकादिमानम्। केवलमिति पाठे—केवलं समयं यथा स्यात् तथा व्युष्टं पर्युषितं दोषलं, यावता कालेन व्याप्तीभवति स एव दोषल इत्यर्थः। केवलश्रीहिमाषक्वाथपाठे तु—द्रव्यान्तर-संयुक्तश्रीहादिक्वाथस्य न दोषलत्वमित्याहुः। तत्तु न व्यवहारसिद्धम्, अत एव इष्टं—"श्रीहिमाषयोः क्वाथं व्युषितं दोषलं मतम्" इत्येवोक्तम्। व्युष्टेति पर्युषितमुद्गादिभ्योऽन्—इति सूत्रनिर्देशात् ॥ २३ ॥

विश्वौषधस्येत्यादि।—ग्रहणीसामतामयमिति ग्रहणीगदयान्वितो यः सामताख्य आमयो रोगस्तमित्यर्थः ॥ २४ ॥

घृतमित्यादौ जलं चतुर्गुणम् ॥ २५ ॥

तक्र-कंसासुतं जातं तक्रारिष्टं पिबेन्नरः ।
दीपनं शोथगुल्मार्शःक्रिमिमेहोदरापहम् ॥ ३३ ॥

आ यामकाञ्जिकम् ।

शाल्यस्य दद्याद् यवशक्तुकानां पृथक् पृथक् त्वाढ़कसम्मितञ्च ।
मध्यप्रमाणानि च मूलकानि दद्याच्चतुःषष्टि सुकल्पितानि ॥
द्रोणिद्वयम्भसः प्राप्य घटे सुधौते दद्यादिदं भेषजजातयुक्तम् ।
क्षारद्वयं तुम्बुरु वस्तगन्धा धनीयकं स्याद्विड़सैन्धवञ्च ॥
सौवर्चलं हिङ्गु शिवाटिकाञ्च चव्यञ्च दद्याद्द्विपलप्रमाणम् ।
इमानि चान्यानि पलोन्मितानि विजर्ज्जरीकृत्य घटे क्षिपेच्च ॥
कृष्णामजाजीमुपकुञ्चिकाञ्च तथासुरीं कारविचित्रकञ्च ।
पक्षस्थितोऽयं बलवर्णदेह-वयस्करोऽतीव बलप्रदश्च ॥

आन् जीवयामीति यतः प्रवृत्त-
स्तत्काञ्जिकेति प्रवदन्ति तज्ज्ञाः ।
आ यामकालाज्जरयेच्च भक्त-
मा-यामकेति प्रवदन्ति चैनम् ॥

एकोदरं गुल्ममथ प्लीहानं हृद्रोगमानाहमरोचकञ्च ।
मन्दाग्नितां कोष्ठगतञ्च शूलमर्शोविकारान् सभगन्दरांश्च ।
वातामयानाशु निहन्ति सर्वान् संसेव्यमानं विविधाञ्ज्वराणाम् ॥३४॥

---

तक्रारिष्टे पिप्पल्याद्यं तथा दन्त्यादीन्यपि प्रत्येकं त्र्यंशम् ; तक्रञ्च कंसे आढ़के आसुतं कृतसन्धानम् । जातमिति ।—चक्रपाणिना जातम् ॥ ३३ ॥

आ-यामकाञ्जिके शाल्यस्येति ।—निस्तुषशालितण्डुलस्य, तथा यवशक्तुकानाञ्च पृथक् पृथगाढ़कसम्मितमित्याढ़कप्रमाणम् । मध्यमानीति आर्द्राणि । चतुःषष्टीत्याकृतिमानेन । सुकल्पितानीति खण्डखण्डीकृतानि । आर्द्राण्यार्द्राणि । तुम्बुरु धनिगुडुच्यम्, वस्तगन्धा फोकाम्बी ; शिवाटिका कर्कपर्णी ( विष्णुपर्णी ) ; कृष्णा पिप्पली ; उपकुञ्चिका स्थूलकृष्णजीरकः ; आसुरी राजिका, कारवि सुगन्धि कृष्णजीरकम् । आ यामकालादिति ।—यामः प्रहरस्य, काल., तमवधीकृत्य ॥३४॥

कल्याणगुड़ः।

प्रस्थत्रयेणामलकीरसस्य शुद्धस्य दत्त्वार्द्धतुलां गुड़स्य।
चूर्णीकृतैर्ग्रन्थिकजीरचव्य-व्योषेभकृष्णाह्वयपाजमोदैः॥
विड़ङ्गसिन्धुत्रिफला-यमानी-पाठाग्निधान्यैश्च पलप्रमाणैः।
दत्त्वा त्रिवृच्चूर्णपलानि चाष्टावष्टौ च तैलस्य पचेद् यथावत्॥
तं भक्षयेदक्षफलप्रमाणं यथेष्टचेष्टं त्रिसुगन्धियुक्तम्।
अनेन सर्वे ग्रहणीविकाराः सश्वासकासस्वरभेदशोथाः॥
शाम्यन्ति चायं चिरमन्थराग्नेर्हितस्य पुंस्त्वस्य च वृद्धिहेतुः।
स्त्रीणाञ्च वन्ध्यामयनाशनोऽयं कल्याणको नाम गुड़ः प्रदिष्टः॥
तैले मनाग् भर्जयन्ति त्रिवृतञ्च चिकित्सकाः।
अनुक्तमानसाधर्म्यात् त्रिसुगन्धि पलं पृथक्॥ १५॥

कुष्माण्डगुड़कल्याणकः।

कुष्माण्डकानां रूढ़ानां सुस्विन्नं निष्कुलत्वचाम्।
सर्पिःप्रस्थे पलशतं ताम्रभाण्डे शनैः पचेत्॥
पिप्पली पिप्पलीमूलं चित्रको हस्तिपिप्पली।
धान्यकानि विड़ङ्गानि यमानी मरिचानि च॥

---

प्रस्थत्रयेणेत्यादि।—अयं योगः सुश्रुते कल्याणगुड़नाम्ना पठितः। अत्र ग्रन्थिकं पिप्पलीमूलम्, अजमोदा यमानी, यमानीपरिमाणमत्वात्, अतो यमान्या भागद्वयम्। अग्निश्चित्रकः। पलप्रमाणैरिति।—प्रत्येकम्। त्रिवृच्चूर्णं तैले मनाग्भर्जनीयम्; भर्जनेन च तस्य मन्दवीर्यत्वादतिविरेचकत्वं न भवति। अक्षफलप्रमाणं कर्षम्; व्यवहारस्तु चतुःपलमात्रकेति। त्रिसुगन्धि त्वगेलापत्रकम्। त्रिवृच्चूर्णमर्दित एव तैले गुड़ामलकीरसयोर्मिश्रं प्रदाय पाकः, सिद्धे च शीते पिप्पल्यादिचूर्णप्रक्षेप इति व्यवहारो वैद्यानाम्। अनुक्तमानसाधर्म्यादिति।—पिप्पल्यादिचूर्णस्य प्रत्येकं पलमानमुक्तं, तत्साधर्म्यादित्यर्थः॥ १५॥

कुष्माण्डकानामित्यादि।—रूढ़ानामिति।—सम्यक्पक्वानाम्, सम्यक्पाकस्य मत मृदुगात्रतैलमेव भवतीति। तादृशस्य कुष्माण्डस्य स्वल्पत्वोक्ततस्तु तत्रैव

त्रिफला चाजमोदा च कलिङ्गाजाजिसैन्धवम्॥
एकैकस्य पलञ्चैव त्रिवृदष्टपलं भवेत्।
तैलस्य च पलान्यष्टौ गुड़पञ्चाशदेव तु॥
प्रस्थैस्त्रिभिः समेतन्तु रसेनामलकस्य तु।
यदा दर्वीप्रलेपस्तु तदैनमवतारयेत्॥
यथाशक्ति गुड़ान् कुर्य्यात् कर्षकर्षार्द्धमानकान्।
अनेन विधिना चैव प्रयुक्तस्तु जयेदिमान्॥
प्रसह्य ग्रहणीरोगान् कुष्ठान्यर्शोभगन्दरान्।
ज्वरमानाहहृद्रोग-गुल्मोदरविसूचिकाः॥
कामलापाण्डुरोगांश्च प्रमेहांश्चैव विंशतिम्।
वातशोणितवीसर्पान् दद्रुचर्मदलीमकान्।
कफपित्तानिलान् सर्वान् प्ररूढ़ांश्च व्यपोहति॥
व्याधिक्षीणा वयःक्षीणाः स्त्रीषु क्षीणाश्च ये नराः।
तेषां हृष्यश्च वल्यश्च वयःस्थापन एव च।
गुड़कल्याणको नाम वन्ध्यानां गर्भदः परः॥ ३६॥

रसपर्पटिका।

याम्यपित्ते विधातव्या गुड़िका च सुधावती।
तत्र प्रोक्तविधाशुद्धौ समानौ रसगन्धकौ॥
मन्मदं कज्जलाभन्तु कुर्य्यात् याम्ये दृढ़ाश्मये।

---

भल्लातकफलस्य त्वचामात्ररसस्य किञ्चित् पानीयं दत्त्वा सन्निवेश्य निष्पीड्य गलितरसस्य पिष्टस्यातपे किञ्चिच्छुष्कस्य पलाष्टकं ग्राह्यम्; ततश्च घृतस्याष्टपले तैलस्य चाष्टपले समानं कार्यम्। तत आमलकरसस्य द्वादशशरावैः पञ्चाशद्गुडपलान्यालोड्य, ततः पूत्वा भल्लातकरसादिकमेकीकृत्य पक्तव्यम्। ततो गुडपाकविधया अवतारिते पिप्पल्यादिचूर्णस्य प्रक्षेपः कर्तव्यः। भक्षणमात्रा न प्राय. कर्षार्द्धेनेत्याहुः॥ ३६॥

सिद्धफलां रसपर्पटीमाह, याम्येत्यादि।—तयेति।—तत्र सुधावत्यां या विधा यो

तती बादरवह्निस्थ-लौहपात्रे द्रवीकृतम्॥
गोमयोपरि विन्यस्त-कदलीपत्रपातनात्।
कुर्य्यात् पर्पटिकाकारमस्य रक्तिद्वयं क्रमात्॥
द्वादशरक्तिकां यावत् प्रयोगः प्रहरार्द्धतः।
तदूर्द्ध्वं वहुपूगस्य भक्षणं दिवसे पुनः॥
तृतीय एव मांसाज्य-दुग्धाद्यत्र विधीयते॥
वर्ज्यं विदाहि-स्त्री-रम्भा-मूलं तैलञ्च सार्षपम्।
षड्ङ्गमत्स्याम्बुज-खगांस्यक्तोचिद्रः पयः पिबेत्॥
ग्रहणीक्षयकुष्ठार्शः-शोथाजीर्णविनाशिनी।
रसपर्पटिका ख्याता निबद्धा चक्रपाणिना॥ १७॥




ताम्रयोगः।

स्थाल्यां सम्मर्द्य दातव्यौ माषिकौ रसगन्धकौ।
नखक्षुसं तदुपरि तण्डुलीयं द्विमाषिकम्॥
ततो नैपालताम्रादि पिधाय सुकरालितम्।

---

रसगन्धकयुक्तिप्रकारो वक्तव्यः, तेन शुद्धाविव्यर्थः। तत्र सगन्धकं रसं दृढायसे खल्लशिलायां सम्मर्द्य कज्जलाभं चूर्णं कुर्यात्। बादरवह्निस्थेति।—बदरदारुसम्भूताग्निस्थं द्रवत्। शुद्धपारदकर्ष १, शुद्धगन्धककर्ष १, एतद्द्वयं खल्ले लौहदण्डेन पाषाणदण्डेन वा, यावत् कज्जलाभं भवति। ततो लौहदर्व्विकायामेतच्चूर्णं दत्त्वा बदराङ्गारोपरि विन्यस्य लौहदण्डेन चालयेत् यदा द्रवीभूतं भवति, तदा आर्द्रगोमयपिण्डोपरिस्थापितकोमलकदलीपत्रे ढालनीयम्, अपरकदलीपत्रान्तरेण आर्द्रगोमयपिण्डेन पर्पटिकाकृतिः कार्या। रक्तिद्वयं क्रमादिति।—प्रथमं गुञ्जायुग्मं, प्रतिदिनमेकैकवृद्धितो भक्ष्यमिति क्रमादित्यस्यार्थः। पर्णे कृत्वा अथवा हिङ्गुगुञ्जा मिता जीरकगुञ्जाद्वयञ्च भक्षणीयम्। ततः पर्णं खादित्वा दन्तादिलग्नं प्रक्षाल्य जलचुलुक पानमित्युपदेशः। प्रहरार्द्धत इति।—प्रहरार्द्धाभ्यन्तरे। तदूर्द्ध्वमिति।—प्रहरार्द्धोर्द्ध्वम्, तृतीये दिवसे इति सम्बन्धः॥ १७॥

ताम्रयोगमाह, स्थाल्यामित्यादि। यद्यपि रसगन्धकौ गुञ्जावृद्धिगुडिकोक्त-

# अथार्शश्चिकित्सा ।

दुर्नाम्नां साधनोपायश्चतुर्धा परिकीर्त्तितः ।
भेषजक्षारशस्त्राग्नि-साध्यत्वादाद्य उच्यते ॥
यद्वायोरानुलोम्याय यदग्निबलवृद्धये ।
अन्नपानौषधद्रव्यं तत् सेव्यं नित्यमर्शसैः ॥
शुष्कार्शसां प्रलेपादि-क्रिया तीक्ष्णा विधीयते ।
स्राविणां रक्तमालोक्य क्रिया कार्य्यास्रपैत्तिकी ॥ १ ॥
प्रलेपमाह—स्नुक्क्षीरं रजनीयुक्तं लेपाद् दुर्नामनाशनम् ।
कोशातकीरजोघर्षान्निपतन्ति गुदोद्भवाः ॥ २ ॥
अर्कक्षीरं सुधाक्षीरं तिक्ततुम्ब्याश्च पल्लवाः ।
करञ्जो वस्तमूत्रञ्च लेपनं श्रेष्ठमर्शसाम् ॥ ३ ॥

---

रक्ताक्षी यथा—"मुक्ताफलसम स्निग्धं घनं निष्पटलं गुरु । चपलं चपलं ज्ञान वदन्ति भिषजा नरा ॥" चपलमिति रक्षं, द्वितीयं चपलमिति चञ्चलम् । "शुक-पिच्छसमच्छायो नवनीतसमप्रभ । मसृणः कठिन, स्निग्ध शङ्खो गम्भक उच्यते ॥" घृतमाक्षरसादीनामाहारविधिर्बोध्यः ॥ १८ ॥

इति ग्रहणी-चिकित्सा ।

---

पूर्वोक्तसम्बन्धेन ग्रहण्यनन्तरमर्शश्चिकित्सितमुच्यते दुर्नाम्नामित्यादि ।—साध्यन्ते ।—भेषजोपायः । विस्तरेण यथामात्रा चिकित्सा क्षारोऽग्निरेवाह, यद्वायो-रित्यादि ।—चरकस्य । अर्शसैरित्यर्शोरोगयुक्तैः । शुष्कार्शसामित्यादि ।—आदिशब्दात् स्वेदादीनां ग्रहणम् ॥ १ ॥

लेपादीनाह, स्नुक्क्षीरमित्यादि ।—स्नुहीक्षीरेण हरिद्राचूर्णमार्द्रं कृत्वा लेपः । उक्तं हि वाग्भटे—"स्नुक्क्षीरार्द्रनिशालेप" इति । कोशातकी घोषकः ॥ २ ॥

अर्केत्यादी ।—अर्कस्य त्वक् । सुधाक्षीरमित्यत्र सुधाकाण्डमर्के वाग्भटे च दृश्यते ॥ ३ ॥

अर्शोघ्नी गुदगा वर्त्तिर्गुड़घोषाफलोद्भवा ।
ज्योत्स्निकामूलकल्केन लेपो रक्तार्शसां हितः ॥ ४ ॥
तुम्बीबीजं सौद्भिदन्तु काञ्जीपिष्टं गुडीत्रयम् ।
अर्शोहरं गुदस्थं स्याद्दधि माहिषमश्नतः ॥ ५ ॥
महाबोधिप्रदेशस्य पथ्या कोषातकीरजः ।
कफेन लेपतो हन्ति लिङ्गवर्त्तिमसंशयम् ॥ ६ ॥
अपामार्गाङ्घ्रिजः क्षारो हरितालेन संयुतः ।
लेपनं लिङ्गसम्भूतमर्शो नाशयति ध्रुवम् ॥
वातातीसारवद्भिन्नवर्चांस्यर्शांस्युपाचरेत् ।
उदावर्त्तविधानेन गाढ़विट्कानि चासकृत् ॥ ७ ॥
विड्विबन्धे हितं तक्रं यमानीविड़संयुतम् ।
वातश्लेष्मार्शसां तक्रात् परं नास्तीह भेषजम् ॥
तत् प्रयोज्यं यथादोषं सस्नेहं रूक्षमेव वा ।
न विरोहन्ति गुदजाः पुनस्तक्रसमाहताः ॥ ८ ॥
त्वचं चित्रकमूलस्य पिष्ट्वा कुम्भं प्रलेपयेत् ।
तक्रं वा दधि वा तत्र जातमर्शोहरं पिबेत् ॥ ९ ॥

---

वर्त्तिः फलवर्त्तिः । गुडं जलेन द्रवीकृत्य घोषकफलचूर्णं प्रक्षिप्य पक्त्वा वर्त्तिं कार्या । ज्योत्स्निका घोषकः ॥ ४ ॥

सद्भिदमुत्कारिकालवणं शाम्बरिलवणं वा ॥ ५ ॥

महाबोधिप्रदेशस्येति ।—महाबोधिर्मगधे प्रसिद्धः । पथ्या हरीतकी । कफेन श्लेष्मणा ; समुद्रफेनेनेत्यन्ये, उदधि-कफत्वादिति भावः । सुदृढयोगत्वात् पूर्वंव्याख्या मान्या । लिङ्गवर्त्तिर्लिङ्गार्शः ॥ ६ ॥

अपामार्गेत्यादि स्पष्टम् । वातातीसारवदिति ।—वातातीसारचिकित्सया ॥ ७ ॥

विड् विबन्ध इत्यादि स्पष्टम् । वातश्लेष्मार्शसामित्यादि—चरकस्य ॥ ८ ॥

त्वचमित्यादि—सर्वैव । चित्रकमूलत्वचं पिष्ट्वा तिष्ठोनसेधसाव: कुम्भगर्भे देयो देय ॥ ९ ॥

पित्तश्लेष्मप्रशमनी कच्छूकण्डूरुजापहा ।
गुदजान् नाशयत्याशु योजिता सगुड़ाभया ॥
सगुड़ां पिप्पलीयुक्तामभयां घृतभर्जिताम् ।
त्रिवृद्दन्तियुतां वापि भक्षयेदानुलोमिकाम् ॥ १० ॥
तिलारुष्करसंयोगं भक्षयेदग्निवर्द्धनम् ।
कुष्ठरोगहरं श्रेष्ठमर्शसां नाशनं परम् ॥
तिलभल्लातकं पथ्या गुड़श्चेति समांशिकम् ।
दुर्नामकासश्वासघ्नं प्लीहपाण्डुज्वरापहम् ॥ ११ ॥
गोमूत्रव्युषितां दद्यात् सगुड़ां वा हरीतकीम् ।
पञ्चकोलकयुक्तं वा तक्रमर्शः प्रदापयेत् ॥ १२ ॥
म्रक्षितं शौरणं कन्दं पक्वाग्नौ पुटपाकवत् ।
अद्यात् सतैललवणं दुर्नामविनिवृत्तये ॥ १३ ॥
स्विन्नं वार्त्ताकुफलं घोषायाः क्षारजेन सलिलेन ।
तद्घृतभृष्टं युक्तं गुड़ेन वा तृप्तितो योऽत्ति ॥

---

गुदजानित्यत्र नाशयेदिति शेषः, तेन पुंलिङ्गता उपपन्ना। सगुड़ामित्यादि ष्टम ॥ १० ॥

तिलारुष्करेत्यादि।—संयुज्यते प्रयुज्यतेऽयमिति संयोगः प्रयोग एव। अन्ये तु तिलारुष्करयोः संयोगो योगेत्याहुः ॥ ११ ॥

गोमूत्रव्युषितामित्यादि।—चरकस्य। रात्रौ गोमूत्रस्थितामिति चक्रः। सगुड़ामित्ययमेको योगः। वाशब्दः पूर्वयोगापेक्षया; चरके हि—"सगुड़ामभयां वाऽथ प्राशयेत् पौर्वभक्तिकीम्" इत्यभिधाय तदनन्तरमयं योग उक्तः, अतो भिन्नयोगत्वेन न पौनरुक्त्यं स्यादिति। एतेन गोमूत्रव्युषितामिति प्रयोगानुरोधात् पुनरपि तन्त्रान्तरीयगुड़हरीतकीविधिनेति निरस्तेनोक्तमसङ्गतं, योगद्वयस्यैव चरकोक्तत्वात् इति। पञ्चकोलयुक्तमिति।—पञ्चकोलचूर्णयुक्तम् ॥ १२ ॥

म्रक्षितमित्यादि।—वाग्भटस्य। शौरणं कन्दमिति ओलयुक्तमूलम्, एवं सर्वतोऽर्शसि, तदभावे माण्यकस्योऽपीत्यन्ये ॥ १३ ॥

पिबन्ति च तक्रं नूनं तस्याखेवातिवृद्धगुदजानि ।
यान्ति विनाशं पुंसां सहजान्यपि समरात्रेण ॥ १४ ॥
असितानां तिलानां प्राक् प्रकुञ्चं शीतवार्य्यनु ।
खादतोऽर्शांसि नश्यन्ति द्विजदार्ढ्याङ्गपुष्टिदम् ॥ १५ ॥
दन्त्यरिष्टम्—दन्तीचित्रकमूलानामुभयोः पञ्चमूलयोः ।
भागान् पलांशानापोथ्य जलद्रोणे विपाचयेत् ।
त्रिपलं त्रिफलायाश्च दलानां तत्र दापयेत् ॥
रसे चतुर्थशेषे तु पूतशीते प्रदापयेत् ।
तुलां गुडस्य तत् तिष्ठेन्मासार्द्धं घृतभाजने ॥
तन्मात्रया पिबेन्नित्यमर्शोभ्यो विप्रमुच्यते ।
ग्रहणीपाण्डुरोगघ्नं वातवर्चोऽनुलोमनम् ।
दीपनञ्चारुचिघ्नञ्च दन्त्यरिष्टमिदं विदुः ॥
पात्रेऽरिष्टादिसन्धानं धातकीलोध्रलेपिते ॥ १६ ॥
मनागरारुष्करहृद्दारकं गुडेन यो मोदकमत्यदारकम् ।
अशेषदुर्नामकरोगदारकं करोति वृद्धं सहसैव दारकम् ।

---

पिबन्तीत्यादि।—चीवकचारोदकेन षड्गुणैकविंशतिवारपरिस्रुतेन जनुवंश घृते भक्षा भक्तपण्डेन संयोज्य भक्षयेदिति ॥ १४ ॥

असितानामित्यादि।—तिलानां प्रकुञ्चं पलं, प्राक् खादतः अनु पश्चाच्छीतं वारि पिबत इति योज्यम्। द्विजदार्ढ्यं दन्तदार्ढ्यम् ॥ १५ ॥

दन्तीत्यादि।—चरकस्य। अत्र उभयोरितिवचनबलात् पञ्चमूलयोः प्रत्येकं भागाः ग्राह्याः; "त्रिपलं त्रिफलायाः" इत्यत्र तु निर्देशस्य मानप्रधानत्वात् मिलित-त्रिफलाया एव पलत्रयं ग्राह्यम्। मासार्द्धमिति।—तन्त्रान्तरे तु मासमित्युक्तं, यथा—"त्रिफलादन्तीमूलादिनिर्यूथानां पलं पलम्। कार्षिकदोषे स्थितः पादशेषो गुडतुलायुतः। धान्यराशौ स्थितो मासं दन्त्यरिष्टो निषेवितः॥" इति; उभयमपि प्रमाणं श्रुतिद्वैधवत् ॥ १६ ॥

मनागरेत्यादि।—अरुष्करं भल्लातकम्। उदरमिव चकारान्तमिति ईषः।

विषमज्वरे च मन्देऽग्नौ पाण्डुरोगे तथैव च ॥
क्रिमिहृद्रोगिणाञ्चैव गुल्मशूलार्त्तिनां तथा ।
श्वासकासपरीतानामेषा स्यादमृतोपमा ॥
शुण्ठ्याः स्थानेऽभया देया विड्ग्रहे पित्तवायुजे ॥
प्राणदेयं सितां दत्त्वा चूर्णमानाच्चतुर्गुणाम् ।
अम्लपित्ताग्निमान्द्यादौ प्रयोज्या गुदजातुरे ॥
अनुपानं प्रयोक्तव्यं व्याधौ श्लेष्मभवे पलम् ।
पलद्वयन्त्वनिलजे पित्तजे तु पलत्रयम् ॥ १८ ॥

काङ्कायनमोदकः ।

पथ्यापञ्चपलान्येकमजाज्या मरिचस्य च ।
पिप्पलीपिप्पलीमूल-चव्य-चित्रकनागराः ॥
पलाभिवृद्धाः क्रमशो यवक्षारपलद्वयम् ।
भल्लातकपलान्यष्टौ कन्दस्तु द्विगुणो मतः ।
द्विगुणेन गुडेनैषां वटकानक्षसम्मितान् ।

---

चिकित्सिते पठ्यते, तत्र चातुर्जातसुरीरच प्रत्येकं कर्षमानमुक्तं, यथा—"तालीश-पत्रमरिच-चव्यानान्तु पलं पलम्। कृष्णा तन्मूलयोर्द्वे द्वे पले शुण्ठीपलत्रयम्। चतुर्जातसुगीरच कर्षांशं सुक्ष्मचूर्णितम्। गुडेन वटकान् कृत्वा त्रिगुणेन सदा भजेत्। मद्ययूषरसारिष्टमस्तुपेयापयोऽनुपः। वातश्लेष्मात्मको छर्दिं ग्रहणीं पार्श्वहृद्रुजाम्। ज्वरश्वयथुपाण्डुत्वगुल्मपानात्ययार्शसाम्। प्रसेकपीनसश्वासकासानाञ्च निबर्हणं। अभयां नागरस्थाने दद्यादत्र विड्ग्रहे। त्वगादिषु च पैत्तेषु चतुर्गुणसितान्विता। पक्त्वेन गुडिका कार्य्या गुडेन सितयापि वा। परं हि वह्निसम्पर्काल्लघिमान भजन्ति ताः॥" इति। शुण्ठ्याः स्थान इत्यादि।—चूर्णमानादिति।—समुदितचूर्णमानात्। केचित्तु गुडमानाच्चतुर्गुणामिति पठन्ति, तत्, वाग्भटविरोधात्, प्रभूतमधुरताप्रसङ्गाच्च। अत्र दोषभेदेनानुपानमात्राभेदमाह, अनुपानमित्यादि ॥ १८ ॥

पथ्येत्यादौ।—मरिचस्येत्यत्राप्येकमिति सम्बध्यते। तेन मरिचस्य एककर्ष-

सलिलं भक्षयेत् प्रातस्तक्रमथोऽनु वा पिबेत् ॥
मन्दाग्निं दीपयत्येष ग्रहणीपाण्डुरोगनुत् ॥
काङ्कायनेन शिष्येभ्यः शस्त्रक्षाराग्निभिर्विना ।
भिषग्जितमिति प्रोक्तं श्रेष्ठमर्शोविकारिणाम् ॥ १८ ॥

माणिभद्रो मोदकः ।

विडङ्गसारामलकाभयानां पलं पलं स्यात् त्रिवृतात्रयञ्च ।
गुडस्य षड्द्वादशभागयुक्ता मासेन त्रिंशद्गुडिका विधेयाः ॥
निवारणे यक्षवरेण सृष्टः स माणिभद्रः किल शाक्यभिक्षवे ।
अयं हि कासक्षयकुष्ठनाशनो भगन्दरप्लीहजलोदरार्शसाम् ।
यथेष्टचेष्टान्नविहारसेवी घनेन वृद्धस्तरुणो भवेच्च ॥ २० ॥

स्वल्पशूरणमोदकः ।

मरिचमहौषधचित्रकशूरणभागा यथोत्तरं द्विगुणाः ।
सर्वसमा गुडभागः सेव्योऽयं मोदकः प्रसिद्धफलः ॥
ज्वलनं ज्वलयति जाठरमुन्मूलयति शूलगुल्मगदान् ।
निःशेषयति श्लीपदमर्शांसि नाशयत्याशु ॥ २१ ॥

बृहच्छूरणमोदकः ।

शूरणषोडशभागा वह्नेरष्टौ महौषधस्यातः ।

---

मित्यर्थः । यथानिर्दिष्टा' क्रमशः इति ।—यथाक्रमं पूर्वेण सह । कन्दस्तु द्विगुण इति ।—षोडशपलम् । द्विगुणेन गुडेनेति ।—समुदितचूर्णापेक्षया । अर्शसामिति ।—कर्ण-भक्षितान्, व्यवहारस्तु माषमात्रकेति ॥ १९ ॥

विडङ्गसारेत्यादौ—त्रिवृतात्रयमिति ।—त्रिवृतायाः पलत्रयम्, गुडस्य च षट्पलानि । द्वादशभागयुक्ता इति ।—द्वादशपलरूपविभागेन युक्ता कृता । मासेनेति ।—मासमोद-योपभ्यमिति शेषः । अयमर्थः,—द्वादश पलानि विभज्य मासेनोपयोज्यम् । त्रिंशद्-गुडिकाः समभागेन कुर्यात् इति तेन एकैकगुडिका चतुर्त्रिंशाधिक नवमाषकोदित कर्षमाना भवति । कष १, माष ८, रति ६ । व्यवहारस्तु दशभिरष्टाभिर्वा माषकै-रिति । निवारणे इत्यत्र गुह्यानामिति शेषः । देश इत्यन्ये ॥ २० ॥

स्वल्पशूरणमोदकः स्पष्टः ॥ २१ ॥

अर्द्धेन भागयुक्तिर्मरिचस्य च ततोऽपि चार्द्धेन ॥
त्रिफलाकणासमूलातालीशारुष्करक्रिमिघ्नानाम् ।
भागा महौषधसमा दहनांशा तालमूली च ॥
भागः शूरणतुल्यो दातव्यो वृद्धदारकस्यापि ।
भृङ्गेले मरिचांशे सर्वाण्येकत्र सञ्चूर्ण्य ॥
द्विगुणेन गुडेन युतः सेव्योऽयं मोदकः प्रकामधनैः ।
गुरुद्रव्यभोज्यरहितैस्त्वितरैरुपद्रवं कुर्यात् ॥
भस्मकमनेन जनितं पूर्वमगस्त्यस्य योगराजेन ।
भीमस्य मारुतेरपि येन तौ महाग्नी जातौ ॥
अग्निबलवृद्धिहेतुर्न केवलं शूरणो महावीर्य्यः ।
प्रभवति शस्त्रक्षाराग्निभिर्विनाप्यर्शसामेषः ॥
श्वयथुश्लीपदजिद् ग्रहणीमपि कफवातसम्भूताम् ।
नाशयति वलीपलितं मेधां कुरुते वृषत्वञ्च ॥
हिक्काश्वासकासं सराजयक्ष्मप्रमेहांश्च ।
प्लीहानञ्चाप्युग्रं हन्ति च रसायनं पुंसाम् ॥ २२ ॥

शूरणपिण्डी ।

चूर्णीकृताः षोडश शूरणस्य भागास्ततोऽर्द्धेन च चित्रकस्य ।
महौषधाद्वौ मरिचस्य चैको गुडेन दुर्नामजयाय पिण्डी ॥

---

शूरणषोडशभागा इत्यादौ—"त्रिफलाकणासमूलातालीशारुष्करक्रिमिघ्नानां भागा महौषधसमा" इति।—त्रिफलादीनां प्रत्येकं महौषधसमा भागाः, त्रिफलायाश्च प्रत्येकम्। समूला समूलक इति।—पिप्पल्याः फलं मूलञ्चेत्यर्थः। समूला इत्यत्र स्त्रियाः पुंवद्भाषितपुंस्कादनूङ् इत्यादिना पुंवद्भावो नोद्भावनीयः। समूलोत्तरपदे स्त्रीप्रत्ययान्ते परतो विधानात्। विशेषणत्वादस्य पूर्वनिपातोऽपि नोद्भावनीयः, त्रिफलाकणयोर्दर्शयैव विशेष्यत्वात्। दहनश्चित्रकः। भृङ्गेले मरिचांशे प्रत्येकं, भृङ्गं गुडत्वक्। गुरुद्रव्यभोज्यरहितैस्त्वितरैरिति।—प्रकामधनप्रतियोगितया दरिद्रैः। उपद्रवमिति।—व्यापत्तिम् ॥ २२ ॥

पिण्डयां गुड़ो मोदकवत् पिण्डत्वापत्तिकारकः ॥ २३ ॥

व्योषाद्यं चूर्णम्।

व्योषाग्न्यरुष्करविड़ङ्गतिलाभयानाम्
चूर्णं गुड़ेन सहितन्तु सदोपयोज्यम्।
दुर्नामकुष्ठगरशोथशकृद्विबन्धा-
नग्नेश्चयत्यबलतां क्रिमिपाण्डुताञ्च ॥ २४ ॥

समशर्करं चूर्णम्।

शुण्ठीकणामरिचनागदलत्वगेलम्
चूर्णीकृतं क्रमविवर्द्धितमूर्द्ध्वमन्त्यात्।
खादेदिदं समसितं गुदजाग्निमान्द्य-
कासारुचिश्वसनकण्ठहृदामयेषु ॥ २५ ॥

लवणोत्तमाद्यं चूर्णम्।

लवणोत्तमवह्निकलिङ्गयवांश्चिरविल्वमहापिचुमर्दयुतान्।
पिब सप्तदिनं मथितालुलितान् यदि मर्दितुमिच्छसि पायुरुजाम्
॥ २६ ॥

---

चूर्णीकृता इत्यादि।—वाग्भटस्य। मोदकवदिति—विशुष्क द्रव्यं ॥ २३ ॥

व्योषाद्यीत्यादि।—अत्र गुडस्यैकभागत्वं चूर्णयोगत्वात् इति। किञ्चायं योगो विभीतकामलकयोर्योगात् गुडिकापि क्रियते, यदाह वाग्भटः—"गुडव्योषवराक्षेत्र-तिलारुष्करचित्रकैः। अर्शांसि हन्ति गुडिका त्वग्विकारश्च शीलिता ॥" इति ॥२४॥

शुण्ठीत्यादि।—नागं नागकेशरचूर्णम्; दलं तेजपत्रम्। क्रमविवर्द्धितमूर्द्ध्वमन्त्यादिति।—अन्त्यस्थितद्रव्यादारभ्य तदुपरितनद्रव्यमेकविवृद्धिक्रमेण पर्यायेणेत्यर्थं। समसितमिति।—मिलित सर्वचूर्णसमशर्करम्; श्वसनमिति—श्वासः ॥ २५ ॥

लवणोत्तमेत्यादि।—वाग्भटस्य। लवणोत्तमं सैन्धवम्, वह्निश्चित्रकः, कलिङ्गयव इन्द्रयवः। चिरविल्वः करञ्जः, तस्य मूलम्; यत् पुनरस्य सुश्रुते फलग्रहणमुक्तं तच्छोधने ज्ञेयम्। महापिचुमर्दः पर्वतनिम्बः, निम्बसदृशपत्रो वृक्षः, बाकायनीति लोकख्यातः। ग्रामनिम्ब एव पर्वतभवत्वेन पर्वतनिम्ब इत्याहुरन्ये, अस्य त्वक् ग्राह्या। मथितालुलितानिति—तक्रेणालोडितान् ॥ २६ ॥

श्रीबाहुशालो गुडः।

त्रिवृत् तेजोवती दन्ती श्वदंष्ट्रा चित्रकं शटी।
गवाक्षीमुस्तविश्वाह्व-विडङ्गानि हरीतकी॥
पलोन्मितानि चैतानि पलान्यष्टावरुष्करात्।
षट्पलं हृद्दारस्य शूरणस्य तु षोड़श॥
जलद्रोणद्वये क्वाथ्यं चतुर्भागावशेषितम्।
पूतन्तु तं रसं भूयः क्वाथ्येभ्यस्त्रिगुणो गुड़ः॥
लेहं पचेत् तु तं तावद् यावद्दर्वीप्रलेपनम्।
अवतार्य्य ततः पश्चाच्चूर्णानीमानि दापयेत्॥
त्रिवृत्तेजोवतीकन्द-चित्रकान् द्विपलांशिकान्।
एलात्वक्मरिचञ्चापि गजाह्वाञ्चापि षट्पलाम्।
द्वात्रिंशतं पलान्येवं चूर्णं दत्त्वा निधापयेत्।
ततो मात्रां प्रयुञ्जीत जीर्णे क्षीररसाशनः॥
पञ्च गुल्मान् प्रमेहांश्च पाण्डुरोगं हलीमकम्।
जयेदर्शांसि सर्वाणि तथा सर्वोदराणि च॥
दीपयेद् ग्रहणीं मन्दां यक्ष्माणञ्चापकर्षति।
अपीनसं प्रतिश्यायमाढ्यवातं तथैव च॥

---

त्रिवृत् तेजोवतीत्यादि।—क्वचित् तथैव। तेजोवती चवी, एवं सर्वत्र। यत्र पृथक् चवी तेजोवती चास्ति तत्र परं तेजोह्वा ज्योतिष्मती गृह्यते, यथा गुग्गुलु-पञ्चतिक्तके घृते। गवाक्षी गोरक्षकर्कटी, तस्या मूलम्, एवं सर्वत्र। न तु गवाक्षी श्वेतापराजिता, क्वापि टीकाकृद्भिरव्याख्यातत्वात्। क्वाथ्येभ्यस्त्रिगुणो गुड इति।—एकचत्वारिंशत्पलक्वाथ्यापेक्षया त्रैगुण्येन गुडस्य त्रयोविंशतिपलाधिकशतपलं भवति। कन्दः शूरणः। विडङ्गादीनां द्विपलत्वम्, एलादीनाञ्च षट्पलत्वम्। यद्यपि निर्देशस्य द्रव्यप्रधानत्वादेव प्रत्येकं सिध्यति, तथापि द्वात्रिंशत्पलानीति यदुक्तं तत् क्वचित् द्रव्यप्रधाननिर्देशेऽपि प्रत्येकता नाप्नोतीति सूचनार्थम्। तेन कौटोपकगुग्गुलौ त्रिकटोश्चूर्णं पञ्चपलपरिमाणमित्यत्र मिलित्वैव त्रिकटुचूर्णं पञ्चपलपरिमितम् इत्यर्थ-

अयं सर्वगदेष्वेव कल्याणो लेह उत्तमः ।
दुर्नामारिरयञ्चाशु दृष्टो वारसहस्रशः ॥
भवन्त्येनं प्रयुञ्जानाः शतवर्षं निरामयाः ।
आयुषो दैर्घ्यजननो बलीपलितनाशनः ॥
रसायनवरश्चैव मेधाजनन उत्तमः ।
गुडः श्रीबाहुशालोऽयं दुर्नामारिः प्रकीर्त्तितः ॥
तोयपूर्णे यदा पात्रे क्षिप्तो न प्लवते गुडः ।
क्षिप्तश्च निश्चलस्तिष्ठेत् पतितस्तु न शीर्यते ॥
यदा दर्वीप्रलेपः स्याद् यावद्वा तन्तुलीभवेत् ।
एष पाको गुडादीनां सर्वेषां परिकीर्त्तितः ॥
सुखमर्दः सुखस्पर्शो गुडः पाकमुपागतः ।
पीड़ितो भजते मुद्रां गन्धवर्णरसान्वितः ॥ २८ ॥

गुड़भल्लातकः ।

भल्लातकसहस्रे द्वे जलद्रोणे विपाचयेत् ।
पादशेषे रसे तस्मिन् पचेद्गुडतुलां भिषक् ॥

---

क्षारमिश्रेति बोध्यम् । द्वाभियत पलान्येव पाठोऽन्यथा छन्दोभङ्गः स्यात् । क्वचित् द्वाविंशत् पलान्येवमिति पाठः । अदीनसमिति प्रतिश्यायमिदं । पीनसे च प्रति-श्याय इति पाठोऽपि स एवार्थः । अत्र अनुपानमनुक्तमपि वातकफे कोष्णाम्बु, पित्ते क्षीरादिकं ज्ञेयम् । न चात्र भल्लातकप्रवेशादुष्णमत्यम् अनुक्तमिति वक्तनीयम् ; यतो भल्लातकस्नेह एव उष्णजलनिषेधो न भल्लातकशोषमात्रे । तथा चोक्तम्— "उष्णोदकानुपानन्तु स्नेहानामथ शस्यते । ऋते भल्लातकस्नेहात् तत्र तोयन्तु शीत-लम् ॥" इति । वृद्धास्तु शीततोयेन व्यवहरन्ति । तोयपूर्णे यदा पात्र इत्यादि ।—गुड़-पाकलक्षणम् । वृद्धास्तु तोयपूर्णपात्रोपरि कोमलकदलीपत्रं दत्त्वा, गुडस्य मुद्रा-पाकं निरूपयन्ति । न प्लवते—न भवति पतितः । पात्राधोगतोऽपि न शीर्यते—न विस्तीर्णतां याति ॥ २८ ॥

गुड़भल्लातके—भल्लातकसहस्रे द्वे इति ।—भल्लातकानां सहस्रद्वयम्, एवं सर्वत्र

भल्लातकसहस्रार्द्धं छित्वा तत्रैव दापयेत् ।
सिद्धेऽस्मिंस्त्रिफलाव्योष-यमानीमुस्तसैन्धवम् ॥
कर्षांशमर्धितं दद्यात् त्वगेलापत्रकेशरम् ।
खादेदग्निबलापेक्षी प्रातरुत्थाय मानवः ॥
कुष्ठार्शःकामलामेह-ग्रहणीगुल्मपाण्डुताः ।
हन्यात् प्लीहोदरं कास-क्रिमिरोगभगन्दरान् ।
गुड़भल्लातको ह्येष श्रेष्ठस्त्वर्शोविकारिणाम् ॥ २० ॥

अपरो गुड़भल्लातकः ।

दशमूलामृता भार्गी श्वदंष्ट्रा चित्रकं शटी ।
भल्लातकसहस्रञ्च पलांशं क्वाथयेद् बुधः ॥
पादशेषे जलद्रोणे रसे तस्मिन् विपाचयेत् ।
दत्त्वा गुड़तुलामेकां लेहीभूतं समुद्धरेत् ॥
माक्षिकं पिप्पलीं तैलमैरण्डकञ्च दापयेत् ।
कुड़वं कुड़वञ्चात्र त्वगेला मरिचं तथा ॥

---

पलादिमानविरहे ; यथा सैन्धवाग्नेर्यो भल्लातकास्थीनि विंशतिरिति । यत्र तु पलादि श्रुतिस्तत्र तथैव व्यवहर्तव्यम् । यथा वाह्याचगुड़े ; "पलान्यष्टावरुष्करात्" इति । एवं हरीतक्यादावपि ज्ञेयम् । भल्लातकसहस्रार्द्धं छित्वेति—द्विधा कृत्वा गुडसहितक्वाथ एव पक्तव्यं हरीतकीवत् । त्रिफलादीनाञ्च प्रत्येकमेव कर्षमानम् ॥ २० ॥

द्वितीयगुड़भल्लातके—पलांशमिति ।—दशमूलादिभिः सम्बध्यते । भल्लातकसहस्रञ्च पूर्ववदावर्तिमानात् । क्वाथयेदिति ।—पूर्वोक्तभल्लातकगुड़संवादात्, अत्रापि जलद्रोणे किंवा क्वाथ्यद्रव्येभ्योऽष्टगुणे जले । माक्षिकं मधु । ऐरण्डकञ्च तैलमैरण्डतैलम्, एतच्च प्रथमतः क्षिप्त्वैव गुड़ः पक्तव्यः । सिद्धे मधु पिप्पलीचूर्णादि प्रक्षेप्यम् । एकः कुडव शब्दो माक्षिकादिभिः सम्बध्यते ; अपरश्च त्वगेलादिभिः । माक्षिकैरण्डतैलयोश्च द्रवत्वात् प्रत्येकमष्टौ पलानि । त्वगेलामरिचादीनान्तु कुडवं मिलित्वेति केचित् ; प्रत्येकमित्यन्ये । एतदेव युक्तं द्रव्यप्रधानत्वात् निर्देशस्य । आयुर्वेदसारेऽप्युक्तम्—"भल्लातकसहस्रं हि शटीदहनगोक्षुरान् । दशमूलामृताभार्गीः पलांशाः संविपाच्य च ॥

अर्शः कासमुदावर्त्तं पाण्डुत्वं शोथमेव च ।
नाशयेदग्निसादञ्च गुड़भल्लातकः स्मृतः ॥ २१ ॥

चव्याद्यं घृतम् ।

चव्यं त्रिकटुकं पाठां क्षारं कुस्तुम्बुरूणि च ।
यमानीं पिप्पलीमूलमुभे च विड़सैन्धवे ॥
चित्रकं बिल्वमभयां पिष्ट्वा सर्पिर्विपाचयेत् ।
शकृद्वातानुलोम्यार्थं जाते दध्नि चतुर्गुणे ॥
प्रवाहिकां गुदभ्रंशं मूत्रकृच्छ्रं परिस्रवम् ।
गुदवङ्क्षणशूलञ्च घृतमेतद्व्यपोहति ॥ २२ ॥

व्योषाद्यं घृतम् ।

व्योषगर्भं पलाशस्य त्रिगुणे भस्मवारिणि ।
साधितं पिबतः सर्पिः पतन्त्यर्शांस्यसंशयम् ॥ २३ ॥

उदकषट्पलं घृतम् ।

सक्षारैः पञ्चकोलैस्तु पलिकैस्त्रिगुणोदके ।
समक्षीरं घृतप्रस्थं ज्वरार्शःप्लीहकासनुत् ॥ २४ ॥

सिंह्यमृतं घृतम् ।

पचेद्वारिचतुर्द्रोणे कण्टकार्य्यमृतायुतम् ।

---

दत्त्वा गुड़तुला तत्र लेहवत् साधु साधयेत् । पिप्पल्या मधुन, सिद्धे तैलव्यो-षत्रकस्य च । प्रत्येकं कुड़वं दत्त्वा त्वगेलामरिचस्य च । निश्चितं भवनैत्रिमनर्शः-कासोदरापहम् ॥" इति । अत एव आयुर्वेदसारसंवादात् "कुड़वार्द्धञ्च त्वगेलामरिचम्" इति पाठान्तरमपि प्रतिक्षेपणीयम् ॥ २१ ॥

चव्यमित्यादि ।—चरकस्य । कुस्तुम्बुरु धनीयकम् । जाते दध्नीति—मुजाते । अत्र जेज्जट—"स्वरसक्षीरमाङ्गल्ये पाको यत्रेरितः क्वचित् । चतुर्गुणं जलं तत्र शौण्या-धानार्थमावपेत् ॥" इत्याह । परिस्रवमिति गुदपरिस्रावम् ॥ २२ ॥

व्योषाद्य घृतं स्पष्टम् ॥ २३ ॥

उदकषट्पलं घृतं स्पष्टम् ॥ २४ ॥

तत्राग्नित्रिफलाव्योष-पूतिकल्ककलिङ्गकैः॥
सकाश्मर्यविडङ्गैस्तु सिद्धं दुर्नाममेहनुत्।
घृतं सिद्धामृतं नाम बोधिसत्त्वेन भाषितम्॥ २५॥

पिप्पल्याद्यं तैलम्।

पिप्पलीं मधुकं बिल्वं शताह्वां मदनं वचाम्।
कुष्ठं शटीं पुष्कराख्यं चित्रकं देवदारु च॥
पिष्ट्वा तैलं विपक्तव्यं द्विगुणक्षीरसंयुतम्।
अर्शसां मूढवातानां तच्छ्रेष्ठमनुवासनम्॥
गुदनिःसरणं शूलं मूत्रकृच्छ्रं प्रवाहिकाम्।
कट्यूरुपृष्ठदौर्बल्यमानाहं वङ्क्षणाश्रयम्॥
पिच्छास्रावं गुदे शोथं वातवर्चोविनिग्रहम्।
उत्थानं बहुशो यच्च जयेच्चैवानुवासनात्॥ २६॥

---

पञ्चेदित्यादौ।—कण्टकारीगुडूच्योर्मिलित्वा प्रस्थं, निर्देशस्य भागप्रधानत्वात्। अन्ये तु—द्रवपृथक्त्वदर्शनात् प्रत्येकमेव प्रस्थमाहुः। चतुर्द्रोणे द्रोणाष्टमेव, अतीव घृताढ्यं बोध्यम्; चतुर्गुणेन पाकस्यौत्सर्गिकत्वात्। मध्यपक्षे तु षोडशगुणत्वमेव पाकस्य। अग्निरत्र चित्रकः; पूतीकस्य करञ्जस्य त्वक्, काश्मर्यं गाम्भारीफलम्। कल्कस्य तु स्नेहापेक्षया पादिकत्वमेव। बोधिसत्त्वेनेति।—योगिविशेषेण, अन्ये तु लोकनाथेनेत्याहुः॥ २५॥

पिप्पल्याद्यतैले—बिल्वं बिल्वशलाटुः; पुष्कराख्यमिति—पुष्करमूलं, तदभावे कुष्ठमेव द्विगुणं ग्राह्यम्। अत्र द्रवान्तरस्यानिर्दिष्टत्वात् त्रिगुण एव पाक इति केचित्। अन्ये तु—चतुर्गुणपाकस्य उत्सर्गसिद्धत्वात् जलमप्यत्र द्विगुणमिच्छन्ति। अपरे तु—"क्षीरदध्यारनालेषु पाको यत्रेरितः क्वचित्। जलं चतुर्गुणं तत्र वीर्याधानार्थमावपेत्॥" इति वचनात् जलमपि चतुर्गुणमावपन्ति, युक्तञ्चैतत्, यदाह वृद्धसुश्रुत—"शटीपुष्करकृष्णाह्वामदनामरदारुभिः। शताह्वाकुष्ठयष्ट्याह्ववचाबिल्वहुताशनैः॥ सुपिष्टं द्विगुणं क्षीरं तैलं तोयचतुर्गुणम्। पक्त्वा वस्तौ निधातव्यं मूढवातानुलोमनम्॥" इति॥ २६॥

## रक्तार्शश्चिकित्सा।

रक्तार्शसामुपेक्षेत रक्तमादौ स्रवद्भिषक्।
दुष्टास्रे निगृहीते तु शूलानाहावसृग्मदाः ॥ ३७ ॥
लाजैः पेया पीता चुक्रिकाकेशरोत्पलैः सिद्धा।
सा हन्त्यस्रस्रावं तथा बलापृश्निपर्णीभ्याम् ॥ ३८ ॥
शक्राह्वयः सबिल्वो वा किंवा बिल्वशलाटवः।
योज्या रक्तार्शसैस्तद्वज्ज्योत्स्निकामूललेपनम् ॥ ३९ ॥
नवनीततिलाभ्यासात् केशरनवनीतशर्कराभ्यासात्।
दधिसरमथिताभ्यासाद् गुदजाः शाम्यन्ति रक्तवहाः ॥ ४० ॥

---

रक्तार्शसां चिकित्सामाह, रक्तार्शसामित्यादि।—उपेक्षेत, न तु स्तम्भयेत्। निगृहीते इति स्तम्भिते। असृग्मदा इति पीड़ादयः ॥ ३७ ॥

लाजै पेयेत्यादि।—चुक्रिका चाङ्गेरी, केशरं नागकेशरम्। तथा बलापृश्निपर्णीभ्यामिति द्वितीयो योग.। अधिकारेन लाजैः पेयेत्यनुवर्त्तते ॥ ३८ ॥

शक्राह्वय इत्यादि।—शक्र. कुटज, यतः हि रत्नकोषे—"इन्द्रक शक्रपर्य्यायौ वत्सको गिरिमल्लिका" इति। तद्वल्कलक्वाथः, यत्र हि चरके—"कुटजत्वङ्निर्य्यूहः सनागरः स्निग्धो रक्तसंग्रहणः" इति। वाग्भटेऽप्युक्त—"सकफे प्रपिबेत् पाक्यं शुण्ठीकुटजवल्कलम्" इति। शिवदासस्तु इन्द्रयवक्वाथ इत्याह। सनागर इन्द्र-यवागर, स च प्रक्षेपविधिनेति केचित्। अन्ये तु—उक्तवाग्भटवचनसंवादात् शुण्ठी-कुटजवल्कलयोः क्वाथ इत्याहु। बिल्वशलाटव इत्यत्रापि सनागर इति योज्यम्। अन्ये तु—केवलं बिल्वं पिष्टा पेयमित्याहु। ज्योत्स्निका कोषातकी घोषक-भेदः ॥ ३९ ॥

नवनीततिलाभ्यासादित्यादि।—अभ्यासोऽभ्यसनम्। अत्र केशरं पद्मकेशरं, रक्त-स्तम्भनत्वात्, यदाह वाग्भट—"शर्कराम्भोजकिञ्जल्क-सहितं मधु वा तिलैः। अभ्यस्तं रक्तगुदजान् नवनीतं नियच्छति ॥" इति. आधुनिकास्तु नागकेशरेण व्यव-हरन्ति। दधिसरस्य मथितं तक्रं दधिसरमथितम्; उक्तं हि जतूकर्णे—"नवनीतं तिलैर्जग्ध शर्करा केशरैर्वा। नवनीतं घृतं वाजं दध्नो वा खजितः सरः ॥" इति ॥ ४० ॥

समङ्गोत्पलमोचाह्व-तिरीटतिलचन्दनैः ।
छागक्षीरं प्रयोक्तव्यं गुदजे शोणितापहम् ॥ ४१ ॥

कुटजलेहः ।

कुटजत्वक्पलशतं जलद्रोणे विपाचयेत् ।
अष्टभागावशिष्टन्तु कषायमवतारयेत् ॥
वस्त्रपूतं पुनः क्वाथं पचेल्लेहत्वमागतम् ।
भल्लातकं विडङ्गानि त्रिकटु त्रिफलां तथा ॥
रसाञ्जनं चित्रकञ्च कुटजस्य फलानि च ।
वचामतिविषां बिल्वं प्रत्येकञ्च पलं पलम् ॥
त्रिंशत्पलानि गुडस्य चूर्णीकृत्य निधापयेत् ।
मधुनः कुडवं दद्याद् घृतस्य कुडवं तथा ॥
एष लेहः शमयति चार्शो रक्तसमुद्भवम् ।
वातिकं पैत्तिकञ्चैव श्लैष्मिकं सान्निपातिकम् ॥
ये च दुर्नामजा रोगास्तान् सर्वान् नाशयत्यपि ।
अम्लपित्तमतीसारं पाण्डुरोगमरोचकम् ॥
ग्रहणीमार्दवं कार्श्यं श्वयथुं कामलामपि ।
अनुपानं घृतं दद्यान्मधु तक्रं जलं पयः ।

---

समङ्गेत्यादि ।—समङ्गा वराहक्रान्ता, उत्पलं नीलोत्पलम्, मोचकं शाल्मली-वेष्टकम्; तिरीटं पट्टिकालोध्रम्; एषां कल्कश्छागक्षीरेणालोड्य पेय । उक्तं हि वाग्भटे—"लोध्रं तिलं मोचरसं समङ्गां चन्दनोत्पलम् । पाययित्वाजदुग्धेन शाल्योदनेन भोजयेत् ॥" इति । अन्ये तु—क्षीरपरिभाषया छागक्षीरं पक्वा पेय-मित्याहुः ॥ ४१ ॥

कुटजत्वक्पलशतमित्यत्र केचित् पलस्थाने फलमिति पठन्ति, तन्मते—कुटजत्वक्-फलयोर्मिलित्वैव पलशतम् । चन्द्राटेऽष्टभागावशिष्टमित्यत्र चतुर्भागावशिष्टमिति दृश्यते । अत्र घृतकुडवं प्रथमं दत्त्वा लेहः पक्तव्यः, सिद्धे शीते भल्लातकादि-

रोगानीकविनाशाय कौटजो लेह उच्यते ॥ ४२ ॥

कुटजरसक्रिया।—

कुटजत्वचो विपाच्य पलशतमार्द्रं महेन्द्रसलिलेन।
यावत् स्यादरसं तद्द्रव्यं स रसस्ततो ग्राह्यः॥
मोचरसः समङ्गः फलिनी पलांशिभिस्त्रिभिस्तैश्च।
वत्सकबीजं तुल्यं चूर्णीकृतमत्र दातव्यम्॥
पूतोत्क्वथितः सान्द्रः स रसो दर्वीप्रलेपनो ग्राह्यः।
मात्राकालोपहिता रसक्रियैषा जयत्यसृक्स्रावम्॥
छागलीपयसा युक्ता पेया मण्डेन वा यथाग्निबलम्।
जीर्णौषधश्च शालीन् पयसा च्छागेन भुञ्जीत॥
रक्तार्शांस्यतीसारं शूलं सासृग्रुजो निहन्त्याशु।
बलवच्च रक्तपित्तं रसक्रियैषा ह्युभयभागम्॥ ४३ ॥

---

चूर्णप्रक्षेप ... मधुक कुडवोऽर्द्धं पलानि, घृतकुडवोऽप्येवम्। कुडवर्द्धनुपलम् पूर्वमेव ख्यापितमिति ॥ ४२ ॥

कुटजत्वच इत्यादि।—अत्र पलशतं तुला, तेन "तुलाद्रव्ये जलद्रोणः" इति वचनात् द्रोणमात्रं जलं ग्राह्यम्। तच्च "यावत् स्यादरसम्" इति वचनाच्चतुर्भागावशिष्टं कार्य्यम्, उक्तं हि—"चतुर्भागजलो प्रायो द्रव्यं अरसं भवेत्" इति। अन्ये तु तन्त्रान्तरीययोगान्तरे "द्रोणेऽम्भस पलशतं विपाच्य कुटजत्वचोऽष्टभागस्थ' इत्यष्टभागावशिष्टदर्शनात्, अत्राप्यष्टभागावशेष क्वाथो ग्राह्य इत्याहुः। व्यवहारस्तु पूर्ववत्। महेन्द्रसलिलमान्तरीक्षजलम्, तदभावे भूमिस्थमपि तद्गुणकारि ग्राह्यम्। यदुक्तं—"किञ्चित्कषायानुरसं तनु लघु शीतं सुगन्धि सुरसञ्च। अनभिष्यन्दि च यत् स्यात् तत् क्षितिस्थमैन्द्रवज्ज्ञेयम्॥" फलिनी प्रियङ्गुः। दर्वीप्रलेपनो ग्राह्य इति।—दर्वीप्रलेपावस्थायामवतारणीय इत्यर्थः। अनेन रसक्रिया लेहरूपैव, वाग्भटेऽप्युक्तम्—"पञ्चावलेहं लीढ्वा च तद्दशधात्रिकल पिबेत्" इत्यादि। उभयभागमिति।—यद्यपि युगपदूर्ध्वाधःप्रवृत्तरक्तपित्तस्यासाध्यत्वं, तथाप्युभयभागं हन्तीत्यस्य क्रमेणोर्द्ध्वगमधोगञ्च हन्तीत्यर्थः, तत्राप्यधोगस्य याप्यत्वात् सततप्रतिषेधनमेव निहन्त्यादित्यस्यार्थो ज्ञेयः। अन्ये तु—योगप्रभावैरचिन्त्यत्वादसाध्यमपि हन्तीत्यर्थमाहुः॥ ४३ ॥

कुटजाद्यं घृतम् ।—

कुटजफलवल्ककेशर-नीलोत्पललोध्रधातकीकल्कैः ।
सिद्धं घृतं विधेयं मूलरक्तार्शसां भिषजा ॥ ४४ ॥

सुनिषण्णक-चाङ्गेरीघृतम् ।—

अवाक्पुष्पी वला दार्वी पृश्निपर्णी त्रिकण्टकम् ।
न्यग्रोधोडुम्बराश्वत्थ-शुङ्गाश्च द्विपलोन्मिताः ॥
कषाय एष पेयास्तु जीवन्ती कटुरोहिणी ।
पिप्पली पिप्पलीमूलं मरिचं देवदारु च ॥
कलिङ्गं शाल्मलीपुष्पं वीरा चन्दनमञ्जनम् ।
कट्फलं चित्रकं मुस्तं प्रियङ्गुतिविषे स्थिरा ॥
पद्मोत्पलानां किञ्जल्काः समङ्गा सनिदिग्धिका ।
विल्वं मोचरसः पाठा भागाः स्युः कार्षिकाः पृथक् ॥
चतुःप्रस्थशृतं प्रस्थं कषायमवतारयेत् ।
त्रिंशत् पलानि तु प्रस्थो विज्ञेयो द्विपलाधिकः ॥
सुनिषण्णक-चाङ्गेर्योः प्रस्थौ द्वौ स्वरसस्य च ।
सर्वैरेतैर्यथोद्दिष्टैर्घृतप्रस्थं विपाचयेत् ॥
एतदर्शःस्वतीसारे त्रिदोषे रुधिरस्रुतौ ।
प्रवाहणे गुदभ्रंशे पिच्छासु विविधासु च ॥

---

कुटजाद्यघृते कुटजस्य फलं वल्कञ्च ; वल्कशब्दो वल्कलवचनः, केचित्तु, [illegible]मिति पाठः । अत्र जलं चतुर्गुणमदेयत्वात् ॥ ४४ ॥

अवाक्पुष्प्यादि ।—अवाक्पुष्पी [illegible] । [illegible] प्रत्येक [illegible] सुनिषण्णक-चाङ्गेरीमिलितया घृतमिति मिलित्वा षोडशगुणं क्वाथ्यं भवति । [illegible] वीरा च क्षीरकाकोली । चतुःप्रस्थेन [illegible], [illegible] ।—यद्यपि षोडशगुणे क्वाथ्ये चतुःप्रस्थं [illegible] तथा [illegible] चतुर्थो भागः प्रस्थ एव भवति, तथापि [illegible] वचनं, [illegible] "क्वाथ्याच्चतुर्गुणं वारि" इत्यादिवचनस्य [illegible] सूचकं चेदम् । [illegible]

प्रायस्त्रिभागशिष्टेऽस्मिन्नच्छपैच्छिल्यरक्तता ।
सञ्जायते तदास्राव्य क्षाराम्भो ग्राह्यमिष्यते ॥
तुर्य्येणाष्टमकेन षोडशभवेनांशेन संव्यूहिमो ।
मध्यः श्रेष्ठ इति क्रमेण विहितः क्षारोदकाच्छङ्खकः ॥
नातिसान्द्रो नातितनुः क्षारपाक उदाहृतः ।
दुर्नामकादौ निर्दिष्टः क्षारोऽयं प्रतिसारणः ॥
पानीयो यस्तु गुल्मादौ तं वारानेकविंशतिम् ।
स्रावयेत् षड्गुणे तोये केचिदाहुश्चतुर्गुणे ॥ ४७ ॥

---

त्रिभागशिष्टं स्राव्यम् ? इत्याह—प्रायस्त्रिभाग इत्यादि। स्राव्येति।—वस्त्रेण गालयित्वा। इदानीं प्रक्षेप्यशङ्खचूर्णस्य मानभेदेन प्रतिसारणीयक्षारस्य मृद्वादिभेदमाह—तुर्य्येणेत्यादि। क्षारोदकात् इति।—त्रिभागावशिष्टक्षारोदकमपेक्ष्य शङ्खचूर्णं यदि तुर्य्येण चतुर्थांशेन विहितः प्रयुक्तो भवति, तदा संव्यूहिम इति मृदुक्षारो भवति। संव्यूहिम इति मृदुक्षारसंज्ञा। अष्टमकेनाष्टमांशेन यदि शङ्खचूर्णं दीयते, तदा मध्यः क्षारः, षोडशभवेनांशेन यदि शङ्खचूर्णं दीयते, तदा श्रेष्ठः क्षार इत्यर्थः। यद्यपि संव्यूहिमे क्षारोदकाच्चतुर्थांशेन दीयमाने शङ्खचूर्णं मध्यश्रेष्ठक्षारे दीयमानशङ्खचूर्णापेक्षया प्रभूतमेव, तथापि क्षारस्य मृदुत्वमेव भूयसा शङ्खचूर्णेन क्षारोदकस्य तीक्ष्णताया अभिभूतत्वात्। पानीयक्षारे तु न शङ्खचूर्णयोग इति तत्र नैते भेदाः। प्रतिसारणीयक्षारपाकलक्षणं तथा तद्विषयञ्चाह—नातिसान्द्र इत्यादि। प्रतिसारण इति—घर्षणप्रयोजकः। पातव्यक्षारोदकस्य विधानं विषयञ्चाह, पानीय इत्यादि।—पानीय इति पातव्यो यः क्षारः, तं क्षारं षड्गुणे चतुर्गुणे वा जले पाकं विनैव एकविंशतिवारान् प्रतिस्राव्य क्षारोदकं ग्राह्यम्। अन्ये तु चतुर्गुणे जले पक्का अर्द्धावशिष्टं कृत्वा कल्कमपसार्य्य क्षारोदकम् एकविंशतिवारान् परिस्रावयेदेव न प्रतिसारणीयक्षारवत् अस्य पुनःपाक इति तान् पद्यार्थे इत्याह। विश्वामित्रोऽप्याह,—"पानाय भावनार्थाय परिस्राव्य चतुर्गुणे। जले चार्द्धावशिष्टे च क्षाराम्भो ग्राह्यमिष्यते॥" इति पानाय सद्भावन क्षारोदकविधानं तदर्थमित्यर्थः। पानीयक्षारमात्रा च पलत्रिकर्षार्द्धपलानि क्रमादुत्तममध्यमाधमबलानलविषया ज्ञेया॥ ४७॥

क्षारसूत्रम्।—

भावितं रजनीचूर्णैः स्नुहीक्षीरे पुनः पुनः।
बन्धनात् सुदृढं सूत्रं छिनत्त्यर्शो भगन्दरम्॥
प्राग्दक्षिणं ततो वामं पृष्ठजञ्चाग्रजं क्रमात्।
पञ्चतिक्तेन संस्वेद्य दहेत् क्षारेण वह्निना॥
वातजं श्लेष्मजञ्चार्शः क्षारेणास्त्रज-पित्तजे।
महान्ति तनुमूलानि छित्त्वैव बलिनो दहेत्॥
चर्मकीलं तथा छित्त्वा दहेदन्यतरेण वा।
पक्वजम्बूपमो वर्णः क्षारदग्धः प्रशस्यते॥ ४८॥
गोजीशेफालिकापत्रैर्वा संलिख्य लेपयेत्।
क्षारेण वाक्शतं तिष्ठेद् यन्त्रद्वारं पिधाय च॥
तन्नापनीय वीक्षेत पक्वजम्बूफलोपमम्।

---

क्षारसूत्रमाह—भावितमित्यादि। पुनःपुनरिति—सप्तकृत्व इत्यर्थः। प्राग्दक्षिणमित्यादि।—एतच्च क्रमोपदर्शनं महत्त्वाद्वेगबलविशिष्टपुरुषगम्यं वा; एष च क्रमो यस्य चतुर्ष्वेव पार्श्वेष्वर्शांसि सन्ति तं प्रत्येव बोध्यः, यस्य पुनरेकतमपार्श्वे, तस्य तदेव दहनीयम्; एष च क्रमः क्षारे क्षारसूत्रेऽप्यौ च। पृष्ठजमिति।—पश्चादीय समीपस्थम्, यस्य च दाहो दूरवेदैर्न क्रियते यान्त्रायणात्। पञ्चतिक्तेनेति।—पञ्चतिक्तघृतेन पानादिना स्नेहयित्वेत्यर्थः। क्षारेण वह्निना च उभयमेव श्लेष्मजं वातजञ्च दहेत्। रक्तजे पित्तजे पुनः क्षारेणैव दहेत्। क्षारो हि सर्वदैवोचितः। यदाह सुश्रुतः,—"क्षारः सर्वशस्त्रानुशस्त्राणां श्रेष्ठः" इति। अन्यतरेणेति—क्षारेण वह्निना वा। क्षारेण सम्यग्दग्धस्य लक्षणमाह—पक्वेत्यादि।—पक्वजम्बूसमः स्निग्धकृष्णवर्ण इत्यर्थः॥ ४८

प्रतिसारणीयक्षारे यथोपयुक्तमाह गोजीत्यादि।—गोजी शाखोटकः। क्षारेण लेपयेदित्यन्वयः। मन्त्राद्यक्षरोच्चारणकाली वाक्, तच्छतः शतं, कौटौगतं वा। यन्त्रद्वारं गुदस्थितयन्त्रस्य द्वारं, पिधाय कर्पटादिना छादयित्वा। पक्वजम्बूफलोपम—मल्पदग्धं, कोमलाभं तु लोहितं भवति। यदाह वाग्भटः,—"पक्वजम्बूनिभं सम्यग्दग्धं विपर्ययात्। ताम्राभं तोदकण्डुाढ्यं दुर्गन्धं तत् पुनर्दहेत्।

यदि च स्यात् ततो भद्रं नो चेच्छिन्द्यात् तथा पुनः ॥
तत् तुषाम्बुप्लुतं साज्यं यष्टीकल्केन लेपयेत् ।
न निम्नं तालवर्णाभं वह्निदग्धं स्थितासृजम् ॥
निर्वाप्य मधुसर्पिर्भ्यां वह्निसञ्जातवेदनाम् ।
सम्यग्दग्धे तुगाक्षीरी-प्लक्षचन्दनगैरिकैः ॥
सामृतैः सर्पिषा युक्तैरालेपं कारयेद्भिषक् ।
सुखंसमुपविश्याथो तोयपूर्णेऽथ भाजने ॥
क्षारसुखाम्बुना पाय्यं विबन्धे मूत्रवर्चसोः ।
दाहे वस्त्यादिजे लेपः शतधौतेन सर्पिषा ॥
नवान्नं माषतक्रादि सेव्यं पाकाय जानता ।
पिबेद्व्रणविशुद्ध्यर्थं वराक्वाथं सगुग्गुलुम् ॥
जीर्णे शाल्यन्नमुद्गादि पथ्यं तिक्ताज्यसैन्धवम् ।
रूढसर्वव्रणं वैद्यः क्षारं दत्त्वानुवासयेत् ।
पिप्पल्याद्येन तैलेन सेवेद्दीपनपाचनम् ॥ ४८ ॥

---

अतिदग्धे सवेदना मूर्च्छादाहज्वरादयः । गुदे विशेषाद्विण्मूत्रसंरोधो बलिवर्त्मनम् । वातपित्तप्रशमनी शीता सर्व क्रिया हिता ॥" इति । तुषाम्बु काञ्जिकम् । न निम्नमित्यादिना सम्यग्वह्निदग्धलक्षणम् । वह्निदग्धमिति ।—वह्निना सम्यग्दग्धं, न निम्नमित्यादि लक्षणयुक्तं भवतीत्यर्थः । तालवर्णाभमिति ।—पक्वतालसमवर्णम् । ताम्रवृन्ताभमिति पाठेऽपि—पक्वताम्रवृन्तसमवर्णमित्यर्थः । स्थितासृजमिति ।—स्थितरक्तम्, एतच्च यदा अर्शश्छित्वा दह्यते तदा ज्ञेयम् । दाहश्च शिरामुखोपलक्षणेन रक्तस्तम्भक इति । दाहानन्तरं यद्विधेयं तदाह, निर्वाप्येत्यादि ।—सम्यग्दग्धे शमीत्यर्थे । तुगाक्षीरी वंशलोचना, तदभावे तालक्षीरी, प्लक्ष. पर्कटिः, तस्य वल्कलम्, अमृता गुडूची । यद्यपि गुडूची पाकादुष्णवीर्या तथापि स्पर्शाच्छीतैव, यथा काञ्जिकमम्लमपि भक्षणात् पित्तकरं स्पर्शेन शीतमिति कृत्वा पित्तहरं भवति, तेन गुडूच्या निर्वापणत्वं चिन्त्यमिति केनचिदुक्तं, तदप्यपास्तम्; किं वा उष्णवीर्याया अपि गुडूच्या द्रव्यान्तरसंयोगमहिम्नैवात्र दाहप्रशमकत्वं ज्ञेयम् । तोयपूर्णे इति ।—कोष्णतोयपूर्णे इत्याहुः । क्षारसुखाम्बुनेति ।—क्षारं यवक्षारम् । वराक्वाथमिति ।—वरा त्रिफला,

अग्निमुखं लौहम्।—

त्रिवृच्चित्रकनिर्गुण्डी-स्नुहीमुण्डितिकाञ्जटाः।
प्रत्येकशोऽष्टपलिका जलद्रोणे विपाचयेत्॥
पलत्रयं विडङ्गस्य व्योषात् कर्षत्रयं पृथक्।
त्रिफलायाः पञ्चपलं शिलाजतुपलं न्यसेत्॥
दिव्यौषधिहतस्यापि वैकङ्कतहतस्य वा।
पलद्वादशकं देयं रुक्मलौहस्य चूर्णितम्॥
पलैश्चतुर्विंशतिभिर्मधुशर्करयोर्युतम्।
घनीभूते सुशीते च दापयेदवतारिते॥
एतदग्निमुखं नाम दुर्नामान्तकरं परम्।
मन्दमग्निं करोत्याशु कालाग्निसमतेजसम्॥

---

तिक्ताज्यं पञ्चतिक्तघृतम्। क्षारं दद्यादिति।—क्षारवस्तिं दत्त्वा, क्षारवस्तिदानानन्तरं पिप्पल्याद्येन तैलेनानुवासयेदित्यर्थः॥ ४८॥

प्रसिद्धत्वादग्निमुखलौहमाह, त्रिवृच्चित्रकेत्यादि।—अत्र मुण्डितिका मुण्डिरी, जटा भूम्यामलकी। अस्याः स्थाने जटेति पाठे—त्रिवृदादीनां मूलमित्यर्थः। एषाञ्च जलद्रोणे क्वाथचतुर्भागावशिष्टे षोडशपलावशेषोऽर्थवशादेव सिद्धः। पृथगित्यनेन—व्योषस्य प्रत्येकं त्रिकर्षमानत्वम्; त्रिफलायाश्च मिलित्वा पञ्च पलानि। एषाञ्च विडङ्गादिशिलाजतुपर्यन्तानां पाकावतारसमये प्रक्षेपः। दिव्यौषधिः स्वर्णमाक्षिकं, मनःशिला वा, कालिकोकरणी वा। अन्यत्र तु मनःशिलाहततस्येति पाठान्तरदर्शनात् मनःशिलेति युक्तम्। लौहमारकत्वात् तु सर्वाण्येवाविरुद्धानि। वैकङ्कतहतस्य वेति।—वह्निभस्त्रा वह्निधौतेति ख्यातं, वारेन्द्रादिषु वदोकडीति ख्यातम्। किन्तु स्वर्णमाक्षिकादिकं विना सम्यग् लौहमारणं न सिध्यति; अपरं तत्साधनद्वयमनु-सन्धेनादि कर्तव्यम्। रुक्मलौहं—कान्तव्यतिरिक्तं षट्पञ्चादिलक्षणलौहम्, तदुक्तं निघण्टौ—"लौहमयसमुद्दायपिण्डं रुक्म रुक्मकुद्धिः स्वर्णलौहमाहि"। एता-वृत्तस्यापि मधुघृतस्य चतुर्विंशतिपलानि पाकावस्थामध्य एव, इत्यत्रैवेति, घृतं विना कश्चिदपि लौहस्य पाकादर्शनात्, अत एव कश्चित् पलैश्चतुर्विंशत्याज्यमधुशर्करा-युतमिति पाठान्तरं केचित् पठन्ति। मधुशर्करयोश्चतुर्विंशतिपलानि मिलित्वा;

पर्वता अपि जीर्य्यन्ति प्राशनादस्य देहिनः।
गुरुद्रव्याण्यपानानि पयो मांसरसो हितः॥
दुर्नामपाण्डुश्वयथु-कुष्ठप्लीहोदरापहम्।
अकालपलितश्चैतदामवातगुदामयम्॥
न स रोगोऽस्ति यश्चापि न निहन्यादिदं क्षणात्॥
करीरकाञ्जिकादीनि ककारादीनि वर्जयेत्।
स्रवत्यतोऽन्यथा लौहं देहात् किट्टञ्च दुर्जरम्॥ ५०॥

भल्लातकलौहम्।—

चित्रकं त्रिफला मुस्तं ग्रन्थिकं चविकाऽमृता।
हस्तिपिप्पल्यपामार्ग-दण्डोत्पलकुठेरकाः॥
एषां चतुष्पलान् भागान् जलद्रोणे विपाचयेत्।
भल्लातकसहस्रे द्वे छित्त्वा तत्रैव दापयेत्॥
तत्र पादावशेषेण लौहपात्रे पचेद्भिषक्।
तुलार्द्धं तीक्ष्णलौहस्य घृतस्य कुड़वद्वयम्॥
त्र्यूषणं त्रिफला वह्निः सैन्धवं विड़मौद्भिदम्।
सौवर्चलविड़ङ्गानि पलिकांशानि कल्पयेत्॥
कुड़वं वृद्धदारस्य तालमूल्यास्तथैव च।

---

शर्करामृताभ्यां पाकं रात्रिपर्य्युषिते लौहे मधुनः प्रक्षेपः, तेन शर्करायाः द्वादशपलानि, मधुनो द्वादश पलानि, घृतस्य च चतुर्विंशतिपलानीति। अयश्चतुर्विधिमतस्मार-लौहवत्॥ ५०॥

भल्लातकलौहे कुठेरकः पर्णासः। "भल्लातकसहस्रे द्वे" इत्याकृतिमानात्। तत्रैवेति—जलद्रोणे। तीक्ष्णलौहस्येति—पञ्चपाण्ड्वादिलौहस्य। गव्यघृतस्य कुड़वद्वय-मिति द्वैगुण्यात् षोडश पलानि, एवं मधुनोऽपि। सिद्धे च त्र्यूषणादीनां प्रक्षेपः;

शूरणस्य पलान्यष्टौ चूर्णं कृत्वा विनिक्षिपेत् ॥
सिद्धे शीते प्रदातव्यं मधुनः कुडवद्वयम्।
प्रातर्भोजनकाले च ततः खादेद्यथाबलम् ॥
अर्शांसि ग्रहणीदोषं पाण्डुरोगमरोचकम्।
क्रिमिगुल्माश्मरीमेहान् शूलञ्चाशु व्यपोहति ॥
करोति शुक्रोपचयं वलीपलितनाशनम्।
रसायनमिदं श्रेष्ठं सर्वरोगहरं परम् ॥ ५१ ॥
रसगुडिका—रसस्तु पादिकस्तुल्या विडङ्गमरिचाभ्रकाः।
गङ्गापालङ्कजरसे खल्लयित्वा पुनः पुनः ॥
रक्तिमात्रा गुडार्शोघ्नी वह्नेरत्यर्थदीपनी ॥ ५२ ॥
वेगावरोधस्त्रीपृष्ठ-यानमुत्कटुकासनम्।
यथास्वं दोषलञ्चान्नमर्शसः परिवर्जयेत् ॥ ५३ ॥

इति अर्शश्चिकित्सा।

---

सर्वमपरमनतमांसवत्। अत्रामृतसारोक्तविधिना पुटितं यथाप्राप्ति प्रत्यग्रीकृतस्य पुटितस्य लौहं ग्राह्यं, अभ्रकादिविधिरपि तथैव ॥ ५१ ॥

रसस्तु पादिक इति।—विडङ्गादीनामेकतमभागापेक्षया; तेन विडङ्गमरिचाभ्रकाणां प्रत्येकं त्रयो भागाः, पारदस्त्वेको भाग इत्यर्थः। शोधितपारद २ माषा, मारिताभ्रचूर्णं विडङ्ग मरिच प्र° ६ माषा। ग्रन्थान्तरेऽपि रसभागापेक्षया विडङ्गमरिचाभ्रकाणां प्रत्येकं भागत्रयमुक्तम्। गङ्गापालङ्केति।—पालङ्कमहापत्रं गङ्गापालङ्कं, गाङ्गशाक इति ख्यातम्। पुनः पुनरिति।—सप्ताहमात्रं क्रमं नियम इत्यर्थः। रसाभ्रकशोधनञ्च सुधानिध्युक्तविधिनैव विधेयम्। पृष्ठयानं—हस्त्यश्वादिपृष्ठे गमनम् ॥ ५२ ॥ ५३ ॥

इति अर्शश्चिकित्सा।

## अथाग्निमान्द्यादि-चिकित्सा ।

समस्य रक्षणं कार्यं विषमे वातनिग्रहः ।
तीक्ष्णे पित्तप्रतीकारो मन्दे श्लेष्मविशोधनम् ॥ १ ॥

हिङ्ग्वष्टकं चूर्णम् ।—

त्रिकटुकमजमोदा सैन्धवं जीरके द्वे
समधरणधृतानामष्टमो हिङ्गुभागः ।
प्रथमकवलभुक्तं सर्पिषा चूर्णमेतत्
जनयति जठराग्निं वातरोगांश्च हन्यात् ॥ २ ॥

समयवशूकमहौषधचूर्णं लीढं घृतेन गोसर्गे ।
कुरुते क्षुधां सुखोदकपानं विश्वौषधं चैकम् ॥ ३ ॥

भक्तमण्डं पिबेत्तुष्णं हिङ्गुसौवर्चलान्वितम् ।
विषमोऽपि समस्तेन मन्दो दीप्येत पावकः ॥ ४ ॥

अथ [illegible] समस्येत्यादि । रक्षण-मिति पालनम् । वातनिग्रह —वातस्य प्रशमनमित्यर्थः ॥ १ ॥

त्रिकटुकमित्यादि । [illegible] अजमोदा यमानी, [illegible] इति समधरणधृतानामिति —[illegible] अष्टमो हिङ्गुभाग इति —[illegible] ॥ २ ॥

समयवेत्यादि ।—[illegible] ॥ ३ ॥

भक्तमण्डमित्यादि ।—[illegible] ॥ ४ ॥

अथ मण्डगुणाः।—

क्षुद्बोधनो वस्तिविशोधनश्च प्राणप्रदः शोणितवर्द्धनश्च।
ज्वरापहारी कफपित्तहन्ता वायुं जयेदष्टगुणो हि मण्डः॥५॥

तीक्ष्णाग्निचिकित्सा।

नारीक्षीरेण संयुक्तां पिबेदौडुम्बरीं त्वचम्।
ताभ्यां वा पायसं सिद्धं पिबेदत्यग्निशान्तये॥
यत्किञ्चित् गुरु मेध्यञ्च श्लेष्मकारि च भेषजम्।
सर्वं तदत्यग्निहितं भुक्त्वा प्रस्वपनं दिवा॥६॥
मुहुर्मुहुरजीर्णेऽपि भोज्यमस्योपकल्पयेत्।
निरिन्धनोऽन्तरं लब्ध्वा यथैनं न निपातयेत्॥७॥
विश्वाभयागुडूचीनां कषायेण षडूषणम्।
पिबेत् श्लेष्मणि मन्देऽग्नौ त्वक्पत्र-सुरभीकृतम्॥

---

क्षुद्बोधन इत्यादि।—अष्टगुणो हि मण्ड इति।—यद्यपि माधवकरेण द्रव्यगुणे—"सुतण्डुलानां प्रसृतद्वयस्य तदष्टभिः षड्भिरथ जलम्। कुस्तुम्बुरौ सैन्धवहिङ्गुतैलम् पक्त्वा सर्वैः क्रियते हि मण्डः॥" इत्यादिवचनानन्तरं क्षुद्बोधन इत्यादि पद्यं पठितं, तथाप्यष्टमण्डस्यापि मण्डत्वसामान्यादेतत् गुणाष्टकं ज्ञेयम्। कुस्तुम्बुरी धन्याकं, तत्र सतण्डुलं पात्रं, विधिः पुनरस्य यथोक्तमानौ तण्डुलमुद्गौ तत-जले भृष्ट्वा दत्त्वा विपाच्य मण्डो ग्राह्यः। पश्चात् त्रिकटुकादिभिर्यथा संस्कार इति॥५॥

अत्यग्निचिकित्सामाह, नारीक्षीरेणेत्यादि।—उडुम्बरत्वक् कर्षं, पायसपक्षे तु—उडुम्बरत्वचः पलं, तन्मूनं नारीक्षीरचतुर्गुणं दत्त्वा पायसः कार्यः। यत्किञ्चि-दित्यादि—माहिषीदुग्धादि॥६॥

मुहुर्मुहुरित्यादि।—तथाऽजीर्णेऽपि मुहुर्मुहुर्भोज्यमस्योपकल्पयेत्, यथा निरिन्धनोऽग्निः, अवसरमित्यवकाशं लब्ध्वा, एनमातुरं न निपातयेत् न मारयेत्, धातु-दाहादिति भावः। उक्तं हि—"आहारमग्निः पचति दोषानाहारवर्जितः। धातून् क्षीणेषु दोषेषु न जीवेद्धातुसंक्षये॥" इति॥७॥

विश्वाभयेत्यादि।—त्वक् गुडत्वक्; त्वक्पत्रे सुरभिमात्रकारके द्वे। एव-

पञ्चकोलं समरिचं षडूषणमुदाहृतम् ॥ ८ ॥
हरीतकी भक्ष्यमाणा नागरेण गुडेन वा ।
सैन्धवोपहिता वापि सातत्येनाग्निदीपनी ॥ ९ ॥

सिन्धूत्थपथ्यमगधोद्भववह्निचूर्ण-
मुष्णाम्बुना पिबति यः खलु नष्टवह्निः ।
तस्यामिषेण सघृतेन वरं नवान्नं
भस्मीभवत्यशितमात्रमिह क्षणेन ॥ १० ॥
सिन्धूत्थहिङ्गुत्रिफलायमानी-
व्योषैर्गुडांशैर्गुडिकां प्रकुर्य्यात् ।
तैर्भक्षितैस्तृप्तिमवाप्नुवन् ना
भुञ्जीत मन्दाग्निरपि प्रभूतम् ॥ ११ ॥

---

कोष्ठ समरिचं षडूषणमिति —चरके —"मरिचं पिप्पली [illegible] [illegible] [illegible]। पिप्पलीमूलसंयुक्तं [illegible]। [illegible] [illegible] [illegible] षडूषणम् ॥" इति। [illegible] षडूषणं [illegible] ॥ ८ ॥

हरीतकीत्यादि।—सुगमम्। [illegible] [illegible] [illegible], गुडेन [illegible], सैन्धवेन [illegible], [illegible] ॥ ९ ॥

सिन्धूत्थेत्यादि।—पथ्या हरीतकी, [illegible] [illegible]। [illegible] पिप्पली, वह्निः [illegible]। [illegible]—[illegible] [illegible], [illegible] [illegible]। [illegible] [illegible] [illegible] [illegible] [illegible]। [illegible]—"हरीतकी [illegible] [illegible] [illegible] पिप्पली। [illegible] [illegible] [illegible] [illegible] [illegible]॥" इति। [illegible] [illegible] ॥ १० ॥

सिन्धूत्थेत्यादौ—[illegible]—[illegible] [illegible], [illegible] [illegible] [illegible] [illegible] [illegible] [illegible] [illegible] [illegible]। [illegible] [illegible] [illegible] [illegible], [illegible] [illegible] [illegible], [illegible] [illegible] [illegible] [illegible] [illegible]। [illegible]।—[illegible]

विडङ्गभल्लातकचित्रकामृताः
सनागरास्तुल्यगुडेन सर्पिषा ।
लिहन्ति ये मन्दहुताशना नरा
भवन्ति ते वाडवतुल्यवह्नयः ॥ १२ ॥
गुडेन शुण्ठीमथवोपकुल्यां
पथ्यातृतीयामथ दाडिमं वा ।
आमेष्वजीर्णेषु गुदामयेषु
वर्चोविबन्धेषु च नित्यमद्यात् ॥ १३ ॥
भोजनाग्रे सदा पथ्यं जिह्वाकण्ठविशोधनम् ।
अग्निसन्दीपनं हृद्यं लवणार्द्रकभक्षणम् ॥ १४ ॥

---

यावत् प्रसूतं भुङ्क्ते यावत् हरिमवाप्नोति । [illegible] पाठे—[illegible] [illegible] न हरिमाप्नोतीत्यर्थः ॥ ११ ॥

विडङ्गेत्यादौ—तुल्यगुडेनेत्यत्र द्रुता [illegible], [illegible] [illegible] गुड । [illegible] लिहन्तीति व्याख्यानयन्ति केचित् । अन्ये तु—तुल्यगुडेनेत्यत्र सर्पिषेत्यत्र वर्त्तिता [illegible] विगुणेन मिलिता गुडसर्पिषा [illegible] इति व्याचक्षते ; [illegible], [illegible] ; तथा हि—"[illegible] गुडघृतः विडङ्गभल्लातक[illegible] । [illegible] [illegible] [illegible] गुडसर्पिषा लीढा ॥" इति ॥ १२ ॥

गुडेन शुण्ठीमित्यादि ।—पथ्यातृतीयामिति [illegible] । तत्र [illegible] पक्षे गुडेनेति पदं, तथा पथ्यातृतीयामिति [illegible] [illegible] [illegible] योज्यम्, [illegible] गुडेन पथ्यातृतीया शुण्ठीमित्येको योगः ; तथा गुडेन पथ्यातृतीयामुपकुल्यामिति द्वितीयः ; तथा गुडेन पथ्यातृतीयं दाडिममिति [illegible] [illegible] योज्यमिति योगत्रयं [illegible] [illegible] योज्यम् । [illegible] [illegible] [illegible] [illegible] [illegible] [illegible] [illegible] । [illegible] [illegible] [illegible] गुडेनेति पदं [illegible] [illegible] [illegible] [illegible] [illegible] [illegible] [illegible] [illegible] [illegible] योज्या । [illegible] [illegible] [illegible] [illegible] ॥ १३ ॥

कपित्थतक्रचाङ्गेरी-मरिचाजाजिचित्रकैः।
कफवातहरो ग्राही खड़ो दीपनपाचनः ॥ १५ ॥

शार्दूलकाञ्जिकः।—

पिप्पली शृङ्गवेरञ्च देवदारु सचित्रकम्।
चविकां बिल्वपेषीञ्चाजमोदाञ्च हरीतकीम् ॥
महौषधं यमानीञ्च धान्यकं मरिचं तथा।
जीरकञ्चापि हिङ्गुञ्च काञ्जिकं साधयेद्भिषक् ॥
एष शार्दूलको नाम काञ्जिकोऽग्निबलप्रदः।
सिद्धार्थतैलसम्भृष्टो दश रोगान् व्यपोहति ॥
कासं श्वासमतीसारं पाण्डुरोगं सकामलम्।
आमञ्च गुल्मशूलञ्च वातगुल्मं सवेदनम् ॥
अर्शांसि श्वयथुञ्चैव भुक्ते पीते च सात्म्यतः।
क्षीरपाकविधानेन काञ्जिकस्यापि साधनम् ॥ १६ ॥

अग्निमुखं चूर्णम्।—

हिङ्गुभागो भवेदेको वचा च द्विगुणा भवेत्।
पिप्पली त्रिगुणा चैव शृङ्गवेरं चतुर्गुणम् ॥

---

भीरुकादि इत्यादि स्पष्टम्।—[illegible] भवत्वात् ॥ १४ ॥

कपित्थेत्यादौ—कफवातहर इत्येव पाठः, न तु कफपित्तहर इति, [illegible] कपित्थादीनां वातकफघ्नत्वात्। [illegible] इति—[illegible] [illegible] [illegible] ॥ १५ ॥

पिप्पल्यादौ—बिल्वपेषी बिल्वशलाटु [illegible] [illegible]। [illegible] [illegible] [illegible] [illegible], [illegible] [illegible] [illegible] [illegible]। [illegible]। क्षीरपाकविधानेनेति—[illegible] [illegible]। [illegible]—"[illegible]" इति ॥ १६ ॥

यमानिका पञ्चगुणा षड्गुणा च हरीतकी ।
चित्रकं सप्तगुणितं कुष्ठञ्चाष्टगुणं भवेत् ॥
एतद्वातहरं चूर्णं पीतमात्रं प्रसन्नया ।
पिवेद् दध्ना मस्तुना वा सुरया कोष्णवारिणा ॥
मोदावर्त्तमजीर्णञ्च प्लीहानमुदरं तथा ।
अङ्गानि यस्य शीर्य्यन्ते विषं वा येन भक्षितम् ॥
अर्शोहरं दीपनञ्च श्लेष्मघ्नं गुल्मनाशनम् ।
कासं श्वासं निहन्त्याशु तथैव यक्ष्मनाशनम् ॥
चूर्णमग्निमुखं नाम न क्वचित् प्रतिहन्यते ॥ १७ ॥

पानीयभक्तगुड़िका ।—

रसोऽर्द्धभागिकस्तुल्या विड़ङ्गमरिचाभ्रकाः ।
भक्तोदकेन सम्मर्द्य कुर्य्याद् गुञ्जानिभान् गुड़ीन् ॥
भक्तोदकानुपानेका सेव्या वह्निप्रदीपनी ।
वार्य्यन्नभोजनञ्चात्र प्रयोगे सात्म्यमिष्यते ॥ १८ ॥

बृहदग्निमुखं चूर्णम् ।—

द्वौ क्षारौ चित्रकं पाठा-करञ्जलवणानि च ।
सूक्ष्मैलापत्रकं भार्गी क्रिमिघ्नं हिङ्गु पौष्करम् ॥

---

हिङ्ग्वाद्य इत्यादौ—हिङ्ग्वादिभागापेक्षया एवं द्विगुणेति। प्रसन्नयेति—मदिरामण्डपाने, दध्नेति गुड़पाने, मस्तुनेति अम्लरसपाने, सुरया कफपाने, उष्णवारिणा आमशाने कार्य्ये च ॥ १७ ॥

पानीयभक्तगुड़िकायां—रसोऽर्द्धभागिक इत्येकभागापेक्षया ; केचित्तु कल्पितार्थं रसस्यार्द्धं गन्धकं क्षिपन्ति। विड़ङ्गादीनां प्रत्येकं रसापेक्षया द्विगुणो भागः। चक्रेऽधिकारोक्तभक्तगुड़िकायान्तु विड़ङ्गादीनां रसापेक्षया प्रत्येकं त्रिगुणो भाग इति भेदः। भक्तोदकेनेत्यन्नभक्तपानीयेन ॥ १८ ॥

बृहदग्निमुखे—क्षारं करञ्जमूलस्य त्वक् ; यत्तु एतच्च मृदुना कोविदार पूर्वार्द्धं फलमिष्यतेन क्षमयचलमुपदिष्टं, तच्छोधनविषयं ज्ञेयम्। लवणानि

शठी दार्वी त्रिवृन्मुस्तं वचा चेन्द्रयवा तथा।
धात्रीजीरकवृक्षाम्लं श्रेयसी चोपकुञ्चिका॥
अम्लवेतसमम्लीका यमानी सुरदारु च।
अभयाऽतिविषा श्यामा हपुषारग्वधं समम्॥
तिलमुष्ककशिग्रूणां कोकिलाक्षपलाशयोः।
क्षाराणि लौहकिट्टञ्च तप्तं गोमूत्रसेचितम्॥
सर्वाणि समभागानि सूक्ष्मचूर्णानि कारयेत्।
मातुलुङ्गरसेनैव भावयेच्च दिनत्रयम्॥
दिनत्रयञ्च शुक्तेन चार्द्रकस्वरसेन च।
अत्यग्निकारकं चूर्णं प्रदीप्ताग्निसमप्रभम्॥
उपयुक्तविधानेन नाशयत्यचिराद्गदान्।
अजीर्णकमथो गुल्मं प्लीहानं गुदजानि च॥
उदराण्यन्त्रवृद्धिञ्च अष्ठीलां वातशोणितम्।
प्रणुदत्युल्बणान् रोगान् नष्टमग्निञ्च दीपयेत्॥
समस्तव्यञ्जनोपेतं भक्तं दत्त्वा सुभाजने।
दापयेदस्य चूर्णस्य बिडालपदमात्रकम्।
गोदोहमात्रात् तत् सर्वं द्रवीभवति सोष्मकम्॥ १८॥

---

[illegible], [illegible], श्रेयसी गजपिप्पली, [illegible], [illegible] उपकुञ्चिका [illegible] [illegible] [illegible], [illegible] श्यामा वृद्धदारकः, आरग्वधः [illegible], [illegible], [illegible] मुष्ककः [illegible], लौहकिट्टं मण्डूरं, तप्तं पुराणं [illegible]। [illegible] [illegible] [illegible] [illegible] [illegible]।— [illegible] [illegible] [illegible]

भास्करलवणम् ।—

पिप्पली पिप्पलीमूलं धन्याककृष्णजीरकम् ।
सैन्धवञ्च विड़ञ्चैव पत्रं तालीशकेशरम् ॥
एषां द्विपलिकान् भागान् पञ्च सौवर्चलस्य च ।
मरिचाजाजिशुण्ठीनामेकैकस्य पलं पलम् ॥
त्वगेले चार्द्धभागे च सामुद्रात् कुड़वद्वयम् ।
दाड़िमात् कुड़वञ्चैव द्वे पले चाम्लवेतसात् ॥
एतच्चूर्णीकृतं सूक्ष्मं गन्धाढ्यममृतोपमम् ।
लवणं भास्करं नाम भास्करेण विनिर्मितम् ॥
जगतस्तु हितार्थाय वातश्लेष्मामयापहम् ।
वातगुल्मं निहन्त्येतद् वातशूलानि यानि च ।
तक्रमस्तुसुरासीधुशुक्तकाञ्जिकयोजितम् ॥
जाङ्गलानान्तु मांसेन रसेषु विविधेषु च ।
मन्दाग्नेरश्नतः शक्तो भवेदाश्वेव पावकः ॥
अर्शांसि ग्रहणीदोषं कुष्ठामयभगन्दरान् ।
हृद्रोगमामदोषांश्च विविधानुदरस्थितान् ॥
प्लीहानमश्मरीञ्चैव श्वासकासोदरक्रिमीन् ।
विशेषतः शर्करादीन् रोगान् नानाविधांस्तथा ।
पाण्डुरोगांश्च विविधान् नाशयत्यर्भमिर्यथा ॥ २० ॥

अग्निमुखम्—पिप्पली पिप्पलीमूलं चित्रको हस्तिपिप्पली ।
हिङ्गु चव्याजमोदा च पञ्चैव लवणानि च ॥

---

भास्करलवणे—केशरं नागकेशरपुष्पम् । पञ्च सौवर्चलस्येति ।—पञ्च पलानि सौवर्चलस्येत्यर्थः । त्वगेले चार्द्धभागे च इति—पलार्द्धेपदार्था, तेन त्वगेलयोः प्रत्येकमर्द्धपलमित्यर्थः । गन्धाढ्यमिति ।—एवतालीशादिद्रव्ययोगादेव, न पुनरन्यगन्धानुगतप्रक्षेपेण ॥ २० ॥

द्वौ क्षारौ चव्युपा चैव दद्यादर्द्धपलोन्मितान् ।
दधिकाञ्जिकशुक्तानि स्नेहमात्रासमानि च ॥
आर्द्रकस्वरसप्रस्थं घृतप्रस्थं विपाचयेत् ।
एतदग्निघृतं नाम मन्दाग्नीनां प्रशस्यते ॥
अर्शसां नाशनं श्रेष्ठं तथा गुल्मोदरापहम् ।
ग्रन्थ्यर्बुदापचीकास-कफमेदोऽनिलानपि ।
नाशयेद् ग्रहणीदोषं श्वयथुं सभगन्दरम् ॥
ये च वस्तिगता रोगा ये च कुक्षिसमाश्रिताः ।
सर्वांस्तान् नाशयत्याशु सूर्यस्तम इवोदितः ॥ २१ ॥

मस्तुषट्पलकं घृतम् ।—

पलिकैः पञ्चकोलैस्तु घृतं मस्तुचतुर्गुणम् ।
सक्षारैः सिद्धमस्याग्निं कफगुल्मं विनाशयेत् ॥ २२ ॥

वडवासुखचूर्णम् ।—

पथ्यानागरकृष्णाकरञ्जविल्वाग्निभिः सितातुल्यैः ।
वडवासुखं विजयते गुरुतरमपि भोजनं चूर्णम् ॥ २३ ॥

१८४ चित्रकघृतम् —भल्लातकसहस्रार्द्धं जलद्रोणे विपाचयेत् ।
अष्टभागावशेषञ्च कषायमवतारयेत् ॥
घृतप्रस्थं समादाय कल्कानीमानि दापयेत् ।
त्र्यूषणं पिप्पलीमूलं चित्रको हस्तिपिप्पली ।
हिङ्गु सव्याजमोदा च पञ्चैव लवणानि च ।
द्वौ क्षारौ चव्युपा चैव दद्यादर्द्धपलोन्मितान् ॥

पिप्पल्यादि —आयादिपुस्तके हस्तिपिप्पली [illegible] . अजमोदा अजगन्धा (यवानी), द्वौ क्षारौ यवक्षारः सर्जिकाक्षारश्च ॥ २१ ॥

मस्तुषट्पलके पुस्तक [illegible] —"वर्धितं [illegible]" [illegible] [illegible] [illegible], [illegible] [illegible] ॥ २२ ॥ २१ ॥

दधिकाञ्जिकयुक्तानि स्नेहमात्रासमानि च ।
आर्द्रकस्वरसञ्चैव शोभाञ्जनरसं तथा ॥
तत्सर्वमेकतः कृत्वा शनैर्मृद्वग्निना पचेत् ।
एतदग्निघृतं नाम मन्दाग्नीनां प्रशस्यते ॥
अर्शसां नाशनं श्रेष्ठं मूढवातानुलोमनम् ।
कफवातोद्भवे गुल्मे श्लीपदे च दकोदरे ॥
शोथं पाण्ड्वामयं कासं ग्रहणीं श्वासमेव च ।
एतान् विनाशयत्याशु तमः सूर्य्य इवोदितः ॥ २० ॥

क्षारगुडः—द्वे पञ्चमूले त्रिफलामर्कमूलं शतावरीम् ।
दन्तीं चित्रकमास्फोतां रास्नां पाठां सुधां शटीम् ॥
पृथग्दशपलान् भागान् दग्ध्वा भस्म समावपेत् ।
त्रिःसप्तकृत्वस्तद्भस्म जलद्रोणे च गालयेत् ॥
तद्रसं साधयेदग्नौ चतुर्भागावशेषितम् ।
ततो गुडतुलां दत्त्वा साधयेन्मृदुनाग्निना ॥
सिद्धं गुडन्तु विज्ञाय चूर्णानीमानि दापयेत् ।
वृश्चिकालीं द्विकाकोल्यौ यवक्षारं समावपेत् ॥
एते पञ्चपला भागाः पृथक् पञ्च पलानि च ।
हरीतकीं त्रिकटुकं सर्जिकां चित्रकं वचाम् ॥
हिङ्ग्वम्लवेतसाभ्याञ्च द्वे पले तत्र दापयेत् ।
अक्षप्रमाणां गुडिकां कृत्वा खादेद् यथाबलम् ॥

---

अग्निघृते—भल्लातकमहत्यादिमित्याकृतिमात्रात् । शोभाञ्जनरसः, शोभाञ्जनस्य मूलत्वच. स्वरसः ॥ २० ॥

क्षारगुडे—आस्फोता नवमल्लिका ( हापरमालि ) इति ख्याता ; सुधा स्नुही, तस्य मूलम् । त्रिःसप्तकृत्व इति—एकविंशतिवारान् वाराभिधेये कृत्वसुच्प्रत्ययः । वृश्चिकाली वृश्चिकपत्री ; काकोल्यौ काकोली-क्षीरकाकोल्यौ । एते पञ्चपला भागाः पृथगिति छेदः । पञ्चपलानीत्यत्र पञ्चानामिति शेषः तेन हरीतक्यादीनां वचान्तानां मिलित्वा

अजीर्णं जरयत्येष जीर्णे सन्दीपयत्यपि ।
भुक्तं भुक्तञ्च जीर्य्येत पाण्डुत्वमपकर्षति ॥
प्लीहार्शःश्वयथुञ्चैव श्लेष्मकासमरोचकम् ।
मन्दाग्निविषमाग्नीनां कफे कण्ठोरसि स्थिते ॥
कुष्ठानि च प्रमेहांश्च गुल्मञ्च व्यपोहति ।
ख्यातः क्षारगुडो ह्येष रोगयुक्ते प्रयोजयेत् ॥ २५ ॥

चित्रकगुडः ।—

मासारोगे विधातव्या या चित्रकहरीतकी ।
विना धात्रीरसं सोऽस्मिन् प्रोक्तश्चित्रगुडोऽग्निदः ॥ २६ ॥

आमाजीर्ण-चिकित्सा ।

वचालवणतोयेन वान्तिरामे प्रशस्यते ॥ २७ ॥

विदग्धाजीर्ण-चिकित्सा ।

अन्नं विदग्धं हि नरस्य शीघ्रं शीताम्बुना वै परिपाकमेति ।
तद्ध्यस्य शैत्येन निहन्ति पित्तमाक्लेदिभावाच्च नयत्यधस्तात् ॥२८॥
विदह्यते यस्य च भुक्तमात्रं दह्येत हृत्कोष्ठगलञ्च यस्य ।

---

अत्र चमत्कीत्यर्थः । द्विगुणवेतसक्षीरपि मिलित्वैव द्वे पले । रोगयुक्ते इति ।—न तु स्वस्थे, धीव्यधातुक्षयभयात् ॥ २५ ॥

मासारोग इत्यादि स्पष्टम् ॥ २६ ॥

अग्निमान्द्याजीर्णयोः परस्परकारणत्वादग्निमान्द्यप्रकरणे एवाजीर्णचिकित्सामाह, वचेत्यादि ।—वचालवणयुक्तेनोष्णोदकेन किंवा अथवा केवलेनोष्णोदकेन मदनफलेन वा वमनम् ॥ २७ ॥

विदग्धाजीर्णचिकित्सामाह, अन्नमित्यादि ।—सुश्रुतस्य । शीताम्बुना परिपाकमेतीति शङ्कां तद्दोषोपपादयति, तज्जरस्येत्यादि ।—जिह्मं देहीं । शैत्येन—शीताम्बु, अजीर्णिनः पित्तं निहन्तीत्यर्थः । आर्द्रीभावादिति—द्रवत्वात् ॥ २८ ॥

विदह्यत इत्यादि ।—सुश्रुतस्य । भुक्तमात्रमिति ।—भक्षणकाले, कालं वा, यावद्

द्राक्षासितामाक्षिकसम्प्रयुक्तां लीढ्वाभयां वै स सुखं लभेत ।
हरीतकी धान्यतुषोदसिद्धा सपिप्पली सैन्धवहिङ्गुयुक्ता ।
सोद्गारधूमं भृशमप्यजीर्णं विजित्य सद्यो जनयेत् क्षुधाञ्च ॥२९॥

### विष्टब्धाजीर्णचिकित्सा ।

विष्टब्धे स्वेदनं पथ्यं पेयञ्च लवणोदकम् ।
रसशेषे दिवास्वप्नो लङ्घनं वातवर्जनम् ॥ ३० ॥

व्यायामप्रमदाध्ववाहनरतक्लान्तानतीसारिणः
शूलश्वासवतस्तृषापरिगतान् हिक्कामरुत्पीडितान् ।

---

भुक्तमित्यर्थः; भुक्तमात्रस्यैव मात्राशब्दो वर्त्तते। किंवा भुक्तमात्रमिति भोजनानन्तरं, तत्कालमेवेत्यर्थः। "यत्र विरुद्धं हि नरस्य भोज्यम्" इत्यादि वाक्यं, तथा— "विदह्यते यस्य तु भुक्तमात्रम्" इत्यादि वाक्यं, तथा—"भवेदजीर्णं प्रति यस्य शङ्का" इत्यादि वचनत्रयं सौश्रुतवचनमनार्षमिति, अजीर्णे भेषजनिषेधस्य स्वयमेव मुनिनोक्तत्वात्, लङ्घनाद्युपदेशाच्च; तत्र तत्र वैनाश्यवैरेण चक्रसेनेन प्रकल्पितं योगत्रयमिदमित्याह निश्चलः। अपरे तु प्रमाणतूरिपाठदर्शनात् योगत्रयमिदमार्षमेव, किन्तु स्वल्पाजीर्णे योज्यमेतत्, प्रभूताजीर्णे तु भेषजसम्बन्धं न कुर्यात्, स्वल्पाजीर्णे तु चौषधं सेव्यमिति। हरीतकीत्यादौ।—धान्यतुषोदः सन्धानविशेषः, तदभावे काञ्जिकं, तेन सिद्धा स्विन्ना ॥ २९ ॥

विष्टब्धाजीर्णचिकित्सामाह, विष्टब्धे इत्यादि।—लवणोदकं सैन्धवयुक्तमुष्णोदकमित्यर्थः। रसशेषे दिवास्वप्न इत्यन्वयोऽपेक्षया; आहारे च लङ्घनमुचितम्। लङ्घनमित्युपवासः; अन्ये तु—लङ्घनशब्देनात्र लाघवकरो विधिरिष्यते, तेन लघुभं यथा ज्वरार्थं काथपानीयमौषधं पाचनीयं तथा स्वेदश्च प्राप्यते, न पुनर्लङ्घनमुपवासः, लौक्यात्म्यत्वादित्याहुः। वातवर्जनमिति—वातस्यासेवनम् ॥ ३० ॥

व्यायामेत्यादि।—रमेति भावे क्तः, रतमनुरक्तिरासक्तिरिति यावत्, तेन व्यायामादौ अतिरतत्वेन ये क्लान्तास्तानित्यर्थः, न तु रत मुरतं, तस्य प्रमदापदेनैव लब्धत्वात्। वाहनञ्च हस्त्यादियानम्। व्यायामादिक्लान्तानाञ्च धातुपुष्ट्यर्थम्। यदुक्तं—"स्वप्नप्रसङ्गाच्च नरो वराह [illegible] पुष्यति" इति। अतीसारे दिवास्वापः कफवर्द्धकतया स्रोतःसंरोधकतया प्रभावाद्वा हितः, स च सर्वातीसारे कफवर्ज्यं ज्ञेयः। शूलश्वासतृषादिषु वात

क्षीणान् क्षीणकफान्विशून् मदहतान् वृद्धान् रसाजीर्णिनो
रात्रौ जागरितावरान्निरशनान् कामं दिवा स्वापयेत् ॥ २१ ॥

आलिप्य जठरं प्राज्ञो हिङ्गुत्र्यूषणसैन्धवैः ।
दिवास्वप्नं प्रकुर्वीत सर्वाजीर्णप्रणाशनम् ॥ २२ ॥

धान्यनागरसिद्धन्तु तोयं दद्याद्विचक्षणः ।
आमाजीर्णप्रशमनं दीपनं वस्तिशोधनम् ॥ २३ ॥

---

मान्द्या प्रभावाद्वा हित । क्षीणानिति—धातुक्षीणान्, तेन सुश्रुतोक्तस्वादिधातु-क्षयेऽपि दिवास्वाप. प्राप्यते । क्षीणकफानिति—स्वतन्त्र, किंवा व्यायामादिभिरपि क्षीण तेन व्यायामादिकक्लान्तान् क्षीणकफानेव दिवा स्वापयेत् । शिशूनाञ्च निद्रा-सात्म्यत्वाच्च दिवानिद्रा । मदहतानिति—मत्तान्, तेषाञ्च मदापहरणार्थं दिवास्वाप । वृद्धान् प्रति धातुपुष्ट्यर्थम् । रसाजीर्णिनो रसविशेषपाकार्थं दिवानिद्रा रात्रावपि, निद्रितस्यैवाहारपाकस्य दृष्टत्वात् । किंच निद्रायास्य शीतस्पर्शादिभिर्गच्छन् देहोष्मा जठरानलमुद्दीपयति, तेन शीघ्रमजीर्णस्य पाक । न च—दिवास्वप्नात् कफ-पित्तयो प्रकोपो भवति ; तदुक्तं चरके—"दिवास्वप्नात श्लेष्मपित्ते प्रकुप्येते" इति, तत्प्रकोपाच्चाग्न्युपघात एव कथं न स्यादिति वाच्य , यत शीतस्पर्शादुपजात-जठराग्निर्जठराजीर्णपाचक एव, न तदा कफपित्तयो. प्रकोप', प्रतिनियतकालिक त्वात् भेषजानामिति । यद्वा कफपित्तप्रकोपस्तथापि नाग्निमान्द्यं, तथाविध-दोषदूष्यसंयोगाभावात्, न चा· नियम., यत कफप्रकोपेऽप्यग्न्युपघात इति, कफपित्तप्रकोपजन्यतिमिरादौ सत्यपि कफपित्तप्रकोपेऽग्न्युपघाताद्दृष्टत्वादिति । रात्रौ जागरितानां जागरणजनितवातक्षोभप्रशमनार्थमेव दिवास्वप्न, स च रात्रिजागरण-कालादर्द्धं कार्य.। यदाह वाग्भट:,—"यथात्म्याज्जागरादर्द्धं प्रात· सुप्यादभ-क्तित." इति । निरशनानिति ।—अत एव हारीते,—"भुक्त्वा स्वप्नमसेवेत स्वस्थोऽप्य-स्वस्थितो भवेत्" इति ॥ २१ ॥

आलिप्येत्यादि स्पष्टम् ॥ २२ ॥

धान्यनागरेत्यादि ।—"कर्षार्द्धे वा कर्षाम्भसो." इत्यादिवचनेन तोयाद्रव्याल्प मानमुक्तं, तेनेहापि तोयात्तोयार्धधान्यनागरयोः समांशमात्रया पक्वे वक्ष्यमाणे धान्य सार्द्धविकर्षमानं नागरन्तु कर्षार्द्धमान ग्राह्यम् । यत्तु धान्यशुण्ठीप्रयोगे "शुण्ठ्याल्प धान्यतस्त्रयम्" इति केनचिदुक्तं, तदनार्षत्वादुपेक्ष्यते । वैद्यप्रचारस्तु शुण्ठ्या: धन्याकस्य , धान्यस्य दश, एव अर्थेनेति ॥ २३ ॥

पथ्यादिकम्—पथ्यापिप्पलिसंयुक्तं चूर्णं सौवर्चलं पिबेत्।
मस्तुनोष्णोदकेनाथ बुद्धा दोषगतिं भिषक्॥
चतुर्विधमजीर्णञ्च मन्दानलमथारुचिम्।
आध्मानं वातगुल्मञ्च शूलञ्चाशु नियच्छति ॥ २४ ॥
भवेदजीर्णं प्रति यस्य शङ्का
स्निग्धस्य जन्तोर्बलिनोऽन्नकाले।
पूर्वं स शुण्ठीमभयामशङ्कः
स प्राश्य भुञ्जीत हितं हिताशी ॥ २५ ॥
किञ्चिदामेन मन्दाग्निरभयागुड़नागरम्।
जग्ध्वा तक्रेण भुञ्जीत युतेनार्द्धं षडूषणैः ॥ २६ ॥

विसूचिका-चिकित्सा।

विसूचिकायां वमितं विरिक्तं सुलङ्घितं वा मनुजं विदित्वा।
पेयादिभिर्दीपनपाचनैश्च सम्यक् क्षुधार्त्तं समुपक्रमेच्च ॥ २७ ॥
कुष्ठसैन्धवयोः कल्कं चुक्रतैलसमन्वितम्।

---

पथ्येत्यादि।—पथ्यादीनां कर्षाणां समो भागः, तच्च मिलित्वा कर्षप्रमाणं ग्राह्यं; "कर्षचूर्णस्य कल्कस्य" इत्यादिवचनात् ॥ २४ ॥

भवेदजीर्णमित्यादि।—सुश्रुतस्य। रसशेषाजीर्णविषयकमिदं वाक्यं, भोजनोपदेशात्। रसशेषे हि स्वल्पदोषः, तेन तदौषधपूर्वकं भोजनं सम्भवतीति। पूर्वमिति—प्रातःकाले, यस्य पुरुषस्याजीर्णं प्रति शङ्का भवेत्, सोऽन्नकाले यस्य पुरुषस्य यः भोजनकालः तस्मिन् शुण्ठीसहिताम् अभयां सम्प्राश्य भुञ्जीतेति योजना; न तु पूर्वं सम्प्राश्य भुञ्जीतेति योज्यं, सम्प्राश्येत्यनेनैव पूर्वकालस्य लब्धत्वादिति ॥ २५ ॥

किञ्चिदित्यादि।—यद्यपि गुड़ेन भुञ्जीतेत्यादि वचनं पूर्वमुक्तं तथापि तक्रषडूषणसम्भवाद् योगान्तरमेवैतद्बोध्यम् ॥ २६ ॥

विसूचिकाचिकित्सामाह, विसूचिकायामित्यादि।—सुश्रुतस्य। पेयादीनाञ्च दीपनपाचनत्वं, दीपन-पाचन-धान्यपञ्चकादि-संस्कारात् ॥ २७ ॥

कुष्ठेत्यादि।—आतुरस्य तात्कालिकी पीड़ा महती, तद्दृष्टे च तैले पक्वमा-

विसूच्यां मर्दनं कोष्णं खल्लीशूलनिवारणम् ॥ ३८ ॥
करञ्जनिम्बशिखरि-गुडूच्यर्जकवत्सकैः ।
पीतः कषायो वमनाद्घोरां हन्ति विसूचिकाम् ॥ ३९ ॥
व्योषं करञ्जस्य फलं हरिद्राम्
मूलं समावाप्य च मातुलुङ्ग्याः ।
छायाविशुष्का गुडिकाः कृतास्ता
हन्युर्विसूचीं नयनाञ्जनेन ॥ ४० ॥
गुडपुष्पसारशिखरितण्डुलगिरिकर्णिकाहरिद्राभिः ।
अञ्जनगुडिका विलयति विसूचिकां त्रिकटुसनाथा ॥ ४१ ॥
त्वक्पत्रराजागुरुशिग्रुकुष्ठैरम्लेन पिष्टैः सवचाशताह्वैः ।

---

म्, अतः किञ्चिदुक्तं तैलञ्च दत्त्वा कुष्ठसैन्धवयो अम्लेन कटुष्णेन मर्दनं कार्य्य-मित्याहुर्वृद्धाः । तैलपाकपक्षे तु—कुष्ठसैन्धवयोः कल्कः, पादिकः, गुणश्च चतुर्गुणम् । खल्ली हस्तादौ शिरामोटनरूपा वेदना ॥ ३८ ॥

करञ्जेत्यादि ।—करञ्जस्य फलम्; शिखरि अपामार्गस्य बीजम् । अर्जकः, मतदर्वाय इति ख्यातः, तथा हस्तटीकायां अप्युटोऽप्यर्जक इति पठ्यते; तस्मात् अर्जकस्थाने अर्जुनेति प्रमादपाठः । वत्सकः कुटजः । पीत कषायो वमनाद्विति ।—वमनार्थेन कषायः ।—“काथ्यद्रव्यस्य कुडव श्रपयित्वा जलाढके । अर्धभागावशेषञ्च वमनेष्ववचारयेत् ॥” इति परिभाषया अर्द्धमतः काथ्यः । अर्द्धभागावशेषमित्यत्र चतुर्भागावशेष इति पाठो दृश्यते, तत्र नियमो नावगम्यते । वमनसात्तीत्य', ज्वोक-लोकवमिकारकाणीर्बनिराकार्थम् ॥ ३९ ॥

व्योषमित्यादि ।—सुश्रुतस्य । मातुलुङ्गी मधुकर्कटी । विसूचीशब्देनात्र विसूची-जनितमूर्च्छा-प्रमीलक-शिरोरोगादयो गृह्यन्ते, कारणे कार्य्योपचारात् । किं वा अञ्जनेन प्रभावादेव विसूची हन्यते, इति सुश्रुतटीकाकृतो व्याचक्षते ॥ ४० ॥

गुडपुष्पेत्यादि ।—गुडपुष्पो मधूकवृक्षः, तस्य सारो ग्राह्यः । शिखरितण्डुला अपामार्गबीजानि । गिरिकर्णिका श्वेतापराजिता, तस्या मूलं ग्राह्यम् । त्रिकटुकान्त एको योगः । विलयति शमयति ॥ ४१ ॥

त्वक्पत्रेत्यादि ।—त्वक् गुडत्वक्; पत्रं तेजपत्रम् । अम्लेन पिष्टैरिति—काञ्जिकेन

उद्वर्त्तनं खल्लिविसूचिकाघ्नं तैलं विपक्वञ्च तदर्थकारि ॥ ४२ ॥

पिपासायामनुत्क्लेशे लवङ्गस्याम्बु शस्यते ।
जातीफलस्य वा शीतं शृतं भद्रघनस्य वा ॥ ४३ ॥
विसूच्यामतिवृद्धायां पार्ष्णिदाहः प्रशस्यते ॥ ४४ ॥

अलसक-चिकित्सा ।

वमनं त्वलसे पूर्वं लवणेनोष्णवारिणा ।
स्वेदो वर्त्तिर्लङ्घनञ्च क्रमश्चातोऽग्निवर्द्धनः ॥
सरुक् चानद्धमुदरमम्लपिष्टैः प्रलेपयेत् ।
दारुहैमवतीकुष्ठ-शताह्वाहिङ्गुसैन्धवैः ॥
तक्रेण युक्तं यवचूर्णमुष्णं सक्षारमर्त्तिं जठरे निहन्यात् ।

---

पिष्टैः । शताह्वा शलुफा इति ख्याता; शताह्वैरित्यत्र जटाह्वैरित्यन्ये पठन्ति । यथा—"रास्नावचागुरुमांसी-कुष्ठशिग्रुलवणैर्वचा । पिष्टमम्लेन तत्कुष्ठं विसूच्या-मङ्गमर्दनम् ॥" सुश्रुते तु शतपुष्पी जटामांसी चेति द्वयमपि न दृश्यते, यथा,—"कुष्ठवचागुरुपत्रं रास्ना शिग्रुलवणा वचा । पिष्टमम्लेन तत्क्षेप्यं विसूच्यामङ्गमर्दनम्" ॥ इति । तैलं विपक्वञ्च तदर्थकारीति ।—रास्नापत्रादिभिः कल्कीकृतैः काञ्जिकेन द्रवेण चतुर्गुणेन तैलं पक्वं खल्लीविसूचीकाघ्नं भवतीत्यर्थः ॥ ४२ ॥

पिपासायामित्यादी ।—अनुत्क्लेशे हृल्लासाभावे, उक्लौति लोके ख्याता इति नियतः; अन्ये त्वनुत्क्लेशे वलीभङ्गुलित-दोष इत्याहुः । लवङ्गाम्बु चाऽमृतयोजितम्, एवं जातिफलाम्बु भद्रघनाम्बु च ज्ञेयम् । भद्रघनं भद्रमुस्तकम्; अथान्तरे योगा-न्तरं दृष्टमप्यत्र बोद्धव्यम् ।—"आम्राम्र तदिवेतसी मातुलुङ्गफलत्वचम् । पीत्वा भद्रघनक्वाथमनुत्क्लेशाद्विमुच्यते" । पार्ष्णिदाह इति ।—पादयोर्पार्ष्णिदाहस्तु मूर्च्छा-शान्त्यर्थम् । मूर्च्छान्तरमपगमाभावे सति तप्तशरादिशलाकया पाददाहः । स च प्रमा-णात् पाददेशे एव कृतो हितो भवतीति वचनादुन्नीयते । सुश्रुतेऽप्युक्तं—"छायासु प्रशस्तं पार्ष्णिदहनम्" इति । चक्रादिष्वप्युक्तं—"हखात्रा विसूच्यां पार्ष्णिदेशे च दाहः" इति । अतः पार्ष्णिदेशे इत्यत्र पार्श्वदेशे इति ये पठन्ति ते भ्रान्ताः । पार्ष्णिदाहस्य सर्वैरुपदिष्टत्वात् ॥ ४३ ॥ ४४ ॥

अलसकचिकित्सामाह वमनमित्यादि ।—लवणेन सैन्धवेन । वर्त्तिरिति—फल-वर्त्तिः, सा चोदावर्त्ते वक्ष्यमाणा । अत इति ।—अत ऊर्द्ध्वमित्यर्थः । सरुगिति ।—सरु-जम् । हैमवती वचा । तक्रेणेत्यादि ।—चरकार्थं । सक्षारमिति सद्यवक्षारम्,

स्वेदो घटैर्वा बहुवाष्पपूर्णैरुष्णैस्तथान्यैरपि पाणितापैः ॥ ४५ ॥
तीव्रार्त्तिरपि नाजीर्णी पिबेच्छूलघ्नमौषधम् ।
आमसन्नोऽनलो नालं पक्तुं दोषौषधाशनम् ॥ ४६ ॥

इत्यग्निमान्द्यादि-चिकित्सा ।

## अथ क्रिमि-चिकित्सा ।

पारसिय-यमानिका पीता पर्य्युषितवारिणा प्रातः ।
गुड़पूर्वा क्रिमिजातं कोष्ठगतं पातयत्याशु ॥ १ ॥
पारिभद्रकपत्रोत्थं रसं क्षौद्रयुतं पिबेत् ।
केवुकस्य रसं वापि पत्तरस्याथवा रसम् ॥
लिह्यात् क्षौद्रेण वैडङ्गं चूर्णं क्रिमिविनाशनम् ॥ २ ॥

---

तत्हवें घटे प्रक्षिप्य उदरे स्वेद इत्याह कश्चित्; तन्न, चरकेऽस्य योगस्य प्रदेह-प्रकरणे पठितत्वात् । तस्मात् यवचूर्णयवक्षारौ तक्रेण पिष्ट्वा किञ्चिदुष्णं कृत्वा उदरे लेप' कार्यः । स्वेदो घटैर्वा बहुवाष्पपूर्णैरिति ।—तप्तक्वाथिकादिभिर्वाष्पपूर्णैर्घटैरन्यैर-रुष्णैस्तप्तपुटकादिभिस्तथा हस्ततापैरपि स्वेद इति योज्यम् । तीव्रार्त्तिरित्यादि ।—वाग्भटस्य । अजीर्णी तीव्रशूलोऽपि सन् शूलघ्नमौषधं न पिबेत् । यतः आमेन सन्नो मन्दीभूतोऽग्निः दोषौषधाशनं पक्तुं न समर्थः ॥ ४५ ॥ ४६ ॥

इत्यग्निमान्द्यादिचिकित्साविवृतिः ।

---

अजीर्णात् क्रिमिसम्भव इत्यजीर्णानन्तरं क्रिमिचिकित्सामाह, पारसियेत्यादि ।—पारसिय-यमानी खोरासानी यमानीति ख्याता । गुड़पूर्वेति ।—गुड़ः पूर्वो यस्या इति गुड़ भक्षयित्वा मनाक् विलम्बं कृत्वा सा पातव्येत्यर्थः । पेयत्वमपि पर्य्युषितवारिणेति ॥ १ ॥

पारिभद्रकेत्यादि ।—पारिभद्रकः मन्दारविशेषः । केवुकस्येति ।—केवुकस्य केउयाड़ा

मुस्ताखुपर्णीफलशिग्रुदारु-क्वाथः सकृष्णाक्रिमिशत्रुकल्कः ।
मार्गद्वयेनापि चिरप्रवृत्तान् क्रिमीन् निहन्ति क्रिमिजांश्च रोगान् ॥ ३ ॥

आखुपर्णीदलैः पिष्टैः पिष्टकेन च पूपिकाम् ।
जग्ध्वा सौवीरकञ्चानु पिबेत् क्रिमिहरं परम् ॥ ४ ॥
पलाशबीजस्वरसं पिबेद्वा क्षौद्रसंयुतम् ।
पिबेत् तद्बीजकल्कं वा तक्रेण क्रिमिनाशनम् ॥ ५ ॥
सुरसादिगणं वापि सर्वथैवोपयोजयेत् ॥
विडङ्गसैन्धवक्षार-कम्पिल्लकहरीतकीः ।
पिबेत् तक्रेण सम्पिष्य सर्वक्रिमिनिवृत्तये ॥ ६ ॥

---

इति व्याख्येयं, तत्र मूलस्वरसः ग्राह्यः । एवं पत्तूरस्य ; पत्तूरः शालिञ्चः, क्षौद्रयुतमिति पदं केषुचित्पुस्तकेषु नास्तीत्यपि ज्ञेयम् । शिखादित्यादि स्पष्टम् ॥ २ ॥

मुस्तेत्यादौ ।—आखुपर्णी मूषिकपर्णी, दन्तीभेदो वा । फलमदनात् त्रिफला ग्राह्या, दविगुणमनाटात्(?) । क्रिमिशत्रुर्विडङ्गम् ॥ ३ ॥

आखुपर्णीदलैरित्यादि ।—आखुपर्णी द्रवन्ती, मूषिकपर्णी दन्तीभेदो वा, मण्डूकपर्णीत्यन्ये । दलैः कोमलदलम्, यदाह वाग्भटः—"आखुपर्णीकिसलयैः सुपिष्टैः पिष्टमिश्रितैः । पक्त्वा पूपलिका खादेद् धान्याम्लञ्च पिबेदनु ॥" इति । पिष्टकेनेति ।—यवपिष्टकेन, क्रिमिहरत्वादिति सुश्रुतटीकाकृतः । शालितण्डुलपिष्टकेनेति निश्चलः । आखुपर्णीपत्रस्य भागत्रयं पिष्टकस्य चैको भाग इत्याहुः । सौवीरं काञ्जिकम् । यद्यपि सुश्रुते वाग्भटे च सौवीरमपि माषाणीत्यादिना यवमात्रस्यैव सन्धानमुक्तं, तथापि विशेषवचनादत्र काञ्जिकमपानमिति न विरोधभावइति ॥ ४ ॥

पलाशबीजमित्यादि ।—पलाशबीजस्य स्वरसः तद्बीजकल्को वा । तक्रेणेति ।—तण्डुलाम्बुनाप्ययं योगो ज्ञेयः । तदुक्तं सुश्रुते—"पलाशबीजस्वरसं कल्कं वा तण्डुलाम्बुना" इति ॥ ५ ॥

सुरसेत्यादि ।—सुरसादिगणः सुश्रुतः ; सर्वथैवेति—कल्ककषायकल्पनया । विडङ्गसैन्धवेत्यादौ ।—कम्पिल्लको गुण्डारोचनी, कमलागुंडी इति ख्याता ॥ ६ ॥

विड़ङ्गपिप्पलीमूल-शिग्रुमिर्मरिचेन च ।
तक्रसिद्धा यवागूः स्यात् क्रिमिघ्नी ससुवर्चिका ॥
पीतं बिम्बीघृतं हन्ति पक्वामाशयगान् क्रिमीन् ॥ ७ ॥

त्रिफलाघृतम्—

त्रिफला त्रिवृता दन्ती वचा काम्पिल्लकं तथा ।
सिद्धमेभिर्गवां मूत्रे सर्पिः क्रिमिविनाशनम् ॥ ८ ॥

विड़ङ्गघृतम्—

त्रिफलायास्त्रयः प्रस्था विड़ङ्गप्रस्थ एव च ।
द्विपलं दशमूलञ्च लाभतः समुपाचरेत् ॥
पादशेषे जलद्रोणे शृते सर्पिर्विपाचयेत् ।
प्रस्थोन्मितं सिन्धुयुतं तत् परं क्रिमिनाशनम् ॥
विड़ङ्गघृतमेतच्च लेह्यं शर्करया सह ।
सर्वान् क्रिमीन् प्रणुदति वज्रं मुक्तमिवासुरान् ॥ ९ ॥
रसेन्द्रेण समायुक्तो रसो धुस्तूरपत्रजः ।
ताम्बूलपत्रजो वापि लेपो यूकविनाशनः ॥ १० ॥

विड़ङ्गतैलम्—

सविड़ङ्गगन्धकशिलासिद्धं सुरभीजलेन कटुतैलम् ।

---

विड़ङ्गेत्यादि ।—चरकात् । तक्रसिद्धेति ।—तक्रमत्रार्द्रोदकं यावाग्, अन्यथा अयवता स्यादित्याहुः । सुवर्चिका सर्जिकाक्षारः, तं दत्त्वा भक्षयेत् । बिम्बीघृतमिति ।—बिम्बीघृते विपक्वबिम्बीफलस्य कल्कचतुर्गुणं जलम् ॥ ७ ॥

त्रिफलेति ।—त्रिफलाघृते दन्ती नागदन्ती, सा च स्थूलमूलेत्याहुः । तदुक्तं— "त्रिफलकम्पिल्लकवचा-नागदन्तीफलत्रयैः । गोमूत्रसाधितं सर्पिः पानात् क्रिमिनाशनम् ॥" इति ॥ ८ ॥

त्रिफलादि स्पष्टम् । विड़ङ्गघृतं क्वचित् पुस्तके तथा वृन्दे च; तत्र टीकाकृद्भिर्न धृतम्; इत्यधिकमेवेति ज्ञेयम् ॥ ९ ॥

रसेन्द्रेणेत्यादौ ।—रसेन्द्रः पारदः । ताम्बूलपत्रं पर्णं, "लेपनं यूकनाशनम्" इति पाठे—यूकां यूकाण्डम् ॥ १० ॥

पिबेद्घृतं वा रजनीविपक्वं सत्रैफलं तैल्वकमेव चापि।
विरेचनद्रव्यकृतं पिबेद्वा योगांश्च वैरेचनिकान् घृतेन ॥ २ ॥

हेतुप्रत्यनीकचिकित्सा।

विधिः स्निग्धस्तु वातोत्थे तिक्तशीतस्तु पैत्तिके।
श्लैष्मिके कटुरूक्षोष्णः कार्य्यो मिश्रस्तु मिश्रके ॥ ३ ॥
द्विशर्करं त्रिवृच्चूर्णं पलार्द्धं पैत्तिके पिबेत्।
कफपाण्डौ च गोमूत्र-क्लिन्नयुक्तां हरीतकीम् ॥
नागरं लौहचूर्णं वा कृष्णां पथ्यां तथाऽश्मजम्।
गुग्गुलुं वाथ मूत्रेण कफपाण्ड्वामयी पिबेत् ॥

---

चूर्णमये. प्रयोगैर्भावनामाषैर्मायसादिभिर्हरीतकीचूर्णवृद्धिरित्यर्थः। हरीतकीचूर्णं युत्तेरिति पाठान्तरम् ॥ १ ॥

रजनीविपक्वमिति।—हरिद्राकल्ककाथाभ्यां सिद्धमिति जयदासः। तन्न, कल्ककाथकरणस्य सप्तविधत्वात्। तस्मात् हरिद्राकल्कसिद्धमित्यन्ये, अन्ये तु वक्ष्यमाण-हरिद्राघृतमित्याहुः। तन्न, चरककृतत्वात्, इदं वाक्यं सौश्रुतमिति। त्रैफल-मिति—त्रिफलाकाथकल्कसिद्धम्; त्रिफलापटोलपिचुमर्देत्यादि सुश्रुतोक्तं, वात-रोगोक्तं वा ग्रेयम्। तैल्वकमिति—वातव्याध्युक्तम्। विरेचनद्रव्यकृतमिति—त्रिवृ-दादिद्रव्यसंस्कृतं घृतम्; इदं हि वाक्यं सौश्रुतम्। योगांश्च वैरेचनिकानिति।—सौश्रुतविरेचनाध्यायोक्तान् घृतेन पिबेदिति ॥ २ ॥

हेतुप्रत्यनीकचिकित्सामाह, विधिरित्यादि। मिश्रके इति द्वन्द्वजे ॥ ३ ॥

द्विशर्करमित्यादि।—त्रिवृच्चूर्णमेव द्विगुणशर्करं सत् पलार्द्धमात्रं पिबेत्, तेन शर्करा कर्ष १ मा ५ रत्ति ४। त्रिवृच्चूर्णं माषा १० रत्ति ८ एवं मिलित्वा पलार्द्ध-मित्यर्थः, न तु त्रिवृच्चूर्णं पलार्द्धं सत् द्विशर्करं पललेऽन्नम्, एवं मिलित्वा सार्द्धपलमित-स्यप्रयोगोपयोगेऽस्या मात्राया अनर्हत्वात्। गोमूत्रक्लिन्नयुक्तामिति।—गोमूत्रेण क्लिन्नां पिष्टा, तदनु गोमूत्रेणैव युक्तामालोड्य पिबेदित्यर्थः; वृद्धवाग्भटेऽप्युक्तं—"गोमूत्रेण वा हरीतकीः कल्किताः" इत्यादि; अन्ये तु गोमूत्रेण क्लिन्नामुत्स्वेदितामित्याहुः; अन्ये तु चरके यवानामाषशोभे आरग्वधरसेनेति पठित्वा आरग्वधरसेन हरीतकीं पिबेदिति पूर्वेण योजयन्ति; किन्तु वाग्भटसंवादात् पूर्वपाठ एव साधुः। नागर-मित्यादि।—नागरलौहचूर्णाभ्यामेको योगः; कृष्णापथ्याभ्यां द्वितीयः, अश्मजः

ससप्तरात्रं गवां मूत्रे भावितं वाप्ययोरजः ।
पाण्डुरोगप्रशान्त्यर्थं पयसा प्रपिबेन्नरः ॥ ४ ॥
फलत्रिकामृतावासातिक्ताभूनिम्बनिम्बजः ।
क्वाथः क्षौद्रयुतो हन्यात् पाण्डुरोगं सकामलम् ॥ ५ ॥
अयस्तिलत्र्यूषणकोलभागैः सर्वैः समं माक्षिकधातुचूर्णम् ।
तैर्मोदकः क्षौद्रयुतोऽनुतक्रः पाण्ड्वामये दूरगतेऽपि शस्तः ॥ ६ ॥
अयोमलन्तु सन्तप्तं भूयो गोमूत्रसेचितम् ।
मधुसर्पिर्युतं चूर्णं सह भक्तेन योजयेत् ॥
दीपनश्चाग्निजननं शोथपाण्ड्वामयापहम् ॥ ७ ॥

नवायसं चूर्णम्—

त्र्यूषणं त्रिफलामुस्तविडङ्गचित्रकाः समाः ।
नवायोरजसो भागास्तच्चूर्णं मधुसर्पिषा ॥

---

शिलाजतु, अयं योगस्तृतीयः ; गुग्गुलुमिति चतुर्थः ; गोमूत्रेणेति सम्बध्यते सर्वत्रैव । लोहचूर्णन्तु मारितं पुटितञ्च ग्राह्यं, तदभावे लोहपत्रिका ग्राह्या । सा च शालिञ्चरप्रतिकमाकाथैः पुटपाकेन संसाधनीया, एवं सर्वत्र ; तत्र माषकमितं, लौहचूर्णञ्च माषकचतुष्टयमित्याहुः ; एवंगुणं पिप्पलीहरीतकीचूर्णं ; तथा गुडशिलाजतु मात्रा ३, घृतपेषितगुग्गुलु मात्रा ८, सर्वत्रैव गोमूत्रेण पानम् । ससप्तरात्रमित्यादि—स्पष्टम् ॥ ४ ॥

फलत्रिकेत्यादौ । अमृता गुडूची, तिक्ता कटुकी, भूनिम्बश्चिरता ॥ ५ ॥

अयस्तिलेत्यादौ ।—कोलं शुष्कबदरं, न तु कर्षार्धं ; यदाह सुखबोधे—"अय-स्तिलत्र्यूषणकोलभागैः समैर्माक्षिकधातुना । मधुना वटकान् कृत्वा जग्ध्वा तक्रं पिबे-दनु ॥" इति । क्रियोऽपि तथा । माक्षिकधातुः स्वर्णमाक्षिकं, तदपि शुद्धं ग्राह्यं, तच्छोधनञ्च लौहप्रदीपादौ बोध्यम् । अनुतक्र इति तक्रानुपानः ॥ ६ ॥

अयोमलमित्यादि ।—अयोमलं पुराणमण्डूरं, भूयो गोमूत्रसेचितमिति—बहुवारान् । ईदृशस्य मण्डूरचूर्णस्य माषकत्रयं त्रिधा विभज्य भोजनादिमध्यान्तेषु मधुसर्पिर्भ्यां लीढ्वा, पश्चाद्ध्यालक्षीरं मापकं भक्षयेत् । मधुसर्पिषः समांशत्वं वा ॥ ७ ॥

भक्षयेत् पाण्डुहृद्रोग कुष्ठार्शःकामलापहम् ।
नवायसमिदं चूर्णं कृष्णात्रेयेण भाषितम् ॥ ८ ॥

योगराजः ।—त्रिफलायास्त्रयो भागास्त्रयस्त्रिकटुकस्य च ।
भागश्चित्रकमूलस्य विडङ्गानां तथैव च ॥
पञ्चाश्मजतुनो भागाः पञ्च रूप्यमलस्य च ।
माक्षिकस्य च शुद्धस्य लौहस्य रजसस्तथा ॥
अष्टौ भागाः सितायाश्च तत् सर्वं सूक्ष्मचूर्णितम् ।
माक्षिकेणाप्लुतं स्थाप्यमायसे भाजने शुभे ।
उदुम्बरसमां मात्रां ततः खादेद् यथाग्नि वा ॥

---

चूर्णमित्यादि ।—एकभागापेक्षया नवगुणं मण्डूरचूर्णम्, आदौ रक्तिद्वयं घृत-मध्वभ्यां लौहपात्रे लौहमुषलिकया विमर्द्य लिह्यात्, रक्तिद्वयं कृत्वा वृद्धिः कार्या, मासकद्वयं यावदिति व्यवहारः । वाग्भटे तु नवायसपाठे नोक्तं, यथा—"व्योषाग्नि-त्रिफलाविडङ्गमुस्तान्यमयोरजः । चूर्णितं नवकमायस-चोर्णाभ्योभि, पयोऽशितम् ॥" इति । एतदेव नवायसं सुश्रुते प्रमेहचिकित्सायां पठितम् ॥ ८ ॥

त्रिफलाया इत्यादि ।—चरकस्य । त्रिफलायास्त्रयो भागा इति मिलिता त्रयो भागाः, एवं त्रिकटुकस्यापि, निर्देशस्य मानप्रधानत्वात् । चित्रक विडङ्गयोरपि प्रत्येकं पलम् । शिलाजत्वादिलौहचूर्णान्तानां प्रत्येकं पञ्च पलानि, शर्करायास्त्वष्टौ पलानि, शिलाजतु च शिलाजतुशोधनविधिना शोधितम् । रूप्यमलस्य चेति ।—रूप्यस्यावध्माय-मानस्य यत् किट्टं निर्गच्छति तद्रूप्यमलम् । माक्षिकस्येति ।—मारणपुटनादिना शुद्धस्य स्वर्णमाक्षिकस्य । अन्ये तु "पञ्चाश्मजतुनो भागाः पञ्च रूप्यमलस्य च" इत्यत्र "तथा रूप्य-मलस्य च" इति पठन्ति ; तेन रूप्यमलस्येति शिलाजतुविशेषणं । सतत्र रसायनाधि-कारे राजतं कटुकं श्वेतमित्यादिना चतुर्विधशिलाजतु रूप्यमलत्वेनोक्तं तदिह गृह्यते इत्याहुः । एतत्तु न व्यवहरन्ति वृद्धाः । वाग्भटे तु—लौहस्थाने स्वर्णं पठितम् । यथा,—"ताप्याद्रिजतुरूप्याणां—समाः पञ्च पलाः पृथक् । चित्रकत्रिफलाव्योष विडङ्गैः पलिकैः सह ॥ शर्कराष्टपलोन्मिश्राश्चूर्णिता मधुनाप्लुताः ॥" इति । तदत्र प्रयोगे भेदाविरोधः, उक्तं हि,—"सुवर्णमथवा रूप्यं यौगे यत्र न लभ्यते । तत्र लौहेन कर्माणि भिषक् कुर्याद्विचक्षणः ॥" इति । पूर्वोक्तस्यवध्यापि शिलाजतु-लौहमल-स्वर्ण-

दिने दिने प्रयुञ्जीत जीर्णे भोज्यं यथेप्सितम्।
वर्जयित्वा कुलत्थांश्च काकमाचीं कपोतकान्॥
योगराज इति ख्यातो योगोऽयममृतोपमः।
रसायनमिदं श्रेष्ठं सर्वरोगहरं परम्॥
पाण्डुरोगं विषं कासं यक्ष्माणं विषमज्वरम्।
कुष्ठान्यजरकं मेहं श्वासं हिक्कामरोचकम्।
विशेषाद्धन्त्यपस्मारं कामलां गुदजानि च॥ ८॥
विशालाकटुकामुस्त-कुष्ठदारुकलिङ्गकाः।
कर्षांशा द्विपिचु मूर्वा कर्षार्द्धा च घुणप्रिया।
पीत्वा तच्चूर्णमम्भोभिः सुखं लिह्यात् ततो मधु॥
पाण्डुरोगं ज्वरं दाहं कासं श्वासमरोचकम्।
गुल्मानाहामवातांश्च रक्तपित्तञ्च तज्जयेत्॥ १०॥
लौहपात्रे शृतं क्षीरं सप्ताहं पथ्यभोजनः।
पिबेत् पाण्ड्वामयी शोषी ग्रहणीदोषपीड़ितः॥
कल्याणकं पञ्चगव्यं महातिक्तमथापि वा।
स्नेहनार्थं घृतं दद्यात् कामलापाण्डुरोगिणे॥

---

माक्षिक-क्षीरजीभिश्चतुर्भिरेव दृश्यते, तेन तन्त्रकारवचनयोर्न विरोध इति। उडुम्बरः कर्षः। अजरकम् अजीर्णम्। यथाग्नि मैथुनं वा पुरुषः॥ ८॥

विशालेत्यादि।—विशाला गोरक्षकर्कटी। कर्षांशा च घुणप्रिया इत्यपपाठः, किन्तु कर्षार्द्धांशेति। उक्तं हि चरके—"विशालातिविषामुस्त-कुष्ठदारुकलिङ्गकान्। कर्षोन्मितानतिविषा कर्षार्द्धांशं प्रदापयेत्। कर्षौ मधुरसायाः द्वौ सर्वमेतत् सुखाम्बुना। भवितं नरं दर्शं पुनं पीत्वा लिह्यात् मध्वनु॥" इति; अत एव वचनबलात् कल्कक्वाथाद्विधानमध्याय योगे बोध्यम्। तेन तच्चूर्णं सुखैः कदुष्णैरम्भोभिरुपादेयैरपि चतुर्गुणैर्मर्दित्वा वस्त्रपूतं कृत्वा पिबेत्, पश्चात्तच्च मधु लिह्यादित्यर्थः॥ १०॥

लौहपात्र इत्यादि।—अत्र उक्तं चतुर्गुणं क्षीरं, पाकानुपयोगेन। कल्याण-

रेचनं कामलार्त्तस्य स्निग्धस्यादौ प्रयोजयेत्।
ततः प्रशमनी कार्य्या क्रिया वैद्येन जानता ॥ ११ ॥
त्रिफलाया गुडूच्या वा दार्व्व्या निम्बस्य वा रसः।
प्रातर्माक्षिकसंयुक्तः शीलितः कामलापहः ॥ १२ ॥
अञ्जनं कामलार्त्तानां द्रोणपुष्पीरसः स्मृतः।
निशागैरिकधात्रीणां चूर्णं वा सम्प्रकल्पयेत् ॥ १३ ॥
नस्यं कर्कोटमूलं वा घ्रेयं वा जालिनीफलम् ॥ १४ ॥

अयोरजोव्योषविडङ्गचूर्णम्
लिह्याद्धरिद्रां त्रिफलान्वितां वा।
सशर्करा कामलिनां त्रिभण्डी
हिता गवाक्षी सगुड़ा च शुण्ठी ॥ १५ ॥

दार्व्वी सत्रिफला व्योष-विडङ्गान्ययसो रजः।
मधुसर्पिर्युतं लिह्यात् कामलापाण्डुरोगवान् ॥ १६ ॥

---

घृतं पञ्चगव्यघृतञ्च, उन्मादे वक्ष्यति। महातिक्तञ्च कुष्ठे, रेचनञ्च पित्तहर-णेन ॥ ११ ॥

त्रिफलाया इत्यादि—स्पष्टम् ॥ १२ ॥

अञ्जनमित्यादि।—अञ्जनं नेत्राञ्जनं, द्रोणपुष्पी दण्डकलस इति केचित्। निशा-दिभिश्चूर्णाञ्जनं कार्य्यं ; तदुक्तं तन्त्रान्तरे,—"निशागैरिकधात्रीणां चूर्णेनाञ्जनं मतम्।" एतच्च मधुकल्पनाया कार्य्यमित्याहुः ॥ १३ ॥

नस्यमित्यादौ।—कर्कोटमूलमिति कर्कोटमूलरस इत्यर्थः। जालिनी पीत-घोषकः ॥ १४ ॥

सशर्करेत्यादि।—सुश्रुतस्य। त्रिभण्डी त्रिवृता, रेचनार्थमयं योगः। गवाक्षी गोरक्षकर्कटी, श्वेतापराजिता इत्यन्ये, यद्यपि सशर्करेत्यादि योज्यमित्याह, निश्चल.। कार्त्तिकस्तु सगुडा च शुण्ठीत्यत्र चकारं भिन्नक्रमं योजयित्वा शुण्ठी सगुडेति व्याख्याय गवाक्षीमपि सगुडामाह। एवं सुश्रुतटीकायां जेज्जटोऽपि व्याख्यातवान् ॥ १५ ॥

दार्व्वीत्यादि।—चरकस्य। दार्व्वीसत्व ॥ १६ ॥

तुल्या अयोरजःपथ्या-हरिद्राः क्षौद्रसर्पिषा ।
चूर्णिता कामली लिह्यात् गुडक्षौद्रेण वाभयाम् ॥ १७ ॥
धात्रीलौहरजोव्योष-निशाक्षौद्राज्यशर्कराः ।
लीढ्वा निवारयत्याशु कामलामुद्धतामपि ॥ १८ ॥

दग्ध्वाक्षकाष्ठैर्मलमायसन्तु
गोमूत्रनिर्वापितमष्ट वारान् ।
विचूर्ण्य लीढं मधुनाचिरेण
कुम्भाह्वयं पाण्डुगदं निहन्ति ॥ १९ ॥

पाण्डुरोगक्रियां सर्वां योजयेच्च हलीमके ।
कामलायाञ्च या दृष्टा सापि कार्य्या भिषग्वरैः ॥ २० ॥

विडङ्गाद्यं लौहम्—

विडङ्गमुस्तत्रिफला-देवदारुषडूषणैः ।
तुल्यमात्रमयश्चूर्णं गोमूत्रेऽष्टगुणे पचेत् ॥
तैरक्षमात्रां गुडिकां कृत्वा खादेद् दिने दिने ।
कामलापाण्डुरोगार्त्तः सुखमाप्स्यतेऽचिरात् ॥ २१ ॥

---

तुल्या इत्यादि स्पष्टम् ॥ १७ ॥ धात्रीत्यादि स्पष्टम् ॥ १८ ॥

दग्ध्वेत्यादि।—गुरुतरम्। अक्षकी विभीतकवृक्षः। सुश्रुते वृन्दचक्र-चन्द्रटादिषु—"गोमूत्रनिर्वापितसप्तवारम्" इत्येव पाठो दृश्यते, अन्ये तु—"गोमूत्रनिर्वापितमष्टवारम्" इत्येव पठन्ति ॥ १९ ॥

पाण्डुरोगकामलाचिकित्सां हलीमकेऽप्यतिदिशति, पाण्डुरोगक्रियामित्यादि।—क्रिया विशेषणादिरूपा ॥ २० ॥

विडङ्गाद्ये—तुल्यमात्रमयश्चूर्णमिति।—मिलितविडङ्गचूर्णादिसमं चूर्णसममयश्चूर्णमित्यर्थः। अत्र लौहस्य प्राधान्यात् तदपेक्षयैवाष्टगुणगोमूत्रेण लौहचूर्णं पक्त्वाऽवतारिते च विडङ्गादिचूर्णस्य प्रक्षेप इति केचित्। अन्ये तु—विडङ्गादिचूर्णसहितस्यैव लौहचूर्णस्य पाकः; गोमूत्रस्याष्टगुणत्वं सर्वचूर्णापेक्षयैव। अत्र द्रवैर्गुणं न व्याकरन्ति वृद्धाः। पाकश्चात्र गुडपाकवदित्याहुः। अक्षमात्रां गुडिकां कुर्य्यात्, न तु तन्मात्रं खादेत्। मात्रा देहाग्निबलापेक्षिणी; अत एव गुडा विभज्य कर्त्तव्या ॥ २१ ॥

कुष्ठान्यजरकं शोथमूरुस्तम्भं कफामयान् ।
अर्शांसि कामलां मेहान् प्लीहानं शमयन्ति च ॥
निर्वाप्य बहुशो मूत्रे मण्डूरं ग्राह्यमिष्यते ।
ग्राहयन्त्यष्टगुणितं मूत्रं मण्डूरचूर्णतः ॥ २२ ॥

पुनर्नवामण्डूरम्—

पुनर्नवात्रिवृच्छुण्ठी-पिप्पलीमरिचानि च ।
विडङ्गं देवकाष्ठञ्च चित्रकं पुष्कराह्वयम् ॥
त्रिफलां द्वे हरिद्रे च दन्तीञ्च चविकां तथा ।
कुटजस्य फलं तिक्तां पिप्पलीमूलमुस्तकम् ॥
एतानि समभागानि मण्डूरं द्विगुणं ततः ।
गोमूत्रेऽष्टगुणे पक्त्वा स्थापयेत् स्निग्धभाजने ॥
पाण्डुशोथोदरानाह-शूलार्शःक्रिमिगुल्मनुत् ॥ २३ ॥

मण्डूरवज्रवटकः—

पञ्चकोलं समरिचं देवदारु फलत्रिकम् ।
विडङ्गमुस्तयुक्ताश्च भागास्त्रिपलसम्मिताः ॥
यावन्त्येतानि चूर्णानि मण्डूरं द्विगुणं ततः ।
पक्त्वा चाष्टगुणे मूत्रे घनीभूते तदुद्धरेत् ॥
ततोऽक्षमात्रान् वटकान् पिबेत् तक्रेण तक्रभुक् ।
पाण्डुरोगं जयत्येष मन्दाग्नित्वमरोचकम् ॥

---

प्रवाहः। अजरकमजीर्णम्। बहुश इति बहु वारान्। अत्रेदं तु—"ग्राहयन्त्यष्टगुणितं मूत्रं मण्डूरचूर्णत" इत्येव पाठो लिखितः। यतो दीपिकायां मण्डूरापेक्षयैवाष्टगुणत्वं, तेनायमेव पाठः प्रतिभातीति वदता स्वीकृतम्; गोमूत्रं सर्वचूर्णत इति लेखनादि प्रतिसंस्कृत्य लिखितम् ॥ २२ ॥

पुनर्नवामण्डूरे गोमूत्रस्याष्टगुणत्वं मण्डूरापेक्षयैव, सन्निहितत्वात् व्यवहाराच; अत्रापि द्वैगुण्यं न व्यवहरन्ति ॥ २३ ॥

मण्डूरवज्रवटके "विडङ्गमुस्तयुताश्च भागास्त्रिपलसम्मिताः" इति पञ्चकोलादिभागा

अर्शांसि ग्रहणीरोगमूरुस्तम्भमथापि वा ।
क्रिमिं प्लीहानमुदरं गलरोगञ्च नाशयेत् ॥
मण्डूरवज्रनामायं रोगानीकविनाशनः ॥ २४ ॥

धात्र्यरिष्टम् ।—धात्रीफलसहस्रे द्वे पीड़यित्वा रसं भिषक् ।
क्षौद्राष्टभागं पिप्पल्याश्चूर्णार्द्धकुड़वान्वितम् ॥
शर्करार्द्धतुलोन्मिश्रं पक्वं स्निग्धघटे स्थितम् ।
प्रपिबेत् पाण्डुरोगार्त्तो जीर्णे हितमिताशनः ॥
कामलापाण्डुहृद्रोग-वातासृग्विषमज्वरान् ।
कासहिक्काऽरुचिश्वासांश्चैषोऽरिष्टः प्रणाशयेत् ॥ २५ ॥

द्राक्षाघृतम् ।—पुराणसर्पिषः प्रस्थो द्राक्षार्द्धप्रस्थसाधितः ।
कामलागुल्मपाण्ड्वर्त्ति-ज्वरमेहोदरापहः ॥ २६ ॥

हरिद्राघृतम् ।—हरिद्रात्रिफलानिम्ब-बलामधुकसाधितम् ।
सक्षीरं माहिषं सर्पिः कामलाहरमुत्तमम् ॥ २७ ॥

मूर्वाद्य घृतम् ।—मूर्वातिक्तानिशायास-कृष्णाचन्दनपर्पटैः ।
त्रायन्तीवत्सभूनिम्ब पटोलाम्बुददारुभिः ॥

---

त्रिकटुमुस्तकत्रिफलाभिरन्विता इत्यर्थः । क्वचित् मण्डूरादेरष्टगुणत्वं गृह्यते, चतुर्गुणस्य पूर्ववत् ॥ २४ ॥

धात्रीफलेत्यादि ।—चरकस्य । क्षौद्राष्टभागमिति ।—क्षौद्रस्याष्टमो भागः, तन्त्रान्तरमतम् अत्र भागा इति निष्पत्तिः । शर्करार्द्धतुला पक्वाथम् ... इति लेखकदोषात् प्रमादपाठः ॥ २५ ॥

पुराणसर्पिष इति ।—पुराणं दशवर्षस्थितं सर्पिः । जलमत्र चतुर्गुणमदात । अन्ये तु—"पिष्टा द्राक्षामिकायास्तु पलान्यष्टौ समावपेत् । पुराणसर्पिषः प्रस्थ पचेत क्षीरचतुर्गुणम् ॥" इति हारीतदर्शनात् क्षीरमत्र चतुर्गुणमाहुः ॥ २६ ॥

हरिद्रेत्यादौ ।—क्षीरं चतुर्गुणम् ॥ २७ ॥

मूर्वाघृते कल्केन कषायकल्पं ग्राह्यम् ॥ २८ ॥

अयमावैर्घृतप्रस्थं सिद्धं क्षीरं चतुर्गुणम्।
पाण्डुताज्वरविस्फोटशोथार्शोरक्तपित्तनुत्॥ २८॥

व्योषाद्यं घृतम्—

व्योषं बिल्वं द्विरजनी त्रिफला द्विपुनर्नवम्।
मुस्तान्ययोरजः पाठा विडङ्गं देवदारु च॥
वृश्चिकाली च भार्गी च सक्षीरैस्तैः शृतं घृतम्।
सर्वान् प्रशमयत्येतद्विकारान् मृत्तिकाकृतान्॥ २९॥

इति पाण्डुरोगचिकित्सा।

---

## रक्तपित्त-चिकित्सा।

नोद्रिक्तमादौ संग्राह्यं बलिनोऽप्यश्नतश्च यत्।
हृत्पाण्डुग्रहणीरोग-प्लीहगुल्मज्वरादिकृत्॥
ऊर्ध्वं प्रवृत्तदोषस्य पूर्वं लोहितपित्तिनः।
अक्षीणबलमांसाग्नेः कर्त्तव्यमपतर्पणम्॥

---

व्योषमित्यादि।—व्योषमत्र। बिल्वं बिल्वशलाटुः। षडीरसोऽत्र मुद्गादि-निर्मितं ग्राह्यम्। हस्तिकाली विशालीति ख्याता। क्षीरमत्र चतुर्गुणं ग्राह्यम्, चक्रस्तु—क्षीरं घृतसमम्, तन्त्रं तु चतुर्गुणमित्याह॥ २९॥

इति पाण्डुरोगचिकित्साव्याख्या।

---

पाण्डुरोगवत् रक्तपित्तस्यापि पित्तरक्तकरत्वाद्यविशेषात् पाण्डुरोगानन्तरं रक्तपित्तमाह, नोद्रिक्तमित्यादि।—नोद्रिक्तमित्यादिना सौश्रुतमिदमाह; उद्रिक्त-मतिमात्रेण प्रवृत्तम्। संग्राह्यं स्तम्भनीयम्। अनेन अस्य सन्तर्पणोत्थितत्वं दर्शयति। कार्यं सङ्ग्रहणे दोषमाह हृदित्यादि।—रोगशब्दस्य हृदादिभिः सम्बन्धः, प्रत्येकमिति शेषः। ऊर्ध्वं प्रवृत्तदोषस्येति—सुश्रुतस्य। अतिप्रवृद्धदोषस्येति पाठान्तरम्। अपतर्पणं लङ्घनम्। चरके रक्तपित्ते लङ्घनकरणोपपत्तिर्दर्शिता, यथा—"प्रायेण हि समुत्क्लिष्टमामदोषाच्छरीरिणाम्। वृद्धिं प्रयाति पित्तासृक् तस्माल्लङ्घनमादितः।"

ऊर्द्ध्वगे तर्पणं पूर्वं कर्त्तव्यञ्च विरेचनम् ।
प्रागधोगमने पेया वमनञ्च यथाबलम् ॥ १ ॥
तर्पणं सघृतक्षौद्र-लाजचूर्णैः प्रदापयेत् ।
ऊर्द्ध्वगं रक्तपित्तं तत् पीतं काले व्यपोहति ॥
जलं खर्जूरमृद्वीका-मधुकैः सपरूषकैः ।
शृतशीतं प्रयोक्तव्यं तर्पणार्थं सशर्करम् ॥ २ ॥
त्रिवृता त्रिफला श्यामा पिप्पली शर्करा मधु ।
मोदकः सन्निपातोर्द्ध्व-रक्तपित्तज्वरापहः ॥ ३ ॥
शालपर्ण्यादिना सिद्धा पेया पूर्वमधोगते ।
वमनं मदनोन्मिश्रो मन्थः सक्षौद्रशर्करः ॥ ४ ॥

---

इति। दोषनिदानापेक्षया यत् कर्त्तव्यं तदाह, ऊर्द्ध्वग इत्यादि।—यदाह चरकः,— "मार्गौ दोषानुबन्धञ्च निदानं प्रसमीक्ष्य च। लङ्घनं रक्तपित्तादौ तर्पणं वा प्रयोजयेत्॥" इति। अस्यार्थः,—यदि ऊर्द्ध्वमार्गेण याति पित्तं कफानुगो दोषः, निदानञ्च सदा सन्तर्पणम्, तदा लङ्घनम्, अन्यथा तर्पणम्। तर्पयतीति तर्पणमन्नपानम्। तेन यवागूतर्पणञ्च ग्राह्यम्। ये तु लङ्घनं तर्पणमिति, तन्मते—यवागूपानमपि न संगृहीतः स्यादि-त्याह—प्रागधोगमन इति।—अधोगे रक्तपित्ते प्राक् पूर्वं पेयादिकमित्यर्थः॥ १॥

तर्पणमित्यादि।—चरकस्य। स्पष्टम्। तेन द्रवेण सघृतलाजचूर्णं कार्यं तदाह, जलमित्यादि।—एष खर्जूरादिना जलं षडङ्गविधानेन साध्यम्। एतच्च जलमदत्त्वं मधुरत्वात्तृष्णाघ्नं ऊर्द्ध्वगरक्तपित्तप्रशमनोचितत्वात् दीपनं चेदम्॥ २॥

विरेचनमाह त्रिवृतेत्यादि।—त्रिवृतेति—श्वेतमूलम्; श्यामेति—श्यामामूला त्रिवृत्, न तु श्यामा लता वृद्धदारको वा, यतः श्यामात्रिवृतः फलमध्ये पठितत्वात्। अत्र "मोदके त्रिवृतो गुडः" इति वचनात् शर्करायाश्चूर्णाच्चतुर्गुणत्वमिति, मधु पुनरेक-गुणमेव, किंवा मधुशर्करे मिलित्वा चूर्णाद्द्विगुणम्, एकत्रापि मोदकार्थत्वात्। अत्र दोषः सुश्रुतेऽपि पठ्यते, तत्रोभयथाप्येव विकल्पः प्रदेये काले, सर्वगताधि-कृत्य मोदकप्रयोगमाह॥ ३॥

शालपर्ण्यादिना सिद्धेति।—शालपर्ण्यादि स्वल्पपञ्चमूलं तदधिकारे उक्तौ यौ

शालिषष्टिकनीवार-कोरदूषप्रशातिकाः ।
श्यामाकश्च प्रियङ्गुश्च भोजनं रक्तपित्तिनाम् ॥
मसूरमुद्गचणकाः समकुष्ठाढकीफलाः ।
प्रशस्ताः सूपयूषार्थं कल्पिता रक्तपित्तिनाम् ॥
शाकं पटोलवेत्राग्र-तण्डुलीयादिकं हितम् ।
मांसं लावकपोतादि-शशैणहरिणादिजम् ॥ ५ ॥
विना शुण्ठीं षडङ्गेन सिद्धं तोयञ्च दापयेत् ॥ ६ ॥
क्षीणमांसबलं बालं वृद्धं शोषानुबन्धिनम् ।
अवम्यमविरेच्यञ्च स्तम्भनैः समुपाचरेत् ॥ ७ ॥
वृषपत्राणि निष्पीड्य रसं समधुशर्करम् ।
पिबेत् तेन शमं याति रक्तपित्तं सुदारुणम् ॥ ८ ॥

---

व स्वल्पमच्छं देयम् । एवं मांसपत्रादिष्वपीव दोषाद्यपेक्षया देयमित्याहुः । व्यवहारस्तु प्रायः स्वल्पपञ्चमूलेनेति । समन्थमिति ।—मन्थो द्रवद्रव्यालोडिताः सक्तवः ॥ ४ ॥

शालीत्यादौ ।—नीवार उड़िधान इति ख्याता, कोरदूषः कोद्रवः, स चैव पुरातनो ग्राह्यः, तेन कोरदूषस्य रक्तपित्तहेतुत्वं चरके निदानस्थाने प्रोक्तं, तदभिनवाभिप्रायेणेति केचित् । अन्ये तु निष्पावमाषयूषादियुक्तस्यैव कोरदूषस्य संयोगमहिम्ना रक्तपित्तहेतुत्वं निदाने प्रोक्तं, केवलस्य तु कषायमधुरत्वेन लघुत्वात् रक्तपित्तघ्नत्वमित्याहुः । प्रशातिका रक्तशूका, रक्त शड़िया इति ख्याता, सा जलमध्ये प्रायो भवति । प्रियङ्गुः कङ्गुः, कायोनीति लोके । आढकी तुवरी ॥ ५ ॥

विना शुण्ठीमित्यादि स्पष्टम् ॥ ६ ॥

निषिद्धवमनविरेचनमाह क्षीणेत्यादि ।—शोषानुबन्धिनं यक्ष्मानुबन्धयुतम् ॥ ७ ॥

स्तम्भनयोगानाह वृषेत्यादि । वृषस्य पत्राणि पुटपाकविधिना सन्ताप्य ततो रसो ग्राह्यः, अन्यथा तत्पत्ररसो दुर्ग्रहो भवति । अयञ्च योग उक्ते बोध्य इत्याहुः । 'योगोऽयं मधुशर्कराव्यतिरेकेण तत्तुल्यकषायेणापि बोध्यः'; यदाह वाग्भटः,—"पित्ताढ्यं शमयेत् पीतो निर्यासो वाटरूषजः । मधुशर्करया युक्तः केवलो वा घृतोऽपि वा ॥" इति ॥ ८ ॥

अटरूषकनिर्य्यूहे प्रियङ्गुमृत्तिकाञ्जने ।
विनीय लोध्रं सक्षौद्रं रक्तपित्तहरं पिबेत् ॥ ९ ॥

वासाकषायोत्पलमृत्प्रियङ्गु-
लोध्राञ्जनाम्भोरुहकेशराणि ।
पीत्वा सिताक्षौद्रयुतानि हन्यात्
पित्तासृजो वेगमुदीर्णमाशु ॥ १० ॥

तालीशचूर्णसहितः पेयः क्षौद्रेण वासकस्वरसः ।
कफपित्ततमकश्वास स्वरभेदशोणितपित्तहरः ॥ ११ ॥
अटरूषकमृद्वीका-पथ्याक्वाथः सशर्करः ।
क्षौद्राढ्यः कासमश्वास-रक्तपित्तनिबर्हणः ॥ १२ ॥
वासायां विद्यमानायामाशायां जीवितस्य च ।
रक्तपित्ती क्षयी कासी किमर्थमवसीदति ? ॥ १३ ॥

---

अटरूषकनिर्य्यूह इत्यादि।—अटरूषो वासकः; मृत्तिका सौराष्ट्री मृत्, तदभावे पङ्कपर्पटी; अञ्जनं रसाञ्जनम्; क्षौद्रान्तोऽयं योगः। उक्तञ्च वाग्भटे—"वासा-रसेन फलिनीमृल्लोध्राञ्जनमाक्षिकम्। पित्तासृक् शमयेत् पीतम्" इति। विनीय सम्क्षोभ्य प्रक्षिप्येति वा। प्रियङ्ग्वादीनां मिलितानां कर्षं क्षौद्रस्य च कर्षं प्रक्षिप्य पिबेत्, परिभाषाबलात्। उक्तं ज्वरचिकित्सिते,—"कर्षचूर्णस्य कल्कस्य" इत्यादि, तथा "मात्रा क्षौद्रघृतादीनाम्" इति। अत्र्यं स्यात्,—चूर्णादीनां कर्षमात्रत्वं सततप्रयोग एव भवति। यदि पुनरनेकपरिभाषानुसारेण प्रियङ्ग्वादीनां प्रत्येकं गृह्यते, तदा निर्वृतभूयस्त्वं स्यात्, प्रियङ्ग्वादीनामल्पत्वं पुनः भवति; व्यवहारस्तु प्रियङ्ग्वादि-कल्कक्षौद्रयोः प्रत्येकं चतुःपञ्चमाषक प्रक्षेप इति ॥ ९ ॥

वासाकषाय इत्यादि।—सुश्रुतस्य। उत्पलादीनां क्षौद्रान्तानां प्रक्षेपः। सितामधुनोः प्रत्येकं माषा, उत्पलादीनां मिलिता माषा इत्याह ॥ १० ॥

तालीशेत्यादि।—अत्र वासकस्वरसस्य पलं, तालीशचूर्णस्य शाणकार्धं, मधु माषकचतुष्टयमिति व्यवहरन्ति ॥ ११ ॥

अटरूषकेत्यादि।—चरकस्यायं योगोऽनार्षं इति शिवदासः, इत्यन्ये तत्र चक्राद्यादिषु मधुसंयोगेष्वपीति ॥ १२ ॥

वासायामित्यादि।—स्पष्टम् ॥ १३ ॥

समाक्षिकः फल्गुफलोद्भवो वा
पीतो रसः शोणितमाशु हन्ति ॥ १४ ॥
मदयन्त्यङ्घ्रिजः क्वाथस्तद्वत् समधुशर्करः ॥ १५ ॥
अतसीकुसुमसमङ्गा-वटावरोहत्वगभया पीता ।
प्रशमयति रक्तपित्तं यदि भुङ्क्ते मुद्गयूषेण ॥ १६ ॥
कषाययोगैर्विविधैर्दीप्तेऽग्नौ निर्जिते कफे ।
रक्तपित्तं न चेच्छाम्येत् तत्र वातोल्बणे पयः ॥
छागं पयोऽथवा गव्यं शृतं पञ्चगुणे जले ।
अभ्यस्येत् ससिताक्षौद्रं पञ्चमूलीशृतं पयः ॥ १७ ॥
द्राक्षया पर्णिनीभिर्वा बलया मधुकेन वा ।
श्वदंष्ट्रया शतावर्या रक्तजित् साधितं पयः ॥ १८ ॥
पक्वोदुम्बरकाश्मर्य-पथ्याखर्जूरगोस्तनाः ।

---

समाक्षिक इत्यादि।—फल्गुफलं काकोदुम्बरिकाफलम्। एवं योगोऽयोगो भवति ॥ १४ ॥

मदयन्त्यङ्घ्रीति।—मदयन्ती मल्लिकाभेदः, तस्या मूलम् ॥ १५ ॥

अतसीत्यादौ।—वटावरोहत्वगिति—वटावरोहस्य त्वक्। एतत् सर्वं [illegible] अभया पेयम् ॥ १६ ॥

क्षीरपानविषयमाह कषाययोगैरित्यादि।—[illegible]। कषायापूर्वरसादयः। पञ्चमूली स्वल्पा; क्षीरपाकविधानेन पञ्चमूलीसाधितं पयः। अत्रापि ससिताक्षौद्र-मिति योज्यम्। यतो हि वाग्भटे—"पञ्चमूलेन लघुना शृतं वा ससितामधु" इति ॥ १७ ॥

द्राक्षयेत्यादि।—एते षड्योगाः। पर्णिनीभिरिति।—शालपर्णी-पृश्निपर्णी-मुद्गपर्णी-माषपर्णीभिरिति, एवं सत्र बहुवचनात्। दिवसपाकोऽत्र [illegible]। एते योगा विशेषेण मूत्रमार्गगे रक्तपित्ते ज्ञेयाः। तथा घृतस्य शर्करायाः प्रक्षेपोऽत्र ज्ञेयः। यदुक्तं वाग्भटे—"गोकण्टकाभीरुकृतं द्राक्षा-बलामधुकमोचरसैः। पयश्च, पृथक् शृतं क्षीरं सघृतं सितयापि वा। गोकण्टकाभीरुकृतं पर्णिनीभिस्तथा पयः। हन्त्याशु रक्तं विशेषान्मूत्रमार्गगम्" इति। एतच्च सक्षौद्रं सर्वमक्षणमित्यादि भट्टीयाद्युक्तम् ॥ १८ ॥

मधुना घ्नन्ति संलीढ़ा रक्तपित्तं पृथक् पृथक् ॥ १९ ॥
भद्रशाखोटकत्वग्रसविन्दुद्वितययुतो घृतद्विगुणः।
भूनिम्बकल्कः ऊर्द्धगपित्तास्रकासश्वासघ्नः ॥ २० ॥
खदिरस्य प्रियङ्गूणां कोविदारस्य शाल्मलेः।
पुष्पचूर्णन्तु मधुना लीढ़ा चारोग्यमश्नुते ॥ २१ ॥
अभया मधुसंयुक्ता पाचनी दीपनी मता।
श्लेष्माणं रक्तपित्तञ्च हन्ति शूलातिसारनुत् ॥ २२ ॥
वासकस्वरसे पथ्या सप्तधा परिभाविता।
कृष्णा वा मधुना लीढ़ा रक्तपित्तं द्रुतं जयेत्।
भावनायां द्रवो देयः सम्यगार्द्रत्वकारकः ॥ २३ ॥

---

पक्वोदुम्बरेत्यादि।—उदुम्बरादीनां फलानि पक्वानि, ततश्चैषां चूर्णानां मधुना लिह। काश्मर्यं गाम्भारीफलं, खर्जूरं पिण्डखर्जूरं, गोस्तनी द्राक्षा। मधुलिह्यादीन्येवमात्री यथार्हमेव वा समंच भागं वा कर्त्तव्यं कल्पनया काण्डछिद्रमुष्टिमात्रं वा ग्राह्यमित्यर्थः। नामाग्रहणाद्विरिचयोऽपि पक्वोदुम्बरफलं मधुना गुडेन च दृश्यते, यतो हि विन्दुसारे—"उदुम्बराणि पक्वानि गुडेन मधुनापि वा। छिन्दन्ति निहन्ति नासारक्तं मुखाद् घ्रुतम्॥" इति॥ १९॥

भद्रेत्यादि।—भद्रकाष्ठ.॥ २०॥

खदिरस्येत्यादि।—चरकस्य। चरके तु—"पुष्पचूर्णानि मधुना लिह्यात्तु रक्तपित्तम्" इति पाठः; टीकाकारोऽपि चूर्णानि तस्य रक्तपित्तमिति विशेषणं योगपदमेव इति कृत्वा पुष्पविशेषणत्वमाह। संग्रहकारोऽपि "पुष्पचूर्णानि मधुना लीढ़्वा चारोग्यमश्नुते" इति प्रतिसंस्कृत्य लिखितम्। अतश्च पुष्पचूर्णमेको योगः, अतश्च विभज्यान्येन निर्देशादिति कश्चिदिच्छति, किन्तु चरकटीकाकारैर्व्याख्यातोऽयमर्थः॥ २१॥

अभयेत्यादि।—अयं योगो यद्यपि पक्वोदुम्बरकाश्मर्यादियोगमध्ये पठित एव तदापि फलविशेषत्वज्ञापनार्थमिह पुनर्वचनम्॥ २२॥

वासकस्वरस इत्यादि।—कृष्णा च वासकस्वरसे भाविनेति योज्यः; भावना च सप्ताहम्। यतो हि चक्रादि,—"दिवा दिवातपे शुष्कं रात्रौ रात्रौ च वासयेत्।

एलादिगुडिका—

एलापत्रत्वचोऽर्द्धांशाः पिप्पल्यर्द्धपलं तथा ।
सितामधुकखर्जूर-मृद्वीकाश्च पलोन्मिताः ॥
संचूर्ण्य मधुना युक्त्या गुडिकाः कारयेद्भिषक् ।
अक्षमात्रां ततश्चैकां भक्षयेत्तु दिने दिने ॥
कासं श्वासं ज्वरं हिक्कां छर्दिं मूर्च्छां मदं भ्रमम् ।
रक्तनिष्ठीवनं तृष्णां पार्श्वशूलमरोचकम् ॥
शोषप्लीहाढ्यवातांश्च स्वरभेदं क्षतक्षयम् ।
गुडिका तर्पणी वृष्या रक्तपित्तञ्च नाशयेत् ॥ २४ ॥
लोहगन्धिनि निश्वासे चोद्गारे रक्तगन्धिनि ।
पृथ्वीकां घ्राणमात्रान्तु खादेद्द्विगुणशर्कराम् ॥ २५ ॥
नासाप्रवृत्तरुधिरं घृतभृष्टं श्लक्ष्णपिष्टमामलकम् ।
सेतुरिव तोयवेगं रुणद्धि मूर्ध्नि प्रलेपेन ॥ २६ ॥
घ्राणप्रवृत्ते जलमाशु देयं सशर्करं नासिकया पयो वा ।
द्राक्षारसं क्षीरघृतं पिबेद्वा सशर्करं चेक्षुरसं हितं वा ॥ २७ ॥

---

पूर्वोक्तं द्रव्यं सत्रावं भावनाविधिः। द्रवेण यावता द्रव्यमेकीभूतार्द्रता भवेत्। तावत्प्रमाणं निर्दिष्टं भिषग्भिर्भावनाविधौ॥" इति ॥ २३ ॥

एलेत्यादि।—खर्जूरमिह पिण्डखर्जूरम्।—अर्द्धांशा इति प्रत्येकं कर्षार्द्धमानाः। एवं सितादयश्च प्रत्येकं पलोन्मिताः। युक्त्या इति।—यावता मधुना गुडिका भवति तावन्मानं मधु देयम्। आढ्यवातं वातरक्तम्, ऊरुस्तम्भमित्यन्ये ॥ २४ ॥

पृथ्वीकां घ्राणमात्रामिति।—पृथ्वीका कृष्णजीरकं, न तु सूक्ष्मैला, टीकाकृद्भिर्व्याख्यातत्वात्। घ्राणो माषचतुष्टयम्। कृष्णजीरकस्य तीक्ष्णत्वे उष्णत्वेऽपि द्विगुणशर्करायोगात् प्रभावाद्वा पित्तघ्नत्वम् ॥ २५ ॥

नासेत्यादि।—आमलकं घृते भृष्टं काञ्जिकेन पिष्टं शिरसि लेपो देयः ॥ २६ ॥

घ्राणप्रवृत्त इत्यादि।—सुगमम्। जलादयः सशर्कराः पञ्च नस्ययोगा इति गदाधरः। तथा जलमपि घ्राणमाने सशर्करं पानीयं, पयोऽपि सशर्करं,

वार्ताभ्यां यस्य गच्छेत्तु तस्य कर्णौ प्रपूरयेत् ॥
चक्षुःस्राविणि रक्ते तु पूरयेत् तेन चक्षुषी ।
मेढ्रपायुप्रवृत्ते तु वस्तिकर्मसु तद्धितम् ॥
रोमकूपप्रवृत्ते तु तदभ्यङ्गे प्रयोजयेत् ॥ २० ॥

शतावरीघृतम्—शतावरी दाडिमतिन्तिडीकम्
काकोलिमेदे मधुकं विदारीम् ।
पिष्ट्वा च मूलं फलपूरकस्य
घृतं पचेत् क्षीरचतुर्गुणं भः ।
कासज्वरानाहविबन्धशूलं
तद्रक्तपित्तं घृतमाशु हन्यात् ॥ २१ ॥

बृहच्छतावरीघृतम्—

शतावर्यास्तु मूलानां रसप्रस्थद्वयं मतम् ।
तत्समञ्च भवेत् क्षीरं घृतप्रस्थं विपाचयेत् ॥
जीवकर्षभकौ मेदा महामेदा तथैव च ।
काकोली क्षीरकाकोली मृद्वीका मधुकं तथा ॥
मुद्गपर्णी माषपर्णी विदारी रक्तचन्दनम् ।
शर्करामधुसंयुक्तं सिद्धं विस्रावयेद्भिषक् ॥
रक्तपित्तविकारेषु वातरक्तगदेषु च ।

---

मयाप्यत्रैव रक्तशाखादौ शीतमेवाञ्जनमितीरणात्; व्यवहारस्तु प्रायः तैलपक्वमेवेति । तन्दुलस्य स्वरसक्षीरयोः प्रत्येकं चतुर्गुणं, द्रवा चैवेति चक्रपाणिव्याख्या ॥ १० ॥

शतावर्यादि ।—चरकस्य । केचिदत्र दाडिमफलम् श्रीफलपर्यायमिच्छन्ति । तिन्तिडीकं महार्द्रकम् । काकोलीयुक्ते मेदे काकोलीमेदे, मध्यपदलोपी समासः; किंवा काकोलीशब्दः प्रथमैकवचनान्तोऽविभक्तिकः, मेदे इति मेदाद्वयं, तन्त्रान्तरसमाख्यानात्; उक्तं हि—"काकोली मधुकं मेदे तिन्तिडीकं महार्द्रकम् । शतावरी विदारी च बीजपूरकदाडिमम् ॥ पिष्ट्वा चतुर्गुणे क्षीरे पक्वमाज्यं प्रयोजयेत् ॥" इति ॥ ११ ॥

कामदेवघृतम्—

अश्वगन्धापलशतं तदर्द्धं गोक्षुरस्य च।
शतावरी विदारी च शालपर्णी बला तथा॥
अश्वत्थस्य च शुङ्गानि पद्मबीजं पुनर्नवा।
काश्मरीफलमेतत् तु माषबीजं तथैव च॥
पृथग्दश पलान् भागांश्चतुर्द्रोणेऽम्भसः पचेत्।
चतुर्भागावशेषन्तु कषायमवतारयेत्॥
मृद्वीका पद्मकं कुष्ठं पिप्पली रक्तचन्दनम्।
बालकं नागपुष्पञ्च आत्मगुप्ताफलं तथा॥
नीलोत्पलं शारिवे द्वे जीवनीयं विशेषतः।
पृथक् कर्षसमश्चैव शर्करायाः पलद्वयम्॥
रसस्य पौण्ड्रकेक्षूणामाढ़कं तत्र दापयेत्।
चतुर्गुणेन पयसा घृतप्रस्थं विपाचयेत्॥
रक्तपित्तं क्षतक्षीणं कामलां वातशोणितम्।
हलीमकं तथा शोथं स्वरभेदं बलक्षयम्॥
अरोचकं मूत्रकृच्छ्रं पार्श्वशूलञ्च नाशयेत्।
एतद्राज्ञां प्रयोक्तव्यं बह्वन्तःपुरचारिणाम्॥
स्त्रीणाञ्चैवानपत्यानां दुर्बलानाञ्च देहिनाम्।
क्लीवानामल्पशुक्राणां जीर्णानामल्परेतसाम्।

---

अम्लत्वात् मधुनोऽपि चतुष्फलत्वमाहुः। अत्र कैश्चिदुक्तं—"कासं श्वासं ज्वरं पित्तभवञ्च शूलं गुल्मं यक्ष्मां प्लीहगदांश्च हन्ति" इति फलश्रुतिं पठन्ति। वाग्भटेऽप्युक्तं—"पित्त-गुल्मयक्ष्मश्वास-कासहृद्रोगकामलाः। तिमिरज्वरवीसर्प-स्वरभेदांश्च नाशयेत्॥" इति॥ ११॥

अश्वगन्धेत्यादौ।—तदर्द्धमिति गोक्षुरस्य पञ्चाशत् पलानि; शतावर्य्यादीनां सप्तानाञ्च प्रत्येकं पञ्चाशत् पलानीत्यर्थः। अश्वत्थशुङ्गादीनाञ्च पञ्चानां पृथक् दश

वासाखण्डकुष्माण्डकः—

पञ्चाशच्च पलं स्विन्नं कुष्माण्डात् प्रस्थमाज्यतः।
पाच्यं पलशतं खण्डं वासाक्वाथाढ़के पचेत्॥
मुस्ताधात्रीशुभाभार्गी-त्रिसुगन्धैश्च कार्षिकैः।
ऐलेयविश्वधन्याक-मरिचैश्च पलांशिकैः॥
पिप्पलीकुड़वश्चैव मधुमानीं प्रदापयेत्।
एतच्चूर्णोक्षितं तत्र दर्व्या सङ्घट्टयेत् पुनः॥
तद् यथाग्निबलं खादेद् रक्तपित्ती क्षतक्षयी।
वृष्यं पुनर्नवकरं बलवर्णकरञ्च तत्॥
कासं श्वासं क्षयं हिक्कां रक्तपित्तं हलीमकम्।
हृद्रोगमम्लपित्तञ्च पीनसञ्च व्यपोहति॥ ३७॥

---

पिबेत् स्वरक्षयने भिषक्। कुष्माण्डपीडनात् वीर्यं यत् तेन विपचेत् पुनः॥" इति। मुद्रया पाक इत्यादि—अङ्गुष्ठिपीडनजन्यं चिह्नं मुद्रा, तया पाको ज्ञेयः। एतदौपभवार्थं, तैलाच्चदपि पक्वलक्षणं ज्ञेयम्॥ ३६॥

पञ्चाशच्च पलमित्यादि।—पलानि पूर्ववत् स्विन्नं, संस्कृतकुष्माण्डात् पञ्चाशत्पलम्। न चात्र खण्डकुष्माण्डवत् कुष्माण्डरसो ग्राह्यः, पाकार्थं वासाक्वाथस्यैवोक्तत्वात्। वासाक्वाथस्तु चतुःषष्टिः पलानि, अन्यत्रापि चतुःषष्टिः शरावाः; क्वाथ्यस्य पञ्चप्रस्थपरिमाणत्वम्। शुभा वंशरोचना, त्रिसुगन्धं त्वगेलापत्रकम्। मधुमानीति मधुनीं पलानि। अत्र केचित् मानिकायां द्वैगुण्यमिच्छन्ति,—किन्तु—"मानिकाकुडवी चेति या वा संख्या परैः कृता। पर्दद्रवे द्रवे चैव न तत्र द्विगुणं विदुः॥" इति वचनात्, तदा व्यापाद्यिवचने मानिकादौ पञ्चाशद्वैगुण्यव्यापारस्यादर्शनेन पलानि, न तद्वैगुण्यात् षोडश पलानीत्यर्थः। चरकेऽपि पूर्वं प्रस्थमित्यत्र पूर्वपदेन द्रवार्द्रैगुण्याभावः सूचितः, तथा हि पूर्वपदं द्वैगुण्यप्रतिषेधपरम्, अन्यथा पूर्वपदं व्यर्थं स्यात्। एतत्तु मानिकाकुडवी चेति वचनस्य केनापि क्वचिदप्यलिखितत्वादनादरणीयम्। अत्र मानिकाया द्वैगुण्यमिच्छन् चरकोक्तवृद्धपाठदृष्टौ मानिकया षोडशपलत्व व्याख्यातवान्॥ ३७॥

वासाखण्डकुष्माण्डकः—

पञ्चाशच्च पलं स्विन्नं कुष्माण्डात् प्रस्थमाज्यतः ।
पाच्यं पलशतं खण्डं वासाक्वाथाढके पचेत् ॥
मुस्ताधात्रीशुभाभार्गी-त्रिसुगन्धैश्च कार्षिकैः ।
ऐलेयविश्वधन्याक-मरिचैश्च पलांशिकैः ॥
पिप्पलीकुडवश्चैव मधुमानीं प्रदापयेत् ।
एतच्चूर्णोक्षितं तत्र दर्व्या सङ्घट्टयेत् पुनः ॥
तद् यथाग्निबलं खादेद् रक्तपित्ती क्षतक्षयी ।
हृद्यं पुनर्नवकरं बलवर्णकरञ्च तत् ॥
कासं श्वासं क्षयं हिक्कां रक्तपित्तं हलीमकम् ।
हृद्रोगमम्लपित्तञ्च पीनसञ्च व्यपोहति ॥ ३७ ॥

---

क्षिपेत् खण्डशतं भिषक् । कुष्माण्डपीडनात् तोयं यत् तेन विपचेत् पुनः ॥" इति । मुद्रया पाक इत्यादि—अङ्गुलिपीडनजन्य चिह्नं मुद्रा, तथा पाको ज्ञेय । एतच्चोपलक्षणं, तेनान्यदपि पाकलक्षणं ज्ञेयम् ॥ ३६ ॥

पञ्चाशच्च पलमित्यादि ।—अत्रापि पूर्ववत् स्विन्नं, त्वक्रहितकुष्माण्डात् पञ्चाशत्पलम् । न चात्र खण्डकुष्माण्डवत् कुष्माण्डरसो ग्राह्यः, पाकार्थं वासाक्वाथस्यैवोक्तत्वात् । वासायास्तु षष्टि पलानि, जलस्यापि चतुःषष्टिः शरावाः ; शेषन्तु षोडशशरावरूपमाढकम् । शुभा वंशरोचना, ऐलेयम् एलवालुकम् । मधुमानीति मधुनो द्वौ पलानि । अत्र केचित् माषिकायां द्वैगुण्यमिच्छन्ति ;—किन्तु—"माषिकाकुडवी चेति या वा संज्ञा पलैः कृता । आर्द्रद्रव्ये द्रवे चैव न तत्र द्विगुणं विदुः ॥" इति वचनात्, तथा चारपाणिवचने माषिकाष्टौ पलानीत्येवमवधारणादष्टावेव पलानि, न तद्द्वैगुण्यात् षोडश पलानीत्यर्थः । चरकेऽपि पूर्णं शरावमित्यत्र पूर्णपदेन शरावे द्वैगुण्याभावः सूचितः, तथा हि पूर्णपदं द्वैगुण्यप्रतिषेधपरम्, अन्यथा पूर्णपदं व्यर्थं स्यात् । यत्तु माषिकाकुडवी चेति वचनस्य केनापि क्वचिदप्यलिखितत्वादनार्षत्वमायाद्य माषिकायां द्वैगुण्यमिच्छन् चरकोक्तच्यवनप्राशादिघृते माषिकया षोडशपलत्वमाम्नातवान् ॥ ३७ ॥

वासाखण्डः—तुलामादाय वासायाः पचेदष्टगुणे जले ।
तेन पादावशेषेण पाचयेदाढकं भिषक् ॥
चूर्णानामभयानाञ्च खण्डाच्छताद्घृतं तथा ।
द्वे पले पिप्पलीचूर्णात् सिद्धशीते च माक्षिकात् ॥
कुडवं पलमात्रन्तु चातुर्जातं सुचूर्णितम् ।
क्षिप्त्वा विलोडितं खादेद् रक्तपित्ती क्षतक्षयी ।
श्वासकासपरीतश्च यक्ष्मणा च प्रपीड़ितः ॥ ३८ ॥

खण्डकाद्यो लौहः—

शतावरी छिन्नरुहा वृषो मुण्डतिका बला ।
तालमूली च गायत्री त्रिफलायास्त्वचस्तथा ॥
भार्गी पुष्करमूलञ्च पृथक् पञ्च पलानि च ।
जलद्रोणे विपक्तव्यमष्टभागावशेषितम् ॥
दिव्यौषधहतस्यापि माक्षिकेण हतस्य वा ।
पलद्वादशकं देयं दृढकालौहस्य चूर्णितम् ॥
खण्डतुल्यं घृतं देयं पलषोड़शिकं बुधैः ।

---

तुलामादायेत्यादि ।—अत्राद्रा वासा, एवं सर्वत्र, [illegible] । तथा हि—"वासानिम्बपटोलकेतकिबलाकुष्माण्डकेन्दीवरी-वर्षाभूकुटजाश्वगन्धसहिते द्वे पूति-गन्धामृते । मांसं नागरमाषहास्तपुरा [illegible] निम्बपत्रो [illegible] न विशुष्यिता ये गृह्यन्ते सदा ।" इति । अष्टगुणे जल इति—अष्टगुणे ; मात्र द्विगुणम्,—"न द्विगुणं तुलामाने पयोऽष्टगुणमिति तथा" इत्युक्तेः । [illegible] पञ्च-विंशतिशरावाः । चूर्णानामिति—हरीतकीचूर्णानामाढकं चतुःषष्टिपलानीत्यर्थः ; "प्रायो न पाकचूर्णानाम्" इति प्रायःशब्दात् पाकोऽप्यस्तीति सूचयति, तेन चूर्णानां पाकोऽपि न विरोधः । "चातुर्जातं सुचूर्णितम्" इति प्रत्येकं पलमात्रं, निर्देशस्य मान-प्रधानत्वात् ॥ ३८ ॥

खण्डकाद्यं लौहमाह, शतावरीत्यादि ।—छिन्नरुहा गुडूची ; वृषो वासकः, मुण्डतिका मुण्डीरी ; गायत्री खदिरः । त्रिफलायास्त्वच इति—निरस्थित्रिफलायाः ।

पचेत् ताम्रमये पात्रे गुड़पाको यथा मतः ॥
प्रस्थार्द्धं मधुनो देयं शुभाश्मजतुकत्वचः ।
शृङ्गी विडङ्गं कृष्णा च शुण्ठ्यजाजी पलं पलम् ॥
त्रिफला धान्यकं पत्रं द्वयं मरिचकेशरम् ।
चूर्णं दत्त्वा सुमथितं स्निग्धे भाण्डे निधापयेत् ॥
यथाकालं प्रयुञ्जीत विडालपदकं ततः ।
गव्यक्षीरानुपानञ्च सेव्यं मांसरसं पयः ।
गुरुवृष्यानुपानानि स्निग्धं मांसादि बृंहणम् ॥
रक्तपित्तं क्षयं कासं पक्तिशूलं विशेषतः ।
वातरक्तं प्रमेहञ्च शीतपित्तं वमिं क्रिमीन् ॥
श्वयथुं पाण्डुरोगञ्च कुष्ठं प्लीहोदरं तथा ।
आनाहं रक्तसंस्रावमम्लपित्तं निहन्ति च ॥
आरोग्यं पुत्रदं श्रेष्ठं कामाग्निबलवर्द्धनम् ।
चक्षुष्यं बृंहणं वृष्यं माङ्गल्यं प्रीतिवर्द्धनम् ॥

---

दिव्यौषधिर्मनःशिला, कणामूलं वा, माक्षिकं स्वर्णमाक्षिकम्। सत शिलास्वर्णमाक्षिकाभ्यां प्रत्येकं भिन्नत्वा वा प्रक्षिप्य दग्ध्वा च लौहं मारणीयम्। खण्डतुल्यमिति च्छेदः; तेन खण्डस्यापि द्वादश पलानि। केचित् तु रक्तपित्तहन्तृत्वात् खण्डस्य प्रचुरतरत्वमधिकरोतीति घृतपदेन सह खण्डतुल्यमिति योजयन्ति, तत्र तु न सम्यक्, लौहयोगत्वादस्य लौहमात्राधिक्येन तन्मात्रापकर्षस्यायुक्तत्वात्; रक्तपित्तप्रत्यनीकत्वम् लौहस्य स्वरूपत एव महाशक्तिकत्वात् विशेषतो रक्तपित्तहरम्। तत् तु द्रव्यपुटादिभावितत्वेन महावीर्यकतयोपपन्नम्; व्यवहारश्च लौहसमतयैव। प्रस्थार्द्धमिति—षोडश पलानि। शुभा वंशलोचना; अश्मजतुक शिलाजतु, त्वक् गुडत्वक्; शुभादीनां जीरकान्तानां प्रत्येकं पलं; त्रिफलादीनां केशरान्तानां प्रत्येकं द्वाक्षं, कर्षद्वयमित्यर्थः। विडालपदकं कर्षः; एतच्च पूर्वदुर्बलपुरुषाभिप्रायेण प्रमाणमुक्तं, व्यवहारस्तु रक्तिद्वितयपर्यन्तादारभ्य रक्तिद्वयवृद्ध्या माषचतुष्टयं यावत् वृद्धिः। गव्यक्षीरानुपानमिति।—क्षीरापेक्षया चतुःषष्टिगुणं, क्षीरान्तरे तथा दर्श-

क्षीराद्रं साधयेत्कारं खण्डकाद्यं प्रकीर्त्तितम् ॥
छागं पारावतं मांसं तित्तिरिः क्रकराः शशाः ।
कुरङ्गाः कृष्णसाराश्च तेषां मांसानि योजयेत् ॥
नारिकेलपयःपानं सुनिषण्णकवास्तुकम् ।
शुष्कमूलकजीराख्यं पटोलं बृहतीफलम् ॥
फलं वार्त्ताकु पक्वाम्रं खर्जूरं स्वादु दाडिमम् ।
चकारपूर्वकं यच्च मांसस्यानूपसम्भवम् ॥
वर्जनीयं विशेषेण खण्डकाद्यं प्रकुर्वता ।
लोहान्तरवदत्रापि पुटनादिक्रियेष्यते ॥ ३९ ॥
यच्च पित्तज्वरे प्रोक्तं बहिरन्तश्च भेषजम् ।
रक्तपित्ते हितं तच्च क्षीणक्षतहितञ्च यत् ॥ ४० ॥

इति रक्तपित्त-चिकित्सा ।

---

नात्। उक्तं हि—"अनुपाने चतुःषष्टिगुणं प्राहुः सदा बुधाः" इति। क्षीराश्च-मिति क्षीराख्यमाकं नारिकेलाकारं पश्चकाशी ओरीति ख्यातम्। चकारपूर्वकमिति विहितान् क्रकरकुरङ्गकृष्णसारान् विहाय, द्यात्। चकारपूर्वकं चकोर-कर्कोटादि, तत् परित्याज्यम्। अन्यलौहवदत्रापि पुटनादि ज्ञेयं, मर्दन-मर्दनादिकञ्च। अत्र केचित् मन्मथाभ्रसंयोगं कुर्वन्ति। एतदनुरूपञ्च वचनं पठन्ति,—"न रसेन विना लौहं मन्मथाभ्रकं विना" इति, तथा—"अदत्त्वैव विना लौहं यः करोति पुमानिह। उदरे तस्य जायन्ते नात्र संशयः ॥" इति। एतत् तु न व्याख्यातसिद्धम्। यतः रसायनहितलौहप्रयोगस्य मन्दसत्वप्रति-पादनार्थे तथाविधकल्पलौहे निर्दिष्टादिव्यापकरागिरसर्वैमभ्रकरसायनं प्रक्षेप-णार्थञ्च मात्रातिशयप्रतिपादनार्थमपि चतुःसमलौहे वाक्यद्वयमिदं पठितम्। पुमानि-हेति, इत्यस्मात् वचनद्वयमपि तत्रैव बोध्यं, नात्र। अन्यथा सामान्यत एव परिभाषितमिदं स्यादिति ॥ ३९ ॥ ४० ॥

इति रक्तपित्त-चिकित्सा विवृतिः ॥

धन्याकपिप्पलीविश्व-दशमूलीजलं पिबेत्।
पार्श्वशूलज्वरश्वास-पीनसादिनिवृत्तये ॥ ४ ॥
अश्वगन्धाऽमृताऽभीरु-दशमूलीबलावृषाः।
पुष्करातिविषे घ्नन्ति क्षयं क्षीररसाशिनः ॥ ५ ॥
दशमूलबलारास्ना-पुष्करसुरदारुनागरैः क्वथितम्।
पेयं पार्श्वांसशिरोरुक्क्षयकासादिशान्तये सलिलम् ॥ ६ ॥
ककुभत्वङ्नागबला-वानरीबीजानि चूर्णितं पयसि।
पक्वं मधुघृतयुक्तं ससितं यक्ष्मादिकासहरम् ॥ ७ ॥
पारावतकपिच्छाग-कुरङ्गाणां पृथक् पृथक्।
मांसचूर्णमजाक्षीरं पीतं यक्ष्महरं परम् ॥ ८ ॥
घृतकुसुमसारलीढं क्षयं क्षयं नयति गजबलामूलम्।
दुग्धेन केवलेन तु वायसजङ्घा निपीतैव ॥ ९ ॥
पथ्याद्राक्षासितालेहः क्षयघ्नः क्षौद्रतैलवान्।

---

घृते पुनः चक्रपरिभाषानुसारेण प्रस्थमाने चतुर्गुणत्वं जलं प्रस्थार्धमेव भवति, तेन तत्र चतुर्दश तोलक षट् पलानि; तन्त्रे पञ्चप्रस्थम्, चक्रपरिभाषयेति ॥ ३ ॥

धन्याकपिप्पल्यादि।—वातकफोत्तरे योगोऽयम् ॥ ४ ॥

अश्वगन्धेत्यादि।—अभीरुः शतमूली; वृषो वासकः। क्षयिणामयं योगः। चक्र-मांसादिषु पुष्करातिविषयोः प्रक्षेपणमिति स्पष्टटिप्पनी ॥ ५ ॥

दशमूलमित्यादि।—स्पष्टम् ॥ ६ ॥

ककुभेत्यादि।—ककुभत्वक् अर्जुनवल्कलम्; नागबला गोरक्षतण्डुला, अस्या मूलं सर्वत्र ग्राह्यम्। वानरी शूकशिम्बी; एषां चूर्णं प्रत्येकमेकपलं, शर्करा पल १, दुग्धशराव २, सर्वमिदं पक्त्वा उत्तारिता कार्या, परिमार्जनार्थं घृतपलं २, सुशीते [illegible] किञ्चित् दत्त्वा भक्ष्यम् ॥ ७ ॥

पारावतेत्यादि।—स्पष्टम् ॥ ८ ॥

घृतेत्यादौ।—कुसुमसारो मधु। गजबला नागबला, गोरक्षतण्डुलेति ख्याता। वायसजङ्घा काकजङ्घा ॥ ९ ॥

मधुसर्पिर्युतो वाऽथ गव्याजपयसितोऽथवा ॥
शर्करामधुसंयुक्तं नवनीतं लिहन् पयो।
चोराशी लभते पुष्टिमतुल्ये साज्यमाक्षिके ॥ १० ॥

सितोपलादिलेहः—

सितोपलातुगाक्षीरी-पिप्पलीबहुलात्वचः।
अन्त्यादूर्ध्वं द्विगुणितं लेहयेत् क्षौद्रसर्पिषा ॥
चूर्णं वा भक्षयेदेतत् श्वासकासक्षयापहम्।
सुप्तजिह्वारोचकिनमल्पाग्निं पार्श्वशूलिनम्।
हस्तपादांसदाहेषु ज्वरे रक्ते तथोर्ध्वगे ॥ ११ ॥

लवङ्गाद्यं चूर्णम्—

लवङ्गकक्कोलमुशीरचन्दनं नतं समीलोत्पलजीरकं समम्।
त्रुटिः सकृष्णागुरुभृङ्गकेशरं कणा सविश्वा नलदं सहाम्बुदम् ॥
सहेन्दुजातीफलवंशलोचनाः सिताष्टभागं समसूक्ष्मचूर्णितम्।
सुरोचनं तर्पणमग्निदीपनं बलप्रदं वृष्यतमं त्रिदोषजित् ॥
उरोविबन्धं तमकं गलग्रहं सकासहिक्कारुचियक्ष्मपीनसम्।
ग्रहण्यतीसारभगन्दरार्बुदं प्रमेहगुल्मांश्च निहन्ति सज्वरान् ॥१२

---

शर्करेत्यादि—सितोदक प्रथमं योगद्वयं त्यक्तम्। अतुल्ये साज्यमाक्षिके इत्यपि योगान्तरम्। अत्रापि "लिहन् पयो चोराशी लभते पुष्टिम्" इति योज्यम् ॥ १० ॥

सितोपलेत्यादि।—चरकस्य। सितोपला शर्करा। तुगाक्षीरी वंशलोचना। बहुला एला। त्वक् गुडत्वक्। अन्त्यादूर्ध्वं द्विगुणितमिति।—अन्त्यायास्त्वच एको भागः। एलाया द्वौ। पिप्पल्याश्चत्वारः। तुगाक्षीर्या अष्टौ। सितोपलायाः षोडश। यद्यप्यूर्ध्वशब्दोऽनागतमभिधत्ते यथा—"अत ऊर्ध्वं प्रवक्ष्यामि यथापूर्वं विशेषतः" तथाप्यत्र विपर्यासादतीतमप्यभिधत्ते। चूर्णं वा भक्षयेदित्यनेन मधुसर्पिर्विनापि भक्षणं बोधयति ॥ ११ ॥

लवङ्गेत्यादौ।—नतं तगरपादिका, तदभावे जियङ्गीयोपदः। समीलोत्पल-पद्मजीरकमिति पाठे—पद्मं केशरम्। त्रुटिः सूक्ष्मैला। भृङ्गं गुडत्वक्। नलदं

तालीशाद्यं चूर्णं, मोदकश्च—

तालीशपत्रं मरिचं नागरं पिप्पली शुभा ।
यथोत्तरं भागवृद्धा त्वगेले चार्द्धभागिके ॥
पिप्पल्यष्टगुणा चात्र प्रदेया सितशर्करा ।
श्वासकासारुचिहरं तच्चूर्णं दीपनं परम् ॥
हृत्पाण्डुग्रहणीरोग-प्लीहशोषज्वरापहम् ।
छर्द्यतीसारशूलघ्नं मूढवातानुलोमनम् ॥
कल्पयेद् गुडिकाश्चैतच्चूर्णं पक्त्वा सितोपलाम् ॥
गुडिका ह्यग्निसंयोगाच्चूर्णाल्लघुतराः स्मृताः ।
पैत्तिके पाठयन्त्येके शुभया वंशलोचनाम् ॥ १३ ॥

शृङ्ग्यर्जुनाद्यचूर्णम्—

शृङ्ग्यर्जुनाश्वगन्धानागबलापुष्कराभयाच्छिन्नरुहाः ।
तालीशादिसमेता लेह्या मधुसर्पिर्भ्यां यक्ष्महराः ॥१४॥

---

मांसी । सहाम्बुमिति पाठे—अम्बु बालकम् । चण्डोऽम्लमूलम् । शर्करायाः एकभागापेक्षयाष्टौ भागाः ; अन्ये तु निखिलचूर्णापेक्षयेत्याहुः । व्यवहारस्तु पूर्ववत् ॥ १२ ॥

तालीशपत्रमित्यादौ ।—शुभेति पिप्पलीविशेषणं, न तु वंशलोचना, समानार्थे तालीशादावदृष्टत्वात् । किन्तु संग्रहकाराः प्रकरणेऽस्मिन् शुभया वंशलोचना चाहेति लिखन्ति । एतदर्थं कश्चिल्लिखति यथा—"तालीश-मरिच-नागर-मागधिका-शुभ-लोचनाः क्रमशः । वृद्धास्त्वगेलार्द्धं कणाश्चः सिता भवेदष्टगुणा ॥" इति । त्वगेले चार्द्धभागिके इति ।—प्रथमभागापेक्षया त्वगेलयोः प्रत्येकमर्द्धभागत्वम् ; पिप्पल्यष्टगुणेति ।—पिप्पलीभागापेक्षया अष्टगुणा सितशर्करा । गुडिकापक्षे सर्वं चानेन शर्करापाकं कुर्वन्ति वृद्धाः ॥ १३ ॥

शृङ्ग्यादौ ।—छिन्नरुहा गुडूची । तालीशादिसमेता इत्यनेन तालीशादिद्रव्यमात्रमनुकर्षति, न तु तदीयमानादिकमपि, यथा यथामात्रचैतसघृते कल्याणकस्य चाङ्गेरीयुक्तत्वेऽपि कल्याणप्रतीतकल्कद्रव्यमात्रमिति, तेनात्र शृङ्ग्यादीनां समभागतया तालीशाद्योऽपि समभागा एव ग्राह्याः ॥ १४ ॥

मधुताप्यविडङ्गाश्म-जतुलौहघृताभयाः ।
घ्नन्ति यक्ष्माणमत्युग्रं सेव्यमाना हिताशिना ॥ १५ ॥

विन्ध्यवासियोगः—

व्योषं शतावरी त्रीणि फलानि द्वे बले तथा ।
सर्वामयहरो योगः सोऽयं लौहरजोऽन्वितः ॥
एष यक्ष्मःक्षतं हन्ति कासजांश्च गदांस्तथा ।
राजयक्ष्माणमत्युग्रं बाहुस्तम्भमथार्दितम् ॥ १६ ॥

रसेन्द्रगुड़िका—

कर्षं शुद्धरसेन्द्रस्य स्वरसेन जयार्द्रयोः ।
शिलायां खल्लयेत् तावद् यावत् पिण्डं घनं ततः ॥

---

मधुताप्येत्यादि ।—मधुघृताभ्यां भेदः । लौहमलायचूर्णं पुटादिशोधितं, न तु लौहमगुरु रसायनत्वात् । लौहमगुरिति इन्द्रटिप्पनी । ताप्यं स्वर्णमाक्षिकं, तच्च शतसारचक्रमाणविधिना शोधितं ग्राह्यम् । अश्मजतु शिलाजतु, तदपि चक्रपाणि-शिलाजतुशोधनविधिना शोधितं ग्राह्यम् । चयोरुज्याह मिलितेतरचूर्णसमम् । लौहचूर्णस्यात रसायनतया श्रेष्ठत्वात् महावीर्यत्वाच्च महाव्याधिप्रशमनहेतुत्वं युज्यत इति ॥ १५ ॥

विन्ध्यवासियोगे ।—त्रीणि फलानीति त्रिफला ; द्वे बले इति नागबलाबले, न तु श्वेतपीतभेदात् । अत्र लौहचूर्णं रसायनतया श्रेष्ठत्वात् धौगिकत्वात् महावीर्यत्वाच्च मिलितव्योषादिचूर्णेन सम ग्राह्यम् ; अत एव व्योषादिपाठात् विच्छिद्य लौह-रजोऽन्वित इति पठितम् । चूर्णदोष एवायं घृतमधुनोरनुक्तत्वात् । अन्ये तु—लेह एवायं घृतमधुभ्यां कर्त्तव्यः, लेहप्रकरणविहितत्वादित्याहुः । युक्तमेतत् ॥ १६ ॥

कर्षमित्यादि ।—रसेन्द्रः पारदस्तस्य शोधनं चक्रपाणिप्रभृतिरसगुडिकायां यथा-मानविधिना कार्यम् । तदनुक्तमेव अग्रासा जयन्त्याः स्वरसेन खल्लशिलायां मर्दनं

अलकर्णीकाकमाचो-रसाभ्यां भावयेत् पुनः ।
सौगन्धिकपलं भृङ्ग-स्वरसेन विभावितम् ॥
चूर्णितं रससंयुक्तमजाक्षीरपलद्वये ।
खल्लितं घनपिण्डन्तु गुड़ीं स्विन्नकलायवत् ॥
कृत्वादौ शिवमभ्यर्च्य द्विजातीन् परितोष्य च ।
जीर्णान्नो भक्षयेदेकां क्षीरमांसरसाशनः ॥
सर्वरूपं क्षयं श्वासं रक्तपित्तमरोचकम् ।
अपि वैद्यगतैस्त्यक्तमम्लपित्तं नियच्छति ॥ १७ ॥

एलादिमन्थः—

एलाजमोदामलकाभयाक्ष-गायत्रिनिम्बासनशालसारान् ।
विड़ङ्गभल्लातकचित्रकांश्च कटुत्रिकाम्भोदसुराह्वकांश्च ॥
पक्त्वा जले तेन पचेत् तु सर्पि-
स्तस्मिन् सुसिद्धे त्ववतारिते च ।
त्रिंशत्पलान्यत्र सितोपलाया
दद्यात् तुगाक्षीरिपलानि षट् च ॥
प्रस्थे घृतस्य द्विगुणञ्च दद्यात्
क्षौद्रं ततो मन्थहतं निदध्यात् ।
पलं पलं प्रातरतो लिहेच्च
पश्चात् पिबेत् क्षीरमतन्द्रितश्च ॥

---

पिण्डाकारं कुर्य्यात्, तदनु अलकर्णो मोरटा तस्या रसेनाप्लाव्य प्रत्येकं सप्तधा भावयेत्; ततः सौगन्धिकं मद्दरगन्धकं तदपि भृङ्गराजस्य वक्ष्यमाणविधिना शोधितं पलपरिमितं पारदेन सह घर्षणीयम्; तदनन्तरमजाक्षीरपलद्वये खल्लशिलायान्ते खल्लितं घनपिण्डतापन्ने तु स्विन्नकलायप्रमाणां गुडिकां कुर्य्यात्; तदनु प्रत्यहमेकां गुडिकां जीर्णान्ने भक्षयेत्। अनुपानञ्च दुग्धादिकमेव ॥ १७ ॥

एलेत्यादि।—सुश्रुतस्य। अजमोदा यमानी; अक्षं विभीतकम्; गायत्री खदिरः; असनः पीतशालः; गायत्र्यादीनां शालान्तानां चतुर्णां सारो ग्राह्यः। सुराह्वा सुराह्वम्। एलादीनां सुराह्वान्तानां पृथगष्टौ पलानि गृह्यन्ते। जलं

समाक्षिकं कौड़विकं तम्मवं खजमूर्च्छितम्।
स्त्यानं सर्पिर्गुड़ान् क्वत्वा भूर्जपत्रेण वेष्टयेत्॥
तान् जग्ध्वा पलिकान् चोरं मद्यश्चानुपिवेत् कफे।
शोषे कासे क्षतक्षीणे श्रमस्त्रीभारकर्षिते॥
रक्तनिष्ठीवने तापे पीनसे चोरसि क्षिते।
शस्ताः पार्श्वशिरःशूले भेदे च स्वरवर्णयोः॥
क्वाथ्ये त्रयोदशपले द्र्याल्पलभयाज्जलम्।
षट्गुणं क्वाथसमौ विदार्याजरसौ पृथक्।
केचिद्दयोक्तक्वाथ्ये तु क्वाथं घृतसमं जगुः॥ १८॥

अमृतप्राशः—विल्वाग्निमन्थश्योणाक-काश्मर्यः पाटलो वला।
पर्ण्यश्चतस्रः पिप्पल्यः श्वदंष्ट्रा वृहतीद्वयम्॥
शृङ्गी तामलकी द्राक्षा जीवन्ती पुष्करागुरु।
अभया सामृता ऋद्धिर्जीवकर्षभकौ शटी॥
मुस्तं पुनर्नवामेदे सूक्ष्मैलोत्पलचन्दने।
विदारी वृषमूलानि काकोली काकनासिका॥
एषां पलोन्मितान् भागान् शतान्यामलकस्य च।

---

चीरस्य द्वैगुण्यात् त्रयोदश शरावाः; मिलितौ विदार्याजरसावपि मानद्यापेक्षया द्विगुणाविति; एवं मिलित्वा साड़ैकाविंशच्छरावद्रवैः पाक इति व्यवहरन्ति। व्यवहारं पुनः प्रायेणानेनैव। खजो मन्थानदण्डः। भूर्जपत्रे वेष्टनञ्च मधुस्रावार्थम्॥ १८॥

विल्वेत्यादि।—पर्ण्यश्चतस्र इति।—शालपर्णी पृश्निपर्णी-मुद्गपर्णी माषपर्ण्यः। तामलकी—भूम्यामलकी। जीवन्ती स्वनामख्याता। पुनर्नवामेदे इति।—पुनर्नवा च मेदा च इति द्वन्द्वः, न तु मेदाद्वयं, "पर्णिन्यः पिप्पली शृङ्गी मेदा तामलकी त्रुटिः" इति वाग्भटवचनात्। उत्पलं नीलोत्पलं, न तु कुष्ठम्, सर्वस्मिन्नेव तन्त्रान्तरे कुष्ठमिति पाठस्य सटीकाकारैर्व्याख्यातत्वात्। काकनासिका काकतुण्टी; जेज्जटस्तु रसोत्तममित्याह। शतान्यामलकस्येति।—आकृतिमानत्वात् आमलकीफलस्य पञ्च शतानि; एतानि कर्पटे पोट्टलीं क्वत्वा अपरैः क्वाथ्यद्रव्यैः सह क्वथनीयम्। गतरसत्वञ्च द्रव्याणां चतुर्भागावशेषेण क्वाथेनेति स्वयमेव वक्ष्यति; अत एव पादावशेष इति

पञ्च दद्यात् तदैकध्यं जलद्रोणे विपाचयेत् ॥
ज्ञात्वा गतरसान्येतान्यौषधान्यथ तं रसम्।
तच्चामलकमुद्धृत्य निष्कुलं तैलसर्पिषोः।
पलद्वादशके भृष्ट्वा दत्त्वा चार्द्धतुलां भिषक्।
मत्स्यण्डिकायाः पूतायाः लेहवत् साधु साधयेत् ॥
षट्पलं मधुनश्चात्र सिद्धशीते प्रदापयेत्।
चतुष्पलं तुगाक्षीर्याः पिप्पल्या द्विपलं तथा ॥
पलमेकं निदध्याच्च त्वगेलापत्रकेशरात्।
इत्ययं च्यवनप्राशः परमुक्तो रसायनः ॥
कासश्वासहरश्चैव विशेषेणोपदिश्यते।
क्षीणक्षतानां वृद्धानां बालानाञ्चाङ्गवर्द्धनः ॥
स्वरक्षयमुरोरोगं हृद्रोगं वातशोणितम्।
पिपासां मूत्रशुक्रस्थान् दोषांश्चैवापकर्षति ॥
अस्य मात्रां प्रयुञ्जीत योपहन्यान्न भोजनम्।
अस्य प्रयोगाच्च्यवनः सुवृद्धोऽभूत् पुनर्युवा ॥
मेधां स्मृतिं कान्तिमनामयत्वं वपुःप्रकर्षं बलमिन्द्रियाणाम्।
स्त्रीषु प्रहर्षं परमग्निवृद्धिं वर्णप्रसादं पवनानुलोम्यम् ॥

---

वाग्भटेनोक्तम्। अर्थ्यं त्वष्टभागावशेष इत्याहुः, तन्तु न व्यवहारसिद्धम्। निष्कुल-मिति—शिराशिररहितं, तच्च चीनादिघर्षणेन कार्यम्। पलद्वादशक इति—मिलित्वा, निर्देशस्य मानप्रधानत्वात्; एवं त्वगेलापत्रकेशरादपि मिलित्वैव पलम्। ये तु समासकरणसामर्थ्यात् मिलितग्रहणमाहुः, तन्मते—पथ्याहरीतक्यादौ दशमूलस्यापि मिलित्वा द्विपलता स्यात्, दशमूलीति समासनिर्देशादिति ज्ञेयम्। अत्र समयो-रपि मधुसर्पिषोर्द्रव्यान्तरसंयोगादेव न विरुद्धत्वं ज्ञेयम्; किंवा आमलकमर्जनेन घृतस्योपशोषित्वात् समत्वमेव नास्तीति। यद्यपि मत्स्यण्डिकापेक्षया शर्करा विमला तथाप्युपात्तत्वादिह सैव व्यवस्था, तदभावे शर्करा खण्डो वा गृह्यते; पक्षे तु शर्क-रैवोक्ता। च्यवनस्य मुनेः प्राश इति षच्। योपहन्यान्न भोजनमिति।—ये प्रयोगाद॰

रसायनस्यास्य नरः प्रयोगात् लभेत जीर्णोऽपि कुटीप्रवेशात्।
जरागतं पूर्वमपास्य रूपं बिभर्त्ति रूपं नवयौवनस्य॥
सितामत्स्यण्डिकालाभे धात्र्याय न्दुभलङ्गम्।
चतुर्भागजले प्रायो द्रव्यं गतरसं भवेत्॥ २०॥

जीवन्त्याद्यं घृतम्—

जीवन्तीं मधुकं द्राक्षां फलानि कुटजस्य च।
शटीं पुष्करमूलञ्च व्याघ्रीं गोक्षुरकं बलाम्॥
नीलोत्पलं तामलकीं त्रायमाणां दुरालभाम्।
पिप्पलीञ्च समं पिष्ट्वा घृतं वैद्यो विपाचयेत्॥
एतद् व्याधिसमूहस्य रोगेशस्य समुत्थितम्।
रूपमेकादशविधं सर्पिरग्र्यं व्यपोहति॥ २१॥

पिप्पलीघृतम्—पिप्पलीगुडसंसिद्धं छागक्षीरयुतं घृतम्।
एतदग्निप्रवृद्ध्यर्थं सर्पिश्च क्षयकासिनाम्॥ २२॥

धात्र्याद्यघृतम्—यष्टीबलागुडूच्यल्प-पञ्चमूलीतुलां पचेत्।
शूर्पेऽपामष्टभागस्थे तत्र पात्रं पचेद्घृतम्॥

---

भोजनोपयुक्ता करणेन द्वितीयाद्यन्ताभि भोजनोपरोधं न करोतीत्यर्थः; यदुक्तं,—"ह्यपचि नैकमाहारं या सा मात्रा मता मता" इति। कुटीप्रवेशादिति।—वातातपपरिहारेणेत्यर्थः॥ २०॥

जीवन्तीमित्यादि।—चरकस्य।—अत्र जलमेव चतुर्गुणम्। केचित्तु चरके यदंशाष्टतानन्तरमयं योग उक्तः, अतः प्रत्यासत्त्या पूर्वयोगोक्तं क्षीरसितादिकमपि द्रव्यमिच्छन्ति; किन्तु वाग्भटादिभि न दृश्यन्ते जलमेव युक्तम्॥ २१॥

पिप्पलीत्यादि।—पिप्पलीगुडौ कल्कौ; छागक्षीरं चतुर्गुणम्॥ २२॥

यष्टीत्यादि।—वाग्भटस्य।—यष्ट्यादीनां मिलिता तुला। शूर्प इति—द्रोणद्वये; उक्तं दृढबलेन—"कुम्भो द्रोणद्वयं शूर्पः" इति; चक्रपाणिनाप्युक्तं,—"द्रोणद्वयन्तु शूर्पः स्यात् कुम्भ इत्यभिधीयते"; तस्मात् द्रोणद्वयार्थे शूर्प इति हन्दलिखितमतं नादर-

धात्रीविदारीक्षुरसे त्रिपात्रे पयसोऽर्म्मणे।
सुपिष्टैर्जीवनीयैश्च पाराशरमिदं घृतम्।
सघेन्वं राजयक्ष्माणमुन्मूलयति शीलितम् ॥ २३ ॥

छागलाद्यं घृतम्—

छागमांसतुलां गृह्य साधयेत्तत्पणेऽम्भसि।
पादशेषेण तेनैव सर्पिःप्रस्थं विपाचयेत् ॥
ऋद्धिवृद्धी च मेदे द्वे जीवकर्षभकौ तथा।
काकोलीक्षीरकाकोली-कल्कैः पृथक् पलोन्मितैः ॥
सम्यक् सिद्धे चावतार्य्य शीते तस्मिन् प्रदापयेत्।
शर्करायाः पलान्यष्टौ मधुनः कुड़वं क्षिपेत् ॥
पलं पलं पिबेत् प्रातर्यक्ष्माणं हन्ति दुर्जयम्।
क्षतक्षयञ्च कासञ्च पार्श्वशूलमरोचकम् ॥
स्वरक्षयमुरोरोगं श्वासं हन्यात् सुदारुणम्।
बल्यं मांसकरं वृष्यमग्निसन्दीपनं परम् ॥ २४ ॥

अपरं छागलाद्यं घृतम्—

तोयद्रोणद्वितये च्छागलमांसस्य पलशतं पक्त्वा।
जलमष्टांशं सुकृतं तस्मिन् विपचेद्घृते प्रस्थम् ॥
कल्केन जीवनीयानां कुड़वेन तु मांससर्पिरिदम्।
पित्तानिलं निहन्यात् तज्जानपि रसकयोजितं पीतम् ॥
कासश्वासावुग्रौ यक्ष्माणं पार्श्वहृद्रुजां घोराम्।
अध्वव्यवायशोषं शमयति चैवापरं किञ्चित् ॥ २५ ॥

---

क्षीयम्। यद्यपि तुलाद्रव्ये एक एव जलद्रोणः उचितस्तथापि निर्दिष्टत्वादिह तोये द्रोणद्वयमेव देयम्; यथा वत्समायादितोयाध्यायगन्धादिष्विति छागमांसतुलायां जल-द्रोणद्वयमिति। धात्र्यादिरसानां मिलित्वा त्रिपात्रम्। पात्रमाढकम् ॥ २३ ॥

छागलाद्ये लक्ष्मणो द्वेषः ॥ २४ ॥

तोयेत्यादौ।—जीवनीयानां दशानां कुड़वेनेति मिलित्वा। तज्जानिति।—पित्तानिलजान् व्याधीन्। रसकयोजितमिति।—मांसरसानुपानितमित्यर्थः ॥ २५ ॥

अजापञ्चकं घृतम्—

छागशकृद्रसमूत्रक्षीरैर्दध्ना च साधितं सर्पिः ।
सक्षारं यक्ष्महरं कासश्वासोपशान्तये परमम् ॥ २६ ॥

बलागर्भं घृतम्—

द्विपञ्चमूलस्य पचेत् कषाये प्रस्थद्वये मांसरसस्य चैके ।
कल्कं बलायाः सुनियोज्य गर्भं सिद्धं पयःप्रस्थयुतं घृतञ्च ॥
सर्वाभिघातोत्थितयक्ष्मशूल-क्षतक्षयोत्कासहरं प्रदिष्टम् ॥ २७ ॥

नागबलाघृतम्—

पादशेषे जलद्रोणे पचेन्नागबलातुलाम् ।
तेन क्वाथेन तुल्यांशं घृतं क्षीरञ्च साधयेत् ॥
पलार्द्धिकैश्चातिबला-बलायष्टिपुनर्नवा-
प्रपौण्डरीककाश्मर्य्य-पियालकपिकच्छुभिः ॥
अश्वगन्धासिताभीरु-मेदायुग्मत्रिकण्टकैः ।
मृणालबिसशालूक-शृङ्गाटक-कशेरुकैः ॥
एतन्नागबलासर्पी रक्तपित्तक्षतक्षयम् ।
हन्ति दाहं भ्रमं तृष्णां बलपुष्टिकरं परम् ॥
बल्यमोजस्यमायुष्यं वलीपलितनाशनम् ।
उपयुञ्जीत षण्मासान् वृद्धोऽपि तरुणायते ॥ २८ ॥

---

अजापञ्चकघृते—शकृदिहाजाया एव, एवं दधि च। यवक्षारस्यात्र प्रक्षेपमाहुः ॥ २६ ॥

द्विपञ्चमूलस्येति।—दशमूलस्य मिलित्वा द्वात्रिंशत्पलानि, जलस्य च द्वात्रिंशच्छरावा-भ्तः प्रस्थद्वयं शेषः। मांसरसस्य चैक इति।—छागमांसरसस्य एकस्मिन् प्रस्थ इत्यर्थः। गर्भमित्यन्तः ॥ २७ ॥

पादशेष इत्यादि।—वाग्भटस्य।—पादशेषमित्येव पाठः। पादशेषं यथा भवति तथा पचेदिति। अन्ये तु—पादशेष इति पठित्वा पादशेषे कर्त्तव्य इति व्याच-क्षते। नागबला गोरक्षतण्डुला, अतिबला गोरक्षतण्डुलैव। मृणालबिसे—स्वल्प-महद्भेदात्। मृणालमुत्पलं, बिसं—पद्ममूलम् इत्यन्ये ॥ २८ ॥

निर्गुण्डीघृतम्—समूलफलपत्राया निर्गुण्ड्याः स्वरसैर्घृतम् ।
सिद्धं पीत्वा क्षतक्षीणो निर्व्याधिर्भाति देववत् ॥ २९ ॥

बलाद्यं घृतम्—

बलां श्वदंष्ट्रां बृहतीं कलसीं धावनीं स्थिराम् ।
निम्बं पर्पटकं मुस्तं त्रायमाणां दुरालभाम् ॥
कृत्वा कषायं पेष्यार्थं दद्यात् तामलकीं शटीम् ।
द्राक्षापुष्करमूलञ्च मेदामामलकानि च ॥
घृतं पयश्च तत्सिद्धं सर्पिर्ज्वरहरं परम् ।
क्षयकासप्रशमनं शिरःपार्श्वरुजापहम् ॥
चरकोदितवासाद्य-घृतानन्तरसूचितः ।
यदत्रोह घृतात् क्वाथं पयश्च द्विगुणं पृथक् ॥ ३० ॥

चन्दनाद्यं तैलम्—

चन्दनाम्बु नखं वाप्यं यष्टी शैलेयपद्मकम् ।
मञ्जिष्ठा सरलं दारु शट्येलापूतिकेशरम् ॥
पत्रं तैलं मुरामांसी कङ्कोलं वनिताम्बुदम् ।
हरिद्रे शारिवे तिक्ता लवङ्गागुरुकुङ्कुमम् ॥
त्वग्रेणु नलिका चैभिस्तैलं मस्तुचतुर्गुणम् ।

---

निर्गुण्डीघृतमश्लकम् ॥ २९ ॥

बलामित्यादि ।—चरकस्य ।—ज्वरचिकित्सितेऽस्य योगः । कलसी पृश्निपर्णी ; धावनी कण्टकारिका । स्थिरा शालपर्णी । चरकोदितेत्यादि ।—चरके हि वासाघृता-नन्तरमयं योग उक्तः, तत्र च क्वाथ. पयश्च प्रत्येकं घृताद्द्विगुणम् ; तत्साहचर्य्यात् इहापि तथैवेति । घृतसमं चीरं, क्वाथश्च द्विगुण इत्यन्ये ॥ ३० ॥

चन्दनादितैले—अम्बु बालकम् ; वाप्यं कुष्ठं, पूतिः खट्टाशी ; तैलं शिला-रसः ; वनिता प्रियङ्गुः ; तिक्ता लताकस्तूरी ; रेणु रेणुकं, नलिका नालुका ।

लाक्षारससमं सिद्धं ग्रहघ्नं बलवर्णकृत् ॥
अपस्मारज्वरोन्माद-कार्श्यालक्ष्मीविनाशनम् ।
आयुःपुष्टिकरञ्चैव वशीकरणमुत्तमम् ॥ ३१ ॥
छागं मांसं पयश्छागं छागं सर्पिः सशर्करम् ।
छागोपसेवा शयनं छागमध्ये तु यक्ष्मनुत् ॥ ३२ ॥
उरो मत्वा क्षतं लाक्षां पयसा मधुसंयुताम् ।
सद्य एव पिबेज्जीर्णे पयसाद्यात् सशर्करम् ॥ ३३ ॥
इक्षुवालिकाबिसग्रन्थि पद्मकेशरचन्दनैः ।
शृतं पयो मधुयुतं सन्धानार्थं पिबेत् क्षती ॥ ३४ ॥
बलाश्वगन्धाश्रीपर्णी-बहुपुत्रीपुनर्नवाः ।
पयसा नित्यमभ्यस्ताः क्षपयन्ति क्षतक्षयम् ॥ ३५ ॥

बलाद्यघृतम्—

घृतं बलानागबलार्जुनाम्बु-सिद्धं सयष्टीमधुकल्कपादम् ।
हृद्रोगशूलक्षतरक्तपित्त-कासानिलासृक् शमयत्युदीर्णम् ॥ ३६ ॥

इति यक्ष्मचिकित्सा ।

---

लाक्षारसो लाक्षाक्वाथः; लाक्षायाः षोडशपलं, क्वाथार्थजलं षोडशशरावं, शेषं प्रस्थैकम् ॥ ३१ ॥

छागमित्यादि स्पष्टम् ॥ ३२ ॥

उर इत्यादिना उरःक्षतचिकित्सामाह।—उरःक्षतं मत्वा लाक्षां पयसा मधुसंयुतां पिबेदित्यर्थः। जीर्णे पयसा सशर्करमन्नं भुञ्जीतेत्यन्वयः ॥ ३३ ॥

इक्षुवालिकेत्यादि।—इक्षुवालिका मनखामडीति ख्याता; बिसग्रन्थिः मृणालसन्धिः; पद्मकेशरं पद्मकिञ्जल्कः। सन्धानार्थमिति।—क्षतोरःसन्धानार्थम् ॥ ३४ ॥

बलेत्यादौ।—श्रीपर्णी गाम्भार्याः फलम्। बहुपुत्री शतावरी। बलादयो व्यस्ताः समस्ता वा सेव्याः ॥ ३५ ॥

घृतमित्यादि स्पष्टम् ॥ ३६ ॥

इति यक्ष्मचिकित्साविवृतिः ॥

# अथ कास-चिकित्सा ।

### वातकास-चिकित्सा ।

वास्तूको वायसीशाकं मूलकं सुनिषण्णकम् ।
स्नेहास्तैलादयो भक्ष्याः क्षीरेक्षुरसगौड़िकाः ॥
दध्यारनालाम्लफलं प्रसन्नापानमेव च ।
शस्यते वातकासेषु स्वाद्वम्ललवणानि च ॥
ग्राम्यानूपौदकैः शालि-यवगोधूमषष्टिकान् ।
रसैर्माषात्मगुप्तानां यूषैर्वा भोजयेद्धितान् ॥ १ ॥
पञ्चमूलीकृतः क्वाथः पिप्पलीचूर्णसंयुतः ।
रसान्नमश्नतो नित्यं वातकासमुदस्यति ॥ २ ॥

### अपराजितलेहः—

शटीशृङ्गीकणाभार्गी-गुड़वारिदयासकैः ।
सतैलैर्वातकासघ्नो लेहोऽयमपराजितः ॥ ३ ॥
चूर्णिता विश्वदुःस्पर्शा-शृङ्गीद्राक्षाशटीसिताः ।
लीढ़ा तैलेन वातोत्थं कासं जयति दारुणम् ॥ ४ ॥
भार्गीद्राक्षाशटीशृङ्गी-पिप्पलीविश्वभेषजैः ।
गुड़तैलयुतो लेहो हितो मारुतकासिनाम् ॥ ५ ॥

### पित्तकास-चिकित्सा ।

पित्तकासे तनुकफे त्रिवृतां मधुरैर्युताम् ।

---

यक्ष्मस्वपि कासपाठात् कासापेक्षया च यक्ष्मसम्भवात् यक्ष्मानन्तरं कासचिकित्सामाह वास्तूक इत्यादि।—वायसी काकमाची। पञ्चमूलीत्यादि।—पञ्चमूली महती, उष्णवीर्यतया विशेषेण वातप्रशमनीकत्वात्। अन्ये तु स्वल्पामाहुः। रसान्नं मांसरसोपहितमन्नम् ॥ १ ॥ २ ॥

शट्यादि।—दीपनत्वेऽपि कटुतैलेन लेह इति जेज्जटटिप्पणी; किन्तु टीकाकृद्भिर्न व्याख्यातोऽयमर्थः ॥ ३—५ ॥

दद्याद्घनकफे तिक्तैर्विरेकार्थं युतां भिषक्॥ ६॥
मधुरैर्जाङ्गलरसैः श्यामाकयवकोद्रवाः।
मुद्गादियूषैः शाकैश्च तिक्तकैर्मात्रया हिताः॥ ७॥
बलाद्विबृहतीवासा-द्राक्षाभिः क्वथितं जलम्।
पित्तकासापहं पेयं शर्करामधुयोजितम्॥ ८॥
शरादिपञ्चमूलस्य पिप्पलीद्राक्षयोस्तथा।
कषायेण शृतं क्षीरं पिबेत् समधुशर्करम्॥ ९॥
काकोलीबृहतीमेदा-युग्मैः सवृषनागरैः।
पित्तकासे रसक्षीर-यूषांश्चाप्युपकल्पयेत्॥ १०॥
द्राक्षामलकखर्जूरं पिप्पलीमरिचान्वितम्।
पित्तकासापहं ह्येतल्लिह्यान्माक्षिकसर्पिषा॥ ११॥

---

पित्तकास इत्यादि।—चरकस्य। तत्र च श्लेष्मघनकफे। कफस्य तनुत्वं घनत्वञ्च कासवेगनिःसार्यमाणकफस्य दर्शनादेव ज्ञेयम्। मधुरैरिति।—मधुरद्रव्यैर्युक्तां त्रिवृतामिति सम्बन्धः। अन्ये तु—मधुरैर्जीवनीयद्रव्यैरित्याहुः। मधुरैर्जाङ्गलरसैरित्यत्र मधुरैः स्वादुभिः, किंवा जीवनीयसंस्कृतैः॥ ६॥ ७॥

बलेत्यादि।—स्पष्टम्॥ ८॥

शरादीत्यादि।—चरकस्य। शरादिपञ्चमूलन्तु शरेक्षुदर्भकाशशालयस्तेषां मूलं ज्ञेयम्। अत्र चक्रपरिभाषया क्षीरपाककषायेण चतुर्गुणेन दुग्धं साध्यम्॥ ९॥

काकोलीत्यादि।—अत्र युग्मैरिति काकोल्यादिभिः सम्बध्यते इति चक्रः। अन्ये तु बृहतीमेदाभ्यां युज्यते इति; युक्तञ्चैतत्, यदाह जतूकर्णः—"द्वयकाकोलीयष्टीमेदा बृहतीयुग्मैः" इति॥ १०॥

द्राक्षेत्यादि।—इदं कफानुबन्धे ज्ञेयम्; पित्तोद्रेके तु मरिचस्थाने शर्करा ज्ञेया, यदाह चारपाणिः,—"पिप्पल्यामलकौ द्राक्षा खर्जूरं शर्करा मधु। लेहोऽयं सघृतो लीढः पित्तक्षयजकासजित्॥" इति॥ ११॥

खर्जूरपिप्पलीद्राक्षा-सितालाजाः समांशिकाः ।
मधुसर्पिर्युतो लेहः पित्तकासहरः परः ॥ १२ ॥
शठीह्रीवेरबृहती-शर्कराविश्वभेषजम् ।
पिष्ट्वा रसं पिबेत् पूतं सघृतं पित्तकासनुत् ॥ १३ ॥
मधुना पद्मबीजानां चूर्णं पैत्तिककासनुत् ॥ १४ ॥

कफकास-चिकित्सा ।

बलिनं वमनेनादौ शोधितं कफकासिनम् ।
यवान्नैः कटुरूक्षोष्णैः कफघ्नैश्चाप्युपाचरेत् ॥ १५ ॥
पिप्पलीक्षारकैर्यूषैः कौलत्थैर्मूलकस्य च ।
लघून्यन्नानि भुञ्जीत रसैर्वा कटुकान्वितैः ॥ १६ ॥
पञ्चकोलैः शृतं क्षीरं कफघ्नं लघु शस्यते ।
श्वासकासज्वरहरं बलवर्णाग्निवर्द्धनम् ॥ १७ ॥
पौष्करं कट्फलं भार्गी-विश्वपिप्पलिसाधितम् ।
पिबेत् क्वाथं कफोद्रेके कासे श्वासे च हृद्ग्रहे ॥
स्वरसं शृङ्गवेरस्य माक्षिकेण समन्वितम् ।
पाययेच्छ्वासकासघ्नं प्रतिश्यायकफापहम् ॥ १८ ॥

---

खर्जूरेत्यादि स्पष्टम् ॥ १२ ॥

शठीत्यादि ।—वाग्भटस्य । तत्र शट्यादिकं जले पिष्ट्वा तद्रसं वस्त्रपूतं कृत्वा घृतमिश्रं पिबेत् । बृहती चात्र कण्टकारी कासहन्तृत्वात् । उक्तं हि चरके—"शर्करानागरोदीच्य कण्टकारीशठीसमम् । पिष्ट्वा रसं पिबेत् पूतं वस्त्रेण घृतमूर्च्छितम् ॥" इति ॥ १३ । १४ ॥

बलिनमित्यादिना कफचिकित्सामाह । पिप्पलीक्षारकैरिति पिप्पलीयवक्षारसंस्कृतैरित्यर्थः ॥ १५—१७ ॥

पौष्करमित्यादि ।—कफापहपर्यन्तं स्पष्टम् ॥ १८ ॥

नवाङ्गयूषः—

मुद्गामलकाभ्यां यवदाडिमाभ्यां कर्कन्धुना मूलकशुण्ठकेन।
शुण्ठीकणाभ्याञ्च कुलत्थकेन यूषो नवाङ्गः कफरोगहन्ता ॥१८॥

पार्श्वशूले ज्वरे कासे श्वासे श्लेष्मसमुद्भवे।
पिप्पलीचूर्णसंयुक्तं दशमूलीजलं पिबेत् ॥ २० ॥

कट्फलादिः—कट्फलं कत्तृणं भार्गी मुस्तं धान्यं वचाऽभया।
शृङ्गी पर्पटकं शुण्ठी सुराह्वा च जले शृतम् ॥
मधुहिङ्गुयुतं पेयं कासे वातकफात्मके।
कण्ठरोगे क्षये शूले श्वासहिक्काज्वरेषु च ॥ २१ ॥
कण्टकारीकृतः क्वाथः सकृष्णः सर्वकासहा ॥ २२ ॥
विभीतकं घृताभ्यक्तं गोमलत्परिवेष्टितम्।
स्विन्नमग्नौ हरेत् कासं ध्रुवमास्यविधारितम् ॥ २३ ॥
वासकस्वरसः पेयो मधुयुक्तो हिताशिना।
पित्तश्लेष्मकृते कासे रक्तपित्ते विशेषतः ॥ २४ ॥
मधुकं पिप्पली द्राक्षा लाक्षा शृङ्गी शतावरी।
द्विगुणा च तुगाक्षीरी सिता सर्वैश्चतुर्गुणा ॥

---

नवाङ्गयूषे यवामलकदाडिमकर्कन्धुमूलकशुण्ठकैः प्रकृतपरिभाषया षडङ्गं कृत्वा मुद्गकुलत्थौ मुष्टिं मुष्टिं दत्त्वा यूषः साध्यः, पश्चात् कटुत्वार्थं शुण्ठीपिप्पलीचूर्णदानम्; किंवा सकलमेव द्रव्यं यथोचितमात्रया गृहीत्वा क्वाथविधानेन यवकुट्टिकवत् यूषः कार्य्य इत्याहुः ॥ १८ ॥

पार्श्वशूल इत्यादि।—स्पष्टम् ॥ २० ॥

कट्फलमित्यादौ।—कत्तृणं गन्धतृणम् ॥ २१ ॥

कण्टकारीत्यादि।—स्पष्टम् ॥ २२ ॥

विभीतकमित्यादि।—स्पष्टम् ॥ २३ ॥

वासकेत्यादि च।—स्पष्टम् ॥ २४ ॥

तं लिह्यान्मधुसर्पिर्भ्यां क्षतकासनिवृत्तये ॥ २५ ॥

पिप्पली पद्मकं द्राक्षा सप्तकं बृहतीफलम् ।
घृतक्षौद्रयुतो लेहः श्वासकासनिवर्हणः ॥ २६ ॥

हरीतकीनागरमुस्तचूर्णं गुड़ेन तुल्यं गुड़िका विधेया।
निवारयत्याशुविधारितेयं श्वासं प्रवृद्धं प्रबलञ्च कासम् ॥२७॥

मरिचाद्यं चूर्णम्—

कर्षः कर्षार्द्धमथो पलं पलद्वयमथार्द्धकर्षञ्च ।
मरिचस्य पिप्पलीनां दाड़िमगुड़यावशूकानाम् ॥
सर्वौषधैरसाध्या ये कासाः सर्ववैद्यविवर्जिताः ।
अपि पूयं छर्दयतां तेषामिदमौषधं पथ्यम् ॥ २८ ॥

समशर्करं चूर्णम्—

लवङ्गजातीफलपिप्पलीनां भागान् प्रकल्प्याक्षयुतानमीषाम् ।
पलार्द्धमेकं मरिचस्य दद्यात् पलानि चत्वारि महौषधस्य ॥
सितासमं चूर्णमिदं प्रसह्य रोगानिमानाशु बलान् निहन्यात् ।
कासज्वरारोचकमेहगुल्म-श्वासाग्निमान्द्यग्रहणीप्रदोषान् ॥ २९ ॥

हरीतकीकणाशुण्ठी-मरिचं गुड़संयुतम् ।
कासघ्नो मोदकः प्रोक्तस्तृष्णारोचकनाशनः ॥ ३० ॥

---

मधुकमित्यादौ।—गुणाचीरी वयःप्रोक्ता, एकभागापेक्षया द्विगुणा, सर्वचूर्णापेक्षया चतुर्गुणा सिता ॥ २५ ॥

पिप्पलीत्यादि।—स्पष्टम् ॥ २६ ॥

हरीतकीत्यादौ।—समुदितचूर्णेन तुल्यो गुडः ॥ २७ ॥

कर्ष इत्यादि।—मरिचकर्ष १, पिप्पली तोलक १, पक्वदाड़िमबीज पल १, गुड़ पल २, यवक्षार तोलक १। वाग्भटेऽप्युक्तं,—"गुड़पाकैरेषयत्या दाड़िमं श्वासकासजित्। क्रमात् पलद्वयाद्यांश-कर्षोपार्द्धपथोन्मितम् ॥" इति ॥ २८ ॥

लवङ्गेत्यादि।—इत्यार्द्धमेकमित्यत्र एकपदं श्लोकपूरणार्थमेवोक्तम्। बलानिति।—कर्ष-पादित्वादप्, बलवतो रोगानित्यर्थः। तेन प्रसह्य इत्यनेन न पौनरुक्त्यम् ॥ २९ ॥

हरीतकीत्यादि।—मोदकत्वात् गुड़ो द्विगुणः ॥ ३० ॥

व्योषाद्यिका गुटिका—

तालीशवह्निदीप्यकचविकाम्लवेतसव्योषैः।
तुल्यैस्त्रिसुगन्धियुतैर्गुडेन गुटिका प्रकर्त्तव्या॥
कासश्वासारोचकपीनसहृल्लासकण्ठवाङ्निरोधेषु।
ग्रहणीगदोद्भवेषु गुटिका व्योषाद्यिका नाम॥ ३१॥
मनःशिलालमधुका-मांसीमुस्तेङ्गुदैः पिबेत्।
धूमं तस्यानु च क्षीरं सगुडञ्च पयः पिबेत्॥
एष कासान् पृथग्द्वन्द्व-सर्वदोषसमुद्भवान्।
शतैरपि प्रयोगाणां साधयेदप्रसाधितान्॥ ३२॥
मनःशिलालिप्तदलं बदर्य्यातपशोषितम्।
सक्षीरं धूमपानञ्च सर्वकासनिवारणम्॥ ३३॥

---

तालीशेत्यादी। वह्निश्चित्रकः; दीप्यकं यमानी; त्रिसुगन्धियुतैरिति।—सर्वचूर्णापेक्षया चतुर्थांशेन मिलितं त्रिसुगन्धिचूर्णमित्याहुः। व्योषाद्यिकेति।—पचनादस्य व्योषमाह, व्योषस्यात्र त्रिसुगन्धस्य पूर्वमवस्थितत्वात्। किंवा तालीशादीनां विशेषणप्रधानत्वादपेक्षया नाम ज्ञेयः॥ ३१॥

मनःशिलेत्यादि।—आलं हरितालम्; इङ्गुदं पुत्रजीवफलमज्जा, फल्गुस्थाने, पुत्रजेतम्;—"मनःशिलालमधुकं मांसीमुस्तेङ्गुदीत्वचः" इति वाग्भटवचनात्। अत्र मनःशिलादीनां पेषणं हाक्षमूत्रेण बोध्यं, छागलानुपिष्टैरिति सुश्रुतदर्शनात्। अत्र मधुकस्थाने मरिचं केचित् पठन्ति; तत्र,—"शिलालिङ्गुद-मुस्ताद-मांसीधूमं पिबेत् नरः" इति तन्त्रान्तरदर्शनात्। अत्र मनःशिलादिकं कल्कीकृत्य शरावकद्वयं लिम्पेत्, ततः आतपे शोषयित्वा वर्त्तिं विधाय शरावसम्पुटस्थमदग्धवर्त्तिं निधाय यथोक्तनलिकया धूमपानं कार्य्यम्। विरम्य किञ्चित् सगुडक्षीरं पेयं, धूमस्य तीक्ष्णत्वेनोष्णःस्यादिति॥ ३२॥

मनःशिलेत्यादी।—बदर्य्यातपशोषितमिति।—बदर्य्याः मनःशिलालिप्तदलम्, आतपे शोषितमिति योजना। बदर्य्यातपेति असिद्धविधेरनित्यत्वात् सन्धिः॥ ३३॥

अर्कच्छदसमिले तुल्ये ततोऽर्द्धेन कटुत्रिकम्।
चूर्णितं वह्निनिक्षिप्तं पिबेद् धूमन्तु योगवित्॥
भक्षयेदथ ताम्बूलं पिबेद् दुग्धमथाम्बु वा।
कासाः पञ्चविधा यान्ति शान्तिमाशु न संशयः॥ ३४॥
मरिचशिलार्कक्षीरैर्वार्त्ताकीं त्वचमाशुभावितां शुष्काम्।
कृत्वा विधिना धूमं पिबतः कासाः शमं यान्ति॥ ३५॥
दशमूलघृतम्—दशमूलकषायेण भार्गीकल्कं पचेद् घृतम्।
दशतित्तिरिनिर्य्यूहे तत् परं वातकासनुत्॥ ३६॥

दशमूलाद्यं घृतम्—

दशमूलाढ़के प्रस्थं घृतस्याक्षसमैः पचेत्।
पुष्कराह्वशटीबिल्व सुरसव्योषहिङ्गुभिः॥
पेयानुपानं तत् पेयं कासे वातकफाधिके।
श्वासरोगेषु सर्वेषु कफवातात्मकेषु च॥ ३७॥

दशमूलषट्पलकं घृतम्—

दशमूलीचतुःप्रस्थे रसे प्रस्थोन्मितं हविः।
सक्षारैः पञ्चकोलैस्तु कल्कितं साधु साधितम्॥

---

अर्कच्छदेत्यादि।—अर्कच्छदम् अर्कमूलत्वक्, शिला मनःशिला; ततोऽर्द्धेन कटुत्रिकमिति, तत उभयोरर्द्धेन मिलितं त्रिकटुकम्॥ ३४॥

मरिचेत्यादि।—स्पष्टम्॥ ३५॥

दशमूलकषायेत्यादि।—दश: कुडवः; दशतित्तिरिभ्यो निर्य्यूहेन क्वाथः। दशमूलक्वाथेन दशतित्तिरिक्वाथेन च मिलित्वा चातुर्गुण्यम्॥ ३६॥

दशमूलाढक इत्यादि।—चाक्रदत्त। अत्र दशमूलस्य क्वाथ्यद्रव्यत्वात्, तेन "क्वाथः क्वाथ्यसमो मतः" इति वचनात् पादावशिष्टक्वाथोऽप्याढकमानो भवति। बिल्व बिल्वमूलम्; सुरसः तुलसी। पेयानुपानमित्यत्र पयोऽनुपानमिति केचित् पठन्ति, किन्त्वत्र पेयैव वातकफजत्वात् युक्ता॥ ३७॥

कासहृत्पार्श्वशूलघ्नं हिक्काश्वासनिवारणम् ।
कल्कं षट्पलमेवात्र योजयन्ति भिषग्वराः ॥ ३८ ॥

कण्टकारीघृतम्—

कण्टकारी-गुडूचीभ्यां पृथक् त्रिंशत्पलाद्रसे ।
प्रस्थः सिद्धो घृताद्वात-कासनुद्वह्निदीपनः ॥ ३९ ॥

अपरं कण्टकारीघृतम्—

घृतं रास्नाबलाव्योष-श्वदंष्ट्राकल्कपाचितम् ।
कण्टकारीरसे पानात् पञ्चकासनिषूदनम् ॥ ४० ॥

बृहत्कण्टकारीघृतम्—

समूलफलशाखायाः कण्टकार्य्या रसाढके ।
घृतप्रस्थं बलाव्योष-विडङ्गशटीचित्रकैः ॥
सौवर्चलयवक्षार-बिल्वामलकपौष्करैः ।
वृश्चीरबृहतीपथ्या-यमानीदाडिमर्द्धिभिः ॥
द्राक्षापुनर्नवाचव्य-धन्वयासाम्लवेतसैः ।
शृङ्गीतामलकीभार्गी-रास्नागोक्षुरकैः पचेत् ॥
कल्कैस्तु सर्वकासेषु हिक्काश्वासे च शस्यते ।
कण्टकारीघृतं सिद्धं कफव्याधिविनाशनम् ॥ ४१ ॥

रास्नाद्यं घृतम्—

द्रोणेऽपां साधयेद्रास्नां दशमूलीं शतावरीम् ।

---

दशमूलषट्पलकं घृतं स्मृतम् ॥ ३८ ॥

कण्टकारीत्यादि ।—कण्टकारीगुडूच्योर्मिलिता पल १०, जल शराव १०, शेष १५ । अन्ये तु जलद्रोणं दत्त्वा शेषं १६ इत्याहुः । कण्टकारीरस इति ।—कण्टकारीस्वरसचतुर्गुणः ; तन्त्रान्तरे—"निदिग्धिकायाः स्वरसं पाययेद्वक्रपीडितम् । चतुर्गुणे रसे तस्मिन् घृतप्रस्थं विपाचयेत् ॥" इत्यादि ॥ ३९ ॥ ४० ॥

समूलेत्यादि ।—अयं चीमरके वाग्भटे च पठ्यते । अत्र गेतरकभेदात् पुनर्न्वादयम् ॥ ४१ ॥

तैलात् सपिप्पलीचूर्णात् सिद्धशीते च माक्षिकात् ।
लिह्याद् द्वे चाभये नित्यमतः खादेद्रसायनात् ॥
तद्वलीपलितं हन्याद्वर्णायुर्बलवर्द्धनम् ।
पञ्च कासान् क्षयं श्वासं हिक्कां सविषमज्वरान् ॥
हन्यात् तथा ग्रहण्यर्शो-हृद्रोगारुचिपीनसान् ।
अगस्त्यविहितं धन्यमिदं श्रेष्ठं रसायनम् ॥ ४३ ॥

व्याघ्रीहरीतकी—

समूलपुष्पच्छदकण्टकार्य्यास्तुलां जलद्रोणपरिश्रुतायाः ।
हरीतकीनाञ्च शतं निदध्यात्तस्यात्र पक्त्वा चरणावशेषम् ॥
गुडस्य दत्त्वा शतमेतदग्नौ विपक्वमुत्तीर्य्य ततः सुशीते ।
कटुत्रिकञ्च द्विपलप्रमाणं पलानि षट् पुष्परसस्य तत्र ॥
चिपेच्चतुर्जातपलं यथाग्नि प्रयुज्यमानो विधिनावलेहः ।
वातात्मकं पित्तकफात्मकञ्च द्विदोषकासानपि यांस्त्रिदोषान् ॥
क्षयोद्भवञ्च क्षतजञ्च हन्यात् सपीनसश्वाससुरःक्षतञ्च ।
यक्ष्माणमेकादशरूपमुग्रं भृगूपदिष्टं हि रसायनं स्यात् ॥ ४४ ॥

इति कास-चिकित्सा ।

---

क्वाथ्य चतुर्भागावशिष्टमेव क्वाथं कुर्वन्ति । अन्ये अष्टभागावशिष्टं क्वाथमिच्छन्ति ; तन्न, मुनुसंवादात् । स्विन्नहरीतकीशतस्य अर्द्धपलमात्रया प्रत्येकद्रव्यस्य भर्जनार्थं घृत-तैलयोः कुडवे पृथक्, द्विगुणश्च पृथगष्टपलमाने । भर्जनन्तु चणकवदाध्यादिम् । तन्मात्रान्तरे चात्र मधुनश्च पलाष्टकमेवोक्तम् ; युज्यमानत्वेऽपि घृतमधुनोर्द्रव्यान्तरयोगात् विरुद्धत्वम् । अवतारणसमये पिप्पलीचूर्णकुडवं प्रक्षेप्यम् । लिह्यादिति ।—प्रकृत-लेहं लिह्यात्—द्वे चाभये खादेदिति योज्यम् । अत्र यद्यपि लेहस्य मानं नोक्तं तथापि मुनुसंवादात् कर्षमानं बोध्यम् । धन्यमिति—धनावाप्त्यै, किंवा धनार्जनहेतुः मेधत्वसाधकत्वात् ॥ ४३ ॥

व्याघ्रीहरीतक्यां कटुत्रिकं प्रत्येकं पलद्वयम् । चतुर्जातपलमिति—मिलित्वा पलम् ॥ ४४ ॥

इति कासचिकित्साविवृतिः ।

हिक्कार्त्तस्य पयश्छागं हितं नागरसाधितम् ॥ ६ ॥
कृष्णामलकशुण्ठीनां चूर्णं मधुसितायुतम् ।
मुहुर्मुहुः प्रयोक्तव्यं हिक्काश्वासनिवर्हणम् ॥ ७ ॥
हिक्काश्वासोद्भवे भार्गीं सविश्वामुष्णवारिणा ॥ ८ ॥
नागरं वा सिताभार्गी-सौवर्चलसमन्वितम् ॥ ९ ॥

शृङ्गीकटुत्रिकफलत्रयकण्टकारी
भार्गी सपुष्करजटा लवणानि पञ्च ।
चूर्णं पिबेदशिशिरेण जलेन हिक्का-
श्वासोर्ध्ववातकसनारुचिपीनसेषु ॥ १० ॥

अभयानागरकल्कं पौष्करयवशूकमरिचकल्कं वा ।
तोयेनोष्णेन पिबेत् श्वासी हिक्की च तच्छान्त्यै ॥ ११ ॥

पर्णासपञ्चकम् —

अमृतानागरफञ्जी-व्याघ्रीपर्णासंसाधितः क्वाथः ।
पीतः सकणाचूर्णः कासश्वासौ निहन्त्याशु ॥ १२ ॥
दशमूलीकषायस्तु पुष्करेणावचूर्णितः ।
कासश्वासप्रशमनः पार्श्वहृच्छूलनाशनः ॥ १३ ॥
कुलत्थनागरव्याघ्री-वासाभिः क्वथितं जलम् ।
पीतं पुष्करसंयुक्तं हिक्काश्वासनिवर्हणम् ॥ १४ ॥
गुडं कटुकतैलेन मिश्रयित्वा समं लिहेत् ।
त्रिसप्ताहप्रयोगेण श्वासं निर्मूलतो जयेत् ॥ १५ ॥

---

मधुकमित्यादि ।—सौवर्चलान्तं स्पष्टम् ॥ ६—९ ॥
शृङ्गीत्यादौ ।—पुष्करजटा पुष्करमूलम् ॥ १० ॥
अभयेत्यादि ।—श्लोकार्थं स्पष्टम् ॥ ११ ॥
अमृतेत्यादौ ।—फञ्जी ब्रह्मयष्टिः ॥ १२ ॥
दशमूलीकषाय इत्यादि ।—श्लोकत्रयं स्पष्टम् ॥ १३—१५ ॥

शृङ्गीमहौषधकणाघनपुष्कराणाम्
चूर्णं शटीमरिचशर्करया समेतम्।
क्वाथेन पीतममृतावृषपञ्चमूल्याः
श्वासं सहैव शमयेदतिदोषमुग्रम् ॥ १६ ॥
हरिद्रां मरिचं द्राक्षां गुडं रास्नां कणां शटीम्।
जह्यात् तैलेन विलिह्यन् श्वासान् प्राणहरानपि ॥ १७ ॥
हिक्कां हरति प्रबलां प्रबलं श्वासञ्च नाशयत्याशु।
शिखिपुच्छभूतिपिप्पलिचूर्णं मधुमिश्रितं लीढम् ॥ १८ ॥
कर्षं कलिफलचूर्णं लीढं ह्यत्यन्तमिश्रितं मधुना।
अचिराद्धरति श्वासं प्रबलामुग्रां हिक्काञ्चैव ॥ १९ ॥

हिंस्राद्यं घृतम्—

हिंस्राविडङ्गपूतीक-त्रिफलाव्योषचित्रकैः।
द्विक्षीरं सर्पिषः प्रस्थं चतुर्गुणजलान्वितम् ॥
कोलमात्रैः पचेत् तद्धि श्वासकासौ व्यपोहति।
अर्शांस्यरोचकं गुल्मं शकृद्भेदं क्षयं तथा ॥ २० ॥

---

शृङ्गीत्यादि।—[illegible] चूर्णं क्वाथात् पादिकं, [illegible]। अत्र पञ्चमूली बृहती, [illegible] ॥ १६ ॥

हरिद्रामित्यादि।—गुडसमम्।—[illegible] ॥ १७ ॥

हिक्कामित्यादि।—शिखी मयूरस्तत्पुच्छस्य भूतिर्भस्म, तथा पिप्पलीचूर्णञ्च समं मधुना लीढम् ॥ १८ ॥

कर्षमित्यादि।—कलिफलं विभीतकम् ॥ १९ ॥

हिंस्रेत्यादि।—घृतसमम्।—हिंस्रा [illegible]; पूतीकं नाटाकरञ्जम्। कोलमात्रैरिति।—यद्यपि [illegible] कर्षदोषाणे, तथापि परिभाषा:—"[illegible] चतुर्थांशकम्। ताभ्यां चतुः [illegible] तथा। [illegible] विविध [illegible] ॥" इति, तथापि [illegible]। अथवा [illegible] स्यात्। [illegible], तस्मात् [illegible] इति ॥ २० ॥

तेजोवत्याद्यं घृतम्—

तेजोवत्यभया कुष्ठं पिप्पली कटुरोहिणी।
भूतिकं पौष्करं मूलं पलाशश्चित्रकं शटी॥
सौवर्चलन्तामलकी सैन्धवं बिल्वपेशिका।
तालीशपत्रं जीवन्ती वचा तैरक्षसम्मितैः॥
हिङ्गुपादैर्घृतप्रस्थं पचेत् तोयचतुर्गुणे।
एतद्यथाबलं पीत्वा हिक्काश्वासौ जयेन्नरः॥
शोथानिलार्शोग्रहणी-हृत्पार्श्वरुज एव च॥ २१॥

भार्गीगुडः—शतं संगृह्य भार्ग्यास्तु दशमूल्यास्तथापरम्।
शतं हरीतकीनाञ्च पचेत् तोयचतुर्गुणे॥
पादावशेषे तस्मिंस्तु रसे वस्त्रपरिस्रुते।
आलोड्य च तुलां पूतां गुडस्य त्वभयां ततः॥
पुनः पचेत् मृद्वग्नौ यावल्लेहत्वमागतम्।
शीते तु मधुनस्तत्र षट् पलानि प्रदापयेत्॥
त्रिकटु त्रिसुगन्धञ्च पलिकानि पृथक् पृथक्।
कर्षद्वयं यवक्षारं सञ्चूर्ण्य प्रक्षिपेत् ततः॥
भक्षयेदभयामेकां लेहस्यार्धपलं लिहेत्।
श्वासं सुदारुणं हन्ति कासं पञ्चविधं तथा।
स्वरवर्णप्रदो ह्येष जठराग्नेश्च दीपनः॥

---

तेजोवतीत्यादि।—चरकस्य।—तेजोवती चविका; भूतिकं कतृणम्। हिङ्गुपादैरिति,अक्षभागमपेक्ष्य, तेन हिङ्गुपलाद्यो माषकाः॥ २१॥

भार्गीगुडे दशमूल्यपि मिलित्वा। तोये चतुर्गुणे इति।—चक्रपाणिमुख्याः दशमूलीशतं भार्गीशतञ्च मिलित्वा जलस्य चतुर्गुणत्वं देयमित्याहुः। "हरीतकीमिलनात् प्रस्थादाद्यकं जलम्" इति वदन्ति, तेन जलस्य चोक्तमष्टाधिकमष्टावधि-मित्यर्थः। वन्दस्तु—"हरीतकीमतैतस्य वाधिकमिताधिकम्" इत्याह। इदानु कथम्

चूर्णं गुडप्रमृदितं विसुगन्धियुक्तम्
वैस्वर्य्यपीनसकफारुचिषु प्रशस्तम् ॥ ५ ॥
तैलाक्तं स्वरभेदे वा खदिरं धारयेन्मुखे।
पथ्यां वा पिप्पलीयुक्तां संयुक्तां नागरेण वा ॥
अजमोदां निशां धात्रीं क्षारं वह्निं विचूर्ण्य च।
मधुसर्पिर्युतं लीढ्वा स्वरभेदं व्यपोहति ॥ ६ ॥
कलितरुफलसिन्धुकणाचूर्णं तक्रेण लीढ़मपहरति।
स्वरभेदं गोपयसा पीतं वामलकचूर्णञ्च ॥ ७ ॥
बदरीपत्रकल्कं वा घृतभृष्टं ससैन्धवम्।
स्वरोपघाते कासे च लेहमेनं प्रयोजयेत् ॥ ८ ॥
शर्करामधुमिश्राणि शृतानि मधुरैः सह।
पिबेत् पयांसि यस्योच्चैर्वदतोऽभिहतः स्वरः ॥ ९ ॥

कण्टकारीघृतम्—

व्याघ्रीस्वरसविपक्वं रास्नावाट्यालगोक्षुरव्योषैः।
सर्पिः स्वरोपघातं हन्यात् कासञ्च पञ्चविधम् ॥

---

विवक्षः। गुडेन समुदितचूर्णसमः। विसुगन्धि इत्येकैकमात्रापेक्षया चतु-र्जातमिति केचित्, एकभागसमं त्रिजातमित्यन्ये ॥ ५ ॥

तैलाक्तमित्यादि।—श्लोकद्वयं व्यक्तम् ॥ ६ ॥

कलितरुफलेत्यादि।—कलितरुफलं विभीतकफलम्। तक्रेणेवत्र चुक्रेणेति पाठान्तरम् ॥ ७ ॥

बदरीपत्रकल्कमित्यादि।—बदरीपत्रं कर्कन्धुं बहुपत्रे यथा तैलेन घृतेनाप्येव निर्दिष्टम् ॥ ८ ॥

शर्करेत्यादि।—सुकुमसः। मधुरैरिति—काकोल्यादिभिः। पयःपानमिह क्षीरपाकपरिभाषया ॥ ९ ॥

व्याघ्रीत्यादि।—यदपि इदं घृतं तन्त्रान्तरे कासाधिकारे पठितम्, तथाप्यत्र स्वर-

शुष्कद्रव्यमुपादाय स्वरसानामसम्भवे।
वारिण्यष्टगुणे साध्यं ग्राह्यं पादावशेषितम् ॥ १० ॥

भृङ्गराजाद्यं घृतम्—
भृङ्गराजामृतावल्लीवासकाद्यशमूलकासमर्दरसैः।
सर्पिः सपिप्पलीकं सिद्धं स्वरभेदकासजिन्मधुना ॥ ११ ॥

इति स्वरभेद-चिकित्सा।

---

## अथारोचक-चिकित्सा।

वस्तिं समीरणे पित्ते विरेकं वमनं कफे।
कुर्याद् हृद्यानुकूलानि हर्षणञ्च मनोघ्नजे ॥ १ ॥
वान्तो वचाभिरनिले विधिवत् पिबेत्तु
स्नेहोष्णतोयमदिरान्यतमेन चूर्णम्।

---

भेदस्यानुक्तप्रतिपादनार्थं पुनरभ्युक्तम्। स्वरसालाभे क्वाथग्रहणमाह शुष्कद्रव्यमित्यादि।—पादस्तु चतुर्थभागः। अत्र केचित् स्वरसानुकल्पत्वादष्टावशिष्ट एव क्वाथो युक्तो शुष्कत्वादिति। पादशब्दस्य मूलवचनत्वेनाभावापि पादशब्दोऽयं मूलीभूतमाद्यभागमाह, तेन यथासम्भवं चतुर्थत्वे तावानेव भागः स्थापनीय इत्याहुः। अन्ये तु—पादावशेषितमित्यत्र भागावशेषितमिति पठित्वा भागशब्दोऽष्टमो भाग इत्याहुः। व्यवहारस्तु चतुर्थभागेनैव ॥ १० ॥

भृङ्गराजेत्यादि।—भृङ्गराजादीनां क्वाथचतुर्गुणः; पिप्पल्याः पादिकः कल्कः; निःशीते तु घृतात् पादिकं मधु प्रक्षेप्यम् ॥ ११ ॥

इति स्वरभेद-चिकित्साविवृतिः।

---

अरोचकस्याद्यङ्ग-विकारत्वेन स्वरभेदानन्तरमरोचकमाह, वस्तिमित्यादि।—मनोघ्ने इति—मनोविद्विष्टहेतुयोगादितः। एतच्चोपलक्षणं, तेन क्वाथादिष्वपि ज्ञेयम्। वान्त इत्यादि।—कुसुमस्य।—विधिवत् वान्तः कृतवमनः; विधिवदित्यनेन पेयादिक्रमस्य बोधयति, तेन वान्तः सन् पेयादिक्रमेण आप्यायितः सन् चूर्णं

लोध्रं तेजोवती पथ्या त्र्यूषणं सयवाग्रजम्।
आर्द्रदाडिमनिर्य्यासश्चाजाजीशर्करायुतः॥
सतैलमाक्षिकाश्चैते चत्वारः कवड्ग्रहाः।
चतुरोऽरोचकान् हन्युर्वाताद्येकजसर्वजान्॥ ४॥
त्वङ्मुस्तमेला धान्यानि मुस्तमामलकानि च।
त्वक् च दार्वी यमान्यश्च पिप्पल्यस्तेजोवत्यपि॥
यमानी तिन्तिडीकञ्च पञ्चैते मुखशोधनाः।
श्लोकपादैरभिहिताः सर्वारोचकनाशनाः॥ ५॥
अम्लीका गुड़तोयञ्च त्वगेलामरिचान्वितम्।
अभक्तच्छन्दरोगेषु शस्तं कवड़धारणम्॥ ६॥
कारव्यजाजीमरिचं द्राक्षावृक्षाम्लदाड़िमम्।
सौवर्चलं गुड़ं क्षौद्रं सर्वारोचकनाशनम्॥ ७॥

तीक्ष्णपणानि त्रिफला रजनीद्वयञ्च
चूर्णीकृतानि यवशूकयिमिश्रितानि।
क्षौद्रान्वितानि वितरेन्मुखधावनार्थ-
मन्यानि तिक्तकटुकानि च भेषजानि॥ ८॥

---

गुड़त्वक्। तेजोवती चवी। एषां चूर्णेन जिह्वाघर्षणं कार्यमित्याहुः। मुखशोधना इति।—मुखगतदोषशोधनाः॥ ४॥ ५॥

अम्लीकेत्यादि।—अम्लीका पक्वतिन्तिड़ीफलम्, एतच्च पुरातनं ग्राह्यमित्याहुः। त्वगेलादीनाञ्च कटुत्वशीतत्वापादकं मानम्॥ ६॥

कारवीत्यादि।—कारवी कृष्णजीरकं; द्राक्षा महार्द्रकम्। गुटिका पञ्चकर्षप्रमाणा, मुखे धार्य्येत्याहुः॥ ७॥

तीक्ष्णेत्यादि।—सुसूतस्य। मुखधावनार्थमिति।—घर्षेण मुखशोधनमिति। अन्यानि तिक्तकटुकानि च भेषजानीति त्वगेलादिसहितानि भवन्ति, यदुक्तं—"त्वगेलासहितं सर्वं कटुतिक्तमरोचकी। निघात् क्षौद्रेण संयुक्तमश्नन्मन्नं पुनःपुनः॥" इति॥ ८॥

विड्चूर्णमधुसंयुक्तो रसो दाडिमसम्भवः।
असाध्यमपि संहन्यादरुचिं वक्त्रधारितः॥ ९॥

यमानीषाडवः—यमानी तिन्तिडीकञ्च नागरञ्चाम्लवेतसम्।
दाडिमं बदरञ्चाम्लं कार्षिकाण्युपकल्पयेत्॥
धान्यसौवर्च्चलाजाजी-वराङ्गञ्चार्द्धकार्षिकम्।
पिप्पलीनां शतञ्चैकं द्वे शते मरिचस्य च॥
शर्करायाश्च चत्वारि पलान्येकत्र चूर्णयेत्।
जिह्वाविशोधनं हृद्यं तच्चूर्णं भक्तरोचनम्॥
हृत्प्लीहपार्श्वशूलघ्नं विबन्धानाहनाशनम्।
कासश्वासहरं ग्राहि ग्रहण्यर्शोविकारनुत्॥ १०॥

कलहंसम्—

अष्टादश शिग्रुफलानि दश मरिचानि विंशतिश्च पिप्पल्यः।
आर्द्रकपलं गुडपलं प्रस्थत्रयमारनालस्य॥
घृतहिङ्गुलवणयुतं खजाहतं सुरभिगन्धाढ्यम्।
व्यञ्जनसहस्रघाति प्रेयं कलहंसकं नाम॥ ११॥

इत्यरोचक-चिकित्सा।

---

विड्चूर्णेत्यादि।—स्पष्टम्॥ ९॥

यमानीषाडवे।—चाम्लमिति बदरविशेषणम्। वराङ्गं गुडत्वक्। पिप्पलीनां शत-मित्यादिनिमानाम्; एवं मरिचस्यापि प्रमाणम्। एतच्चूर्णं शुचौ धृत्वा शनैः शनैर्भक्षयेत्। षाडव इति मधुराम्लरसोऽस्य संज्ञा, यमान्योप-लक्षितः षाडवो यमानीषाडवः॥ १०॥

अष्टादशेत्यादि।—शिग्रुफलानि शोभाञ्जनबीजानि। सुरभिगन्धाढ्यं चातु-र्जातकादिगन्धैः। खरतरतापोत्थितकरबलेन कम्पसर-जनकत्वेन कलहंस-संज्ञा॥ ११॥

इत्यरोचक-चिकित्साविवृतिः।

# अथ छर्दि-चिकित्सा।

आमाशयोत्क्लेशभवा हि सर्वा-
श्छर्द्यो मता लङ्घनमेव तस्मात्।
प्राक् कारयेन्मारुतजां विमुच्य
संशोधनं वा कफपित्तहारि॥ १॥
हन्यात् क्षीरोदकं पीतं छर्दिं पवनसम्भवाम्।
ससैन्धवं पिबेत् सर्पिर्वातच्छर्दिनिवारणम्॥ २॥
मुद्गामलकयूषं वा ससर्पिष्कं ससैन्धवम्।
यवागूं मधुमिश्रां वा पञ्चमूलीकृतां पिबेत्॥ ३॥

---

अरोचकवत् पञ्चविधत्वात् तथा कर्षणीयोऽप्यरुचेः सम्बन्धादरोचकानन्तरं छर्दिचिकित्सितमुच्यते, आमाशयेत्यादि।—चरकस्य।—आमः आमरसः, तदाशयः आमाशयः, तदुत्क्लेशः दोषाणामुदीरणं, तद्धेतुकाश्छर्दयः; किंवा आमाशयस्याशयविशेषस्योत्क्लेश इति। द्विमन्तो हेती। यस्मादामाशयोत्क्लेशेन एताः छर्दयः, आमाशयसमुत्थे च रोगे लङ्घनमुक्तं, तस्मादित्यर्थः। अपवादमाह, प्राक् कारयेदित्यादिना।—यद्यपि वातजायामप्यामाशयसम्बन्धेन कर्षणीयत्वेऽपि लङ्घनसाध्यत्व, तथापि वातस्य महात्ययत्वाम्लकारित्वात् लङ्घनशोधनाभ्यां प्रविणं सम्भवकरी स्यादिति भावः। अत्र लङ्घनमल्पदोषविषयं, शोधनञ्च बहुदोषविषयमिति। संशोधनशब्देनात्र वमनविरेचनयोरेव ग्रहणम्; तत्रापि वमनस्य प्रधानत्वात्। अन्ये तत्र संशोधनशब्देन प्रतिमार्गहरणतया अत्यर्थहितं विरेचनमेव वर्णयन्ति॥ १॥

हन्यादित्यादि।—सुश्रुतस्य।—क्षीरोदकमित्यत्र क्षीरघृतमिति जेज्जटः पठति, व्याचष्टे च—क्षीरमथनादुद्धृतं घृतं क्षीरघृतं, क्षीरयुक्तं वा क्षीरघृतमिति; किन्तु ग्रन्थान्तरे—"पीतं गुडाम्बु वा पयः" इत्युक्तम्; तेन क्षीरोदकमिति पाठः। ससैन्धवं पिबेत् सर्पिरित्यत्र पक्वं घृतम्॥ २॥

मुद्गामलकयूषं वा ससर्पिष्कमिति।—सर्पिरिह यूषघनत्वसम्पादनम्। यवागूमित्यादि।—सुश्रुतस्य।—पञ्चमूली लघ्वी इति चक्रः, महतीति गयदासः; वातजायामप्यामाशयसमुत्थत्वेनानुबन्धरूपस्य कफस्य विद्यमानत्वात्॥ ३॥

पित्तात्मिकायां त्वनुलोमनार्थम्
द्राक्षाविदारीक्षुरसैस्त्रिवृत् स्यात्।
कफाशयस्थन्त्वतिमात्रवृद्धम्
पित्तं जयेत् स्वादुभिरूर्द्ध्वमेव ॥ ४ ॥
शुद्धस्य काले मधुशर्कराभ्याम्
लाजैश्च मन्थं यदि वापि पेयाम्।
प्रदापयेन्मुद्गरसेन वापि
शाल्योदनं जाङ्गलजै रसैर्वा ॥ ५ ॥

चन्दनेनाक्षमात्रेण संयोज्यामलकीरसम्।
पिबेत् माक्षिकसंयुक्तं छर्दिस्तेन निवर्त्तते ॥ ६ ॥
चन्दनञ्चामृणालञ्च बालकं नागरं घनम्।
सतण्डुलोदकक्षौद्रः पीतः कल्को वमिं जयेत् ॥ ७ ॥
कषायो भृष्टमुद्गस्य सलाजमधुशर्करः।
छर्द्यतीसारहृद्दाह-ज्वरघ्नः संप्रकाशितः ॥ ८ ॥
हरीतकीनां चूर्णन्तु लिह्यान्माक्षिकसंयुतम्।

---

पित्तेत्यादि।—चरकस्य।—(पूर्वोक्ता) त्रिवृदिति।—द्राक्षादिरसैः प्रत्येकमुपयोज्य-मित्याहुः। कफाशयस्थमिति—आमाशयोर्द्ध्वभागस्थम्। स्वादुभिरूर्द्ध्वमेवेति—मदनफलै-र्द्राक्षादिभिरेव। ऊर्द्ध्वमिति—वमनेन हरेदित्यर्थः। वमनानुक्तमपि मदनफलं वमन-योग्यतया ज्ञेयम्; अन्ये तु—केवलमेव द्राक्षादिरसमाकण्ठं पीत्वा वमनं कार्य-मित्याहुः। काले इति—सम्यग्बुभुक्षाकाले। यदि वापि पेयामिति।—मन्थाभि-प्रति पेया ज्ञेया ॥ ४ ॥ ५ ॥

चन्दनेनेत्यादि।—चरकसंवादात् श्वेतचन्दनं ज्ञेयम्। चन्दनकल्कापेक्षया आम-लकीरसश्चतुर्गुणः, “पातव्यश्च चतुर्गुणः” इत्युक्तेः। चन्दनमित्यादौ।—बालकम्—उशीरम् ॥ ६ ॥ ७ ॥

कषाय इत्यादि।—मुद्गं यथा क्वाथविधिना कषायः कार्यस्ततो लाजचूर्णादि-प्रक्षेपः ॥ ८ ॥

अधोभागीकृते दोषे छर्दिः क्षिप्रं निवर्त्तते ॥ ९ ॥
गुडूचीत्रिफलारिष्टपटोलैः क्वथितं पिबेत्।
क्षौद्रयुक्तं निहन्त्याशु छर्दिं पित्तात्समुद्भवाम् ॥ १० ॥
क्वाथः पर्पटजः पीतः सक्षौद्रश्छर्दिनाशनः ॥ ११ ॥

कफात्मिकायां वमनं प्रशस्तम्
सपिप्पली-सर्षप-निम्बतोयैः।
पिण्डीतकैः सैन्धवसंप्रयुक्तै-
श्छर्द्यां कफामाशयशोधनार्थम् ॥ १२ ॥

विडङ्गत्रिफलाविश्व-चूर्णं मधुयुतं जयेत्।
विडङ्गप्लवशुण्ठीनामथवा श्लेष्मजां वमिम् ॥ १३ ॥
मज्जाम्रवं वा बदरस्य चूर्णं मुस्तायुतां कर्कटकस्य शृङ्गीम्।
दुरालभां वा मधुसंप्रयुक्तां लिह्यात् कफच्छर्दिविनिग्रहार्थम् ॥ १४ ॥

---

हरीतकीमित्यादि।—स्पष्टम् ॥ ९ ॥
गुडूच्यादी।—पित्तात्समुद्भवामिति पित्तसमुद्भवाम् ॥ १० ॥
क्वाथ इत्यादि।—स्पष्टम् ॥ ११ ॥
कफात्मिकायामित्यादी।—सपिप्पलीसर्षपनिम्बतोयैरिति।—निम्बपत्रक्वाथेन पिप्पल्यादीनां प्रक्षेप इति रत्नटिप्पनी; अन्ये तु—मोदकसंज्ञाय क्षोदश्च युज्यते; तेन पिप्पल्यादिकल्कयुक्तोदकेन निर्दिष्टमाहुः। वाग्भटेऽप्युक्तं—"कफजायां वमेन्निम्ब-प्रभादिपीतसर्षपैः। युक्तेन कोष्णतोयेन" इति। तस्मादुक्तमपि वमनं कल्केन सैन्धवं योज्यम्। पिण्डीतको मदनफलम्। कफामाशयशोधनार्थमिति—कफपूर्णामाशयशोधनार्थम्; कफस्यामाशयस्य च शोधनार्थमित्यन्ये ॥ १२ ॥
विडङ्गेत्यादी।—प्रथमं श्लेष्मच्छर्दिघ्नम् ॥ १३ ॥
मज्जाम्रवमित्यादि।—आम्रवं जम्बूफलास्थि। बदरस्य चूर्णमिति।—बदरास्थिचूर्णमिति चरके पठ्यते, तस्मात् बदरास्थिमज्जचूर्णम्; अन्ये तु—बदरस्य चूर्णमिति दलित्वा बदरास्थिमज्जचूर्णमित्याहुः। मुस्तायुतां कर्कटकस्य शृङ्गीमिति—द्वितीयो योगः। दुरालभां वेति—तृतीयो योगः। योगत्रयेऽपि मधु सम्बध्यते ॥ १४ ॥

सर्पणं वा मधुयुतं तिसृणामपि भेषजम् ।
क्षतं गुडूच्या विधिवत् कषायं हिमसंज्ञितम् ॥
तिसृष्वपि भवेत् पथ्यं माक्षिकेण समायुतम् ॥ १५ ॥
द्रव्यादापोथितात् तोये प्रतप्ते निशि संस्थितात् ।
कषायो योऽभिनिर्याति स शीतः समुदाहृतः ॥
षड्भिः पलैश्चतुर्भिर्वा सलिलात् शीतफाण्टयोः ।
आप्लुतं भेषजपलं रसाख्यायां पलद्वयम् ॥ १६ ॥
श्रीफलस्य गुडूच्या वा कषायो मधुसंयुतः ।
पेयश्छर्दित्रये शीतो मूर्वा वा तण्डुलाम्बुना ॥ १७ ॥

जम्ब्वाम्रपल्लवगवेधुकधान्यसेव्य-
ह्रीवेरवारि मधुना पिबतोऽल्पमल्पम् ।
छर्दिः प्रयाति शमनं त्रिसुगन्धियुक्ता
लीढा निहन्ति मधुनाथ दुरालभा वा ॥ १८ ॥

---

सर्पणमित्यादि ।—सर्पणं कोऽविमुक्तः प्रमाणः । तिसृणामिति ।—पृथग्वातादिजानाम्, अन्यथा बहुवचनानुपपत्तेः । एतेन त्रिदोषजच्छर्दिहरत्वमस्योक्तं भवति, यतः पृथग्वातादिच्छर्दिभेषजमुक्तमेव सान्निपातिकच्छर्दिभेषजं भवति, चरके तथोक्तत्वात् । क्षतमित्यादि ।—क्षुण्णस्य । अत्रापि पूर्ववत् माक्षिकम् । हिमसंज्ञितमिति ।—शीतकषायसंज्ञितं, तदर्थमेव तल्लक्षणपरिभाषामाह, द्रव्यादित्यादि ।—षड्भिरेव प्रक्षिप्य भेषजार्धपलं जलषड्पलमिति । रसाख्यायां पलद्वयमिति ।—स्वरसाभावे यत्र भेषजचूर्णं शीतजले प्रक्षिप्य स्वरसानुकल्पः क्रियते तस्मिन् कार्ये कर्षैकमितं भेषजस्य पलद्वयं दत्त्वा स्वरसानुकल्पः कार्यः ॥ १५ ॥ १६ ॥

श्रीफलस्येत्यादि ।—श्रीफलो बिल्वं, तस्य मूलं ग्राह्यं,—"बिल्वमूलं मधुर-त्रिदोषच्छर्दिघ्नं न च पित्तलम्" इति गुणपाठात्, एवमन्यत्रापि । गुडूच्या वा कषाय इति ।—गुडूच्याः क्वाथ एव शीतलः कार्यः, न तु शीतकषायः, क्वाथस्यैव तद्गुणत्वात्; यथा—"हिमकषायाः क्वाथं सुशीतं यो नरः पिबेन्मधुना । छर्दिं स दारुणामपि त्रिदोषजां निवारयति" इत्यादि ॥ १७ ॥

जम्ब्वामित्यादि ।—गवेधुको मुन्यन्नं, धान्यं धान्यकम्; सेव्यमुशीरम्; वारि

जात्या रसः कपित्थस्य पिप्पली-मरिचान्वितः।
क्षौद्रेण युक्तः शमयेल्लेहोऽयं छर्दिमुल्वणाम् ॥ १९ ॥
पिष्ट्वा धात्रीफलं द्राक्षां शर्कराञ्च पलोन्मिताम्।
दत्त्वा मधुपलञ्चात्र कुडवं सलिलस्य च।
वाससा गालितं पीतं हन्ति छर्दिं त्रिदोषजाम् ॥ २० ॥

एलादिचूर्णम्—एलालवङ्गगजकेशरकोलमज्ज-
लाजाप्रियङ्गुघनचन्दनपिप्पलीनाम्।
चूर्णानि माक्षिकसितासहितानि लीढ्वा
छर्दिं निहन्ति कफमारुतपित्तजाञ्च ॥ २१ ॥

कोलामलकमज्जानो मक्षिकाविट् सिता मधु।
सकृष्णातण्डुलो लेहश्छर्दिमाशु नियच्छति ॥ २२ ॥
अश्वत्थवल्कलं शुष्कं दग्ध्वा निर्वापितं जले।
तत्तोयपानमात्रेण छर्दिं जयति दुस्तराम् ॥ २३ ॥
यस्याङ्गं चन्दनोपेतं सम्यक् चौरप्रपेषितम्।
तेनैवालोड्य पातव्यं रुधिरच्छर्दिनाशनम् ॥ २४ ॥
द्राक्षाकपित्थमधुमागधिकोषणानाम्
क्षौद्राभयात्रिकटुधान्यकजीरकाणाम्।

---

शीतकषाय इत्यर्थः। पुनर्दुग्धमिति शोषानुरोधाद्युक्तं, चिरतुल्यसिद्धेन योगान्तरत्वात् न पीतव्यम् ॥ १८ ॥

जात्या इत्यादि।—जाती जातीफली; कपित्थस्येति—कपित्थफलम्। एष एकार्थे योगः ॥ १९ ॥

पिष्ट्वेत्यादि।—इदन्तु अन्यापेक्षया पेयं, शेषं स्पष्टम् ॥ २० ॥

एलेत्यादि।—स्पष्टम् ॥ २१ ॥

कोलेत्यादि।—कोलं बदरं, तदस्थिमज्जा ग्राह्या। कृष्णातण्डुलः पिप्पली-तण्डुलः ॥ २२ ॥

अश्वत्थेत्यादि।—स्पष्टम् ॥ २३ ॥

यस्याङ्गमित्यादि।—तेन इति—चौरेण ॥ २४ ॥

पित्तोत्थितां पित्तहरैर्विपक्वम्
निहन्ति तोयं पय एव वापि ॥ ३ ॥
काश्मर्य्यशर्करायुक्तं चन्दनोशीरपद्मकम् ।
द्राक्षामधुकसंयुक्तं पित्ततर्षे जलं पिबेत् ॥ ४ ॥
पित्तजायान्तु तृष्णायां पक्वोडुम्बरजो रसः ।
तत्क्वाथो वा हिमस्तद्वच्छारिवादिगणाम्बु वा ॥ ५ ॥
स्याज्जीवनीयसिद्धं क्षीरघृतं वा पित्तजे तर्षे ॥ ६ ॥
तद्वद्द्राक्षाचन्दनखर्ज्जूरोशीरमधुयुक्तं तोयम् ॥ ७ ॥
सशारिवादौ तृणपञ्चमूले तथोत्पलादौ मधुरे गणे वा ।

---

जलदानात् तृष्णाया उपरोधं दुःखं कदापि न कुर्य्यात्; किंवा किमर्थं पुनरिदमत्यर्थं जलं दीयते इत्याह, तृष्णेत्यादि ।—यस्मात् तृष्णाया उपरोधे सति प्राणत्यागः स्यात्, अतः पुरुषः कदापि तृष्णोपरोधं न कुर्य्यादित्यर्थः । अन्यतन्त्रे—"पिबन् सुखोष्णं मनुजोऽविरेच्य तृषो विमुच्येत हि वातजायाः" इति पठति । क्वचित्—"पिबेत् सुखोष्णं मनुजोऽप्ययन्त्र जलौघदुग्धस्य तदैव पानम्" इति ॥ १ ॥ २ ॥

पित्तोत्थितामित्यादि ।—सुश्रुतस्य ।—पित्तहरैरिति—काकोल्यादिभिः । अन्यतन्त्रे—"पित्तप्रशमैस्तु कृतः कषायः सशर्करः क्षौद्रयुतः सुशीतः । शीतस्पृशा पित्तकृतां निहन्ति क्षीरं घृतं वाप्यथ जीवनीयैः ॥" इति पठति, व्याचष्टे च—पित्तप्रशमैरित्युत्पलादिभिः काकोल्यादिभिश्चेति ॥ ३ ॥

काश्मर्य्यादिमधुकान्त एको योगः । शीतकषायोऽयम् । अन्ये तु—एतां कल्की कृत्य जलेन पेयं इत्याहुः ॥ ४ ॥

पित्तजायामित्यादि ।—वाग्भटस्य । पक्वोडुम्बरज इत्यपपाठः, सुश्रुतवचनात् । हिम इति—शीतकषायः । तद्वदिति—हिम इत्यर्थः; शारिवादिगणश्च वाग्भटोक्तः । स्याज्जीवनीयेत्यादि ।—चरकस्य ।—क्षीरघृतमिति—क्षीरोत्थं घृतम् । वा पित्तजे तर्षे इति ।—वातजे चेत्यर्थः, न तु संसर्गजे; तेषामनुक्तत्वात्; किंवा अन्येषामपि अन्तर्जातां गुणानामभिधाने यो न्यायः स एवात्राप्यनुसरणीय इति ॥ ५ ॥ ६ ॥

तद्वदित्यादौ ।—तोयं शीतकषायमित्याहुः; चक्रस्तु तद्वदित्यत्र पेय इति पठति, व्याचष्टे च—पेय इत्यत्र तर्षे इति सम्बन्ध इति । सशारिवेत्यादि ।—सुश्रुतस्य ।

कुर्य्यात् कषायांश्च तथैव युक्तान् मधूकपुष्पादिषु चापरेषु ॥ ८ ॥
बिल्वाढ़किधातकिपञ्चकोल-दर्भेषु सिद्धं कफजां निहन्ति ॥ ९ ॥
हितं भवेच्छर्द्दनमेव चात्र तप्तेन निम्बप्रसवोदकेन ॥ १० ॥
सजीरकाण्याद्र्रकशृङ्गवेर-सौवर्चलान्यर्द्धजलप्लुतानि ।
मद्यानि हृद्यानि च गन्धवन्ति पीतानि सद्यः शमयन्ति तृष्णाम् ॥ ११ ॥
क्षतोत्थितां रुग्विनिवारणेन जयेद्रसानामसृजश्च पानैः ॥ १२ ॥

---

शतशी पञ्चार्थे, तेन सारिवादिपञ्चचतुष्टयस्य कषायं कुर्य्यादित्यर्थः । मधुरो गणः,—काकोल्यादिः ; मधुरो गण इत्यत्र प्रथमो गण इति कश्चनः पठित्वा विदारीगन्धादि-गण इति व्याचष्टे, तत्र प्रामाणिकं, बहुभिरव्याख्यातत्वात् । अनेन गणचतुष्टयेन चत्वारः कषायाः कार्य्या इति चत्वार एव योगाः । तथैव युक्तानिति ।—शीतकषाय-विधिना कृतान् ; सुश्रुते कषायकल्पे अस्य गणस्य पठितत्वात् । अन्यत्तु—"तथैव युक्तान्" इत्यत्र यथोदितान् इति, पूर्व्वोक्तविधानेन यवेन जलं दत्त्वा प्रभाते निशि वासनं कुर्य्यात् । मधूकपुष्पादिषु चापरेष्विति ।—अपरांश्च शीतकषायं कुर्य्यादित्यर्थः । मधूक-पुष्पादीनि तु मधूक-श्रीमाञ्जन कोविदार-प्रियङ्गुपुष्पाणि चत्वारि रक्तपित्तप्रत्यनीक पठितानि ; किंवा आदिशब्दः प्रकारवाची, तेन मधूकपुष्पद्राक्षाकाश्मर्य्यखर्ज्जूरा-णीति चत्वारि ॥ ७ ॥ ८ ॥

बिल्वाढकीत्यादि ।—बिल्वस्य मूलम् ; आढकी तुवरी । सिद्धमित्यतः परं जलमिति शेषः ; जलमिति ।—षडङ्गविधानेनेति भावः, अन्ये तु—क्वाथमाहुः । अत्र सुश्रुतटीकाकृतो धातकीपञ्चकोलस्थाने धान्यकपञ्चमूलमिति पठन्ति, पञ्चमूलं स्वल्प-मित्याहुः, सर्वांश्च कषायान् पित्तघ्नत्वेन पञ्चकोलमनुचितमित्याहुः । दर्भः कुशः । निम्बप्रसवोदकेनेति ।—निम्बप्रसवक्वाथेनेति चक्रः ; निम्बपुष्पक्वाथेनेत्यन्ये ; निम्बपत्रक्वाथेनेति जेज्जटः, युक्तश्चैतत्, तस्याम्लस्याग्राह्यत्वात् । आर्द्रकशृङ्ग-वेरसौवर्चलानीत्यत्र चादित्वात् । आर्द्रकमत्र वेरम् आर्द्रकमेव । जीरकादिकञ्च सौरभकटुलवणादिकारकं देयम् ॥ ९—११ ॥

क्षतोत्थितामित्यादि ।—क्षतशोषः सुश्रुतस्य । रुग्विनिवारणेनेति ।—व्रणवेदना-निवारणेन कारणोच्छेदात् तत्कार्य्यरूपा क्षतजा तृष्णा शाम्यतीत्यर्थः । रसाना-मिति—मांसरसानाम् । असृजश्च पानैरिति ।—रक्तादिरक्तस्य पानैरित्यर्थः,

पयोत्थितं क्षीरजलं निहन्यान्मांसोदकं वाथ मधूदकं वा।
गुर्वन्नजामुल्लिखनैर्जयेत्तु क्षयाहते सर्वकृताञ्च तृष्णाम् ॥ १३ ॥
लाजोदकं मधयुतं शीतं गुडविमर्दितम्।
काश्मर्यशर्करायुक्तं पिबेत् तृष्णार्दितो नरः ॥ १४ ॥
अतिरुक्षदुर्बलानां तर्षं शमयेन्नृणामिहाशु पयः।
छागो वा घृतभृष्टः शीतो मधुरो रसो हृद्यः ॥ १५ ॥
आम्रजम्बूकषायं वा पिबेन्माक्षिकसंयुतम्।

---

एतच्चार्धद्वयोक्तितृष्णायां ज्ञेयम्। पयोत्थितमित्यादौ।—क्षीरजलमिति—क्षीरनिःसृतं जलमिति; क्षीरजलमित्यत्र क्षीरघृतमिति जेज्जटः पठति, व्याचष्टे च—क्षीरोत्थं घृतं क्षीरसहितं वा घृतमिति। मांसोदकमिति।—मांसरस एव, अन्ये तु—माषोदकमिति पठित्वा माषयूषमिति व्याचक्षते। मधूदकं वेति।—मधुमिश्रितमुदकमित्यर्थः। उदकञ्चात्र ऐन्द्रं; तदनुकारि भौमिकमुदकं वा चरकसंवादात्। न च विरोधः, अनुष्णोपयोगात्; उक्तं हि सुश्रुते—"[illegible] मात्रीरात्" इति। ननु चरकाशां हंसकमेवोक्तं, मधूदकन्तु कफघ्नमिति तत् कथमत्र प्रयुक्तमिति? नैवं; कफजापि क्षोभवशेन जायते, यदुक्तं—"रसक्षयाद् या क्षयसम्भवा सा तां सन्निपातादिति केचिदाहुः" इति। तत्र यद्यपि कफजितं वा चाविकं तदा मधूदकं देयम्। अन्ये तु—मधूदकमित्यत्र मधुरोदकमेवेति पठित्वा व्याचष्टे—द्राक्षामधुजलमिति; तन्न युक्तं, चरकसंवादात्। उल्लिखनैरिति।—वमनैः। न केवलं गुर्वन्नजामेव वमनैर्जयेत्, किन्तर्हि?—मद्यातिपीतात्, क्षयाहते इत्यादि।—क्षीणपक्षादि सर्वदोषारब्धा, तस्यां क्षीणधातुत्वात् वमनं न कार्यम्। सर्वकृताञ्चेति।—सर्वदोषकृतामामजामिति कार्त्तिकः, अन्ये तु—"क्षयाहते सर्वकृताश्च तृष्णा" इति पठन्ति; क्षयजां विहाय अन्याः सर्वास्तृष्णा वातपित्तकफामगुर्वन्नैः कृततृष्णा वमनैर्जयेदिति व्याख्यानयन्ति। अस्मिन् पक्षे—गुर्वन्नजायाः पृथगभिधानं विशेषार्थम् ॥ १२ ॥ १३ ॥

लाजोदकमित्यादि।—लाजचूर्णभावितमुदकं शीतकषायो वा। काश्मर्यं गाम्भारीफलम् ॥ १४ ॥

अतिरुक्षेत्यादि।—मधुररसाधिक्येनात्र सम्यङ्मधुरता ज्ञेया ॥ १५ ॥

छर्दिं सर्वां प्रणुदति तृष्णाञ्चैवापकर्षति ॥ १६ ॥
वटशुङ्गसितालोध्र-दाडिमं मधुकं मधु।
पिबेत् तण्डुलतोयेन छर्दितृष्णानिवारणम् ॥ १७ ॥
गोस्तनेक्षुरसः क्षीर-यष्टीमधुमधूत्पलैः।
नियतं नस्यतः पानैस्तृष्णा शाम्यति दारुणा ॥ १८ ॥
क्षीरेक्षुरसमाध्वीकैः क्षौद्रशीधुगुडोदकैः।
वृक्षाम्लाम्लैश्च गण्डूषास्तालुशोषनिवारणाः ॥ १९ ॥
तालुशोषे पिबेत् सर्पिर्घृतमण्डमथापि वा ॥ २० ॥
मूर्च्छाच्छर्दितृषादाह-स्त्रीमद्यभृशकर्शिताः।
पिबेयुः शीतलं वारि रक्तपित्ते मदात्यये ॥ २१ ॥
धान्याम्लमास्यवैरस्य-मलदौर्गन्ध्यनाशनम्।
तदेवालवणं पीतं मुखशोषहरं परम् ॥ २२ ॥

---

आम्रजम्बूकषायं वेति।—आम्रजम्ब्वोः कषायम्बु कथ्यते, पल्लवकषायोऽपि युज्यते, "जम्ब्वाम्रपल्लवयुतं क्षौद्रं दत्त्वा सुशीतलम्" इति पठितत्वात् ॥ १६ ॥

वटेत्यादौ।—वटशुङ्गादीनां चूर्णम् ॥ १७ ॥

गोस्तनेत्यादि।—गोस्तना द्राक्षा। एभिः प्रत्येकं नस्यम्। माधवे तु—द्राक्षादिवर्गं द्राक्षायष्टिमधुकीक्षोत्थं कल्कीकृत्य प्रक्षिप्य मधु च प्रक्षिप्य सर्वमालोड्य पेयमिति। तथा क्षीरमांसरसक्षीरादिभिः प्रत्येकं गण्डूषाः, बहुवचननिर्देशात्। यद्यपि तालुशोषे घृतं निषिद्धं, यदुक्तं—"तृष्णाच्छर्दिपरीतास्तु वर्जितास्तालुशोषिणः। न पिबेयुर्घृतम्" इति, तथापि चरकसंवादादस्य भवतो ह्यवस्थानुसारेण घृतपानं बोध्यम्; अतो विशिष्टविषयत्वान्न विरोधः; यथा कफजेऽपि तालुशोषेऽपि पिबेद्घृतं ह्यवस्थान्तरस्थेति, किंवा वातोल्बणावस्थायामेतद् घृतपानं बोध्यम्। तालुशोषस्य तृष्णाप्रकार एव, तेनेह सहगमस्याभिधानम् ॥ १८ ॥ १९ ॥

घृतमण्डमिति।—घृतस्योपरिभागः, अत एव घृतस्योपरि स्त्यानो भाग इति कामविनिश्चिते चक्रपाण्युक्तः। श्रीकण्ठस्तु घृतस्योपरि स्थितभागः, घृतमण्डमित्याह। मूर्च्छेत्यादि स्पष्टम् ॥ २० ॥ २१ ॥

धान्याम्लमित्यादि।—धान्याम्लं काञ्जिकम् ॥ २२ ॥

वैशद्यं जनयत्यास्ये सन्दधाति मुखे व्रणान् ।
दाहतृष्णाप्रशमनं मधुगण्डूषधारणम् ॥ २३ ॥
कोलदाडिमवृक्षाम्ल-चुक्रीकाचुक्रिकारसः ।
पञ्चाम्लको मुखालेपः सद्यस्तृष्णां नियच्छति ॥ २४ ॥
वारि शीतं मधुयुतमाकण्ठाद्वा पिपासितम् ।
पाययेद्वामयेच्चापि तेन तृष्णा प्रशाम्यति ॥ २५ ॥
वटशृङ्गामयक्षौद्र-लाजनीलोत्पलैर्दृढा ।
गुडिका वदनन्यस्ता क्षिप्रं तृष्णां नियच्छति ॥ २६ ॥
ओदनं रक्तशालीनां शीतं माक्षिकसंयुतम् ।
भोजयेत् तेन शाम्येत्तु छर्दिस्तृष्णा चिरोत्थिता ॥ २७ ॥
पूर्वामयातुरः सन् दीनस्तृष्णार्दितो जलं याचन् ।
न लभेत चेदाशेव मरणमाप्नोति दीर्घरोगं वा ॥
तृषितो मोहमायाति मोहात् प्राणान् विमुञ्चति ।
तस्मात् सर्वास्ववस्थासु न क्वचिद्वारि वार्यते ॥ २८ ॥

इति तृष्णा-चिकित्सा ।

---

सन्दधाति मुखे व्रणानिति ।—रोपयतीत्यर्थः ॥ २३ ॥

कोलेत्यादौ ।—चुक्रीका चाङ्गेरी । चुक्रिकेति—चुकाइ इति ख्याता । मुखालेप इति ।—मुखकुहरे लेपः, कपोलादौ लेप इति तु नियमः ॥ २४ ॥

वारि शीतमित्यादि ।—त्रिसूत्र्यावामनं योगः । वा कण्ठतोयपानादनु किञ्चिन् मधुपानमित्युपदिशन्ति वृद्धाः ॥ २५ ॥

वटशृङ्गेत्यादि ।—वटशृङ्गो वटप्ररोहः । आमयः कुष्ठम् । मधु तु यावता कठिना गुडिका भवति तावन्मात्रं देयम् ॥ २६ ॥

ओदनं रक्तशालीनां शीतमिति ।—सद्यस्कपालीयभक्तम् ॥ २७ ॥

प्रसङ्गं तृष्णार्त्तो जलसम्प्रदाने दोषमाह, पूर्वामयेत्यादि ।—पूर्वामयातुरः सन् ज्वररक्तपित्तादिरोगग्रस्तः सन् । दीन इति ।—तृष्णार्दितत्वेनैव क्लान्तमनाः । कथं म्रियते ? इत्याह,—तृषित इत्यादि ॥ २८ ॥

इति तृष्णा-चिकित्सा विवृतिः ।

# अथ मूर्च्छा-चिकित्सा।

सेकावगाहौ मणयः सहाराः शीताः प्रदेहा व्यजनानिलश्च।
शीतानि पानानि च गन्धवन्ति सर्वासु मूर्च्छास्वनिवारितानि ॥१॥
सिद्धानि वर्गे मधुरे पयांसि सदाडिमा जाङ्गलजा रसाश्च।
तथा यवा लोहितशालयश्च मूर्च्छासु शस्ताश्च सतीनमुद्गाः ॥ २ ॥

यथादोषं कषायाणि ज्वरघ्नानि प्रयोजयेत्।
रक्तजायान्तु मूर्च्छायां हितः शीतक्रियाविधिः ॥ ३ ॥
मद्यजायां वमेन्मद्यं निद्रां सेवेद् यथासुखम्।
विषजायां विषघ्नानि भेषजानि प्रयोजयेत् ॥ ४ ॥
कोलमज्जोषणोशीर-केशरं शीतवारिणा।
पीतं मूर्च्छां जयेल्लीढा कृष्णा वा मधुसंयुताम् ॥ ५ ॥
महौषधामृताक्षुद्रा-पौष्करग्रन्थिकोद्भवम्।

---

सेकाद्या शीतो भवतीत्यनन्तरं शीतचिकित्साभाक्, सेकेत्यादि।—मुक्तास्य। मणयो मुक्तास्फटिकप्रभृतयः ते च सहाराः हारान्विता इत्यर्थः। पानानि च गन्धवन्तीति कर्पूरादिगन्धयुक्तानि पानीयानीत्यर्थः। सर्वासु मूर्च्छास्वनिवारितानीत्यनेन वातकफजानामपि मूर्च्छानामपि हेतुभूतपित्तसंसर्गस्य सद्भावात् … इति दर्शयति ॥ १ ॥

वर्गे मधुर इति।—काकोल्यादौ। सदाडिमा इति।—दाडिमाम्लसहिता इत्यर्थः। सतीनो वर्त्तुलकलायः ॥ २ ॥

यथादोषं कषायाणि ज्वरघ्नानि प्रयोजयेदिति।—वातादिमूर्च्छासु यथाक्रमं वातादिज्वरहराणि यानि तानि प्रयोजयेदित्यर्थः। रक्तजायामिति।—रक्तदर्शनजायाम् ॥ ३ ॥

मद्यजायामिति।—मद्यमिवजायाम् ॥ ४ ॥

कोलमज्जादौ।—ऊषणं मरिचम् ॥ ५ ॥

पिबेत् कणायुतं क्वाथं मूर्च्छायेषु मदेषु च ॥ ६ ॥
शतावरीबलामूल-द्राक्षासिद्धं पयः पिबेत् ।
ससितं भ्रमनाशाय बीजं वात्यालकस्य वा ॥ ७ ॥
पिबेद्दुरालभाक्वाथं सघृतं भ्रमशान्तये ।
त्रिफलायाः प्रयोगो वा प्रयोगः पयसोऽपि वा ॥ ८ ॥
रसायनानां कौम्भस्य सर्पिषो वा प्रशस्यते ॥ ९ ॥
मधुना हन्त्युपयुक्ता त्रिफला रात्रौ गुडार्द्रकं प्रातः ।
सप्ताहात् पथ्याशी मदमूर्च्छाकामलोन्मादान् ॥ १० ॥
अञ्जनान्यवपीडाश्च धूमाः प्रधमनानि च ।
सूचीभिस्तोदनं शस्तं दाहः पीडा नखान्तरे ॥ ११ ॥
लुञ्चनं केशरोम्णाञ्च दन्तैर्दंशनमेव च ।
आत्मगुप्तावघर्षश्च हितास्तस्यावबोधने ॥ १२ ॥

इति मूर्च्छा-चिकित्सा ।

---

महौषधेत्यादौ ।—शुण्ठी कण्टकारी ; ग्रन्थिकं पिप्पलीमूलम् । भ्रमः घूर्णितं यो मोहयत्यजस्रभ्रान्तिम् । प्रयोगोऽभ्यासः ॥ ६—८ ॥

कौम्भं सर्पिर्दशवर्षात्मकम् ; अन्ये तु—"स्थितं वर्षशतं श्रेष्ठं कौम्भं सर्पिरुच्यते" ॥ ९ ॥ १० ॥

अञ्जनानीति ।—तीक्ष्णाञ्जनानि मरिचादीनि । अवपीडाः नासिकायां निर्गुण्ड्यादिरसा अवपीडा ये दीयन्ते । धूमाः वैरेचनधूमाः । प्रधमनं चूर्णनस्यम् । सूचीभिरित्यादौ—पीडा नखान्तर इति ।—नखमांसयोर्मध्ये पीडनम् ॥ ११ ॥

आत्मगुप्ता शूकशिम्बी ॥ १२ ॥

इति मूर्च्छा-चिकित्सा विवृतिः ।

# अथ मदात्यय-चिकित्सा ।

मन्थः खर्जूरमृद्वीका-वृक्षाम्लाम्लिकदाडिमैः ।
परूषकैः सामलकैर्युक्तो मद्यविकारनुत् ॥ १ ॥
सतीनमुद्गमिश्रान् वा दाडिमामलकान्वितान् ।
द्राक्षामलकखर्जूर परूषकरसेन वा ।
कल्पयेत् तर्पणान् यूषान् रसांश्च विविधात्मकान् ॥ २ ॥
मद्यं सौवर्चलव्योष-युक्तं किञ्चिज्जलान्वितम् ।
जीर्णमद्याय दातव्यं वातपानात्ययापहम् ॥ ३ ॥
मुद्गयूषः सितायुक्तः स्वादुर्वा पैशितो रसः ।
पित्तपानात्यये योज्याः सर्वतश्च क्रिया हिमाः ॥ ४ ॥
पानात्यये कफोद्भूते लङ्घनञ्च यथाबलम् ।
दीपनीयौषधोपेतं पिबेन्मद्यं समाहितः ॥ ५ ॥
सर्वजे सर्वमेवेदं प्रयोक्तव्यं चिकित्सितम् ।
आभिः क्रियाभिर्मिश्राभिः शान्तिं याति मदात्ययः ॥
न चेन्मद्यक्रमं मुक्त्वा क्षीरमस्य प्रयोजयेत् ॥ ६ ॥

---

मूर्च्छावन्मदात्ययस्यापि मद्यजन्यत्वात् मूर्च्छानन्तरं मदात्ययचिकित्सामाह ।—मद, एवात्ययकारको मदात्ययः ; किंवा मदशब्देनेह मदहेतुतया मद्यमुच्यते, तेन मद्यातीत्ययो मदात्ययः । मन्थ इत्यादि ।—द्रवैराप्लोड़ितसक्तवो मन्थाः, द्रवश्चेह खर्जूरादीनां क्वाथः । वृक्षाम्लं तिन्तिड़ीफलम् । अम्लीकाऽम्लवेतसः । सतीनेति ।—सतीनो वर्तुलकलायः । सतीनमुद्गमिश्रैरिति पाठे—कामरसस्य विशेषणम् ; चरके हि एतद्वचनात् पूर्वं कामरसमित्युक्तम् ॥ १ ॥ २ ॥

मद्यमित्यादि ।—सौवर्चलव्योषयुक्तं लवणकटुकात्मकार्थकं देयम् ; किञ्चिज्जलमष्टमांशिकमित्याहुः ॥ ३ ॥

मुद्गयूष इत्यादि ।—स्वादुरित्यनेन संस्कारार्थं कटुद्रव्योपयोगोऽत्र न कार्य इति दर्शयति ॥ ४—६ ॥

लङ्घनाद्यैः कफे क्षीणे जातदौर्बल्यलाघवे ।
ओजस्तुल्यगुणं क्षीरं विपरीतञ्च मद्यतः ॥ ७ ॥
क्षीरप्रयोगं मद्यं वा क्रमेणाल्पाल्पमाचरेत् ॥ ८ ॥

पुनर्नवाद्यं घृतम्—

पयः पुनर्नवाक्वाथं यष्टीकल्कप्रसाधितम् ।
घृतं पुष्टिकरं पानान्मद्यपानहतौजसः ॥ ९ ॥

अष्टाङ्गलवणम्—

सौवर्चलमजाजी च वृक्षाम्लं साम्लवेतसम् ।
त्वगेलामरिचार्द्धांशं शर्कराभागयोजितम् ॥
हितं लवणमष्टाङ्गमग्निसन्दीपनं परम् ।
मदात्यये कफप्राये दद्यात् स्रोतोविशोधनम् ॥ १० ॥
चव्यं सौवर्चलं हिङ्गु पूरकं विश्वदीप्यकम् ।
चूर्णं मद्येन दातव्यं पानात्ययरुजापहम् ॥ ११ ॥
जलाप्लुतश्चन्दनरूषिताङ्गः
स्रग्वी सभक्ष्यां पिशितोपदंशाम् ।

---

मद्यामदस्थायां क्षीरप्रयोगः कर्त्तव्य इत्याह, लङ्घनाद्यैरिति ।—आद्यशब्दात् शोधनादीनां ग्रहणम् ॥ ७ ॥

क्षीरप्रयोगमित्यादि ।—एतद्वचनात् पूर्वं—"पयसा च हते रोगे बले जाते निवर्त्तयेत्" इति वचनमस्ति, तेनात्र क्षीरप्रयोगमित्यत्र पूर्वोक्तेन निवर्त्तयेदित्यनेन सम्बन्धात् क्षीरप्रयोगं क्रमेण निवर्त्तयेत् । मद्यञ्च क्रमेणाल्पाल्पमाचरेदित्यर्थः ॥ ८ ॥

पयः पुनर्नवाक्वाथेत्यादौ ।—क्षीरं घृतसमं, क्वाथस्त्रिगुणश्चतुर्गुणो वेत्याहुः ॥ ९ ॥

सौवर्चलमित्यादि ।—अत्र सौवर्चलादीनां चतुर्णां समभागता; त्वगेलामरिचानामेकभागापेक्षया प्रत्येकमर्द्धभागिकत्वम्; शर्कराभागोऽपि सौवर्चलाद्येकतमद्रव्यसमः ॥ १० ॥

चव्यमित्यादौ ।—पूरकं—बीजपूरस्य फलत्वगिति निश्चलः । दीप्यकं यमानी ॥ ११ ॥

मद्यं येन प्रकारेण विकारं न जनयेत् तदाह, जलेत्यादि ।—जलाप्लुतः ।—चन्दनेन

पिबन् सुरां नैव लभेत रोगान्
मनोमतिघ्नश्च मदं न याति ॥ १२ ॥
द्राक्षाकपित्थफलदाड़िमपानकं यत्
तत् पानविभ्रमहरं मधुशर्कराढ्यम् ॥ १३ ॥
पथ्याक्वाथेन संसिद्धं घृतं धात्रीरसेन वा ।
सर्पिः कल्याणकं वापि मदमूर्च्छाहरं पिबेत् ॥ १४ ॥
सच्छर्दिमूर्च्छातिसारं मदं पूगफलोद्भवम् ।
सद्यः प्रशमयेत् पीतमा छसेर्वारि शीतलम् ॥ १५ ॥
वन्यकरीषघ्राणाज्जलपानाल्लवणभक्षणादपि ।
शाम्यति पूगफलमदश्चूर्णरजा शर्कराकवलात् ॥ १६ ॥
शङ्खचूर्णरजोघ्राणात् स्वल्पं मदमपोहति ॥ १७ ॥
कुष्माण्डरसः सगुड़ः शमयति मदमाशु मदनकोद्रवजम् ॥१८॥
धौस्तूरजञ्च दुग्धं सशर्करं पानयोगेन ॥ १९ ॥

इति मदात्यय-चिकित्सा ।

---

कथितं नियमं यस्य । विधिवत् मांसम् उपदंशो मद्यं यस्य स तथा । मनो-मतिघ्नमिति विशेषणात् द्वितीयादिमदं न प्राप्नोति, प्रथमस्तु मनोऽनुपघातकं लभत एवेत्यर्थः ॥ १२ ॥

द्राक्षेत्यादि ।—सुगमम् । द्राक्षादिभिः पानकं सूदशास्त्रानुसारेण कार्य्यम् ॥ १३ ॥

पथ्येत्यादि ।—इतरदयमकम् । पवित्र गदत्वसामान्यात् पृथक् पृथक् चिकित्सा-माह, सच्छर्दीत्यादि ।—वन्येत्यादि ।—वने जातं वन्यो वन्यः वाड इत्यर्थं इति केचित् । करीष इति—शुष्कगोमयः ; अन्ये तु—वन्यकरीषं वनभवकरीषमाहुः । एत च वन्यकरीषादयः पृथक् प्रयोक्तव्याः । चूर्णरजेति ।—अतिमात्रचूर्णभक्षणे दौ शङ्खनादिदाहः । एतच्च वृन्दटीकानुरोधाल्लिखितम् । स्वल्पं मदं—पूगभक्षणजमेव । कुष्माण्डेत्यादि ।—मदनं धान्यविशेषः, मदनाख्य इति ख्यातः । धौस्तूरं धुस्तूरफलभक्षणजम् ॥ १४—१९ ॥

इति मदात्यय-चिकित्सा-विवृतिः ॥

---

## अथ दाह-चिकित्सा ।

यत् पित्तज्वरदाहोक्तं दाहे तत् सर्वमिष्यते ॥ १ ॥
शतधौतघृताभ्यक्तं दिह्याद्वा यवसक्तुभिः ।
कोलामलकयुक्तैर्वा धान्याम्लैरपि बुद्धिमान् ॥ २ ॥
छादयेत् तस्य सर्वाङ्गमारनालार्द्रवाससा ।
लामज्जेनाथ शुक्तेन चन्दनेनानुलेपयेत् ॥ ३ ॥
चन्दनाम्बुकणास्यन्दि-तालवृन्तोपवीजितः ।
सुप्याद्दाहार्दितोऽम्भोज-कदलीदलसंस्तरे ॥ ४ ॥
परिषेकावगाहेषु व्यजनानाञ्च सेवने ।
शस्यते शिशिरं तोयं तृष्णादाहप्रशान्तये ॥ ५ ॥
क्षीरैः क्षीरिकषायैश्च सुशीतैश्चन्दनान्वितैः ।
अन्तर्दाहं प्रशमयेदेतैरन्यैश्च शीतलैः ॥ ६ ॥

कुशाद्यं तैलं घृतञ्च—

कुशादिशालपर्णीभिर्जीवकाद्येन साधितम् ।
तैलं घृतं वा दाहघ्नं वातपित्तविनाशनम् ॥ ७ ॥

---

मदात्ययजदाहस्यापि मद्यपानजन्यत्वात् मदात्ययाधिकारात् एव दाहचिकित्सा । दिह्यादित्यादि ।—कोलेत्यादि द्वितीयो योगः; अत्रापि दिह्यादिति योज्यम् । लामज्ज-मुशीरं; शुक्तं सन्धानविशेषः; तालवृन्तं तालपत्रनिर्मितव्यजनम् ॥ १—५ ॥

क्षीरिकषायो, वटोडुम्बरादिक्वाथः । क्षीरादिभिश्चैतत् पानपरिषेकादौ योज्यम् ॥ ६ ॥

कुशादीत्यादि ।—कुशादिपञ्चमूलं, तृणपञ्चमूलं, तच्च सुश्रुतोक्तं कुश-काश-नल-दर्भकाण्डेक्षुमूलरूपम् । अत्र शालपर्णीशब्देन विदारीगन्धादिगणस्य ग्रहणमिति वृन्दटिप्पनी; अन्ये तु—शालपर्ण्यादिपञ्चमूलस्य ग्रहणमित्याहुः । नियतत्वादिशब्दाभावात् शालपर्णीमात्रस्यैव ग्रहणमित्याह । जीवकाद्येनेति ।—जीवकाद्यष्टवर्गेण, जीवकाद्यष्टवर्गश्च जीवक-ऋषभक-मेदा महामेदा-काकोली क्षीरकाकोली-ऋद्धि-वृद्धयः ;

फलिनी लोध्रसेव्याम्बु हेमपत्रं कुटन्नटम्।
कालीयकरसोपेतं दाहे शस्तं प्रलेपनम् ॥ ८ ॥
ह्रीवेरपद्मकोशीर-चन्दनक्षोदवारिणा।
सम्पूर्णामवगाहेत द्रोणीं दाहार्दितो नरः ॥ ९ ॥

इति दाह-चिकित्सा।

## अथोन्माद-चिकित्सा।

उन्मादे वातिके पूर्व्वं स्नेहपानं विरेचनम्।
पित्तजे कफजे वान्तिः परो वस्त्यादिकः क्रमः ॥ १ ॥
यच्चोपदेक्ष्यते किञ्चिदपस्मारचिकित्सिते।

---

अत्र सर्वत्र सुश्रुतयोगे जीवनीयाष्टकम्। चरकयोगे पुनरेव काकोलीक्षीरकाकोलीमाष-पर्णी-मुद्गपर्णी-जीवनी-मधुकसहितं जीवनीयदशकं ज्ञेयम्। अत्र कुशादिशालपर्णीभिः क्वाथः, जीवकाद्येन कल्कः। अन्ये तु—"कल्ककाथावनिर्देशे गणात् तस्मात् प्रयोजयेत्" इति वचनात् सर्वैरेव कल्ककाथाविच्छाहुः ॥ ७ ॥

फलिन्यादौ।—फलिनी प्रियङ्गुः; सेव्यमुशीरम्; अम्बु बालकं, हेम नागकेशरं; पत्रं तेजपत्रं; कुटन्नटं कैवर्त्तमुस्तकं; कालीयकं कालीया इति ख्यातं, पीतकाष्ठं गन्धद्रव्यविशेषः; श्वेतचन्दनमिति केचित् कालीयकञ्चायश्च पैत्यार्थमिति वदन्ति ॥ ८ ॥

ह्रीवेरेत्यादौ।—क्षोदं चूर्णम्। एषां चूर्णानि शीतलजलेन मिश्रयित्वा अवगाहन कार्य्यम् ॥ ९ ॥

इति दाह-चिकित्सा विवृतिः ॥

---

यद्यपि मदात्ययस्य उन्मादसहचरत्वेन तथा पूर्व्वोक्तरीत्या च मदात्ययानन्तर-मुन्मादादावेव वक्तुमुचितौ, तथापि सूचीकटाहन्यायेन दाहमभिधाय उन्माद-चिकित्सितमुच्यते, उन्माद इत्यादि।—परो वस्त्यादिकक्रम इति।—पश्चात् स्नेहवस्ति-निरूहण-शिरोविरेचनात्मकः क्रमः कार्य्यः। चरकेऽप्युक्तं—"निरूहण स्नेहवस्तिः

उन्मादे तत्र कर्त्तव्यं सामान्याद्धेतुदूष्ययोः ॥ २ ॥
ब्राह्मीकुष्माण्डीषड्ग्रन्था शङ्खपुष्पिकास्वरसाः ।
उन्मादहृतो दृष्टाः पृथगेते कुष्ठमधुमिश्राः ॥ ३ ॥
दशमूलाम्बु सघृतं युक्तं मांसरसेन वा ।
ससिद्धार्थकचूर्णं वा पुराणं चैककं घृतम् ॥ ४ ॥
उग्रगन्धं पुराणं स्याद्दशवर्षस्थितं घृतम् ।
लाक्षारसनिभं शीतं प्रपुराणमतः परम् ॥ ५ ॥
श्वेतोन्मत्तोत्तरदिशा-मूलसिद्धस्तु पायसः ।
गुडाज्यसंयुतो हन्ति सर्वोन्मादांस्तु दोषजान् ॥ ६ ॥
उन्मादे समधुः पेयः शुद्धो वा तालशाखजः ।
रसो नस्येऽभ्यञ्जने च सार्षपं तैलमिष्यते ॥ ७ ॥
श्वपचघटकोचीर-पीतोन्मादविनाशिनी ।
बद्धं सार्षपतैलाक्तमुत्तानमातपे न्यसेत् ॥ ८ ॥

---

शिरसश्च विरेचनम् । ततः कुर्य्याद् यथादोषं तेषां भूयस्तमाचरेत् ॥" इति ।
*सामान्याद्धेतुदूष्ययोरिति* ।—उन्मादापस्मारयोर्हेतुर्मन-उपघातादिः दूष्यञ्च हृदयं समानमित्यर्थः । सामान्याद्दोषदूष्ययोरिति केचित् पठन्ति ॥ १ ॥ २ ॥

ब्राह्मीत्यादयश्चत्वारो योगाः । कुष्माण्डीफलमत्र पुराणं ग्राह्यमित्याहुः ॥ ३ ॥ ४ ॥

पुराणघृतलक्षणमाह उग्रगन्धमित्यादि ।—चरकस्य ।—चरकटीकाकृतस्तु केचित् इमं श्लोकमनार्षं वदन्ति, केचिद्दशवर्षातीतं घृतं पुराणमिति ब्रुवते, तन्त्रान्तर-वचनात् ॥ ५ ॥

श्वेतेत्यादि ।—श्वेतोन्मत्तः श्वेतधुस्तूरस्तस्य उत्तरदिशि स्थितं मूलं ग्राह्यम् । महेश्वरस्तु—उत्तरदिशि स्थितं श्वेतधुस्तूरमूलं पिष्टं पल १, घृतक्षीरं पल ४, दुग्ध-शराव ४, पायसं साध्यं, तदनुरूपे गुडघृते दत्त्वा खादयेदित्याह ॥ ६ ॥

उन्माद इत्यादि ।—शुद्ध इति केवलः । तालशाखज इति ।—छान्दसत्वादकारः ; रस इति स्वेदः ; तेन कोमलतालशाखाभवो रसः मधुप्रक्षेपेण, शुद्धो वा मधुना विनाऽपि ॥ ७ ॥

सिद्धार्थको वचा हिङ्गु करञ्जौ देवदारु च।
मञ्जिष्ठा त्रिफला श्वेता कटभीत्वक् कटुत्रिकम् ॥
समांशानि प्रियङ्गुश्च शिरीषो रजनीद्वयम्।
बस्तमूत्रेण पिष्टोऽयमगदः पानमञ्जनम् ॥
नस्यमालेपनञ्चैव स्नानमुद्वर्त्तनं तथा।
अपस्मारविषोन्माद-कृत्यालक्ष्मीज्वरापहः ॥
भूतेभ्यश्च भयं हन्ति राजद्वारे च शस्यते।
सर्पिरेतेन सिद्धं वा सगोमूत्रं तदर्थकृत् ॥ ९ ॥

त्र्यूषणाद्या वर्त्तिः—

त्र्यूषणं हिङ्गु लवणं वचा कटुकरोहिणी।
शिरीषनक्तमालानां बीजं श्वेताश्च सर्षपाः।
गोमूत्रपिष्टैरेतैर्वा वर्त्तिर्नेत्राञ्जने हिता।
चतुर्थकमपस्मारमुन्मादञ्च नियच्छति ॥ १० ॥
गुरुस्याचारविभ्रंशे तीक्ष्णं नावनमञ्जनम्।
ताडनञ्च मनोबुद्धि-स्मृतिसंवेजनं हितम् ॥
तर्जनं त्रासनं दानं सान्त्वनं हर्षणं भयम्।
विस्मयो विस्मृतेर्हेतोर्नयन्ति प्रकृतिं मनः ॥ ११ ॥

---

चक्रमर्दकेति।—चक्रमर्दकबीजं अङ्कोठस्य। मज्जाभिरिति।—एतच स्रोतो-विशोधनार्थमुद्वेजनार्थञ्च ॥ ८ ॥

सिद्धार्थक इत्यादि।—अत्र करञ्जद्वयस्य त्वगित्याहुः, श्वेता श्वेतापराजिता, कटभी लताकटकीति ख्याता, अन्ये तु—"करभ" इत्याहुः; शिरीषस्य फलम्। भयं हन्ति।—भयोत्थविकारः, कृत्या अभिचारः, राजद्वारे च प्रशस्त इति।—वशीकरणत्वात्। एतेनेति।—सिद्धार्थकादीनां कल्केन ॥ ९ ॥

त्र्यूषणमित्यादि।—स्पष्टम् ॥ १० ॥

गुरूस्येत्यादि।—चरकस्य।—गुरुस्येति।—श्रमितस्य। आचारविभ्रंशे इत्युन्मादे। संवेजनमुद्वेजनं, तर्जनं वचसा, विस्मृतेरिति।—उन्मादहेतुभयहर्षादिविस्मारकतया

कामशोकभयक्रोध-हर्षेर्ष्यालोभसम्भवान् ।
परस्परं प्रतिद्वन्द्वैरेभिरेव शमं नयेत् ॥ १२ ॥
इष्टद्रव्यविनाशात्तु मनो यस्योपहन्यते ।
तस्य तत्सदृशप्राप्तैः सान्त्वाश्वासैश्च तान् जयेत् ॥ १३ ॥
प्रदेहोत्सादनाभ्यङ्ग-धूमाः पानञ्च सर्पिषः ।
प्रयोक्तव्यं मनोबुद्धि-स्मृतिसंज्ञाप्रबोधनम् ॥
कल्याणकं महच्चापि दद्याद्वा चैतसं घृतम् ।
तैलं नारायणञ्चापि महानारायणं तथा ॥ १४ ॥

पानीयकल्याणकं घृतम्—

विशाला त्रिफला कौन्ती देवदार्वेलवालुकम् ।
स्थिरा नतं रजन्यौ द्वे शारिवे द्वे प्रियङ्गुका ॥
नीलोत्पलैलामञ्जिष्ठा-दन्तीदाडिमकेशरम् ।
तालीशपत्रं बृहती मालत्याः कुसुमं नवम् ॥
विडङ्गं पृश्निपर्णी च कुष्ठं चन्दनपद्मकौ ।
अष्टाविंशतिभिः कल्कैरेतैरक्षसमन्वितैः ।
चतुर्गुणं जलं दत्त्वा घृतप्रस्थं विपाचयेत् ॥

---

प्रभावादेव शमः प्रकृतिं स्वभावं गच्छति। परस्परप्रतिद्वन्द्वैरिति।—यथोऽन्यप्रत्यनीकैः। तस्य तत्सदृशप्राप्तैरिति।—भावे क्तः; तत्सदृशप्राप्तिभिरित्यर्थः। सान्त्वाश्वासैरिति।—सान्त्वं सामप्रयोगः, वशीभूतकरणार्थ उपायविशेषः; आश्वासः, सन्तोषवचनम्। उत्सादनं चूर्णघर्षणम्। नारायणतैलं महानारायणतैलञ्च वातव्याधौ वक्ष्यति ॥ १२—१४ ॥

विशालेत्यादि।—विशाला गोरक्षकर्कटी; कौन्ती रेणुका; एलवालुकं स्वनामख्यातं सुगन्धि द्रव्यं; स्थिरा शालपर्णी; नतं तगरपादुका, तदभावे शिग्रनीकोषरः; केशरं नागकेशरं; मालती जाती, तस्याः कुसुमं; नवमिति—कुसुमविशेषणम्। अष्टाविंशतित्वं कल्कानां पाठादेव सिद्धं, किमर्थमुच्यते अष्टाविंशतिभिरिति?—अत्र यद्यपि त्रिफलायाः प्रत्येकमेव भागो गृह्यते चतुर्गणितत्वात्, तथापि त्रिफलायाः प्रत्येकभागग्रहणार्थम् अष्टाविंशतिभिरित्युक्तम्। यद्यपि त्रिफला-

अपस्मारे ज्वरे कासे शोषे मन्दानले क्षये ।
वातरक्ते प्रतिश्याये तृतीयक-चतुर्थके ॥
वम्यर्शोमूत्रकृच्छ्रेषु वीसर्पोपहतेषु च ।
कण्डूपाण्ड्वामयोन्मादे विष-मेहगरेषु च ॥
भूतोपहतचित्तानां गद्गदानामरेतसाम् ।
शस्तं स्त्रीणाञ्च वन्ध्यानामायुर्वर्णबलप्रदम् ॥
अलक्ष्मीपापरक्षोघ्नं सर्वग्रहविनाशनम् ।
कल्याणकमिदं सर्पिः श्रेष्ठं पुंसवनेषु च ॥ १५ ॥

क्षीरकल्याणकं घृतम्—

द्विजलं सचतुःक्षीरं क्षीरकल्याणकन्त्विदम् ॥ १६ ॥

महाकल्याणकं घृतम्—

एभ्य एव स्थिरादीनि जले पक्त्वैकविंशतिम् ।
रसे तस्मिन् पचेत् सर्पिर्गृष्टिक्षीरं चतुर्गुणम् ॥

---

शब्देन द्राक्षाकाश्मर्यफलयोरुच्यते, तथापि हरीतक्यादित्रिफलाया एवात्र ग्रहणं प्राधान्यादिव, एवमन्यत्रापि। पुंसवनेष्विति।—पुत्रकारणयोनिषु ॥ १५ ॥

तदेव घृतं यदा जलस्याष्टौ शरावान् क्षीरस्य षोडश शरावान् दत्त्वा पच्यते, तदा क्षीरकल्याणकं भवति। ( इति पानीयकल्याणक-क्षीरकल्याणकयोः प्रयोगौ ) ॥ १६ ॥

एभ्य एवेति।—कल्याणकोक्तविशालादिभ्यः। स्थिरादीनीत्युक्ते विदारीगन्धादि-पञ्चमूलस्यापि ग्रहणं स्यादत आह, एकविंशतिमिति।—बहुवचननिर्देशान्महतीस्थिरादि-निरासार्थं वा एकविंशतिमित्युक्तम्। गृष्टिरेकवारप्रसूता धेनुः। अत्र चतुर्गुण-क्षीरस्य निर्दिष्टत्वात्तत्सर्पिषो द्रव एव देयः, तेनानिर्दिष्टमानक्वाथोऽत्र स्नेहसम एवेति पञ्चगुणः पाकः। युक्तञ्चैतत्, पञ्चप्रभृति-द्रव सूचितादिपरिभाषार्थेनास्यार्थस्य समानन्यायत्वादिति केचित्। अन्ये तु—क्षीरेणैवात्र चतुर्गुणे प्राप्तेऽत्र कषायः "स्नेहेनापि चातुर्गुण्यम्" इत्यादिपरिभाषया - अनियतत्वेन "स्नेहात् तोयं चतुर्गुणम्" इति द्रव्यचातुर्गुण्यपरिभाषया क्षीरमानसदृशमात्र चतुर्गुणो देय इति वदन्ति।

वयःस्था शूकरी कृष्णा सातिच्छत्रा पलङ्कषा।
महापुरुषदन्ता च वयःस्था नाकुलीद्वयम्॥
कटम्भरा वृश्चिकाली स्थिरा चैव च तैर्घृतम्।
सिद्धं चतुर्थकोन्माद-ग्रहापस्मारनाशनम्॥
महापैशाचिकं नाम घृतमेतद्यथाऽमृतम्।
मेधाबुद्धिस्मृतिकरं बालानाञ्चाङ्गवर्द्धनम्॥ १८॥

हिङ्ग्वाद्यं घृतम्—

हिङ्गुसौवर्चलव्योषैर्द्विपलांशैर्घृताढकम्।
चतुर्गुणे गवां मूत्रे सिद्धमुन्मादनाशनम्॥ २०॥

लशुनाद्यं घृतम्—

लशुनस्याविनष्टस्य तुलार्द्धं निस्तुषीकृतम्।
तदर्द्धं दशमूलस्य द्व्याढकेऽपां विपाचयेत्॥
पादशेषे घृतप्रस्थं लशुनस्य रसं तथा।
कोलमूलकवृक्षाम्ल-मातुलुङ्गार्द्रकै रसैः॥
दाडिमाम्बुसुरामस्तु-काञ्जिकाम्लैस्तदर्द्धिकैः।

---

चौरा चोरकाख्यौषधी, शुक्तिपर्णीत्यपरे; चौरकचोरपुष्पी; वयःस्था ब्राह्मी, गुडूची-त्यन्ये, अपरे तु—त्रिवृन्तोत्याहुः; शूकरी वाराहिका, तदभावे चर्मकारालुक.; कृष्णा मधुरिका, सातिच्छत्रा शतपुष्पा; पलङ्कषा गुग्गुलुः; महापुरुषदन्ता शतावरी; वयःस्था सुरालना, अक्षीत्यन्ये; नाकुलीद्वयं रास्नाद्वयं,—रास्ना गन्धरास्ना च; कटम्भरा कटभी प्रसारणी वा; वृश्चिकाली वृश्चिकपत्री, विछातीति ख्याता; स्थिरा शाल-पर्णी। स्वल्पैश्च त्रिफलाभावात् महच्चश्चोऽयं महागुणकारकत्वादित्याहुः; अन्ये तु—गडूच्या स्थिराबहुभिर्महाद्विना स्वल्पैर्याधिकस्यापि तथान्तरे दर्शितत्वात् तदपेक्षयास्य महात्वमाहुः॥ १८॥

हिङ्ग्वादौ।—घोषस्य प्रत्येकं द्विपलांशता॥ २०॥

लशुनस्यादौ।—अविनष्टस्येति।—विपक्वस्य; तुलार्द्धं पञ्चशत् पलानि; तदर्द्धं दशमूलस्येति निर्दिष्टा दशमूलस्य पञ्चविंशतिः पलानि; पादशेषे इत्यादौ, लशु-नस्य रसं तथा इति।—प्रस्थमेव। दाडिमाम्बु दाडिमरसः। तदर्द्धिकैरित्यत्र—तदर्द्धेन

साधयेत् त्रिफलादारु-लवणव्योषदीप्यकैः ।
यमानीचव्यहिङ्गुग्र-वेतसैश्च पलार्द्धिकैः ।
सिद्धमेतत् पिबेच्छूल-गुल्मार्शोजठरापहम् ॥
ब्रध्नपाण्ड्वामयप्लीह-योनिदोषक्रिमिज्वरान् ।
वातश्लेष्मामयांश्चान्यानुन्मादांश्चापकर्षति ॥ २१ ॥
सर्पिःपानादिरागन्तोर्मन्त्रादिश्चेष्यते विधिः ॥
पूजावल्युपहारेष्टि-होममन्त्राञ्जनादिभिः ।
जयेदागन्तुमुन्मादं यथाविधि शुचिर्भिषक् ॥ २२ ॥
कृष्णामरिचसिन्धूत्थ मधुगोपित्तनिर्मितम् ।
अञ्जनं सर्वभूतोत्थ महोन्मादविनाशनम् ॥ २३ ॥
दार्वीमधुभ्यां पुष्यायां कृतश्च गुडिकाञ्जनम् ।
मरिचं चातपे मासं सपित्तं हितमञ्जनम् ॥
वीक्षते पश्यतः कार्य्यं दोषभूतहतस्मृतेः ॥ २४ ॥

---

प्राधान्यात् प्रत्यासत्त्या च घृतपरिमाणात् कोलादिरयं प्रत्येकमर्द्धपलैरित्यर्थः ; अन्ये तु—पलार्द्धिकैरित्यत्र तन्त्रेण पादाद्यमिदं कषायः परामृश्यते, तेन लवणस्य यमान्यादीनां दशानामिव समवार्द्धिकत्वेन प्रत्येकं ग्रहणमित्याहुः ॥ २१ ॥

आगन्तून्मादचिकित्सामाह, सर्पिरित्यादि ।—सर्पिरिह भूतघ्नं चैतसादि । पूजेत्यादौ ।—बलिः पूजोपकरणम्, उपहार उपढौकनम्, किंवा पूजावल्युपहारः उपढौकनमेव । मन्त्रादिभिरिति ।—आदिशब्दात् स्वस्त्ययनादिकं बोध्यम्, यदुक्तं—"भूतानामधिपं देवमीशानं जगतः प्रभुम् । पूजयन् प्रयतो नित्यं जयत्युन्मादजं भयम् ॥" इति ॥ २२ ॥

कृष्णेत्यादौ ।—गोपित्तं गोरोचना ॥ २२ ॥

दार्व्यादि स्पष्टम् । मरिचमित्यादि ।—मरिचं गोरोचनया आतपे मासैकं भावितमञ्जनं कर्त्तव्यम् । दोषभूतहतस्मृतेरिति ।—दोषेण भूतेन वा हता स्मृतिर्यस्येत्यर्थः ॥ २४ ॥

निम्बपत्रवचाहिङ्गु सर्पनिर्मोकसर्षपैः ।
डाकिन्यादिहरो धूपो भूतोन्मादविनाशनः ॥ २५ ॥
कार्पासास्थिमयूरपिच्छबृहतीनिर्माल्यपिण्डीतकै-
स्त्वग्वांशीवृषदंशविट्तुषवचाकेशाहिनिर्मोककैः ।
गोशृङ्गद्विपदन्तहिङ्गुमरिचैस्तुल्यैस्तु धूपः कृतः
स्कन्दोन्मादपिशाचराक्षससुरावेशज्वरघ्नः स्मृतः ॥ २६ ॥
ब्रह्मराक्षसजित्रस्यं पक्वेन्द्रीफलमूत्रजम् ।
साज्यं भूतहरं नस्यं श्वेताज्येष्ठाम्बुनिर्मितम् ॥ २७ ॥
देवर्षिपितृगन्धर्वैरुन्मत्तस्य च बुद्धिमान् ।
वर्जयेदञ्जनादीनि तीक्ष्णानि क्रूरमेव च ॥ २८ ॥
प्रसादश्चेन्द्रियार्थानां बुद्ध्यात्ममनसां तथा ।
धातूनां प्रकृतिस्थत्वं विगतोन्मादलक्षणम् ॥ २९ ॥

इत्युन्माद-चिकित्सा ।

---

निम्बेत्यादि ।—स्पष्टम् ॥ २५ ॥

कार्पासेत्यादि ।—कार्पासास्थि कार्पासबीजम्; निर्माल्यं शिवनिर्माल्यम्, पिण्डीतकं मदनफलम्, त्वग्वांशीति ।—त्वगुशीर, वांशी वंशलोचना; अन्ये तु—त्वग्वांशी—वंशस्य त्वगित्याहुः; वृषदंशो बिडालः, तस्य विट् पुरीषम्, केशी भूतकेशी, वाच इत्यपरे ॥ २६ ॥

ब्रह्मेत्यादि ।—पक्वेन्द्रीफलं परिणतगोरक्षकर्कटीफलं गोमूत्रेण सह पीत्वा नस्यं विधेयम् । साज्यमित्यादौ ।—श्वेता श्वेतापराजिता, ज्येष्ठाम्बु तण्डुलाम्बु ॥ २७ ॥

देवेत्यादौ ।—क्रूरमिति—ताडनबन्धनादिकम् । एतच्च परिवर्जनं वैद्यातुरोपघातपरिहारार्थम्; उक्तञ्च—"वैद्यातुरौ विनिघ्नन्ति एते क्रुद्धा महौजसः." इति ॥२८।२९॥

इत्युन्माद चिकित्सा विवृतिः ।

## अथापस्मार-चिकित्सा ।

वातिकं बस्तिभिः प्रायः पैत्तं प्रायो विरेचनैः ।
श्लैष्मिकं वमनप्रायैरपस्मारमुपाचरेत् ॥ १ ॥
सर्वतः सुविशुद्धस्य सम्यगाश्वासितस्य च ।
अपस्मारविमोक्षार्थं योगान् संशमनान् शृणु ॥ २ ॥
मनोह्वा तार्क्ष्यजञ्चैव शकृत् पारावतस्य च ।
अञ्जनं हन्त्यपस्मारमुन्मादञ्च विशेषतः ॥ ३ ॥
यष्टिहिङ्गुवचावक्र-शिरीषलशुनामयैः ।
साजामूत्रैरपस्मारे सोन्मादे नावनाञ्जने ॥ ४ ॥
पुष्योद्धृतं शुनः पित्तमपस्मारघ्नमञ्जनम् ।
तदेव सर्पिषा युक्तं धूपनं परमं स्मृतम् ॥ ५ ॥
नकुलोलूकमार्जार-गृध्रकीटाहिकाकजैः ।
तुण्डैः पक्षैः पुरीषैश्च धूपनं कारयेद्भिषक् ॥ ६ ॥
कायस्थान् शारदान् मुद्गान् मुस्तोशीरयवांस्तथा ।
सव्योषान् बस्तमूत्रेण पिष्ट्वा वर्त्तीः प्रकल्पयेत् ॥
अपस्मारे तथोन्मादे सर्पदष्टे गरार्दिते ।
विषपीते जलमृते चैताः स्युरमृतोपमाः ॥ ७ ॥

---

तुल्यचिकित्सितत्वादुन्मादानन्तरमपस्मारचिकित्सितमुच्यते, वातिकमित्यादि ।—वमनप्रायैरिति ।—वमनप्रधानैः ॥ १ ॥

सर्वत ऊर्ध्वमधश्च शुद्धस्य । आश्वासितस्येति ।—संशोधनानन्तरं संसर्जनक्रमेण समाश्वासितस्य ॥ २ ॥

मनोह्वा—मनःशिला ; तार्क्ष्यजं—रसाञ्जनम् ॥ ३ ॥

यष्टीत्यादौ ।—वक्रं तगरम् ; शिरीषं—शिरीषस्य फलम् ; आमयं—कुष्ठम् ॥ ४ ॥

पुष्येत्यादि ।—पुष्यानक्षत्रे यदुद्धृतं कुक्कुरस्य पित्तं पात्तमित्याहुः ; उलूकः पेचकः ; कीटः पश्चिमदेशजो वृश्चिकः । एषां तुण्डादिकं यथासम्भवं ग्राह्यम् ॥ ५ । ६ ॥

अपेतराक्षसीकुष्ठ-पूतनाकेशिचोरकैः ॥
उत्सादनं मूत्रपिष्टैर्मूत्रैरेवावसेचनम् ॥ ८ ॥
जतुकाशकृता तद्वद्दग्धैर्वा वस्तरोमभिः ।
अपस्मारहरो लेपो मूत्रसिद्धार्थशिग्रुभिः ॥ ९ ॥
यः खादेत् क्षीरभक्ताशी माक्षिकेण वचारजः ।
अपस्मारं महाघोरं सुचिरोत्थं जयेद्ध्रुवम् ॥ १० ॥
उद्बन्धितनरग्रीवा-पाशं दग्ध्वा हृता मसी ।
शीताम्बुना समं पीता हन्त्यपस्मारमुद्धतम् ॥ ११ ॥
प्रयोज्यं तैल-लशुनं पयसा वा शतावरी ।
ब्राह्मीरसश्च मधुना सर्वापस्मारभेषजम् ॥ १२ ॥
निर्दह्य निर्द्रवां कृत्वा च्छागिकामरनालिकाम् ।
तामम्लसाधितां खादेदपस्मारमुदस्यति ॥ १३ ॥

---

कायस्थामित्यादि ।—कायस्था गिर्गुची । आरद्दानिति—शुद्धनिर्येषणं क्लेद-भावोऽयमुद्गनिराकार्यम् । वर्षीरित्यजनवर्षीः । विपरीत इति ।—पीतविषे, गव संयोगविषम् । जन्मत इति ।—जलपानेन मृतप्राये, सर्वथा वने हि भेषजं विफल-मिति । जलमृतलक्षणं यथा—"विष्टब्धपाणिमूर्द्धाक्षमाध्मातोदरमेहनम् । विद्याज्जल-मृत जन्तुं शीतपादकराननम् ॥" इति ॥ ७ ॥

अपेतराक्षसीत्यादि ।—अपेतराक्षसी श्वेततुलसी, तस्याः स्वरस इत्यर्थः । पूतना हरीतकी ; केशी भूतकेशी ; चोरश्चोरपुष्पी । चरकोक्तपूर्वयोगे वस्तमूत्रमत्रा-प्यत्रापि वस्तमूत्रमेवेत्याहुः । किंवा प्रधानकल्पतयाऽत्र गोमूत्रमेव मूत्रशब्दवाच्यम् ॥ ८ ॥

जतुकाशकृतेति ।—जतुका चर्मचटका, तस्याः पुरीषेण तद्वदित्युत्सादनम् । दग्धै-रिति ।—वस्तरोमभिरित्यनेन योज्यम् । अपस्मारेत्यादौ ।—मूत्रं गोमूत्रम् ॥ ९ ॥

यः खादेदित्यादौ ।—माक्षिकेण मधुना ॥ १० ॥

उद्बन्धित उद्बन्धनमृतो नरः, तस्य ग्रीवापाशं ग्रीवाबन्धनरज्जुम् ॥ ११ ॥

प्रयोज्यमित्यादि ।—योगद्वयं स्पष्टम् ॥ १२ ॥

हृल्लास्योऽचिरुजा यस्य खेदो हस्तादिशीतता ।
दशमूलीजलं तस्य कल्याणाज्यञ्च योजयेत् ॥ १४ ॥

स्वल्पपञ्चगव्यं घृतम्—

गोशकृद्रसदध्यम्ल-क्षीरमूत्रैः समैर्घृतम् ।
सिद्धं चतुर्थकोन्माद-ग्रहापस्मारनाशनम् ॥ १५ ॥

बृहत्पञ्चगव्यं घृतम्—

द्वे पञ्चमूले त्रिफलां रजन्यौ कुटजत्वचम् ।
सप्तपर्णमपामार्गं नीलिनीं कटुरोहिणीम् ॥
सम्पाकं फल्गुमूलञ्च पौष्करं सदुरालभम् ।
द्विपलानि जलद्रोणे पक्त्वा पादावशेषिते ॥
भार्गीं पाठां त्रिकटुकं त्रिवृतां निचुलानि च ।
श्रेयसीमाढ़कीं मूर्वां दन्तीं भूनिम्बचित्रकौ ॥
द्वे शारिवे रौहिषञ्च भूतिकं मदयन्तिकाम् ।
क्षिपेत् पिष्टाक्षमात्राणि तैः प्रस्थं सर्पिषः पचेत् ॥
गोशकृद्रसदध्यम्ल-क्षीरमूत्रैश्च तत्समैः ।

---

निर्दग्धेत्यादौ ।—अमरलालिका अमराख्यस्तूपमाटी । अम्लसाधितामिति ।—काञ्जिकसाधिताम् ॥ १२ ॥

हृल्लास्य इत्यादि ;—स्पष्टम् ॥ १४ ॥

गोशकृदित्यादौ ।—दध्यम्लं परिपक्वदधि । समसम्बन्धोऽत्र दध्यादिभिरेव सम्बध्यते ॥ १५ ॥

द्वे पञ्चमूले इत्यादि ।—द्वे पञ्चमूले बिल्वशोणकाद्यादिके । रजन्याविति ।—हरिद्राद्वयम् ; वाग्भटेऽपि—"द्विपञ्चमूलत्रिफला-द्विनिशाकुटजत्वचः" इत्युक्तम् । सप्तपर्णं सप्तपर्णस्य त्वक् ; अपामार्गम् अपामार्गस्य मूलं ; नीलिनीं नीलाभाख्यातां, सम्पाकम् आरग्वधं ; फल्गु काकोडुम्बरिकाफलं, डुमुर इति लोके ; पौष्करं मूलमित्यन्वयः । भार्गीं भार्गीमूलं ; त्रिवृता त्रिवृतामूलं ; निचुलानि हिज्जलफलानि ; श्रेयसीं हस्तिपिप्पलीम् ; आढकी तुवरी, तस्या बीजं ; रौहिषं गन्धतृणभेदः, भूतिकं यमानीं, मदयन्तिकां वनमल्लिकाम् । अत्र पादावशिष्टक्वाथचतुर्गुणः । गोशकृदिति ।—गोशकृद्रसादयश्च घृतसमाः, चेमाटगुणः पाकः ॥ १६ ॥

पञ्चगव्यमिति ख्यातं महत् तदमृतोपमम्॥
अपस्मारे ज्वरे कासे श्वयथावुदरेषु च।
गुल्मार्शःपाण्डुरोगेषु कामलायां हलीमके।
अलक्ष्मीग्रहरक्षोघ्नं चतुर्थकविनाशनम्॥ १६॥

महाचैतसं घृतम्—

शणस्त्रिवृत् तथैरण्डो दशमूली शतावरी।
रास्ना मागधिका शिग्रुः क्वाथ्यं द्विपलिकं भवेत्॥
विदारी मधुकं मेदे द्वे काकोल्यौ सिता तथा।
एभिः खर्जूरमृद्वीका-भीरुमुञ्जातगोक्षुरैः।
चैतसस्य घृतस्याङ्गैः पक्तव्यं घृतमुत्तमम्।
महाचैतससंज्ञन्तु सर्वापस्मारनाशनम्॥
गरोन्मादप्रतिश्याय-तृतीयकचतुर्थकान्।
पापालक्ष्मीं जयेदेतत् सर्वग्रहविनाशनम्॥
श्वासकासहरञ्चैव शुक्रार्त्तवविशोधनम्।
घृतमानं क्वाथविधिरिह चैतसवन्मतः॥
कल्कश्चैतसकल्कोक्त-द्रव्यैः सार्द्धश्च पादिकः।
नित्यं मुञ्जातकाभावे तालमस्तकमिष्यते॥ १७॥

---

महाचैतसे शणस्य मूलं बीजं वा, व्यवहारस्तु बीजेनेति। मागधिका पिप्पली। क्वाथ्यं द्विपलिकं भवेदित्यनेन—क्वाथ्य.; क्वाथोऽपि पूर्ववत् चैतसक्वाथवत् द्रोणाम्भसा कार्यः। विदारीप्रभृति कल्कः। मेदे—मेदे द्वे; खर्जूरं खर्जूरस्य फलम्, भीरु शतावरी; मुञ्जातम् कोलकपर्यायः कन्दः, तदभावे तालमस्तकम्। चैतसस्य घृतस्याङ्गैरिति।—पूर्वोक्तचैतसघृतकल्कैः शालपर्ण्यादिभिः। चैतसस्येत्यादि पानीयकल्याणकस्याङ्गैरिति वक्तव्येऽतिदेशातिदेशकरणम्। यतोऽत्र कल्कद्रव्येण सह पादिकार्थम्, अन्यथा पानीयकल्याणके तदावयमनिर्देशिल्युक्तत्वादत्रापि चतुर्थान प्रसज्येत, यतो विशालात्रिफलेत्यादिना कल्केन सह विदारीमधुकादेः कल्कस्य

कुष्माण्डकघृतम्—

कुष्माण्डकरसे सर्पिरष्टादशगुणे पचेत् ।
यष्ट्याह्वकल्कं तत्पानमपस्मारविनाशनम् ॥ १८ ॥

ब्राह्मीघृतम्—ब्राह्मीरसे वचाकुष्ठ-शङ्खपुष्पीभिरेव च ।
पुराणं मेध्यमुन्माद-ग्रहापस्मारनुद् घृतम् ॥ १९ ॥

पलङ्कषाद्यं तैलम्—

पलङ्कषावचापथ्या-वृश्चिकाल्यर्कसर्षपैः ।
जटिलापूतनाकेशी-नाकुलीहिङ्गुचोरकैः ॥
लशुनातिरसाचित्रा-कुष्ठैर्विड्भिश्च पक्षिणाम् ।
मांसाशिनां यथालाभं वस्तमूत्रे चतुर्गुणे ॥
सिद्धमभ्यञ्जने तैलमपस्मारविनाशनम् ॥ २० ॥
अभ्यङ्गः सार्षपं तैलं वस्तमूत्रे चतुर्गुणे ।
सिद्धं स्याद्गोशकृन्मूत्रैः स्नानोत्सादनमेव च ॥ २१ ॥

इत्यपस्मार-चिकित्सा ।

---

मिश्रिता घृतात् पादिकत्वं ज्ञेयम् । अत एव वक्ष्यति—"कल्कश्चैतस्य कल्कोऽत्रद्रव्यैः सार्द्धश्च पादिकः" इति ॥ १७ ॥

कुष्माण्डकघृते—स्पष्टम् ॥ १८ ॥

ब्राह्मीघृते—चतुर्गुणे ब्राह्मीरसे घृतपाकः ॥ १९ ॥

पलङ्कषेत्यादि ।—पलङ्कषा गुग्गुलुः; जटिला मांसी । पूतनाकेशी भूतकेशी इति केचित्; अन्ये तु—पूतना हरीतकीभेदः, केशी भूतकेशीत्याहुः; तन्मूलं गौरलोमी पठ्यते, न तु पूतना । नाकुली महापैशाचिका व्यवहृता । अतिरसा कलयष्टिमधु, अन्ये तु—ज्योतिष्मतीत्याहुः, तन्मूलं मधुकमिति । चित्रा दन्ती । मांसाशिनां पक्षिणामिति ।—गृध्रादीनाम् ॥ २० ॥

अभ्यङ्ग इत्यादि ।—अभ्यञ्जनमिदं तैलम् । गोमलता उत्सादनमुद्वर्तनं, गोमूत्रेण स्नानमिति यथायोग्यतया बोध्यम् ॥ २१ ॥

इत्यपस्मार-चिकित्सा-विवृतिः ।

# अथ वातव्याधि-चिकित्सा ।

स्वाद्वम्ललवणैः स्निग्धैराहारैर्वातरोगिणः ।
अभ्यङ्गस्नेहवस्त्याद्यैः सर्वानेवोपपादयेत् ॥ १ ॥
विशेषतस्तु कोष्ठस्थे वाते क्षारं पिबेन्नरः ॥ २ ॥
आमाशयस्थे शुद्धस्य यथादोषहरी क्रिया ॥ ३ ॥
आमाशयगते वाते छर्दिताय यथाक्रमम् ।
देयः षड्धरणो योगः सप्तरात्रं सुखाम्बुना ॥
चित्रकेन्द्रयवाः पाठा कटुकातिविषाभयाः ।
महाव्याधिप्रशमनो योगः षड्धरणः स्मृतः ॥
पलद्वयमांशो धरणं योगोऽयं सौश्रुतस्तत्तस्य ।
माषेण पञ्चगुञ्जकमानेन प्रत्यहं देयः ॥ ४ ॥

---

वातविशेषव्याधिप्रकारादेरपकारवदेवकर्तृत्वात् तथा प्रायस्तुल्यचिकित्सितत्वाच्च अपस्मारानन्तरं वातव्याधिरुच्यते ।—यद्यपि वातव्याधिरित्युक्तेरविशेषे यः यावति प्रसङ्गः, तथापि व्याधिपदसामान्याधिकरण्यविहितो दुःखकारी वातो वातव्याधिरित्ययं ज्ञेयः । ननु वातव्याधिवत् पित्तकफविकारा अपि शोथशोषज्वरादयः, किमिति पृथक्त्वेन नोच्यन्ते ? नैवम्, वायोरतिबलत्वेन गरीयस्त्वात्, सविकाराणामेव तु दुःसाध्यत्वात् आशुकारित्वात् विशिष्टचिकित्सितत्वाच्च, पृथक्त्वेनाभिधानं युक्तम् । कफपित्तविकाराणान्तु यथाविहितत्वात् विरेचनवमनादिकफपित्तसामान्यचिकित्सोक्त्या चिकित्सोक्तेति ज्ञेया । साधारणचिकित्सामाह, स्वाद्वम्लेत्यादि ॥ १ ॥

विशेषत इत्यादी ।—क्षारं यवक्षारं, किंवा षड्धरणाद्युक्तिनिर्दिष्टं दीपनक्षारम् । आमाशयस्थ इत्यादि ।—शुद्धस्य वमनविरेचनादिना शुद्धस्य ॥ २ । ३ ॥

आमाशयगत इत्यादि ।—सुश्रुतस्य ।—छर्दिताय यथाक्रममिति ।—स्नेहस्वेदपेयादिक्रमानतिक्रमेण, वातस्यापि कफस्थानगतत्वेन । यदुक्तं—"स्थानात् स्थानगतं दोषं स्थानवत् समुपाचरेत्" इति ॥ षड्धरणयोगे महाव्याधिप्रशमन इति मेदः-कफावृतव्याधिः महाव्याधिः । षड्धरण इति ।—एषां चित्रकादीनां प्रत्येकं धरणं पलद्वयमाषकं मानं यत्र स तथा ; एतदेवाह पलद्वयमांशो धरणमिति ।—नेन पञ्च-

पक्वाशयगते वाते हितं स्नेहविरेचनम् ।
वस्तयः शोधनीया याः प्राशाश्च लवणोत्तराः ॥ ५ ॥
स्नेहलवणम्—सुहीलवणवार्त्ताकु-स्नेहांश्चैव घटे दहेत् ।
गोमयैः स्नेहलवणं तत् परं वातनाशनम् ॥ ६ ॥
कार्यो वस्तिगते चापि विधिर्वस्तिविशोधनः ॥ ७ ॥
त्वङ्मांसासृक्सिराप्राप्ते कुर्य्याच्चासृग्विमोक्षणम् ॥ ८ ॥

---

इत्यस्यान्तरे चरकसुश्रुतसमर्थितेन विधिना, तदिह चरकस्य पलस्य दशमांशो धरणम्, इत्यत आह, योगोऽयमिति।—अयं विषकन्दादियोगः सौश्रुत इति ज्ञात्वा तत्र सुश्रुतस्य षड्गुञ्जकमानेन माषेण यत् पलं भवति, तस्यैव पलस्य दशमो भागः प्रत्येकं विषकन्दादीनां मध्ये प्रत्येकं धरणमिति यावदेव इत्यर्थः। एवञ्च पञ्चगुञ्जक-माषानुसारात् पलदशमांशेन रक्तिकाधिकपञ्चमाषका भवति, षड्भिर्यवैश्च निमित्ता षड्रक्तिकमाषानुसारेण द्वारक्तिकचतुर्माषाधिकषट्कर्षकत्वं स्यात्, एतदेव अष्टरक्तिमाषेण दशरक्तिकमाषेण सप्तरक्तिकमाषचतुर्थाधिककर्षमानं भवति; तादृङ् मानञ्च प्रयत्नेन सततार्थं यावत् देयम्। अत्यन्तं हि कर्षपूर्णस्य देयो भवति। अत्र सप्तरक्तिकमाषचतुर्थाधिककर्षग्रहणार्थं विशेषवचनमेवेति ॥ ॥

वस्तयः शोधनीया या इति।—शोधनवस्तयः; यथा—"शोधनद्रव्यनिःक्वाथास्तत्-कल्कस्नेहसैन्धवैः। युक्ताः खजेन मथिता वस्तयः शोधना मताः॥" इति। प्राशाश्च लवणोत्तरा इति।—लवणप्रधाना आहाराः, किंवा लवणोत्तराः प्राशाः स्नेहलवण-कल्याणलवणादयः ॥ ५ ॥

तदेव स्नेहलवणमाह, सुहीत्यादि।—अत्र लवणानि पञ्च, स्नेहाश्चत्वारः, इत्र इति।—वार्त्ताकुर्विंहिते शिग्रुके। गोमयैरिति।—सुहीपञ्चलवणवार्त्ताकुस्नेहानि तदनु पुरःतैलघृतवसामज्जभिः स्निग्धीकृत्य घटे कृत्वा मुखमालिप्य करीषदग्धेन दग्ध्वा, अत ऊर्ध्वं निःसृत्य उपयोज्यानि ॥ ६ ॥

विधिर्वस्तिविशोधन इति।—मूत्राघाताश्मरीचिकित्साविधिः। त्वगित्यादि।—अत्र त्वङ्मांसादिगतवाते रक्तमोक्षणपदमेकमेव चिकित्सितम् आवरकरक्तापगमतया बोध्यम्। अन्ये "स्नेहाभ्यङ्गोपनाहाश्च मर्दनालेपनानि च" इति सुश्रुतवाक्यस्य त्वङ्मांसा-नुकर्षणात् इत्यनेन सह सम्बन्धं विदधति। तत्र त्वङ्मांसगतवाते स्नेहा-भ्यङ्गादिः, रक्तगतवाते तु योगतया रक्तमोक्षणमेवाह ॥ ७। ८ ॥

स्नेहोपनाहाग्निकर्म-बन्धनोन्मर्दनानि च।
स्नायुसन्ध्यस्थिसम्प्राप्ते कुर्य्याद्वाते विचक्षणः ॥ ९ ॥
स्वेदाभ्यङ्गावगाहांश्च हृद्यञ्चान्नं त्वगाश्रिते ॥ १० ॥
शीताः प्रदेहा रक्तस्थे विरेको रक्तमोक्षणम् ॥ ११ ॥
विरेको मांसमेदःस्थे निरूहाः शमनानि च ॥ १२ ॥
बाह्याभ्यन्तरतः स्नेहैरस्थिमज्जगतं जयेत् ॥ १३ ॥
हर्षोऽन्नपानं शुक्रस्थे बलशुक्रकरं हितम्।
विबद्धमार्गं शुक्रन्तु दृष्ट्वा दद्याद्विरेचनम् ॥ १४ ॥
गर्भे शुष्के तु वातेन बालानाञ्चापि शुष्यताम्।
सितामधुककाश्मर्य्यैर्हितमुत्थापने पयः ॥ १५ ॥
शिरोगतेऽनिले वात-शिरोरोगहरी क्रिया ॥ १६ ॥
व्यादितास्ये हनुं स्विन्नामङ्गुष्ठाभ्यां प्रपीड्य च।
प्रदेशिनीभ्यांचोन्नम्य चिबुकोन्नामनं हितम् ॥ १७ ॥

---

स्नेहोपनाहेत्यादिना—स्नायु-सन्ध्यस्थिगतवातचिकित्सामाह ॥ ९ ॥

स्वेदाभ्यङ्गेत्यादिना—त्वग्गतानिलचिकित्सामाह। हृद्यमित्यत्र स्पष्टमिति जेज्जड पठति, किन्तु त्वक्शब्देन त्वक्स्थत्वाद्रस उच्यते, त्वगाश्रितत्वं रसस्य सम्भवत्वाद्भवति। अत एव धातुगतकुष्ठाभिधाने त्वग्गतत्वेनैव रसगतत्वमुक्तमिति कृत्वा रसगतकुष्ठलक्षणं सुश्रुतेनोक्तम्। यतो रसस्य विशेषेण हृदयाश्रितत्वात् हृद्यमेव पाठो युक्त स्यात्। शीताः प्रदेहा इति।—शीतप्रदेहादिरक्तचिकित्साकथनार्थमिह लिखितं, तेन त्वङ्मांसास्थिमित्यादिसुश्रुतवचनेन पूर्वोक्तेनास्य पौनरुक्त्यमाशङ्कनीयम् ॥ १० ॥ ११ ॥

मेदःस्थानिलचिकित्सामाह, विरेक इत्यादि। मज्जगतानिलचिकित्सामाह, बाह्येत्यादि ॥ १२ ॥ १३ ॥

शुक्रस्थानिलचिकित्सामाह, हर्ष इत्यादि।—हर्ष इति मनसः ॥ १४ ॥

गर्भ इत्यादौ।—मधुक-काश्मर्य्यफलाभ्यां दुग्धं साध्य, सिता तु प्रक्षेपणीया; केचित्तु सितादिभिर्दुग्धं साध्यमित्याहुः। उत्थापने—पुष्टिजनने ॥ १५ ॥ १६ ॥

व्यादितास्य इत्यादि।—व्यादितास्ये विवृतास्ये, प्रदेशिनी अङ्गुष्ठानन्तराङ्गुली।

अर्दिते नवनीतेन खादेन्माषेण्डरीं नरः ।
क्षीरमांसरसैर्भुक्त्वा दशमूलीरसं पिबेत् ॥
स्नेहाभ्यङ्गशिरोवस्ति-पाननस्यपरायणः ।
अर्दितं स जयेत् सर्पिः पिबेदौत्तरभक्तिकम् ॥ १८ ॥
पञ्चमूलीकृतः क्वाथो दशमूलीकृतोऽथवा ।
रूक्षः स्वेदस्तथा नस्यं मन्यास्तम्भे प्रशस्यते ॥ १९ ॥
वाताद्धमनीदुष्टौ स्नेहगण्डूषधारणम् ॥ २० ॥

कल्याणकलेहः—

सहरिद्रा वचा कुष्टं पिप्पली विश्वभेषजम् ।
अजाजी चाजमोदा च यष्टीमधुकसैन्धवम् ॥
एतानि समभागानि श्लक्ष्णचूर्णानि कारयेत् ।
तच्चूर्णं सर्पिषालोड्य प्रत्यहं भक्षयेन्नरः ॥
एकविंशतिरात्रेण भवेच्छ्रुतिधरो नरः ।
मेघदुन्दुभिनिर्घोषो मत्तकोकिलनिस्वनः ॥
जड़गद्गदमूकत्वं लेहः कल्याणको जयेत् ॥ २१ ॥
पक्षाक्षिक-स्कन्धगतं वायुं मन्यागतं तथा ।
वमनं हन्ति नस्यञ्च कुशलेन प्रयोजितः ॥ २२ ॥

---

शुद्धस्निग्ध चिकित्सितमिति शेषः । माषेण्डरीं माषपिष्टकविकृतिः । माषेण्डरीभक्षणानन्तरं क्षीरमांसरसैरन्नं भुक्त्वा ततो दशमूलीजलं पिबेदित्यर्थः । औत्तरभक्तिकमिति—भोजनानन्तरपानीयम् ॥ १७ ॥ १८ ॥

पञ्चमूलीत्यादि स्पष्टम् । वातादित्यादौ ।—वाग्धमनी—वाग्वाहिनी धमनी ॥१९।२०॥

सहरिद्रेत्यादौ ।—अजाजी कृष्णजीरकम्; अजमोदा यमानी; यष्टीमधुकग्रहणेन मधुयष्टी । श्रीकण्ठदत्तो व्याचष्टे, तन्तु न व्यवहारसिद्धं, नापि टीकान्तरे दृष्टमिति ॥ २१ ॥

पक्ष इत्यादि ।—सुश्रुतस्य ।—पिचलिङ्ग पक्षकस्यासरसन्धिः, स हि ग्रैवस्थान, तद्गत [illegible] वायुं वमनं नस्यञ्च यौगिकम्; नस्यमिह शिरोविरेचनमिति । कुशलेन प्रयोजितमिति विशेषणात्—प्रतिमर्शं विना चतुर्विधमप्यत्र नस्यमित्युक्तं ॥ २२ ॥

हरीतकी वचा रास्ना सैन्धवञ्चाम्लवेतसम्।
घृतमात्रासमायुक्तमपतानकनाशनम्॥ २८॥

स्वल्परसोनपिण्डः—

पलमर्द्धपलं वा हि रसोनस्य सुकुट्टितम्।
हिङ्गुजीरकसिन्धूत्थैः सौवर्चलकटुत्रयैः॥
चूर्णितैर्माषकोन्मानैरवचूर्ण्य विलोडितम्।
यथाग्नि भक्षितं प्रातः रुवूकक्वाथानुपानतः॥
दिने दिने प्रयोक्तव्यं मासमेकं निरन्तरम्।
वातरोगं निहन्त्याशु अर्दितं सापतन्त्रकम्॥
एकाङ्गरोगिणे चैव तथा सर्वाङ्गरोगिणे।
ऊरुस्तम्भे च गृध्रस्यां क्रिमिकोष्ठे विशेषतः।
कटीपृष्ठामयं हन्यादुदरञ्च विशेषतः॥ ३०॥
हन्ति प्राग्भोजनात् पीतं दध्यम्लं सवचोषणम्।
अपतानकमन्योऽपि वातव्याधिक्रमो हितः॥ ३१॥
वातघ्नैर्दशमूल्या च नवं कुब्जमुपाचरेत्।

---

वाप्योष इत्यादौ।—महत् कल्याणकम् उन्मादाधिकारोक्तम्। हरीतक्यादौ।—यवमतो ग्राह्यर्वी, तत्र सिद्धं घृतः इत्यर्थः॥ २७॥ २८॥

हरीतकीत्यादि।—क्वथित चूर्णेन वाऽयं योगः। क्वाथपक्षे—सैन्धवचूर्णं प्रक्षिपेत्, चूर्णपक्षे—घृतकर्षद्वयेन चूर्णस्याष्टौ माषकाः पेया इत्यर्थः॥ २८॥

पलमर्द्धपलमित्यादि।—पलमर्द्धपलं वेति मात्राद्वयम्, एवं वाशब्दो पूर्वश्लोकापेक्षया, दृढार्थं वाशब्दो वा।—पलमर्द्धपलमर्द्धमेवापि पाठः। त्वगादिरहितपिष्टरसोनस्य क्रिमिश्लातपेन शुष्कस्य मात्रापलमेकं; माषकाष्टकं माषकद्वयं वा प्रतिदिनं सेवनीयम्। अन्यथैव मात्रया मासमेकं सेवनीयमुक्तं न स्यात्,—अतः पुनरपि रसोनपिण्डः करणीयः। न च मात्रं यावता मात्रया मात्रोपयोगो भवति, तावत्येव मात्रा क्रिमि। दर्शितेति, यतस्तथा मति चोर्ध्वादिभिः स्यादित्याहुः॥ ३०॥

हन्तीत्यादौ।—सवचोषणं ति।—वचानिचयमरिचसहितमित्यर्थः॥ ३१॥

स्वेदैर्मांसरसैर्वापि प्रहृष्टं तं विवर्जयेत् ॥ ३२ ॥
पिप्पल्यादिरजस्तूर्णी-प्रतितूर्णोः सुखाम्बुना ।
पिवेद्वा स्नेहलवणं सघृतं चारहिङ्गु वा ॥ ३३ ॥
आध्माने लङ्घनं पाणितापश्च फलवर्त्तयः ।
दीपनं पाचनञ्चैव वस्तियाप्यत्र शोधनः ॥ ३४ ॥
प्रत्याध्माने तु वमनं लङ्घनं दीपनं तथा ॥ ३५ ॥
प्रत्यष्ठीलाष्ठीलिकयोरन्तर्विद्रधिगुल्मवत् ॥ ३६ ॥
दशमूलीबलारास्ना-गुडूचीविश्वभेषजम् ।
पिबेदेरण्डतैलेन गृध्रसीखञ्जपङ्गुषु ॥ ३७ ॥
शेफालिकादलैः क्वाथो मृद्वग्निपरिसाधितः ।
दुर्वारं गृध्रसीरोगं पीतमात्रं समुद्धरेत् ॥ ३८ ॥
पञ्चमूलीकषायस्तु रुबुतैलं त्रिवृद्घृतम् ।
त्रिवृत्तैर्वाथवा युक्तं गृध्रसीगुल्मशूलनुत् ॥ ३९ ॥
तैलं घृतं चार्द्रकमातुलुङ्गयो रसं सचुक्रं सगुडं पिबेद्वा ।

---

वातघ्नैरिति ।—भद्रदार्व्वादिगणैः, दशमूली च विश्वातैव बचत्वात्, एतैः क्वाथ-स्नेहोपनाहादिकं कुर्य्यात् । नवत्वन्तु कुम्भस्य यावत न बजाइशिरिति ॥ ३२ ॥

पिप्पल्यादिगणः चौम्सुतः । रजश्चूर्णम् । स्नेहलवणम् सुहीलवणवार्त्ताकु-स्नेहानित्यादिना पूर्व्वमुक्तम्, इदमपि सुखाम्बुनैव पिबेदिति । सघृत चारहिङ्गु वेति ।—घृतेनैव यवक्षारहिङ्गुनोश्च पानम् । घृतस्य कर्षैकं, यवक्षारस्य चतुर्माषकं, हिङ्गु, वड्रक्तिकमिति । दीपन पाचनञ्चेति ।—लङ्घनानन्तर दोषशेषपाचनार्थं दीपनं पाचनञ्च भेषजं देयम् ॥ ३३ ॥ ३४ ॥

प्रत्याध्माने तु वमनमिति ।—प्रत्याध्मानस्यामाशयसमुत्थत्वात् ॥ ३५ ॥ ३६ ॥

दशमूलीत्यादि ।—दशमूल्यादीनां क्वाथे एरण्डतैलं प्रक्षेप्यम् ॥ ३७ ॥

शेफालिकेत्यादि ।—सुगमम् ॥ ३८ ॥

पञ्चमूलीत्यादि ।—पञ्चमूली महती ॥ ३९ ॥

तैलं घृत इत्यादौ ।—आर्द्रकरस-मातुलुङ्गफलरस-चुक्र गुडादीनां तुल्यो भागः,

कट्यूरुपृष्ठत्रिकगुल्मशूल-गृध्रस्युदावर्त्तहरः प्रदिष्टः ॥ ४० ॥
तैलमेरण्डजं वापि गोमूत्रेण पिबेन्नरः।
मासमेकं प्रयोगोऽयं गृध्रस्यूरुग्रहापहः ॥ ४१ ॥
गोमूत्रैरण्डतैलाभ्यां कृष्णा पीता सुचूर्णिता।
दीर्घकालोत्थितां हन्ति गृध्रसीं कफवातजाम् ॥ ४२ ॥
अश्नाति यो नरः सिद्धामेरण्डतैलसाधिताम्।
वार्त्ताकुं गृध्रसीक्षीणः पूर्णामाप्नोत्यसौ गतिम् ॥ ४३ ॥
पिष्टैरण्डफलं क्षीरे सबिल्वं वा फलं तयोः।
पायसो भक्षितः सिद्धो गृध्रसीकटिशूलनुत् ॥ ४४ ॥
रास्नायास्तु पलञ्चैकं कर्षान् पञ्च च गुग्गुलोः।
सर्पिषा गुड़िकां कृत्वा खादेद्वा गृध्रसीहराम् ॥ ४५ ॥
गृध्रस्यार्त्तं नरं सम्यक् पाचनाद्यैर्विशोधितम्।

---

तैलं घृतं वा दत्त्वा पिबेदिति। पिबेदिति।—वाशब्दः पूर्वयोगापेक्षया; किंवा तैलमेव मधुकगुडमित्येको योगः, तथा घृतमपि मधुकगुडमिति द्वितीयः, तथा मिलितमार्द्रकरसः मातुलुङ्गरसोऽपि मधुकगुड इति तृतीयो योगः। मातुलुङ्गी मधुकर्कटी ॥ ४० ॥

तैलमेरण्डजमित्यादि।—योगोऽयं विरेचककालेनाप्यमात्रया प्रत्यहं मासं यावदुपयोज्यः। भूरिमात्रोपयोगे तु बलहानिः स्यात्, तेन गोमूत्रस्य पलं किञ्चिन्न्यूनं वा, तथा एरण्डतैलमपि माषकाष्टकं किञ्चिन्न्यूनं वा कोष्ठापेक्षया प्रत्यहं मासं यावदुपयोज्यम् ॥ ४१ ॥

गोमूत्रैरण्डतैलाभ्यामित्यादि।—गोमूत्रैरण्डतैलयोर्मिलित्वा कर्षद्वयं, पिप्पलीचूर्णस्य माषकचतुष्टयमिति व्यवहरन्ति वृद्धाः ॥ ४२ ॥

अश्नातीत्यादौ।—एरण्डतैलसाधितां सन्तलितामित्यर्थः ॥ ४३ ॥

पिष्टेत्यादि।—त्वग्रहितमेरण्डबीजं कर्षं किञ्चिन्न्यूनान् दत्त्वा क्षीरेण विरेचनार्थं पायसः साध्यः। सबिल्वं वेति।—पूर्वयोगापेक्षया वाशब्दः, अत्रापि किञ्चित् तण्डुलादीन् दत्त्वा शुण्ठ्येरण्डफलाभ्यां पिष्टाभ्यां कर्षार्द्धे वा कषायक्षीरेत्यादिपरिभाषया पायसः साध्यः ॥ ४४ ॥

ज्ञात्वा नरं प्रदीप्ताग्निं वस्तिभिः समुपाचरेत् ॥ ४६ ॥
नादौ वस्तिविधिं कुर्य्याद् यावदूर्ध्वं न शुध्यति ।
स्नेहो निरर्थकस्तस्य भस्मन्येवाहुतिर्यथा ॥ ४७ ॥
गृध्रस्यार्त्तस्य जङ्घायाः स्नेहस्वेदे कृते भृशम् ।
पश्चान्निर्मर्दितायाश्च सूक्ष्ममार्गेण गृध्रसीम् ॥
अवताय्याङ्गुलौ सम्यक् कनिष्ठायां शनैःशनैः ।
ज्ञात्वा समुन्नतं ग्रन्थिं कण्डरायां व्यवस्थितम् ॥
तं शस्त्रेण विदार्य्याशु प्रवालाङ्कुरसन्निभम् ।
समुद्धृत्याग्निना दग्ध्वा लिम्पेद् यष्ट्याह्वचन्दनैः ॥
विध्येत् शिरामिन्द्रवस्तेरधस्ताच्चतुरङ्गुले ।
यदि नोपशमं गच्छेद्दहेत् पादकनिष्ठिकाम् ॥ ४८ ॥
तगरस्य शिफां सार्द्रां पिष्ट्वा तक्रेण यः पिबेत् ।
वङ्क्षणानिलरोगार्त्तः स क्षणादेव मुच्यते ॥ ४९ ॥
दशमूलीकषायेण पिबेद् वा नागराम्भसा ।
कटीमूलेषु सर्वेषु तैलमैरण्डसम्भवम् ॥ ५० ॥
विश्वाच्यां खञ्जपङ्गौ च दाहे हर्षे च पादयोः ।
क्रोष्टुशीर्षविकारे च विकारे वातकण्टके ।

---

ज्ञात्वा इत्यादि ।—ज्ञात्वानु मानवकाद्यर्थं, सशक्तमनुपानम् ॥ ४५ । ४६ ॥

नादौ वस्तिविधिं कुर्य्यादित्यादौ ।—यावदूर्ध्वं न शुध्यतीति ।—ऊर्ध्वमित्यत्र प्रक्षा-द्यादिति शेषः, तेन यावद्विरेकवमनाभ्याम् आमाशयो न शुध्यतीत्यर्थः ॥ ४७ ॥

गृध्रसीत्यादि ।—जङ्घायाः सकाशात् पश्चात् कनिष्ठायामङ्गुलौ अवताय्येति योजना । कण्डरा कनिष्ठाङ्गुलिसंलग्ना स्थूलशिरा । इन्द्रवस्तिरिह गुल्फजङ्घो-र्मध्यदेशः ॥ ४८ ॥

तगरस्येत्यादि ।—तगरः पिण्डतगरः ॥ ४९ ॥

दशमूलीत्यादि ।—दशमूलीक्वाथे नागरक्वाथे एरण्डतैलं प्रक्षिप्य पिबेत् । नाग-राम्भ इति ।—शुण्ठ्यम्भसामतायां बोध्यम् ॥ ५० ॥

शिरां यथोक्तां निर्विध्य चिकित्सा वातरोगनुत् ॥ ५१ ॥
शिराव्यधः पाददाहे वातकण्टकवत् क्रिया ॥ ५२ ॥
शतधौतघृतोन्मिश्रैर्नागकेशरकण्टकैः ।
पिष्टैः प्रलेपः सेकश्च दशमूलाम्बुनेष्यते ॥ ५३ ॥
आलिप्य नवनीतेन स्वेदो हस्तादिदाहहा ।
अग्नितप्तेष्टकाखण्डं काञ्जिकैः परिषिच्य तु ।
तद्वाष्पस्वेदनं कार्यं पादहर्षविनाशनम् ॥ ५४ ॥
दशमूलस्य निर्यूहो हिङ्गुपुष्करसंयुतः ।
शमयेत् परिपीतस्तु वातं त्रिकत्रिकसंश्रितम् ॥ ५५ ॥
गुग्गुलुं क्रोष्टुशीर्षे च गुडूचीत्रिफलाम्भसा ।
क्षीरेणैरण्डतैलं वा पिबेद्वा वृद्धदारकम् ॥ ५६ ॥
रक्तावसेचनं कुर्यादभीक्ष्णं वातकण्टके ।
पिबेदेरण्डतैलं वा दहेत् सूचीभिरेव वा ॥ ५७ ॥
शुण्ठसैन्धवयोः कल्कयुक्ततैलसमन्वितः ।
सुखोष्णो मर्दने योज्यः खल्लीशूलनिवारणः ॥
खल्लयां स्निग्धाम्ललवणैः स्वेदमर्दोपनाहनम् ॥ ५८ ॥

आदित्यपाकगुग्गुलुवटकः—

पृथक् पलांशा त्रिफला पिप्पली चेति चूर्णितम् ।

---

शिरां यथोक्तामिति ।—शिराव्यधविध्यनतिक्रमेण वातकोपभयादश्मनश्च रक्तं स्राव्यम् । क्षुद्रपद्मादौ देशे मोक्षणेन खल्लादिष्वपि रक्ताहतवातवेदनाया जङ्घादि-सन्धिगतैव शिरा व्याध्या भवतीति भानुमती ॥ ५१—५५ ॥

गुग्गुलुमित्यादि ।—एरण्डक्वाथेन त्रिफलाक्वाथेन वा शोधयित्वा गुग्गुलुर्देयः । अत्र एरण्डतैलेन पिष्टा गुग्गुलुः प्रलेप्यः । क्षीरेणेत्यादि ।—चतुर्गुणेन दुग्धेन एरण्ड-तैलं पेयम्,—"बहुदोषे विरेकार्थं जीर्णे क्षीरान्नभोजनम्" इत्यादि वाग्भटदर्शनात् । पिबेद्वा वृद्धदारकमिति ।—अत्रापि क्षीरेणेति योज्यम् ॥ ५६ । ५७ ॥

खल्लामित्यादौ—मर्दनमिति—काञ्जिकम् ॥ ५८ ॥

दशमूलाम्बुना भाव्यं त्वगेलार्धपलान्वितम् ॥
दत्त्वा पलानि पञ्चैव गुग्गुलोर्वटकीकृतः।
एष मांसरसाभ्यासाद्वातरोगान् विशेषतः।
हन्ति सन्ध्यस्थिमज्जस्थान् वृक्षमिन्द्राशनिर्यथा ॥
भाव्यद्रव्यसमं क्वाथ्यं क्वाथोऽष्टांशस्तु तेन च।
आर्द्रं यावद्दिनं भाव्यं सप्ताहं भावनाविधिः ॥ ५८ ॥

त्रयोदशाङ्गगुग्गुलुः—

आभाश्वगन्धा हपुषा गुडूची
शतावरी गोक्षुरवृद्धदारम्।
रास्ना शताह्वा सशटी यमानी
सनागरा चेति समैश्च चूर्णम् ॥
तुल्यं भवेत् कौशिकमत्र मध्ये
देयं तथा सर्पिरतोऽर्धभागम्।
अर्धाक्षमात्रमथ तत्प्रयोगात्
कृत्वानुपानं सुरयाऽथ यूषैः ॥
मद्येन वा कोष्णजलेन वाऽथ
क्षीरेण वा मांसरसेन वाऽपि ॥

---

दशमित्यादौ।—त्वगेलयोर्मिलितयोरर्धपलं बोध्यम्; अत्र त्रिफलादि गुग्गुल्वन्तं सर्वमेकीकृत्य बोध्यम्। भाव्यमित्यादि।—क्वाथविशेषः। तेनेति।—अष्टांशशेषक्वाथेनार्द्रं कृत्वा दिनैकं यावद्भाव्यं, भावनाविधिमाश्रित्य सप्ताहमिति। इयञ्च परिभाषा वाग्भटमतानुसारिणी, तेनास्या अमूलकत्वं नाशङ्कनीयम्। हन्त्यश्च—"लेहवद्द्विगुणि-नाग्रमालोक्य पाचयेद्भिषक्। दशमूलाम्बुना शोध्यः सप्तवारञ्च गुग्गुलुः ॥" इत्युक्तवान्, तत् पुनरनार्षमिति नियन्त्रः ॥ ५८ ॥

त्रयोदशाङ्गगुग्गुलौ—आभमिति।—स्वनामख्यातं भेषजद्रव्यम्। हपुषा स्वनामख्याता। समैरिति।—समैर्भागैरेकत्र मिलितम्। तुल्यं भवेत् कौशिकमिति।—समुदितसर्वचूर्णसमो गुग्गुलुरित्यर्थः। अतोऽर्धभागमिति—कौशिकार्धभागम्। भिषजश्च

कटीग्रहे गृध्रसि-बाहुपृष्ठे
हनुग्रहे जानुनि पादयुग्मे ।
सन्धिस्थिते चास्थिगते च वाते
मज्जाश्रिते स्नायुगते च कोष्ठे ॥
रोगान् जयेद्वातकफानुविद्धान्
वातेरितान् हृद्ग्रहयोनिदोषान् ।
भग्नास्थिविद्धेषु च खञ्जवाते
त्रयोदशाङ्गं प्रवदन्ति तज्ज्ञाः ॥ ६० ॥

जित्वावरकमग्रे तु वाते वातहरं हितम् ॥ ६१ ॥
श्लेष्मावृते तद्गुलेखो दीपनं पाचनं लघु ॥ ६२ ॥
सुप्तिवाते त्वसृङ्मोक्षं कारयेद्बहुशो बुधः ।
दिह्याच्च लवणागार-धूमैस्तैलविमर्दितैः ॥ ६३ ॥
सर्पिस्तैलवसामज्ज-पानाभ्यञ्जनवस्तयः ।
स्वेदाः स्निग्धा निवातञ्च स्थानं प्रावरणानि च ॥
रसाः पयांसि भोज्यानि स्वाद्वम्ललवणानि च ।
बृंहणं यत्तु तत् सर्वं कर्त्तव्यं वातरोगिणाम् ॥ ६४ ॥
पटोल-फलकैर्यूषो हृद्यो वातहरो लघुः ।
वाट्यालकशतो यूषः परं वातविनाशनः ॥ ६५ ॥
बलायाः पञ्चमूलस्य दशमूलस्य वा रसे ।

---

यावता घृतेन गुग्गुलोः पेषणं भवति, तावदेव घृतं ग्राह्यमिति । गुडादनुपानभेदो दोषभेदापेक्षया ॥ ६० ॥

संप्रत्यावृतवातचिकित्सामाह, जित्वेति ।—आवरकमिति ।—वायोरावरको यो दोषस्तम् । तद्गुलेख इति ।—यवस्य मण्डम् ॥ ६१—६२ ॥

सर्पिरित्यादि ।—क्रियासूत्रं चरकस्य ॥ ६४ ॥

पटोलफलकैरित्यादौ, तथा वाट्यालकशतो यूष इत्यादौ ।—यूषयोनिताम्बुद्रव्योऽपि बोध्यः । अन्ये तु—वैद्यमयोरेव पटोलफलवाट्यालकयोर्यूषार्थं ग्रहणमाहुः ॥ ६५ ॥

अजाशीर्षाम्बुजानूप-क्रव्याद-पिशितैः पृथक् ॥
साधयित्वा रसान् स्निग्धान् दध्यम्लव्योषसंस्कृतान् ।
भोजयेद्वातरोगार्त्तं तैर्व्यक्तलवणैर्नरम् ॥ ६६ ॥
पञ्चमूलीबलासिद्धं क्षीरं वातामये हितम् ॥ ६७ ॥
वाजिगन्धा बलास्तिस्रो दशमूली महौषधम् ।
द्वे पुनर्नवे रास्ना च गणो मारुतनाशनः ॥ ६८ ॥
कोलं कुलत्थं सुरदारु रास्ना माषातसी तैलफलानि कुष्ठम् ।
वचाशताह्वे यवचूर्णमम्लमुष्णानि वातामयिनां प्रदेहः ॥ ६९ ॥
आनूपवेशवारोष्ण-प्रदेहो वातनाशनः ॥
निरस्थि पिशितं पिष्टं स्विन्नं गुड़घृतान्वितम् ।
कृष्णामरिचसंयुक्तं वेशवार इति स्मृतः ॥ ७० ॥

---

बलाद्या इत्यादि।—बलादिभिस्त्रिभिः साधनद्रव्यैरजाशीर्षादयश्चत्वारः पृथक् साध्याः, तेन द्वादश रसा भवन्ति। बलादिभिरेकमेव कृत्वा, तेन मांसरसं कारयेदित्याहुः। अन्ये तु—प्रत्येकेऽपि कर्षमात्रं बलामूलमनुकल्पमजाशीर्षं मांसञ्च प्रक्षिप्य पाचनीयम्; परिशिष्टे पलचतुष्टये सति वस्त्रेण छानयित्वा परि-भर्जनीयं, तदनु हिङ्ग्वाद्यसहितकटुद्रव्याणि दत्त्वा संस्कार्यम्। एवं दशमूलेन च साधनम्। अजादीनामिति कूर्मकर्कटाद्यानूपानां मांसेन, तथा महिष वराहादीनामानूपानां मांसेन, तथा क्रव्यादानां मांसेन रससाधनं कुर्यादिति ॥ ६६ ॥

पञ्चमूलीत्यादि।—स्वल्पा पञ्चमूली ॥ ६७ ॥

वाजिगन्धेत्यादि।—बलास्तिस्र इति।—बला, अतिबला, नागबला चेति ख्याताः। अत्र बला पीतपुष्पा, अतिबला श्वेतपुष्पा, नागबला लोहितपुष्पा। पुनर्नवाद्वयं श्वेतरक्तपुष्पभेदात्। गणत्वादनेन सर्वाः क्वाथादिकल्पनाः कार्याः ॥ ६८ ॥

कोलमित्यादि।—कोलं बदरफलम्; अतसी तिसीति भाषा; तैलफलं तैल-निमित्तफलम्। एतानि समभागचूर्णानि काञ्जिकेन पिष्ट्वा ततोष्णं लेपो देयः ॥ ६९ ॥

आनूपवेशवार इति।—वराहादिमांसकृत.। तस्य पारिभाषिकत्वं दर्शयन्नाह,—निरस्थीत्यादि ॥ ७० ॥

समस्तं वर्गमर्द्धं वा यथालाभमथापि वा।
प्रयुञ्जीतेति वचनं सर्वत्र गणकर्मणि ॥ ३१ ॥

अश्वगन्धाद्यं घृतम्—

अश्वगन्धाकषाये च कल्के क्षीरचतुर्गुणम्।
घृतं पक्वन्तु वातघ्नं वृष्यं मांसविवर्द्धनम् ॥ ३२ ॥

दशमूलाद्यं घृतम्—

दशमूलस्य निर्यूहे जीवनीयैः पलोन्मितैः ॥
क्षीरेण च घृतं पक्वं तर्पणं पवनार्त्तिजित् ॥
क्वाथोऽत्र त्रिगुणः सर्पिःप्रस्थः स्यात् पयःसमः ॥ ३३ ॥

छागलाद्यं घृतम्—

छागं चर्मविनिर्मुक्तं त्यक्तशृङ्गखुरादिकम्।
पञ्चमूलीद्वयस्यैव जलद्रोणे विपाचयेत् ॥
तेन पादावशेषेण घृतप्रस्थं विपाचयेत्।
जीवनीयैः सयष्ट्याह्वैः क्षीरस्यैव शतावरीम् ॥

---

युक्तिः स्यादिति। काञ्जिकादिशब्दात् सुरा-सौवीर-तुषोदक-धान्याम्ल-दधिमस्तु-शुक्त-कोलादीनां ग्रहणम् ॥ ३१ ॥

अश्वगन्धाघृते।—चतुर्गुणक्षीरसाहचर्यादश्वगन्धाक्वाथोऽपि चतुर्गुणः। कल्कोऽपि अश्वगन्धाया एव ॥ ३२ ॥

दशमूलघृते।—दशमूलक्वाथोऽपि त्रिगुणः, क्षीरन्तु स्नेहसममिति चक्रः। जेज्जटमते तु—"स्नेहाच्चतुर्गुणः क्वाथः क्षीरं स्नेहसमम्" इति। अत्रिमते परिभाषा।—"एकद्वित्रिद्रवद्रव्यैः कुर्यात् स्नेहचतुर्गुणम्। क्षीरं स्नेहसमं दद्याच्चतुर्भिश्च चतुर्गुणम्।" इति। अस्यार्थः,—यत्रैको द्रवः, तत्र तेनैव चातुर्गुण्यम्; यत्र तु द्वौ, तत्र ताभ्याम्। यत्र त्रयः, तत्र त्रिभिरिति चातुर्गुण्यं मिलित्वा; क्षीरन्तु स्नेहसमं, चतुर्भिरपि मिलित्वैव चातुर्गुण्यम्; एवं सर्वत्र व्याख्येयम्। जीवनीयैरित्यत्र जीवनीयदशकम्; अनुक्तसंख्यत्वात् एवं सर्वत्र अनेनैव कल्कः ॥ ३३ ॥

छागं चर्मविनिर्मुक्तमित्यादि।—चर्मादिहीनं तच्छागमांसकम् एवं मयूराद्यघृते मयूरखण्डकवत् गृहीत्वा दशमूलस्य द्वात्रिंशत्पलमात्रं जलद्रोणे पक्तव्यमित्येके। चर्मादिहीनं तत्पलच्छागमांसं द्वात्रिंशत्पलमात्रं गृहीत्वा, दशमूलस्य द्वात्रिंशत्पलमात्रं जलद्रोणे पक्तव्यमित्याहुः

पचेदावाप्य मधुरं गणं सैन्धवसंयुतम् ॥
तथागुरु सर्जरसं सरलं देवदारु च ।
मञ्जिष्ठां चन्दनं कुष्ठमेलां कालानुसारिवाम् ॥
मांसीं शैलेयकं पत्रं तगरं शारिवां वचाम् ।
शतावरीमश्वगन्धां शतपुष्पां पुनर्नवाम् ॥
तत् साधुसिद्धं सौवर्णे राजते मृण्मयेऽपि वा ।
प्रक्षिप्य कलशे सम्यक् सुनिगुप्तं निधापयेत् ॥
बलातैलमिदं नाम्ना सर्ववातविकारनुत् ।
यथाबलमतो मात्रां सूतिकायै प्रदापयेत् ॥
या च गर्भार्थिनी नारी क्षीणशुक्रश्च यः पुमान् ।
क्षीणवाते मर्महतेऽभिहते मथितेऽपि वा ॥
भग्ने श्रमाभिपन्ने च सर्वथैवोपयोजयेत् ।
सर्वानाक्षेपकादींश्च वातव्याधीन् व्यपोहति ॥
हिक्कां कासमधीमन्थं गुल्मं श्वासं सुदारुणम् ।
षण्मासानुपयुज्यैतदन्त्रवृद्धिमपोहति ।
प्रत्यग्रधातुः पुरुषो भवेच्च स्थिरयौवनः ॥
राज्ञामेतद्धि कर्तव्यं राजमात्राश्च ये नराः ।
सुखिनः सुकुमाराश्च बलिनश्चैव ये नराः ॥ ७७ ॥

---

कोलकुलत्थानाश्च मिलित्वा चतुष्काश्च ; एवं बलाक्वाथेन सह त्रयः क्वाथास्तथा पयसेति द्रवचतुष्टयम्। एवां चतुर्णां द्रवाणां प्रत्येकं तैलप्रस्थापेक्षयाऽष्टगुणो भाग.. श्च मिलित्वा तेषाम् द्वात्रिंशद्गुणो द्रवो भवति। तैलञ्च मानविशेषानिर्देशात् प्रस्थपरिमितमेव ग्राह्यम्। एकश इति।—एकैकश्च। चावाप्य मधुरं गणमिति।—काकोल्यादिगणं कल्कीकृत्य। सैन्धवसंयुतमिति।—सैन्धवमगुर्वादि च कल्कीकृत्य प्रक्षेप्यम्। कालानुसारिवा तगरपादिका, तदभावे शिशपासारोऽपि। तगर पिण्डीतगरमूलं, शारिवा श्यामालता, पुनर्नवाश्वेतः कल्कः। सुनिगुप्तमिति।—बालातपादिरक्षोहैव गुप्तं रक्षितम्। तैलमिदं सुश्रुते मूढगर्भे पठितं, तेन "सूतिकायै प्रदापयेत्" इति विशेषेणोक्तम्। अन्त्रवृद्धिमपोहतीति।—वातजान्त्रवृद्धिं व्यपोहतीति, पाककृत्वर्जाक्षरः पुनरुक्तत्वात्। राजमात्रा इति।—राज्ञ इव मात्रा परिच्छदो येषां ते तथा ॥ ७७ ॥

एषां दश पलान् भागांश्चतुर्द्रोणेऽम्भसः पचेत् ॥
पादशेषं परिस्राव्य तैलपात्रं प्रदापयेत् ।
शतपुष्पा देवदारु मांसी शैलेयकं वचा ॥
चन्दनं तगरं कुष्ठमेला पर्णीचतुष्टयम् ।
रास्ना तुरगगन्धा च सैन्धवं सपुनर्नवम् ॥
एषां द्विपलिकान् भागान् पेषयित्वा विनिक्षिपेत् ।
शतावरीरसञ्चैव तैलतुल्यं प्रदापयेत् ॥
आजं वा यदि वा गव्यं क्षीरं दत्त्वा चतुर्गुणम् ।
पाने वस्तौ तथाऽभ्यङ्गे भोज्ये चैव प्रशस्यते ॥
अश्वो वा वातसंभग्नो गजो वा यदि वा नरः ।
पङ्गुलः पीठसर्पी च तैलेनानेन सिध्यति ॥
अधोभागे च ये वाताः शिरोमध्यगताश्च ये ।
दन्तशूले हनुस्तम्भे मन्यास्तम्भे गलग्रहे ॥
यस्य शुष्यति चैकाङ्गं गतिर्यस्य च विह्वला ।
क्षीणेन्द्रिया नष्टशुक्रा ज्वरक्षीणाश्च ये नराः ॥
बधिरा लल्लजिह्वाश्च मन्दमेधस एव च ।
अल्पप्रजा च या नारी या च गर्भं न विन्दति ॥
वातार्तौ वृषणौ येषामन्त्रवृद्धिश्च दारुणा ।
एतत् तैलवरं तेषां नाम्ना नारायणं स्मृतम् ॥
तगरं नतमत्र स्यादभावे शितली जटा ॥ ९८ ॥

---

दश पलाः ; शतावरी क्षीरसमतुला ; तगरं तगरपादिका, तदभावे पिप्पली-कोषकः, पिण्डतगरमूलमित्यन्ये । आजं वा यदि वा गव्यमिति ।—यद्यपि पद्याम-पयसोः प्राप्तौ गुणसाम्ये, तथापि च्छागक्षीरेण पक्वं तैलमिदमल्पमिच्छन्ति विशेषवचन भवतीति प्रमाणम् ; पङ्गौ लाङ्गः—पीठसर्पिणोऽप्युक्तं विशेषवचनमिति । नारा-यणसंज्ञा चास्य विष्णुनिर्मितत्वात्, प्रसादशीघ्रकारित्वात् । नारायणीति शतावरी-पर्यायः ॥ ९८ ॥

अश्वगन्धातैलम्—

शतं पक्काऽश्वगन्धाया जलद्रोणेऽङ्घ्रिशेषितम् ।
विस्राव्य विपचेत् तैलं क्षीरं दत्त्वा चतुर्गुणम् ।
कल्कैर्मृणालशालूक-विसकिञ्जल्कमालती-
पुष्पैर्जीवकर्षभक-सारिवापद्मकेशरैः ॥
मेदापुनर्नवाद्राक्षा-मञ्जिष्ठाहस्तीक्ष्यैः ।
एलैलवालुत्रिफला-मुस्तचन्दनपद्मकैः ॥
पक्वं रक्ताश्रयं वातं रक्तपित्तमसृग्दरम् ।
हन्यात् पुष्टिबलं कुर्यात् क्षयानां मांसवर्धनम् ।
रेतोयोनिविकारघ्नं सर्वदोषापकर्षणम् ।
षण्ढानपि वृषान् कुर्यात् पानाभ्यङ्गानुवासनैः ॥ ८१ ॥

मूलकाद्यं तैलम्—

मूलकस्वरसं तैलं क्षीरदध्यम्लकाञ्जिकम् ।
तुल्यं विपाचयेत् कल्कैर्बलाचित्रकसैन्धवैः ॥
पिप्पल्यतिविषारास्ना-चविकागुरुचित्रकैः ।
भल्लातकवचाकुष्ठ-श्वदंष्ट्राविश्वभेषजैः ॥
पुष्कराह्वशटीबिल्व-शताह्वानतदारुभिः ।
तत् सिद्धं पीतमत्युग्रान् हन्ति वातात्मकान् गदान् ॥ ८२ ॥

---

अश्वगन्धातैले।—पचमर्धेपितमिति।—पादशेषितम्। शालूकं कुमुदकन्दं, विसम् पद्ममूलार्धं, विसमध्येन पद्मनालविशेषः मतान्; किञ्जल्कः पद्मपराग, पद्मकेशरात् पृथक्त्वात्; पक्वे तु—उत्पलकिञ्जल्कमित्याहुः। मेदाभावे महेति पाठे—महा महामेदा, मासपर्णीत्यपि ॥ ८१ ॥

मूलकेत्यादि।—चक्रकः। मूलकस्वरसादीनि चत्वारि द्रव्याणि तैलसमानि। बलाचित्रकसैन्धवैरित्यत्र बलादिपुनरुक्तैर्वैरित्येव व्याख्यातव्यं इत्यते, पक्वे तु—प्रथम चित्रकग्रहणात् एकत्र चित्रकपदेनैरण्डमूलं व्याचक्षते, तत्तु टीकाकारैर्न व्याख्यातमिति ॥ ८२ ॥

क्वाथोऽत्र माषनिष्पावाः सैन्धवं कल्कमेव च ॥ ८६ ॥

(१) माषतैलम्—

माषात्मगुप्तातिरसोरुबूक-रास्नाशताह्वालवणैः प्रपिष्टैः।
चतुर्गुणे माषबलाकषाये तैलं कृतं हन्ति च पक्षवातम् ॥ ८७ ॥

(२) माषतैलम्—माषप्रस्थं समावाप्य पचेत् सम्यग्जलाढके।
पादशेषे रसे तस्मिन् क्षीरं दद्याच्चतुर्गुणम् ॥
प्रस्थञ्च तिलतैलस्य कल्कं दत्त्वाक्षसम्मितम्।
जीवनीयानि यान्यष्टौ शतपुष्पां ससैन्धवाम् ।
रास्नात्मगुप्तामधुकं बलाव्योषं त्रिकण्टकम् ॥
पक्षाघातेऽर्दिते वाते कर्णशूले सुदारुणे ।
मन्दश्रुतौ बाधिर्ये तिमिरे च त्रिदोषजे ॥
हस्तकम्पे शिरःकम्पे विश्वाच्यामवबाहुके ।
शस्तं कलायखञ्जे च पानाभ्यञ्जनबस्तिभिः ॥
माषतैलमिदं श्रेष्ठमूर्ध्वजत्रुगदापहम् ॥ ८८ ॥

(३) माषतैलम्—माषातसीयवकुरण्टककण्टकारी-
गोधूमटुण्टुकजटाकपिकच्छुतोयैः।
कार्पासकास्थिशणबीजकुलत्थकोल-
क्वाथेन बस्तपिशितस्य रसेन चापि ॥

---

पञ्चः। अत्र तु—सैन्धवस्य कृशापि कल्क्यत्वादंशान्तरसैन्धवयोः कल्कः, अनुक्तद्रवत्वाज्जलं चतुर्गुणमित्याहुः ॥ ८६ ॥

माषात्मगुप्तेत्यादौ।—अतिरसा मूर्वेति निघण्टुः, यदिहाभिधानम्। माषबलाक्वाथौ मिलित्वा चतुर्गुणः क्वाथः ॥ ८७ ॥

माषप्रस्थमित्यादौ।—जीवनीयानि यान्यष्टाविति अष्टवर्गः ॥ ८८ ॥

माषातसीत्यादौ।—अतसी उमेत्याख्या, कण्टकारीति निदिग्धिका; कुरण्टको झिण्टी, गोधूमको गोधूमः; टुण्टुकजटा श्योनाकमूलं; कपिकच्छु-

क्वाथोऽत्र माषनिष्पाद्यः सैन्धवं कल्कमेव च ॥ ८६ ॥

( १ ) माषतैलम्—

माषात्मगुप्तातिरसोरुबूक-रास्नाशताह्वालवणैः प्रपिष्टैः।
चतुर्गुणे माषजलाकषाये तैलं कृतं हन्ति च पक्षवातम् ॥ ८७ ॥

(२) माषतैलम्—माषप्रस्थं समावाप्य पचेत् सम्यग्जलाढके।
पादशेषे रसे तस्मिन् क्षीरं दद्याच्चतुर्गुणम् ॥
प्रस्थञ्च तिलतैलस्य कल्कं दत्त्वाक्षसम्मितम्।
जीवनीयानि यान्यष्टौ शतपुष्पां ससैन्धवाम्।
रास्नात्मगुप्तामधुकं बलाव्योषं त्रिकण्टकम् ॥
पक्षाघातेऽर्दिते वाते कर्णशूले सुदारुणे।
मन्दश्रुतौ चाश्रवणे तिमिरे च त्रिदोषजे ॥
हस्तकम्पे शिरःकम्पे विश्वाच्यामवबाहुके।
शस्तं कलायखञ्जे च पानाभ्यञ्जनबस्तिभिः ॥
माषतैलमिदं श्रेष्ठमूर्द्ध्वजत्रुगदापहम् ॥ ८८ ॥

(३) माषतैलम्—माषातसीयवकुरण्टककण्टकारी-
गोकण्टटुण्टुकजटाकपिकच्छुतोयैः।
कार्पासकास्थियवबीजकुलत्थकोल-
क्वाथेन बस्तपिशितस्य रसेन चापि ॥

---

चक्रः। भन्ये तु—कैवल्यसैन्धवस्य कुत्रापि कल्कत्वादर्शनान्माषसैन्धवयोः
द्रवत्वात्तैलं चतुर्गुणमित्याहुः ॥ ८६ ॥

माषात्मगुप्तेत्यादौ।—अतिरसा मूर्वेति शिवदः, यष्टिमधिवन्ये
मिलित्वा चतुर्गुणः क्वाथः ॥ ८७ ॥

माषप्रस्थमित्यादौ।—जीवनीयानि यान्यष्टाविति अष्टवर्गः ॥ ८८ ॥

माषातसीत्यादौ।—अतसी वर्तुलकलायः, कण्टकारी
भिण्टी; गोकण्टको गोक्षुरः; टुण्टुकजटा श्योणाकमूलं;

क्वाथोऽत्र माषनिष्पाद्यः सैन्धवं कल्कमेव च ॥ ८६ ॥

( १ ) माषतैलम्—

माषात्मगुप्तातिबलोरुबूक-रास्नाशताह्वालवणैः प्रपिष्टैः ।
चतुर्गुणे माषबलाकषाये तैलं कृतं हन्ति च पक्षवातम् ॥ ८७ ॥

(२) माषतैलम्—माषप्रस्थं समावाप्य पचेत् सम्यग्जलाढके ।
पादशेषे रसे तस्मिन् क्षीरं दद्याच्चतुर्गुणम् ॥
प्रस्थञ्च तिलतैलस्य कल्कं दत्त्वाक्षसम्मितम् ।
जीवनीयानि यान्यष्टौ शतपुष्पां ससैन्धवाम् ।
रास्नात्मगुप्तामधुकं बलाव्योषं त्रिकण्टकम् ॥
पक्षाघातेऽर्दिते वाते कर्णशूले सुदारुणे ।
मन्दश्रुतौ चाश्रवणे तिमिरे च त्रिदोषजे ॥
हस्तकम्पे शिरःकम्पे विश्वाच्यामवबाहुके ।
शस्तं कलायखञ्जे च पानाभ्यञ्जनवस्तिभिः ॥
माषतैलमिदं श्रेष्ठमूर्द्ध्वजत्रुगदापहम् ॥ ८८ ॥

(३) माषतैलम्—माषातसीयवकुरण्टककण्टकारी-
गोकण्टटुण्टुकजटाकपिकच्छुतोयैः ।
कार्पासकास्थिशणबीजकुलत्थकोल-
क्काथेन वस्तपिशितस्य रसेन चापि ॥

---

चक्र. । कल्के तु—केवलसैन्धवस्य कुत्रापि कल्कत्वादर्शनान्माषसैन्धवयोः कल्कः, अनुक्तद्रवत्वाज्जलं चतुर्गुणमित्याहुः ॥ ८६ ॥

माषात्मगुप्तेत्यादौ ।—अतिबला मूर्वेति निश्चलः, यष्टिमित्यन्ये । माषबलयोः मिलित्वा चतुर्गुणः क्वाथः ॥ ८७ ॥

माषप्रस्थमित्यादौ ।—जीवनीयानि यान्यष्टाविति अष्टवर्गः ॥ ८८ ॥

माषातसीत्यादौ ।—अतसी वर्तुलकलायः, कश्चिदतसीमित्याह ; कुरण्टको झिण्टी ; गोकण्टको गोक्षुरः ; टुण्टुकजटा श्योनाकमूलं ; कपिकच्छु [illegible]

शुण्ठ्या समागधिकया शतपुष्पया च
सैरण्डमूलसपुनर्नवया सरण्या।
रास्नाबलाऽमृतलताकटुकैर्विपक्वम्
माषाख्यमेतदवबाहुहरञ्च तैलम्॥
पक्षाङ्गशोषमपतानकमाढ्यवात-
साक्षेपकं सभुजकम्पशिरःप्रकम्पम्।
नस्येन बस्तिविधिना परिषेचनेन
हन्यात् कटीजघनजानुरुजश्च सर्वाः॥ ८८॥

(१) महामाषतैलम्—

माषस्याढकं दत्त्वा तुलार्द्धं दशमूलतः।
पलानि छागमांसस्य त्रिंशद्द्रोणेऽम्भसः पचेत्॥
पूते शीते कषाये च चतुर्थांशावतारिते।
प्रस्थञ्च तिलतैलस्य पयो दत्त्वा चतुर्गुणम्॥
आत्मगुप्तोरुबूकञ्च शताह्वा लवणत्रयम्।
जीवनीयानि मञ्जिष्ठा चव्यचित्रककट्फलम्॥
सव्योषपिप्पलीमूलं रास्ना मधुकसैन्धवम्।
देवदार्वमृता कुष्ठं वाजिगन्धा वचा शटी॥
एतैरक्षसमैः कल्कैः साधयेन्मृदुनाग्निना।
पक्षाघातेऽर्दिते वाते बाधिर्ये हनुसंग्रहे॥

---

शिश्वी। माषादिना कथितद्रव्येनैव: क्राथ: ; कार्पासास्थिप्रभृतिना कोलान्तेनापर: क्राथ:, कोलञ्च बृहद्बदरम्। तथा यथानिर्दिष्टस्य छागमांसस्य रस: क्राथस्तृतीय:। एवं त्रिभिर्द्रवैर्मिलित्वा चातुर्गुण्यम्,—"एकादिभिर्द्रवद्रव्यैः कुर्यात् स्नेहान् चतुर्गुणम्" इति वचनात्। सरणी प्रसारणी, अमृतलता गुडूची, कटुकं मरिचं, न तु लता-कस्तूरी॥ ८८॥

माषस्याढकमित्यादि।—अर्द्धाढकं द्वात्रिंशत् पलानि। पलानि पूर्ववत् यष्टि-मधुकस्य भागद्वयम्। लवणत्रयमिति।—सरकोलकमनिर्दिष्टं यथालाभात् सौवर्चलं सैन्धवं

कर्णनादे शिरःशूले तिमिरे च त्रिदोषजे।
पाणिपादशिरोग्रीवा-भ्रमणे मन्दचंक्रमे॥
कलायखञ्जे पाङ्गुल्ये गृध्रस्यामवबाहुके।
पाने वस्तौ तथाभ्यङ्गे नस्यकर्णाक्षिपूरणे।
तैलमेतत् प्रशंसन्ति सर्ववातरुजापहम्॥ ८०॥

(२) महामाषतैलम्—

द्विपञ्चमूलीं निःक्वाथ्य तैलात् षोड़शभिर्गुणैः।
माषाढ़कं साधयित्वा तं निर्य्यूहं चतुर्गुणम्॥
ग्राहयित्वा तु विपचेत् तैलप्रस्थं पयःसमम्।
कल्कार्थञ्च समावाप्य भिषग्द्रव्याणि बुद्धिमान्॥
अश्वगन्धां शटीं दारु बलां रास्नां प्रसारणीम्।
कुष्ठं परूषकं भार्गीं द्वे विदार्य्यौ पुनर्नवाम्॥
मातुलुङ्गफलाजाज्यौ रामठं शतपुष्पिकाम्।
शतावरीं गोक्षुरकं पिप्पलीमूलचित्रकौ॥

---

त्रिदश। पुनः सैन्धवमिति वचनात् सैन्धवस्यापि भागद्वयम्। जीवनीयानि इति।—जीवनीय दशकम्। पाणिपादशिरोग्रीवाभ्रमणे इति।—पाणिपादादिकम्प इत्यर्थः॥८०॥

द्विपञ्चमूलीमित्यादि।—अत्र माषस्य क्वाथ्यस्याढकमानत्वमुक्तं, तत्साहचर्य्याद्दश-मूलस्यापि क्वाथ्यमाढकं ज्ञेयम्। तैलात् षोड़शभिर्गुणैरिति।—तैलप्रस्थापेक्षया षोड़शगुणजलैरित्यर्थः; प्रस्थश्च षोड़शगुणः सन् द्रोणो भवति, तेन जलद्रोणेनेत्यर्थः। माषाढकञ्च तैलात् षोड़शगुणैर्जलैः साधयित्वेति योज्यम्। तं दशमूलक्वाथं तथा माषक्वाथञ्च तैलाच्चतुर्गुणं यथा स्यात् तथा ग्राहयित्वा तैलप्रस्थं विपचेदिति योज्यम्। पयःसममिति।—दुग्धं तुल्यं तेन नवगुणः पाक इति पक्षः। अत एव वक्ष्यति—दशमूलाढकं द्रोणे इत्यादि। अन्ये तु—द्विपञ्चमूलीं माषाढकञ्चैकीकृत्य जल-द्रोणमानेन साधयेदित्याहुः। तन्मते—पञ्चगुणः पाकः। अपरे तु—दशमूलक्वाथेन तैलात् षोड़शगुणेन माषाढकं साधयित्वा तेन पादावशेषेण तैलप्रस्थपाक इत्याहुः। अत्र पक्षे निक्षिप्तदशमूलं पल २५६, जलशराव २५६, शेषशराव ६४; किन्तु अयं पक्षो वृद्धैर्नाद्रियते, कुत्रापि एवंविधकल्पनाया अदृष्टत्वात्। इति। द्वे विदार्य्यौ।—विदारी

जीवनीयगणं सर्वं संहृत्यैव ससैन्धवम् ।
तत् साधु सिद्धं विज्ञाय माषतैलमिदं महत् ।
वस्त्यभ्यञ्जनपानेषु नावने च प्रयोजयेत् ॥
पक्षाघाते हनुस्तम्भे अर्दिते सापतन्त्रके ।
अवबाहुकविश्वाच्योः खञ्जपङ्गुलयोरपि ।
हनुमन्याग्रहे चैव अधिमन्थे च वातिके ॥
शुक्रक्षये कर्णनादे कर्णशूले च दारुणे ।
कलायखञ्जशमने भेषज्यमिदमादिशेत् ॥
दशमूलाढकं द्रोणे निःक्वाथ्य पादिको भवेत् ।
क्वाथश्चतुर्गुणस्तैलान्माषक्वाथेऽप्ययं विधिः ॥ ८१ ॥

ह्रस्वमाषतैलम्—

माषक्वाथे बलाक्वाथे रास्नाया दशमूलजे ।
यवकोलकुलत्थानां छागमांसरसे पृथक् ॥
प्रस्थे च तिलतैलस्य क्षीरं दत्त्वा चतुर्गुणम् ।
रास्नात्मगुप्तासिन्धूत्थ-शताह्वैरण्डमुस्तकैः ॥
जीवनीयबलाव्योषैः पचेदक्षसमैर्भिषक् ।
हस्तकम्पे शिरःकम्पे बाहुशोषेऽवबाहुके ॥
बाधिर्य्ये कर्णशूले च कर्णनादे च दारुणे ।
विश्वाच्यामर्दिते कुब्जे गृध्रस्यामपतानके ॥
वस्त्यभ्यञ्जनपानेषु नावनेषु च दापयेत् ।
माषतैलमिदं श्रेष्ठमूर्द्ध्वजत्रुगदापहम् ॥
क्वाथप्रस्थाः षडेवात्र विभक्तयन्तेन भाषिताः ॥ ८२ ॥

---

कन्द. क्षीरविदारी च, मातुलुङ्गकं मातुलुङ्गस्य फलम्। जीवनीयगणमिति— जीवनीयदशकम् ॥ ८१ ॥

महामाषतैले क्वाथस्य प्रकृष्टत्वात् माषादीनां प्रत्येकं प्रस्थो ग्राह्यः। मिलितदशमूलप्रस्थः; तथा यवकोलकुलत्थानां मिलितैव प्रस्थः। [illegible]

मज्जस्नेहः—

ग्राम्यानूपौदकानान्तु भित्त्वास्थीनि पचेज्जले ।
तं स्नेहं दशमूलस्य कषायेण पुनः पचेत् ॥
जीवकर्षभकास्फोता-विदारीकपिकच्छुभिः ।
वातघ्नैर्जीवनीयैश्च कल्कैर्द्विक्षीरभागिकम् ॥
तत् सिद्धं नावनाभ्यङ्गात् तथा-पानानुवासनात् ।
सिरापर्वास्थिकोष्ठस्थं प्रणुदत्याशु मारुतम् ॥
ये स्युः प्रक्षीणमज्जानः क्षीणशुक्रौजसश्च ये ।
बलपुष्टिकरं तेषामेतत् स्यादमृतोपमम् ॥ ८२ ॥

धातुःस्नेहः—

प्रस्थः स्यात् त्रिफलायास्तु कुलत्थकुडवद्वयम् ।
कृष्णगन्धात्वगाढ़क्योः पृथक् पञ्चपलं भवेत् ॥
रास्नाचित्रकयोर्द्वे द्वे दशमूलं पलोन्मितम् ।
जलद्रोणे पचेत् पादशेषं प्रस्थोन्मितं पृथक् ॥
सुराऽऽरनालदध्यम्ल-सौवीरकतुषोदकम् ।

---

तुल्यं जलं देयं, चतुर्भागोऽवशेषः । अत एवाह—"कायप्रस्थाः पचेदाम" इत्यादि । जीवनीयैरिति—जीवनीयदशकैः ॥ ८१ ॥

ग्राम्यानूपौदकानामित्यादौ ।—त्रिगुणक्षीरकाकवर्ग्याद्युक्तमूलीकाथोऽपि त्रिगुण एव ग्राह्यः ; अन्ये तु—चतुर्गुण इत्याहुः । वातघ्नैरिति ।—भद्रदार्वादिगणैः । मधुर लवणकषायकुलेभ्यो त हरद्रव्यैः । जीवनीयगण—प्रविष्टयोः जीवकर्षभकयोः पुन. पञ्चो भागद्वयप्रक्षेपार्थम् । आस्फोता—हापरमालीति ख्याता ॥ ८२ ॥

प्रस्थः स्यादित्यादि ।—अत्र त्रिफलाया मिलिता प्रस्थः, कृष्णगन्धा शोभाञ्जनम्, अस्यास्त्वक् मूलत्वक् । अन्ये तु—कृष्णगन्धा शमीत्याहुः ; तत्र, अनुकर्षे— "त्रिफलाप्रस्थः कुलत्थौ द्विगुणमाढकौ" इत्यादि पाठात् । दशमूलं पलोन्मितमिति ।—प्रत्येकम् । प्रस्थोन्मितं पृथगिति ।—सुरादीनां पयोऽन्तानां प्रत्येकं प्रस्थ

कोलदाडिमवृक्षाम्ल-रसं तैलं घृतं वसाम्॥
मज्जानञ्च पयश्चैव जीवनीय-पलानि षट्।
कल्कं दत्त्वा महास्नेहं सम्यगेनं विपाचयेत्॥
शिरामज्जास्थिगे वाते सर्वाङ्गैकाङ्गरोगिषु।
वेपनाक्षेपशूलेषु तमभ्यङ्गं प्रदापयेत्॥ ८४॥

कुब्जप्रसारणीतैलम्—

प्रसारणीशतं क्षुण्णं पचेत् तोयार्मणे शुभे।
पादशेषे समं तैलं दधि दद्यात् सकाञ्जिकम्॥
त्रिगुणञ्च पयो दत्त्वा कल्कान् द्विपलिकांस्तथा।
चित्रकं पिप्पलीमूलं मधुकं सैन्धवं वचाम्॥
शतपुष्पां देवदारु रास्नां वारणपिप्पलीम्।
प्रसारण्याश्च मूलानि मांसीं भल्लातकानि च।
पचेन्मृद्वग्निना तैलं वातश्लेष्मामयान् जयेत्॥
अशीतिं नरनारीणां वातरोगान् व्यपोहति।
कुब्जं स्तिमितपङ्गुत्वं गृध्रसीं खुड्कार्दितम्।
हनुपृष्ठशिरोग्रीवा-स्तम्भं वापि नियच्छति॥ ८५॥

(१) त्रिशतीप्रसारणीतैलम्—

समूलपत्रशाखाया जातसारां प्रसारणीम्।
कुट्टयित्वा पलशतं दशमूलशतं तथा॥

---

इत्यर्थः। दध्यम्लम् अम्लदधि, सुवीरकं काञ्जिकं, कोलं बदरं, दाडिमं अम्लदाडिमं, वृक्षाम्लं महार्द्रकं, "महादा" इति ख्याता। जीवनीयपलानि षडिति।—मिलित्वा। मज्जानमिति।—चतुःस्नेहस्य मात्रा॥ ८४॥

कुब्जप्रसारणीतैले।—सममिति।—पादावशिष्टक्वाथसमम्, आढकमित्यर्थः। दधि दद्यात् सकाञ्जिकमिति।—दधिकाञ्जिके तैलसमे। तेन तैलदधिकाञ्जिकानां प्रत्येकमाढकम्, त्रिगुणश्च पय इति।—आढकत्रयमित्यर्थः। अन्ये तु—सकाञ्जिकमिति पदाविभागं कृत्वा काञ्जिकस्यापि त्रैगुण्यमिच्छन्ति, व्यवहारस्तु पूर्वेणैव। खुड्को वधिरान्; अन्ये तु—वातकण्टक इत्याहुः॥ ८५॥

अश्वगन्धापलशतं कटाहे समधिक्षिपेत् ।
वारिद्रोणे पृथक् पक्वा पादशेषावतारितम् ।
कषायसममावन्तु तैलमत्र प्रदापयेत् ॥
दध्नस्तथाढ़कं दत्वा द्विगुणञ्चापि काञ्जिकम् ।
चतुर्द्रोणेन पयसा जीवनीयैः पलोन्मितैः ॥
शृङ्गवेरपलात् पञ्च त्रिंशद्भल्लातकानि च ॥
द्वे पले पिप्पलीमूलाच्चित्रकाच्च पलद्वयम् ॥
यवक्षारपले द्वे च सैन्धवस्य पलद्वयम् ।
सौवर्चलपले द्वे च मञ्जिष्ठायाः पलद्वयम् ।
प्रसारणीपले द्वे च मधुकस्य पलद्वयम् ॥
सर्वाण्येतानि संहृत्य शनैर्मृदग्निना पचेत् ॥
एतदभ्यञ्जने श्रेष्ठं वस्तिकर्मनिरूहणे ।
पाने नस्ये च दातव्यं न क्वचित् प्रतिहन्यते ॥
अशीतिं वातजान् रोगांश्चत्वारिंशच्च पैत्तिकान् ।
विंशतिं श्लैष्मिकांश्चैव सर्वानेतान् व्यपोहति ॥
गृध्रसीमस्थिभङ्गञ्च मन्दाग्निलमरोचकम् ।
अपस्मारमथोन्मादं विभ्रमं मन्दगामिताम् ॥
त्वग्गताश्चैव ये वाताः शिरःसन्धिगताश्च ये ।
जानुसन्धिगताश्चैव पादपृष्ठगतास्तथा ॥
भग्नो वा वातसम्भग्नो गजो वा यदि वा नरः ।
प्रसारयति यस्माद्धि तस्माद्देषा प्रसारणी ॥
इन्द्रियाणां प्रजननी वृद्धानाञ्च रसायनी ।
एतेनाभ्यक्तवृष्णीनां शतं पुंसवनं महत् ॥
प्रसारणीतैलमिदं बलवर्णाग्निवर्द्धनम् ॥
अपनयति वलीपलितमुत्पाटयति पक्षाघातम् ।

वातरक्तं सर्वाङ्गगतं वातगुल्मञ्च नाशयति ।
एतदुपसेव्यमानः प्रसन्नवर्णेन्द्रियो भवति ॥ ८६ ॥

(२) त्रिशतीप्रसारणीतैलम्—

प्रसारण्यास्तुलामश्व-गन्धाया दशमूलतः ।
तुलां तुलां पृथग्वारि-द्रोणे पादावशेषिते ॥
तैलाढकं चतुःक्षीरं दधि तुल्यं द्विकाञ्जिकम् ।
द्विपलैर्ग्रन्थिकक्षार प्रसारण्यक्षसैन्धवैः ।
समञ्जिष्ठाग्निमध्याह्वैः पलिकैर्जीवनीयकैः ।
शुण्ठ्याः पञ्चपलं दत्त्वा त्रिंशद्भल्लातकानि च ।
पचेदस्यादिना वातं हन्ति सन्धिशिरास्थिगम् ॥
पुंस्त्वोत्साहस्मृतिप्रज्ञा-बलवर्णाग्निवृद्धये ।
प्रसारणीयं त्रिशती चान्ना सौवर्चलान्विता ॥ ८७ ॥

सप्तशतिकं प्रसारणीतैलम्—

समूलपत्रामुत्पाट्य शरत्काले प्रसारणीम् ।
शतं ग्राह्यं सहचरात् शतावर्य्याः शतं तथा ॥
बलात्मगुप्ताश्वगन्धा-केतकीनां शतं शतम् ।
पचेच्चतुर्गुणे तोये द्रव्यैस्तैलाढकं भिषक् ॥
मस्तु मांसरसं चुक्रं पयश्चाढकमाढकम् ।

---

प्रसारण्यास्तुलामित्यादौ ।—दशमूलस्य मिलित्वा तुला। पृथग् वारिद्रोण इति ।—तिसृषु तुलासु प्रत्येकं जलद्रोणदानमित्यर्थः । सैन्धवसान्निध्यादत्र सौवर्चलं गृह्णन्ति वृद्धाः । ग्रन्थिकादीनां षण्णां द्रव्याणां प्रत्येकं द्विपलं, जीवनीयद्रव्याणां प्रत्येकं पलिकम् । त्रिंशद् भल्लातकानीत्याकृतिमानात् ॥ ८७ ॥

समूलपत्रामित्यादौ ।—शतं ग्राह्यमिति ।—प्रसारण्या इत्यर्थः । तथा शब्दात् सहचराच्च शतमित्यन्वयः । केतकी केया इति ख्याता । पचेच्चतुर्गुणे तोय इत्यत्र पञ्चस्वागतमानत्वाच्चतुर्गुणतोयस्य न वैगुण्यम् । अन्ये तु—सम्यग्वीर्य्याधानार्थं वैगुण्यात् चतुर्गुणमष्टगुणं गृह्णन्ति, तदन्तु न व्यवहारसिद्धं, न वा शास्त्रसिद्धमिति । द्रव्यैरिति ।—प्रसारण्यादीनां केतक्यन्तानां पादावशिष्टक्वाथैः । चुक्रं चक्रपाणिकारोक्तविधिना कार्य्य-

दध्याढ़कसमायुक्तं पाचयेन्मृदुनाग्निना ॥
द्रव्याणान्तु प्रदातव्या मात्रा चार्द्धपलांशिका ।
तगरं मदनं कुष्ठं केशरं मुस्तकं त्वचम् ॥
रास्ना सैन्धवपिप्पल्यौ मांसी मञ्जिष्ठयष्टिका ।
तथा मेदा महामेदा जीवकर्षभकौ तथा ।
शतपुष्पा व्याघ्रनखं शृण्ठी देवाह्वमेव च ।
काकोली क्षीरकाकोली वचा भल्लातकं तथा ॥
पेषयित्वा समानेतान् साधनीया प्रसारणी ।
नातिपक्वं न हीनञ्च सिद्धं पूतं निधापयेत् ॥
यत्र यत्र प्रदातव्या तन्मे निगदतः शृणु ।
कुब्जानामथ पङ्गूनां वामनानां तथैव च ॥
यस्य शुष्यति चैकाङ्गं ये च भग्नास्थिसन्धयः ।
वातशोणितदुष्टानां वातोपहतचेतसाम् ॥
स्त्रीषु क्षीणशुक्राणां वाजीकरणमुत्तमम् ।
वस्तौ पाने तथाभ्यङ्गे नस्ये चैव प्रदापयेत् ।
प्रयुक्तं शमयत्याशु वातजान् विविधान् गदान् ॥ ८८ ॥

एकादशशतिकं प्रसारणीतैलम् —

शाखामूलदलैः प्रसारणितुलास्तिस्रः कुरण्टात् तुले
छिन्नायाश्च तुले तुले दशुकतो रास्नाशिरीषात् तुलाम् ।

---

निवेकैः; कर्षं तु—महाराजप्रसारण्या यथामात्रेन विधिरेत्याहुः। द्रव्याणामिति।—कल्कद्रव्याणाम्। चार्द्धपलांशिका इति।—चार्द्धपलमाना। तगरं पूर्ववदास्येयम्, केशरं नागकेशरम्; मञ्जिष्ठयष्टिका इति।—मञ्जिष्ठायाश्छान्दसत्वाद् ह्रस्व., यष्टिका यष्टिमधु। व्याघ्रनखं नखी; देवाह्वं देवदारु। भल्लातकासहत्वे रक्तचन्दनं देयम् ॥ ८८ ॥

शाखामूलदलैरित्यादि।—चात्र तृतीया सहार्थे विशेषणे वा। कुरण्टः नील-झिण्टी। रास्नाशिरीषयोर्मिलित्वा एका तुला। देवदारुकैतकयोरपि मिलित्वैव

भल्लातत्रिफलाब्जकेशरमहाश्यामालवङ्गान्वितैः ।
सव्योषैस्त्रिपलैर्महीपयसि पचेन्मन्देन पाकेऽग्निना
पानाभ्यञ्जनवस्तिनस्यविधिना तन्मारुतं नाशयेत् ॥
सर्वार्द्धाङ्गगतं तथाऽवयवगं सन्ध्यस्थिमज्जाश्रितम्
श्लेष्मोत्थानथ पैत्तिकांश्च शमयेन्नानाविधानामयान् ।
धातून् बृंहयति स्थिरांश्च कुरुते पुंसां नवं यौवनम्
वृद्धस्यापि बलं करोति सुमहद्वन्ध्यास्तु गर्भप्रदम् ॥
पीत्वा तैलमिदं जरत्यपि सुतं सूतेऽमुना भूरुहाः
सिक्ताः शोषमुपागताश्च फलिनः स्निग्धा भवन्ति स्थिराः
भग्नाङ्गाः सुदृढीभवन्ति मनुजा गावो हयाः कुञ्जराः ॥८८॥

अष्टादशशतिकं प्रसारणीतैलम्—

समूलदलशाखायाः प्रसारण्याः शतत्रयम् ।
शतमेकं शतावर्य्या अश्वगन्धाशतं तथा ॥
केतकीनां शतञ्चैकं दशमूलाच्छतं शतम् ।
शतं वाट्यालकस्यापि शतं सहचरस्य च ।
जलद्रोणशतं दत्त्वा शतभागावशेषितम् ॥
ततस्तेन कषायेण कषायद्विगुणेन च ।
सुव्यक्तेनारनालेन दधिमण्डाढकेन च ॥

---

श्यामा प्रियङ्गुः ; महाश्यामा श्यामलता ; एषां प्रत्येकं त्रिपलम् ; व्योषस्य मिलित्वा त्रिपलं ग्राह्यम् । अत्र कच्चूरमुस्तादिभिरधमैः सुगन्धिद्रव्यैः प्रथमः पाकः, मध्यमैस्तु द्वितीयः, उत्तमैस्तु तृतीय इति । अत्र गन्धग्रहार्थं कर्पूर-कस्तूरीभ्यां पत्रकल्कः कार्यः । पत्रकल्कश्च पाके वाच्यम् । पत्रकल्कस्य तु मानमत्र तैलानुरूपतः, सुगन्धितैलाधिकारोक्तमानानुसाराद्वा ज्ञेयम् ॥ ८८ ॥

समूलदलशाखाया इत्यादि ।—दशमूलाच्छतं शतमिति ।—बिल्वादीनां दशानां प्रत्येकं शतमित्यर्थः । वृद्धा अत्र क्वाथमध्ये रास्नादेवदारुणोरपि प्रत्येकं पञ्चाशत्पलानि प्रक्षिपन्ति, अत एव पाठोऽपि "क्वाथे तुलार्द्धम्" इत्यादि पठन्ति । तत्तु यथोक्तमेव देयं, नत्वधिकम् ।

अभ्यङ्गात् त्वग्गतं हन्ति पानात् कोष्ठगतं तथा ॥
भोजनात् सूक्ष्मनाडीस्थान् नस्यादूर्द्ध्वगतं तथा ।
पक्वाशयगते वस्तिर्निरूहः सार्वकायिके ॥
एतद्धि वड़वाख्यानां किशोराणां यथाऽमृतम् ।
एतदेव मनुष्याणां कुञ्जराणां गवामपि ॥
अनेनैव च तैलेन शुष्यमाणा महाद्रुमाः ।
सिक्ताः पुनः प्ररोहन्ति भवन्ति फलशालिनः ॥
वृद्धोऽप्यनेन तैलेन पुनश्च तरुणायते ॥
न प्रसूते च या नारी साऽपि पीत्वा प्रसूयते ।
अप्रजाः पुरुषो यस्तु सोऽपि पीत्वा सुतं लभेत् ॥
अशीतिं वातजान् रोगान् श्लैष्मिकान् पित्तजानपि ।
सन्निपातसमुत्थांश्च नाशयेत् क्षिप्रमेव तु ॥
एतेनान्धककृष्णीनां कृतं पुंसवनं महत् ।
कृत्वा विष्णोर्बलिञ्चापि तैलमेतत् प्रयोजयेत् ॥
काये तुलार्द्धे रास्नायाः किलिमस्य च दीयते ।
भल्लातकासहत्वे तु तत्स्थाने रक्तचन्दनम् ॥
त्वक्पत्रपत्रमधुरी-कुष्ठचम्पककोरिकाः ।
ग्रन्थिक्षौणी मरुवकमधिकत्वेन दीयते ॥
कर्पूरमददानञ्च शुक्लगन्धोदकक्रिया ।
द्रव्यशुद्धिः पाकविधिर्भाविप्रसारणीसमः ॥ १०० ॥

---

ऽर्दितवातुलं स्यादिति। अत्रापि कल्कभूयस्त्वात् पूर्ववत् अधमैः सुगन्धिद्रव्यैः प्रथमः पाकः, मध्यमैस्तु द्वितीयः, उत्तमैस्तु तृतीय इति। अत्रापि तृतीयः पाको गन्धोदकेन; केचित्तु द्वितीयं पाकमपि गन्धोदकेनेच्छन्ति। अत्रोपदेशादनुक्तमप्यधिकं त्वक्पत्रादिकं गन्धद्रव्यं देयमित्याह, त्वक्पत्रेत्यादि।—त्वक्पत्रं तेजपत्रम्; पत्रम् तेज-

आद्य एभिर्द्रवैः पाकः कल्को भल्लातकं कणा ॥
नागरं मरिचञ्चैव प्रत्येकं षट्पलोन्मितम् ।
भल्लातकसहस्रे तु रक्तचन्दनमिष्यते ॥
पथ्याक्षधात्र्यः सरलं शताह्वा कर्कटो वचा ।
चोरपुष्पी शटी मुस्त-द्वयं पद्मञ्च सोत्पलम् ॥
पिप्पलीमूलमञ्जिष्ठा साश्वगन्धा पुनर्नवा ।
दशमूलं समुदितं चक्रमर्दो रसाञ्जनम् ॥
गन्धतृणं हरिद्रा च जीवनीयगणस्तथा ।
एषां त्रिपलिकैर्भागैराद्यः पाको विधीयते ॥
देवपुष्पीवोलपत्रं गजकोरसशैलजे ।
प्रियङ्गुक्षीरमधुरी-मांसीदारुवलाचला ॥
श्रीवासो नलिका खोटिः सूक्ष्मैला कुन्दुरुसुरा ।
नखोलयश्च त्वक्पत्री प्रसरा पूतिचम्पकम् ॥
मदनं रेणुका एला मरुवश्च पलत्रयम् ।

---

मित. । एभिर्द्रवैरिति ।—क्वाथकाञ्जिकादिभिः सर्वैः । नागरं शुण्ठी । अत्र भल्लातकसहस्रे तु रक्तचन्दने द्विगुणम् । अत एव पठति—भल्लातकेत्यादि । पद्मं स्थितम् . पद्मं पद्मपुष्पम् ; उत्पलं नीलोत्पलम् । दशमूलं समुदितमिति ।—तेन दशमूलस्य मिलित्वा पलत्रयमित्यर्थः । चक्रमर्दं एडगजबीजम् । जीवनीयो गण इति ।—जीवनीयदशकम् । पथ्याक्षधात्र्य इति ।—अत्र त्रिफलायाश्च प्रत्येकमेव पलत्रयं ग्राह्यम् ; इह समुदितमितिपदाभावात् । द्वितीयपाकमाह, देवपुष्पीत्यादि ।—देवपुष्पादीनां कल्कः । , देवपुष्पी देवदुग्धी ; बोलो गन्धरसः । गजकोरसः गजकाररसः ; अन्ये तु—गजकोरसशब्देन कुन्दुरुमाहुः, यदुक्तं शब्दार्णवे—"कुन्दुरुर्गोपकन्यः स्यात् भीषणः गजकोरसः," इति ; तन्मते आमवर्षे कुन्दुरोः । अत्र वालकम् ; अचला त्रिवृत् ; . खोटिः काकखोटिः । नखोलयमिति ।—यद्यपि पञ्च नख्यो भवन्ति, यदुक्तं—"नखो पञ्चविधा टीका समाख्या दशसंख्याः । क्वचिद्दरपवाशा तथोपमदर्शोपमा ।

प्रत्येकं गन्धतोयेन द्वितीयः पाक इष्यते ॥
गन्धोदकन्तु लङ्कपत्री पत्रकोशीरमुस्तकम् ।
प्रत्येकं सबलामूलं पलानि पञ्चविंशतिः ॥
कुडार्द्धभागोऽत्र जल-प्रस्थास्तु पञ्चविंशतिः ।
अर्द्धावशिष्टाः कर्त्तव्याः पाके गन्धाम्बुकर्मणि ॥
गन्धाम्बु-चन्दनाम्बुभ्यां तृतीयः पाक इष्यते ।
कल्कोऽत्र केशरं कुष्ठं त्वक् कालीयककुङ्कुमम् ॥
भद्रश्रियं ग्रन्थिपर्णं लताकस्तूरिका तथा ।
लवङ्गागुरुकक्कोल-जातीकोषफलानि च ॥
एला लवङ्गकन्नी च प्रत्येकं त्रिपलोन्मितम् ।
कस्तूरी षट्पला चन्द्रात् पलं सार्द्धञ्च गृह्यते ॥
विधायैव पुनश्चन्द्रमदौ देयौ तयोर्मितौ ।
महाप्रसारणी सेयं राजभोग्या प्रकीर्त्तिता ॥

---

काचिद्गजखुराकारा मज्जकर्षसमाऽपरा । वराहकर्णसङ्काशा पञ्चमी परिकीर्त्तिता ॥"
इति । तथाप्यवाच्यास्तु चतसृषु मध्ये मत्स्योदयं यात्रं, वराहकर्णिकायाः निषिद्धत्वात् ।
यथा—"करिकर्णं तुरगखुरं मत्स्यं प्रगृह्णीत गन्धयोगेषु । धूपेषु बदरोपमपत्रं न
वराहकर्णं कुमन्यमपि ॥". लङ्कपत्री तेजपत्रम्, मुरिः ख्याता, चम्पक चम्पक-
कलिका, तदिदं पञ्चतयमित्यन्वयः । गन्धोदके लङ्कपत्री तेजपत्रम्, पत्रन्तु सुगन्धि-
पत्रान्तरं तेजपत्रसदृशं काश्मीरप्रसिद्धमिति ख्यातम् । सबलामूलं बाल्यालकस्य ( बालकस्य वा )
मूलम् । कुडार्द्धभाग इति ।—कुडवस्य सार्द्धद्वादशपलमित्यर्थः । गन्धाम्बु चन्दनाम्बुभ्या-
मिति ।—गन्धस्तु गन्धोदकं, तच्चोक्तमेव, चन्दनाम्बु चन्दनमात्रेणार्द्धमतम् । अन्ये तु—
सुपिष्टश्वेतचन्दनान्वितं वारिमात्रं वदन्ति । जातीकोषफलानीति ।—जातीकोषो जय-
त्रास., तथा जातीफलञ्चेत्यर्थः । भद्रश्रियं श्वेतचन्दनम् । लवङ्गकन्नी लवङ्गवल्क-
लम् । चन्द्रः कर्पूरं, तैलार्थे पलकञ्चार्थम् । अस्य तैलस्य मात्रिका लिख्यते,—हाथ-
मितैल श्रः ४५ क्वाथार्थे—अश्वगन्धादिशा पल २००, पौतानिकाष्टमूल पल
२००, अश्वगन्धा पल १००, एरण्डमूल पल १००, वाट्यालमूल पल १००, शतमूल्या

नखं संक्षाययेदेभिरभावे मृन्मयेन तु ॥
पुनरुद्धृत्य प्रक्षाल्य भर्जयित्वा निषेचयेत्।
गुडपथ्याम्बुना ह्येवं शुध्यते नात्र संशयः ॥ १०४ ॥

वचाशुद्धिः—गोमूत्रे चालम्बुषके पक्वा पञ्चदलोदके।
पुनः सुरभितोयेन वाष्पस्वेदेन स्वेदयेत्।
गन्धोग्रा शुध्यते ह्येवं रजनी च विशेषतः ॥ १०५ ॥

मुस्तकशुद्धिः—

मुस्तकन्तु मनाक् क्षुण्णं काञ्जिके त्रिदिनोषितम्।
पञ्चपल्लवपानीय-स्त्रिकमातपशोषितम् ॥
गुडाम्बुना सिच्यमानं भर्जयेच्चूर्णयेत् ततः।
भाजयीभाञ्जनजलैर्भावयेच्चेति शुध्यति ॥ १०६ ॥

शैलजशुद्धिः—

काञ्जिके क्वथितं शैलं भृष्टा पथ्यागुडाम्बुना।

---

निशाधौत नख्या चनुस्वेदनं कार्यमित्यर्थः, किन्तु गोमयेनाप्युत्स्वेद उक्तः। यदाह,—"गोविड्काञ्जिकविपाकसुक्षिप्ता" इति। तिन्तिडीफलयैरिति।— तिन्तिडीफलदलिर्भि-रित्यर्थः। अभावे मृन्मयेनेति।—कृष्णमृत्तिकामिश्रितजलेनेत्यर्थः। उक्तं हि—"क्षाययेत् कल्कं लघ्वमृत्तिकामिश्रिते जले"। इति। अमुद्रकर्कटप्रहिमकारोऽप्येवं, यत उक्तम्—"अनेनैव प्रकारेण शुद्धिमाप्नोति कर्कटः" इति ॥ १०४ ॥

वचाशुद्धिमाह, गोमूत्र इत्यादि।—चालम्बुषक इति।—चलम्बुषादिलोदके, "अलम्बुषा च मुण्डिरी" इति पर्यायमुक्तावली। सुरभितोयं गव्योदकम्, अनेन वाष्पस्वेदश्च कार्यः। गभीरकं स्थाल्यं निधाय तदुपरि अच्छिद्रं स्थाल्यन्तरं दत्त्वा तदा स्थाल्योदयाव-काशमासिच्य सच्छिद्रस्थालीमध्ये वचां निधाय ततः शरावेण पिधाय अधो ज्वाला देया इति वाष्पस्वेदविधिः। गन्धोग्रा वचा। रजनी च विशेषतः इति।—अनेन हरिद्रा-शुद्धिमपि वचाशुद्धिविधिनैव कुर्यादिति बोधयति ॥ १०५ ॥

मुस्तकशुद्धिमाह मुस्तकमित्यादि।—मनाक्क्षुण्णमिति।—ईषत्कुट्टितं त्रिदिनोषि-तम्, अजस्य मूत्रं मूत्रम् ॥ १०६ ॥

सिञ्चेदेवं पुनः पुष्पैर्विविधैरधिवासयेत् ॥ १०७ ॥

खट्टाशीशुद्धिः—

यथालाभमपामार्ग-स्नुह्यादिक्षारलेपितम् ।
वाष्पस्वेदेन संस्विद्य पूतिं निर्लोमतां नयेत् ॥
दोलापाके पचेत् पश्चात् पञ्चपल्लववारिणि ।
खलः साधुमिवोत्पीड्य ततो निःस्नेहतां नयेत् ॥
आजगोभाञ्जनजलैर्भावयेच्च पुनः पुनः ।
शिग्रुमूले च केतक्याः पुष्पपत्रपुटे च तम् ।
पचेदेवं विशुद्धः सन् मृगनाभिसमो भवेत् ॥ १०८ ॥
तुरुष्कं मधुना भाव्यं काश्मीरस्यापि सर्पिषा ।
रुधिरेणायसं मांसैर्गोमूत्रैर्ग्रन्थिपर्णकम् ॥
मधूदकेन मधुरीं पत्रकं तण्डुलाम्बुना ॥ १०९ ॥
ईषत्क्षाराशुगन्धा तु दग्धा याति न भस्मताम् ।
पीता कैतकगन्धाढ्या लघुस्निग्धा मृगोत्तमा ॥ ११० ॥
पक्वात् कर्पूरतः प्राहुरपक्वं गुणवत्तरम् ।
तत्रापि स्याद्यदच्छिद्रं स्फटिकाभं तदुत्तमम् ।
पक्वञ्च सदलं स्निग्धं हरितद्युति चोत्तमम् ॥ १११ ॥

---

तैलस्यशुद्धिमाह, काञ्जिक इत्यादि ।—तैलमिति ।—तैलञ्च काञ्जिके विपाच्य पञ्चपल्लवतोयेन क्षालनमित्युपदेशः ॥ १०७ ॥

खट्टाशीशुद्धिमाह, यथालाभमित्यादि ।—दोलापाकमिति ।—खट्टाशीपुटक पश्चेव पौट्लीं बद्ध्वा पञ्चपल्लवक्वाथमध्ये दोलायन्त्रमान पचेत्, तत आकृष्य निष्पीड्य निःस्नेहता स्नेहहीनता नयेत्, तदनु गोभाञ्जनादिक्वाथे बहुधा भावयेत् ; तदनु शिग्रुगोभाञ्जनमूलकल्के पिण्डे तन्निधाय तदनु कैतकीपुष्पपत्रैर्वेष्टयित्वा कुशेन बद्धा पङ्केनालिप्य पुटपाकेन पचेत्, तदनु जात्यादिकुसुमैरधिवासयेदित्युपदेशः ॥ १०८ ॥

सिह्लकादिशुद्धिमाह, तुरुष्कमित्यादि ।—तुरुष्क' सिह्लकम् । रुधिरेणेति ।—कुङ्कुमेन, आयसमित्यगुरु, मांस्यमिति सर्वत्र योज्यम् । इदानीं मृगनाभ्याद्या प्रशस्तानां लक्षणमाह,

भङ्गे मनागपि न चेन्निपतन्ति ततः कणाः ।
मृगशृङ्गोपमं कुङ्कुं चन्दनं रक्तपीतकम् ॥ ११२ ॥ ११३ ॥
घाकातुण्डाकृतिः स्निग्धो गुरुश्चैवोत्तमोऽगुरु ॥ ११४ ॥
स्निग्धाल्पकेशरन्त्वसं शालिजो वृत्तमांसलः ॥ ११५ ॥
मुरा पीता वरा प्रोक्ता मांसी पिङ्गजटाकृतिः ॥ ११६ ॥
रेणुका मुद्गसंस्थाना शस्तमानूपजं घनम् ॥ ११७ ॥
जातीफलं सगन्धञ्च स्निग्धं गुरु च शस्यते ॥ ११८ ॥
एला सूक्ष्मफला चेष्ठा प्रियङ्गुः श्यामपाण्डरा ॥ ११९ ॥
नखमश्वखुरं हस्तिकर्णञ्चैव प्रशस्यते ॥ १२० ॥
एतेषामपरेषाञ्च नवता प्रवरो गुणः ॥ १२१ ॥

महासुगन्धि-लघ्वाविलासतैले—

जिङ्गीचोरकदेवदारुसरलव्याघ्रीवचाचेलक-
त्वक्पत्रैः सहगन्धपत्रकशटीपथ्याद्यधात्रीघनैः ।
एतैः शोधितसंस्कृतैः पलयुगैत्याख्यातया संख्यया
तैलप्रस्थमवस्थितैः स्थिरमतिः कल्कैः पचेन्नाग्निकैः ॥
मांसीमुरामदनचम्पकसुन्दरीत्वग्-
ग्रन्थ्यम्बुदाम्रवकैर्हिपलैः सपृक्कैः ।
श्रीवासकुन्दुरुनखीनलिकामिषीणाम्
प्रत्येकतः पलमुपार्ध्य पुनः पचेत्तु ॥

---

ईषदित्यादि।—ईषत्स्पर्शमात्रेणैव; मृगीपमा मृगमदः। रक्तपीतकमिति।—किञ्चिद्रक्तपीतसारम्। घसमिति।—कुङ्कुमम्। शालिजः खड्गाशो ॥ १०९—१११ ॥

जिङ्गीत्यादि।—जिङ्गी मञ्जिष्ठा; व्याघ्री—विड्नीति ख्यात सुगन्धि द्रव्यं, नखी इत्यन्ये। चेलकत्वक् गुवाकवृक्षस्य त्वक्; पत्र तेजपत्रम्; गन्धपत्रं पाटियापत्रम्। पलयुगलं प्रत्येकम्; पाग्निकैरिति।—मन्दाग्निविहितैरित्यर्थः। एतैः कल्कैः प्रथम, पाकः। द्वितीयपाकार्थं कल्कमाह, मांसीत्यादि।—सुन्दरी प्रियङ्गुः; त्वक् गुडत्वक्; ग्रन्थि. ग्रन्थिपर्णम्; अम्बु बालकम्; कुन्द् कुष्ठम्; नलिका भानुका; मिषिः मधुरी,

एलालवङ्गचलचन्दनजातिपूति-
कक्कोलकागुरुलताघुसृणैः पलार्धैः।
कस्तूरिकाघनसहितामलदीप्तियुक्तैः
पक्वा तु मन्दशिखिनैव महासुगन्धम्॥
पश्चाद्दिकेन चार्धेन मदात् कर्पूरमिष्यते।
कर्पूरमदयोरर्धं पत्रकल्कादिहेष्यते॥
पत्रपूतेऽगुरुणा एव सम्यक् पेषणवर्जितम्।
दीयते गन्धवृद्ध्यर्थं पत्रकल्कं तदुच्यते॥
प्रागुक्तौ शुद्धिसंस्कारौ गन्धानामिह तैः पुनः।
द्विगुणैर्लक्ष्मीविलासः स्यादयं तैलसत्तमः॥
पञ्चपल्लवाम्बुना चाद्यो द्वितीयो गन्धवारिणा।
तृतीयोऽपि च तेनैव पाको वा धूपिताम्बुना॥
तैलयुग्ममिदं पूर्वं विकारान् वातसम्भवान्।
क्षपयेज्जनयेत् पुष्टिं कान्तिं मेधां धृतिं धियम्॥ १२२॥
इति वातव्याधि-चिकित्सा॥

---

गुर्यमोहरी (मौरी) इति लोके। एतैः कल्कैः द्वितीयः पाकः। तृतीयपाकार्थं कल्कमाह, एलेत्यादि।—चल सिह्लकः, चन्दनं श्वेतचन्दनम्, जाति जातिफलम्, पूति खट्टाशी, लता लताकस्तूरी, घुसृणं कुङ्कुमम्, घनसहिता कस्तूरिकासहित-म्, अमलदीप्तः चन्द्रः, तत्सामत्वात् कर्पूरमित्यर्थः। एभिस्तृतीयः पाकः। कर्पूरं कियन्मात्रं ग्राह्यमित्यत आह -पश्चादित्यादि।—मदात् निर्दिष्टकस्तूरिकाकर्षात्, चतुर्धाविभक्तात् तत्रैको भागो रक्तिकाद्वयाधिकमिमाषकरो भवति, तथा मानेन कर्पूरस्य द्वौ भागौ ग्राह्यावित्यर्थः। अतः कर्पूरस्य रक्तिकाचतुष्टयाधिकमाषक-षट्कमिति पिण्डार्थः। पर्यायान्तरमाह, चार्धेन चेति।—कस्तूरीकर्षार्धेनचैव चार्धेन, तेन कर्पूरस्यार्धौ माषका इत्यर्थः। ननु पत्रकल्कं कियन्मानं कर्पूरमदौ देयावित्यत आह कर्पूरमदयोरित्यादि।—इह तैलकल्के पत्रकल्कात् पत्रकल्कमानमपेक्ष्य कर्पूरमदयोरर्धमिह तैले कल्केन इष्यते, तेन तैलकल्कद्वयमया चावश्यमेव

## अथ वातरक्त-चिकित्सा ।

बाह्यं लेपाभ्यङ्गसेकोपनाहैर्वातशोणितम् ।
विरेकास्थापनस्नेह-पानैर्गम्भीरमाचरेत् ॥
द्वयोर्मुञ्चेदसृक् शृङ्ग-सूच्यलाबु-जलौकसा ।
देशाद्देशं व्रजेत् स्राव्यं शिराभिः प्रच्छनेन वा ।
अङ्गग्लानौ च न स्राव्यं रूक्षे वातोत्तरे च यत् ॥ १ ॥
अमृतानागरधन्याक-कर्षत्रयेण पाचनं सिद्धम् ।
जयति सरक्तं वातं सामं कुष्ठान्यशेषाणि ॥ २ ॥

---

कर्पूरमदाङ्कौ पञ्चकल्के तु तदपेक्षया द्विगुणौ कर्पूरमदौ देयाविति पञ्चकल्क-मानमपि भाषा कथितं भवति, तेन पञ्चकल्के कस्तूर्याः कर्षद्वयं, कर्पूरस्य तु अष्टरक्तिकाधिका द्वादश माषकाः किंवा कर्षं इति । पञ्चकल्क-शब्दस्यार्थमाह, पक्कपूत इत्यादि ।—पूर्वोक्तौ अन्यथा शुचिसंस्कारवमपि कार्यौ, तथा तैः पूर्वोक्तकस्तूरिकागन्धतैलसाधनद्रव्यैः शिलादिभिर्यदि संयुक्तं तैलमेतत् साध्यते, तदा तदपि तैलं लक्ष्मीविलाससंज्ञकञ्च भवतीत्याह—प्रागुक्तमित्यादि । पाकार्थमुभयोरपि तैलयोः क्रमात् द्रवद्रव्यमाह, पञ्चपल्लवमित्यादि ।—आम्रपत्रं, जम्बूपत्रं, कपित्थपत्रं, बिल्वपत्रं, बीजपूरकपत्रम्, एतत्सर्वमष्टगुणजले पक्त्वा चतुर्थी-शेषं कुर्यात् । गन्धवारिणा—गन्धोदकेन, तथोक्तमेव । धूपिताम्बुनेति ।—अगुर्वादि-धूपितजलेनेत्यर्थः ॥ १२२ ॥

इति वातव्याधि-चिकित्सा-विवृतिः ।

---

वातव्याधि विशेषत्वाद्वातरक्त-चिकित्सामाह,—बाह्यमित्यादि । बाह्यमिति ।—उत्तानं, त्वङ्मांसाश्रयमित्यर्थः । गम्भीरन्तु मेदःप्रभृतिधात्वाश्रयम्, यथा चोक्तं,—"त्वङ्मांसाश्रय-मुत्तानं गम्भीरन्त्वन्तराश्रयम्" इति । द्वयोरिति ।—उत्तानगम्भीरयोः । देशाद्देशं व्रजे-दिति ।—स्थानान्तरप्रसरणशीलम् । अङ्गग्लानाविति—कार्श्ये ॥ १ ॥

अमृतेत्यादि ।—प्रत्येकमेकं कर्षं गृहीत्वा कर्षत्रयमित्यर्थः ॥ २ ॥

वत्सादन्युद्भवः क्वाथः पीतो गुग्गुलुसंयुतः।
समीरणसमायुक्तं शोणितं सम्प्रसाधयेत् ॥ ३ ॥

वासागुडूचीचतुरङ्गुलानामेरण्डतैलेन पिबेत् कषायम्।
क्रमेण सर्वाङ्गजमप्यशेषं जयेदसृग्वातभवं विकारम् ॥४॥

लीढ्वा मुण्डितिकाचूर्णं मधुसर्पिःसमायुतम्।
छिन्नाक्वाथं पिबन् हन्ति वातरक्तं सुदुस्तरम् ॥ ५ ॥

तिस्रोऽथवा पञ्च गुडेन पथ्या
जग्ध्वा पिबेच्छिन्नरुहाकषायम्।
तद्वातरक्तं शमयत्युदीर्ण-
माजानुसम्भिन्नमपि द्रवच्च ॥ ६ ॥

घृतेन वातं सगुडा विबन्धम्
पित्तं सिताढ्या मधुना कफञ्च।
वातासृगुग्रं रुबुतैलमिश्रा
शुण्ठ्यामवातं शमयेद् गुडूची ॥ ७ ॥

गुडूच्याः स्वरसं कल्कं चूर्णं वा क्वाथमेव वा।
प्रभूतकालमासेव्य मुच्यते वातशोणितात् ॥ ८ ॥

---

वत्सादनीत्यादि।—पीतो गुग्गुलुसंयुत इति।—शोधनार्थं प्रायेण गुग्गुलोः कर्षं, कर्षार्द्धं वा; संशमनार्थन्तु माषकचतुष्टयमिति, एवं सर्वत्र ॥ ३ ॥

वासेत्यादि।—चतुरङ्गुलोऽत्र शोण्यालुकम्। अत्र तन्त्रान्तरसंवादादेकक्वाथ्यादेकथा त्रिगुणमेरण्डतैलं प्रक्षेप्यमित्याहुः ॥ ४ ॥

लीढ्वेत्यादि।—मुण्डितिका मुण्डिरीति ख्याता ॥ ५ ॥

तिस्रोऽथवेति।—पुरुषमपेक्ष्य आक्रान्तिमानात् तिस्रः पञ्च वा पथ्याः पिष्टा समगुडेन खादेत्; तदनु गुडूच्याः कषायमनुपेयम् ॥ ६ ॥

घृतेनेत्यादि।—षड् योगाः ॥ ७ ॥

गुडूच्याः स्वरसेन क्वाथेन चूर्णेन वा ॥ ८ ॥

दशमूलीशृतं क्षीरं सद्यःशूलनिवारणम् ।
परिषेकोऽनिलप्राये तद्वत् कोष्णेन सर्पिषा ॥ ९ ॥
पटोलकटुकाऽभीरु-त्रिफलाऽमृतसाधितम् ।
क्वाथं पीत्वा जयेज्जन्तुः सदाहं वातशोणितम् ॥ १० ॥
गोधूमचूर्णाजपयो-घृतञ्च सच्छागदुग्धो रुबुबीजकल्कः ।
लेपे विधेयं शतधौतसर्पिः सेके पयश्चाविकमेव शस्तम् ॥ ११ ॥
लेपः पिष्टास्तिलास्तद्वद्भृष्टाः पयसि निर्वृताः ॥ १२ ॥
कटुकामृतयष्ट्याह्व-शुण्ठीकल्कं समाक्षिकम् ।
गोमूत्रपीतं जयति सकफं वातशोणितम् ॥ १३ ॥
धात्रीहरिद्रामुस्तानां कषायं वा कफाधिके ॥ १४ ॥
कोकिलाक्षामृताक्वाथे पिबेत् कृष्णां कफाधिके ।
पथ्यभोजी त्रिसप्ताहान्मुच्यते वातशोणितात् ॥

---

दशमूलीत्यादौ ।—दशमूलीशृतं क्षीरं परिषेके इति योज्यं, न तु पेयम् । शूल—वातरक्तप्रदेशे व्यथा । तद्वदिति—परिषेकः ॥ ९ ॥

पटोलेत्यादौ ।—कटुका कटुरोहिणी ; अभीरुः शतावरी ; अमृता गुडूची । क्वाथमत्वात् क्वाथः ; अयं योगः पित्तोत्तरे ॥ १० ॥

गोधूमेत्यादौ ।—गोधूमचूर्णं छागदुग्धघृताभ्यां सम्भाव्य कोष्णं कृत्वा वातोत्तरे लेपः, शीतं रक्तोत्तरे । वृन्दे तु—"अस्मिन् योगे घृतं न पठ्यते, तेन घृतं विनाप्ययं योगः । घृतं पुनरयं चरके पठ्यते, यथा—"वाते सरक्ते सघृतः प्रदेहो गोधूमचूर्णं छगलीपयश्च" इति । उभयमपि प्रमाणं ऋषिवदेवमत् ॥ ११ ॥

लेप इत्यादौ ।—तिलान् दुग्धेन पिष्टा ततो भृष्टा पुनर्दुग्धे निर्वापयेदित्यर्थं, वृद्धवाग्भटसंवादात् ; किन्तु खोलकप्रष्टतिलान् दुग्धे निर्वापितान् तेनैव दुग्धेन पिष्टा लेप इति व्यवहरन्ति वृद्धाः । तद्वदिति ।—अनेन पूर्वोक्तयोगफलमतिदिश्यते ॥ १२ ॥

कटुकेत्यादौ ।—कटुका कटुरोहिणी । एषां चतुर्णां प्रत्येकं द्विमाषकं कल्कीकृत्य चतुर्माषकेण मधुना गोमूत्रपलार्द्धेन च पेयम् ॥ १३ ॥ १४ ॥

कफरक्तप्रशमनं कण्डूवीसर्पनाशनम् ।
वातरक्तप्रशमनं हृद्यं गुडघृतं स्मृतम् ॥ १५ ॥
संसर्गेषु यथोद्रेकं मिश्रं वा प्रतिकारयेत् ॥ १६ ॥
सर्वेषु सगुडां पथ्यां गुडूचीक्काथमेव वा ।
पिप्पलीवर्द्धमानं वा शीलयेत् सुसमाहितः ॥ १७ ॥

गुडूचीतैलम्—

गुडूचीक्काथकल्काभ्यां पचेत् तैलं तिलस्य च ।
पयसा च समं पक्का भिषङ्मन्देन वह्निना ॥
हन्ति वातं तथा रक्तं कुष्ठं जयति दुस्तरम् ।
त्वग्दोषं व्रणवीसर्पं कण्डूदद्रुविनाशनम् ॥ १८ ॥

नवकार्षिकः—

त्रिफलानिम्बमञ्जिष्ठा वचा कटुकरोहिणी ।
वत्सादनी दारुनिशा कषायो नवकार्षिकः ॥
वातरक्तं तथा कुष्ठं पामानं रक्तमण्डलम् ।
कुष्ठं कापालिकाकुष्ठं पामाद्येवापकर्षति ॥
पञ्चरक्तिकमापेण कार्योऽयं नवकार्षिकः ।
किन्त्वेवं साधिते क्वाथे योग्या मात्राऽत्र दीयते ॥ १९ ॥

---

कोशिलाद्येत्यादौ ।—कौशिकात्वमूलं ग्राह्यम् । घृतं गुडघृतमिति ।—घाताय्यं विहाय गुडघृतेनैव समभावेन सौहित्य वातं शमतित्याह । कल्का हृदयकमित्यम् ॥ १५ ॥

संसर्गेष्विति ।—संसर्गजेषु द्वन्द्वजेषु यथोद्रेकमिति ।—एकदोषोल्वणे । मिश्रमिति ।—समकुपिते ॥ १६—१८ ॥

नवकार्षिके ।—दारुनिशा दारुहरिद्रा । पञ्चरक्तिकमाषेण मानेन त्रिफलादीनां नव कर्षान् गृहीत्वा चाष्टगुणजलेन क्वाथः, किंवा व्यवहारविधिनैव नवकर्षः क्वाथः कार्यः, परन्तु अत्र योग्यमात्रापेक्षया अधिकं पडति तत् त्याज्यम् । एतदेवाह,—

गुडूचीघृतम्—

गुडूचीक्वाथकल्काभ्यां सपयस्कं शृतं घृतम् ।
हन्ति वातं तथा रक्तं कुष्ठं जयति दुस्तरम् ॥ २० ॥

शतावरीघृतम्—

शतावरीकल्कगर्भं रसे तस्याश्चतुर्गुणे ।
क्षीरतुल्यं घृतं पक्वं वातशोणितनाशनम् ॥ २१ ॥

अमृताद्यं घृतम्—

अमृता मधुकं द्राक्षा त्रिफला नागरं बला ।
वासाऽऽरग्वधवृश्चीर-देवदारुत्रिकण्टकम् ॥
कटुका सवरी कृष्णा काश्मर्यस्य फलानि च ।
रास्नाक्षुरकगन्धर्वं मुद्गदारघनोत्पलैः ॥
कल्कैरेभिः समैः कृत्वा सर्पिःप्रस्थं विपाचयेत् ।
धात्रीरसं समं दत्त्वा वारित्रिगुणसंयुतम् ॥
सम्यक्सिद्धन्तु विज्ञाय भोज्ये पाने च शस्यते ।
बहुदोषान्वितं वातं रक्तेन सह मूर्च्छितम् ॥
उत्तानञ्चापि गम्भीरं त्रिकजङ्घोरुजानुजम् ।
क्रोष्टुशीर्षे महाशूले चामवाते सुदारुणे ॥
वातरोगोपसृष्टस्य वेदनाञ्चातिदुस्तराम् ।
मूत्रकृच्छ्रमुदावर्त्तं प्रमेहं विषमज्वरम् ॥
एतान् सर्वान् निहन्त्याशु वातपित्तकफोद्भवान् ॥
सर्वकालोपयोगेन वर्णायुर्बलवर्द्धनम् ।

पञ्चतिक्तकमाक्षिकेत्यादि ।—भक्ष्यभोजनदानार्थं, तन्देन कर्षादौ तु फलं यावदित्यादि-परिभाषा निश्चितैव ॥ १९ ॥

गुडूचीघृते ।—क्वाथश्चतुर्गुणः, क्षीरन्तु स्नेहसममिति व्यवहरन्ति ॥ २० ॥

एव शतावरीघृतम् ॥ २१ ॥

अश्विभ्यां निर्म्मितं ह्येतं घृतमेतदनुत्तमम् ॥ २२ ॥

दशपाकबलातैलम्—

बलाकषायकल्काभ्यां तैलं क्षीरचतुर्गुणम् ।
दशपाकं भवेदेतद्वातासृग्वातपित्तजित् ॥
धन्यं पुंसवनञ्चैव नराणां शुक्रवर्द्धनम् ।
रेतोयोनिविकारघ्नमेतद्वातविकारनुत् ॥ २३ ॥

गुडूच्यादितैलम्—

गुडूचीक्वाथदुग्धाभ्यां तैलं द्राक्षारसेन वा ।
सिद्धं मधुककाश्मर्य्य-रसैर्वा वातरक्तनुत् ॥ २४ ॥

---

अश्विभ्यामित्यादौ।—वरी शतावरी, तया सह वर्त्तमानेति सवरी। अश्विभ्यां दस्राभ्यां, सृष्टत्वात् नौत्सौत्पत्त्यम् ॥ २२ ॥

दशपाकबलातैले।—बलाक्वाथः चतुर्गुणः, चतुर्गुणक्षीरसाहचर्य्यात्। तैलमिदं यथोक्तमानेन द्रवेण कल्केन च दश वारान् पक्तव्यं वीर्य्योत्कर्षार्थम्। अनेन पाकेन वह्निक्षयोऽप्यत्र नास्ति, क्षीरगतस्नेहेन न्यूनभागपूरणात्। अत्र च बहुपाकोऽपि हेतुः प्रकृतिसमसमवेतव्याध्यभिप्रायेण ज्ञेयः, तेनान्यत्रापि प्रकृतिसमसमवेते व्याधौ तैलादिस्नेहोऽपि बहुधापाकी वीर्य्योत्कर्षार्थं युज्यत एव। विकृतिविषमसमवेते तु यथोद्दिष्टमेव कार्य्यं, संयोगशक्तेरचिन्त्यत्वात्। तथाहि विकृतिविषमसमवेते व्याधिमहित्वा व्याधिहरमेव भेषजं दीयत इति कृत्वा यथोद्दिष्टमेव कार्य्यम्, प्रकृतिसमसमवेते तु दोषपरादेव व्याधिरत्र इति दोषहरमेव भेषजं दीयते इति दोषप्रत्यनीकतया बहुपाकमपि क्रियत एव। न च दोषहरमेव व्याधिहरमिति वाच्यम्, वातकफविकारेऽपि खदिरस्य व्याधिकुष्ठप्रशमप्रभावात्, खदिरं हि वातगतकमपि प्रभावात्तिक्तमपि कुष्ठमुपशमयति, न तु वातम्। किञ्च, यदि दोषहरमेव व्याधिहरमिति स्वीक्रियते, तदा प्रतिव्याधौ बहुप्रयोगकथनमपि मुनीनां व्यर्थं स्यात्। तस्माद्दोषप्रत्यनीकभेषजप्रयोगकथनेनैवान्यथासिद्धेः। तस्माद्व्याधिहरे संयोगप्रधानत्वात् यथोक्तविध्यनुसरणमेव शरणम्। दोषहरे तु वीर्य्योत्कर्षार्थमुक्तोऽनुक्तो वा बहुधा पाकोऽपि दोषप्रत्यनीकतया युक्त एवेत्याहुः। किञ्च, बहुविसर्प्यायामसाध्यत्वात् वैद्यैर्धार्य्यमनुमन्तव्ये पथ्या। इति ॥ २३ ॥

गुडूच्यादौ।—तैलद्रवमकल्कम् ॥ २४ ॥

खुड्डाकपद्मकतैलम्—

पद्मकोशीरयष्ट्याह्व-रजनीक्वाथसाधितम् ।
स्यात् पिष्टैः सर्जमञ्जिष्ठा-वीराकाकोलिचन्दनैः ।
खुड्डाकपद्मकमिदं तैलं वातास्रदोषनुत् ॥ २५ ॥

नागबलातैलम्—

शुद्धां पचेन्नागबलातुलान्तु विस्राव्य तैलाढकमत्र दद्यात् ।
अजापयस्तुल्यविमिश्रितन्तु नतस्य यष्टीमधुकस्य कल्कम् ॥
पृथक् पचेत् पञ्चपलं विपक्वं तद्वातरक्तं प्रशमत्युदीर्णम् ।
बस्तिप्रदानादिह सप्तरात्रात् पीतं दशाहात् प्रकरोत्यरोगम् ॥
तुलाद्रव्ये जलद्रोणो द्रोणे द्रव्यतुला मता ॥ २६ ॥

पिण्डतैलम्—

समधूच्छिष्टमञ्जिष्ठं ससर्जरससारिवम् ।
पिण्डतैलं तदभ्यङ्गाद्वातरक्तरुजापहम् ॥ २७ ॥

महापिण्डतैलम्—

सारिवासर्जमञ्जिष्ठा-यष्टिसिक्थैः पयोऽन्वितैः ।

---

खुड्डाकपद्मकतैले ।—वीरा—क्षीरकाकोली । खुड्डाकपद्मकं—श्रेष्ठपद्मकम् ॥ २५ ॥

नागबलातैले ।—नागबला गोरक्षचाकुलियेति ख्याता । अजापयस्तैलतुल्यम् । नतं—तगरपादिका ॥ २६ ॥

समधूच्छिष्टेत्यादौ ।—मधूच्छिष्टं मधुसिक्थकम्; सर्जरसो धूनकः; सारिवा अनन्तमूलम् । जलञ्चात्र चतुर्गुणम् । पिण्डतैलभाषया चात्र वस्त्रादिपूतमेवैतत् तैलं प्रसंचक्षते इत्याहुः । वैद्यास्तु पूर्वत्र व्यवहरन्ति; किन्तु चरके समधूच्छिष्टेत्यादि, पूर्वम्,—"आरनालाढके तैलं पादसर्जरसं शृतम् । प्रभूते खजितं तोये ज्वरदाहार्त्तिनुत् परम् ॥" इत्युक्तम्, तेन आरनालाढके साध्यं तैलमिव सर्जरसस्थाने मधूच्छिष्टादीनां प्रक्षेपादपि पिण्डतैलमुच्यते इति चक्रः । जतूकर्णेऽप्युक्तं—"कार्षिकसर्जरसयुतं अजितं बहुना जलेन दाहहितम् । सिक्थानन्तासिक्थकसर्जरसैर्युक्तं मथितं वा ॥" इति ॥ २७ ॥

तैलं पक्वं विमञ्जिष्ठे रुधोर्वा वातरक्तनुत् ॥ २८ ॥

कैशोरको गुग्गुलुः—

वरमहिषलोचनोदर-सन्निभवर्णस्य गुग्गुलोः प्रस्थम् ।
प्रक्षिप्य तोयराशौ त्रिफलाञ्च यथोक्तपरिमाणाम् ॥
द्वात्रिंशच्छिन्नरुहापलानि देयानि यत्नेन ।
विपचेत् तदप्रमत्तो दर्व्या सङ्घट्टयन् मुहुर्यावत् ॥
अर्द्धक्षयितं तोयं जातं ज्वलनस्य सम्पर्कात् ।
अवतार्य्य वस्त्रपूतं पुनरपि सम्पाचयेत् पात्रे ॥
सान्द्रीभूते तस्मिन्नवतार्य्य हिमोपलप्रख्ये ।

---

अपरपिण्डतैलमप्याह, सारिवेत्यादि ।—यष्टिर्यष्टिमधुकम्, पद्मं पद्मकम्, इह द्रवान्तराभावात् । विमञ्जिष्ठेरित्यादि तु तृतीयं पिण्डतैलम् । विमञ्जिष्ठे,—मञ्जिष्ठा-रहिते, सारिवादिभिः कल्के रुधोरेरण्डस्य तैलं चतुर्गुणेन पयसा सह पक्वं सत् अपरं पिण्डतैलं भवतीत्यर्थः । विमञ्जिष्ठमिति पाठे—क्रियाविशेषणम् ॥ २८ ॥

कैशोरगुग्गुलौ ।—वरमहिषलोचनोदरसन्निभवर्णस्येति ।—लोहितवर्णस्येत्यर्थः, न तु कृष्णस्य, महामहिषलोचनोदरवर्णो हि लोहित एव भवतीति । त्रिफलाञ्च यथोक्तपरिमाणामिति ।—प्रत्येकं प्रस्थमानाम् । छिन्नरुहा गुडूची, तस्या द्वात्रिंशत् पलानि । एवं मिलित्वा सप्तशतिपलानि द्रव्याणि । अत्र हि द्रवद्वैगुण्यात् चतुर्गुणितं जलं दीयमानं सप्तशतिशरावपरिमितं भवति । सप्तशतिशरावैश्च सप्ताढका भवन्ति । एतत् सर्वमभिप्राय वदति—"प्रत्येकं त्रिफलाप्रस्थ" इत्यादि । अन्ये त्वाहुः,—त्रिफलाञ्च यथोक्तपरिमाणामिति,—मिलित्वा प्रस्थमाना, समुदायप्रधानत्वान्निर्देशस्य । तेन गुग्गुलुप्रभृतीनि द्रव्याणि मिलित्वा चतुःषष्टिपलानि भवन्ति ; तत्र चौर्यं सिद्ध, अन्ये तु षष्टिशरावमेव, चतुःषष्टिशरावैश्च द्रोणो भवति, तेन तोयराशिशब्देनात्र द्रोण एव बोध्य इति । अत्र गुग्गुलु पुटके बद्धा अपरैः क्वाथ्यैः सह तोयराशौ क्वथनीयः । पश्चात् गुग्गुलु विहाय क्वाथ्यं त्यक्त्वा सिद्धे तद्रूपक्वाथे पुनस्तं गुग्गुलुं क्षिप्त्वा पचनीयं यावत् घनीभवति, दर्व्यालेपेऽवतार्य्य त्रिफलादिचूर्णं प्रक्षिपेदिति, अन्ये गुग्गुलुं विहाय क्वाथं कृत्वा पश्चात् सिद्धे कटुकक्वाथे गुग्गुलुं गोलयन्ति, तत्र दुष्टं, गुग्गुलोः क्वाथ्यत्वेनोक्तत्वात् । एवं वक्ष्यमाणेऽमृताख्यगुग्गुलावपि द्रष्टव्यम् । हिमोपलप्रख्ये इति ।—हिमशिलावत् शीते । अत्र चैतन्मित्र मतानुकूलः वचनाद्बोध्यते । अन्यत्र तु कोष्णे एव चूर्णानां दानं दृश्यते ।

त्रिफलाचूर्णार्द्धपलं त्रिकटोश्चूर्णं षड्क्षपरिमाणम् ॥
क्रिमिरिपुचूर्णार्द्धपलं कर्षं कर्षं त्रिवृद्दन्त्योः ।
पलमेकञ्च गुडूच्या दत्त्वा संमूर्च्छ्य यत्नेन ॥
उपयुज्य चानुपानं यूषं तोयं सुगन्धि सलिलेन ।
इच्छाहारविहारी भेषजमुपयुज्य सर्वकालमिदम् ॥
तनुरोधि वातशोणितमेकजमथ द्वन्द्वजं चिरोत्थञ्च ।
जयति स्रुतं परिशुष्कं स्फुटितञ्चाजानुजञ्चापि ॥
व्रणकासकुष्ठगुल्मं श्वयथूदरपाण्डुमेहांश्च ।
मन्दाग्निञ्च विबन्धं प्रमेहपीड़काश्च नाशयत्याशु ॥
सततं निषेव्यमाणः कालवशाद्धन्ति सर्वगदान् ।
अभिभूय जरादोषं याति हि कैशोरकं रूपम् ॥
प्रत्येकं त्रिफलाप्रस्थो जलं तत्र षड़ाढ़कम् ।
गुड़वद्गुग्गुलोः पाकः सवन्धस्तु विशेषतः ॥ २८ ॥

अमृतागुग्गुलुः—

प्रस्थमेकं गुड़ूच्यास्तु अर्द्धप्रस्थञ्च गुग्गुलोः ।
प्रत्येकं त्रिफलायाश्च तत्प्रमाणं विनिर्दिशेत् ॥
सर्वमेकत्र संक्षुद्य क्वाथयेत् नल्वणेऽम्भसि ।
पादशेषं परिस्राव्य पुनरग्नावधिश्रयेत् ॥
तावत् पचेत् कषायं तं यावत् सान्द्रत्वमागतम् ।

---

अत्र त्रिफलाचूर्णार्द्धपलं मिलित्वैव गृह्यते, मानप्रधानत्वात् निर्देशस्य ; प्रत्येकन्तु व्याख्यानन्ति । त्रिकटोश्चूर्णं षड्क्षपरिमाणमिति ।—मिलित्वा । क्रिमिरिपुर्विड़ङ्गः । यूषं तोयमित्यादौ ।—प्रत्यन्दो बोध्यः । कैशोरकं रूपमिति ।—किशोरो यौवनोन्मुखोऽप्राप्तकः ॥ २८ ॥

अमृताख्यगुग्गुलौ ।—तत्प्रमाणमिति ।—प्रस्थार्द्धम् । श्लोकसार्द्धपलमिति ।—प्रत्येकम् ;

दन्तीत्र्योपविडङ्गानि गुडूचीत्रिफलात्वचः ॥
ततश्चार्द्धपलं पूतं गृह्णीयाच्च प्रति प्रति ।
कर्षन्तु त्रिवृतायास्तु सर्व्वमेकत्र कारयेत् ॥
तस्मिन् सुसिद्धं विज्ञाय कवोष्णे प्रक्षिपेद् बुधः ।
ततश्चाग्निबलं ज्ञात्वा तस्य मात्रां प्रदापयेत् ॥
वातरक्तं तथा कुष्ठं गुदजान्यग्निसादनम् ।
दुष्टव्रणप्रमेहांश्च सामवातं भगन्दरम् ।
नाड्याढ्यवातश्वयथून् सर्व्वानेतान् व्यपोहति ॥
अश्विभ्यां निर्म्मितः पूर्व्वममृताख्यो हि गुग्गुलुः ।
अर्द्धप्रस्थं त्रिफलायाः प्रत्येकमिह गृह्णाति ॥ ३० ॥

पुनर्नवागुग्गुलुः—

अमृतायाश्च द्विप्रस्थं प्रस्थमेकञ्च गुग्गुलोः ।
प्रत्येकं त्रिफलाप्रस्थं वर्षाभूप्रस्थमेव च ॥
सर्व्वमेतच्च संक्षुद्य क्वाथयेन्नल्वणेऽम्भसि ।
पुनः पचेत् पादशेषं यावत् सान्द्रत्वमागतम् ॥
दन्तीचित्रकमूलानां कणाविश्वफलत्रिकम् ।
गुडूचीत्वग्विडङ्गानां प्रत्येकार्द्धपलोन्मितम् ॥
त्रिवृताकर्षमेकन्तु सर्व्वमेकत्र चूर्णयेत् ।
सिद्धे चोष्णे क्षिपेत् तत्र अमृतागुग्गुलोः परम् ॥
यथाबाग्निबलं खादेदम्लपित्ती विशेषतः ।
वातरक्तं तथा कुष्ठं गुदजान्यग्निसादनम् ॥

---

त्रिफलात्वच इति ।—निस्त्वक्त्रिफलायाः प्रत्येकमर्द्धपलम् । तन्प्रमाणमिति पदद्वय- माह—"अर्द्धप्रस्थं त्रिफलायाः" इत्यादि ॥ ३० ॥

पुनर्नवागुग्गुल्वौ ।—त्वक् गुडत्वक् । अमृतागुग्गुलोः परमिति ।—अनन्तर, भाद्रा- मिति शेष, तेन परमित्यनन्तरममृतागुग्गुलोर्मात्रा यथावह्निबलं खादेदित्यर्थः ।

दुष्टव्रणप्रमेहांश्च सामवातं भगन्दरम्।
नाड्याढ्यवातं श्वयथून् हन्यात् सर्वामयानयम्॥
अश्विभ्यां निर्मितो ह्येषोऽमृताख्यो गुग्गुलुः पुरा॥ २१॥

योगसारामृतः—

शतावरी नागबला वृद्धदारकमुच्चटा।
पुनर्नवामृता कृष्णा वाजिगन्धा त्रिकण्टकम्॥
पृथग्दशपलान्येषां श्लक्ष्णचूर्णानि कारयेत्।
तदर्द्धशर्करायुक्तं चूर्णं संमर्दयेद् बुधः॥
स्थापयेत् सुदृढे भाण्डे मध्वर्द्धाढ़कसंयुतम्।
घृतप्रस्थे समालोड्य त्रिसुगन्धिपलेन तु॥
तं खादेदिष्टचेष्टात्मा यथाग्निबलं नरः।
वातरक्तं क्षयं कुष्ठं कार्श्यं पित्तास्रसम्भवम्॥
वातपित्तकफोत्थांश्च रोगानन्यांश्च तद्विधान्।
कृत्वा करोति पुरुषं वलीपलितवर्जितम्॥
योगसारामृतो नाम लक्ष्मीकान्तिविवर्द्धनः॥ २२॥
दिवास्वप्नाग्निसन्तापं व्यायामं मैथुनं तथा।
कट्वूष्णगुर्वभिष्यन्दि-लवणाम्लानि वर्जयेत्॥ २३॥

बृहद्गुडूचीतैलम्—

तुलां पचेज्जलद्रोणे गुडूच्याः पादशेषितम्।
क्षीरद्रोणश्च ताभ्यान्तु पचेत् तैलाढ़कं शनैः॥
कल्कैर्मधुकमञ्जिष्ठा जीवनीयगणस्तथा।
कुष्ठैलागुरुमृद्वीका मांसी व्याघ्रीनखं नखी॥
हरेणु सारिवे व्योषं शताह्वा भृङ्गसारिवे।

---

अमृताख्यो गुग्गुलुः पुरेति।—अमृतानिर्मितत्वादमृताख्यः। यद्यप्ययममृतायोगादमृताख्यगुग्गुलुस्तथापि पुनर्नवायोगात् पुनर्नवागुग्गुलुरिति नामान्तरं, पूर्वोक्तामृताख्यगुग्गुलोर्व्यवच्छेदार्थं वा॥ २१॥

त्वक्पत्रे वचविक्रान्ता स्थिरा चामलकी तथा ॥
नतं केशरह्रीबेर-पद्मकोत्पलचन्दनैः ।
सिद्धं कर्षसमैर्भागैः पानाभ्यङ्गानुवासने ॥
परं वातास्रजान् हन्ति सर्वजानन्तरस्थितान् ।
धन्यं पुंसवनं स्त्रीणां गर्भदं वातपित्तनुत् ॥
स्वेदकण्डूरुजायामा-शिरःकम्पादिकामयान् ।
हन्याद्रक्तप्रसक्तान् दोषान् गुडूचीतैलमुत्तमम् ॥ २४ ॥

इति वातरक्त-चिकित्सा ॥

## अथोरुस्तम्भ-चिकित्सा ।

श्लेष्मणः क्षपणं यत् स्यान्न च मारुतकोपनम् ।
तत् सर्वं सर्वदा कार्य्यमूरुस्तम्भस्य भेषजम् ॥ १ ॥
न तत्र स्नेहनं कार्य्यं न वस्तिर्न विरेचनम् ।
सर्वो रूक्षः क्रमः कार्य्यस्तत्रादौ कफनाशनः ॥
पश्चाद्वातविनाशाय कृत्स्नः कार्य्यः क्रियाक्रमः ॥ २ ॥
शिलाजतु गुग्गुलुं वा पिप्पलीमथ नागरम् ।
ऊरुस्तम्भे पिबेन्मूत्रैर्दशमूलीरसेन वा ॥ ३ ॥

---

योगसारामृते ।—गदर्द्दंष्ट्रा[illegible]मिति ।—समुदित[illegible]भागं प्रत्येकं । [illegible]मिति ।—प्रत्येकम् ॥ २१—२४ ॥

इति वातरक्त-चिकित्सा-विवृतिः ॥

---

श्लेष्मधातुजन्यत्व-[illegible]चिकित्सा[illegible], श्लेष्मण इत्यादि ।—एवंविधं भेषजमरिष्टादि ॥ १ ॥

ऊरुस्तम्भे स्नेहनादिनिषेधमाह, न तत्रेत्यादि ।—स्नेहनमिति ।—पानाभ्यङ्गाभ्याम्, किंवा स्नेहनमिति वस्तिकर्मविशेषणं, [illegible] । विरेचनग्रहणात् वमनमपि बोध्यम्, ऊरुस्तम्भे वमनस्यापि निषिद्धत्वात् ॥ २ ॥

शिलाजतु इत्यादि ।—शिलाजतु शोधितमेकैकम् । [illegible] गोमूत्रेण, दशमूलीक्वाथेन वा पानम् ॥ ३ ॥

भल्लातकामृताशुण्ठी-दारुपथ्यापुनर्नवाः ।
पञ्चमूलीद्वयोन्मिश्रा ऊरुस्तम्भनिबर्हणाः ॥
पिप्पलीपिप्पलीमूल-भल्लातक्वाथ एव वा ।
कल्को वा समधुर्देय ऊरुस्तम्भनिबर्हणः ॥ ४ ॥
त्रिफलाचव्यकटुकं ग्रन्थिकं मधुना लिहेत् ।
ऊरुस्तम्भविनाशाय पुरं मूत्रेण वा पिबेत् ॥ ५ ॥
लिह्याद्वा त्रिफलाचूर्णं क्षौद्रेण कटुकायुतम् ।
सुखाम्बुना पिबेद्वापि चूर्णं षड्धरणं नरः ॥ ६ ॥
पिप्पलीवर्द्धमानं वा माक्षिकेण गुडेन वा ।
ऊरुस्तम्भे प्रशंसन्ति गण्डीरारिष्टमेव वा ॥ ७ ॥
चव्याभयाग्निदारूणां समधुः स्यादुरुग्रहे ।

---

भल्लातकेत्यादि ।—भल्लातकादिभिर्दशमूलान्तैर्मिलित्वा क्वाथ इत्याह । पिप्पलीत्यादि ।—पिप्पल्यादीनां त्रयाणां क्वाथो वा देयः; पिप्पल्यादीनां कल्क इति ।—चूर्णं मधुसहितं वा अवलेहरूपतया देयं, किंवा पिप्पल्यादीनां चूर्णं पानयोग्यं मधु दत्त्वा पेयम् ॥ ४ ॥

त्रिफलेत्यादि ।—कटुकं त्रिकटुकम् । पुरं मूत्रेण वा पिबेदिति ।—यद्यप्ययं योगः "त्रिफलाजतु गुग्गुलुं वा" इत्यादिना पूर्वमेवोक्तस्तथापि सम्पूर्णयोगानुसन्धानात् पुनरत्रैव लिखितः । कटुकायुतमिति ।—त्रिकटुयुतं कटुरोहिणीयुतं वा । षड्धरणं—वातव्याध्युक्तम् । यद्यपि षड्धरणं पिबेदित्येतावतैव सुखाम्बुना इति लभ्यते, तयोः दृष्टैव षड्धरणपानस्य पूर्वमुक्तत्वात्, तथाप्यनन्तरोक्तपीडैव पानाम्बुनिरासार्थमेतदुक्तं भवति ॥ ५ । ६ ॥

पिप्पलीवर्द्धमानं वेति ।—पिप्पलीवर्द्धमाननियमक्रमेण पिप्पलीं गृहीत्वा चूर्णयित्वा मधुना गुडेन वा सहोपयुञ्जीत । गण्डीरारिष्टमेव वेति ।—गण्डीरः समठः, स तु स्वजनो ग्राह्यः, तीक्ष्णत्वात्; तस्यारिष्टं सन्धानम्; तच्च गण्डीरपल्लवं जलद्रोणेन पक्त्वा पादावशेषे तस्मिन् गुडतुलामावाप्य धातकीलोध्रलिप्ते कुम्भे सन्धानीयम्, इत्थं यदा भवति तदोपयोज्यम् । किंवा चरिष्टो निम्बः । समठनिम्बयोरुभयमनन्तरोक्तेन मधुना गुडेन वा सहोपयोज्यम् ॥ ७ ॥

कल्को दिहेच्च मूत्राढ्यैः करञ्जफलसर्षपैः ॥ ८ ॥
क्षौद्रसर्षपवल्मीक-मृत्तिकासंयुतं भिषक्।
गाढमुत्सादनं कुर्य्यादूरुस्तम्भे प्रलेपनम् ॥ ९ ॥
कफक्षयार्थं व्यायामेष्वेनं शक्तेषु योजयेत्।
स्थलान्याक्रामयेत् कल्यं प्रतिस्रोतो नदीं तरेत् ॥ १० ॥

अष्टकट्वरं तैलम्—

पलाभ्यां पिप्पलीमूल-नागरादष्टकट्वरम्।
तैलप्रस्थः समो दध्ना स्तम्भमूरुस्तम्भापहः।
अष्टकट्वरतैलेऽस्मिन् तैलं सार्षपमिष्यते ॥ ११ ॥

कुष्ठाद्यं तैलम्—

कुष्ठश्रीवेष्टकोदीच्य-सरलं दारु केशरम्।
अजगन्धाऽश्वगन्धा च तैलं तैः सार्षपं पचेत्।
सक्षौद्रं मात्रया तस्मादूरुस्तम्भार्दितः पिबेत् ॥ १२ ॥

---

करञ्जेत्यादि।—समस्तः कल्कः "देह" इति योज्यम्। दिहेदित्यादि—सर्षपैरित्यन्त एको योगः ॥ ८ ॥

उत्सादनमुद्वर्त्तनम्। स्थलानीति।—कर्कशदेशान्, स्थलानीति पाठे—स एवार्थः। कल्यमिति,—प्रातः, प्रतिस्रोतमिति ॥ ९ ॥ १० ॥

अष्टकट्वरतैले।—पलाभ्यां पिप्पलीमूलनागरादिति।—पिप्पलीमूलनागराभ्यां मिलित्वा पलद्वयं, केचित्प्रत्येकमिति निर्दिशन्ति। चक्रोऽपि 'पिप्पल्यादिघृतवदत्रापि द्वयोरष्टपलमित्याह'। अन्ये—टिप्पनीकारास्तु पिप्पलीमूलनागरयोः प्रत्येकमेकपलमित्युक्तम्, मिलित्वा प्रत्येके पलद्वयम्, यथोक्ता 'कल्कस्यांशतैलस्येति' संदिशन्ति। अष्ट-कट्वरमिति।—अष्टगुणं कट्वरं दध्यादिसंज्ञकं येन ॥ ११ ॥

कुष्ठेत्यादौ।—श्रीवेष्टकः सर्जनिर्यासः, अजगन्धा यवानी। चतुर्गुणजलेन पाकः। सक्षौद्रमिति—प्रक्षेपविधया; क्षौद्रस्य प्रक्षेपो विधेयः, उक्तं हि चरके—"ऊरुस्तम्भे वातकोपश्चिकित्सा परिपूर्वकः। स्वेदस्नेहक्रमस्तत्र

सैन्धवाद्यं हितं तैलं वर्षाभ्वमृतगुग्गुलुः ॥ १२ ॥

इत्यूरुस्तम्भ-चिकित्सा ।

---

## अथामवात-चिकित्सा ।

लङ्घनं स्वेदनं तिक्तं दीपनानि कटूनि च ।
विरेचनं स्नेहपानं वस्तयश्चाममारुते ॥
सैन्धवाद्येनानुवास्य क्षारवस्तिः प्रशस्यते ॥ १ ॥
आमवाते पञ्चकोल-सिद्धं पानान्नमिष्यते ।
रूक्षः स्वेदः प्रकर्त्तव्यो वालुकापुटकैस्तथा ॥ २ ॥
शटी शुण्ठ्यभया चोग्रा देवाह्वातिविषामृता ।
कषायमामवातस्य पाचनं रूक्षभोजनम् ॥ ३ ॥
शटीविश्वौषधीकल्कं वर्षाभूक्वाथसंयुतम् ।

---

कार्य्यो वातामयापहः ॥" इति । सैन्धवाद्यमित्यादौ ।—सैन्धवाद्यं तैलं वातव्याध्युक्तं, पुनर्नवागुग्गुलुरमृतागुग्गुलुश्च वातरक्ते बोध्यः ॥ १२ । १२ ॥

इत्यूरुस्तम्भचिकित्सा-विवृतिः ।

---

आमवातजन्यत्व सामान्यादूरुस्तम्भानन्तरमामवातचिकित्सामाह, लङ्घनमित्यादि ।—विरेचनन्तु महेश्वरपत्रिकायां विशेषेणोक्तम् ; यतो हि—"त्रिवृत्सैन्धवशुण्ठीना कारनालेन चूर्णितम् । पीत्वा विरेचयेज्जन्तुमामवातहरं परम् ॥ समाहृत्य त्रिवृच्चूर्णं त्रिवृत्क्वाथेन भावितम् । काञ्जिकेन तु तत् पीतं रेचनमामवातिनाम् ॥" इति । तत् सर्वमत्र बोध्यम् । स्नेहपानमिति ।—लङ्घनादिभिरामक्षये जाते तदनन्तरं चलस्य वायोः प्रशमनार्थं स्नेहपानं, किंवा स्नेहसम्बन्धेनात्र विरेचकतया एरण्डतैलं बोध्यम् । वस्तय इति ।—शोधनवस्तयः । रूक्षः स्वेद इति ।—रूक्षस्वेदः तन्त्रान्तरोक्तः, यथा—"कार्पासास्थिकुलत्थतिलयववैरेरण्डमूलातसी-वर्षाभूशणबीजकाञ्जिकयुतैरेकीकृतैर्वा पृथक् । स्वेदः स्यादथ कूर्परोदरशिरःस्फिक्पाणिपादाङ्गुलि-श्रोणीगुल्फकटीरुजो विजयते सामाः समस्ता रुजः ॥" इति ॥ १—२ ॥

शट्यादौ ।—उग्रा वचा ॥ ३ ॥

सप्तरात्रं पिबेज्जन्तुरामवातविनाशनम् ॥ ४ ॥

रास्नादशमूलकम्—

दशमूलामृतैरण्ड-रास्नानागरदारुभिः ।
क्वाथो रुबूकतैलेन सामं हन्त्यनिलं गुरुम् ॥ ५ ॥
दशमूलीकषायेण पिबेद्वा नागराम्भसा ।
कुक्षिबस्तिकटीशूले तैलमेरण्डसम्भवम् ॥ ६ ॥

रास्नापञ्चकम्—

रास्नां गुडूचीमेरण्डं देवदारु महौषधम् ।
पिबेत् सार्वाङ्गिके वाते सामे सन्ध्यस्थिमज्जगे ॥ ७ ॥

रास्नासप्तकम्—

रास्नामृतारग्वधदेवदारु-त्रिकण्टकैरण्डपुनर्नवानाम् ।
क्वाथं पिबेन्नागरचूर्णमिश्रं जङ्घोरुपृष्ठत्रिकपार्श्वशूली ॥ ८ ॥
शुण्ठीगोक्षुरकक्वाथः प्रातःप्रातर्निषेवितः ।
सामवाते कटीशूले पाचनो रुक्प्रणाशनः ॥ ९ ॥
आमवाते कणायुक्तं दशमूलीजलं पिबेत् ।
खादेद्वाऽप्यभयाविश्वं गुडूचीं नागरेण वा ॥ १० ॥

---

दशमूलेत्यादी—रुबूकतैलेनेति ।—प्रक्षेपार्थम् एरण्डतैलस्य कर्षः, अर्द्धकर्षो वा । क्वथनार्थं पुनः षट्टी मात्रका इति ॥ ४—६ ॥

रास्नापञ्चके—पिबेदिति ।—क्वाथरूपतया । अत्र केचित्, तथा रास्नादि-रास्नासप्तकेऽपि यदि विरेचयितव्योऽग्निर्नो भवति, तदा एरण्डतैलं प्रक्षेप्यमिति वदन्ति । रास्नासप्तके—पार्श्वेत्यादि ।—स्पष्टम् ७ ॥ ८ ॥

शुण्ठीगोक्षुरकक्वाथ इत्यादि ।—अत्र शुण्ठ्या आमपाचकत्वं, गोक्षुरस्य मूत्रवर्धकत्वं, कोष्ठभेदे कर्तव्ये यवक्षारमप्यत्र प्रक्षिपन्ति ॥ ९ ॥

अभयाविश्वमिति ।—हरीतकीचूर्णं मा २, शुण्ठीचूर्णं मा २, पिष्टा खादेत्, तदनु जलमनुपेयम् । गुडूचीं नागरेण वा इति ।—क्वाथेन व्यवहारः । केचित्तु—पिष्टा कल्करूपेण भक्षयन्ति ॥ १० ॥

एरण्डतैलयुक्तां हरीतकीं भक्षयेन्नरो विधिवत् ।
आमानिलार्त्तियुक्तो गृध्रसि-ब्रध्नार्दितो नित्यम् ॥ ११ ॥

कर्षं नागरचूर्णस्य काञ्जिकेन पिबेत् सदा ।
आमवातप्रशमनं कफवातहरं परम् ॥ १२ ॥

पञ्चकोलकचूर्णं च पिबेदुष्णेन वारिणा ।
मन्दाग्निशूलगुल्माम-कफारोचकनाशनम् ॥ १३ ॥

अमृतानागरगोक्षुरमुण्डितिकावरुणकैः कृतं चूर्णम् ।
मस्त्वारनालपीतं चामानिलनाशनं ख्यातम् ॥ १४ ॥

वैश्वानरं चूर्णम्—

माणिमन्थस्य द्वौ भागौ यमान्यास्तद्वदेव तु ।
भागास्त्रयोऽजमोदाया नागराद्भागपञ्चकम् ॥
दश द्वौ च हरीतक्याः श्लक्ष्णचूर्णीकृताः शुभाः ।
मस्त्वारनालतक्रेण सर्पिषोष्णोदकेन वा ॥
पीतं जयत्यामवातं गुल्मं हृद्वस्तिजान् गदान् ।
प्लीहानं ग्रन्थिशूलादीनानाहार्शांसि पीनसम् ॥
विबन्धं जाठरान् रोगांस्तथा वै हस्तपादजान् ।
वातानुलोमनमिदं चूर्णं वैश्वानरं स्मृतम् ॥ १५ ॥

---

एरण्डेत्यादि ।—हरीतकीचूर्णमेरण्डतैलेनावलेहः ॥ ११ ॥

कर्षं नागरचूर्णस्येत्यादि ।—शुण्ठीचूर्णस्य कर्षपरिमाणस्य काञ्जिकस्य सर्वेण सर्वोपयोगः प्रचरति ॥ १२ ॥

पञ्चकोलकेत्यादि ।—समभागपञ्चकोलकचूर्णं माषकाष्टकमुष्णजलेन पेयम् ॥ १३ ॥

अमृतेत्यादौ ।—वरुणं वरुणमूलम् ॥ १४ ॥

वैश्वानरचूर्णमाह, माणिमन्थस्येत्यादि ।—माणिमन्थं सैन्धवम् । यमान्यास्तद्वदिति ।—भागद्वयम् । भागास्त्रयोऽजमोदाया इति ।—अजमोदा यमानी, तेन पञ्चभागो यमान्या एव , [illegible] यमानीद्वयमे यवचारं पठन्ति ; केचिदजमोदायमानीं पृथगेव यमान्या भागद्वयं

(१) अलम्बुषाद्यं चूर्णम्—

अलम्बुषां गोक्षुरकं गुडूचीं वृद्धदारकम् ।
पिप्पलीं त्रिवृतां मुस्तं वरुणं सपुनर्नवम् ॥
त्रिफलां नागरञ्चैव श्लक्ष्णचूर्णानि कारयेत् ।
मस्त्वारनालतक्रेण पयोमांसरसेन वा ॥
आमवातं निहन्त्याशु श्वयथुं सन्धिसंस्थितम् ॥ १६ ॥

(२) अलम्बुषाद्यं चूर्णम्—

अलम्बुषागोक्षुरक-त्रिफलानागरामृताः ।
यथोत्तरं भागवृद्धा श्यामाचूर्णञ्च तत्समम् ॥
पिबेन्मस्तुसुरातक्र-काञ्जिकोष्णोदकेन वा ।
पीतं जयत्यामवातं सशोथं वातशोणितम् ॥
त्रिकजानूरुसन्धिस्थं ज्वरारोचकनाशनम् ।
पथ्याक्षधात्र्यस्त्रिफला भागवृद्ध्यावयं क्रमः ॥ १७ ॥
पथ्या:विक्षयमानोभिस्तुल्याभिश्चूर्णितं पिबेत् ।
तक्रेणोष्णोदकेनापि अथवा काञ्जिकेन च ।
आमवातं निहन्त्याशु शोथं मन्दाग्नितामपि ॥ १८ ॥

शतपुष्पाद्यं चूर्णम्—

शतपुष्पा विडङ्गञ्च सैन्धवं मरिचं समम् ।

---

प्रयच्छन्ति । अन्ये तु अजमोदाद्यौ समभागौ गृह्णन्ति ; विश्वस्य परिमाणेन समाचैव युक्ता । दश द्वौ चेति ।—द्वादश भागा इत्यर्थः ॥ १५ ॥

अलम्बुषामित्यादि ।—अलम्बुषा मुण्डितिका ; वृद्धदारकं वृद्धदारकमूलम् ; वरुण वरुणमूलम् ॥ १६ ॥

अलम्बुषाद्यचूर्णे ।—यथोत्तरं भागवृद्धेति ।—यद् यत् परं तत्तदेकभागवृद्धमित्यर्थः । श्यामा वृद्धदारकः, तत्समनिति ।—मिलितचूर्णसमम् । त्रिफलाया येन क्रमेण भागवृद्धिं कुर्यात् तं क्रममाह,—पथ्याक्षधात्र्य इत्यादि । अयमेव क्रमो वृन्देऽन्यव्यवहारविद्भिरन्देनापि लिखितः ॥ १७ ॥

पथ्येत्यादी ।—चूर्णितमिति ।—भावे क्तः, तेन पथ्यादिभिः कृतं चूर्णं पिबेदित्यर्थः ॥ १८ ॥

चूर्णमुष्णाम्बुना पीतमग्निसन्दीपनं परम् ॥ १९ ॥

हिङ्ग्वाद्यं चूर्णम्—

हिङ्गु चव्यं विडं शुण्ठी कृष्णाजाजी सपौष्करम् ।
भागोत्तरमिदं चूर्णं पीतं वातामजिद्भवेत् ॥ २० ॥

योगराजगुग्गुलुः—

चित्रकं पिप्पलीमूलं यमानी कारवी तथा ।
विडङ्गान्यजमोदा च जीरकं सुरदारु च ॥
चव्यैला सैन्धवं कुष्ठं रास्नागोक्षुरधान्यकम् ।
त्रिफलां मुस्तकं व्योषं त्वगुशीरं यवाग्रजम् ॥
तालीशपत्रं पत्रञ्च सूक्ष्मचूर्णानि कारयेत् ।
यावन्त्येतानि चूर्णानि तावन्मात्रन्तु गुग्गुलुम् ॥
सम्मर्द्य सर्पिषा गाढं स्निग्धे भाण्डे निधापयेत् ।
ततो मात्रां प्रयुञ्जीत यथेष्टाहारवानपि ॥
योगराज इति ख्यातो योगोऽयममृतोपमः ।
आमवाताढ्यवातादीन् क्रिमिदुष्टव्रणानपि ।
प्लीहगुल्मोदराध्मान-दुर्नामानि विनाशयेत् ॥
अग्निञ्च कुरुते दीप्तं तेजोवृद्धिं बलं तथा ।
वातरोगान् जयत्येष सन्धिमज्जगतानपि ॥ २१ ॥

---

मधुपेयादि।—व्यष्टम्। हिङ्गु चव्यमित्यादौ।—कृष्णा पिप्पली। अजाजी सित-जीरकमिति नियमः, कृष्णाजाजी कृष्णजीरकमिति कृष्णटिप्पनी। भागोत्तरमिति।—यथोत्तरम् एकभाग-परिवृद्धम्। पीतमिति।—उष्णाम्बुना ॥ १९ ॥ २० ॥

योगराजगुग्गुलौ।—कारवी कृष्णजीरकम्; अजमोदा यमानी, अन्तःपरिमाणेन-त्वात्, एवमन्यत्रापि। सम्मर्द्य सर्पिषा गाढमिति।—प्रथमं तावत् घृतं दत्त्वा केवलो गुग्गुलुः पेषणीयः। पश्चादन्यसमस्तं चूर्णं दत्त्वा पेषणीयः। सम्यक् चूर्णमिलने तु

सिंहनादगुग्गुलुः—

पलत्रयं कषायस्य त्रिफलायाः सुचूर्णितम् ।
सौगन्धिकपलञ्चैकं कौशिकस्य पलं तथा ॥
कुडवं चित्रतैलस्य सर्वमादाय यत्नतः ।
पाचयेत् पाकविद्वैद्यः पात्रे लौहमये दृढ़े ॥
हन्ति वातं तथा पित्तं श्लेष्माणं खञ्जपङ्गुताम् ।
श्वासं सुदुर्जयं हन्ति कासं पञ्चविधं तथा ॥
कुष्ठानि वातरक्तानि गुल्मशूलोदराणि च ।
आमवातं जयेदेतदपि वैद्यविवर्जितम् ॥
एतदभ्यासयोगेन जरापलितनाशनम् ।
सर्पिस्तैलरसोपेतमश्नीयाच्छालिषष्टिकम् ॥
सिंहनाद इति ख्यातो रोगवारणदर्पहा ।
वह्निवृद्धिकरः पुंसां भाषितो दण्डपाणिना ॥ २२ ॥

वृहत्सिंहनादगुग्गुलुः—

पिष्टितां गुग्गुलोर्मात्रां कटुतैलपलाष्टके ।

---

स्वभाण्डे निक्षिपः । मर्दनार्थं घृतमानमात्रं यावता चूर्णं स्निग्धं भवति । अन्ये तु—गुग्गुलोरर्द्धमानमित्याहुः । ततो मात्रां प्रयुञ्जीत इति ।—वटमाषकरूपाम् । माषकाद्विमाषकपर्य्यन्तमित्याहुः ॥ २१ ॥

पलत्रयमित्यादि ।—त्रिफलायाः क्वाथस्य पलत्रयं प्रत्येकम् । सुचूर्णितमिति ।—सौगन्धिकपलमित्यनेन सम्बध्यते । सौगन्धिकमिति ।—गन्धकं, तच्च शोधितं ग्राह्यम् । कौशिकस्येति ।—गुग्गुलोः । चित्रतैलमिति ।—एरण्डतैलम् । कुडवमिति ।—षष्टी पलानि । अन्ये तु—तैलस्य बहुत्वेन पाको दुष्करः स्यात् इति कृत्वा चतुःपलमेवात्र कुडव अष्टपलमिति । त्रिफला प्रत्येकं पल १, जल २ । क्वाथार्थं जल शराव ३, शेष १ ; शेष १, पल, १ , शोधितगन्धकचूर्णं पल १, गुग्गुलु पल १, एरण्डतैल पल ८ । एरण्डतैलं दत्त्वा गन्धकचूर्णेन सह गुग्गुलुं पेषयीत । तदनु त्रिफलाक्वाथेनालोड्य लौहपात्रे यत्नेन, मनाक् तैलनिःसरणे सति सम्यक् पाको ज्ञेयः । प्रथमतो माषकम्, षष्टी माषकान् यावत् योज्यम् ॥ २२ ॥

कटुतैलेन गुग्गुलुं पिष्टिता क्वाथत्रयेण सह पक्त्वा चाण्डपाके प्रक्षेपार्थं त्रिकटु ।

प्रत्येकं त्रिफलाप्रस्थो सार्द्धद्रोणे जले पचेत् ॥
पादशेषे च पूतस्य पुनरग्नावधिश्रयेत् ।
त्रिकटु त्रिफला मुस्तं विडङ्गामरदारु च ॥
गुडूच्यग्निस्त्रिवृद्दन्ती-चव्यशूरणमानकम् ।
पारदं गन्धकञ्चैव प्रत्येकं शुक्तिसम्मितम् ॥
सहस्रकानकफलं मिश्रे सम्यक् विनिक्षिपेत् ।
ततो माषद्वयं जग्ध्वा पिबेत् मस्तुजलादिकम् ॥
अग्निञ्च कुरुते दीप्तं वडवानलसन्निभम् ।
धातुवृद्धिं वयोवृद्धिं बलं सुविपुलं तथा ॥
आमवातं शिरोवातं सन्धिवातं सुदारुणम् ।
जानुजङ्घाश्रितं वातं सकटीग्रहमेव च ॥
अश्मरीं मूत्रकृच्छ्रञ्च भग्नञ्च तिमिरोदरे ।
अम्लपित्तं तथा कुष्ठं प्रमेहं गुदनिर्गमम् ॥
कासं पञ्चविधं श्वासं क्षयञ्च विषमज्वरम् ।
श्लीपदं शोथं गुल्मं पाण्डुरोगं सकामलम् ॥
शोथाम्लवृद्धिशूलानि गुदजानि विनाशयेत् ।
मेदःकफामसङ्घातं व्याधिवारणदर्पहा ॥
सिंहनाद इति ख्यातो योगोऽयममृतोपमः ॥ २१ ॥

बृहत्सैन्धवाद्यं तैलम्—

सैन्धवं त्रिफला रास्ना पिप्पली गजपिप्पली ।

---

टीका पूर्वं शोधन ॥ ; शोधित जयपालबीज तोला १०००, रसगन्धकौ कज्जलीकृत शीतीभूते दातव्यौ इति वृद्धाः ॥ २१ ॥

सर्जिका मरिचं कुष्ठं शुण्ठी सौवर्चलं विड़म् ॥
यमान्यौ पुष्कराजाजो मधुकं शतपुष्पिका ।
पलार्द्धिकैः पचेदेतैः प्रस्थमेरण्डतैलतः ॥
प्रस्थाम्बु शतपुष्पायाः प्रत्येकं मस्तुकाञ्जिके ।
दद्याद् द्विगुणिते पान-वस्त्यभ्यङ्गप्रयोजितम् ॥
आमवातहरं श्रेष्ठं सर्ववातघ्नमग्निदम् ।
कटीजानूरुसन्धिस्थे पार्श्वहृद्ग्रहचाश्रये ।
शस्तं वाताब्धहृद्दौ च सैन्धवाद्यमिदं महत् ॥ २४ ॥

अजमोदाद्यवटकः—

अजमोदामरिचपिप्पलिविड़ङ्गसुरदारुचित्रकशताह्वाः ।
सैन्धवपिप्पलिमूलं भागा नवकस्य पलिकाः स्युः ॥
शुण्ठी दशपलिका स्यात् पलानि तावन्ति वृद्धदारस्य ।
पथ्यापञ्चपलानि सर्वमेकत्र कारयेच्चूर्णम् ॥
समगुड़वटकान् खादन्चूर्णं वाप्युष्णवारिणा पिबतः ।
नश्यन्त्यामानिलजाः सर्वरोगाः सुकष्टास्तु ॥
विश्वाचिकाप्रतितूणीतूणीहृद्रोगाश्च गृध्रसी चोग्रा ।
कटिबस्तिगुदस्फुटनं चैवास्थिजङ्घयोस्तीव्रम् ॥
श्वयथुस्तथाङ्गसन्धिषु ये चान्येऽप्यामवातसम्भूताः ।
सर्वे प्रयान्ति नाशं तम इव सूर्यांशुविध्वस्तम् ॥ २५ ॥

(१) पञ्चोषणम्—नागरक्वाथकल्काभ्यां घृतप्रस्थं विपाचयेत् ।
चतुर्गुणेन तेनाथ केवलेनोदकेन वा ॥

---

अजमोदाद्यवटकः ।—अजमोदा यमानी । नवकस्येति ।—अजमोदादि नवकस्य प्रत्येकं पलिका भागा इत्यर्थः । पलानि तावन्तीति ।—दश पलानीत्यर्थः । समगुड़वटकानिति ।—चूर्णेन गुड़ेन किञ्चिज्जलं दत्वा पश्चिमभागात् दुर्वेङ्क्तेन वटका कार्याः ; अन्यथा वटकमात्रेऽस्य दुष्करः । चूर्णं वेति ।—गुड़वर्जं विना ॥ २४ ॥ २५ ॥

वातश्लेष्मप्रशमनमग्निसन्दीपनं परम्।
नागरं घृतमित्युक्तं कट्यामशूलनाशनम्॥ २६॥

(१) शुण्ठीघृतम्—सर्पिर्नागरकल्केन सौवीरकचतुर्गुणम्।
सिद्धमग्निकरं श्रेष्ठमामवातहरं परम्॥ २७॥

गुडूचीघृतम्—अमृतायाः कषायेण कल्केन च महौषधात्।
मृद्वग्निना घृतं सिद्धं वातरक्तहरं परम्॥
आमवाताढ्यवातादीन् क्रिमिदुष्टव्रणानपि।
अर्शांसि गुल्मांश्च तथा नाशयत्याशु योजितम्॥ २८॥

काञ्जिकषट्पलकं घृतम्—

हिङ्गु त्रिकटुकं चव्यं माणिमन्थं तथैव च।
कल्कान् कृत्वा च पलिकान् घृतप्रस्थं विपाचयेत्॥
आरनालाढकं दत्त्वा तत् सर्पिर्जठरापहम्।
शूलं विबन्धमानाहमामवातं कटीग्रहम्॥
नाशयेद् ग्रहणीदोषं मन्दाग्नेर्दीपनं परम्॥
पुष्ट्यर्थं पयसा साध्यं दध्ना विण्मूत्रसंग्रहे।
दीपनार्थं मतिमता मस्तुना च प्रकीर्त्तितम्॥ २९॥

---

शुण्ठीघृते।—चतुर्गुणेन तेनेति।—नागरक्काथेन; केचिन्नीरदकेन चेति।—क्काथस्थाने चतुर्गुणं जलं दत्त्वेत्यर्थः॥ २६॥

शुण्ठीघृतं—स्पष्टम्॥ २७॥

अमृताया इत्यादौ।—"कल्केन च"—इति पदं महौषधादित्यनेन सम्बध्यते। आढ्यवात.—ऊरुस्तम्भः॥ २८॥

काञ्जिकषट्पलके।—त्रिकटुकं प्रत्येकं पलिकम्। माणिमन्थं सैन्धवम्। पुष्ट्यर्थमित्यादि।—उक्तमेव काञ्जिकषट्पलकं यदि पुष्ट्यर्थं क्रियते, तदा काञ्जिकस्थाने पयो दत्त्वा साध्यम्; विण्मूत्रसंग्रहे कार्ये दध्ना साध्यम्; दीपनार्थं यदि, तदा मस्तुना साध्यमित्यर्थः॥ २९॥

पिप्पलीपिप्पलीमूलमजाजीकुष्ठचित्रकम्।
नागरं मरिचं चव्यं चूर्णितन्त्वाद्यसम्मितम्॥
समाहात् परतः पेया वातरोगामनाशिनी।
क्रिमिकुष्ठक्षयानाह-गुल्मार्शःप्लीहमेहनुत्।
अग्निसन्दीपनी चैव पाण्डुरोगविनाशिनी॥ ३२॥

सिद्धाकी।—सिद्धार्थकखलीप्रस्थं सुधौतं निस्तुषं जले।
मण्डप्रस्थं विनिक्षिप्य स्थापयेद्दिवसत्रयम्॥
धान्यराशौ ततो दद्यात् सचूर्णं पलिकानि च।
अलम्बुषा गोक्षुरकं शतपुष्पीपुनर्नवे॥
प्रसारणी वरुणत्वक् शुण्ठी मदनमेव च।
सम्यक् पाकन्तु विज्ञाय सिद्धा तण्डुलमिश्रिता॥
भृष्टा सर्षपतैलेन हिङ्गुसैन्धवसंयुता।
भक्षिता लवणोपेता जयेदामं महारुजम्।
एकजं द्वन्द्वजं साध्यं सान्निपातिकमेव च॥
कट्यूरुवातमानाह-जानुजं त्रिकमागतम्।
उदावर्त्तहरी पेया बलवर्णाग्निकारिणी॥ ३३॥

---

घटे घटमध्ये विपेदित्यन्वयः। ततोऽर्द्धेन रसोनमिति।—पञ्चामन्यन्नमित्यर्थः। संग्रहमिति।—त्वक्छिरारहितम्॥ ३२॥

सिद्धार्थकखलीप्रस्थमित्यादि।—सर्षपखलीं चूर्णीकृत्य जलेनालोड्य छानयित्वा निस्तुषीकृत्य आतपे संशोध्य ग्राह्यं; पल १६, अथवा ४ शराव, मिश्रयित्वा धान्यराशौ दिनत्रयं स्थाप्यम्। तत इति।—धान्यराशेराहृत्यालम्बुषादिचूर्णं प्रत्येकं पलिकं दद्यात्। ततोऽनलेन सम्यक् पाकं सम्यक् परिपक्वमिति विज्ञाय स्थापनीयम्। ततः प्रत्यहं पाक्यं कर्ष २, तण्डुलचूर्णं पल १, पाकार्थं जल पल ८, "यवागूं षड्गुणेऽम्भसि" इत्युक्तेः; भर्जनार्थं सर्षपतैल कर्ष १, हिङ्गु रति १, सैन्धव माषा २; ततः पुनरपि किञ्चिद्द्रवं दत्त्वा भक्षयेदिति परिपाटी कथिता। सिद्धा तण्डुलमिश्रितेति।—

# अथ शूल-चिकित्सा ।

वमनं लङ्घनं स्वेदः पाचनं फलवर्त्तयः ।
क्षारचूर्णानि गुडिकाः शस्यन्ते शूलशान्तये ॥ १ ॥
पुंसः शूलाभिपन्नस्य स्वेद एव सुखावहः ।
पायसैः कृशरैः पिष्टैः स्निग्धैर्वा पिशितोत्करैः ॥ २ ॥

## वातशूल-चिकित्सा ।

वातात्मकं हन्त्यचिरेण शूलं स्नेहेन युक्तस्तु कुलत्थयूषः ।
ससैन्धवो व्योषयुतः सलावः सहिङ्गुसौवर्चलदाडिमाढ्यः ॥ ३ ॥
बलापुनर्नवैरण्डबृहतीद्वयगोक्षुरैः ।
सहिङ्गुलवणं पीतं सद्यो वातरुजापहम् ॥ ४ ॥
शूली निरन्नकोष्ठोऽद्भिरुष्णाभिर्मूर्च्छिताः पिबेत् ।
हिङ्गुप्रतिविषाव्योषवचासौवर्चलाभयाः ॥ ५ ॥
तुम्बुरूण्यभया हिङ्गु पौष्करं लवणत्रयम् ।
पिबेद् यवाम्बुना वात-शूलगुल्मापतन्त्रकी ॥ ६ ॥

---

वामनादिना शूलसाध्यामम्यलेन तदनन्तरं शूलचिकित्सामाह, वमनमित्यादि ।—सुगमम् । वमनमुत्क्लिष्टकफे, लङ्घनमामपाचनार्थं, स्वेदः पित्तं विहाय । क्षार इति ।—क्षारचूर्ण: क्षारप्रयोगो वा । चूर्णगुडिके इहैव वक्ष्यमाणे ; पुंस इत्यत्र तस्येति पाठान्तरम् । कृशरस्तिलतण्डुलः । पायसादिभिः पिण्डस्विन्नसम्बन्धात् स्वेदो बोध्यः । पिशितेति ।—मांसादिमांसैः ॥ १ ॥ २ ॥

वातात्मकमित्यादि ।—यूष इति ।—कुलत्थमाषमांसयोर्मिलित्वा पलं, जलं षोडशपलं, पचनचतुर्थावशिष्टे विमर्द्य वस्त्रेण छानयित्वा हिङ्गुमरिचेन घृतेन भर्जनीयं, तदनन्तरं सैन्धवादीनां चूर्णं निक्षिप्य, कर्षः प्रक्षेपः, यथाद्दाडिमबीजरसो ग्राह्यः । कुलत्थकर्षं १, लावमांसकर्षं १, पाकार्थं पानीयं शः ४, शेषं पलं ४, एतत् विमर्द्य वस्त्रेण छानयित्वा घृते भर्जनीयम् ।-सैन्धवव्योषादिभिः यथायोग्यं संस्कारः ॥ ३ ॥

बलेत्यादि ।—योगोऽयं क्वाथविधिना । हिङ्गु लवणञ्च प्रक्षेप्यम् । लवणमत्र सौवर्चलं, वातशूलघ्नत्वादित्याहुः ॥ ४ ॥

निरन्नकोष्ठ इति ।—अभुक्त इत्यर्थः । अन्ये तु—पदम् यवागूरादि तत्कुक्षिकोष्ठत्वात् । प्रतिविषा अतिविषा ; तच्च स्वनामख्यातं ; यवाम्बुनेति ।—यवक्वाथेन । मदिरयाम्बुना । पिबेदिति तु पाठान्तरं, तेन शब्दादेव क्वाथः ॥ ५ । ६ ॥

श्यामा विड़ं शिग्रुफलानि पथ्या विड़ङ्गकम्पिल्लकमश्वमूत्रो।
कल्कं समं मद्ययुतञ्च पीत्वा शूलं निहन्यादनिलात्मकन्तु ॥७॥

यमानीहिङ्गुसिन्धूत्थ-क्षारसौवर्चलाभयाः।
सुरामण्डेन पातव्या वातशूलनिसूदनाः ॥ ८ ॥

विश्वमेरण्डजं मूलं क्वाथयित्वा जलं पिबेत्।
हिङ्गुसौवर्च्चलोपेतं सद्यः शूलनिवारणम् ॥ ९ ॥

हिङ्गुपुष्करमूलाभ्यां हिङ्गुसौवर्च्चलेन वा।
विश्वैरण्डयवक्वाथः सद्यः शूलनिवारणः ॥ १० ॥

तद्वद्वृवूयवक्वाथो हिङ्गुसौवर्चलान्वितः ॥ ११ ॥

हिङ्ग्वम्लकृष्णालवणं यमानी क्षाराभयासैन्धवतुल्यभागम्।
चूर्णं पिबेद्वारुणिमण्डमिश्रं शूले प्रवृद्धेऽनिलजे शिवाय ॥ १२ ॥

(१) नारिकेलखण्डम् —

सुपक्वनारिकेलस्य शस्यं पलचतुष्टयम्।
पिष्ट्वा घृतपले भृष्ट्वा क्षिपेत् खण्डचतुःपलम् ॥
नारिकेलस्य च प्रस्थे किञ्चिच्छ्यामतो जले।
धन्याकं पिप्पलीं मुस्तं हिजोरं वंशलोचनाम् ॥
शाणमानं चतुर्जातं चूर्णं शीते क्षिपेद् बुधः।
हन्त्यम्लपित्तमरुचिं रक्तपित्तं क्षयं वमिम् ॥

---

श्यामेत्यादि।—श्यामा त्रवृदरुणः; कम्पिल्लकी गुण्डारोचनी, अश्वमूत्री ग्रहको ॥ ७ ॥

यमानीत्यादी।—क्षारे यवक्षार.। सुरामण्डेनेति।—सुराया उपरितनभागस्तरल-भागेन, एवमन्यत्रापि ॥ ८ ॥

विश्वमित्यादि।—एरण्डमूलस्य भागमय, शुष्ठयार्थको भाग इत्यर्थ. ॥ ९ ॥

हिङ्गुपुष्करेत्यादि।—"हिङ्गुपुष्करमूलाभ्यां" "हिङ्गुसौवर्च्चलेन वा" इति।—उभयत्र-सहार्थे तृतीया। तद्वदिति।—सद्य. शूलहर इत्यर्थः ॥ १० । ११ ॥

हिङ्ग्वित्यादि।—चव्योऽम्लवेतस: ; कृष्णा पिप्पली; लवणमिह सौवर्चलं, विडरैत. सूक्ष्मचूर्णम्। क्वचित् कृष्णाम्बकमिति पाठः, स च निष्प्रयोजनः।

शूलञ्च पृष्ठशूलञ्च पित्तरुग्घ्नं रसायनम् ।
विशेषाद्बलकृद्वर्ण्यं पुष्टिकौजस्करं स्मृतम् ॥ १३ ॥
सौवर्चलाम्लिकाजाजी-मरिचैर्द्विगुणोत्तरैः ।
मातुलुङ्गरसैः पिष्टा गुडिकानिलशूलनुत् ॥ १४ ॥
हिङ्ग्वम्लवेतसव्योष-यमानीलवणत्रिकैः ।
बीजपूररसोपेतैर्गुडिका वातशूलनुत् ॥ १५ ॥
बीजपूरकमूलञ्च घृतेन सह पाययेत् ।
जयेद्वातभवं शूलं कर्षमेकं प्रमाणतः ॥ १६ ॥
बिल्वमूलतिलैरण्डं पिष्ट्वा चाम्लतुषाम्भसा ।
गुडिकां भ्रामयेदुष्णां वातशूलविनाशिनीम् ॥ १७ ॥
तिलैश्च गुडिकां कृत्वा भ्रामयेज्जठरोपरि ।
गुडिका शमयत्येषा शूलञ्चैवातिदुःसहम् ॥ १८ ॥
नाभीलेपाज्जयेच्छूलं मदनः काञ्जिकान्वितः ।
जीवन्तीमूलकल्को वा सतैलः पार्श्वशूलनुत् ॥ १९ ॥

पित्तशूल-चिकित्सा—

गुडः शालिर्यवाः क्षीरं सर्पिःपानं विरेचनम् ।
जाङ्गलानि च मांसानि भेषजं पित्तशूलिनाम् ॥ २० ॥

---

विघ्नमत्—शतावरीकल्कमिश्रम् शतपलमिति पठति, हारीतसंवादात्। कर्मांशतो-ऽपि नामतः, ... इति व्याचष्टे ॥ १२॥१३ ॥

सौवर्चलमित्यादौ ।—आम्लिका तिन्तिडी । द्विगुणोत्तरैरिति ।—यथोत्तरं द्विगुणैः । एषा गुडिका चतुर्माषकमिता उष्णोदकानुपानेन सेवनीया, एवं वक्ष्यमाणा गुडिकापि । बीजपूरेत्यादि ।—केवलवातजे ॥ १४—१६ ॥

बिल्वमूलेत्यादि ।—अम्लतुषाम्भः काञ्जिकम् ॥ १७ ॥

तिलैरिति ।—पिष्टैः । गुडिकेयं कोष्णा उदरे भ्रामयितव्या ॥ १८ ॥

जीवन्तीमूलकल्केनापि लेपः ॥ १९ ॥

सम्प्रति पित्तशूलचिकित्सामाह, गुड इत्यादि ।—गुडोऽत्र पुराणः, उपद्रवमपथ्य-

पैत्ते तु शूले वमनं पयोऽम्बुरसैस्तथेक्षोः सपटोलनिम्बैः ।
शीतावगाहाः पुलिनाः सवाताः कांस्यादिपात्राणि जलप्लुतानि ॥ २१ ॥

विरेचनं पित्तहरञ्च शस्तं रसाश्च शस्ताः शशलावकानाम् ।
सन्तर्पणं लाजमधूपपन्नं योगाः सुशीता मधुरप्रयुक्ताः ॥ २२ ॥

छर्द्यां ज्वरे पित्तभवेऽपि शूले
घोरे विदाहे त्वथ तर्षिते च ।
यवस्य पेयां मधुना विमिश्रां
पिबेत् सुशीतां मनुजः सुखार्थी ॥ २३ ॥

धात्र्या रसं विदार्या वा त्रायन्ती-गोस्तनाम्बु वा ।
पिबेत् सशर्करं सद्यः पित्तशूलनिषूदनम् ॥ २४ ॥

शतावरीरसं क्षौद्र-युतं प्रातः पिबेन्नरः ।
दाहशूलोपशान्त्यर्थं सर्वपित्तामयापहम् ॥ २५ ॥

बृहत्यौ गोक्षुरश्चैव कुशकाशेक्षुबालिकाः ।
पीताः पित्तभवं शूलं सद्यो हन्युः सुदारुणम् ॥ २६ ॥

---

हेय, तस्य वातपित्तहरत्वेन शीतिकत्वात् । तत्र हि सुश्रुते,—"पित्तघ्नो मधुरः शुद्धो वातश्लेष्मप्रसादन । पुराणश्चाधिकगुण. मूत. पथ्यतमो गुडः ॥" इति ॥ २० ॥

पैत्ते तु शूले वमनमित्यादि ।—पित्तभेऽपि वमनमामाशयस्थपित्तहरणार्थम् । सपटोलनिम्बैरिति ।—पटोलनिम्बकल्कयुते. । मदनफलयोगमध्यात् केचिदिच्छन्ति ॥ २१ ॥

विरेचनं पित्तहरमिति ।—पित्तहरमधुरद्रव्योपेतम् । सन्तर्पणं लाजमधूपपन्नमिति ।—लाजसक्तुमधुभ्यां निर्मितं सन्तर्पणम् । यवस्य पेयामिति ।—यवस्य यवागूम् ॥ २२ ॥ २३ ॥

धात्र्या रसमित्यादि ।—शोधनम् । धात्र्याः स्वरसः, विदार्या अपि स्वरसः, त्रायन्तीगोस्तन्योः क्वाथः ; शर्करा च सर्वत्र प्रक्षेप्या बोध्या ॥ २४ ॥

शतावरीरसमित्यादि ।—स्पष्टम् ॥ २५ ॥

बृहत्यावित्यादि ।—इक्षुबालिका खागरभिदा ॥ २६ ॥

मातुलुङ्गरसो वापि शिग्रुक्वाथस्तथापरः।
सक्षारो मधुना पीतः पार्श्वहृद्वस्तिशूलनुत् ॥ ३९ ॥
आमशूले क्रिया कार्य्या कफशूलविनाशिनी।
सेव्यमामहरं सर्वं यदग्निबलवर्द्धनम् ॥ ४० ॥

हिङ्ग्वादि—सहिङ्गुतुम्बुरुव्योष-यमानीचित्रकाभयाः।
सक्षारलवणाश्चूर्णं पिबेत् प्रातः सुखाम्बुना।
विण्मूत्रानिलशूलघ्नं पाचनं वह्निदीपनम् ॥ ४१ ॥

धात्रीलौहम्—षट्पलं शुद्धमण्डूरं यवस्य कुडवं तथा।
पाकाय नीरप्रस्थार्द्धं दद्यात् पादावशेषितम् ॥
शतमूलीरसस्याष्टावामलक्या रसस्तथा।
तथा दधिपयोभूमि-कुष्माण्डस्य चतुष्पलम् ॥
चतुष्पलं सर्पिरिक्षु-रसं दद्याद्विचक्षणः।
प्रक्षिपेज्जीरकं धान्यं त्रिजातं करिपिप्पलीम् ॥
मुस्तं हरीतकीञ्चैव अभ्रं लौहं कटुत्रयम्।
रेणुकं त्रिफलाञ्चैव तालीशं नागकेशरम् ॥
प्रत्येकं कार्षिकं चूर्णं पेषयित्वा विनिक्षिपेत्।
भोजनादौ तथा मध्ये चान्ते चैव समाहितः ॥
तोलैकं भक्षयेत्तत्तु पेयं नित्यं पयस्तथा।
शूलमष्टविधं हन्ति साध्यासाध्यमथापि वा।
वातिकं पैत्तिकञ्चैव श्लैष्मिकं सान्निपातिकम् ॥
परिणामसमुत्थांश्च अन्नद्रवसमुद्भवान्।
द्वन्द्वजान् पक्तिशूलांश्च अम्लपित्तं सुदारुणम्।
सर्वशूलहरं श्रेष्ठं धात्रीलौहमिदं स्मृतम् ॥ ४२ ॥

---

मातुलुङ्गरस इति।—मातुलुङ्गमूलक्वाथः। योगद्वयेऽपि मधुयवक्षारौ प्रक्षेप्यौ ॥३९॥

आमशूल इत्यादौ।—आमहरं भूत्वा यदग्निबलकरं भवति यवक्षोदादि, तत् सेव्यं, न तु घृतादि ॥ ४० ॥

तुम्बुरु—[illegible] ॥ ४१ ॥ ४२ ॥

चित्रकग्रन्थिकैरण्ड-शुण्ठीधान्यं जलैः शृतम् ।
शूलानाहविबन्धेषु सहिङ्गुविड़सैन्धवम् ॥ ४३ ॥
दीप्यकं सैन्धवं पथ्या नागरञ्च चतुःसमम् ।
घ्नं शूलं जयत्याशु मन्दस्याग्नेश्च दीपनम् ॥ ४४ ॥
समाक्षिकं बृहत्यादिं पिबेत् पित्तानिलात्मके ।
व्यामिश्रं वा विधिं कुर्य्याच्छूले पित्तानिलात्मके ॥
पित्तजे कफजे चापि या क्रिया कथिता पृथक् ।
एकीकृत्य प्रयुञ्जीत तां क्रियां कफपित्तजे ॥ ४५ ॥
पटोलत्रिफलारिष्ट-क्वाथं मधुयुतं पिबेत् ।
पित्तश्लेष्मज्वरच्छर्द्दि-दाहशूलोपशान्तये ॥ ४६ ॥
रसोनं मद्यसंमिश्रं पिबेत् प्रातः प्रकाङ्क्षितः ।
वातश्लेष्मभवं शूलं निहन्तुं वह्निदीपनम् ॥ ४७ ॥

रुचकादि —बिभ्रोत्कबूकदशमूलयवाम्भसा तु
हिङ्वारहिङ्गुलवणत्रयपुष्कराणाम् ।
चूर्णं पिबेद् हृदयपार्श्वकटीग्रहाम-
पक्वाशयांसभ्रमकण्ठज्वरगुल्मशूली ॥

---

चित्रकेत्यादौ ।—ग्रन्थिकं पिप्पलीमूलम् । सहिङ्गुविड़सैन्धवमित्यत्र सहिङ्गु-विड़क्षारमिति केचित् पठन्ति ॥ ४३ ॥

दीप्यकं—यमानी, मन्दस्यातिमन्दस्य ॥ ४४ ॥

समाक्षिकं बृहत्यादिमिति ।—बृहत्यौ गोक्षुरेरण्डेत्यादिना पूर्वमुक्तम्; अन्ये तु—सन्निपातज्वरोक्तं बृहत्यादिकमाहुः । व्यवहारस्तु पूर्वेणैव । द्वन्द्वजशूलचिकित्सामाह,—व्यामिश्रमित्यादि ॥ ४५ ॥

पटोलेत्यादौ ।—अरिष्टो निम्बः ॥ ४६ ॥

रसोनमित्यादि ।—निस्तुषपिष्टरसोन माषा ६, मद्य पल १ ॥ ४७ ॥

बिभ्रोत्कबूकेत्यादि ।—अम्भसेति ।—क्वाथेन । अत्र हिङ्गुसौवर्चलमित्यादि वचनाभ्यामे समुदितदशमूलयवकोलेभ्यः प्रत्येकं द्वयमानेन 'शर्करा' व्यवहारदर्शनादथापि 'तदेव मानमाह चौवकः । तेन बिभ्रोत्कबूकदशमूलानां मिलितानामेको भागः, यवस्य

क्वाथेन चूर्णपानं यत् तत्र क्वाथप्रधानता।
प्रवर्त्तते न तेनात्र चूर्णापेक्षो चतुर्द्रवः॥ ४८॥

रुचकादिः—चूर्णं समं रुचकहिङ्गुमहौषधानाम्
शुण्ठ्यम्बुना कफसमीरणसम्भवासु।
हृत्पार्श्वपृष्ठजठरार्त्तिविसूचिकासु
पेयं तथा यवरसेन तु विड्‌विबन्धे॥
समं शुण्ठ्यम्बुनेत्येवं योजना क्रियते बुधैः।
तेनाल्पमानमेवात्र हिङ्गु सम्परिदीयते॥ ४९॥
हिङ्गु सौवर्चलं पथ्या-विड्सैन्धवतुम्बुरु।
पौष्करञ्च पिबेच्चूर्णं दशमूलयवाम्भसा॥
पार्श्वहृत्कटिपृष्ठांस-शूले तन्द्रापतानके।
शोथे श्लेष्मप्रसेके च कर्णरोगे च शस्यते॥ ५०॥

एरण्डाद्यम्—एरण्डबिल्वबृहतीद्वयमातुलुङ्ग-
पाषाणभित्त्रिकटमूलकृतः कषायः।
सक्षारहिङ्गुलवणोरुबुतैलमिश्रः
श्रोण्यंसमेढ्रहृदयस्तनरुक्षु पेयः॥ ५१॥

---

चापरो भाग इति। व्यवहारोऽपि इत्थमेव। हिंस्रादयस्तु प्रक्षेपविषये प्रयोज्याः, न तु "पातव्यश्च चतुर्द्रवः" इति परिभाषया; एवं यथाप्रमाणेष्वपि। एतदेवाह—क्वाथेन चूर्णपानं यदित्यादि।—यस्यार्थस्तु ज्वरातीसारचिकित्सायामेवोक्तः इति॥ ४८॥

चूर्णं समभित्यादि।—रुचकं सौवर्चलम्। शौण्ठ्येन शुण्ठ्याः कर्षोऽष्टाम्भस वा क्वाथः। प्रक्षेपः सौवर्चल माषा १, शुण्ठीचूर्णं माषा २, हिङ्गु रति ६। एवं यवरसेनेति यवक्वाथेन। समं शुण्ठ्यम्बुनेति।—समसमन्वय तुल्यार्थत्वे हिङ्गुनोऽपि उग्रगन्धविषमत्वेन बहुमानता स्यादतः समभिति पदं सहार्थे एवेत्यर्थः॥ ४९॥

हिङ्गुसौवर्चलमित्यादौ।—दशमूलयवाम्भसेति।—दशमूलयवयोर्वधो: क्वाथः; तेन प्रक्षेपं दशमूल १ माषा ७ रति, यवतण्डुल १ कर्षः, पाकार्थं जल शराव १, शेष पल २। अत्रैव विभजित हिङ्ग्वादीनां प्रक्षेपः॥ ५०॥

एरण्डेत्यादौ।—मातुलुङ्गं मातुलुङ्गस्य मूलं, पाषाणभित् पाषाणभेदी; त्रिकटो गोक्षुरस्य मूलम्। लवणमत्र सैन्धवं, न तु सौवर्चलं, सैन्धवसार-

हिङ्गु त्रिकटुकं कुष्ठं यवक्षारोऽथ सैन्धवम् ।
मातुलुङ्गरसोपेतं प्लीहशूलापहं रजः ॥ ५२ ॥
दग्धमनिर्गतधूमं मृगशृङ्गं गोघृतेन सह पीतम् ।
हृदयनितम्बजशूलं हरति शिखी दारुनिवहमिव ॥ ५३ ॥
क्रिमिरिपुचूर्णं लौहं सहितं खरसेन वड्गसेनस्य ।
क्षपयत्यचिरान्नियतं लौहाजीर्णोद्भवं शूलम् ॥ ५४ ॥
विदारीदाड़िमरसः सव्योषलवणान्वितः ।
क्षौद्रयुक्तो जयत्याशु शूलं दोषत्रयोद्भवम् ॥ ५५ ॥

एरण्डद्वादशकम्—

एरण्डफलमूलानि वृहतीद्वयगोक्षुरम् ।
पर्णिन्यः सहदेवा च सिंहपुच्छीक्षुरालिका ॥
तुल्यैरेतैः शृतं तोयं यवक्षारयुतं पिबेत् ।
पृथग्दोषभवं शूलं हन्यात् सर्वभवं तथा ॥ ५६ ॥

---

संयुक्तलैलैनैरण्डकस्य चेति नागार्जुनसंवादात् । अयं योग चामवती चन्द्राटेन लिखित. । अतस्तत्रापि युज्यते ॥ ५१ ॥

हिङ्गु त्रिकटुकमित्यादौ ।—मातुलुङ्गरसो—मातुलुङ्गमूलकाथ. । अन्ये तु—मातुलुङ्ग-फलरसमित्याहु. ॥ ५२ ॥

दग्धमित्यादि ।—मृगशृङ्ग—हरिणशृङ्गम्, तच्च चूर्णीकृत्यान्तर्धूमं यथा स्यात् तथा दग्धव्यमित्यर्थ ॥ ५३ ॥

क्रिमिरिपुचूर्णमित्यादौ ।—खरसेनेति—वड्गसेनस्य वनयवस्य स्वरसेनेत्यर्थः ॥ ५४ ॥

विदारीत्यादि ।—विदारी-पक्वदाडिमफलयोः स्वरसः ; भूमिकुष्माण्डरसं पक्वदाडिम-फलरस. प्रत्येक कर्ष २, त्रिकटु सैन्धव प्रत्येक माषा १, मधु माषा ४ ॥ ५५ ॥

एरण्डेत्यादि ।—एरण्डस्य फलं मूलञ्च । पर्णिन्यश्चतस्रः, मासपर्णी मुद्गपर्णी पृश्नि-पर्णी-सालपर्णीभेदात् । सहदेवा—दण्डोत्पलभेदः । सिंहपुच्छी—पृश्निपर्णीभेदः, सा च कलम्बुपत्रच्छदादीर्घपत्रा काटवासिंहपुच्छीति ख्याता । क्षुरालिका लटा वा मड इति नाम्ना ख्याता खगडी । अन्यत्र तु क्षुरालिकास्थाने इक्षुरक पठति । एवं सुश्रुतमतानुवादी चन्द्राटोऽपि ॥ ५६ ॥

गोमूत्रशुद्धमण्डूरं त्रिफलाचूर्णसंयुतम् ।
विलिहन् मधुसर्पिर्भ्यां शूलं हन्ति त्रिदोषजम् ॥ ५७ ॥
शङ्खचूर्णं सलवणं सहिङ्गु व्योषसंयुतम् ।
उष्णोदकेन तत् पीतं शूलं हन्ति त्रिदोषजम् ॥ ५८ ॥
तीक्ष्णायश्चूर्णसंयुक्तं त्रिफलाचूर्णमुत्तमम् ।
प्रयोज्यं मधुसर्पिर्भ्यां सर्वशूलनिवारणम् ॥ ५९ ॥
मूत्रान्तःपाचितां शुष्कां लौहचूर्णसमन्विताम् ।
सगुडामभयामद्यात् सर्वशूलप्रशान्तये ॥ ६० ॥

दाधिकं घृतम्—

पिप्पली नागरं विल्वं कारवी चव्यचित्रकम् ।
हिङ्गुदाड़िमवृक्षाम्ल-वचाचाराम्लवेतसम् ॥

---

गोमूत्रशुद्धेत्यादि।—गोमूत्रे सप्तधा निर्वापणेन शुद्धं मण्डूरं मिलितत्रिफलाचूर्णसमं च-षट्-सप्तमाषकाणामन्यतममानेनोपयोज्यम् ॥ ५७ ॥

शङ्खचूर्णमित्यादि।—मृतस्य दग्धस्य शङ्खस्य चूर्णं शङ्खमिति। अत्र माषकर्मिकं किञ्चिदधिकं वा, लवणव्योषयोश्च मिलित्वा माषद्वयं, हिङ्गुनो रक्तिद्वयं त्रयं वा विवेकिनर्थः। अन्ये तु—भागानुक्तेः सर्वमेव सममिति वदन्ति। श्लेष्मोत्तरेऽयं योगः ॥ ५८ ॥

तीक्ष्णाय इत्यादि।—मारितशुद्धितायसलौहचूर्णं कर्षं १, मात्रा ८, त्रिफलाचूर्णं प्रत्येकं मात्रा ८; मिलितचूर्णात् मात्रा रति ४। एतन्मधुनो दत्त्वा लौहमुद्गरेण सम्मर्द्य भक्षणीयम्। मात्रादिविधिश्च लौहान्तरवत्। अन्ये तु—त्रिफलाया एकभागसमं लौहचूर्णमिति वदन्ति। त्रिफलाक्वाथभावितलौहपत्रिकया अयं योगो यदि क्रियते, तदा द्वि-त्रि-चतुर्माषकोपयोगः ॥ ५९ ॥

मूत्रान्तःपाचितामिति।—गोमूत्रेणोत्स्विन्नाम्। लौहचूर्णेन सहैव मूत्रे पाचितामित्यन्ये। पथ्यामित्यात्तयोगात्। लौहचूर्णसमन्वितामिति—लौहचूर्णञ्च हरीतकीचूर्णसमम्। सगुडामिति—चूर्णद्वयसमगुडाम्। अन्ये तु—लौहचूर्णगुडहरीतकीनां प्रत्येकं समानत्वमित्याहुः ॥ ६० ॥

दाधिकघृते।—विल्वं—विल्वस्य मूलम्। [illegible] सौवर्चलभेदः। उक्तं हि,—

यर्वाम्मूलक्षारलवणमजाजी वीजपूरकम्।
दधि त्रिगुणितं सर्पिस्तत्सिद्धं दाधिकम् घृतम्॥
गुल्मार्शःप्लीहहृत्पार्श्व-शूलयोनिरुजापहम्।
दोषसंशमनं श्रेष्ठं दाधिकं परमं स्मृतम्॥
कम्बलाप्लुतगात्रस्य प्राणायामं प्रकुर्वतः।
कटुतैलाक्तशल्कानां धूपः शूलहरः परः॥ ६२॥
व्यायामं मैथुनं मद्यं लवणं कटु वैदलम्।
वेगरोधं शुचं क्रोधं वर्जयेच्छूलवान् नरः॥ ६३॥'

इति शूल-चिकित्सा॥

---

## अथ परिणाम-शूलचिकित्सा।

वमनं तिक्तमधुरैर्विरेकश्चापि शस्यते।
बस्तयश्च हिताः शूले परिणाम समुद्भवे॥ १॥

---

"न कालमवणे नष्यः सौवर्चलगुणो हि सः" इति। इभार्द्रं—महार्द्रकम्, बीजपूरकं—बीजपूरकमूलम्। दध्ना त्रिगुणेनैव पाकः। खरखदीरमाद्यथे-रित्यादि परिभाषावचनन्तु चतुर्गुणजलदानार्थमुक्तम्, किन्तु मात्रो न समाद्रियन्ते॥ ६१॥

कम्बलीत्यादि।—प्राणायामनिश्वासावरोधनम्॥ ६२॥

कटु वैदलमित्यत्र क्वचित् वैदलमिति पाठे—सर्वं अम्ललेन इह यद्भीति युक्ति, वैदलविशेषणम्॥ ६३॥

इति शूलचिकित्सा विवृतिः।

---

शूलविशेषत्वात् परिणामशूलमाह, वमनमित्यादि।—चकाराल्लङ्घनमपि बोध्यम्। तथा बस्तयोऽपि माधुतैलिकाद्योऽत्र ज्ञेयाः। उक्तं हि—"लङ्घनं वमनं शस्तं विरेकानुवासनम्। निरूहो वाजिगन्धादिर्माधुतैलिकबस्तयः" इति। माधुतैलिकबस्तयश्च मधुतैलप्रधानाः सुश्रुतोक्ताः। उक्तं हि—"दशाम्बु च तैलञ्च प्राधान्येन

### विड़ङ्गादिमोदकः ।

विड़ङ्गतण्डुलव्योषं त्रिवृद्दन्तीसचित्रकम् ।
सर्वाण्येतानि संहृत्य श्लक्ष्णचूर्णानि कारयेत् ॥
गुड़ेन मोदकं कृत्वा भक्षयेत् प्रातरुत्थितः ।
उष्णोदकानुपानन्तु दद्यादग्निविवर्द्धनम् ॥
जयेत् त्रिदोषजं शूलं परिणामसमुद्भवम् ॥ २ ॥
नागरगुड़तिलकल्कं पयसा संसाध्य यः पुमानद्यात् ।
उग्रं परिणतिशूलं तस्यापैति सप्तरात्रेण ॥ ३ ॥
शम्बूकजं भस्म पीतं जलेनोष्णेन तत्क्षणात् ।
पक्तिजं विनिहन्त्येतच्छूलं विष्णुरिवासुरान् ॥ ४ ॥
अश्वधात्र्यभयाकृष्णा-चूर्णं मधुयुतं लिहेत् ।
दध्नालूनसरेणाद्यात् सतीनयवसक्तुकान् ॥
अचिरान्मुच्यते शूलान्नरोऽन्नपरिवर्त्तजात् ॥ ५ ॥
तिलनागरपथ्यानां भागं शम्बूकभस्मनाम् ।
द्विभागगुड़संयुक्तां गुड़ीं कृत्वाक्षभागिकाम् ॥
शीताम्बुपानं पूर्वाह्णे भक्षयेत् क्षीरभोजनः ।

---

मद्दीरने । माधुर्तेनिकमित्येवं त्रिवमृभिर्वतिवद्यने ॥" तथामाशयस्थे दोषे लङ्घनवमने ; पच्यमानाशयस्थे तु विरेकनिरूहौ ; पक्काशयस्थे चानुवासनमिति विषयविवेकः ॥ १ ॥

विड़ङ्गेत्यादौ ।—विड़ङ्गतण्डुलं—विड़ङ्गस्य निस्तुषसारभागः । मोदकत्वादत्र द्विगुणो गुड़ः । नागरेत्यादि ।—नागरादिकल्कमुत्कारिकावद् यवागूवद् वा क्षीरेण साधयित्वा भक्षयेत् । शुण्ठीचूर्णं कर्षं १, पुरातनगुड़ कर्षं १, तिलचूर्णं पल १, गव्यदुग्ध शराव २ ॥ २ ॥ ३ ॥

शम्बूकजमित्यादि ।—निर्मांसं स्वल्पशम्बूकमेकं वर्षं वा भस्मीकृत्य उष्णाम्बुना लोलयित्वा घृताभ्यक्तमुखकुम्भेन पेयम् । अयं योगः काफे ॥ ४ ॥

अश्वेत्यादौ ।—अलूनसरेण अखण्डितसरभावेनेत्यर्थः । अनूनसरेणेति पाठे—अ एवार्थः । सतीनो वर्त्तुलकलायः । अन्नपरिणामोऽन्नपरिणामः ॥ ५ ॥

सायाह्ने रसकं पीत्वा नरो मुच्येत दुर्जयात्।
परिणामसमुत्थाच्च शूलाच्चिरभवादपि॥ ६॥
शम्बूकं त्र्यूषणञ्चैव पञ्चैव लवणानि च।
समांशां गुडिकां कृत्वा कलम्बूकरसेन वा॥
प्रातर्भोजनकाले वा भक्षयेत् तु यथाबलम्।
शूलादिमुच्यते जन्तुः सहसा परिणामजात्॥ ७॥
यः पिबति समरार्द्रं शक्तुमिश्रान् कलाययूषेण।
स जयति परिणामरुजं चिरजामपि किमुत नूतनजाम्॥ ८॥
लौहचूर्णं वरायुक्तं विलीढं मधुसर्पिषा।
परिणामशूलं शमयेत् तन्मलं वा प्रयोजितम्॥ ९॥

---

निशेत्यादि।—निशादीनां सम्भूयस्यात्रा समभागः। मिलितच चाभिषवा च गुडस्य भागद्वयम्। रसकमिति काडरकम्॥ ६॥

शम्बूकमित्यादौ।—कलम्बूकरसेन वेति—शम्बूकं पूर्वोक्तविधया। शम्बूकादिचूर्णं कलम्बूकरसेन चतुर्मासिका गुडिका कार्या। अत्र केचिच्छम्बूकपदेन शम्बूकभस्म व्याख्याति, युक्तञ्चैतत् गम्भाकरमेकादात्। तथाच—"शङ्खलवणं व्योषचूर्णं शम्बूकभस्मनि। गुडिका पक्तिशूलघ्नी कलम्बीस्वरसैः कृता॥" इति। व्यमूमिति—व्यवस्थूलम्। एकांशमिति—लिप्तवाम्। कुलत्थयूषं कुलत्थकषाययूषः। अयं योगः त्रिदशकफयुक्ते युक्तः॥ ७॥ ८॥

लौहचूर्णमित्यादि।—वरा—त्रिफला। लौहचूर्णस्यैको भागः, त्रिफलायाश्च प्रत्येकं लौहचूर्णसमभागत्वम्। तन्मलं चेति।—लौहमलं, तदपि वरायुक्तमिति बोध्यम्। लौहमलस्य तु मिलितत्रिफलातुल्यभाग। मारितपुटितलौहचूर्णं मात्रा ८, त्रिफलाचूर्णं प्रत्येकं मात्रा ८। अत्र तु लौहचूर्णस्य महावीर्यत्वात् व्याधिप्रत्यनीकत्वाच्च प्राधान्यमिति कृत्वा मिलितत्रिफलाचूर्णसमत्वमित्याहुः। तन्मते—लौहचूर्णं कर्ष १ तोला १, त्रिफलाचूर्णं प्रत्येकं तोला १, मिलितचूर्णात् प्रथमतो रक्तिचतुष्टय गृहीत्वा घृतमधुभ्यां सम्यगालोड्य लेह्यम्। लौहान्तरवत् क्षीरं षष्टिकुण्डं वा षष्टिकुण्डं वानुपेयम्। दिनत्रयानन्तरं रक्तिद्वयेन वृद्धिर्माषकद्वयं यावत्। सर्वमपरं लौहान्तरवत्। तथा शोधितमण्डूरं पल १, मिलितत्रिफलाचूर्णं पल १, ततो मिलितचूर्णात् ८ मात्रा मधुघृताभ्यां लेह्यम्॥ ९॥

छाग्याभयालौहचूर्णं गुड़ेन सह भक्षयेत् ।
पक्तिशूलं निहन्त्येतज्जठराग्निमन्दताम् ॥
आमवातविकारांश्च स्थौल्यश्चैवापकर्षति ॥ १० ॥
पथ्यालोहरजःशुण्ठी-चूर्णं माक्षिकसर्पिषा ।
परिणामरुजं हन्ति वातपित्तकफात्मिकाम् ॥ ११ ॥

सामुद्राद्यं चूर्णम्—

सामुद्रं सैन्धवं क्षारो रुचकं रौमकं विड़म् ।
दन्ती लौहरजः किट्टं त्रिवृच्छूरणकं समम् ॥
दधिगोमूत्रपयसा मन्दपावकपाचितम् ।
तद्यथाग्निबलं चूर्णं पिबेदुष्णेन वारिणा ।
जीर्णेऽजीर्णे तु भुञ्जीत मांसादि घृतसाधितम् ॥
नाभिशूलं यकृच्छूलं गुल्मप्लीहकृतञ्च यत् ।
विद्रध्यष्ठीलिकां हन्ति कफवातोद्भवं तथा ॥
शूलानामपि सर्वेषामौषधं नास्ति तत्परम् ।
परिणामसमुत्थस्य विशेषेणान्तकान्मतम् ॥ १२ ॥
नारिकेलं सतोयञ्च लवणेन प्रपूरितम् ।

---

छाग्यादि।—प्रत्येकं त्रयो भागा इति नियमः। अन्ये तु—मिलितमर्द्धचूर्णसमं लौहचूर्णमित्याहुः ॥ १० ॥

पथ्येत्यादि।—अत्रापि हरीतकीशुण्ठीमिलितचूर्णेन समं लौहचूर्णं ग्राह्यम्। प्रयोगश्च नवायसादिवदित्याहुः। नियमस्तु पथ्यादीनां त्रयाणां प्रत्येकं समभागतामाह ॥ ११ ॥

सामुद्रमित्यादौ।—सामुद्र—करकचं, रुचकं—सौवर्चलं; रौमक—रुमानदीभवं, तदभावे शाकम्भरिलवणम्। लौहरजश्च मारितपुटितं लौहचूर्णम्। किट्टञ्च गोमूत्रशोधितमण्डूरचूर्णम्। दधिगोमूत्रपयसेति।—दध्यादित्रयं मिलित्वा चतुर्गुणं मिलितचूर्णसमं वा दत्त्वा सर्वमेव चूर्णमेकीकृत्य पक्तव्यम् आ चूर्णीभावात्। व्यवहारस्तु दध्यादिना चतुर्गुणेनैव ॥ १२ ॥

भीमवटकमण्डूरम् ।

कोलाग्रन्थिकसहितैर्विश्वौषधमागधीयचव्यैः ।
प्रस्थमयोमलरजसां पलिकांशैर्यूर्णितैर्मिश्रैः ॥
अष्टगुणमूत्रयुक्तं क्रमपाकात् पिण्डतां नयेत् सर्वम् ।
कोलप्रमाणवटिकास्तिस्रो भोज्यादिमध्यविरतौ च ॥
रससर्पिर्यूषपयोमांसैरश्नन् नरो निवारयति ।
अन्नविवर्त्तनशूलं गुल्मं प्लीहाग्निसादांश्च ॥ १८ ॥

क्षीरमण्डूरम्—

लौहकिट्टपलान्यष्टौ गोमूत्रार्द्धाढ़के पचेत् ।
क्षीरप्रस्थेन तत् सिद्धं पक्तिशूलहरं नृणाम् ॥ १९ ॥

चविकादिमण्डूरम्—

लौहकिट्टपलान्यष्टौ गोमूत्रेऽष्टगुणे पचेत् ।
चविकानागरक्षार-पिप्पलीमूलपिप्पलीः ॥
सचूर्ण्य निक्षिपेत् तस्मिन् पलांशाः सान्द्रतां गते ।
गुड़िकाः कल्पयेत् तेन पक्तिशूलनिवारिणीः ॥ २० ॥
मण्डूरं भावितं पथ्यौ लौहजा वा गुड़ेन तु ।
भक्षयेन्मुच्यते शूलात् परिणामसमुद्भवात् ॥ २१ ॥

---

इति मण्डूरापेक्षया । आमस्थाने कोलादिचूर्णं प्रक्षेप्यम् । समुदितचूर्णापेक्षयाऽष्टगुणं गोमूत्रमित्याहुरन्ये । शूलमिति—आन्नद्रविकं, शूलानि चेति वातजादीनि ॥ १७ ॥

भीमवटकमण्डूरे ।—कोलप्रमाणा इति ।—निश्चित्य भक्ष्यमाणकमानाः । तेनाष्टमाषकेरेव तिस्रो वटिकाः कार्याः । व्यवहारस्तु द्वि-त्रि-चतुर्माषकैरिति । अत्रापि मूत्रस्याष्टगुणत्वं पूर्ववत् । अन्नविवर्त्तनशूलं—परिणामशूलम् ॥ १८ ॥

क्षीरमण्डूरं स्पष्टम् ॥ १९ ॥

लौहकिट्टेत्यादौ ।—चविकास्थाने चपलापाठेऽपि चविकैवार्थः, इतिटिप्पणी इत्यन्ये ।

॥ २० ॥

शतावरीमण्डूरम्—

संशोध्य चूर्णितं कृत्वा मण्डूरस्य पलाष्टकम् ।
शतावरीरसस्याष्टौ दध्नस्तु पयसस्तथा ॥
पलान्यादाय चत्वारि तथा गव्यस्य सर्पिषः ।
विपचेत् सर्वमेकध्यं यावत् पिण्डत्वमागतम् ॥
सिद्धन्तु भक्षयेन्मध्ये भोजनस्याग्रतोऽपि वा ।
वातात्मकं पित्तभवं शूलञ्च परिणामजम् ।
निहन्त्येव हि योगोऽयं मण्डूरस्य न संशयः ॥ २२ ॥

तारामण्डूरगुड़ः—

विड़ङ्गं चित्रकं चव्यं त्रिफलात्र्यूषणानि च ।
नवभागानि चैतानि लौहकिट्टसमानि च ॥
गोमूत्रं द्विगुणं दत्त्वा स्थालीकगुड़ान्वितम् ।
शनैर्मृद्वग्निना पक्वा सुसिद्धं पिण्डतां गतम् ॥
स्निग्धे भाण्डे विनिक्षिप्य भक्षयेत् कोलमात्रया ।
माद्यान्तमध्यक्रमेणैव भोजनस्य प्रयोजितः ॥
योगोऽयं शमयत्याशु पक्तिशूलं सुदारुणम् ।
कामलां पाण्डुरोगञ्च शोथं मन्दाग्नितामपि ॥
अर्शांसि ग्रहणीदोषं क्रिमिगुल्मोदराणि च ।
नाशयेदम्लपित्तञ्च स्थौल्यञ्चैवापकर्षति ॥

---

मण्डूरेत्यादौ ।—षोडश पलौ बक्ष्यमाणादिना सामान्यतोऽष्टौ वा पलौ पुटादिशोधिता ग्राह्या ॥ २१ ॥

शतावरीमण्डूरे ।—अग्रतोऽपि वेति ।—वाशब्दः समुच्चये, तेन भोजनान्ते भोजनमध्ये भोजनस्याग्रतश्च भक्षयेत् इत्यर्थः ॥ २२ ॥

तारामण्डूरे—नवभागानि चैतानीति ।—विड़ङ्गादीनां प्रत्येकमेकभागतया नव भागा ग्राह्याः, द्रव्यसंख्यानात् ; ते च्यासन्नपाके प्रक्षेप्याः । लौहकिट्टसमानि चेति ।—लौहकिट्टस्यापि नवभागत्वम् । गोमूत्रं द्विगुणमिति ।—मिलितचूर्णात् । अत्र पलो-

वर्जयेच्छुष्कशाकानि विदाह्यम्लकटूनि च।
पक्तिशूलान्तको ह्येष गुडो मण्डूरसंज्ञकः॥
शूलार्त्तानां कृपाहेतोस्तारया परिकीर्त्तितः॥ २३॥

रामभण्डूरम्—

वशिरं श्वेतवाट्यालं मधुपर्णीं मयूरकम्।
तण्डुलीयञ्च कर्षांशं दत्त्वाधर्योर्द्धमेव च॥
पाक्यं सुजीर्णमण्डूरं गोमूत्रेण दिनद्वयम्।
भल्लातकस्थमदग्धञ्च तथा स्थाप्यं दिनत्रयम्॥
विचूर्ण्य द्विगुणेनैव गुडेन सुविमर्द्दितम्।
भोजनस्यादिमध्यान्ते भक्ष्यं कर्षं त्रिभागतः॥
तक्रानुपानं वर्ज्यञ्च वार्य्यमम्लकमत्र तु।
अम्लपित्ते च शूले च हितमेतद् यथाऽमृतम्॥ २४॥

वृहच्छतावरीमण्डूरम्—

शतावरीरसप्रस्थे प्रस्थे च सुरभीजले।
अजायाः पयसः प्रस्थे प्रस्थे धात्रीरसस्य च॥
लौहकिट्टपलान्यष्टौ शर्करायाश्च षोडश।
गन्धाश्मकुड़वश्चैव पचेन्मृदग्निना शनैः॥
सिद्धशीते घटे नीते चूर्णानीमानि दापयेत्।
विड़ङ्गत्रिफलाव्योष-यमानीगजपिप्पली-
द्विजीरकधनानाञ्च शुद्धाण्यद्धसमानि च।

---

भिक्षागतमानत्वात् तदेव व्यवहारात्र देयुक्तम्। मूत्रार्द्धिकगुडान्वितमिति।—सर्वं-चूर्णसमो गुड इत्यर्थः। कोलमात्रमिति षट्माषकमात्रेण॥ २३॥

वशिरमित्यादि।—वशिरं—सूर्य्यावर्त्तः; मधुपर्णी—गुडूची; मयूरकम्—अपामार्गः। "पाक्यं सुजीर्णमण्डूरं गोमूत्रेण दिनद्वयम्" इति।—गोमूत्रमल्पमल्पं दत्त्वा दिनद्वयं पक्तव्यं, यथा मण्डूरं न दह्यते। गोमूत्रन्तु एकदैव बहुतरं न देयं, तथा सत्युत्तान-धारणं कर्त्तुमशक्यमिति। भल्लातकं शरावेण पिधाय दिनत्रयं स्थाप्यम्; तदनु प्रधाल्य

खादेदग्निबलापेक्षी भोजनादौ विचक्षणः ॥
निहन्ति पक्तिशूलञ्च अम्लपित्तं सुदारुणम्।
रक्तपित्तञ्च शूलञ्च पाण्डुरोगं हलीमकम् ॥ २५ ॥

रसमण्डूरम्—

कुडवं पथ्याचूर्णं द्विपलं गन्धाभ्र लौहकिट्टञ्च।
शुद्धरसस्यार्द्धपलं भृङ्गस्य रसञ्च केशराजञ्च ॥
प्रस्थोन्मितञ्च दत्त्वा लौहे पात्रेऽथ दृढमृष्टम्।
यत्नं घृतमधुयुक्तं मर्दितं स्थाप्यञ्च भाजने स्निग्धे ॥
उपयुक्तमेतदचिराद्विहन्ति वातपित्तजान् रोगान्।
शूलं तथाऽम्लपित्तं ग्रहणीञ्च कामलासुग्राम् ॥ २६ ॥

त्रिफलालौहः—

पथ्यामलकशिवानां स्वरसेन पक्वं सलौहजश्चूर्णम्।
सगुड़ं यद्युपभुङ्क्ते मुञ्चति शूली त्रिदोषजं शूलम् ॥ २७ ॥

---

शोधयित्वा ग्राह्यम्। अत्र कर्षं विभाव्य इति।—वर्षमेव आयसञ्च ज्ञात्वा खादेत्; व्यवहारस्तु माषकचतुष्टयेन। मार्षामलकमिति—बदरीतिन्तिडीकफलादिकम्। रामजान-त्याड्डामनमण्डूरमेतत् ॥ २४। २५ ॥

कुडवमित्यादौ।—गन्धाभ्र— शोधितगन्धकचूर्णं द्विपलं, तथा शोधितलौह-मलञ्च द्विपलमित्यर्थः। रससन्धकौ कज्जलीकृत्य हरीतकीमण्डूरचूर्णाभ्यां सह मिश्रीकृत्य भृङ्गराजस्वरसं केशराजस्वरसञ्च प्रत्येकं प्रस्थमानं दत्त्वा लौहपात्रे लौहदण्डेनैव तावद्यत्नेन घर्षयेत् यावच्छुष्कप्रायं भवति। ततः प्रयत्नतः रक्तिचतुष्टयं वटिका घृतमधुभ्यां सम्मर्द्य लेह्यम्। क्षीरादिकमनुपेयम्। क्रमशः रक्तिद्वयं हत्वा द्विमाषकद्वय यावत् ॥ २६ ॥

पथ्यामलकेत्यादौ।—स्वरसैरिति।—मिलित्वा चतुर्गुणैः; प्रत्येकमित्यन्ये। व्यव-हारस्तु पूर्ववत्। स्वरसाभावे क्वाथः। सगुड़मिति।—लौहरजःसमगुड़म्। पाकश्चास्य मुद्रया। तदुक्तं,—"गुड़ादि प्रक्षिपेद्यत्र तत्र पाकस्य मुद्रया"। लौहान्तरवद्विधिरत्र ॥२७॥

लौहगुड़िका ।

लौहस्य रजसो भागस्त्रिफलायास्त्रयस्तथा ।
गुड़स्याष्टौ तथा भागा गुड़ान्मूत्रं चतुर्गुणम् ॥
एतत् सर्वञ्च विपचेद्‌गुड़पाकविधानवित् ।
लिहेच्च तद् यथाशक्ति पवे शूले च पाकजे ॥ २८ ॥

धात्रीलौहम्—

धात्रीचूर्णस्याष्टौ पलानि चत्वारि लौहचूर्णस्य ।
यष्टीमधुकरजश्च द्विपलं दद्यादुपले घृष्टम् ॥
अमृतावाथेनैतच्चूर्णं भाव्यञ्च सप्ताहम् ।
चण्डातपेषु शुष्कं भूयः पिष्ट्वा नवे घटे स्थाप्यम् ॥
घृतमधुना सह युक्तं भक्तादौ मध्यतोऽन्ते च ।
लौमपि वारांन् खादेत् पथ्यं दोषानुबन्धेन ॥
भक्तस्यादौ नाशयति व्याधीन् पित्तानिलोद्भवान् ।
मध्येऽन्नविष्टम्भं जयति नृणां विदह्यते नान्नम् ॥
पानान्नकृतान् दोषान् भुक्त्यन्ते शीलितं जयति ।
एवं जीर्य्यति चान्ने शूलं नृणां सुकष्टमपि ॥
हरति सहसा युक्तो योगश्चायं जरत्पित्तम् ।
चक्षुष्यः पलितघ्नः कफपित्तसमुद्भवान् जयेद्रोगान् ।
प्रसादयत्यपि रक्तं पाण्डुत्वं कामलां जयति ॥ २९ ॥

लौहामृतम्—

तनूनि लौहपत्राणि तिन्तोकेधममानि च ।

---

लौहस्येत्यादि ।—भाग इति ।—एको भागः, त्रिफलायास्त्रय इति विभिन्ना ।
लिहेच्च यक्तिचतुष्टयादिक्रमेणेत्याहुः ॥ २८ ॥

धात्रीत्यादि ।—अमृताक्वाथेन—आमलकीक्वाथेन । अन्ये त्वमृतां गुडूचीमाहुः ।
व्यवहारस्तु पूर्वेण । जरत्पित्तम्—जरत्पित्तम् ॥ २९ ॥

कणिकामूलकल्केन संलिप्य सर्षपेण वा ॥
विशोष्य सूर्य्यकिरणैः पुनरेवावलेपयेत्।
त्रिफलाया जले ध्मातं निर्वाप्य च पुनः पुनः ॥
ततः सञ्चूर्णितं कृत्वा कर्पटेन तु छानयेत्।
भक्षयेन्मधुसर्पिर्भ्यां यथाग्न्येतत् प्रयोजयेत् ॥
माषकं त्रिगुणं वाथ चतुर्गुणमथापि वा।
छागस्य पयसः कुर्य्यादनुपानमभावतः ॥
गवां घृतेन दुग्धेन चतुःषष्टिगुणेन च।
पक्तिशूलं निहन्त्येतन्मासेनैकेन निश्चितम्।
माहात्म्यमिदं श्रेष्ठं ब्रह्मणा निर्म्मितं पुरा ॥
ककारपूर्ब्बकं यत्र यत्नाग्रं परिकीर्त्तितम्।
सेव्यं तत्र भवेदत्र मांसञ्चानूपसम्भवम् ॥ १० ॥

खण्डामलकी—

छिन्नपीडितकुष्माण्डात् तुलार्द्धं भृष्टमाज्यतः।
प्रस्थार्द्धे खण्डतुल्यन्तु पचेदामलकीरसात् ॥
प्रस्थे सुछिन्नकुष्माण्ड-रसप्रस्थे विघट्टयन्।
दर्व्यां पाके गते तस्मिंश्चूर्णीकृत्य विनिक्षिपेत् ॥
द्वे द्वे पले कणाजाजी-शुण्ठीनां मरिचस्य च।
पलं तालीशधन्याक-चातुर्जातकमुस्तकम्।
कर्षप्रमाणं प्रत्येकं प्रस्थार्द्धं माक्षिकस्य च ॥

---

सनूनोत्यादि।—कणिकामूलकल्केन श्वेतार्कमूलकल्केन, श्वेतसर्षपकल्केन वा पुनः पुनः परिलिप्य पुनः पुनरातपे संशोष्य, ततो पुनः पुनः दग्ध्वा त्रिफलाक्वाथे निर्वाप्य तावत् कार्य्यं यावत् सर्व्वलोहस्य जारणम् भवेत्। ततः प्रयत्नात् संशोध्य चूर्णीकृतस्य रक्ति-चतुष्टयादिकमेव मध्वाज्यादिद्रव्येणोपयोगः। क्वचित्—"कणिकामूलकल्केन" इत्यत्र "श्वेतसर्षपकल्केन परिलिप्य पुनःपुनः" इति पाठान्तरम् ॥ १० ॥

पक्तिशूलं निहन्त्येतद्दोषत्रयभवञ्च यत्।
छर्द्यम्लपित्तमूर्च्छाश्च कासश्वासावरोचकम्॥
हृच्छूलं रक्तपित्तञ्च पृष्ठशूलञ्च नाशयेत्।
रसायनमिदं श्रेष्ठं खण्डामलकसंज्ञितम्॥ ३१॥

नारिकेलखण्डः—

कुडवमितमिह स्यान्नारिकेलं सुपिष्टम्
पलपरिमितसर्पिःपाचितं खण्डतुल्यम्।
निजपयसि तदेतत् प्रस्थमात्रे विपक्वम्
गुडवदथ सुशीते शाणभागान् क्षिपेच्च॥
धन्याकपिप्पलिपयोदतुगाद्विजीरान्
शाणं त्रिजातमिभकेशरवह्निचूर्णं।
हन्त्यम्लपित्तमरुचिं क्षयमस्रपित्तम्
शूलं वमिं सकलपौरुषकारि हारि॥ ३२॥

---

खण्डामलक्यां खण्डतुल्यमिति।—खण्डस्य पञ्चाशत्पलानि। मरिचस्य च पलमित्यन्वयः। तालीशादिकस्य प्रत्येकं कर्षमानमित्यर्थः॥ ३१॥

कुडवमित्यादि।—अत्र केचिन्नारिकेलस्याष्टपलत्वेन द्वैगुण्यमिच्छन्ति। यत एवोक्तम्—“अष्टौ पलानि कुडवो नारिकेले तथैव च” इति। ये च द्वैगुण्यं नेच्छन्ति तेषामयमभिप्रायो नारिकेलस्याष्टपलत्वे खण्डस्याप्यष्टपलत्वं, खण्डतुल्यमिति वचनात्। अतएव नारिकेलोदकमस्यास्य द्रवत्वेनोपादानात् पाकस्य द्वैगुण्ये प्रसज्येत, चतुर्गुणसुत्वर्गसिद्धः; किञ्च तन्त्रान्तरे चतुर्गुणकुडव यथा,—“कुडवं नारिकेलस्य सुश्लक्ष्णं पिष्टम्। गुडखण्डस्य कुडवं सर्वमेतत्समुत्थितं॥ आलोड्य नारिकेलस्य जले मृद्वग्निना पचेत्॥” इति। अस्मिन् वचने शर्करस्या अपि कुडवमुक्तम्; तत्र च द्वैगुण्यं,—“पात्रशलनुचणमेव न द्विगुणिता ये चेतुजाता घना.” इत्युक्तेः। अत्र च खण्डतुल्यमिति पठ्यते। तथा च नारिकेलस्य प्रस्थकुडवाद्द्वैगुण्येन परमनयोर्नारिकेलखण्डयोः समता स्यात्, नान्यथेति; तेन द्वैगुण्याभावपक्ष एव साधीयान्। “नारिकेले तथैव च” इति वाक्यं नादरणीयमार्षत्वे प्रमाणाभावादित्याहुः। तुगा—

कलायगुड़िका—

कलायचूर्णभागौ द्वौ लौहचूर्णस्य चापरः।
कारवेल्लपलाशानां रसेनैव विमर्दितः॥
कर्षमात्रां ततश्चैकां गुड़िकां भक्षयेन्नरः।
मण्डाशुपानाज्जयति जरत्पित्तं सुदुर्जयम्॥ ३३॥
लिह्याद्वा त्रैफलं चूर्णमयश्चूर्णसमन्वितम्।
यष्टिचूर्णेन वा युक्तं लिह्यात् क्षौद्रेण तद्वदे॥३४॥
पित्तान्तं वमनं कृत्वा कफान्तञ्च विरेचनम्।
अन्नद्रवे च तत्कार्य्यं जरत्पित्ते यदीरितम्।
आमपक्वाशये शुद्धे गच्छेदन्नद्रवः शमम्।
माषेण्डरी सतुपिका खिन्ना सर्पियुता हिता॥३५॥
गोधूममण्डकं तत्र सर्पिषा गुड़संयुतम्।
ससितं शीतदुग्धेन खदिरं वा हितं मतम्॥
शालितण्डुलमण्डं वा वाट्यौ सिक्थवर्जितम्।
वाट्यं क्षीरेण संसिद्धं घृतपूरं सशर्करम्॥३६॥

---

वंशलोचना। नागकेशरसहितं त्रिजातं मिलित्वा शाणमात्रं पुनः प्रात्वर्मिलितः। दीप्तं—पुगम्। हारि—मनोहारि॥ ३२॥

कलायेत्यादि।—कलायो वर्त्तुलकलायः। लौहचूर्णस्य चापर इत्येको भागः। पलाशानामिति—पत्राणाम्। मण्डो—यवमण्डः। जरत्पित्तमम्लपित्तम्॥ ३३॥

लिह्यादित्यादि।—त्रिफलाचूर्णस्य लौहचूर्णसमत्वम्। अन्ये तु—त्रिफलायाः प्रत्येकं लौहचूर्णसमोंऽश इत्याहुः। तद्वद इति—जरत्पित्ते॥ ३४॥

पित्तान्तमित्यादौ अन्नद्रव इति।—"भुक्ते जीर्य्यत्यजीर्णे वा यच्छूलमुपजायते" इत्यादिनोक्तः शूलविशेषोऽन्नद्रवः। माषेण्डरी सतुपिकेति।—सतुषमाषकृता माषेण्डरी माषपिष्टकविकृतिर्भक्ष्यविशेषः॥ ३५॥

गोधूममण्डको—गोधूमकृतो भक्ष्यविशेष, पश्चिमदेशे प्रसिद्धः। खदिरं वा हितं मतमिति।—खदिरं खदाशाकृतिर्नेष्ट। वाट्यं—यवमण्डम्। दास्यामिष्यत कण्डमिति पाठे—

शर्करां भक्षयित्वा वा क्षीरमुत्क्वथितं पिबेत्।
पटोलपत्रयूषेण खादेच्चणकसक्तुकान् ॥ २७ ॥
पक्वद्रवे जरत्पित्ते वह्निर्मन्दो भवेद् यतः।
तस्मादन्नपानानि मात्राहीनानि कल्पयेत् ॥ २८ ॥
इति परिणामशूल-चिकित्सा।

---

## अथोदावर्त्त-चिकित्सा।

त्रिवृत्सुधापत्रतिलादिशाक-ग्राम्यौदकानूपरसैर्यवान्नम्।
अन्यैश्च सृष्टानिलमूत्रविड्भिरद्यात् प्रसन्नागुडसीधुपायी ॥१॥
आस्थापनं मारुतजे स्निग्धस्विन्नस्य शस्यते।
पुरीषजे तु कर्त्तव्यो विधिरानाहिकश्च यः ॥२॥

---

शान्तिरशूलजस्य इत्यर्थः; किन्तु यवस्य सर्वथा शूलघ्नत्वात् साध्यमिति पाठ एव श्रेयान्। घृतपूरो—गोधूमचूर्णकृत घृतभृष्टो भक्ष्यविशेषः ॥ २६ ॥

पटोलेत्यादौ।—यूषो मुद्गादियोगात् क्रिया कार्या ॥ २७ ॥ २८ ॥

इति परिणामशूल चिकित्सा विवृतिः।

---

पवनाविलभावित्वसाधर्म्यात् शूलानन्तरमुदावर्त्तः। उदावर्त्ते हि सर्वत्र शूल-बन्धप्रभावी वायुः। यदुक्तं सुश्रुते,—“सर्वेष्वेतेषु विधिवदुदावर्त्तेषु कृत्स्नशः। वायोः क्रिया विधातव्या स्वमार्गप्रतिपत्तये” ॥ इति। “उदभूतेन वेगविधारणेनाहतस्य निरुद्धस्य वायोरावर्त्तो वर्त्तनमुदावर्त्तः” इति निरुक्तिरस्य। त्रिवृदित्यादि।—त्रिवृत्सुधयोः पत्रम्; आदिशब्दात् सप्तलादिपत्रपरिग्रहः। अन्यैरिति।—विश्लेषकाद्यनुलोमनैः क्षीरादिभिः। प्रसन्ना—मदिराविशेषः, गुडकृतसीधुर्गुडसीधुः ॥ १ ॥

आस्थापनमित्यादि सुश्रुतस्य। मारुतजे इति।—मारुतवेगविधारणजे; एवं पुरीषज इत्यत्रापि व्याख्येयम्। विधिरानाहिक इति।—फलवर्त्त्यादिः ॥ २ ॥

क्षारवैतरणौ वस्ती कुर्य्यात् तत्र चिकित्सकः ॥ ३ ॥
श्यामा दन्ती द्रवन्तीत्वक् महाश्यामा स्नुही त्रिवृत् ।
सप्तला शङ्खिनी श्वेता राजवृक्षः सतिल्वकः ॥
काम्पिल्लकः करञ्जश्च स्वर्णक्षीरीत्ययं गणः ।
सर्पिस्तैलरजःक्वाथ-कल्केष्वन्यतमेन च ॥
उदावर्त्तोदरानाह-विषगुल्मविनाशनः ॥ ४ ॥
त्रिवृत्कृष्णाहरीतक्यो द्विचतुःपञ्चभागिकाः ।
गुडिका गुडतुल्यास्ता विड्विबन्धगदापहाः ॥ ५ ॥
हरीतकीयवक्षार-पीलुनी त्रिवृता तथा ।
घृतैश्चूर्णमिदं पेयमुदावर्त्तविनाशनम् ॥ ६ ॥
हिङ्गुकुष्ठवचास्वर्जी-विड्ञ्चेति द्विरुत्तरम् ।
पीतं मद्येन तच्चूर्णमुदावर्त्तविनाशनम् ॥ ७ ॥

नाराचचूर्णम्—

खण्डपलं त्रिवृता सममुपकुल्याकर्षचूर्णितं श्लक्ष्णम् ।

---

क्षाराद्यन्न निरूहोति, क्षारवैतरणाविल्यादिना । श्यामेत्यादी ।—श्यामा—श्याम-वृन्ता त्रिवृत् । द्रवन्ती—मूषिकपर्णी दन्ती, चलाह्लक् । सतिल्वक इति पाठे—लोध्र-भेदो वा ; किन्तु सुश्रुते वाग्भटे च श्लोकोऽयं न दृश्यते । महाश्यामा—वृद्धदारकः । अरुणवृन्तमूला त्रिवृत् । सप्तला—चर्म्मकषा, शीतलवृक्षे इति । शङ्खिनी—श्वेतबुह्मा, शङ्खपुष्पीत्यन्ये । श्वेता—श्वेतापराजिता, कटभी वा । राजवृक्षः—आरग्वधफलम् । तिल्वकोऽत्र सावरलोध्र. । काम्पिल्लो—गुण्डारोचनी । स्वर्णक्षीरी—कट्फलम् । अन्य-तमेनेति ।—सर्पिरादिकल्पनार्थं पिष्टमेनेन कल्पेन प्रयुञ्ज इति शेष. ॥ ३ ॥ ४ ॥

त्रिवृदित्यादी ।—द्विचतुःपञ्चभागिका इति यथाक्रमम् । गुडतुल्या इति ।—सम-स्तचूर्णतुल्यो गुडभाग. ॥ ५ ॥

हरीतकीयादी ।—पीलुनीति—मूर्वा । पीलूनि इति पाठान्तरे—पीलु पीतरा-र्यिकफलम् , इत्यैव वृक्ष, फलकल्पात् ॥ ६ ॥

हिङ्ग्वित्यादि मद्युक्तस्य ।—स्वर्जि,—स्वर्जिक्षार. । द्विरुत्तरमिति ।—यथोत्तरं द्विगुणम् ॥ ७ ॥

प्राग्भोजने च समधु विड़ाल्पदकं लिहेत् प्राज्ञः ॥
एतद् गाढ़पुरीषे पित्ते कफे च विनियोज्यम् ।
सुखादुर्नृपयोग्योऽयं चूर्णो नाराचको नाम्ना ॥ ८ ॥

रसोनं मद्यसम्मिश्रं पिबेत् प्रातः प्रकाङ्क्षितः ।
गुल्मोदावर्त्तशूलघ्नं दीपनं बलवर्द्धनम् ॥ ९ ॥
हिङ्गुमाक्षिकसिन्धूत्थैः पक्त्वा वर्त्तिं सुनिर्म्मिताम् ।
घृताभ्यक्तां गुदे दद्यादुदावर्त्तविनाशिनीम् ॥ १० ॥
मदनं पिप्पली कुष्ठं वचा गौराश्च सर्षपाः ।
गुड़क्षारसमायुक्ता फलवर्त्तिः प्रशस्यते ॥ ११ ॥
आगारधूमसिन्धूत्थ-तैलयुक्ताम्लमूलकम् ।
सुखं निर्गुण्डिपत्रं वा क्लिन्नं पायौ क्षिपेद्बुधः ॥ १२ ॥
सौवर्च्चलाढ्यां मदिरां मूत्रे त्वभिहते पिबेत् ।
एलां वाप्यथ मद्येन क्षीरवारि पिबेच्च सः ॥ १३ ॥

---

नाराचचूर्णं मिति समनिति ।—विरेचनस्यापि वचनम् । उपकुल्या—पिप्पली । प्राग्भोजन इति ।—भोजनपरित्यागे, भोजनसन्निधाने वा ॥ ८ ॥

रसोनमित्यादि ।—यद्यप्ययं योगः गुल्माधिकारे पूर्व्वमुक्त एव, तथाप्युदावर्त्तेऽपि विहितत्वात् पुनरप्यत्र लिखितः ॥ ९ ॥

हिङ्गुमाक्षिकेत्यादौ ।—हिङ्गु माषा ४, सैन्धव कर्षं १, मधु पल १, एवं व्यवहाराद् गृहीत्वा पक्त्वा च फलवर्त्तिं कुर्य्यात् । हिङ्गुसैन्धवे समे, वर्त्तिकरणोचितं मधु देयमित्यन्ये । गुड़पाकवदस्य पाकः, तदवस्थायामेव वर्त्तिः कर्त्तव्या । ततो घृतेनाभ्यज्य गुदे क्षिपेत् ॥ १० ॥

मदनमित्यादौ ।—गुड़ो मिलितचूर्णसमः । गुडस्य समाङ्गुलं दत्त्वा, पक्त्वा च वर्त्तिं कुर्य्यादित्यर्थः ॥ ११ ॥

आगारधूमेत्यादि ।—आगारधूमोऽन्तधूम ; अम्लमूलकं—काञ्जिकमूलकं सिक्थकमिति । अङ्गुष्ठनिभं खण्डं कृत्वा अन्तधूमसैन्धवचूर्णतैलं मर्दयित्वा क्लिन्नं गुदे प्रवेशयेत् । निर्गुण्डी—निसिन्दार । तत्पत्रमपि चूर्णीकृत्य आगारधूमादिसहितं क्लिन्नं गुदे प्रदातव्यम् ॥ १२ ॥

सौवर्च्चलेत्यादि सुगमम् । अत्र मिश्रत्वात्पाठाद्वाप्यन्यत्र दर्शिका मद्यपाय-

दुःस्पर्शास्वरसं वापि कषायं ककुभस्य वा ।
एर्वारुबीजं तोयेन पिबेद्वाऽऽलवणीकृतम् ॥ १४ ॥
पञ्चमूलीशृतं क्षीरं द्राक्षारसमथापि वा ।
सर्वथैवोपयुञ्जीत मूत्रकृच्छ्राश्मरीविधिम् ॥ १५ ॥
स्नेहस्वेदैरुदावर्त्तं जृम्भजं समुपाचरेत् ॥ १६ ॥
अश्रुमोक्षोऽश्रुजे कार्य्यः स्वप्नो मद्यं प्रियाः कथाः ।
क्षवजे क्षवपत्रेण घ्राणस्थेनानयेत् क्षवम् ।
तथोर्द्ध्वजत्रुगोऽभ्यङ्गः स्वेदो धूमः सलावणः ॥ १७ ॥
हितं वातघ्नमाद्यञ्च घृतञ्चौत्तरभक्तिकम् ॥ १८ ॥
उद्गारजे क्रमोपेतं स्नैहिकं धूममाचरेत् ॥ १९ ॥
छर्द्द्याघातं यथादोषं नस्यस्नेहादिभिर्जयेत् ।

---

पर्दन समग्रहीतत्वात् क्षीरवर्ज्जस्य आपकसहकृत्यम्, मदिरा आहारद्रव्यत्वात् मधुराः प्रत्याः । व्यवहारस्तु मदिरापनादेव । एर्वा आम्लस्य मधेनेति ।—एलापूर्वस्याष्टौ मावका., मद्यस्य च पञ्चदशनित्याह । क्षीरवारीति ।—क्षीरेण चौरेण मिश्रित वारी-त्यर्थ ॥ १३ ॥

दुःस्पर्शेत्यादि सुश्रुतस्य । दुःस्पर्शा—दुरालभा, दुःस्पर्शास्वरसमिति पाठे—दुःस्पर्शा कण्टकारीत्यन्ये । ककुभोऽर्जुनः । एर्वारु,—चीनभवा कर्कटीति कश्चन । आलवणीकृतमिति—सैन्धवादीनामन्यतमेनालवणीकृतमिति । एतच्च एर्वारुबीजमित्यनेनैव सम्बध्यते, न तु पूर्वेण ॥ १४ ॥

पञ्चमूलीति ।—पञ्चमूली स्वल्पा, समानतन्त्रभोजस्वाद्दात् । यथा,—"लघुना पञ्चमूलेन शृतं क्षीरं पिबेन्नरः" इति । श्रीकण्ठदत्तस्तु वृहत्पञ्चमूलीत्याह । सर्वथैव कार्त्स्न्येन, सुश्रुतेऽपि निरवशेषित इत्युक्तम् ॥ १५ ॥

स्नेहेत्यादौ ।—जृम्भजमिति—जृम्भाविघातजम्, एवमुत्तरत्रापि । अश्रुमोक्षोऽश्रुजे इति.—तत्र तीक्ष्णाञ्जनादिविधिना । क्षवपत्रेणेति ।—क्षवाचिकापत्रेण । ऊर्द्ध्वजत्रुगोऽभ्यङ्ग इति ।—ऊर्द्ध्वजत्रुदेशगतेऽभ्यङ्ग कार्य्यः । आद्य—भक्ष्यम् । क्रमोपेतमिति ।—स्नैहिकधूमपानोक्तक्रमयुक्तम् ॥ १६—१९ ॥

भुक्त्वा प्रच्छर्दनं धूमो लङ्घनं रक्तमोक्षणम् ।
रूक्षान्नपानं व्यायामो विरेकश्चात्र शस्यते ॥ २० ॥
वस्तिशुद्धिकरावापं चतुर्गुणजलं पयः ।
आ वारिनाशात् क्वथितं पीतवन्तं प्रकामतः ॥
रमयेयुः प्रिया नार्य्यः शुक्रोदावर्त्तिनं नरम् ।
तत्राभ्यङ्गावगाहाश्च मदिराश्चरणायुधाः ॥
शालिः पयो निरूहाश्च हितं मैथुनमेव च ॥ २१ ॥
क्षुद्विघाते हितं स्निग्धमुष्णमल्पञ्च भोजनम् ॥ २२ ॥
तृष्णाघाते पिबेन्मन्थं यवागूं वापि शीतलाम् ॥ २३ ॥
रसेनाद्यात् सुविश्रान्तः श्रमश्वासातुरो नरः ॥ २४ ॥
निद्राघाते पिबेत् क्षीरं स्वप्नः संवाहनानि च ॥ २५ ॥

इत्युदावर्त्त-चिकित्सा ।

---

छर्द्याघातमित्यादि सुश्रुतस्य । छर्द्याघातमिति ।—छर्द्या वेगविघातजं रोगं कुष्ठ-वीसर्पादिकम्, कार्य्यकारणयोरभेदोपचारात्, एवं क्षुद्विघात इत्यादावपि व्याख्येयम् । यथादोषमिति ।—यथावातदूषणो वीसर्पादिविघातजरोगो जातस्तदनु-सारेणाभ्यादिभिर्जयेदित्यर्थः ॥ २० ॥

वस्तिशुद्धिकरावापमित्यादि ।—वस्तिशुद्धिकराणीह श्वदंष्ट्रासुनीवीरतराद्दीनि । आवाप इति ।—क्षीरसाधनार्थं कल्कः स यत्र तत्तथा । रमयेयुः,—मैथुने योजयेयुः । चरणाश्च वातविलहरद्रव्यकाथे कोष्णे योज्य. । चरणायुधाः,—कुक्कुटाः । निरूहाश्चेति ।—निरूह उत्तरवस्तिश्चेति चकारात् ॥ २१—२३ ॥

सुविश्रान्त इति ।—विश्रमितः । निद्राघात इत्यादौ ।—क्षीरमिह माहिषं, निद्रा-करत्वादित्याहु. । अन्ये तु—प्रधानकल्पतया गोक्षीरमित्याहु. । अत एव तन्त्रान्तर,—"निद्राघाते पिबेत् क्षीरं गोः सुखादश्च मानवः" इति ॥ २४ ॥ २५ ॥

इत्युदावर्त्त-चिकित्सा-विवृतिः ।

---

## आनाह-चिकित्सा।

उदावर्त्तक्रियानाहे सामे लङ्घनपाचनम् ॥ १ ॥
द्विरुत्तरा हिङ्गुवचा सकुष्ठा सुवर्चिका चेति विडङ्गचूर्णम्।
सुखाम्बुनानाहविसूचिकार्त्ति-हृद्रोगगुल्मोर्ध्वसमीरणघ्नम् ॥ २ ॥
वचाभयाचित्रकयावशूकान् सपिप्पलीकातिविषान् सकुष्ठान्।
उष्णाम्बुनानाहविमूढवातान् पीत्वा जयेदाशु हितौदनाशी ॥३॥
त्रिवृद्धरीतकीश्यामाः स्नुहीक्षीरेण भावयेत्।
वटिका मूत्रपीतास्ताः श्रेष्ठाश्चानाहभेदिकाः ॥ ४ ॥
फलञ्च मूलञ्च विरेचनोक्तं हिङ्ग्वर्कमूलं दशमूलमग्र्यम्।
स्नुक्चित्रकौ चैव पुनर्नवा च तुल्यानि सर्वैर्लवणानि पञ्च ॥
स्नेहैः समूत्रैः सह जर्जराणि शरावसन्धौ विपचेत् सुलिप्ते।
पक्वं सुपिष्टं लवणं तदन्नैः पानैस्तथानाहरुजाघ्नमग्र्यम् ॥५॥
राठधूमविडव्योष-गुडमूत्रैर्विपाचिता।
गुडेऽङ्गुष्ठसमा वर्त्तिर्विधेयानाहशूलनुत् ॥ ६ ॥
वर्त्तिस्त्रिकटुकसैन्धव-सर्षपगृहधूमकुष्ठमदनफलैः।

---

आनाहचिकित्सामाह, उदावर्त्तेत्यादि।—द्विरुत्तरेति।—यथोत्तरद्विगुणा इत्यर्थः। सुखाम्बुनेत्यनन्तरं पीतमिति शेषः ॥ १—३ ॥

त्रिवृदित्यादि। त्रिवृदिहारुणमूला त्रिवृत्, श्यामा—श्याममूला त्रिवृत्। वटिकेयं माषमात्रेण व्यवहृता। योगोऽयमतिक्रूरकोष्ठे ॥ ४ ॥

फलञ्चेत्यादौ।—विरेचनोक्तमिति—दीर्घञ्जीवितीयेऽपामार्गतण्डुलीये वा विरेचनकर्मणि यदुक्तम्। हिङ्ग्वर्के हिङ्ग्वेति पाठान्तरम्। शरावसन्धाविति।—अन्तःप्रवेशितस्याधो-शरावसन्धावित्यर्थः। विपचेदिति—दहेत्। पक्वमिति—दग्धम्। अग्र्यमिति—श्रेष्ठम् ॥५॥

राठेत्यादौ।—राठो—मदनफलः, धूमो—गृहधूमः, धनधूम इति यावत्। यावता गुडेन मूत्रेण च पाकाद्वर्त्तिः कर्त्तुं शक्यते तावत्प्रमाणं देयमिति ॥ ६ ॥

मधुनि गुड़े वा पक्का पायोरिता धाङ्गुष्ठपरिमाणा ॥
वर्त्तिरियं दृष्टफला शनैः शनैः प्रणिहिता घृताभ्यक्ता ।
आनाहोदावर्त्तप्रशमनी जठरगुल्मविनाशिनी ॥ ७ ॥

शुष्कमूलकाद्यं घृतम्—

मूलकं शुष्कमार्द्रञ्च वर्षामूमूलपञ्चकम् ।
आरेवतफलञ्चापि पिष्ट्वा तेन पचेद् घृतम् ।
तत् पीयमानं शमयेदुदावर्त्तमसंशयम् ॥ ८ ॥

स्थिराद्यं घृतम्—

स्थिरादिवर्गस्य पुनर्नवायाः
सम्याकपूतीककरञ्जयोश्च ।
सिद्धः कषायो द्विपलांशिकानाम्
प्रस्थो घृतात् स्यात् प्रतिरुद्धवाते ॥ ९ ॥

इत्यानाह-चिकित्सा ।

---

वर्त्तिरित्यादि ।—मिलिता त्रिकट्वादीनां कर्षं १, मधु पल १, गुड कर्षं १ इत्येके ; अन्ये त्रिकट्वादिकं यद्दीत्वा वर्त्तिः कर्त्तव्येत्यन्ये । गुड़े वेति ।—वाशब्दोऽपि पूर्वयोगापेक्षया समुच्चये वा द्रष्टव्यः ॥ ७ ॥

मूलकमित्यादि सुश्रुतस्य । शुष्कमिति ।—मूलकविशेषणम् । आर्द्रकमित्यार्द्रककन्दः । कश्चित्तु शुष्कमिति मूलकार्द्रकयोर्विशेषणमाह । मूलपञ्चकमिति—बिल्वादिपञ्चमूलं, ककशातकतविलवदमूलादिति जेज्जटः ; स्वल्पपञ्चमूलमिति भानुमती । आरेवतफलं—स्वर्णाणु फलम् । चक्रस्यमिदं घृतम् ॥ ८ ॥

स्थिरादीत्यादि । स्थिरादिवर्गेस्य शालपर्ण्यादिपञ्चमूलस्य । सम्याकः—शोणालुफलम् । द्विरवचनत्वात् पूतिकेति करञ्जफलविशेषणं, तेन लाटाकरञ्ज इत्यर्थः ॥९॥

इत्यानाह-चिकित्सा-विवृतिः ।

## अथ गुल्म-चिकित्सा ।

लघ्वन्नं दीपनं स्निग्धमुष्णं वातानुलोमनम् ।
बृंहणं यद्भवेत् सर्वं तद्धितं सर्वगुल्मिनाम् ॥ १ ॥
स्निग्धस्य भिषजा स्वेदः कर्त्तव्यो गुल्मशान्तये ।
स्रोतसां मार्दवं कृत्वा जित्वा मारुतमुल्बणम् ।
भित्त्वा विबन्धं स्निग्धस्य स्वेदो गुल्ममपोहति ॥ २ ॥
कुम्भीपिण्डेष्टकास्वेदान् कारयेत् कुशलो भिषक् ।
उपनाहाश्च कर्त्तव्याः सुखोष्णाः शाल्वणादयः ॥ ३ ॥
स्थानावसेको रक्तस्य बाहुमध्ये शिराव्यधः ।
स्वेदोऽनुलोमनञ्चैव प्रशस्तं सर्वगुल्मिनाम् ॥ ४ ॥
पेया वातहरैः सिद्धा कौलत्था धन्वजा रसाः ।
खड़ाः सपञ्चमूलाश्च गुल्मिनां भोजने हिताः ॥ ५ ॥

वातगुल्म-चिकित्सा—

मातुलुङ्गरसो हिङ्गु दाड़िमं विड़सैन्धवम् ।

---

गुल्मेऽव्यानाहो भवतीत्याशयामनारं गुल्म' ॥ १ ॥ २ ॥

कुम्भीत्यादि सुगमम् ।—वातहरक्वाथादिभिः पूर्णाभिः कलशीभिः कुम्भीभिः कमण्डलीभिः स्वेदनम् ; तथा तनुस्निग्धमाषादिपिण्डकैर्वक्षयद्धे स्वेदः पिण्डस्वेदः । इष्टकया च तप्तया वातहरक्वाथसिक्तया स्वेद इष्टकास्वेदः । शाल्वणादयः,—इत्यादिशब्देन वैसवारादिपरिग्रहः ॥ ३ ॥

स्थानावसेको रक्तस्येति ।—स्थिरगुल्मे गुल्मस्थानादक्तावसेकः । बाहुमध्ये शिराव्यध इति ।—बाहुमध्ये सन्धेरधस्तात् वामशिरा वेध्या, न तु मध्या, न वा हस्ती ; तस्या मर्मत्वात् । शिराव्यधश्च यस्मिन् पार्श्वे गुल्मस्तत्पार्श्वस्थबाहौ । एवञ्च विधिवर्धितचिकित्सया गुल्मस्याप्रशमने स्वेदादिना च शोणितदुष्टौ सत्यां वेध्यः । स्वेदइत्यादिकश्चार्द्धं पद्यं सम्पूर्णश्लोकानुरोधादित्योक्तम् ॥ ४ ॥

आहारविधिमाह, पेयेत्यादि । वातहरैर्दशमूलादिभिः । पञ्चमूलश्चेह बिल्वादिपञ्चमूलम्, उष्णवीर्यतया विशेषेण वातहरत्वात् ॥ ५ ॥

सुरामण्डेन पातव्यं वातगुल्मरुजापहम् ॥ ६ ॥
नागरार्द्धपलं पिष्टं द्वे पले लुञ्चितस्य च।
तिलस्यैकं गुड़पलं क्षीरेणोष्णेन पाययेत्।
वातगुल्ममुदावर्त्तं योनिशूलञ्च नाशयेत् ॥ ७ ॥
पिबेदेरण्डतैलं वा वारुणीमण्डमिश्रितम्।
तदेव तैलं पयसा वातगुल्मी पिबेन्नरः ॥ ८ ॥
साधयेच्छुद्धशुष्कस्य रसोनस्य चतुःपलम्।
क्षीरोदकेऽष्टगुणिते क्षीरशेषञ्च पाययेत् ॥
वातगुल्ममुदावर्त्तं गृध्रसीं विषमज्वरम्।
हृद्रोगं विद्रधिं शोथं नाशयत्याशु तत् पयः ॥
एवन्तु साधिते क्षीरे स्तोकमम्लत्र दीयते ॥ ९ ॥

---

मातुलुङ्गेत्यादौ।—मातुलुङ्गरसादिकं प्रक्षिप्य सुरामण्डः पेयः। सुरामण्ड-ग्राहारद्रव्यतया प्रभूतो ग्राह्यः, न तु पूर्वोक्तचतुर्गुणः; एवमन्यत्रापि सुरया भैषज्यपाने ज्ञेयम् ॥ ६ ॥

नागरेत्यादौ।—लुञ्चितस्येति—निस्तुषीकृतस्य। अत्र भूरिमात्रौषधोपयोगो व्याधिमहत्त्वेन भवतीति ज्ञेयम्। वाग्भटे पुनरेतदर्द्धमात्रेणायं योगः पठ्यते। यथा,—"पञ्चाशः कर्षं गुडस्य द्वौ धौतात् कृष्णतिलात् पलम्। खादन्नेकत्र सञ्चूर्ण्य कोष्णक्षीरानुपोऽजितम्। वातहृद्रोगगुल्मार्शोयोनिशूलशकृद्ग्रहान्" इति। अन्ये तु—नागरार्द्धपलमिति पुरुषस्य बलवत्त्वं वृद्धा, हीनपुरुषे तु तृतीयभागेन कर्त्तव्यमित्याहुः ॥ ७ ॥

पिबेदित्यादि।—योगद्वयम्। पूर्वयोगः कफानुगे वायौ, द्वितीयस्तु—पित्तानुगे। उक्तं हि चरके,—"श्लेष्मानुगे पूर्वं हितं पित्तानुगे परम्" इति, पूर्वमिति।—वारुणीसंयुक्तमेरण्डतैलम्; परमिति—पयःसंयुक्तमेरण्डतैलम् ॥ ८ ॥

साधयेदित्यादि।—निस्तुषतया शुद्ध. आपूर्णवीर्यतया च शुष्क इत्यर्थः। क्षीरोदकेऽष्टगुणित इति।—क्षीरोदकयोश्च समासकरणान्मिलित्वैवाष्टगुणत्वं ज्ञेयम्; भागानुक्तेश्च समभागत्वमिति। तेन रसोनचतुःपलापेक्षया क्षीरनीरयोः प्रत्येकं चातुर्गुण्यान्मिलित्वा द्वात्रिंशत्पलानि स्युः। अनयोश्च द्रवत्वेऽपि न द्वैगुण्यम्; रसोन-

सर्जिकाकुष्ठसहितः क्षारः केतकजोऽपि वा।
तैलेन पीतः शमयेद् गुल्मं पवनसम्भवम्॥ १०॥
वातगुल्मे कफे वृद्धे वान्तिचूर्णादिरिष्यते॥ ११॥

पित्तगुल्म चिकित्सा

पित्ते तु रेचनं स्निग्धं रक्ते रक्तस्य मोक्षणम्।
स्निग्धोष्णेनोदिते गुल्मे पैत्तिके स्रंसनं हितम्॥ १२॥
रूक्षोष्णेन तु सम्भूते सर्पिः प्रशमनं परम्।
काकोल्यादिमहातिक्त-वासाद्यैः पित्तगुल्मिनम्॥
स्नेहितं स्रंसयेत् पश्चाद् योजयेद्वस्तिकर्मणा॥ १३॥

---

पनीहृषिनाद्गुल्मविधानात्। अपचयादरविह चौरम्। यद्यपि षोडशपलत्वेन बहु भवति, तथापि "दीप्ताग्नयो महाकाया" इत्यादि वचनाद् गुल्मस्य बहुमात्राऽभिहिता तथा षोडशपलक्षीरपानमपि न दीप्ताग्नयेति, किंवा अन्नुपघातभयात् स्तोक पेयम्; अत एवोक्तम् "एवमु साधित" इति। साधनन्तु एतावन्मात्रमेव कार्य्यं "दद्या गुल्मिने स उपाय." इति वचनात्। कुष्ठरसोनयोरपाय न योगविरुद्धत्वमाद्रणीयम्, व्याधिप्रभावाच्चरकवचनाच्चेत्यर्थ.॥ ९॥

सर्जिकेत्यादि।—सुश्रुतस्य। सर्जिकाक्षार माषकद्वयम, एवं कुष्ठस्यापि; केतकी-नालक्षारस्य माषकचतुष्टयमिति नियम:। मात्रा: पूर्वक्षारप्रयोगापेक्षया। तत्क्षारस्तु क्षारो यवक्षार। अत्र सर्जिकाकुष्ठसहितो यवक्षारस्तैलेनैको योग:। "केतकी-जोऽपि वा" इत्यत्र क्षार इति सम्बध्यते, तेन केतकीजोऽपि क्षारस्तैलेनेति द्वितीयो योग.। कोचास्तु सर्जिकाकुष्ठसहित. केतकीक्षारस्तैलेनैकमेव योगमाहु:। तैले-नेति—तिलतैलेन। अन्ये तु—यौगिकत्वादेरण्डतैलमाहु.॥ १०॥

अवस्थायां क्रियासूत्रमाह, वातगुल्म इत्यादि।—गुल्मे यद्यपि "न वामयेत्" इत्यादिवचनात् वमन निषिद्ध, तथाप्यवस्थाविशेषेऽप्यपवादरूपतया तत्र दृश्यते। चूर्णादिरित्यादिशब्दात् फलवर्त्तिगुडिकादय। "स्निग्ध विरेचनमित्येरण्डतैलादिना" ॥ ११। १२॥

"रूक्षोष्णेन तु सम्भूते"—इत्यत्रापि पैत्तिक इति शेष.। काकोल्यादिमहातिक्त-वासाद्यैरित्यनन्तर घृतैरिति शेष.। काकोल्यादिगणक्वाथकल्कसाधितं घृतं काको-ल्यादिघृतम्, महातिक्तघृतञ्च कुष्ठोक्तम्; वासाघृतञ्च रक्तपित्तोक्तम्। स्रंसये-दिति—विरेचयेत्। वस्तिकर्मणेत्यनुवासन-निरूहाभ्याम्॥ १३॥

स्निग्धोष्णजे पित्तगुल्मे काम्पिल्लं मधुना लिहेत् ।
रेचनार्थं रसं वापि द्राक्षायाः सगुडं पिबेत् ॥ १४ ॥
दाहशूलानिलक्षोभ-स्वप्ननाशारुचिज्वरैः ।
विदह्यमानं जानीयाद् गुल्मं तमुपनाहयेत् ॥ १५ ॥
पक्वे तु व्रणवत् कार्य्यं व्यधशोधनरोपणम् ।
स्वयमूर्द्धमधो वापि स चेद्दोषः प्रपद्यते ॥
द्वादशाहमुपेक्षेत रक्षन्नन्यानुपद्रवान् ।
परन्तु शोधनं सर्पिः शुद्धे समधु तिक्तकम् ॥ १६ ॥

---

स्निग्धोष्णज इत्यादौ।—काम्पिल्लं—गुण्डारोचनी। विदह्यमानमिति—पच्यमानम्। उपनाहयेदिति—व्रणशोथोक्तनाहनविधिभिः प्रलेपयेत्। ननु सुश्रुते गुल्मस्य पाको निषिद्धः, यथा—"स यस्मादात्मनि चयं गच्छत्युद्बुदवद् बुद्बुदः। अन्तः सरति तस्माच्च न पाकमुपयात्यतः॥" इति। आत्मनीति—स्वाश्रये गुल्मारम्भकदोषचये, न तु मांसरक्तादौ। चयमिति—वृद्धिम्। उद्बुदवद् बुद्बुद इति—यथा जलान्तर्गतो वायुरेव जले बुद्बुदरूपो भवति, तथा कफपित्ताभ्यामावृतो वायुरेव कुण्डलीभूतो गुल्म इत्यर्थः। अन्तः सरति यस्माच्च इत्यनेनापि रक्तादिरहितकोष्ठविवरमात्राश्रयत्वमस्य दर्शितम्। एतेन दोषमात्रारब्धेऽपि गुल्मे मांसशोणितयोः पाकाश्रययोरभावादपाकित्वमुक्तम्। तत्राह,—गुल्मो यद्यपि दोषमात्राश्रय एव, तथापि यदा कारणवशादाश्रयं मांसशोणितमाश्रय कृतवाननुसरितवद् भवति, वातोपशमनार्थं कृतस्वेदादिभिर्वा दुष्टं रक्तं सहकारि लभते, तदा गुल्मस्यापि पाकः कथं प्रतिषेधनीयः? केवलं चरके गुल्म इत्युच्यते; सुश्रुते तु—विद्रधिमध्येति संज्ञाभावे विवादः। अकृतवानुसरितवस्तु दोषमात्राश्रयत्वान्न पच्यते, चरकेणाप्यनुमन्यत एवेति। अन्ये तु—स्थानाश्रयमुक्तहेतुवशस्य वातिक एव संचितत्वाद्वातिक एव गुल्मो न पच्यते, अस्थिरत्वादाश्रयाभावाच्च; अन्ये तु पठन्ति—भेदः पुनरयं विद्रधिगुल्मयोः; विद्रधिरचिरपाकश्चिरपाकस्तु गुल्म इति। अत एव माधवकरोऽप्याह,—"प्रायो न पच्यते गुल्मो वातजस्तु विशेषतः। रक्तपित्तादिजत्वात् पच्यतेऽन्यो यदृच्छया॥" इति। स्वयमित्यादि।—स्वयमेवान्तर्भिन्ने सति दोषः पूयरूप ऊर्द्धमधो वा गच्छति, तदा द्वादशाहमुपेक्षेत, न शोधनरोपणादिकं कुर्य्यात्। उपद्रवान्—ज्वरादीन्। उपद्रवेभ्यो ज्वरादिभ्यथातुरं रक्षन्नित्यर्थः। परन्तु शोधनं सर्पिरिति।—द्वादशाहात् परं शोधन-

रोहिणी कटुका निम्बं मधुकं त्रिफलात्वचः ।
कर्षांशास्त्रायमाणा च पटोलत्रिवृतापले ॥
द्विपलञ्च मसूराणां साध्यमष्टगुणे जले ।
घृताच्छेषं घृतसमं सर्पिषश्च चतुःपलम् ॥
पिबेत् संमूर्च्छितं तेन गुल्मः शाम्यति पैत्तिकः ।
ज्वरस्तृष्णा च शूलञ्च भ्रमो मूर्च्छाऽरतिस्तथा ॥ १७ ॥
दीप्ताग्नयो महाकायाः स्वेहसात्म्या महाबलाः ।
गुल्मिनः सर्पदष्टाश्च विसर्पोपहताश्च ये ।
ज्येष्ठां मात्रां पिबेयुस्ते पलान्यष्टौ विशेषतः ॥ १८ ॥

कफगुल्म-चिकित्सा ।

लङ्घनोल्लेखनस्वेदे कृतेऽग्नौ सम्प्रधुक्षिते ।
घृतं सक्षारकटुकं पातव्यं कफगुल्मिना ॥
मन्दोऽग्निर्वेदना मन्दा गुरुस्तिमितकोष्ठता ।
सोत्क्लेशा चारुचिर्यस्य स गुल्मी वमनोपगः ॥ १९ ॥
मन्देऽग्नावनिले मूढे ज्ञात्वा सस्नेहमाशयम् ।

---

द्रव्यसाधितं घृतं पेयम् । षड्गे समधु तिक्तकमिति ।—षड्गे इति तिक्तद्रव्यसाधितं घृतं समधु मधुसहितं देयं, रोपणार्थमिति शेषः ॥ १४—१६ ॥

रोहिण्यादि ।—रोहिणी कटुकेति—कटुरोहिणी । त्रिफलात्वच इति ।—निरस्थित्रिफलाः । एते त्रायमाणान्ताः प्रत्येकं कर्षांशाः । पटोलत्रिवृतापले इति ।—द्वितयमेतत् प्रत्येकं पलमेकम् । अष्टगुणे इति ।—घृतादष्टगुणे इति बोध्यम् ; घृतं चतुःपलमित्युक्तम् । तेन घृतेन सम्मूर्च्छितमेकीकृतम् ; एतेन क्वाथघृताभ्यां मिलित्वाष्टौ पलानि । इयञ्च मात्रा व्याधिमहिम्ना न दोषावहेति । एतदेवाह—दीप्ताग्नय इत्यादि ॥ १७ । १८ ॥

लङ्घनेत्यादौ ।—घृतं सक्षारकटुकमिति—यवक्षारत्रिकटुकल्कसाधितमित्यर्थः । वमनोपग इति—वमनेनोपगम्यते उपचर्य्यते यः स वमनोपगः । पूर्वं वातिकगुल्म एवास्थापनं वमनमुक्तम्, इह तु कफगुल्म इत्येवेति न पौनरुक्त्यम् ॥ १९ ॥

गुडिकाचूर्णनिर्य्यूहाः प्रयोज्याः कफगुल्मिनाम् ।
क्षारारिष्टगणश्चापि दाहः श्लेष्मे विधीयते ॥ २० ॥
पञ्चमूलीशृतं तोयं पुराणं वारुणीरसम् ।
कफगुल्मी पिबेत् काले जीर्णं माध्वीकमेव वा ॥ २१ ॥
तिलैरण्डातसीबीज-सर्षपैः परिलिप्य वा ।
श्लेष्मगुल्ममयःपात्रैः सुखोष्णैः स्वेदयेद्भिषक् ॥ २२ ॥
यमानीचूर्णितं तक्रं विड़ेन लवणीकृतम् ।
पिबेत् सन्दीपनं वात-मूत्रवर्च्चोऽनुलोमनम् ॥ २३ ॥
व्यामिश्रदोषे व्यामिश्रः एष एव क्रियाक्रमः ।
सन्निपातोद्भवे गुल्मे त्रिदोषघ्नो विधिर्हितः ।
यथोक्तेन सदा कुर्य्याद् भिषक् तत्र समाहितः ॥ २४ ॥
वचाविड़ाभयाशुण्ठी-हिङ्गुकुष्ठाग्निदीप्यकाः ।
द्वित्रिषट्चतुरेकाष्ट-सप्तपञ्चांशिकाः क्रमात् ॥
चूर्णं मद्यादिभिः पीतं गुल्मानाहोदरापहम् ।

---

मृदे—स्वाहने। गुडिकादय इहैव हिङ्ग्वादिप्रभृतयो वक्ष्यमाणाः। क्षारारिष्टगण इति।—प्रतिमारणीयक्षारस्यानुक्तत्वतया अश्यतस्य एव तदभिधानं ज्ञेयम्। पानीयक्षारायामपि वेदितव्याः; चक्रदत्तव्याख्याभोक्तावानुसर्त्तव्याः। अरिष्टाश्चरकग्रहण्यर्शश्चिकित्सितोक्ताः ज्ञेयाः। उक्तं हि,—"य एव ग्रहणीदोषे क्षाराः कफगुल्मिनाम्। अरिष्टयोगाः सिद्धाय ग्रहण्यर्शश्चिकित्सिते॥" इति। दाहस्तु शरलोहादिभिः। उक्तं हि,—"तस्य दाहो हृते रक्ते शरलोहादिभिर्हितः" इति। दाहः श्लेष इति।—दाहस्य दारुणत्वात् क्रियान्तरासिद्धौ श्लेष एव कर्त्तव्यता युक्ता॥ २०॥

पञ्चमूलीत्यादि।—पञ्चमूली—महती, कफघ्नत्वनीकत्वात्। माध्वीकं—मधु॥ २१॥

स्वेदमाह, तिलेत्यादि।—गुल्मनिति—गुल्मस्थानम्। त्रिदोषघ्नो विधिरिति—वातादुक्तयोगा एव एकीकृत्य योज्याः, प्रकृतिसमसमवेतत्वात्, विकृतिविषमसमवेतस्य तु चरकेऽसाध्यतोक्तेः॥ २२—२४॥

मूत्रार्शःश्वासकासघ्नं ग्रहणीदीपनं परम् ॥ २५ ॥
यमानीहिङ्गुसिन्धूत्थ-क्षारसौवर्चलाभयाः ।
सुरामण्डेन पातव्या गुल्मशूलनिषूदनाः ॥ २६ ॥

हिङ्ग्वाद्यं चूर्णम्—

हिङ्गु त्रिकटुकं पाठां हपुषामभयां शटीम् ।
अजमोदाऽजगन्धं च तिन्तिडीकाम्लवेतसौ ।
दाड़िमं पौष्करं धान्यमजाजीं चित्रकं वचाम् ।
द्वौ क्षारौ लवणे द्वे च चव्यञ्चैकत्र चूर्णयेत् ॥
चूर्णमेतत् प्रयोक्तव्यमन्नपानेष्वनत्ययम् ।
प्राग्भुक्तमथवा पेयं मद्येनोष्णोदकेन वा ॥
पार्श्वहृद्वस्तिशूलेषु गुल्मे वातकफात्मके ।
आनाहे मूत्रकृच्छ्रे च गुदयोनिरुजासु च ॥
ग्रहण्यर्शोविकारे च प्लीहपाण्ड्वामयेऽरुचौ ।
उरोविबन्धे हिक्कायां कासे श्वासे गलग्रहे ॥
भावितं मातुलुङ्गस्य चूर्णमेतद्रसेन वा ।
बहुशो गुड़िकाः कार्य्याः कार्म्मुकाः स्युस्ततोऽधिकम् ॥ २७॥

पूतीकपत्रगजचिर्भिटचव्यवह्नि-
व्योषञ्च संस्तरचितं लवणोपधानम् ।

---

वचत्यादौ ।—अभया—हरीतकी, अग्निविवक:, दीप्यक:,—यमानी । आदि-शब्दात् पीतदारादीनां ग्रहणम् ॥ २५ ॥

यमानीत्यादौ ।—क्षार,—यवक्षार: । योगोऽयं पुराणानुना प्रभवति ॥ २६ ॥

हिङ्ग्वादिचूर्णे ।—अजमोदा—यमानी, अजगन्धा—वनयमानी ; तिन्तिडीकं—महा-[illegible], द्वौ क्षारौ—यवक्षार सर्जिकाक्षारौ, लवणे द्वे—सैन्धव सौवर्चले । प्राग्भुक्त-मिति ।—भोजनस्य प्राक् परिपाकी, भोजनाद्यन्तहितपूर्वकाले वा । प्रकारान्तरमाह—भावितमित्यादि ।—बहुश इति ।—सप्ताह "सप्ताह भावनाविधि," इत्युक्तत्वात् । मातुलुङ्गरसेन सप्तदिनान्यातपे भाव्यं, तदनु चाष्टमाषकमिता वटिका कार्य्याः । एका द्वादिवा तत्रजातानुपेरा ति । कार्मुका,—कर्मकारका ॥ २७ ॥

दग्ध्वा विचूर्ण्य दधिमस्तुयुतं प्रयोज्यम्
गुल्मोदरश्वयथुपाण्डुगदोद्भवेषु ॥ २८ ॥

हिङ्गुपुष्करमूलानि तुम्बुरूणि हरीतकीम् ।
श्यामाविडं सैन्धवञ्च यवक्षारं महौषधम् ॥
यवक्वाथोदकेनैतद् घृतभृष्टन्तु पाययेत् ।
तेनास्य भिद्यते गुल्मः सशूलः सपरिग्रहः ॥ २९ ॥

वचाद्यं चूर्णम्—

वचाहरीतकीहिङ्गु-सैन्धवं साम्लवेतसम् ।
यवक्षारं यमानीञ्च पिबेदुष्णेन वारिणा ॥
एतद्धि गुल्मनिचयं सशूलं सपरिग्रहम् ।
भिनत्ति सप्तरात्रेण वह्नेर्वृद्धिं करोति च ॥ ३० ॥

---

पूतीकपत्रेत्यादि ।—वाग्भटस्य—पूतीकः—नाटाकरञ्जः ; गजचिर्भिटी—गोरक्षकर्कटी , चित्रकः , संस्रवितमिति ।—मलरूपतया विहितम् । लवणोपधानं—लवणगर्भम् । मेध्यञ्च पूतीकपत्रादिमेवं दाह्यम् । श्रीगुप्तपलाशक्षारविधौ टीकाकृद्भिरेव व्याख्यातत्वात् । पूतीकपत्रादिसंस्तरे लवणं दत्त्वा तदुपरि पुनः पूतीकपत्रादिना विभज्य चान्तर्धूमं दग्धव्यम् ॥ २८ ॥

हिङ्ग्वित्यादौ ।—तुम्बुरु—धन्याकसदृशम् ; श्यामा—त्रिवृत् । हिङ्गुप्रभृतीनां चूर्णं कृत्वा स्थाप्यं, ततो योग्यां मात्रां गृहीत्वा यवक्वाथेन भावयित्वा घृते परिभृज्य पाययेदित्यर्थः । यवक्वाथोदकेनेति—यवक्वाथेनोष्णोदकेनेत्यर्थः । अस्मिन् प्रयोगे हि सुश्रुते उष्णोदकमेरण्डतैलवाधिकं पठितं, तद्यथा,—"उष्णोदकेन पातव्यमथवा तैलसंयुतम्" इति । अन्ये तु—उदकशब्दोऽयं द्रववचनः, तेन यवक्वाथद्रवेण पाययेत् । यवक्षारोदकेनेति पाठान्तरमसङ्गतम् , वृद्धवाग्भटे यवक्वाथस्यैवोक्तत्वात् । भिद्यते—विदीर्यते, न तु पक्वं सत् भेदं गच्छति । सपरिग्रह इति ।—वास्तुपरिग्रहसहित आनाहसहित इति वा ॥ २९ ॥

वचेत्यादि ।—हारीतस्य ।—इमं योगं भोजनादिमध्यावसानेष्वपि कारयन्तीति केचन । तत्र, हारीते हि—"शाम्यते योगराजेन त्रिःप्रयुक्तेन योगतः" इत्युक्तं न तु भोजनादिमध्यावसानेष्वपीति ॥ ३० ॥

पिप्पलीपिप्पलीमूल-चित्रकाजाजिसैन्धवैः।
युक्ता पीता सुरा हन्ति गुल्ममाशु सुदुस्तरम् ॥ ३१ ॥
नादेयीकुटजार्कशिग्रुबृहतीस्नुग्बिल्वभल्लातक-
व्याघ्रीकिंशुकपारिभद्रकजटाऽपामार्गनीपाग्निकान्।
वासामुष्ककपाटलाः सलवणा दग्ध्वा जले पाचितम्
हिङ्ग्वादि प्रतिवापमेतदुदितं गुल्मोदराष्ठीलिषु ॥ ३२ ॥

हिङ्ग्वादि—

हिङ्गूग्रगन्धाविडशुण्ठ्यजाजी-हरीतकीपुष्करमूलकुष्ठम्।
भागोत्तरं चूर्णितमेतदिष्टं गुल्मोदराजीर्णविसूचिकासु ॥ ३३ ॥
त्रिफलाकाञ्चनक्षीरी-सप्तलानीलिनीवचाः।
त्रायन्तीहपुषातिक्ता-त्रिवृत्सैन्धवपिप्पलीः ॥

---

पिप्पल्यादि।—अयं योगो वातगुल्मे ज्ञेयः ॥ ३१ ॥

नादेयीत्यादि।—नादेयी—भूमिजम्बुका, व्याघ्री—कण्टकारी, किंशुकः—पलाशः, पारिभद्रकजटा—पारिभद्रमूलम्, अग्निरग्निमन्थः। सलवणाः,—ससैन्धवाः, अथवा—पीलुमित्येके। नादेयीप्रभृतीन् दग्ध्वा क्षारः कार्यः। सर्वाङ्ग पलशतं वा पानीयक्षारविधिना चतुर्गुणेन षड्गुणेन वा उदकेन यथा चतुर्भागावशेषे कल्क-मपनीय एकविंशतिवारान् परिस्राव्य स्थापयेत्। अस्य कर्षमर्द्धपलं वा हिङ्ग्वादि-चूर्णं पादिकं दत्त्वा मांसरसक्षीरघृतादीनामन्यतमेन प्रविश्य पिबेत्, मोदकरसादिभिः भोजन-मौदार्यार्थम्। अन्ये त्वाहुः,—एकदा निपाच्य स्थापिते क्षारोदकेऽम्लत्वादिदोष-शङ्का स्यात्, अतः कृतक्षारादग्धं संस्थाप्यैकदा यथादिवसमिति क्षारं गृहीत्वा प्रत्यह-मन्तरीक्षक्षारविधिना क्षारोदकं कार्यमिति। हिङ्ग्वादिप्रतिवापमिति।—हिङ्ग्वादेः पादिकस्य प्रतिवापः प्रक्षेपो यत्र तत् तथा। एतदिति।—क्षारजलम्। यद्य तन्त्रस्थाय प्रयोगस्यैवोक्तहिङ्ग्वाद्यपरिज्ञानात् वक्ष्यमाणोहिङ्ग्वादिरनन्तरपठितत्वात् ग्रन्थकारस्याभिमतो लभ्यते ॥ ३२ ॥

हिङ्ग्वादौ।—उग्रगन्धा—वचा। भार्गोत्तरमिति।—उक्तोत्तरमेकभागग्रहम्। उष्णाम्बुनाऽस्य पानमुपदिशन्ति ॥ ३३ ॥

पिबेद्विचूर्ण्य मूत्रोष्ण-वारिमांसरसादिभिः ।
सर्वगुल्मोदरप्लीह-कुष्ठार्शःशोथपीडितः ॥ २४ ॥

काङ्कायनगुडिका—

शटीं पुष्करमूलञ्च दन्तीं चित्रकमाढकीम् ।
शृङ्गवेरं वचाञ्चैव पलिकानि समाहरेत् ॥
त्रिवृतायाः पलञ्चैव कुर्य्यात् त्रीणि च हिङ्गुनः ।
यवक्षारपले द्वे च द्वे पले चाम्लवेतसात् ॥
यमान्यजाजीमरिचं धान्यकञ्चेति कार्षिकम् ।
उपकुञ्च्यजमोदाभ्यां तथा चाष्टमिकामपि ॥
मातुलुङ्गरसेनैव गुडिकाः कारयेद्भिषक् ।
तासामेकां पिबेद् द्वे वा तिस्रो वापि सुखाम्बुना ॥
अम्लैश्च मद्यर्यूषैश्च घृतेन पयसाऽथवा ।
एषा काङ्कायनेनोक्ता गुडिका गुल्मनाशिनी ॥
अर्शोहृद्रोगशमनी क्रिमीणाञ्च विनाशिनी ।
गोमूत्रयुक्ता शमयेत् कफगुल्मं चिरोत्थितम् ॥
क्षीरेण पित्तगुल्मञ्च मद्यैरम्लैश्च वातिकम् ।
त्रिफलारसमूत्रैश्च नियच्छेत् सान्निपातिकम् ।
रक्तगुल्मे च नारीणामुष्ट्रीक्षीरेण पाययेत् ॥ २५ ॥

हपुषाद्यं घृतम्—

हपुषाव्योषपृथ्वीका-चव्यचित्रकसैन्धवैः ।
साजाजीपिप्पलीमूल-दीप्यकैर्विपचेद्घृतम् ॥
सकोलमूलकरसं सक्षीरं दधिदाडिमम् ।

---

त्रिफलेत्यादौ ।—काञ्चनक्षीर्य्या अभावे कटुकरोहिणी । सप्तला—चर्मकषा, नीलिनी—नीलवृक्षः । विरेकार्थोऽयं योगः ॥ २४ ॥

शटीत्यादि ।—यमान्यादीनां प्रत्येकं कर्षः । उपकुञ्ची—कृष्णजीरकम्, अजमोदा—यमानी, अनयोः प्रत्येकम् अष्टमिकामर्द्धपलमित्यर्थः ॥ २५ ॥

तत् परं वातगुल्मघ्नं शूलानाहविबन्धनुत् ॥
योन्यर्शोग्रहणीदोष-श्वासकासारुचिज्वरान्।
पार्श्वहृद्वस्तिशूलञ्च घृतमेतदपोहति ॥ २६ ॥

पञ्चपलकं घृतम्—

पिप्पल्याः पिचुरध्यर्द्धो दाड़िमाद् द्विपलं पलम्।
धान्यात् पञ्च घृतात् शुण्ठ्याः कर्षः क्षीरं चतुर्गुणम् ॥
सिद्धमेतैर्घृतं सद्यो वातगुल्मं चिकित्सति।
योनिशूलं शिरःशूलमर्शांसि विषमज्वरान् ॥ ३० ॥

त्र्यूषणाद्यं घृतम्—

त्र्यूषणत्रिफलाधान्य-विड़ङ्गचव्यचित्रकैः।
कल्कीकृतैर्घृतं सिद्धं सक्षीरं वातगुल्मनुत् ॥ ३८ ॥

त्रायमाणाद्यं घृतम्—

जले दशगुणे साध्यं त्रायमाणाचतुःपलम्।
पञ्चभागस्थितं पूतं कल्कैः संयोज्य कार्षिकैः ॥
रोहिणीकटकामुस्त-त्रायमाणादुरालभाः।
कल्कास्तामलकीवीरा-जीवन्तीचन्दनोत्पलैः ॥

---

हपुषेत्यादौ।—हपुषा—वनमल्लिका; पृथ्वीका—कृष्णजीरकं, हिङ्गुविडेत्यर्थः। दीप्यकः,—यमानी। सक्षीरमूलकरसमिति।—क्षीरं—गव्यदुग्धं, तस्य क्वाथः। मूलकस्यापि गृह्णस्यैव क्वाथः, न पुनर्नवद्रव्यस्य स्वरसः, तस्य तु शुष्के निषिद्धत्वात्। दाडिमस्याप्येवं स्वरसः, द्रवस्याढकत्वात्। विशतिविशांपि दाडिमस्वरस एवोक्त, एवञ्च पञ्चभिर्द्रवैः प्रत्येकं स्नेहसमैः पाकः ॥ २६ ॥

पिप्पल्या इत्यादि।—पिचुरध्यर्द्ध इति—सार्द्धकर्षः, पलं धान्यादिति योज्यम्; पञ्च घृतादिति—पञ्च पलानीत्यर्थः। क्षीरं चतुर्गुणमिति—घृतपञ्चपलापेक्षया विंशति-पलानि क्षीरस्येत्यर्थः ॥ ३० ॥

त्र्यूषणाद्यघृते—सक्षीरमिति।—चतुर्गुणक्षीरसहितं, द्रवान्तराभावात् ॥ ३८ ॥

जल इत्यादौ—पञ्चभागस्थितमिति।—पञ्चभागावशिष्टं, तेन क्वाथस्याष्टौ पलानीत्यर्थः। कल्कैरित्यत्र—व्यवहितैरप्यामलकादिभिः सम्बध्यते, न केवलमेतैः कल्कैः

भल्लातकं घृतम्—

भल्लातकानां द्विपलं पञ्चमूलं पलोन्मितम् ।
साध्यं विदारीगन्धाद्यमापोथ्य सलिलाढ़के ॥
पादावशेषे पूते च पिप्पलीं नागरं वचाम् ।
विडङ्गं सैन्धवं हिङ्गु यावशूकं विडं शटीम् ॥
चित्रकं मधुकं रास्नां पिष्ट्वा कर्षसमान् भिषक् ।
प्रस्थञ्च पयसो दत्त्वा घृतप्रस्थं विपाचयेत् ॥
एतद्भल्लातकं नाम कफगुल्महरं परम् ।
प्लीहपाण्ड्वामयश्वास-ग्रहणीकासगुल्मनुत् ॥ ४४ ॥

रसोनाद्यं घृतम्—

रसोनस्वरसे सर्पिः पञ्चमूलीरसान्वितम् ।
सुराऽऽरनालदध्यम्ल-मूलकस्वरसैः सह ॥
व्योषदाडिमवृक्षाम्ल-यमानीचव्यसैन्धवैः ।
हिङ्ग्वम्लवेतसाजाजी-दीप्यकैश्च पलांशिकैः ॥
सिद्धं गुल्मग्रहण्यर्शः-श्वासोन्मादक्षयज्वरान् ।
कासापस्मारमन्दाग्नि-प्लीहशूलानिलान् जयेत् ॥ ४५ ॥

दन्तीहरीतकी—

जलद्रोणे विपक्तव्या विंशतिः पञ्च चाभयाः ।
दन्त्याः पलानि तावन्ति चित्रकस्य तथैव च ॥
तेनाष्टभागशेषेण पचेद्दन्तीसमं गुडम् ।

---

भल्लातकघृतं द्विगुणद्रवेणैव पक्तव्यं,—"निर्दिष्टे सदैव हि" इति वचनात् । पञ्चमूलं स्वल्पं, तदेव विदारीगन्धाद्यं, प्रत्येकं पलोन्मितम् । भल्लातकं नामेत्यनन्तरं सर्पिरिति शेषः ; चरके तु—"एतद्भल्लातकघृतं कफगुल्महरं परम्" इत्येव पाठ ॥ ४४ ॥

रसोनेत्यादौ ।—पञ्चमूलं—महत् पञ्चमूलं, वातकफहरत्वात्, तस्य रसः क्वाथ । रसोनस्वरसादीनां घृता समत्वम् । दीप्यकं—चेवयमानी ॥ ४५ ॥

जलद्रोण इत्यादौ ।—विंशतिः पञ्च चाभया इत्यात्ततिमानात् । एतानि हरीतकी-

तायाभयास्त्रिवृच्चूर्णात् तैलाच्चापि चतुःपलम् ॥
पलमेकं कणाशुण्ठ्योः सिद्धे लेहे च शीतले ।
क्षौद्रं तैलसमं दत्त्वा चातुर्जातपलं तथा ॥
ततो लेहपलं लीढ्वा जग्ध्वा चैकां हरीतकीम् ।
सुखं विरिच्यते स्निग्धो दोषप्रस्थमनामयः ॥
प्लीहश्वयथुगुल्मार्शोहृत्पाण्डुग्रहणीगदाः ।
शाम्यन्त्युत्क्लेशविषमज्वरकुष्ठान्यरोचकाः ॥ ३९ ॥

हयीराद्यरिष्टः—

हयीरसुरुवूकञ्च वर्षाह्वं हस्तीदयम् ।
चित्रकञ्च जलद्रोणे पचेत् पादावशेषितम् ॥
मागधीचित्रकक्षौद्र-लिप्तकुम्भे निधापयेत् ।
मधुनः प्रस्थमावाप्य पथ्याचूर्णार्द्धसंयुतम् ॥
वुपोषितं दद्याच्च जीर्णभक्तः पिबन्नरः ।
अरिष्टोऽय जयेद्गुल्ममविपाकं सुदुस्तरम् ॥ ४० ॥

---

पलानि कर्पटे पीडयौ यहा चत्वारि हरीतकीवान् कथनीयानि। तैलाच्चतुष्पलमिति पाठे च—पलचतुष्टयमित्यर्थः। तैलमुत्त्विन्नहरीतकीभर्जनार्थे, न तु त्रिवृच्चूर्णादिभर्जनार्थम्, भर्जनेन विरेचनशक्त्यपकर्षसम्भवात्। पलमेकं कणाशुण्ठ्योरिति मिलित्वा, एव चातुर्जातपलमपि। प्रस्थमत्र दोषस्य षोडशपलप्रमाणम्। यत्र हि भोजे—"वमने च विरेके च तथा शोणितमोक्षणे। सार्द्धत्रयोदशपलं प्रस्थमाहुर्मनीषिणः ॥" इति ॥ ३९ ॥

हयीरमित्यादि।—सुरुवस।—हयीर,—नेत्रपुष्करंथा। हयीरादीनां मिलित्वा पलशतम्, "द्रौणे द्रव्यतुला मता" इति वचनात्; पचेत्—लाक्षकमाषुः। मागधी—पिप्पली। मधुनः प्रस्थमिति—शरावचतुष्टयम्। पथ्याचूर्णार्द्धसंयुतमिति—हरीतकीचूर्णस्य, प्रस्थार्द्धमित्यष्टौ पलानि, तेन संयुतम्। वुपोषितं—पुष्पवासरपर्यन्तं स्थितम्। जीर्णभक्त,—परिणताहार,, लघुभोज्य इत्यर्थः, यस्य पलमर्द्धपलं वा मात्रमुपयोज्यम् ॥ ४० ॥

रौधिरस्य च गुल्मस्य गर्भकालव्यतिक्रमे ।
स्निग्धस्विन्नशरीरायै दद्यात् स्निग्धं विरेचनम् ॥ ४८ ॥
शताह्वाचिरविल्वत्वग्-दारुभार्गीकणोद्भवः ।
कल्कः पीतो हरेद्गुल्मं तिलक्वाथेन रक्तजम् ॥ ४९ ॥
तिलक्वाथो गुडव्योष-हिङ्गुभार्गीयुतो भवेत् ।
पानं रक्तभवे गुल्मे नष्टे पुष्पे च योषिताम् ॥ ५० ॥
सक्षारं त्र्यूषणं मद्यं प्रपिबेद्रक्तगुल्मिनी ।
पलाशक्षारतोयेन सिद्धं सर्पिः पिबेच्च सा ॥ ५१ ॥

---

रौधिरस्येत्यादौ ।—गर्भकालव्यतिक्रम इति ।—उचितगर्भकालस्य दशमासरूपकालस्य व्यतिक्रमे । अयञ्च समयनियमो रक्तगुल्मस्यौषधार्थं समयप्रदर्शनार्थमेवोक्तः, ज्वरे सप्तदिवसात् परतः पाचनवत्, न तु गर्भकालसन्देहनिरासार्थम् ; दशमासातिक्रमेणापि गर्भावस्थादर्शनात् । उक्तं हि,—"तं स्त्री प्रसूते सुचिरेण गर्भं पुष्टो यदा वर्षगणैरपि स्यात्" इति ; तथा पिण्डितस्पन्दनमस्य गर्भलक्षणात् विलक्षणमुक्तं, यथा—"यः स्पन्दते पिण्डित एव नाङ्गैः" इति । एतेन दशममासादर्वागपि शोणितगुल्मावधारणं भवत्येव ; तस्मात् व्याधिमहिम्ना चास्य दशममासातिक्रमे एवैव सुखचिकित्स्यत्वप्रदर्शनार्थमिदमुक्तम् ; अर्वाक् चिकित्सायान्तु शोणितातिस्रुतौ गर्भाशयोपघातादिकं स्यादिति ॥ ४८ ॥

शताह्वेत्यादि ।—शताह्वादिकल्कानां प्रक्षेपः । चिरविल्वत्वक्—नाटाकरञ्जत्वक् । तिलक्वाथेनेति ।—तिलफलक्वाथेनेत्यर्थः ; एवमुत्तरयोगेऽपि तिलफलस्यैव क्वाथः । केचित्तु तिलनालक्वाथकृतक्षारोदकेनापि व्यवहरन्ति । रक्तजमित्यत्रैव रक्तजम् ॥ ४९ ॥

तिलक्वाथ इत्यादौ ।—गुडादयः प्रक्षेप्याः । नष्टे पुष्पे इत्यदृष्टार्तवे ॥ ५० ॥

सक्षारमित्यादौ ।—क्षारो यवक्षारादिकः, अन्ये तु—यवक्षार इत्याहुः ।
पलाशक्षारतोयेनेत्यादि ।—अकल्कमिदं घृतम् । पलाशभस्माढकमुदकाढकैः षड्भिः संयोज्याग्नौ साधनीयम् । ततश्चैकविंशत्यादिकपरीक्षोदये तृतीयभागेऽवशिष्टे निःसृतवारान् परिस्राव्य क्षारोदकं घृताच्चतुर्गुणं ग्राह्य, तेन घृतस्य पाक इति चक्रः । अन्ये तु—पानीयक्षारविधिना स्रावितक्षाराम्बुना घृतपाकमुपदिशन्ति ; कार्त्तिकः पुनः पलाशक्षारतोयेनेत्यनेन खरपाकोक्तविधिना पलाशक्षारक्वाथकरणमित्याह ॥ ५१ ॥

उग्रैर्वा भेदयेद्भिन्ने विधिरासृग्दरो हितः।
न प्रभिद्येत यद्येवं दद्याद्योनिविशोधनम्॥
चारेण युक्तं पललं सुधाक्षीरेण वा पुनः।
रुधिरेऽतिप्रवृत्ते तु रक्तपित्तहरी क्रिया॥ ५२॥

भल्लातकघृतम्।

भल्लातकात् कल्ककषायपक्वं सर्पिः पिबेच्छर्करया विमिश्रम्।
तद्रक्तगुल्मं विनिहन्ति पीतं बलासगुल्मं मधुना समेतम्॥५३॥
वल्लूरं मूलकं मत्स्यान् शुष्कशाकानि वैदलम्।
न खादेदालुकं गुल्मी मधुराणि फलानि च॥ ५४॥

इति गुल्म-चिकित्सा।

---

उग्रैर्वेति।—उग्रैरित्युग्रवीर्यैः सुराक्षीराक्षीरादिभिः। भिन्न इति—भग्नरुधिरवति रक्ते। योनिविशोधनमिति—वर्त्तिरूपतया योनिविरेचनमित्यर्थः। चारेणेत्यादि।—पलाशचारेण सह पललं तिलचूर्णं किञ्चित्कल्कं दत्त्वा वर्त्तिं विधाय योन्यभ्यन्तरे दद्यात्, अथवा पलाशादिचारतिलचूर्णं सीजक्षीरेण मिश्रणीयम्; तेन सूक्ष्मवस्त्रं भावयित्वा वर्त्तिः कार्य्या, सा च योन्यभ्यन्तरे देया। रुधिर इत्यादि स्पष्टम्॥ ५२॥

भल्लातकादित्यादि।—अत्र पादिकशर्कराप्रक्षेपः, एवं मध्वपि;—"कल्कवन्मधुशर्करे" इत्युक्तेः। बलासः,—कफः। कफगुल्मे शर्करास्थाने मधु देयमित्यर्थः॥ ५३॥

वल्लूरमित्यादि।—शुष्कमांस। वल्लूर—शुष्कमांसम्। मूलकमार्द्रम्; शुष्कमूलकस्य वातज्वरत्वेन पथ्यत्वात्। एतच्च हरितवर्गोपलक्षणं गुल्मे हरितवर्गस्यापथ्यहितत्वात्। वैदलं—मुद्गादि, आलुकं—पिण्डालुकम्। मधुराणि फलानि—क्षीरिवृक्षफलानि, चारपाणौ न्यग्रोधादिफलवर्जनस्योक्तत्वात्। चकारात् हरीतकीवर्गोपलक्षणम्; गुल्मे हरीतकीवर्गस्यापथ्यहितत्वात्॥ ५४॥

इति गुल्म-चिकित्सा विवृतिः।

## अथ हृद्रोग-चिकित्सा ।

वातोपसृष्टे हृदये वामयेत् स्निग्धमातुरम् ।
द्विपञ्चमूलीक्वाथेन सस्नेहलवणेन च ॥ १ ॥
पिप्पल्येलावचाहिङ्गु यवक्षारोऽथ सैन्धवम् ।
सौवर्चलमथो शुण्ठी अजमोदा च चूर्णितम् ॥
फलधान्याम्लकौलत्थ-दधिमद्यासवादिभिः ।
पाययेच्छुद्धदेहञ्च स्नेहेनान्यतमेन वा ॥ २ ॥
नागरं वा पिबेदुष्णं कषायञ्चाग्निवर्द्धनम् ।
कासश्वासानिलहरं शूलहृद्रोगनाशनम् ॥ ३ ॥
श्रीपर्णीमधुकक्षौद्र-सितागुड़जलैर्वमेत् ।
पित्तोपसृष्टे हृदये सेवेत मधुरैः शृतम् ॥
घृतं कषायांश्चोद्दिष्टान् पित्तज्वरविनाशनान् ॥ ४ ॥

---

गुल्मस्य हृदयं स्थानमुक्तम् ; अतः स्थानसाम्यात् तदनन्तरं हृद्रोग उच्यते ।—वातोपसृष्ट इत्यादि ।—सुश्रुतस्य ।—अत्रानुक्तमपि मदनफलादिचूर्णं बोध्यम् ; वमनीयत्वात् । वातजेऽपि वमनविधानं हृदयस्य कफस्थानत्वात् ; उक्तं हि,—"स्थानिस्थानगते दोषे स्थानिवत् समुपाचरेत्" इति । एवं पित्तजेऽपि वमनं बोध्यम् । चरके हृद्रोगिणो यथावस्था उक्तात्तयापि कफोत्क्लेशे बलीयसि सर्वत्रैव वमनं श्रेयम् । पिप्पल्याद्यन्यतमेन देयमं सुश्रुतस्य ।—फलाम्लं —मातुलुङ्ग-दाडिमफलादि, द्रवत्वात् तस्य रसो ग्राह्यः, पानीययोगित्वात् । वाते धान्याम्ल—काञ्जिकम् । कौलत्थ',—कुलत्थयूषः । स्नेहेनान्यतमेन वेति ।—घृतादीनामन्यतमेन फलधान्याम्लादिबहुद्रवोपदर्शनं साम्याऽपेक्षम् ॥ १ । २ ॥

नागरमित्यादि ।—नागरं—नागरकृतकषायं पिबेत् । वाशब्दः पूर्वयोगापेक्षया ॥ ३ ॥

पैत्तिकचिकित्सामाह, श्रीपर्णीत्यादि ।—सुश्रुतस्य ।—श्रीपर्णी गाम्भारी, तस्याः फलमत्र देयम् । अत्र श्रीपर्णीमधुकयोरेव, तयोरेव योग्यत्वात्, अत्रमवाङ्क्ष्यतक्वाथः । अथ क्षौद्रसितागुडान् प्रक्षिप्य पित्तजे वमेत् ; किंवा जलस्य श्रीपर्ण्यादिभिः पञ्चभिः सम्बन्धात् पञ्च योगाः वमी । अत्रानुक्तमपि मदनफलादि पूर्ववद् बोध्यम् । उत्तमस्य

शीताः प्रदेहाः परिषेचनानि
तथा विरेको हृदि पित्तदुष्टे।
द्राक्षासिताक्षौद्रपरूषकैः स्यात्
शुद्धे च पित्तापहमन्नपानम्॥
पिष्ट्वा पिबेद्वापि सिताजलेन
यष्ट्याह्वयं तिक्तकरोहिणीञ्च॥ ५॥
अर्जुनस्य त्वचा सिद्धं क्षीरं योज्यं हृदामये।
सितया पञ्चमूल्या वा बलया मधुकेन वा॥ ६॥
घृतेन दुग्धेन गुडाम्भसा वा पिबन्ति चूर्णं ककुभत्वचो ये।
हृद्रोगजीर्णज्वररक्तपित्तं हत्वा भवेयुश्चिरजीविनस्ते॥ ७॥
वचा-निम्बकषायाभ्यां वान्तं हृदि कफोत्थिते।
वातहृद्रोगहृच्चूर्णं पिप्पल्यादि च योजयेत्॥ ८॥

---

सिताशुड्‌शर्करेत्यत्र सिताज्वलजलेरिति पठित्वा तत्पर्थं कुर्वमिति व्याचष्टे। मधुरे घत हृतमिति।—काकोल्यादिगणकाथकल्कसाधित घृतम्॥ ४॥

शीता इत्यादौ।—द्राक्षादिभिर्युक्तमन्नपानमन्यमूषादि वमनविरेचनशुद्धे कार्य्यमित्यर्थः इति केचित्। अन्ये तु—"पित्ते द्राक्षेक्षुनिर्य्यासि सिताक्षौद्रपरूषकैः। युक्तो विरेको हृद्यः स्यात्" इति तन्त्रान्तरदर्शनात् द्राक्षादिभिर्युक्तो विरेक इत्याहुः। सिताजलेनेति।—शर्करामिश्रितजलेनेत्यर्थः। सिता जलेनेति पाठोऽपि ज्ञेय, उक्तं हि वाग्भटे—"यष्टीमधुककल्कञ्च पिबेत् ससितमम्भसा" इति॥ ५॥

अर्जुनस्येत्यादि।—क्षीरपरिभाषया अर्जुनत्वगादिभिः प्रत्येक साधितं सितया सह पेयमिति चत्वारो योगाः। केचित्तु केवलवारिसाधितक्षीरे सिताप्रक्षेपात् पञ्च योगानाहुः। पञ्चमूली चात्र स्वल्पा। एते च योगा वातपित्ते ज्ञेया.॥ ६। ७॥

वचेत्यादि।—सुश्रुतस्य। वचाकषायेण निम्बकषायेण वा वमनम्; किंवा वचाकल्को निम्बस्य कषाये, ताभ्यां मिलित्वा वमनम्। हृदीति—हृद्रोगे। सात्म्यात् मद्या क्षोभन्नीतियत्। वातहृद्रोगहृच्चूर्णं पिप्पल्यादि चेति।—पञ्चैव वातहृद्रोगे पिप्पल्यादिना यच्चूर्णमुक्तं तत् पाययेदित्यर्थः। वाग्भटेऽप्युक्तम्,—"कफोद्भवे वमेत् स्विन्न पिचुमर्दवचाम्भसा। कुलत्थधन्वोत्थरसतीक्ष्णमद्ययवाशन.॥ पिबेच्चूर्णं वचा-

त्रिदोषजे लङ्घनमादितः स्यादन्नञ्च सर्वेषु हितं विधेयम्।
हीनाधिमध्यत्वमवेक्ष्य चैव कार्य्यं त्रयाणामपि कर्म शस्तम् ॥९॥

चूर्णं पुष्करजं लिह्यान्माक्षिकेण समायुतम् ॥।
हृच्छूलं श्वासकासघ्नं क्षयहिक्कानिवारणम् ॥ १० ॥

तैलाज्यगुड़विपक्वं चूर्णं गोधूमपार्थजं वापि।
पिबति पयोऽनु च यः स भवति जितसकलहृदामयः पुरुषः ॥११॥

गोधूमककुभचूर्णं छागपयो गव्यसर्पिषा विपक्वम्।
मधुशर्करासमेतं शमयति हृद्रोगमुद्धतं पुंसाम् ॥ १२ ॥

मूलं नागबलायास्तु चूर्णं दुग्धेन पाययेत्।
हृद्रोगश्वासकासघ्नं ककुभस्य च वल्कलम् ॥

---

हिङ्गु-लवणत्रयनागरान्। सैलायमानीककणा यवक्षारान् सुखाम्बुना ॥ फलधान्याम्ल-कौलत्थ यूषमूत्रासवैस्तथा ॥" इति। वातहृच्चूर्णं पिप्पल्यादिकं तथा पिप्पल्यादिगणं पाययेदित्याहुरन्ये ॥ ८ ॥

त्रिदोषज इत्यादि।—लङ्घनविधानं हृदयस्य कफस्थानतया। तद्वद् त्रिदोषजेऽपि कफ एवादौ लङ्घनेन जेय इति मत्वा कृतम्। त्रिदोषजे अन्यदोषतया चिकित्सामुपनाह हीनाधीत्यादि।—अधिमध्योऽधिकमध्यो,—अधिकत्वमित्यर्थः, दोषाणां हीनत्वादिकं प्रतीक्ष्य यत् कर्म प्रशस्तमधिकदोषहन्तृतया तत् कार्यमिति वाक्यार्थः ॥ ९ ॥

चूर्णमित्यादि स्पष्टम् ॥ १० ॥

तैलाज्येत्यादि।—तैलाज्यगुडान् मिलित्वा पादिकान् दत्त्वा गोधूमपार्थचूर्णं स्तोकमात्रेण तोयेनोत्कारिकावद्विपाच्य भक्ष्यम्। किंवा गोधूमपार्थचूर्णसमो गुडः, तैलाज्ये तु संस्कारार्थं स्तोकमात्रे देये। पार्थोऽर्जुनवृक्षः। वाग्भट-पूर्वयोगापेक्षया ॥ ११ ॥

गोधूमेत्यादि।—ककुभोऽर्जुनः। अत्रापि योगे सर्पिर्मधुशर्कराणां पूर्ववन्मानं गृहीत्वा छागपयोरुत्कारिकावत् पाकः। शीते मधु देयम् ॥ १२ ॥

रसायनं परं वल्यं वातशिग्रासयोजितम्।
संवत्सरप्रयोगेण जीवेद्वर्षशतं ध्रुवम् ॥ १३ ॥
हिङ्गूग्रगन्धाविड़विश्वकृष्णा-कुष्ठाभयाचित्रकयावशूकम्।
पिबेच्च सौवर्चलपुष्कराढ्यं यवाम्भसा शूलहृदामयघ्नम् ॥ १४ ॥
दशमूलीकषायन्तु लवणक्षारसंयुतम्।
श्वासं कासञ्च हृद्रोगं गुल्मशूलञ्च नाशयेत् ॥ १५ ॥
पाठां वचां यवक्षारमभयां साम्लवेतसाम्।
दुरालभां चित्रकञ्च त्र्यूषणञ्च फलत्रयम् ॥
शटीं पुष्करमूलञ्च तिन्तिड़ीकं सदाड़िमम्।
मातुलुङ्गस्य मूलानि श्लक्ष्णचूर्णानि कारयेत् ॥
सुखोदकेन मद्यैर्वा चूर्णान्येतानि पाययेत्।
अर्शः शूलञ्च हृद्रोगं गुल्मञ्चाशु व्यपोहति ॥ १६ ॥
पुटदग्धमश्मपिष्टं हरिणविषाणन्तु सर्पिषा पिबतः।
हृत्पृष्ठशूलमुपशममुपयात्यचिरेण कष्टमपि ॥ १७ ॥
क्रिमिहृद्रोगिणं स्निग्धं भोजयेत् पिशितौदनम्।
दध्ना च पललोपेतं त्र्यहं पश्चाद्विरेचयेत् ॥

---

चूर्णं समवमाद्या इति।—चूर्णं चूर्णमिति चूर्णकर्म मूलमित्यर्थः। वकुलस्य त्वक्फलमिति।—वकुलस्य त्वक्चूर्णमपि दुग्धेन पेयम्। जीवेद्वर्षशतम् ॥ १३ ॥

हिङ्ग्वादि।—पुष्कराभावात् कुष्ठमेव आदेयम्। हिङ्ग्वादिपुष्करान्तानां चूर्णं यवक्षार प्रक्षिप्य पिबेत् ॥ १४—१६ ॥

पुटेत्यादि।—हरिणशृङ्गं कुदेन मर्द्दयित्वा भस्म प्रक्षिप्य च सोमराजी निर्यूहाद्वारे वा दग्ध्वा विभावित चूर्णेन पेयमित्यर्थः ॥ १७ ॥

क्रिमीत्यादि।—यत परमित्यन्तं सुगमम्।—पिशितवासाम्लोदनं पिशितौदनम्, तत्र दध्ना पललेन च संयुक्तं त्र्यहं भोजयेत्। पललं तिलचूर्णम्। एतच्च पिशितौदनभोजनं क्रिमीणामुत्क्लेशार्थम्। पश्चादिति।—क्रिम्युत्क्लेशानन्तरं विरेचयेत्।

सुगन्धिभिः सलवणैर्योगैः साजाजिशर्करैः ।
विड़ङ्गगाढ़ं धान्याम्लं पाययेद्धितमुत्तमम् ॥ १८ ॥
क्रिमिजे च पिबेन्मूत्रं विड़ङ्गामयसंयुतम् ।
हृदि स्थिताः पतन्त्येवमधस्तात् क्रिमयो नृणाम् ।
यवान्नं वितरेच्चास्मै सविड़ङ्गमतः परम् ॥ १९ ॥

वल्लभघृतम्—

मुख्यं प्रस्थार्द्धस्य हरीतकीनां सौवर्चलस्यापि पलद्वयञ्च ।
पक्वं घृतं वल्लभकेतिनाम्ना हृच्छ्वासशूलोदरमारुतघ्नम् ॥ २० ॥

श्वदंष्ट्राद्यं घृतम्—

श्वदंष्ट्रोशीरमञ्जिष्ठा-बलाकाश्मर्य्यकत्तृणम् ।
दर्भमूलं पृथक्पर्णी पलाशर्षभकौ स्थिरा ॥

---

कैर्विरेचयेदित्याह, सुगन्धिभिरित्यादि ।—योगैरिति—विरेचनयोगैः । कीदृशैः ? सुगन्धिभिः,—चातुर्जातकयोगैरिति शेषः । सौगन्ध्यकरणञ्च वान्तिशङ्कानिरासार्थम् । वमनञ्च क्रिमिहृद्रोगे निषिद्धं, क्रिमिजर्ज्जरितहृदयत्वात् । तथा वमनेन क्रिमिभिः शिरोगतैरिन्द्रियोपघातभयाच्चेति । सलवणैरित्यत्र सपललैरिति पठित्वा सभृष्टतिलचूर्णैरिति व्याख्यानयन्ति केचित् । पीतविरेकस्यानुपानमाह, विड़ङ्गगाढ़मित्यादि ।—विड़ङ्गगाढ़ं विड़ङ्गचूर्णोत्कटम् ; धान्याम्लमिति—काञ्जिकम् । विड़ङ्गगाढ़ैरिति पाठे—योगैरित्यस्य विशेषणम् ॥ १८ ॥

विरेचनयोगान्तरमाह क्रिमिजे चेत्यादि ।—विड़ङ्गकुष्ठचूर्णं प्रक्षिप्य गोमूत्रं वा विरेकार्थं पिबेत् । यद्यप्ययं योगः सुश्रुते नास्ति,—तथापि तन्त्रान्तरीय एवायं विरेचनप्रस्तावे संग्रहकारेण लिखितः । विरेचनानन्तरमग्निसन्धुक्षणार्थं परिशिष्टक्रिमिविनाशार्थञ्चान्नसंस्कारमाह, यवान्नमित्यादि ।—यवान्नमिति—यवपेयादिकम् । सविड़ङ्गमिति—षड़ङ्गविधिना विड़ङ्गकषायसाधितम् । अतः परमिति—विरेकानन्तरमित्यर्थः ॥ १९ ॥

वल्लभघृते ।—मुख्यमिति—श्रेष्ठम् । हरीतकी-सौवर्चलञ्च कल्कः ; घृतस्य प्रस्थः, जलेन च पाकः ॥ २० ॥

श्वदंष्ट्राद्ये ।—पलाशः किंशुकः, तस्य मूलम् । अन्ये तु—पलाशं शटीमाहुः ।

पलिकान् साधयेत् तेषां रसे क्षीरे चतुर्गुणे।
कल्कैः स्वगुप्तर्षभक-मेदाजीवन्तिजीवकैः॥
शतावर्य्यृद्धिमृद्वीका-शर्कराश्रावणीबिसैः।
प्रस्थः सिद्धो घृताद्वात पित्तहृद्रोगशूलनुत्॥
मूत्रकृच्छ्रप्रमेहार्शः-श्वासकासक्षयापहः।
धनुःस्त्रीमद्यभाराध्व-खिन्नानां बलमांसदः॥ २१॥

बलाद्यं घृतम्—

घृतं बलानागबलार्जुनाम्बु-सिद्धं सयष्टीमधुपादकल्कम्।
हृद्रोगशूलक्षतरक्तपित्तं कासानिलासृक् शमयत्युदीर्णम्॥ २२॥

अर्जुनघृतम्—

पार्थस्य कल्कस्वरसेन पक्वं शस्तं घृतं सर्वहृदामयेषु॥ २३॥

इति हृद्रोग-चिकित्सा।

---

एतस्मिन्नेकादशपली क्वाथ्योऽष्टगुणं जलमेकादशशरावं दत्त्वा क्वाथः कार्य्यः। पादशेषश्च पादोनशरावत्रयम्; ततश्चतुर्गुणं क्षीरमेकादशशरावरूपमिति किञ्चिदूनचतुर्गुणः पाकः। अन्ये तु—एकादशपली क्वाथ्य एकाढकं जलं दत्त्वा पादशेषः प्रस्थ इत्याहुः। ततश्चतुर्गुणं क्षीरमाढकम्, एवं पञ्चगुणः पाक इति। व्यवहारोऽप्येवमेव। श्रावणी—मुण्डितिका। बिस—मृणालम्॥ २१॥

बलाद्यघृते:—घृतमित्यादौ:—नागबला—गोरक्षतण्डुला। अम्बु—क्वाथः॥२२॥

अर्जुनघृतं:—स्पष्टम्॥ २३॥

इति हृद्रोग-चिकित्सा-विवृतिः।

## अथ मूत्रकृच्छ्रचिकित्सा ।

वातमूत्रकृच्छ्रे—

अभ्यञ्जनस्नेहनिरूहवस्ति-स्वेदोपनाहोत्तरवस्तिसेकान् ।
स्थिरादिभिर्वातहरैश्च सिद्धान् दद्याद्रसांश्चानिलमूत्रकृच्छ्रे ॥१॥
अमृता-नागरं धात्री-वाजिगन्धा-त्रिकण्टकान् ।
प्रपिबेद्वातरोगार्त्तः सशूली मूत्रकृच्छ्रवान् ॥ २ ॥

पित्तमूत्रकृच्छ्रे—

सेकावगाहाः शिशिराः प्रदेहा
ग्रैष्मो विधिर्वस्तिपयोविकाराः ।
द्राक्षाविदारीक्षुरसैर्घृतैश्च
कृच्छ्रेषु पित्तप्रभवेषु कार्य्याः ॥ ३ ॥
कुशः काशः शरो दर्भ इक्षुश्चेति तृणोद्भवम् ।
पित्तकृच्छ्रहरं पञ्च-मूलं वस्तिविशोधनम् ।
एतत्सिद्धं पयः पीतं मेढ्रगं हन्ति शोणितम् ॥ ४ ॥
शतावरीकाशकुशश्वदंष्ट्रा-विदारिशालीक्षुकशेरुकाणाम् ।
क्वाथं सुसिद्धं मधुशर्करात्तं पिबन् जयेत् पैत्तिकमूत्रकृच्छ्रम् ॥५॥
हरीतकीगोक्षुरराजवृक्ष-पाषाणभिद्धन्वयवासकानाम् ।
क्वाथं पिबेन्माक्षिकसम्प्रयुक्तं कृच्छ्रे सदाहे सरुजे विबन्धे ॥ ६ ॥

---

तत्रोपरि मर्मभूते त्रीणि मर्माणि शिरोहृदयवस्तयः प्रधानानि । ततो हृद्रोग-चिकित्सामभिधाय वस्तिरोगचिकित्सामाह, अभ्यञ्जनेत्यादि ।—स्थिरादिभिरिति—शालपर्ण्यादिभिः पञ्चमूलैः । वातहरैरिति—वातहरत्वेनोक्तैः ॥ १ ॥

अमृतेत्यादि ।—योगोऽयं क्वाथेन ॥ २ ॥

ग्रैष्मो विधिरिति ।—सशर्करं मन्थमित्यादि वाग्भटस्य ऋतुचर्य्योक्तः । द्राक्षा-विदारीक्षुरसैर्घृतैश्चेति सहार्थे तृतीया ॥ ३ ॥

कुश इत्यादौ ।—तृणोद्भवं पञ्चमूलमिति योज्यम् ; दर्भः,—उलुपामूलम् ॥ ४ ॥

शतावर्य्यादौ ।—शालीति—शालिधान्यमूलम् ॥ ५ ॥

हरीतक्यादौ ।—राजवृक्षः,—सोनालुस्तत्फलम्, धन्वयवासकः,—दुरालभा ॥ ६ ॥

गुड़ेनामलकं वृष्यं श्रमघ्नं तर्पणं परम्।
पित्तासृग्दाहशूलघ्नं मूत्रकृच्छ्रविनाशनम् ॥ ७ ॥

एर्वारुबीजं मधुकञ्च दार्वीम् पैत्ते पिबेत् तण्डुलधावनेन।
दार्वीं तथैवामलकीरसेन समाक्षिकां पैत्तिकमूत्रकृच्छ्रे ॥ ८ ॥

कफमूत्रकृच्छ्रे—

क्षारोष्णतीक्ष्णौषधमन्नपानं स्वेदो यवान्नं वमनं निरूहाः।
तक्रञ्च तिक्तौषधसिद्धतैलान्यभ्यङ्गपानं कफमूत्रकृच्छ्रे ॥ ९ ॥

मूत्रेण सुरया वापि कदलीस्वरसेन वा।
कफकृच्छ्रविनाशाय श्लक्ष्णं पिष्ट्वा त्रुटिं पिबेत् ॥ १० ॥

तक्रेण युक्तं शितिमारकस्य बीजं पिबेत् कृच्छ्रविघातहेतोः।
पिबेत् तथा तण्डुलधावनेन प्रवालचूर्णं कफमूत्रकृच्छ्रे ॥ ११ ॥

श्वदंष्ट्रा विश्वतोयं वा कफकृच्छ्रविनाशनम् ॥ १२ ॥

त्रिदोषजमूत्रकृच्छ्रे—

सर्वं त्रिदोषप्रभवे तु वायोः
स्थानानुपूर्व्या प्रसमीक्ष्य कार्य्यम्।
त्रिभ्योऽधिके प्राग्वमनं कफे स्यात्
पित्ते विरेकः पवने तु वस्तिः ॥ १३ ॥

---

गुडेनेति।—गुडामलकफले तुल्यमाने ॥ ७ ॥

एर्वारु,—कर्कटी। समाक्षिकामित्यस्य दार्वीमित्यनेनैव सम्बन्ध, न तु पूर्वेण ॥ ८ ॥

क्षारेत्यादि।—कफकृच्छ्रभेषजं क्षारादिभिर्युक्तमन्नपानम्। अपर विकटुक-मिति चक्रः, अत एव औषधमिति पाठोऽप्यत्र एव, वाग्भटेऽपि—"कफजे वमनस्वेदौ तीक्ष्णोष्णकटुभोजनम्" इत्युक्तत्वात् ॥ ९ ॥

मूत्रेणेत्यादौ।—त्रुटि,—सूक्ष्मैला, उक्तं हि वाग्भटे,—"पिबेन्मूत्रेण सूक्ष्मैलां धात्रीफलरसेन वा" इति। अन्ये तु—एलामात्रमाहुः। कदलीस्वरसेनेति—कदलीमूलस्वरसेन ॥ १० ॥

तक्रेणेत्यादौ।—शितिमार,—शालिञ्च, प्रवालः,—विद्रुम. ॥ ११—१२ ॥

समकुपितदोषत्रयारब्धमूत्रकृच्छ्रचिकित्सामाह सर्वमित्यादि।—वातजादिमूत्रकृच्छ्रनिर्दिष्टं भेषजं सर्वं समत्रिदोषजे मूत्रकृच्छ्रे मिलितं कार्य्यम्। तत्र वायोः

बृहतीधावनीपाठा-यष्टीमधुकलिङ्गकाः।
पाचनीयो बृहत्यादिः कृच्छ्रदोषत्रयापहः॥ १४॥

अभिघातज-मूत्रकृच्छ्रे—

तथाऽभिघातजे कुर्य्यात् सद्योव्रणचिकित्सितम्।
मूत्रकृच्छ्रे सदा चास्य कार्य्या वातहरी क्रिया॥ १५॥

पुरीषज-मूत्रकृच्छ्रे—

स्वेदचूर्णक्रियाऽभ्यङ्ग-वस्तयः स्युः पुरीषजे।
क्वाथं गोक्षुरबीजस्य यवक्षारयुतं पिबेत्।
मूत्रकृच्छ्रं शकृज्जं च पीतः शीघ्रं विनाशयेत्॥ १६॥

कफवायुज मूत्रकृच्छ्रे—

क्रिया हिता त्वश्मरिशर्कराभ्याम्
या मूत्रकृच्छ्रे कफमारुतोत्थे॥ १७॥

शुक्रविबन्धज मूत्रकृच्छ्रे—

लेह्यं शुक्रविबन्धोत्थे शिलाजतु समाक्षिकम्।
हृद्यैर्बृंहितधातोश्च विधेयाः प्रमदोत्तमाः॥ १८॥

---

स्थानानुपूर्व्या कर्त्तव्यं, न तु त्रिदोषजज्वर इव कफस्थानानुपूर्व्या। सर्वत्रिदोषारब्धमूत्रकृच्छ्रस्य वातस्थानभवत्वेन वायोरेव प्रथमं चिकित्सा कार्य्या, चिकित्सितादिति भावः। विषमसन्निपातमूत्रकृच्छ्रचिकित्सामाह, त्रिभ्य इत्यादि।—त्रिभ्योऽधिक इति वाक्यं कफे पित्ते वाते इत्येतैः क्रमेण सम्बध्यते। अत्र मूत्रकृच्छ्रारम्भकमात्रयान्तरस्थं कफमपेक्ष्य मूत्रकृच्छ्रारम्भककफभागस्याधिक्यमस्तीति कृत्वा त्रिभ्योऽधिक इत्युक्तम्। एवं पित्तपवनयोरपीति पित्तपवनान्तरापेक्षया चाधिक्यं व्याख्येयम्। अन्ये—त्रिभ्य इति छान्दसत्वात् षष्ठ्यर्थे पञ्चमीत्याहुः। तेन त्रयाणां मध्य इत्यर्थः॥१३॥

बृहतीत्यादौ।—धावनी—कण्टकारी। कृच्छ्रदोषत्रयापह इति।—कृच्छ्रगतदोषत्रयापह इत्यर्थः॥ १४॥

वातहरी क्रियेति।—पानाद्यायुक्ता, वातस्थानभवत्वादिति भावः। स्वेदेत्यादौ।—चूर्णक्रियेति—फलवर्त्तिः, किंवा विरेचनद्रव्यचूर्णं दत्त्वा गुदे नलिकया फुत्करणम्॥ १५—१६॥

अश्मरीशर्करामूत्रकृच्छ्रचिकित्सामाह, क्रिया हितेत्यादि।—अश्मरीशर्कराभ्यामिति चरके पाठः॥ १७—१८॥

एलाहिङ्गुयुतं क्षीरं सर्पिर्मिश्रं पिबेन्नरः।
मूत्रदोषविशुद्ध्यर्थं शुक्रदोषहरञ्च तत्॥ १९॥
यन्मूत्रकृच्छ्रे विहितन्तु पैत्ते तत् कारयेच्छोणितमूत्रकृच्छ्रे॥२०॥
त्रिकण्टकारग्वधदर्भकाश-दुरालभापर्वतभेदपथ्याः।
निघ्नन्ति पीता मधुनाश्मरीञ्च सम्प्राप्तमृत्योरपि मूत्रकृच्छ्रम्॥२१॥
कषायोऽतिबलामूल-साधितः सर्वकृच्छ्रजित्॥ २२॥
एलाश्मभेदकशिलाजतुपिप्पलीनाम्
चूर्णानि तण्डुलजलैर्लुलितानि पीत्वा।
यद्वा गुडेन सहितान्यवलिह्य सम्यक्
आसन्नमृत्युरपि जीवति मूत्रकृच्छ्री॥ २३॥
अयोरजः श्लक्ष्णपिष्टं मधुना सह योजितम्।
मूत्रकृच्छ्रं निहन्त्याशु त्रिभिर्लेहैर्न संशयः॥
सितातुल्यो यवक्षारः सर्वकृच्छ्रविनाशनः।
निदिग्धिकारसो वापि सक्षौद्रः कृच्छ्रनाशनः॥ २४॥

---

समदश्मरीकाश्मरीणामपि क्रियेत्यादिसन्दर्भे इत्थमेव व्याख्या विधेया।—शर्करामाश्रित्येत्य इति।—प्रत्येकं कफोत्थे मारुतोत्थे च मूत्रकृच्छ्रे या क्रिया विहिता, सा मिलितैव वाताश्मर्यां शर्करायाञ्च कर्त्तव्येत्यर्थः। शर्कराश्मरीचिकित्सयैव तत् कृच्छ्रचिकित्सितत्वादिति भावः। उक्तं हि,—"शर्कराश्मरिकृच्छ्रे तु शर्कराश्मरि-वारणम्" इति। वार्य्यते निवार्य्यते अनेनेति वारणं चिकित्सितम्। इति।

एलेत्यादौ।—एलाहिङ्गुनी मर्दयित्वा क्षीरं पिबेदित्यर्थः॥ १९—२०॥

त्रिकण्टकेत्यादौ।—पर्वतभेदः,—पाषाणभेदः। एषां कषाये मधु प्रक्षेप्यम्॥२१॥

कषाय इत्यादौ।—अतिबला—श्वेतबला॥ २२॥

एलादिचूर्णानि तण्डुलजलेन पातव्यानि, किंवा गुडेन लेह्यानीति॥ २३॥

अय इत्यादि।—मारितपुटितदग्धादिशोधितचूर्णं रजः, मधुमात्रेण लौहपात्रे मर्दयित्वा लिह्य, रक्तिकादिक्रमेण मात्रावर्द्धनपर्य्यन्तम्। त्रिभिर्लेहैरिति—दिनत्रय-लेहेनेत्यर्थः। निदिग्धिकारस इति—कण्टकारीस्वरसः। उक्तं हि वाग्भटे—"स्वरसः कण्ट-कार्य्या वा पाययेन्माक्षिकान्वितम्" इति॥ २४॥

शतावरीघृतचौरे—

शतावरीकाशकुशश्वदंष्ट्रा-विदारिकेक्षामलकेषु सिद्धम्।
सर्पिः पयो वा सितया विमिश्रं कृच्छ्रेषु पित्तप्रभवेषु योज्यम्॥२५॥

त्रिकण्टकाद्यं घृतम्—

त्रिकण्टकैरण्डकुशाद्यभीरु-कर्कारुकेक्षुस्वरसेन सिद्धम्।
सर्पिर्गुडार्द्धांशयुतं प्रपेयं कृच्छ्राश्मरीमूत्रविघातहेतोः॥ २६॥

सुकुमारकुमारकघृतम्—

पुनर्नवामूलतुला दशमूलं शतावरी।
बला तुरगगन्धा च तृणमूलं त्रिकण्टकम्॥
विदारिगन्धा नागाह्वा गुडूच्यतिबला तथा।
पृथग्दशपलान् भागान् जलद्रोणे विपाचयेत्।
तेन पादावशेषेण घृतस्यार्द्धाढ़कं पचेत्॥
मधुकं शृङ्गवेरञ्च द्राक्षासैन्धवपिप्पलीः।
द्विपलिकाः पृथग्दद्याद् यमान्याः कुड़वं तथा॥
त्रिंशद्गुड़पलान्यत्र तैलस्यैरण्डजस्य च।
प्रस्थं दत्त्वा समालोड्य सम्यङ् मृदग्निना पचेत्॥
एतदीश्वरपुत्राणां प्रागभोजनमनिन्दितम्।
राज्ञां राजसमानाञ्च बहुस्त्रीपतयश्च ये॥

---

शतावरीत्यादौ।—घृतसाधनपक्षे शतावर्य्यादीनां कल्कः, अत्र च चतुर्गुणमिति, शर्करा तु प्रक्षेप्या॥ २५॥

त्रिकण्टकेत्यादौ।—कुशादि—तृणपञ्चमूलम्; अभीरुः,—शतावरी; कर्कारुकः,—कुष्माण्डभेदः कुष्माण्डाकृतिः पश्चिमदेशे प्रसिद्धः। त्रिकण्टकादीनां सर्वेषां स्वरसः, तदभावे कषायः। गुडार्द्धांशयुतमिति।—घृतापेक्षया अर्द्धांशो गुड इति चीरमदत्त इत्यर्थः। गुडश्च प्रक्षेप्यः। अन्ये तु—गुडं दत्त्वैव पाकं कुर्य्युः॥ २६॥

पुनर्नवेत्यादौ।—दशमूलस्य मिलित्वा दश पलानि। तृणमूल—तृणपञ्चमूलम्, एतदपि मिलित्वा दशपलमात्रम्। विदारिगन्धा—शालपर्णी। नागाह्वा—नागबला, गोरक्षतण्डुला इत्यर्थः। अतिबला—श्वेतबला। द्रोण इति।—द्रव्यतुलाद्वये प्रत्येक द्रोण एव इत्यर्थः। द्विपलिका इति—पलद्वयमात्रा। गुडमरण्डतैलञ्च दत्त्वैव पाकः।

मूत्रकृच्छ्रे कटीशूले तथा गाढपुरीषिणाम् ।
मेढ्रवङ्क्षणशूले च योनिशूले प्रशस्यते ॥
यथोक्तानाञ्च गुल्मानां वातशोणितकाश्च ये ।
वल्यं रसायनं शीतं सुकुमारकुमारकम् ।
पुनर्नवाशते द्रोणो देयोऽन्येषु तथाऽपरः ॥ २७ ॥

इति मूत्रकृच्छ्रचिकित्सा ।

## अथ मूत्राघात-चिकित्सा ।

मूत्राघातान् यथादोषं मूत्रकृच्छ्रहरैर्जयेत् ।
वस्तिमुत्तरवस्तिञ्च दद्यात् स्निग्धं विरेचनम् ॥
कल्कमेर्वारुबीजानामक्षमात्रं ससैन्धवम् ।
धान्याम्लयुक्तं पीत्वैव मूत्राघाताद्विमुच्यते ॥ १ ॥
पाटल्या यावशूकाच्च पारिभद्रात् तिलादपि ।

---

देयोऽन्येषु तथाऽपर इति ।—अन्येषु दशमूलादिष्वपरो द्रोण इत्यर्थः । सुकुमारेति ।—सुकुमाराः सुखिनः, कुमाराः शिशवः, एतदुभयहितत्वात् सुकुमारकुमारकसंज्ञा ॥ २७ ॥

इति मूत्रकृच्छ्र-चिकित्सा विवृतिः ॥

मूत्रगतविकारसाधर्म्यादनन्तरं मूत्राघातचिकित्सारम्भः ।—मूत्रस्याघातो विबन्धः मूत्राघातः । मूत्राघातमूत्रकृच्छ्रयोश्चायं भेदः,—मूत्रकृच्छ्रे कृच्छ्रत्वमधिकमीषद्विबन्धः, मूत्राघाते तु—विबन्धो महान् कृच्छ्रत्वमल्पमिति । कल्कमित्यादि ।—सुश्रुतस्य ।—एर्वारुर्भककर्कटीति ख्यातः । धान्याम्लं—काञ्जिकम् ॥ १ ॥

पाटल्या इत्यादि ।—सुश्रुतस्य ।—तिलादिति—तिलनालात् । इहापि पञ्चम्याः पृथक् पृथगिति सम्बन्धनीयम्; तेन पृथक् पाटल्यादीनां क्षारस्रावोदकेन समां मदिरां त्वगेलोषणं प्रक्षिप्य पिबेत् । उषणं—मरिचम् । अन्ये तु—पाटलीयावशूकयोर्मिलितः क्षारः, केवलयवक्षारस्याहृद्यत्वात्; अत एव वाग्भटे आयुर्वेदसारे च—"पाटलीयावशूकाभ्यामिति मिलिता पञ्चमी" इत्याहुः । चक्रदत्तोऽप्येवं वाग्भट-टीकायां व्याख्यातवान् । कार्त्तिकस्तु—मदिरामित्यस्य स्थाने मतिमानिति पाठ

क्षारोदकेन मदिरां त्वगेलोषणसंयुताम्।
पिबेद्गुडोपदंशान् वा लिह्यादेतान् पृथक् पृथक् ॥ २ ॥
त्रिफलाकल्कसंयुक्तं लवणं वापि पाययेत्।
निदिग्धिकायाः स्वरसं पिबेद्वा तान्तवस्रुतम् ॥ ३ ॥
जले कुङ्कुमकल्कं वा सक्षौद्रमुषितं निशि।
सतैलं पाटलाभस्म क्षारवद्वा परिस्रुतम् ॥ ४ ॥

---

क्षौद्रस्य चूर्णकमिति चाध्याहृत्य एवं व्याचष्टे,—'पाटल्यादीनां चूर्णं क्षारोदकेन मुष्ककक्षारवारिणा पिबेत्' इति। यदाह विश्वामित्रः,—"पाटलं पारिभद्रञ्च तिलांश्चापि यवाग्रजान्। कर्णमालयुतं चूर्णं मुष्ककक्षारवारिणा॥ पिबेद् गुडेन मिश्रं वा लिह्यान्मूत्रविघातजित्॥" इति एतत् संवादात्। अत्र ऊषणं पिप्पली। गुडोपदंशान् वा लिह्यादेतानिति।—एतान् पृथक् पृथक् पाटल्यादिक्षारान् गुडोपदंशान् गुडमिश्रान् वा लिह्यात्। अन्यस्तु मतिमानित्यत्र मदिरामिति पाठं, तथा गुडेन मिश्रामित्यत्र गुडोपदंशानिति पाठञ्चानार्षमाह ॥ २ ॥

त्रिफलेत्यादि।—सुश्रुतस्य।—अत्रापि पानं क्षारोदकेनेत्यनुषञ्जयति कार्त्तिकः। अन्ये तु—"अभयामलकाक्षाणां कल्कं बदरसम्मितम्। अथवा लवणोपेतं पिबेन्मूत्रविघातवान्॥" इति वचनं मूत्रकृच्छ्रप्रतिषेधे सुश्रुतेनोक्तम्। अतस्तद्दर्शनादत्राप्यम्बुनैव पानम्; तथा मिलित्वाष्टमाषकमानमित्याहुः। त्रिफलाकल्क माषा ६, सैन्धव-माषा २। द्वितीययोगे—तान्तवस्रुतमिति—वस्त्रगालितम्। मधुयोगेनाप्ययं योगः पेयः। यदाह वाग्भटः,—"स्वरसं कण्टकार्य्या वा पाययेन्माक्षिकान्वितम्" इति ॥ ३ ॥

जले इत्यादि।—सुश्रुतस्य।—अत्र कुङ्कुमकल्कं शीतकषायविधिना जले पर्य्युषितं प्रातर्वस्त्रस्रुतं सक्षौद्रं पिबेत्।—"पिबेत् कुङ्कुमकर्षं वा मधूदकसमाप्लुतम्। रात्रिपर्य्युषितं प्रातस्तथा सुखमवाप्नुयात्॥" इति पाठान्तरं सुश्रुतटीकाकृतः पठन्ति, व्याख्यानयन्ति च,—"कुङ्कुमकर्षं मधूदकाभ्यामाप्लाव्य रात्रौ स्थापयितव्यं, ततः पातव्यम्" इति। सतैलमित्यादि—द्वितीयो योगः सुश्रुतस्यैव। वाशब्दः पूर्वयोगापेक्षया। क्षारवद्वा परिस्रुतमिति।—परिस्रुतं पाटलाभस्म किं विशिष्टम्?—क्षारवत्—यवक्षारयुक्तं पिबेदिति केचिद् व्याचक्षते। अन्ये तु—क्षारवत्—पानीयक्षारमिव सप्तकृत्वः परिस्रुतं पाटलाभस्म तेन सहितं पिबेदित्याहुः। युक्तञ्चैतत्; यदाह वाग्भटः,—"सतैलं पाटलाक्षारं सप्तकृत्वोऽथवा स्रुतम्" इति। सुश्रुतेऽपि मूत्रकृच्छ्र-

सुरां सौवर्चलवतीं मूत्राघाती पिबेन्नरः ।
दाड़िमाम्लयुतं मुस्त्यमेलाजीरकनागरम् ।
पीत्वा सुरां सलवणां मूत्राघातादिमुच्यते ॥ ५ ॥
पिबेच्छिलाजतु क्वाथे गणे वीरतरादिके ।
रसं दुरालभाया वा कषायं वासकस्य वा ॥ ६ ॥
त्रिकण्टकैरण्डशतावरीभिः सिद्धं पयो वा तृणपञ्चमूलैः ।
गुड़प्रगाढ़ं सघृतं पयो वा रोगेषु कृच्छ्रादिषु शस्यते तत् ॥ ७ ॥
नलकुशकाशेक्षुशिफां क्वथितां प्रातः सुशीतलां ससिताम् ।
पिबतः प्रयाति नियतं मूत्रग्रह इत्युवाच कचः ॥ ८ ॥

---

प्रतिषेधे—"पलाशक्षारमाहृत्य वासकस्य परिस्रुतम् । पिबेन्मूत्रविकारघ्नं सक्षद्रतैलमात्रया ॥" इति पठ्यते । तैलमात्रया—पीततैलवदित्यर्थः इति । यथामात्रां क्षारादिह बुभुक्षित इति ॥ ४ ॥

सुरामित्यादि ।—सुश्रुतस्य ।—पिबेन्नर इत्यन्त एक एवायं योगः । वाग्भटेऽपि—"सौवर्चलाढ्यां मदिरां पिबेन्मूत्रकजापहाम्" इत्येवोक्तम् । दाड़िमेत्यादि मागधानां द्वितीयो योग । दाड़िमाम्लयुतमिति—दाड़िमफलरसयुतम् । रसाभावे तु क्वाथ । मुस्त्यमित्येलाजीरकविशेषणम् । पीत्वा सुरां सलवणाम्—इति तृतीयो योगः । सलवणामिति—ससैन्धवाम् । वस्तुतस्तु "दाड़िमाम्लयुता मुस्त्यामेलाजीरकनागरैः" इत्यनेन सुरामिति सम्बध्यते । "पीत्वा सुरां सलवणाम्" इत्येव पाठ सुश्रुते पठ्यते, टीकाकारैश्च व्याख्यात । तस्मात् दाड़िमाम्लादि-सलवणामित्यन्त एक एवायं योगो युक्त । दाड़िमाम्लामिति—दाड़िमयोगादम्लाम् । युतामित्येलाजीरकनागरैरित्यनेन सम्बध्यते । सुरां सुरामिति—पैष्टिकीम् ॥ ५ ॥

पिबेदित्यादौ ।—वीरतरादिगणक्वाथे शिलाजतु प्रक्षिप्य पिबेदित्यर्थः । एवं व्याधौ शिलाजतुनोऽत्यन्तयौगिकत्वेन दुरालभाक्वाथे वासकक्वाथेऽपि शिलाजतु प्रक्षिपन्ति ॥ ६ ॥

त्रिकण्टकेत्यादि ।—योगद्वयम् । गुड़प्रगाढमिति—पूर्वेण योगद्वयेन सम्बध्यते । त्रिकण्टकादिसिद्धं वा तृणपञ्चमूलसिद्धं वा पयो गुड़प्रगाढं हितम् । सघृतं पय इति—तृतीयो योगः ॥ ७ ॥

नलेत्यादौ ।—शिफा—मूलम् । तच नलादिभिः प्रत्येकं सम्बध्यते ।

# अथाऽश्मरी-चिकित्सा ।

वरुणस्य त्वचं श्रेष्ठां शुण्ठीगोक्षुरसंयुताम् ।
यवक्षारगुड़ं दत्त्वा क्वाथयित्वा पिबेद्धिताम् ।
अश्मरीं वातजां हन्ति चिरकालानुबन्धिनीम् ॥ १ ॥

वीरतरादिगणः—

वीरतरः सहचरौ दर्भौ वृक्षादनी नलः ।
गुन्द्राकाशकुशावश्म-भेदमोरटटुण्टुकाः ॥
कुरुण्टिकाऽथ वशिरो वसुकः साग्निमन्थकः ॥
इन्दीवरः श्वदंष्ट्रा च तथा कापोतवल्लकः ॥
वीरतरादिरित्येष गणो वातविकारनुत् ।
अश्मरीशर्करामूत्र-कृच्छ्राघातरुजापहः ॥ २ ॥

---

वपम् । सुश्रुते एतद् घृतात् पूर्वमतिबलनाम घृतमुक्तम् ; तेन सर्पिरेतन्महाबल-मित्यपि घृतस्यास्य नामेति टीकाकृतः ॥ १५ ॥

इति मूत्राघात-चिकित्सा विवृतिः ।

---

मूत्ररोधिकत्वसामान्यादश्मरीचिकित्सितमुच्यते, वरुणस्येत्यादि ।—श्रेष्ठामिति—कीटाद्यनुपहताम् । यवक्षारगुडौ प्रक्षेप्यौ ॥ १ ॥

वीरतर इत्यादौ ।—वीरतरः,—शरः ; सहचरौ,—झिण्टीद्वय, पीतनीलपुष्पभेदात् ; दर्भ—उलुपालवणम् ; वृक्षादनी—वन्दाक ; गुन्द्रा—गुन्द्रक ; मोरट—इक्षुमूलम् . टुण्टुक,—श्योनाक ; कुरुण्टिका—शोदलिनी ; ऋक्षदन्तम्—हस्तपुष्प-फणा भल्लूकमञ्जरी, दक्षिणदेशे मितवराष्ट्येत्याह । इन्दीवरः,—पुँआकः । वशिर,—स्पर्शाङ्गभेद . वसुकः,—वसुक ; कपोतवल्लक,—काक इति ख्यातः, स च शिरोपमद्रुमः स्वल्पपत्रः स्वल्पविटपः । गणत्वादनेन सर्वकल्पना ॥ २ ॥

शुण्ठ्यग्निमन्थपाषाण-शिग्रुवरुणगोक्षुरैः ।
अभयारग्वधफलैः क्वाथं कुर्य्याद्विचक्षणः ॥
रामठक्षारलवण-चूर्णं दत्त्वा पिबेन्नरः ।
अश्मरीमूत्रकृच्छ्रघ्नं पाचनं दीपनं परम् ।
हन्यात् कोष्ठाश्रितं वातं कट्यूरुगुदमेढ्रगम् ॥ ३ ॥

पाषाणभेदाद्यं घृतम् ,

पाषाणभेदो वसुको वशिरोऽश्मन्तकस्तथा ।
शतावरी श्वदंष्ट्रा च वृहती कण्टकारिका ॥
कपोतवक्कार्त्तगल-काञ्चनोशीरगुल्मकाः ।
वृक्षादनी भल्लूकश्च वरुणः शाकजं फलम् ॥
यवाः कुलत्थाः कोलानि कतकस्य फलानि च ।
ऊषकादिप्रतीवापमेषां क्वाथे शृतं घृतम् ॥
भिनत्ति वातसम्भूतामश्मरीं क्षिप्रमेव तु ।
क्षारान् यवागूः पेयानि कषायाणि पयांसि च ।
भोजनानि च कुर्वीत वर्गेऽस्मिन् वातनाशने ॥ ४ ॥

---

शुण्ठीत्यादि ।—पाषाणः,—पाषाणभेदी ॥ ३ ॥

पाषाणभेद इत्यादि ।—सुश्रुतस्य ।—अश्मन्तकोऽश्मन्तकः कोविदारसदृशपत्र. । आर्त्तगलः,—चालता इति ख्यातः, दीर्घश्च दृश्यते । काञ्चनः,—काञ्चनी विटपीरित-पत्र । गुल्मकः,—गुल्मजः । भल्लूकः,—श्योनाकः । शाकः,—कर्कशमसृणपत्रोदर-पत्र, प्रायो मरुदेशे भवति, तस्य फलम् । कतक—तोयप्रसादनफलं, प्रायो मगधे भवति । ऊषकादिप्रतीवापमिति—ऊषकादिर्वक्ष्यमाणगणः । एषामिति—पाषाणभेदादीनाम् । घृतसाधनौषधवर्गेण क्षारादयोऽपि साध्या इत्याह, क्षारा-निति ।—पानीयक्षारान् । यदि चूर्णस्य क्षारः पीयते, तदा वर्गोक्तौषधद्रवेण मस्त्वा-दिना । क्षारोदकपानपक्षे तु—क्षारस्य कर्षस्य कर्षद्वयं वा षड्गुणेन जलेन द्रवम्, परिस्राव्य घृतं पेयम् । पेयानीति—यूषरसादीनि, पेयाविति पाठेऽपि यूषादीनि-त्यर्थः । यवागूश्चापि पाठान्तरम् । पेयाचेति तु पाठः हस्तलिखितपुस्तकेषु न दृश्यते, तट्टीका-कृद्भिश्च न व्याख्यातः । भोजनानीति—विशेषभोजनयुक्तोपकरणानि ; यवाम्बाथ पृथगुपा

बिल्वश्चैवाजशृङ्गी च बृहतीद्वयमेव च ॥
वरुणादिगणो ह्येष कफमेदोनिवारणः ।
विनिहन्ति शिरःशूलं गुल्माद्यन्तरविद्रधिम् ॥ ८ ॥

वरुणत्वक्कषायस्तु पीतस्तु गुड़संयुतः ।
अश्मरीं पातयत्याशु वस्तिशूलविनाशनः ॥ ९ ॥

यवक्षारं गुड़ोपेतं पिबेत् पुष्पफलोद्भवम् ।
रसं मूत्रविबन्धघ्नं शर्कराश्मरिनाशनम् ॥ १० ॥

पिबेद्वरुणमूलत्वक्-क्वाथं तत्कल्कसंयुतम् ।
क्वाथश्च शिग्रुमूलोत्थः कदुष्णोऽश्मरिनाशनः ॥ ११ ॥

नागरवरुणगोक्षुरकपाषाणभेदकपोतवङ्काजः क्वाथः ।
गुड़यावशूकमिश्रः पीतो हन्त्यश्मरीमुग्राम् ॥ १२ ॥

वरुणत्वक्शिलाभेद-शुण्ठीगोक्षुरकैः कृतः ।
कषायः क्षारसंयुक्तः शर्कराञ्च भिनत्त्यपि ॥ १३ ॥

श्वदंष्ट्रैरण्डपत्राणि नागरं वरुणत्वचम् ।
एतत् क्वाथवरं प्रातः पिबेदश्मरिभेदनम् ॥ १४ ॥

मूलं श्वदंष्ट्रेक्षुरकोरुबूकात्
क्षीरेण पिष्टं बृहतीद्वयाच्च ।
आलोड्य दध्ना मधुरेण पेयम्
दिनानि सप्ताश्मरिभेदनार्थम् ॥ १५ ॥

---

चलया ; वरी—शतावरी ; वसुकः,—वसुहह इति ख्यातः ; अजशृङ्गी—आवर्त्त-निका ॥ ८—९ ॥

पुष्पफलोद्भवं रसमिति ।—पुरातकुष्माण्डरसम् ॥ १० ॥

पिबेदित्यादि ।—पिबेदश्मरीभेदनमित्यन्वयं स्पष्टम् ॥ ११—१४ ॥

मूलमित्यादि बृहतीद्वयात् एक एव योगः । इक्षुरकः,—कोकिलाक्षः । सर्वं मिलित्वा माषकचतुष्टय दुग्धेन पिष्टा घनमधुरदध्ना पेयम् ॥ १५ ॥

पक्वेक्षाकुरसः क्षारः सितायुक्तोऽश्मरीहरः।
पाषाणरोगपीड़ां सौवर्च्चलयुता सुरा जयति।
तद्वन्मधुदुग्धयुता चिरात्तं तिलनालभूतिश्च ॥ १६ ॥

एलादिः,—

एलोपकुल्या-मधुकाश्मभेद-कौन्तीश्वदंष्ट्रावृषकोरुवूकैः।
क्वाथं पिवेदश्मजतुप्रगाढ़ं सशर्करे चाश्मरिमूत्रकृच्छ्रे ॥ १७ ॥
त्रिकण्टकस्य बीजानां चूर्णं माक्षिकसंयुतम्।
अविक्षीरेण सप्ताहं पिवेदश्मरिनाशनम् ॥ १८ ॥
शुक्राश्मर्य्यास्तु सामान्यो विधिरश्मरिनाशनः ॥ १९ ॥

पाषाणभेदाद्यं चूर्णं घृतञ्च—

पाषाणभेदो वृषकः श्वदंष्ट्रा पाठाऽभयाव्योषशटीनिकुम्भाः।
हिंस्राखराश्वासितिसारकाणामेर्वारुकाच्च त्रपुषाच्च बीजम् ॥
उपकुञ्चिका हिङ्गु सवेतसाम्लं स्याद् द्वे बृहत्यौ हपुषा वचा च।
चूर्णं पिवेदश्मरिभेदि पक्वं सर्पिश्च गोमूत्रचतुर्गुणं तैः ॥ २० ॥

कुलत्थाद्यं घृतम्—

कुलत्थसिन्धूत्थविड़ङ्गसारं सशर्करं शीतलियावशूकम्।
बीजानि कुष्माण्डकगोक्षुराभ्यां घृतं पचेत्ता वरुणस्य तोये ॥

पक्वेत्यादौ।—इक्षाकुः,—तिक्ताऽलावूलता नष्टिकालवग। पाषाणरोगः,—अश्मरी। तिलनालभूतिः,—तिलनालक्षारः ॥ १६ ॥

एलेत्यादौ।—उपकुल्या—पिप्पली। अत्र शोधितशिलाजतुनो माषकमर्द्धं चतुःष्टयं वा प्रक्षेप्यमित्याहुः ॥ १७ ॥

शुक्राश्मर्य्यान्तु सामान्यो विधिरिति।—अश्मरीमात्रसाधारणविधिः ॥ १८। १९ ॥

पाषाणभेद इत्यादौ।—निकुम्भः,—दन्ती, खराश्वा—अजमोदा; सितिसारकः,—शालिञ्च, उपकुञ्चिका—कृष्णजीरकम्। चूर्णं पिवेदिति।—विशेषानभिधानाज्जलेनैव। तैः,—पाषाणभेदादिभिरेव कल्करूपैः पक्वं सर्पिश्च पिवेदित्यन्वयः ॥ २० ॥

कुलत्थघृते।—शीतली—शितलीक्षीपकः, तथाच रत्नकोषः,—"शीतली शीत-

दुःसाध्यसर्वाश्मरिमूत्रकृच्छ्रं मूत्राभिघातञ्च समूत्रबन्धम्।
एतानि सर्वाणि निहन्ति शीघ्रं प्ररूढ़वृक्षानिव वज्रपातः ॥२१॥

शरादिपञ्चमूल्यादि घृतम्—

शरादिपञ्चमूल्या वा कषायेण पचेद्घृतम्।
प्रस्थं गोक्षुरकल्केन सिद्धमद्यात् सशर्करम्॥
अश्मरीमूत्रकृच्छ्रघ्नं रेतोमार्गरुजापहम्॥ २२॥

वरुणघृतम्—

वरुणस्य तुलां क्षुण्णां जलद्रोणे विपाचयेत्।
पादशेषं परिस्राव्य घृतप्रस्थं विपाचयेत्॥
वरुणं कदली बिल्वं तृणजं पञ्चमूलकम्।
अमृता चाश्मजं देयं बीजञ्च त्रपुषोद्भवम्॥
शतपर्वा तिलक्षारं पलाशक्षारमेव च।
यूथिकायाश्च मूलानि कार्षिकाणि समावपेत्॥
अस्य मात्रां पिबेज्जन्तुर्देशकालाद्यपेक्षया।
जीर्णे तस्मिन् पिबेत् पूर्वं गुड़ं जीर्णन्तु मस्तुना।
अश्मरीं शर्कराञ्चैव मूत्रकृच्छ्रञ्च नाशयेत्॥ २३॥

---

कुम्भी च घनपुष्पा कलीङ्गवा। कालानुसारिवा तथा; मरीची शतवद्गुणैः ४" इति। अन्ये तु—शीतलि चावमूक,—शियलि-यवचार, स तु स्फटिकसैन्धवसदृश इत्याहुः; व्यवहारस्तु पूर्वथैव। शर्करा तु कल्करूपा॥ २१॥

शरादिपञ्चमूल्या—इत्यत्र शरादीतिविशेषणात् चरकोक्तं तृणपञ्चमूलं ग्राह्यं, यथा,—"शरेक्षुदर्भकाशानां शालीनां मूलमेव च" इति। अत्र शर्करा प्रक्षेप्या। वाशब्दः पूर्वयोगापेक्षया॥ २२॥

वरुणादिघृते।—कदल्याः फलमामं मूलं वा; अश्मजं—शिलाजतु; त्रपुष—मायाम्बुफलम्, शतपर्वा—वंशस्तस्य नेत्री मूलं वा। अस्मिन्निति—घृते, पूर्वमिति—भोजनात् पूर्वम्॥ २३॥

वीरतराद्यं तैलम्—

अश्माधिकारे यत् तैलं सैन्धवाद्यं प्रकीर्त्तितम्।
तत् तैलं द्विगुणं क्षीरं पचेत् वीरतरादिना॥
क्वाथेन पूर्वकल्केन साधितन्तु भिषग्वरैः।
एतत् तैलवरं श्रेष्ठमश्मरीणां विनाशनम्॥
मूत्राघाते मूत्रकृच्छ्रे पिच्चिते मथितेऽपि वा।
भग्ने श्रमाभिपन्ने च सर्व्वथैव प्रशस्यते॥ २४॥

वरुणाद्यं तैलम्—

त्वक्पत्रपुष्पमूलस्य वरुणात् सविकण्टकात्।
कषायेण पचेत् तैलं वस्तिनास्थापनेन च।
शर्कराश्मरिशूलघ्नं मूत्रकृच्छ्रविनाशनम्॥ २५॥
शस्त्रवित् तामशाम्यन्तीं प्रत्याख्याय समुद्धरेत्॥ २६॥
पायुञ्चिन्नाङ्गुलिभ्यान्तु गुदमेढ्रान्तरेऽक्षताम्।
सेवन्याः सव्यपार्श्वे च यवमात्रं विमुच्य तु॥
व्रणं कृत्वाऽश्मरीमात्रं कर्षेत् तां शल्यकर्मवित्।
भिन्ने तु वस्तौ त्वज्ञानात् मृत्युः स्यादश्मरीं विना॥
निःशेषामश्मरीं कुर्य्यात् वस्तौ रक्तञ्च निर्हरेत्।

---

अश्माधिकार इत्यादि।—तत् तैलमिति।—अश्माधिकारोक्तविधिना सिद्धं तैलं पुनरपि द्विगुणं क्षीरं दत्त्वा वीरतरादिक्वाथेन चतुर्गुणेन द्विगुणेन वा। पूर्वकल्केनेति—सैन्धवाद्यकल्केन पचेत्। अन्ये तु—केवलं तैलमेव द्विगुणक्षीरादिना पचेदिति वदन्ति, तत्तु न व्यवहारसिद्धम्। यद्यपि सैन्धवाद्यतैले तिलतैलमेरण्डतैलञ्चोक्तम्, तथाप्यत्र चक्रदत्तादौ तिलतैलस्यैव मूत्रस्रोतोऽनुसारित्वेन यौगिकत्वाद्ग्रहणमित्याहुः। पिच्चित इति—आगन्तुकव्रणविशेषे, मथित इति—चूर्णितास्थ्यभग्ने॥ २४॥

त्वक्पत्रेत्यादि।—क्वाथार्थमत्रवरुणस्य यथालाभं त्वक्पत्रमूलपुष्पं पल ११, गोक्षुर पल १२, पाषा म ६४, शेष म १६। चक्रकमिदं तैलम्॥ २५। २६॥

सव्यपार्श्वे इति—वामपार्श्वे। निःशेषामश्मरीं कुर्य्यादिति।—सशेषायाञ्च पुनरप्यश्मर्य्या वृद्धिसम्भवात्। वस्तौ रक्तञ्च निर्हरेदिति—वस्तिगतरक्तमित्यर्थः; यथा सति

हृताश्मरीकमुष्णाम्बु गाहयेद्भोजयेच्च तम् ॥
गुडं मूत्रविशुद्ध्यर्थं मध्वाज्याक्तं व्रणं ततः ।
दद्यात् साज्यां त्र्यहं पेयां साधितां मूत्रशोधिभिः ॥
आदशाहं ततो दद्यात् पयसा मृदुमोदनम् ।
स्वेदयेद्यवमभ्याज्यं कषायैः चालयेद्व्रणम् ॥
प्रपौण्डरीकमञ्जिष्ठा-यष्टीलोध्रैश्च लेपयेत् ।
एतैश्च सनिम्बैः सिद्धं घृतमभ्यञ्जने हितम् ॥
अप्रशान्ते तु सप्ताहाद् व्रणे दाहोऽपि चेष्यते ।
दैवाच्छेदे तु या लग्ना तां विपाट्यापकर्षयेत् ॥ २७ ॥

अश्मरी-चिकित्सा ।

---

वस्तिरसृजा न पूर्य्यत इति भावः । हृताश्मरीकमित्यादौ—गुडं भोजयेदित्यन्वयः । मूत्रशोधिभिरिति—वृहत्पञ्चमूलादिभिः । तत इति ।—सप्ताहादूर्ध्वम्, आदशाहं—दशाहपर्य्यन्तम् । पयसा—दुग्धेन, मृदुमोदनं कोमलभक्तं दद्यात्, तथा स्वेदयेच ; आदशाहमित्यनेन दशाहाभ्यन्तर एव स्वेदोऽप्युक्तः ; यतो हि—"दशरात्रञ्चैनम-प्रमत्तं स्वेदयेत्" इति । स च स्नेह एव स्वेदः रक्तपित्तानुगतत्वाद्वायोरिति गय-दासः । भोजेऽप्युक्तं,—"स्नेहस्वेदं विविधन्तु कुर्य्याद् वातरुजापहम्" इति । यवमभ्याज्यमिति—मृदुमोदनमित्यस्य विशेषणं,—यवकृतमत्यन्तस्नेहप्रधानं मधुप्रधानमित्यर्थः । कषायैः चालयेद्व्रणमिति ।—दशाहादूर्ध्वमेव क्षीरिवृक्षकषायैः क्षालनं शोधनं बोध्यं, भोजवचनात् । सनिम्बैरिति ।—अनेन घृतसाधनद्रव्यं सम्बध्यते, न तु लेप इति, सुश्रुतसंवादात् ॥ २७ ॥

अश्मरी-चिकित्सा-विवृतिः ॥

## अथ प्रमेह-चिकित्सा।

कुशावलेहः,—

वीरणश्च कुशः काशः क्रष्णेक्षुः खागड़स्तथा।
एषां दशपलान् भागान् जलद्रोणे विपाचयेत्॥
अष्टभागावशेषन्तु कषायमवतारयेत्।
खण्डप्रस्थं समालोड्य लेहवत् साधु साधयेत्॥
अवतार्य्य ततः पयाचूर्णानीमानि दापयेत्।
मधुकं कर्कटीबीजं कर्कारु त्रपुषं तथा।
शुभामलकपर्वाणि एलात्वङ्नागकेशरम्।
वरुणामृतप्रियङ्गूणां प्रत्येकञ्चाचसम्मितम्॥
प्रमेहान् विंशतिञ्चैव मूत्राघातं तथाऽश्मरीम्।
वातिकं पैत्तिकञ्चैव श्लैष्मिकं सान्निपातिकम्।
हन्त्यरोचकमेवोयं तुष्टिपुष्टिकरस्तथा॥ १॥
श्यामाककोद्रवोद्दाल-गोधूमचणकाढ़की-।
कुलत्थाश्च हिता भोज्ये पुराणा मेहिनां सदा।
जाङ्गलं तिक्तशाकानि यवान्नञ्च यमो मधु॥ २॥
पारिजातजयानिम्ब-वह्निगायत्रीणां पृथक्।
पाठायाः सागुरोः पीता-द्वयस्य शारदस्य च॥
जलेक्षुमद्यसिकता-शनैर्लवणपिष्टकान्।
सान्द्रमेहान् क्रमाद् घ्नन्ति चाष्टौ क्वाथाः समाक्षिकाः॥३॥

---

अथमर्थेनन्तर वस्तिविकृतिसाम्यात् प्रमेहप्रतिकार उच्यते, श्यामाकेत्यादि।—उद्दाल,—वनकोद्रव., आढकी—तुवरी, यवान्नमिति—यवमण्डादिकम्। पारिजातेत्यादि।—पारिजात,—पारिभद्रक, जया—जयन्ती, वह्नि,—चित्रक; गायत्री—खदिर, पाठाया सागुरोरिति—एकः क्वाथ। पीताद्वय—हरिद्राद्वयम्। अयमप्येक। शारद,—सप्तपर्ण। पारिभद्रेत्यादयोऽष्टौ क्वाथाः जलाद्यष्टौ मेहान् क्रमाद् घ्नन्तीत्यन्वय.॥ १—३॥

दूर्वाकशेरुपूतीक-कुम्भीकप्लवशैवलम् ।
जलेन क्वथितं पीतं शुक्रमेहहरं परम् ॥
त्रिफलारग्वधद्राक्षा-कषायो मधुसंयुतः ।
पीतो निहन्ति फेनाख्यं प्रमेहं नियतं नृणाम् ॥ ४ ॥
लोध्राभयाकट्फलमुस्तकानां विड़ङ्गपाठार्जुनधन्वनानाम् ।
कदम्बशालार्जुनदीप्यकानां विड़ङ्गदार्व्वीबहुग्रन्थकानाम् ।
चत्वार एते मधुना कषायाः कफप्रमेहेषु निषेवणीयाः ॥ ५ ॥
अश्वत्थाच्चतुरङ्गुलान्न्यग्रोधादेः फलत्रयात् ।
सजिङ्गीरक्तसाराच्च क्वाथाः पञ्च समाक्षिकाः ॥
नीलहारिद्रशुक्राम्ल-क्षारमञ्जिष्ठकाह्वयान् ।
मेहान् हन्युः क्रमादेते सक्षौद्रो रक्तमेहजित् ।
क्वाथः खर्ज्जूरकाश्मर्य-तिन्दुकास्थ्यमृताकृतः ॥ ६ ॥

---

दूर्व्वाद्यौ ।—पूतिकः,—करञ्जः, तस्य त्वक् । कुम्भीकः,—पाटला ; प्लवः,—कैवर्त्तमुस्तकम् । योगेऽत्र मधु प्रक्षिपन्ति वृद्धाः सुश्रुतसंवादात् । त्रिफलेत्यादि स्पष्टम् ॥४॥

लोध्रेत्यादि ।—योगद्वयं वाग्भटस्य । कदम्बेत्यादि—योगद्वयं चरकस्य, चक्रेण प्रतिसंस्कृत्य लिखितम् । धन्वनः,—धामनी ; दीप्यकः,—यमानी ; ग्रन्थकः,—खदिरः, बहुगन्ध इति—खदिरसमः, उक्तं हि—"बहुशल्यश्च गन्धोरी याज्ञिकः कुष्ठनाशनः" इति ; तेनैकदेशोऽपि समग्रं गमयति, यथा—भीमो भीमसेनः । उक्तं हि चरके,—"दार्व्वी विड़ङ्गं खदिरो धवश्च" इति । वाग्भटेऽप्युक्तं,—"गायत्रिदार्व्वीक्रिमिजिद्धवानाम्" इति । अन्ये तु—ग्रन्थकं मदनफलमाहुः ॥ ५ ॥

पित्तमेहस्य याप्यत्वेन यापनार्थं चिकित्सामाह, अश्वत्थादित्यादि ।—नीलादिषु षट्सु मेहेषु क्रमेण एते पञ्च योगा योज्याः । तत्र अश्वत्थक्वाथेनैको योगः, चतुरङ्गुलादिति द्वितीयः, न्यग्रोधादेरिति तृतीयः ; न्यग्रोधादिश्च गणोऽत्र सौश्रुतः ; यथा,—न्यग्रोधोडुम्बराश्वत्थ-प्लक्ष-मधुक-ककुभ-जम्बुद्वय-पियाल-मधूक-रोहिणी-वञ्जुल-कदम्ब-बदर-तिन्दुक-शल्लकी-लोध्र-भल्लातक-पलाश-नन्दीवृक्षाश्चेति । तत्र प्लक्षः,—पाकड़ि । ककुभः,—अर्ज्जुनः । नन्दीवृक्षः,—गन्धमुण्डः । अन्ये तु—न्यग्रोधादिशब्देन पञ्चवल्कमाहुः । फलत्रयादिति चतुर्थं । सजिङ्गीरक्तसारादिति ।—जिङ्गी—मञ्जिष्ठा । रक्तसारः,—रक्तचन्दनम् । पञ्चमं पञ्चमः । हन्युरिति—याप्येषु

लोध्रार्जुनोशीरकुचन्दनाना-
मरिष्टसेव्यामलकाऽभयानाम्।
धात्र्यर्जुनारिष्टकवत्सकानाम्
नीलोत्पलानां तिनिशार्जुनानाम्॥
चत्वार एते विहिताः कषायाः
पित्तप्रमेहे मधुसम्प्रयुक्ताः॥ ७॥

छिन्नावह्निकषायेण पाठाकुटजरामठम्।
तिक्तां कुष्ठञ्च सञ्चूर्ण्य सर्पिर्मेहे पिबेन्नरः॥ ८॥
कदरखदिरपूग-क्वाथं क्षौद्राढ्यं पिबेत्॥ ९॥
अग्निमन्थकषायन्तु वसामेहे प्रयोजयेत्॥ १०॥
पाठाशिरीषदुःस्पर्श-मूर्वाकिंशुकतिन्दुक-।
कपित्थानां भिषक् क्वाथं हस्तिमेहे प्रयोजयेत्॥ ११॥

---

रक्तार्थे। किंवा अनन्यमदुष्टमेदश्च पित्तजानामपि साध्यत्व,—"साध्यास्तु मेदो यदि न प्रदुष्टम्" इति चरकवचनात्। मञ्जाख्यमेह,—वसामेह। सुश्रुते कालमेहस्थाने अम्लमेहः पठ्यते। उक्तं हि सुश्रुते निदानस्थाने—"अम्लरसगन्धमम्लमेही" इति, तथा च चिकित्सितस्थाने—"अम्लमेहिनं न्यग्रोधादिकषायं वा पाययेत्" इति। रक्तमेह-चिकित्सामाह—'सचौद्र' इत्यादिना 'क्वत' इत्यन्तेन। अत्र खर्जूरकाश्मर्यौ फल, तिन्दुकस्य च फलास्थि। अमृता—गुडूची। सुश्रुतेऽपि—"शोणितमेहिनं गुडूची-तिन्दुकास्थिकाश्मर्य खर्जूर कषाय मधुमधुर पाययेत्" इति॥ ६॥

लोध्रेत्यादौ।—कुचन्दन—रक्तचन्दनम्, अरिष्ट,—निम्ब, सेव्यम्—उशीरम्; नीलोत्पलानामित्यत्र नीलोत्पलेला इति पाठान्तरम्; किन्त्वार्षे न दृष्टम्, तिनिश,—भाडुक.॥ ७॥

इदानीमसाध्येष्वपि वातिकमेहेषु यापनार्थं योगानाह, छिन्नेत्यादि।—वह्नि,—चित्रकः। पाठादि कुष्ठान्तानां चूर्णं गुडूचीचित्रककषाये प्रक्षिप्य पिबेत्। कदर,—विट्खदिर, खदिरस्तु तदितर, पूग—पूगफलम्॥ ८—१०॥

पाठेत्यादौ।—तिन्दुककपित्थयो फलम्; तिन्दुकञ्च कैन्दुकफलम्। पाठादि-कपित्थान्तमेकमेव पदम्। वातमेहेष्वसाध्येष्वपि चिकित्साविधानमिदं सेव्यानां

काम्पिल्लसप्तच्छदशालजानि वैभीतरोहीतककौटजानि।
कपित्थपुष्पाणि च चूर्णितानि क्षौद्रेण लिह्यात् कफपित्तमेही॥१२॥

सर्वमेहहरो धात्र्या रसः क्षौद्रनिशायुतः।
कषायस्त्रिफलादारु-मुस्तकैरथवा कृतः॥ १३॥

फलत्रिकं दारुनिशां विशालां मुस्तञ्च निःक्वाथ्य निशांशकल्कम्।
पिबेत् कषायं मधुसम्प्रयुक्तं सर्वप्रमेहेषु समुत्थितेषु॥ १४॥

कटङ्कटेरीमधुक-त्रिफलाचित्रकैः समैः।
सिद्धः कषायः पातव्यः प्रमेहाणां विनाशनः॥ १५॥

त्रिफलादारुदार्व्यब्द-क्वाथः क्षौद्रेण मेहहा॥ १६॥

कुटजासनदार्व्यब्द-फलत्रयकृतोऽथवा॥ १७॥

---

चिरानुबन्धित्वेन किञ्चिद्विशेषलाभेन यापनार्थम्। सुश्रुतेऽप्युक्तम्—"अत ऊर्द्ध-मसाध्येष्वपि धीमान् यापनार्थं वक्ष्यामः" इति॥ ११॥

काम्पिल्लेत्यादौ।—चूर्णितानीति विशेषणपदं द्रष्टव्यम्; एव वैभीतकेत्यादावपीति केचित्। अन्ये तु—कपित्थपुष्पाणि चेति चकारात् काम्पिल्लादीनां कुसुममेव ग्राह्य-मित्याहुः। युक्तञ्चैतत्। उक्तं हि वाग्भटे,—"शालसप्ताह्वकम्पिल्ल वृषकाच-कपित्थजम्। रोहीतकस्य कुसुमं मधुनाऽद्यात् सशर्करम्॥" इति। एवं वृद्धवाग्भटेऽपि शालादीना-मिति कुसुममित्येवोक्तम्। कफपित्तमेहीति।—कफमेही पित्तमेही चेत्यर्थः॥ १२॥

सर्वमेहेत्यादि।—अयं योगो वाग्भिवरिकादिषक्ते ज्ञेयः, सुश्रुतत्वादात्। धात्र्या रसः स्वरसः, स्वरस एव व्यवहारात्, न तु क्वाथ इत्याहुः। कषाय इत्यादि द्वितीययोगेऽपि क्षौद्रनिशायुत इति सम्बन्धनीयम्॥ १३॥

फलत्रिकमित्यादौ।—दारुनिशा—दारुहरिद्रा; विशाला—गोरक्षकर्कटी। निशांशकल्कमिति,—निशाभागकल्क, तत्सहितमेव त्रिफलादिद्रव्यं निःक्वाथ्य कषायं पिबेदित्येके। अन्ये तु—अंशशब्दोऽर्द्धाभिधायी, तेन फलत्रिकादीनां समुदितानामेको भागः, निशायाश्चापरो भागः; एतद्भागद्वयं निःक्वाथ्य कषायं पिबेदित्यर्थः। अपरे तु—निशाया अंशश्चतुर्थो भागः। समुदितक्वाथ्यापेक्षया; स एव कल्कः प्रक्षेपरूपो यत्र तत् तथेति व्याचक्षते; व्यवहारस्त्वनेनैव॥ १४॥

कटङ्कटेरी—दारुहरिद्रा। कुटजासनेत्यादावपि क्षौद्रेणेत्यनुवर्त्तते। अत्र नः,—

त्रिफलालौहशिलाजतुपथ्याचूर्णञ्च लीढमेकैकम्।
मधुनामराखरस इव सर्वान् मेहान् निवारयति ॥ १८ ॥
शालमुष्ककाम्पिल्ल-कल्कमक्षसमं पिबेत्।
धात्रीरसेन सक्षौद्रं सर्वमेहहरं परम् ॥ १९ ॥

न्यग्रोधाद्य चूर्णम्—

न्यग्रोधोडुम्बराश्वत्थ-श्योणाकारग्वधासनम्।
आम्रजम्बूकपित्थञ्च पियालः ककुभो धवः ॥
मधूकौ मधुकं लोध्रं वरुणः पारिभद्रकम्।
पटोलं मेषशृङ्गी च दन्ती चित्रकमाढ़की ॥
करञ्जत्रिफलाशक्र-भल्लातकफलानि च।
एतानि समभागानि श्लक्ष्णचूर्णानि कारयेत् ॥
न्यग्रोधाद्यमिदं चूर्णं मधुना सह लेहयेत्।
फलत्रयरसञ्चानु पिबेन्मूत्रं विशुध्यति ॥
एतेन विंशतिर्मेहा मूत्रकृच्छ्राणि यानि च।
प्रशमं यान्ति योगेन पिड़का न च जायते।
न्यग्रोधाद्यमिदन्त्वत्र चाम्रजम्बस्थि गृह्यते ॥ २० ॥

---

पीतसाल। दार्वी—दारुहरिद्रा। चन्द्;—मुस्तकम्। निश्चयस्तु चन्द्रस्थाने चन्द्रीति पठति। व्यवहारस्तु मुस्तकेनैव ॥ १५—१७ ॥

त्रिफलेत्यादि।—समुदितत्रिफलयैवैको योग, ; तेन चत्वारो योगाः। चमरा—गुडूची, अयञ्च पञ्चमो योगः। लौहञ्च मारित-शुद्धित वज्रादिलौहचूर्णम् ॥ १८ ॥

शालेत्यादि।—शालस्य सार। मुष्कक,—घण्टापारुली, तस्या मूलम्। काम्पिल्लस्य त्वक् ॥ १९ ॥

न्यग्रोधादिचूर्णे।—न्यग्रोध,—वट, ; श्योण,—शोनाख्य। आम्रजम्बूकपित्थेति—आम्रजम्बू, फलास्थि, कपित्थस्य तु फलमित्याहुः। ककुभ,—अर्जुनः। धव,—खनामख्यातः। मधूकः,—मधूकसार। आढ़की—तुवरी। करञ्जस्य फलम्। शक्र,—कुटज, ॥ २० ॥

त्रिकण्टकाद्यं तैलं घृतं यमकञ्च—

त्रिकण्टकाश्मन्तकसोमवल्कै-
र्भल्लातकैः सातिविषैः सलोध्रैः।
वचापटोलार्जुननिम्बमुस्तै-
र्हरिद्रया दीप्यकपद्मकैश्च॥
मञ्जिष्ठपाठाऽगुरुचन्दनैश्च
सर्वैः समस्तैः कफवातजेषु।
मेहेषु तैलं विपचेद्घृतञ्च
पित्तेषु मिश्रं त्रिषु लक्षणेषु ॥ २१ ॥
कफमेहहरक्वाथ-सिद्धं सर्पिः कफे हितम्।
पित्तमेहघ्ननिर्यूह-सिद्धं पित्ते हितं घृतम् ॥ २२ ॥

धान्वन्तरं घृतम्—

दशमूलं करञ्जौ द्वौ देवदारु हरीतकी।
वर्षाभूर्वरुणो दन्ती चित्रकं सपुनर्नवम्॥
सुधानीपकदम्बाश्च बिल्वभल्लातकानि च।
शटी पुष्करमूलञ्च पिप्पलीमूलमेव च॥

---

त्रिकण्टकेत्यादौ।—अश्मन्तकः,—मालुयाक इति ख्यातः। सोमवल्कः,—खदिरः, न तु कट्फलं, अनुक्तसंवादात्। सर्वैरित्युक्ते: पृथगपि सर्वं स्नेहसाधनं स्यादत आह, समस्तैरिति—मिलितैरित्यर्थः, यथालाभपरिहारार्थमिति वा। कफजेषु वातजेषु च मेहेषु तैलं, पैत्तिकेषु घृतम्। मिश्रं त्रिषु लक्षणेष्विति।—दोषत्रयलक्षणप्रादुर्भावे सति मिश्रं तैलघृतं यमकं पचेदित्यर्थः। त्रिदोषजत्वञ्च कफपित्तप्रमेहेष्वेवानुबन्धानुबन्धकृतं मन्तव्यम्; किंवा सर्वेषामेव मेहानां त्रिदोषजत्वादुद्भूतदोषाविर्भावः कदाचिद्भवतीति ज्ञेयम् ॥ २१ ॥

कफमेहेत्यादौ।—क्वाथनिर्यूहेति पदोपादानादकल्कत्वं बोध्यम् ॥ २२ ॥

दशमूलमित्यादौ।—करञ्जयोः फलं, न तु मूलं, मेहघ्नत्वं फलस्यैवेति; यदुक्तं,—"करञ्जकिंशुकारिष्टफलं जन्तुप्रमेहजित्" इति। सुधा—स्नुही, तस्या मूलं, तन्त्रान्तरे मूलपाठात्। नीपकदम्बौ—स्वल्पदलबृहद्दलकदम्बौ, किंवा कदम्बः,—भूकदम्बः,

पृथग्दशपलान् भागान् ततस्तोयार्मणे पचेत्।
यवकोलकुलत्थानां प्रस्थं प्रस्थञ्च दापयेत्॥
तेन पादावशेषेण घृतप्रस्थं विपाचयेत्।
निचुलस्त्रिफला भार्गी रोहिषं गजपिप्पली॥
शृङ्गवेरं विडङ्गानि वचा काम्पिल्लकं तथा।
गर्भेणानेन सिद्धं पाययेत्तु यथाबलम्॥
एतद्धान्वन्तरं नाम विख्यातं सर्पिरुत्तमम्।
कुष्ठगुल्मप्रमेहांश्च श्वयथुं वातशोणितम्॥
प्लीहोदरं तथाऽर्शांसि विद्रधिं पिड़काश्च याः।
अपस्मारं तथोन्मादं सर्पिरेतन्नियच्छति॥
पृथक् तोयार्मणे तत्र पचेत् द्रव्याच्छतं शतम्।
शतत्रयाधिके तोयमुक्तमष्टगुणं मतम्॥ २१॥

दाड़िमाद्यं घृतम्—

दाड़िमस्य फलप्रस्थं यवप्रस्थौ तथैव च।
कुलत्थकुड़वञ्चापि क्वाथयित्वा यथाविधि॥
तेन पादावशेषेण घृतप्रस्थं विपाचयेत्।
चतुःषष्टिपलं क्षीरं क्षीरतुल्यं वरीरसम्॥
दत्त्वा मृद्वग्निना कल्कैरक्षमात्रायुतैः सह।
द्राक्षाखर्जूरकाकोली-दन्तीदाड़िमजीरकैः॥

---

स चालम्बुष, तन्त्रान्तरे भूमिकदम्बपाठात्। नीपस्यापि क्वापि निषः पठ्यते। पृथग्दशपलान् भागानिति।—दशमूलमपि प्रत्येकं दशपलम्, तत्र प्रतिपलं तोयार्मणदानम्। शतत्रयाधिके द्रव्ये पुनरष्टगुणमेव जलं देयम्। एतदेव वक्ष्यति—"पृथक् तोयार्मणे" इत्यादि। अर्मणो द्रोण, चन्द्रस्त्वाह—"पाठान्तरे शत तोय क्वाथादष्टगुणमिह" इति। चक्रस्तु,—एतदेव घृतं तन्त्रान्तरेऽन्यथा पठ्यते; तत्र च क्वाथार्थमष्टगुणं तोयमुक्तम्, तत्प्रमाणाद्द्विगुणमष्टगुणं तोयं देयम्। तत्रा-

तथा मेदामहामेदा-त्रिफलादारुरेणुकैः ।
विशालारजनीदारु-हरिद्राविकयामयैः ॥
क्रिमिघ्नभूमिकुष्माण्ड-श्यामैलाभिर्भिषग्वरः ।
पाने भोज्ये प्रदातव्यं सर्वर्त्तुषु च मात्रया ॥
प्रमेहान् विंशतिञ्चैव मूत्राघातांस्तथाश्मरीम् ।
कृच्छ्रं सुदारुणञ्चैव हन्यादेतद्रसायनम् ॥
शूलमष्टविधं हन्ति ज्वरमष्टविधं तथा ।
कामलाः पाण्डुरोगांश्च हलीमकमथारुचिम् ॥
श्लीपदञ्च विशेषेण घृतेनानेन नश्यति ।
इदमायुष्यमोजस्यं सर्वरोगहरं परम् ।
दाड़िमाद्यमिदं नाम अश्विभ्यां निर्मितं महत् ॥ २४ ॥

त्र्यूषणादि-गुड़िका—

त्रिकटुत्रिफलाचूर्णं तुल्यगुग्गुलुना युतम् ।
गोक्षुरक्वाथसंयुक्तं गुड़िकां कारयेद्भिषक् ॥
दीपकालबलापेक्षी भक्षयेच्चानुलोमिकीम् ।
न चात्र परिहारोऽस्ति कर्म कुर्य्याद् यथेप्सितम् ॥
प्रमेहान् मूत्रघातांश्च वातरोगोदरान् जयेत् ॥ २५ ॥

---

क्वचित्-पाठान्तरं यथा,—"दशमूल हरीतकी देवदारु करञ्जद्वय वर्षाभूद्वय-दन्ती-भूमि-कदम्ब-भल्लातक-पुष्करमूलार्कमूल-स्नुहीमूल-वरुणमूल-पिप्पलीमूलमिति प्रत्येकं दश-पलोन्मितानि । यवकोल-कुलत्थप्रस्थद्वयं चाष्टगुणेऽम्भसि पादशेषं कषायमवतारयेत्" इत्यादि । प्रमेघशब्दश्चेह भूरिजलोपलक्षक इति वृन्दस्याशयः । व्यवहारस्त्वधुना चक्रमतेनैव । निघुल:,—इज्जल: ; रोहिषं—गन्धतृणम् ॥ २३ । २४ ॥

त्रिकट्वित्यादि ।—त्रिकटुत्रिफलाचूर्णं कीदृशम् ?—तुल्यगुग्गुलुयुतम् ; पुनः कीदृशम् ?—गोक्षुरक्वाथेन सम्यगुयुक्तं भावितम् ; एवं कृत्वा गुड़िकां कारयेदित्यर्थः ।

शिलाजतुप्रयोगः,—

शालसारादितोयेन भावितं यच्छिलाजतु।
पिबेत् तेनैव संशुद्ध-देहः पिष्टं यथाबलम् ॥
जाङ्गलानां रसैः सार्द्धं तस्मिन् जीर्णे च भोजनम्।
कुर्य्यादेवं तुलां यावदुपयुञ्जीत मानवः ॥
मधुमेहं विहायासौ शर्करामश्मरीं तथा।
वपुर्वर्णबलोपेतः शतं जीवत्यनामयः ॥ २६ ॥
माक्षिकं धातुमप्येवं युञ्ज्यात् तस्याप्ययं गुणः ॥ २७ ॥
शालसारादिवर्गस्य क्वाथे तु घनतां गते।
दन्तीलोध्रशिवाकान्त-लौहताम्ररजः क्षिपेत् ॥
घनीभूतमदग्धञ्च प्राश्य मेहान् व्यपोहति।
व्यायामजातमखिलं भजन् मेहान् व्यपोहति ॥ २८ ॥
पादत्रच्छत्ररहितो भिक्षाशी मुनिवद्यतः।

---

मिलितत्रिकटुचूर्णं पल १, मिलितत्रिफलाचूर्णं पल १, गुग्गुलु पल १, चूर्णगुग्गुलुभावनार्थं गोक्षुर पल ४, क्वाथार्थं जल श ४, एवं सप्ताहमातपे भावयेत्, तदनु यवकमात्रमिता वटिकाः कार्य्याः ॥ २५ ॥

शालसारादितोयेनेत्यादि।—शालसारादि औषधी गणः; तस्य तोयं क्वाथः। तद्विधान—"तुल्य गिरिजेन जले चतुर्गुणे भावनीयञ्च क्वाथम्", इत्यादि वक्ष्यमाणरसायनविधिना ज्ञेयम्। तेनैवेति।—शालसारादितोयेनैव पिबेत्। संशुद्धदेह इति—वमनादिना। पिष्टमिति—चूर्णितम्। तुलां यावदुपयुञ्जीतेति।—प्रतिदिनमर्द्धकर्षादिमात्रया तावदुपयोगोऽस्य यावता तुला न पूर्य्यते, न तु पिप्पलीवर्द्धमानवत्। मधुमेहं विहायेति—उत्पन्नमात्र मधुमेहं हित्वा इत्यर्थः। चिरजस्य असाध्यत्वात्, किंवा महाप्रभाववत्वात् योगोऽयमसाध्यमपि मधुमेहं साधयति। एतद्विधिं स्वर्णादिकेऽप्यतिदिशति,—माक्षिकं धातुमप्येवमिति ॥ २६ । २७ ॥

शालसारादिवर्गस्येत्यादि।—शालसारादिगणस्य चतुर्थभागावशिष्टे क्वाथे पुनःपाकाद्घनीभूते दन्त्यादीनां मिलितानां चूर्णं पादिकं प्रक्षेप्यं कुटजलेहवत्। शिवा—हरीतकी। कान्तेति।—मारितपुटितकान्तलौहादिचूर्णम्; अस्य सर्व-

योजनानां शतं गच्छेदधिकं वा निरन्तरम् ॥
मेहान् जेतुं वने वापि नीवारामलकाशनः ॥ २८ ॥
शराविकाद्याः पिडकाः साधयेच्छोथवद्भिषक् ।
पक्वाश्चिकित्सेद्व्रणवत् तासां पाने प्रशस्यते ।
क्वाथं वनस्पतेर्वास्तं मूत्रञ्च व्रणशोधनम् ।
एलादिकेन कुर्वीत तैलञ्च व्रणरोपणम् ॥
आरग्वधादिना कुर्य्यात् क्वाथमुद्वर्त्तनानि च ।
शालसारादिसेकञ्च भोज्यादिष्व कणादिना ॥ ३० ॥
सौवीरकं सुरां शुक्तं तैलं क्षीरं घृतं गुड़म् ।
अम्लेक्षुरसपिष्टान्नानूपमांसानि वर्जयेत् ॥ ३१ ॥
प्रमेहिणां यदा मूत्रमनाविलमपिच्छिलम् ।
विशदं कटु तिक्तञ्च तदारोग्यं प्रचक्षते ॥ ३२ ॥

इति प्रमेह-चिकित्सा ।

---

विधिर्हीनात्मवान् । व्यायामजातमिति—मल्लयुद्धादिजनितम् । नीवारैरित्युपलक्षणम् ; तेन श्यामाकादिकमपि बोध्यम् ; यदाह सुश्रुतः,—"महावने वा श्यामाकनीवारामलक-कपित्थ-तिन्दुकाश्मन्तकफलमूलाहारो मृगैः सह वसेत्" इति ॥ २८ । २९ ॥

प्रमेहपिडकाचिकित्सामाह, शराविकाद्या इत्यादि ।—शोथवदिति—प्रथमशोथवत् इत्यर्थः । वनस्पतेरिति—वटादेः ; वास्तं मूत्र—छागमूत्रम् । एलादिकेनेत्यादि ।—एलादिगणश्च सौश्रुतः,—"कल्ककाथावनिर्देशे गणात् तस्मात् समाचरेत्" इति वचनात् एलादिगणस्य क्वाथः कल्कश्च । अन्ये तु—एलादिगणस्य कल्को जलञ्च चतुर्गुणमित्याहुः । आरग्वधादिरपि सौश्रुतो गणः । क्वाथमिति—पानार्थं परिषेकार्थञ्च । भोज्यादिष्विव्याद्युक्तत्वात् अन्यमपि भोज्यम् । कणादिनेति ।—पिप्पल्यादिगणेन सौश्रुतेन । निदानपरिवर्जनमाह—सौवीरकमित्यादि ॥ ३०—३१ ॥

इति प्रमेह-चिकित्सा-विवृतिः ।

अग्निसन्दीपनकरं वाजीकरणमुत्तमम् ।
सोमरोगं निहन्त्याशु भास्करस्तिमिरं यथा ।
विडङ्गाद्यमिदं लौहं सर्वरोगनिसूदनम् ॥ ५ ॥

व्योषाद्यमन्थयोगः—

व्योषं विडङ्गशिग्रूणि त्रिफलां कटुरोहिणीम् ।
बृहत्यौ द्वे हरिद्रे द्वे पाठामतिविषां स्थिरम् ॥
हिङ्गुकेबुकमूलानि यमानीधान्यचित्रकम् ।
सौवर्चलमजाजीं च हबुषाञ्चेति चूर्णयेत् ॥
चूर्णतैलघृतक्षौद्र-भागाः स्युर्मानतः समाः ।
शक्तूनां षोडशगुणो भागः सन्तर्पणं पिबेत् ॥
प्रयोगात् तस्य शाम्यन्ति रोगाः सन्तर्पणोत्थिताः ।
प्रमेहा मूढवाताश्च कुष्ठान्यर्शांसि कामलाः ।
प्लीहपाण्ड्वामयः शोथो मूत्रकृच्छ्रमरोचकः ।
हृद्रोगो राजयक्ष्मा च कासश्वासौ गलग्रहः ॥
क्रिमयो ग्रहणीदोषाः श्वैत्र्यं स्थौल्यमतीव च ।
नराणां दीप्यते चाग्निः स्मृतिर्बुद्धिश्च वर्द्धते ॥ ६ ॥
बदरीपत्रकल्केन पेया काञ्जिकसाधिता ।
स्थौल्यनुत् स्यात् साग्निमन्थ-रसं वापि शिलाजतु ॥ ७ ॥

---

कार्य्यत्वेन प्राधान्यादितरमिलितचूर्णसमत्वम्; षोडशाधिको भागः, मधुना मानमेव प्रत्याहुः ॥ ४ । ५ ॥

व्योषमित्यादौ ।—तैलघृतक्षौद्राणां प्रत्येकं मिलितचूर्णसमत्वम्; शक्तूनाञ्च षोडशगुणो भागः समुदितचूर्णापेक्षया । सन्तर्पणमिति—जलालोडितशक्तुस्वरूपतया । न सन्तर्पणमत्राप्यसन्तर्पणता ज्ञेया । मात्रा चास्य चाहारद्रव्यप्रधानत्वात् पलौ । मूढवाताः,—वातापतानिनः । श्वैत्र्यं—श्वित्रत्वम् । स्थैर्य्यमिति पाठे—तावभावस्ता, सा च कफकृता ॥ ६ ॥

बदरीत्यादि ।—बदरीपत्रकल्कं पिष्टा काञ्जिकद्रवेण पेया साध्या । साग्निमन्थेत्यादि ।—द्वितीयो योगः । रसः,—क्वाथः । शिलाजतु प्रदेयम् ॥ ७ ॥

अमृताद्यगुग्गुलुः,—

अमृतात्रुटिवेल्लवत्सकं कलिङ्गपथ्यामलकानि गुग्गुलुः ।
क्रमवृद्धमिदं मधुप्लुतं पिडकास्थौल्यभगन्दरं जयेत् ॥ ८ ॥

नवकगुग्गुलुः,—

व्योषाग्नित्रिफलामुस्त-विडङ्गैर्गुग्गुलुं समम् ।
खादन् सर्वान् जयेद्व्याधीन् मेदःश्लेष्मामवातजान् ॥ ९ ॥

लौहरसायनम्,—

गुग्गुलुस्तालमूली च त्रिफला खदिरं वृषम् ।
त्रिवृतालम्बुषा स्नुक् च निर्गुण्डी चित्रकं शटी ॥
एषां दशपलान् भागांस्तोये पञ्चाढके पचेत् ।
पादशेषं ततः कृत्वा कषायमवतारयेत् ॥
प[illegible]ादशं देयं तीक्ष्णलौहं सुचूर्णितम् ।
पुराणसर्पिषः प्रस्थं शर्कराष्टपलोन्मितम् ॥
पचेत् ताम्रमये पात्रे सुशीते चावतारिते ।
प्रस्थार्द्धं माक्षिकं देयं शिलाजतुपलद्वयम् ॥
एलात्वचोः पलार्द्धञ्च विडङ्गानि पलत्रयम् ।
मरिचस्याञ्जनं कृष्णा द्विपलं त्रिफलान्वितम् ॥

---

अमृतेत्यादी ।—त्रुटिः,—सूक्ष्मैला । वेल्ल,—विडङ्गः । कलिङ्गः—इन्द्रयव, [illegible] । [illegible] ... ८ ॥

व्योषेत्यादी ।—अग्निः,—चित्रक ॥ ९ ॥

गुग्गुलुरित्यादि । [illegible] ... शिलाजतु [illegible]

पलद्वयन्तु कासीसं श्लक्ष्णचूर्णीकृतं बुधैः ।
चूर्णं दत्त्वा समथितं स्निग्धे भाण्डे निधापयेत् ॥
ततः संशुद्धदेहस्तु भक्षयेदक्षमात्रकम् ।
अनुपानं पिबेत् क्षीरं जाङ्गलानां रसं तथा ।
वातश्लेष्महरं श्रेष्ठं कुष्ठमेहोदरापहम् ।
कामलां पाण्डुरोगञ्च श्वयथुं सभगन्दरम् ॥
मूर्च्छामोहविषोन्माद-गराणि विविधानि च ।
स्थूलानां कर्षणं श्रेष्ठं मेदुरे परमौषधम् ॥
कर्षयेद्वातिमात्रेण कुक्षिं पातालसन्निभम् ।
वल्यं रसायनं मेध्यं वाजीकरणमुत्तमम् ॥
श्रीकरं पुत्रजननं वलीपलितनाशनम् ।
नाश्नीयात् कदलीं कन्दं काञ्जिकं करमर्दकम् ।
करीरं कारवेल्लञ्च षट् ककाराणि वर्जयेत् ॥ १०

त्रिफलाद्यं तैलम्—

त्रिफलाऽतिविषामूर्वा-त्रिवृच्चित्रकवासकैः ।
निम्बारग्वधषड्ग्रन्था-सप्तपर्णनिशाद्वयैः ॥
गुडूचीन्द्रसुराकृष्णा-कुष्ठसर्षपनागरैः ।
तैलमेभिः समं पक्वं सुरसादिरसाप्लुतम् ॥
पानाभ्यञ्जनगण्डूष-नस्यवस्तिषु योजितम् ।
स्थूलतालस्यकण्ड्वादीन् जयेत् कफकृतान् गदान् ॥ ११ ॥

---

पात्रम् । एषां चूर्णानां प्रतिपलद्वयमानेऽष्टदशायां प्रक्षेप ; 'अयस्तु' दिनान्तरे प्रक्षेप । सर्वेषां प्रत्येकं षोडशपलानि । [illegible]पाकः । लौहाकार पदार्थ मर्दनादिक्रिया बोध्या ॥ १० ॥

त्रि[illegible] ।—इन्द्रसुरा—गोरक्षककर्कटी, निर्गुण्डी वा । सुरसादिरसाप्लुतमिति —सुरसादिगणस्य क्वाथसंयुक्तं ॥ ११ ॥

शिरीषलामज्जकहेमलोध्रैस्त्वग्दोषसंस्वेदहरः प्रघर्षः ।
पत्राम्बुलोध्राभयचन्दनानि शरीरदौर्गन्ध्यहरः प्रदेहः ॥ १२ ॥

वासादलरसो लेपाच्छङ्खचूर्णेन संयुतः ।
बिल्वपत्ररसो वापि गात्रदौर्गन्ध्यनाशनः ॥ १३ ॥

हरीतकीलोध्रमरिष्टपत्रम्
चूतत्वचो दाडिमवल्कलञ्च ।
एषोऽङ्गरागः कथितोऽङ्गनानाम्
जङ्घाकषायश्च नराधिपानाम् ॥ १४ ॥

गोमूत्रपिष्टं विनिहन्ति कुष्ठम्
वर्णोज्ज्वलं गोपयसा च शुक्लम् ।
कक्षादिदौर्गन्ध्यहरं पयोभिः
शस्तं वयोमद्रजनीद्वयेन ॥ ॥ १५ ॥

चिञ्चापत्रस्वरसम्बलितं कक्षादियोजितं जयति ।
पुटदग्धहरिद्रोद्वर्त्तनमचिराद्देहदौर्गन्ध्यम् ॥ १६ ॥

---

मेदोदोषजन्यथोः स्वेददौर्गन्ध्ययोश्चिकित्सामाह, शिरीषेत्यादि ।—लामज्जकम्—उशीरम्, हेम—नागकेशरचूर्णम्, पत्र—तेजपत्र, तमालपत्रमित्यर्थः; अम्बु—बालकं, लोध्रमगुरु, चन्दनं—श्वेतचन्दनम् । शङ्खचूर्णेन संयुत इति ।—शङ्खभस्मचूर्णेन मिश्रितः । एवं बिल्वपत्ररसोऽपि ॥ १२ । १३ ॥

हरीतक्यादौ ।—अरिष्टपत्र—निम्बपत्रं, दाडिमवल्कलं—त्वचः फलस्य वा; अङ्गरागः,—वर्णप्रसादः । जङ्घाकषाय इति ।—जङ्घाभिधानेन विमर्दयोग्योऽयमिति वर्णप्रसादनार्थं कषायो विलेपनमित्यर्थः । यदुक्तं, मेदिनीकरकोषे—"कषायो रसभेदे च निर्यासे च विलेपने" इति ॥ १४ ॥

गोमूत्रपिष्टमित्यादि ।—गोमूत्रेण । वर्णोज्ज्वलं—हरितालं, तस्य प्रसिद्धत्वात् । हरितालं गोमूत्रपिष्टं सत् कुष्ठं निहन्ति । गोपयसा शुक्लमिति ।—पिष्टं तदेव दौर्गन्ध्यहरम्, तथा रजनीद्वयेन सहितं तदेव हरितालं पयसा क्षीरेण पिष्टं तिलकदानेन वशीकरणं प्रशस्तमित्यर्थः ॥ १५ ॥

चिञ्चेत्यादि ।—चिञ्चापत्रस्वरसेनादौ मर्दनं कक्षादौ मर्दनमथ पुटदग्धहरिद्रा पिष्टा, उद्वर्त्तनं कार्यमित्यर्थः ॥ १६ ॥

दलजललघुमलयाभयविलेपनं हरति देहदौर्गन्ध्यम् ।
विमलारनालसहितं पीतमिवालम्बुषाचूर्णम् ॥
हस्तपादसुती योज्या गुग्गुलुः पञ्चतिक्तकः ।
अथवा पञ्चतिक्ताख्यं घृतं खादेदतन्द्रितः ॥ १७ ॥

इति स्थौल्य-चिकित्सा ।

---

## अथोदर-चिकित्सा ।

उदरे दोषसम्पूर्णे कुक्षौ मन्दो यतोऽनलः ।
तस्माद्भोज्यानि योज्यानि दीपनानि लघूनि च ॥ १ ॥
रक्तशालीन् यवान् मुद्गान् जाङ्गलांश्च मृगान् द्विजान् ।
पयोमूत्रासवारिष्ट-मधु-सीधूंस्तथा पिबेत् ॥ २ ॥
वातोदरं बलवतः पूर्वं स्नेहैरुपाचरेत् ।
स्निग्धाय स्वेदिताङ्गाय दद्यात् स्नेहविरेचनम् ॥
हृते दोषे परिम्लानं वेष्टयेद्वाससोदरम् ।
तथास्यानवकाशत्वाद्वायुर्नाध्मापयेत् पुनः ॥ ३ ॥

---

दलेत्यादि ।—दल—तेजपत्रम् ; जलं—बालकम् ; लघु—अगुरु ; मलयजं—श्वेतचन्दनम् , अभयम्—उशीरम् , अलम्बुषा—मुण्डीरी ॥ १७ ॥

इति स्थौल्य चिकित्सा-विवृतिः ।

---

उदरोत्पत्तिसाधर्म्यात् स्थौल्यानन्तरमुदरचिकित्सामाह, उदर इत्यादि । उदरे—उदररोगे ॥ १ । २ ॥

वातोदरमित्यादि ।—ननु—"विवर्जयेत् स्नेहपानमजीर्णी चोदरी ज्वरी" इति वचनात् स्नेहपानं न सिद्ध, तथा "नोदरी नातिसारी च" इत्यादिना च स्वेदः निषिद्धः । तत् कथमत्र स्नेहस्वेदोपदेशः ? उच्यते,—एतन्नयोर्निषेधो शाम्य, न तु शोधनाङ्गभूतयोः, अन्यथा दोषहरणस्य दुष्करत्वात् । परिम्लानमिति—क्षीणम् । तथेति—वस्त्रवेष्टनेन ॥ ३ ॥

दोषातिमात्रोपचयात् स्रोतोमार्गनिरोधनात् ।
सम्भवत्युदरं तस्मान्नित्यमेनं विरेचयेत् ॥
विरिक्तं च यथादोष-हरैः पेया शृता हिता ॥ ४ ॥
वातोदरी पिबेत् तक्रं पिप्पलीलवणान्वितम् ।
शर्करामरिचोपेतं स्वादु पित्तोदरी पिबेत् ॥ ५ ॥
यमानीसैन्धवाजाजी-व्योषयुक्तं कफोदरी ।
पिबेन्मधुयुतं तक्रं व्यक्ताम्लं नातिपेलवम् ॥ ६ ॥
मधुतैलवचाशुण्ठी-शताह्वाकुष्ठसैन्धवैः ।
युक्तं प्लीहोदरी जातं सव्योषन्तु दकोदरी ॥
बद्धोदरी तु हपुषा-दीप्यकाजाजिसैन्धवैः ।
पिबेच्छिद्रोदरी तक्रं पिप्पलीक्षौद्रसंयुतम् ॥
त्र्यूषणक्षारलवणैर्युक्तन्तु निचयोदरी ॥ ७ ॥
गौरवारोचकार्त्तानां समन्दाग्न्यतिसारिणाम् ।
तक्रं वातकफार्त्तानाममृतत्वाय कल्पते ॥ ८ ॥
वातोदरे पयोऽभ्यासो निरूहो दाशमूलिकः ।
सोदावर्त्ते शतयाम्ल-शृतैरण्डानुवासनः ॥ ९ ॥

---

उदरं पुनः पुनः संभवतीत्याह—दोषातिमात्रेत्यादि ।—स्रोतोमार्ग,—स्रोतोमुखम्;—मार्गशब्दोऽत्र मुखरूपमार्गवाची। यथादोषहरैरिति।—पवित्तमुदरि णो दोष प्रकृतयाव तद्दोषप्रत्यनीकैर्द्रव्यमूल्यादिभि. ॥ ४ । ५ ॥

यमानीत्यादि नातिपेलवमित्यनेनैवो यीव:। नातिपेलवं—नातितनु । यन्ये तु—कफोदरीत्यनेनैवयोग एवैत्याहुः । तत्र,—"यमानीसैन्धवाजाजी मधुव्योषैः कफोदरी" इति जौम्मटविरोधात् ॥ ६ ॥

मधुतैलेत्यादौ ।—जातमिति स्कंद, सुजातदधिमथमित्यर्थ. । सव्योषन्तु दकोदरीति ।—दकोदरी तु सव्योषं तक्रं पिबेदित्यर्थ. । दीप्यक—यमानी । निचयोदरी—सन्निपातोदरी ॥ ७ ॥

गौरव इत्यादौ ।—घनंस्कृतस्य केवलतक्रस्यायं गुण इति ज्ञेयम् ॥ ८ ॥

वातोदर इत्यादि ।—पयोऽभ्यास इति क्रमेण वक्ष्यमाणम्, बलजननानन्तरं पयो नवसंनीयम्। निरूहो दाशमूलिक इति ।—दशमूलक्वाथेन निरूहः कार्य इत्यर्थः ;

सामुद्राद्यं चूर्णम्—

सामुद्रसौवर्चलसैन्धवानि क्षारं यमानीमजमोदकञ्च।
सपिप्पलीचित्रकशृङ्गवेरं हिङ्गुं विडङ्गेति समानि कुर्य्यात्॥
एतानि चूर्णानि घृतप्लुतानि भुञ्जीत पूर्वं कवलं प्रशस्तम्।
वातोदरं गुल्ममजीर्णभुक्तं वायुप्रकोपं ग्रहणीञ्च दुष्टाम्॥
अर्शांसि दुष्टानि च पाण्डुरोगं भगन्दरञ्चेति निहन्ति सद्यः॥१०॥

पित्तोदरेषु बलिनं पूर्वमेव विरेचयेत्।
अनुवास्याबलं क्षीर-वस्तिशुद्धं विरेचयेत्॥
पयसा सत्रिवृत्कल्केनोरुबूककृतेन वा।
सातलात्रायमाणाभ्यां शृतेनारग्वधेन वा॥११॥

---

चिन्ता—"त्रिफलामूलस्य रसोऽम्लयुक्तः सव्योषगोमांसरसः स पूर्वकल्पः। निरूहयुक्तः प्रवरो निरूहः समीरणव्याधिहरः प्रदिष्टः॥" इति। अयञ्च तीक्ष्णविरेचनद्रव्ययुक्तः कार्य्यः; चरकप्रामाण्यात्। तीक्ष्णवर्णं वातोदर इत्यन्वयः। वातघ्नाम्ल-शृतैरण्डानुवासनः इति।—वातघ्नैर्द्रव्यैस्तथा अम्लैश्च काञ्जिकादिभिः शृतमेरण्डमित्येरण्डतैल-मनुवासनं यस्य वस्तेः स तथा इति। अनुवासनस्य स्नेहरूपत्वात् एरण्डपदेनैरण्डतैल-मुच्यते॥९॥

सामुद्रेत्यादि।—यमानी क्षारो यवक्षारः। अत्र हिङ्गुष्टगवदुपयोगः। चूर्णा-नीत्यनन्तरं समनियेति शेषः॥१०॥

पित्तोदरेत्यादि।—क्षीरप्रधानो बस्तिः क्षीरबस्तिः। अत्र बलिनं पुरुषं पूर्वमिति अनुवासनमकृत्वैव विरेचयेत्। अनुवासनव्यतिरिक्तस्तु स्नेहः कर्त्तव्य एव। अत एवोक्तं वाग्भटे—"बलिनं स्वादुसिद्धेन पैत्ते संस्नेह्य सर्पिषा। श्यामा-त्रिभण्डीत्रिफला विपक्वेन विरेचयेत्॥" इति।—अबलं पुनरादौ अनुवास्य ततः क्षीर-बस्तिशुद्धं विरेचयेत्। विरेकोऽप्यग्निबलमनन्तरमेव कार्य्यः। उक्तं हि वाग्भटे—"दुर्बलं त्वनुवास्यादौ शोधयेत् क्षीरबस्तिभिः। जाते चाग्निबले स्निग्धं भूयो भूयो विरेचयेत्॥" इति।—केन विरेचयेत्?—इत्याह पयसेत्यादि।—अत्र तु उरुबूक-शब्दस्य फलं ग्राह्यं, विरेचकत्वात्; एवमारग्वधस्यापि फलम्। सातला—चर्मकषा। पयसेति सर्वत्र सम्बध्यते। सत्रिवृत्कल्केन पयसेत्येको योगः, उरुबूककृतेनेति द्वितीयः, सातलादिरारग्वधान्तस्तृतीयः, अनुकर्षसंवादात्। अन्ये तु—सत्रिवृत्कल्केनोरुबूक-

कफादुदरिणं शुद्धं कटुक्षाराम्नभोजितम्।
मूत्रारिष्टायस्कृतिभिर्योजयेच्च कफापहैः ॥ १२ ॥
सन्निपातोदरे सर्वा यथोक्ताः कारयेत् क्रियाः ॥ १३ ॥
प्लीहोदरे प्लीहहरं कर्मोदरहरं तथा ॥ १४ ॥
स्विन्नाय बद्धोदरिणे मूत्रं तीक्ष्णौषधान्वितम्।
सतैललवणं दद्यान्निरूहं सानुवासनम्॥
परिस्रंसीनि चान्नानि तीक्ष्णञ्चैव विरेचनम् ॥ १५ ॥
छिद्रोदरमृते स्वेदात् श्लेष्मोदरवदाचरेत् ॥ १६ ॥

---

एतेनैतयो योगः, तथा समिकत्वार्थेन सातलारग्वधाभ्यां तु द्वितीयो योग इत्याहुः ॥ ११ ॥

कफादित्यादि।—शुद्धमिति—वमनव्यतिरिक्तशोधनेन विशुद्धमित्यर्थः, वमनस्योदरे निषिद्धत्वात्। कटुक्षाराम्नभोजितमिति—कटुक्षारयुक्तैरन्नैः पेयादिभिः भक्तसंसर्जनमित्यर्थः। अयस्कृतिः—नवायसादि, किंवा अयस्कृतयो रसायनोक्ता लौहमयो पावरकोक्ता ज्ञेयाः ॥ १२ ॥

सन्निपातोदर इत्यादौ।—सर्वा यथोक्ता इति।—प्रत्येकं वातोदरादिविहिताः क्रियाः सर्वा एव सन्निपातोदरे कार्य्याः ॥ १३ ॥

प्लीहोदर इत्यादौ।—प्लीहहरं कर्म वक्ष्यमाणं, तथोदरहरमिति प्लीहोदरहरम्; प्लीहोदरचिकित्सा च कार्य्या ॥ १४ ॥

स्विन्नायेत्यादि।—निरूहस्य लवणैत एव सतैललवणत्वे सिद्धे सतैललवणमिति पदं तैललवणयोरत्राधिक्यदानोपदर्शनार्थम्। बद्धच्छिद्रदकोदराणाञ्च यद्यप्यास्थापनं निषिद्धं, तथापि तदेकसाध्यायामवस्थायां निरूहदानमिह ज्ञेयम्। परिस्रंसीनीत्यनुलोमीनि ॥ १५ ॥

छिद्रोदरमित्यादि।—वाग्भटस्य।—यद्यपि "प्रायो भवत्यभावाय च्छिद्रान्त्रञ्चोदरं नृणाम्" इत्यनेन छिद्रोदरमसाध्यमुक्तं, तथापि प्रायःशब्देन तत्रासाध्यताव्यभिचारस्य दर्शितत्वात् चिकित्सितमिदं यापनार्थम्। तथा "हन्ति सर्वोदराण्येतच्चूर्णं जातोदकान्यपि" इत्यनेन सर्वोदरचिकित्सैव बोध्याः। अन्ये तु—सर्वोदरहन्तृत्वकथनं न पारमार्थिकं, किन्तु स्तुतिरित्याहुः। ऋते स्वेदात्—इत्यनेन स्वेदस्य छिद्रोदरे क्लेदयुक्तेऽत्यर्थक्लेदकरतया निषेधः ॥ १६ ॥

जातं जातं जलं स्राव्यं शास्त्रोक्तं शस्त्रकर्म च ।
जलोदरे विशेषेण द्रवसेवां विवर्जयेत् ॥ १७ ॥
देवदारुपलाशार्क-हस्तिपिप्पलिशिग्रुकैः ।
साश्वगन्धैः सगोमूत्रैः प्रदिह्यादुदरं शनैः ॥
मूत्राण्यष्टावुदरिणां सेके पाने च योजयेत् ।
स्नुहीपयोभावितानां पिप्पलीनां पयोऽशनः ॥
सहस्रञ्च प्रयुञ्जीत शक्तितो जठरामयी ॥ १८ ॥
शिलाजतूनां मूत्राणां गुग्गुलोस्त्रैफलस्य च ।
स्नुहीक्षीरप्रयोगश्च शमयत्युदरामयम् ॥ १९ ॥
स्नुक्पयसा परिभाविततण्डुलचूर्णविनिर्मितः पूपः ।
उदरमुदारं हिंस्याद् योगोऽयं सप्तरात्रेण ॥ २० ॥
पिप्पलीवर्द्धमानं वा कल्पदृष्टं प्रयोजयेत् ।
जठराणां विनाशाय नास्ति तेन समं भुवि ॥ २१ ॥

---

शास्त्रोक्तमिति—शल्यशास्त्रोक्तम् ॥ १७ ॥

देवदार्वित्यादौ ।—पलाशः,—किंशुकस्तस्य क्षारं ग्राह्यं, उदरघ्नत्वात् । कृ
य इत्यादि ।—अत्र एकविंशतिवारान् भावयेत्, चारपाणिसंवादात् । व्यवह
प्रवारभावनया । एतान् पिप्पलीर्मुष्टिकास्त्रियस्तु पञ्च वा कोष्ठानुरूपं प्रत्यह
तरं ह्रस्वतरं वा विरेचनार्थं क्षीरेण पिबेत् । सहस्रञ्च प्रयुञ्जीतेति ।—उपयुक्तपिप
प्यनया यावता कालेन सहस्रं पूर्यत इत्यर्थः । एतच्चोक्तमंवचनम्; तेन सहस्रात्
पि विधिर्बोध्यः ॥ १८ ॥

शिलाजतूनामित्यादौ ।—त्रैफलस्य गुग्गुलोरिति—त्रिफलागुग्गुलोरित्य
योगैः,—अभ्यासः । समासान्तर्गतमपि 'प्रयोग' इति पदम्, चकाराच्छिलाज
दिभिः सह प्रत्येकं सम्बध्यते ॥ १९ ॥

स्नुक्पयसेत्यादौ ।—पूपः,—पिष्टकम्; महावृक्षक्षीरेण विभावितः पिष्
र्भावयित्वा एकां द्वे तिस्रो वा प्रयच्छेत् विरेकार्थमिति; उदारमिति—महद्
कल्पदृष्टमिति ।—चरकोक्तरसायनविधिदृष्टम्; तच्च विधिं प्लीहयकृच्चिकित्सिते दर्श
यामः ॥ २०।२१ ॥

पटोलाद्य चूर्णम्—

पटोलमूलं रजनीं विडङ्गं त्रिफलात्वचम् ।
कम्पिल्लकं नीलिनीञ्च त्रिवृतां चेति चूर्णयेत् ॥
षडाद्यान् कार्षिकानन्त्यांस्त्रींश्च द्वित्रिचतुर्गुणान् ।
कृत्वा चूर्णं ततो मुष्टिं गवां मूत्रेण वै पिबेत् ॥
विरिक्तो जाङ्गलरसैर्भुञ्जीत मृदुमोदनम् ।
मण्डं पेयाञ्च पीत्वा च सव्योषं षडहं पयः ॥
शृतं पिबेत्तु तच्चूर्णं पिबेदेवं पुनःपुनः ।
हन्ति सर्वोदराण्येतच्चूर्णं जातोदकान्यपि ।
कामलां पाण्डुरोगञ्च श्वयथुञ्चापकर्षति ॥ २२ ॥

नारायणचूर्णम्—

यमानी हपुषा धान्यं त्रिफला सोपकुञ्चिका ।
कारवी पिप्पलीमूलमजगन्धा शटी वचा ॥
शताह्वा जीरकं व्योषं स्वर्णक्षीरी सचित्रका ।
द्वौ क्षारौ पौष्करं मूलं कुष्ठं लवणपञ्चकम् ॥
विडङ्गञ्च समांशानि दन्त्या भागत्रयं तथा ।
त्रिवृद्विशाले द्विगुणे सातला स्याच्चतुर्गुणा ॥

---

पटोलमूलमित्यादौ ।—त्वचमिति—त्रिफलात्वचमित्यर्थम् । षडाद्यान् कार्षिकानिति ।—पटोलमूलादीनां त्रिफलान्तानां षण्णां प्रत्येकं कर्षभागानित्यर्थः । त्रींश्च द्वित्रिचतुर्गुणानिति ।—कम्पिल्लकादयस्त्रयः क्रमात् कार्षिकभागापेक्षया द्वित्रिचतुर्गुणानित्यर्थः । नीलिनी—नीलबुह्ना, शलाशात फल, हरबाम्भट-प्रसादात् । मुष्टिमिति—पलम् । विरिक्तो जाङ्गलरसैरित्यादि ।—विरेचनदिने जीर्णे भेषजे मृद्वोदनमण्डपेयानामन्यतममभिमतापेक्षया उपयोक्तव्यम् । तत ऊर्द्ध्वं षडहं यथोक्तपयोवृत्तिना भवितव्यम् । ततः पुनः सप्तमेऽहनि पटोलादिचूर्णं पेयम्, एवं पुनः पुनः कार्य्यम् ॥ २२ ॥

यमानीत्यादौ ।—उपकुञ्चिका—कृष्णजीरकम्, कारवी—स्वल्पप्रमाण जीरक-मीषत्कृष्णम्, जीरकशब्देन च प्रसिद्ध महज्जीरकम् । अजगन्धा—अजमोदा; स्वर्णक्षीरी—कटुक, दन्त्या भागत्रयमाद्यभागापेक्षया, एवं त्रिवृद्विशालयोरप्याद्य-

एष नारायणो नाम चूर्णो रोगगणापहः।
नैनं प्राप्याभिवर्द्धन्ते रोगा विष्णुमिवासुराः॥
तक्रेणोदरिभिः पेयो गुल्मिभिर्बदराम्बुना।
आनद्धवाते सुरया वातरोगे प्रसन्नया॥
दधिमण्डेन विट्सङ्गे दाडिमाम्बुभिरर्शसि।
परिकर्त्ते च वृक्षाम्लैरुष्णाम्बुभिरजीर्णके॥
भगन्दरे पाण्डुरोगे कासे श्वासे गलग्रहे।
हृद्रोगे ग्रहणीदोषे कुष्ठे मन्दानले ज्वरे॥
दंष्ट्राविषे मूलविषे सगरे कृत्रिमे विषे।
यथार्हं स्निग्धकोष्ठेन पेयमेतद्विरेचनम्॥ २३॥
दन्ती वचा गवाक्षी च शङ्खिनी तिल्वकं त्रिवृत्।
गोमूत्रेण पिबेत् कल्कं जठरामयनाशनम्॥ २४॥
सक्षीरं माहिषं मूत्रं निराहारः पिबेन्नरः।
शाम्यत्यनेन जठरं सप्ताहादिति निश्चयः॥ २५॥
गवाक्षीशङ्खिनीदन्ती-नीलिनीकल्कसंयुतम्।
सर्वोदरविनाशाय गोमूत्रं पातुमाचरेत्॥ २६॥

---

भागापेक्षया प्रत्येकं द्विगुणम्। सातला—चर्मकषा। नारायणमप्राप्याभिवर्द्धन्ते नैनमित्यादि।—एतेन नारायणसदृशत्वान्नारायणसंज्ञा युक्ता भवति। गरोऽविषं दष्यसर्पादिजं विषं कालान्तरफलदायि, कृत्रिमन्तु स्थावरजङ्गमविषसंयोगादुत्कृष्ट-जनितं विषं तत्काल्फलदायि। यथार्हमिति।—वयआद्यपेक्षया दोषव्याधिविपरीतैः द्रव्यैः पानमिति दर्शयति। यथार्हस्निग्धकोष्ठेनेति पाठे—यो यथोचित स्नेह-नेन स्निग्धकोष्ठेन पेयमिदम्॥ २३॥

दन्त्यादौ।—गवाक्षी—गोरक्षकर्कटी। शङ्खिनी—श्वेतबुह्ना॥ २४॥

सक्षीरमित्यादौ।—माहिषं मूत्र पञ्चमेकं द्वयं वा पीत्वा विरिक्ते सति क्षीरमेव पीत्वा स्थातव्यमित्युपदिशन्ति। वाग्भटोप्युक्तं,—"गव्यं मूत्रं माहिषमेव वा पिबेत्क्षीरभुक् स्यात् करभीक्षीरवर्त्तन" इति। क्षीरभुगिति—क्षीरमात्रभोजी। अत एव—"माहिषं मूत्रं पीत्वा तत्क्षीराहार एव नरः" इति निदर्शनं यदुक्तं

अर्कपत्रं सलवणमन्तर्धूमं दहेत् ततः।
मस्तुना तत् पिबेत् क्षारं गुल्मप्लीहोदरापहम् ॥ २७ ॥
पीतः प्लीहोदरं हन्यात् पिप्पलीमरिचान्वितः।
१ अम्लवेतससंयुक्तः शिग्रुक्वाथः ससैन्धवः ॥ २८ ॥
यस्य गृहीत्वा संज्ञामुत्पाटयित्वेन्द्रवारुणीमूलम्।
प्रक्षिप्यते सुदूरे शाम्येत् प्लीहोदरन्तु तस्य ॥ २९ ॥
रोहीतकाभयाक्षोद-भावितं मूत्रमस्तु वा।
पीतं सर्वोदरप्लीह-मेहार्शःक्रिमिगुल्मनुत् ॥ ३० ॥
देवद्रुमं शिग्रुमयूरकञ्च गोमूत्रपिष्टामथवाश्वगन्धाम्।
पीत्वाशु हन्यादुदरं प्रवृद्धं क्रिमीन् सशोथानुदरञ्च दूष्यम् ॥ ३१ ॥
दशमूलदारुनागरच्छिन्नरुहापुनर्नवाऽभयाक्वाथः।
जयति जलोदरशोथश्लीपदगलगण्डवातरोगांश्च ॥ ३२ ॥
हरीतकीनागरदेवदारु-पुनर्नवाच्छिन्नरुहाकषायः।
सगुग्गुलुर्मूत्रयुतस्तु पेयः शोथोदराणां प्रवरः प्रयोगः ॥ ३३ ॥

---

ग्रहणीयम्, उक्तवाग्भटवचनविरोधात्। अर्कपत्रं सलवणमिति।—सैन्धवेन तुल्य परिमितमर्कपत्रं दहन्ति ॥ २१—२७ ॥

पीत इत्यादौ।—पिप्पल्यादिद्रव्यचतुष्टयं प्रक्षेप्यम् ॥ २८। २९ ॥

रोहीतकेत्यादौ।—रोहीतकहरीतकीचूर्णैककर्षेण पलत्रयपरिमितं गोमूत्रमस्तु वा भाव्यमिति केचित्, अन्ये तु—रोहीतकहरीतक्यौ क्षोदे खण्डखण्डकर्मे: शिलायां किञ्चिदवचूर्णं सप्ताहं भावितं मूत्रमस्तु वैत्याहुः, वाग्भटप्रामाण्यात्; यथा,—"रोहीतकलताः कृत्वाः खण्डशः साभयास्ततो। मूत्रेष सुनुयात् तच सप्तरात्रस्थितं पिबेत् ॥" इति। सुनुयादिति—भावयेत् ॥ ३० ॥

इदानीमुदरे सर्वोपद्रवमूलप्रभूतशोथसम्बन्धे सति चिकित्साविशेषमाह, देवद्रुममित्यादि।—मयूरकम्—अपामार्गमूलम्। मूत्रमत्र योगद्वयेऽपि, मूत्रेण पेषणं पानञ्चेत्याहुः। इन्दटीपनिकायान्तु देवद्रुमादिरश्वगन्धान्त एको योगः, अथवाशब्दोऽपि पूर्वयोगापेक्षया इत्युक्तम्; व्यवहारस्तु योगद्वयेनेति ॥ ३१ ॥

दशमूलेत्यादौ।—क्वाथ इत्यत्र युक्त इति पाठे—क्वाथ इति शेषः ॥ ३२ ॥

हरीतकीत्यादौ।—प्रतिदिनोपयोगे गुग्गुलोर्माषकचतुष्टयं गोमूत्रस्यार्द्धपलं कर्षौ

एरण्डतैलं दशमूलमिश्रं गोमूत्रयुक्तस्त्रिफलारसो वा ।
निहन्ति वातोदरशोथशूलं क्वाथः समूत्रो दशमूलजश्च ॥ ३४ ॥

पुनर्नवाष्टकः,—

पुनर्नवानिम्बपटोलशुण्ठी-तिक्ताऽमृतादार्व्यभयाकषायः ।
सर्वाङ्गशोथोदरकासशूल-श्वासान्वितं पाण्डुगदं निहन्ति ॥ ३५ ॥
पुनर्नवां दार्व्यभयां गुडूचीं पिबेत् समूत्रां महिषाक्षयुक्ताम् ।
त्वग्दोषशोथोदरपाण्डुरोग-स्थौल्यप्रसेकोर्द्ध्वकफामयेषु ॥ ३६ ॥
गोमूत्रयुक्तं महिषीपयो वा क्षीरं गवां वा त्रिफलाविमिश्रम् ।
क्षीरान्नभुक् केवलमेव गव्यं मूत्रं पिबेद्वा श्वयथूदरेषु ॥ ३७ ॥

पुनर्नवा दार्व्यमृता पाठा विल्वं श्वदंष्ट्रिका ।
बृहत्यौ द्वे रजन्यौ द्वे पिप्पल्यश्चित्रकं वृषम् ॥
समभागानि चूर्णानि गवां मूत्रेण वा पिबेत् ॥
बहुप्रकारं श्वयथुं सर्वगात्रविसारिणम् ।
हन्ति शोथोदराण्यष्टौ व्रणांश्चैवोपनतानपि ॥ ३८ ॥

---

वा प्रक्षेप्यः ; विरेचने तु कर्त्तव्ये प्रचुरत्वमनयोः ; अत्यन्तबद्धकोष्ठे तु—गोमूत्रेणैव क्वाथं कृत्वा गुग्गुलुमात्रं प्रक्षिप्य तदा व्यवहरन्ति ॥ ३३ ॥

एरण्डतैलमित्यादि ।—एरण्डतैलप्रक्षेपाद्दशमूलक्वाथ इत्येको योगः ; गोमूत्रप्रक्षेपात् त्रिफलाक्वाथ इति द्वितीयः ; अत्यन्तबद्धकोष्ठे तु—गोमूत्रेणैव त्रिफलाक्वाथः कार्य्य इति वदन्ति ; एवं गोमूत्रप्रक्षेपाद्गोमूत्रेण वा दशमूलक्वाथोऽपीत्याहुः ॥ ३४ ॥

पुनर्नवामित्यादि ।—पुनर्नवादीनां चूर्णं गुग्गुलुसंयुक्तं गोमूत्रेण पेयम्, तथाच तन्त्रान्तरे—"गोमूत्रेणाथवा दारु-वर्षाभूचेतकीरजः । पिबेद्गुग्गुलुसंयुक्तं शोथोदरविनाशनम् ॥" इति । अत्र चेतकी—हरीतकी । गुग्गुलुञ्च मिलितचूर्णसम इत्याहुः । अन्ये तु—पुनर्नवादीनां क्वाथे गोमूत्रं गुग्गुलुञ्च प्रक्षिप्य व्यवहरन्ति । क्षीरं गवां वा त्रिफलाविमिश्रमिति ।—त्रिफलायाः क्वाथः कल्को वा । क्षीरान्नभुगिति —क्षीरमात्रेणान्नभुक् ॥ ३५—३७ ॥

पुनर्नवेत्यादौ ।—विल्वस्य मूलम् । शोथोदराण्यष्टाविति—सशोथान्यष्टावुदराणीत्यर्थः ॥ ३८ ॥

पुराणं माषकं पिष्ट्वा द्विगुणीकृततण्डुलम्।
साधितं क्षीरतोयाभ्यामभ्यसेत् पायसन्तु तत्॥
हन्ति वातोदरं शोथं ग्रहणीं पाण्डुतामपि।
सिद्धो भिषग्भिराख्यातः प्रयोगोऽयं निरत्ययः॥ ३९॥

दशमूलषट्पलकं घृतम्—

दशमूलतुलार्द्धरसे सक्षारैः पञ्चकोलकैः पलिकैः।
सिद्धं घृतार्द्धपात्रं द्विर्मस्तुकमुदरगुल्मघ्नम्॥ ४०॥

चित्रकघृतम्—

चतुर्गुणे जले मूत्रे द्विगुणे चित्रकात् पले।
कल्के सिद्धं घृतप्रस्थं सक्षारं जठरी पिबेत्॥ ४१॥

बिन्दुघृतम्—

अर्कक्षीरपले द्वे च सुह्याः क्षीरपलानि षट्।
पथ्या काम्पिल्लकं श्यामा सम्याकं गिरिकर्णिका॥

---

पुराणमित्यादि।—पुराणमाषकस्य मूल पलमात्र, दरदलिततण्डुलस्य पलद्वयं, क्षीरतोयाभ्यां समाभ्यां साधयित्वा पायसं कार्यं। अस्मोपयोगेऽपरमप्यन्नम नाश्नीयादित्याहुः। शोथेऽयं शोथमात्रेऽपि प्रभवति॥ ३९॥

दशमूलषट्पलके—दशमूलस्य तुलार्द्धं पञ्चाशत्पलानि, तस्य क्वाथ इत्यर्थः। घृतस्यार्द्धपात्रमर्द्धाढक प्रस्थद्वयमित्यर्थः। द्विर्मस्तुकमिति।—घृतमपेक्ष्य द्विगुण मस्त्वित्यर्थः। चरकोक्तदशमूलषट्पलकेऽपि द्वि शब्द प्रस्थेन यथार्द्धपलिकैरित्यनेन च योज्य। तेन पिप्पल्यादीनां द्विरिति द्विगुणार्द्धपले षट्पलानि भवन्ति, तथा प्रस्थेन च द्वि शब्दसम्बन्धात् प्रस्थद्वय भवतीति एकवाक्यता बोध्या। ननु क्रियाभ्यावृत्तावेव सुच्प्रत्ययो दृश्यते, न तु अभ्यावृत्तिमात्रेणैव, द्विरष्टवर्षस्वरवारसुन्दरीत्यादौ क्रियाभ्यावृत्तिं विनापि सुच्प्रत्ययस्य दर्शनात्॥ ४०॥

चतुर्गुण इत्यादि।—अत्र सक्षारमित्यनेन यवक्षारस्यापि चित्रकवत् पलमेक देयम्, अत्रार्थे तन्त्रान्तर यथा,—"यवक्षारपलाभ्यां द्विमूत्र चतुर्जलञ्च घृतप्रस्थम्" इति॥ ४१॥

अर्कक्षीरेत्यादि।—श्यामा—श्याममूला त्रिवृत्। गिरिकर्णिका—श्वेतापराजिता,

नीलिनी त्रिवृता दन्ती शङ्खिनी चित्रकस्तथा।
एतेषां पलिकैर्भागैर्घृतप्रस्थं विपाचयेत्॥
अथास्य मलिने कोष्ठे बिन्दुमात्रं प्रदापयेत्।
यावतोऽस्य पिबेद्बिन्दूंस्तावद्वारान् विरिच्यते॥
कुष्ठं गुल्ममुदावर्त्तं श्वयथुं सभगन्दरम्।
प्रशमयत्युदराण्यष्टौ वृक्षमिन्द्राशनिर्यथा॥
एतद्बिन्दुघृतं नाम येनाभ्यक्तो विरिच्यते॥ ४२॥

दधिमण्डाद्यं घृतम्—

दधिमण्डाढके सिद्धात् स्नुक्क्षीरपरिकल्कितात्।
घृतप्रस्थात् पिबेन्मात्रां तद्वज्जठरशान्तये॥
तथा सिद्धं घृतप्रस्थं पयस्यष्टगुणे पचेत्।
स्नुक्क्षीरपलकल्केन त्रिवृताषट्पलेन च॥ ४३॥

नाराचघृतम्—

स्नुक्क्षीरदन्तीत्रिफलाविडङ्ग-
सिंहीत्रिवृच्चित्रककल्कयुक्तम्।

---

नीलिनी—नीलबुह्ना। शङ्खिनी—श्वेतबुह्ना। अत्र पाकार्थं जलं चतुर्गुणं देयम्; अत एव क्वचित् ग्रन्थसंग्रहे दृश्यते,—"सुधार्कक्षीरतु पयसा पाकस्यानुपपत्तितः। जलं चतुर्गुणं देयं पाकार्थं बिन्दुसर्पिषि॥" इति। मात्रा तु अस्य कोष्ठानुरूपा नावकर्मिकं इव वा प्रवर्तते। मलिन इति—मलवत्कुक्षौ॥ ४२॥

दधिमण्डेत्यादि।—तद्वदिति।—पूर्वोक्तप्रकारेणोत्थितादघृतात्। चरके हि—"क्षीरद्रोणं सुधाक्षीर-प्रस्थार्द्धसहितं दधि" इत्यादि। पूर्वयोक्ते क्षीरद्रोणे सुधाक्षीर-प्रस्थार्द्धं प्रक्षिप्य दधि करणीय, ततस्तद्दधि मथित्वा घृत सम्पादनीयमिति प्रकार उक्त इति। तथा सिद्धमित्यादि।—अत्रापि पूर्वोक्तप्रकारनिष्पादितदधिमन्थनसिद्धं घृतमिति तयाख्याय। एतयोर्घृतयोरनुपानं तथा विरेकान्तरीयो विधिश्च चरकोक्त एवानुसरणीय इति॥ ४३॥

घृतं विपक्वं कुडवप्रमाणम्
तोयेन तस्याचमथार्द्धकर्षम् ॥
पीत्वोष्णमम्भोऽनुपिबेद्विरिक्ते
पेयां सुखोष्णां वितरेद्विधिज्ञः।
नाराचमेतज्जठरामयानाम्
युक्त्योपयुक्तं शमनं प्रदिष्टम् ॥ ४४ ॥

इत्युदर-चिकित्सा।

---

## अथ प्लीह-यकृच्चिकित्सा।

यमानिकाचित्रकयावशूक-षड्ग्रन्थिदन्तीमगधोद्भवानाम्।
प्लीहानमेतद्विनिहन्ति चूर्णमुष्णाम्बुना मस्तुसुरासवैर्वा ॥ १ ॥
पिप्पलीं किंशुकक्षार-भावितां सम्प्रयोजयेत्।
गुल्मप्लीहापहां वह्निदीपनीञ्च रसायनीम् ॥ २ ॥
विडङ्गाज्याग्निसिन्धूत्थ-सक्तून् दग्ध्वा वचान्विताम्।
पिबेत् क्षीरेण सञ्चूर्ण्य गुल्मप्लीहोदरापहान् ॥ ३ ॥

---

युक्त्येत्यादौ।—विधी—कष्टकारी, युक्त्योपयुक्तमिति—कोष्ठाद्यपेक्षा-पेक्षया इत्यर्थः ॥ ४४ ॥

इत्युदर-चिकित्सा-विवृतिः ॥

---

प्लीहद्वयोः उदरसम्भवादनन्तरं प्लीहचिकित्सामाह, यमानिकेत्यादि।—षड्ग्रन्थि—पिप्पलीमूलम्, उक्तं हि रत्नकोषे—"ग्रन्थिकं पिप्पलीमूलं षड्ग्रन्थि चटिका-शिरः" इति ॥ १ ॥

पिप्पलीमित्यादि।—किंशुक,—पलाश, तत्क्षारोदके सप्तधा भाविता पिप्पलीं पिप्पलीवर्द्धमानक्रमेण प्रयोजयेत्, दुग्धपानमप्यत्रोपदिशन्ति वृद्धाः ॥ २ ॥

विडङ्गेत्यादि।—विडङ्गादीनां चूर्णं घृताक्तं कृत्वा अन्तर्धूमं दाहयेत्। ततः

तालपुष्पभवः क्षारः सगुडः प्लीहनाशनः ।
रोहीतकाभयाक्काथः कणाक्षारसमन्वितः ॥ ४ ॥
क्षारं वा विड्कृष्णाभ्यां पूतिकस्याम्लनिःसुतम् ।
प्लीहयकृत्प्रशान्त्यर्थं पिबेत् प्रातर्यथाबलम् ॥ ५ ॥
पातव्यो युक्तितः क्षारः क्षीरेणोदधिशुक्तिजः ।
पयसा वा प्रयोक्तव्याः पिप्पल्यः प्लीहशान्तये ॥ ६ ॥
भल्लातकाऽभयाजाजी-गुडेन सह मोदकः ।
सप्तरात्रान्निहन्त्याशु प्लीहानमतिदारुणम् ॥ ७ ॥
शोभाञ्जनकनिर्य्यूहं सैन्धवाग्निकणान्वितम् ॥ ८ ॥
पलाशक्षारयुक्तं वा यवक्षारं प्रयोजयेत् ॥ ९ ॥

---

सचूर्णं क्षीरेण सह पिबेत् । अन्ये तु—कपाले लक्षा एवमेव दहेत् न पुनरन्तर्धूममित्याहु. । व्यवहारः पूर्ववत् ॥ ३ ॥

तालपुष्पेत्यादावप्यन्तर्धूमक्षारः ।—सगुड इति—समगुडः । क्षारस्य च माषकचतुष्टयेन व्यवहारः ॥ ४ ॥

क्षार वेत्यादि ।—पूतिकस्य लाटाकरञ्जमूलस्य क्षारम् । अम्लनिःसुतमिति ।—अम्लकाञ्जिके नि.सुत स्रवणा परिस्रुतं पूतिकरञ्जक्षार विड्लवणपिप्पलीचूर्णप्रक्षेपेण पिबेत् । वाग्भटेऽप्युक्तम्—"अम्लस्रुतं विड्कणाचूर्णाढ्यं नक्तमालजम्" इति । वाग्भटटीकायामपि अम्लकाञ्जिकादिभिः परिस्रुतमिति व्याख्यातम् । सुश्रुतेऽपि—"अम्लसुत पूतीकरञ्जक्षार विड्लवणपिप्पलीप्रगाढं पाययेत्" इत्युक्तम् । तेन अम्लनि क्षारे निःसुतमित्यसदर्थं एव । वाशब्द. पूर्वं योगापेक्षया । उदधिशुक्ति.,—मुक्तास्फोटः । युक्तित इति—वयोबलाद्यपेक्षया । पयसा वेत्यादि ।—शीकाद्यैः वृन्दे पठ्यते, तद्ग्रन्थाश्रक्रसंग्रहेऽपि केचित् पठन्ति, किन्तु वृन्दे पिप्पलीवर्द्धमान न पठ्यते ; तेन तत्र तत्पाठो युज्यते एव ; इह तु अग्रे पिप्पलीवर्द्धमान वक्तव्यमेवेति पयसा वेति श्लोकार्द्धमत्र न पठनीयमेवेति ; अत एव निबन्धेनापि नोपन्यस्तमिति ॥ ५। ६ ॥

भल्लातकेत्यादि ।—स्पष्टम् ॥ ७ ॥

शोभाञ्जनेत्यादौ ।—निर्य्यूहः,—क्वाथः, अग्निः,—चित्रकः । पलाशक्षारयुक्तं वेति—पलाशक्षारोदकयुक्तम् ; उक्तं हि सुश्रुते—"प्रस्रुतेन वा पलाशक्षारेण यवक्षारम्" इति ॥ ८। ९ ॥

तिलान् सलवणांश्चैव घृतं षट्पलकं तथा ॥ १० ॥
प्लीहोद्दिष्टां क्रियां सर्वां यत्नतः सम्प्रयोजयेत् ॥ ११ ॥
लशुनं पिप्पलीमूलमभयाञ्चैव भक्षयेत् ।
पिबेद्गोमूत्रगण्डूषं प्लीहरोगविमुक्तये ॥ १२ ॥
प्लीहजिच्छरपुङ्खायाः कल्कस्तक्रेण सेवितः ।
शरपुङ्खैव सम्भक्ष्य लब्धा पैथाभुजाथवा ॥ १३ ॥
शार्ङ्गष्टामिर्य्यूषः ससैन्धवस्तिन्तिड़ीकसम्मिश्रः ।
प्लीहव्युपरमयोगः पक्वाम्ररसोऽथवा समधुः ॥ १४ ॥
रोहीतकाभयाक्षोद-भावितं मूत्रमम्बु वा ।
पीतं सर्वोदरप्लीह-मेहार्शःक्रिमिगुल्मनुत् ॥ १५ ॥
दध्ना भुक्तवतो वाम-बाहुमध्ये शिरां भिषक् ।
विध्येत् प्लीहविनाशाय यकृन्नाशाय दक्षिणे ।
प्लीहानं मर्दयेद्गाढं दुष्टरक्तप्रवृत्तये ॥ १६ ॥

माषाद्यगुडिका—

माणमार्गीमृतावासाःस्थिराचित्रकसैन्धवम् ।
नागरं तालखण्डञ्च मत्स्यमन्तु त्रिकार्षिकम् ॥

---

तिलान् सलवणानिति।—कृष्णतिला एव ससैन्धवा भक्ष्याः, अन्ये तु—तिलनाल-क्षारोदकं सलवणं पेयमित्याहुः। अवचारस्तु पूर्ववदेव। घृतं षट्पलकमिति—ज्वरोक्तम् ॥ १० । ११ ॥

लशुनमित्यादौ।—गोमूत्रगण्डूषैरनुपानम्। शरपुङ्खाया इति—शरपुङ्खा मूलस्य। शार्ङ्गष्टा—काकजङ्घा गुञ्जा वा, धनश्रीमूलम्। तिन्तिडीकं—महार्द्रकाम्। पक्वाम्ररसः समधुर्वातीन्यथे। रोहितकेत्यादौ।—क्षोदश्चूर्णम्। गोमूत्रं विरेकार्थम्, अम्बु तु शमनार्थमिति व्यवस्था ॥ १२—१५ ॥

दध्नेत्यादौ।—दधिभोजनं श्लेष्मोत्क्लेशनार्थम्। वामबाहुमध्य इति।—कूर्पर-सन्धेरधस्तात्। खेदसंदानप्यत्र कार्यौ, सुश्रुतवचनादात्। प्लीहानं मर्दयेदिति।—शिराया विद्धायां तेन प्लीहो दुष्टरक्तं निःसरति ॥ १६ ॥

माषेत्यादौ।—मार्गोऽपामार्गः, स्थिरा—शालपर्णी, मत्स्यमित्यभिनवम्। विका-

विड़सौवर्चलक्षार-पिप्पल्यश्चापि कार्षिकाः ।
एतच्चूर्णीकृतं सर्वं गोमूत्रस्याढ़के पचेत् ॥
सान्द्रीभूते गुड़ीं कुर्य्याद्दत्त्वा त्रिपलमाक्षिकम् ।
यकृत्प्लीहोदरहरो गुल्मार्शोग्रहणीहरः ॥
योगः परिकरो नाम्ना ग्रग्निसन्दीपनः परः ॥ १७ ॥
पिप्पली नागरं दन्ती समांशं द्विगुणाभयम् ।
चूर्णं पीतं विड़ार्द्धांशं प्लीहघ्नमुष्णवारिणा ॥ १८ ॥

पिप्पलीवर्द्धमानानि—

क्रमवृद्ध्या दशाहानि दशपिप्पलिकं दिनम् ।
वर्द्धयेत् पयसा सार्द्धं तथैवापनयेत् पुनः ॥
जीर्णेऽजीर्णे च भुञ्जीत षष्टिकं क्षीरसर्पिषा ।
पिप्पलीनां सहस्रस्य प्रयोगोऽयं रसायनः ॥
दशपैप्पलिकः श्रेष्ठो मध्यमः षट् प्रकीर्त्तितः ।
यस्त्रिपिप्पलिपर्य्यन्तः प्रयोगः सोऽवरः स्मृतः ॥
बृंहणं वृष्यमायुष्यं प्लीहोदरविनाशनम् ।
वयसः स्थापनं मेध्यं पिप्पलीनां रसायनम् ॥

---

विड़मिति—प्रत्येकम् । परिकरो नामेति ।—परिकरो विरेकसत्कारकत्वात् परिकरो योगः, उक्तं हि—"भवेत् परिकरः सङ्गे समारम्भविरेकयोः" इति ॥ १७ ॥

पिप्पलीत्यादौ ।—द्विगुणाभयम् इत्येकभागापेक्षया द्वैगुण्यम्; एवं विड़-लवणस्याप्येकभागापेक्षयार्द्धभागत्वं ज्ञेयम् ॥ १८ ॥

दशभिः पिप्पलीवर्द्धमानमानमाह क्रमेत्यादि ।—दश पिप्पल्यो यत्र वर्द्धन्ते तद्दिनं दशपिप्पलिकं, तेन दश पिप्पल्यः प्रत्यहं वर्द्धनीया इत्यर्थः । उक्तं हि—"दश-भिर्दशभिः प्रवृत् पिप्पलीभिस्तु वर्द्धयेत्" इति । अनयोनविंशतिदिनैर्वृद्धिहानिक्रमेण एतेनैव सहस्रं पूर्णं भवति । पयसा सार्द्धमिति ।—अनेन पयसोऽपि वृद्धिरित्याहुः । केचित्तु—'चूर्णीकृता' इत्यत्र 'शीतीकृता' इति पठित्वा शीतकषायीकृता इति व्याख्या-नयन्ति । पिप्पलीवर्द्धमानस्य त्रैविध्यमाह,—दशपैप्पलिक इत्यादि । षट्प्रकीर्त्तित

पञ्चपिप्पलिकश्चापि दृश्यते वर्द्धमानकः ॥
पिष्टास्ता बलिभिः पेयाः शृता मध्यबलैर्नरैः ।
चूर्णीकृता ह्रस्वबलैर्दृष्टदोषामयान् प्रति ॥ १९ ॥

पिप्पलीचित्रकघृतम्—

पिप्पली चित्रकान्मूलं पिष्ट्वा सम्यग्विपाचयेत् ।
घृतं चतुर्गुणक्षीरं यकृत्प्लीहोदरापहम् ॥ २० ॥

प्लीहारिनामा रसः,—

शुद्धसूतं द्विधा गन्धं खल्वे कुर्य्याच्च कज्जलीम् ।
सूततुल्यं जारिताभ्रं सम्मर्द्य कन्यकाम्बुना ॥
गोलं कुर्य्यात् ततो लौहं ताम्रञ्च द्विगुणीकृतम् ।
काकमाचीरसैः पिष्ट्वा गोलं ताभ्याञ्च वेष्टयेत् ॥
वराटिकाया भस्माथ रसतस्त्रिगुणं क्षिपेत् ।
ततश्च सम्पुटं कृत्वा मूषामध्ये प्रकल्पयेत् ॥
तन्मध्ये गोलकं कृत्वा शरावेण पिधापयेत् ।
पुटेद्गजपुटे विद्वान् स्वाङ्गशीतं समुद्धरेत् ॥
शिवं सम्पूज्य यत्नेन द्विजाय परितोषयेत् ।
खादेद्रक्तिद्वयं चूर्णं मूत्रञ्चापि पिबेदनु ॥

---

इति ।—षड्रक्ता व्याप्यर्थेकम् इत्यर्थः । त्रिपिप्पलीपर्य्यन्त इति । —तिस्रः पिप्पल्यः पर्य्यन्ते यस्य स तथा, तेन पिप्पलीत्रयेण यत्र हानि स प्रयोग उच्यते, तथैव प्रयोगसमाप्तौ पिप्पलीत्रयावस्थानम् । पञ्चभिः पञ्चभिः पिप्पलीभिर्वर्द्धितस्तु व्यवह्रियते इति प्रतिपादयितुं ग्रन्थः स्वयमनुपन्यस्यति—पञ्चपिप्पलिक इत्यादि । विदेहेऽप्युक्तम्—"दशभिर्दशभिः ग्रन्थं पिप्पलीभिस्तु वर्द्धयेत् । पञ्चभिः पञ्चभिर्वापि शताद्यवतरेत् पुनः ॥" इति ॥ १९ ॥

पिप्पलीत्यादि ।—अत्र पिप्पली च चित्रकश्चेति समासो न कार्य्यः, तथा सति पिप्पलीमूलस्यैव ग्रहणं स्यात्, तच्च न व्यवहारसिद्धम् ॥ २० ॥

मधुना पिप्पलीचूर्णं सगुड़ाम्बुहरीतकीम् ।
अजाजीं वा गुड़ेनैव भक्षयेदस्य मानतः ॥
यकृद्गुल्मोदरप्लीह-क्षयथुज्वरनाशनः ।
वह्निमान्द्यप्रशमनं सर्वान् व्याधीन् नियच्छति ॥ २१ ॥

पिप्पलीघृतम्—

पिप्पलीकल्कसंयुक्तं घृतं क्षीरचतुर्गुणम् ।
पिबेत् प्लीहाग्निसादादि-यकृद्रोगहरं परम् ॥ २२ ॥

चित्रकघृतम्—

चित्रकस्य तुलाक्वाथे घृतप्रस्थं विपाचयेत् ।
आरनालं तद्द्विगुणं दधिमण्डं चतुर्गुणम् ॥
पञ्चकोलक-तालीश-क्षारैर्लवणसंयुतैः ।
द्विजीरकनिशायुग्मै-र्मरिचं तत्र दापयेत् ॥
प्लीहगुल्मोदराध्मान-पाण्डुरोगारुचिज्वरान् ।
वस्तिहृत्पार्श्वकट्यूरु-शूलोदावर्त्तपीनसान् ॥
हन्यात् पीतं तदर्शोघ्नं शोथघ्नं वह्निदीपनम् ।
बलवर्णकरञ्चापि भस्मकञ्च नियच्छति ॥ २३ ॥

रोहीतकघृतम्—

रोहीतकत्वचः श्रेष्ठाः पलानां पञ्चविंशतिः ।
कोलद्विप्रस्थसंयुक्तं कषायमुपकल्पयेत् ॥
पलिकैः पञ्चकोलैश्च तैः सर्वैरपि तुल्यया ।
रोहीतकत्वचा पिष्टैर्घृतप्रस्थं विपाचयेत् ॥

---

पिप्पलीघृतं स्पष्टम् ॥ २२ ॥

चित्रकघृते ।—तुलाक्वाथ इति—चतुर्गुणजले क्वथितायाः तुलायाः चतुर्थांशावशेषः । आरनालं तद्द्विगुणमिति ।—घृतापेक्षया, एवं दधिमण्डस्यापि चातुर्गुण्यम् । दधिमण्ड,—दधिमस्तु, क्षार,—यवक्षार, लवण—सैन्धवम्; अन्ये तु—क्षारः,— सर्जिक्षारः, लवण—पञ्चलवणमाहुः ॥ २३ ॥

रोहीतकेत्यादि ।—वाग्भटस्य । श्रेष्ठा इत्यत्र श्लक्ष्णेति वाग्भटे पठ्यते ।

प्लीहाऽभिवृद्धिं शमयेदेतदाशु प्रयोजितम् ।
तथा गुल्मज्वरश्वास-क्रिमिपाण्डुत्वकामलाः ॥ २४ ॥

महारोहीतकघृतम्—

रोहीतकात् पलशतं क्षोदयेद्बदराढ़कम् ।
साधयित्वा जलद्रोणे चतुर्भागावशेषिते ॥
घृतप्रस्थं समावाप्य च्छागक्षीरं चतुर्गुणम् ।
तस्मिन् दद्यादिमान् कल्कान् सर्वांस्तानक्षसम्मितान् ॥
व्योषं फलत्रिकं हिङ्गु यमानीं तुम्बुरुं विड़म् ।
अजाजीं कृष्णलवणं दाड़िमं देवदारु च ॥
पुनर्नवां विशालाञ्च यवक्षारं सपौष्करम् ।
विड़ङ्गं चित्रकञ्चैव हवुषां चविकां वचाम् ॥
एतैर्घृतं विपक्वन्तु स्थापयेद्भाजने शुभे ।
पाययेत् त्रिपलां मात्रां व्याधिं बलमवेक्ष्य च ॥
रसकेनाथ यूषेण पयसा वापि भोजयेत् ।
उपयुक्ते घृते तस्मिन् व्याधीन् हन्यादिमान् बहून् ॥
यकृत्प्लीहोदरञ्चैव प्लीहशूलं यकृत् तथा ।
कुक्षिशूलञ्च हृच्छूलं पार्श्वशूलमरोचकम् ।
विबन्धशूलं शमयेत् पाण्डुरोगं सकामलम् ॥

---

रोहीतकः,—रोहड़ इति ख्यातस्तरुः, तस्य पञ्चविंशतिपलैः कोलप्रस्थद्वयेन मिलित्वा सप्तपञ्चाशत्पलानि क्वाथ्यानि स्युः, तेषाञ्चतुर्गुणं जलमुत्सर्गसिद्धं देयम्; पादशेषश्च कषायो द्विपलाधिकचतुर्दशशरावाः। वैद्यप्रसारके तु—षोड़शगुणं जलमुक्तम्। अन्ये तु—जलद्रोणं दत्त्वा शेषमाढ़कं कषायमित्याहुः। ते. सर्वेऽपि तुल्ययेति।—पञ्चकोलैमुल्यया, पञ्चपलमानया इत्यर्थः। रोहीतकत्वचा पिष्टयेति योज्यम् ॥ २५ ॥

महारोहीतकघृते—बदरचूर्णस्य चाढ़कं—चतुःषष्टिपलानि। अत्र एकेनैव जलद्रोणेन बदरचूर्णाढ़कसहितस्य रोहीतकपलशतस्य क्वाथः करणीयः; तथैव निर्दिष्टत्वात्। तन्त्रान्तरेऽपि—"रोहीतकशत चूर्णं कोलचूर्णाढ़कान्वितम्। नि क्वाथ्य सलिलद्रोणे चतुर्भागस्थिते रसे॥" इति। अन्ये तु—जलसाम्यमात्रस्य द्रोणपदमाहत्या

छर्द्यतीसारशमनं तन्द्राज्वरविनाशनम्।
महारोहीतकं नाम्ना प्लीहघ्नन्तु विशेषतः॥ २५॥

इति प्लीह-यकृच्चिकित्सा।

---

## अथ शोथ-चिकित्सा।

शुण्ठीपुनर्नवैरण्ड-पञ्चमूलशृतं जलम्।
वातिके श्वयथौ शस्तं पानाहारपरिग्रहे।
दशमूलं सर्वथा च वातशोथे विशेषतः॥ १॥
क्षीराशनः पित्तकृतेऽथ शोथे त्रिवृद्गुडूचीत्रिफलाकषायम्।
पिबेन्नवां मूत्रविमिश्रितं वा फलत्रिकाचूर्णमथाक्षमात्रम्॥ २॥
हृत्रिपर्णीघनोदीच्य-शुण्ठीसिद्धन्तु पैत्तिके॥ ३॥
अभया दारु मधुकं तिक्ता दन्ती सपिप्पली।
पटोलं चन्दनं दार्वी त्रायमाणेन्द्रवारुणी॥
एषां क्वाथः ससर्पिष्कः श्वयथुज्वरदाहहः।
वीसर्पतृष्णासन्ताप-सन्निपातविषापहः॥ ४॥
शीतवीर्य्यैर्हिमजलैरभ्यङ्गादींश्च कारयेत्॥ ५॥

---

रोहीतकपलशतमिश्रणेन तथा बदराढकमिश्रणेन च प्रत्येकं योज्यम्; एतेनैकेन जलद्रोणेन रोहीतकपलशतस्य क्वाथः, अपरेण बदराढकस्य च क्वाथ इत्याह। व्यवहारोऽप्यनेनैव। अक्षलवणं—सौवर्चलम्, आयुर्वेदसारे अक्षकपाठादिति॥२५॥

इति प्लीह-यकृच्चिकित्सा-विवृतिः।

---

उत्सेधसाधर्म्यादनन्तरं शोथचिकित्सामाह,—शुण्ठ्यादौ।—पञ्चमूलं—महत्-पञ्चमूलं, वृद्धव्यवहारात्। पानाहारपरिग्रह इति—अन्नपानसंस्कारे। सर्वथेति—कल्कक्वाथादिविधया॥ १॥

क्षीरेत्यादि—योगद्वयम्। गवाक्षीत्यादि—द्वितीयो योगः॥ २। ३॥

अभयेत्यादौ।—सर्पिः प्रक्षेप्यम्॥ ४॥

शीतवीर्य्यैरिति।—शीतवीर्य्या काकोल्यादिशारिवाद्युत्पलादिगणाः, तत्कृतैः स्नेहादिभिरभ्यङ्गादीन् कल्पयेत्। हिमजलैरिति—शीतलजलैः॥ ५॥

पुनर्नवाविश्वबिल्वदगुडूची-सम्याकपथ्यामरदारुकल्कम् ।
शोथे कफोत्थे महिषाक्षयुक्तं मूत्रं पिबेद्वा सलिलं तथैषाम् ॥६॥
कफे तु कृष्णासिकतापुराण-पिण्याकशिग्रुत्वगुमाप्रलेपः ।
कुलत्थशुण्ठीजलमूत्रसेकश्चण्डागुरुभ्यामनुलेपनञ्च ॥ ७ ॥
अजाजिपाठाघनपञ्चकोल-व्याघ्रीरजन्यः सुखतोयपीताः ।
शोथं त्रिदोषं चिरजं प्रवृद्धं निघ्नन्ति भूनिम्बमहौषधे च ॥ ८ ॥

पुनर्नवाष्टकः,—

पुनर्नवानिम्बपटोलशुण्ठी-तिक्ताऽमृतादार्व्वभयाकषायः ।
सर्वाङ्गशोथोदरकासशूल-श्वासान्वितं पाण्डुगदं निहन्ति ॥ ९ ॥

---

श्लैष्मिकशोथचिकित्सामाह, पुनर्नवेत्यादि।—पुनर्नवादीनां कल्कं गुग्गुलुयुक्तं गोमूत्रेण पिबेत्। पिबेद्वा सलिलं तथैषामिति।—एषां पुनर्नवादीनां क्वाथं वा गुग्गुलुगोमूत्रे प्रक्षिप्य पिबेदिति। महिषाक्षः,—गुग्गुलुः ॥ ६ ॥

कफे इत्यादौ।—सिकता—वालुका, पुराणपिण्याकः,—पुराणसर्षपखलिः, उमा—अतसी, एभिर्मूत्रपिष्टैर्लेपः। उक्तञ्च वाग्भटे—"कृष्णापुराणपिण्याक-शिग्रुत्वक्सिकतातसीः। प्रलेपोऽर्द्दने कुर्य्यात् सुखोष्णा मूत्रकल्किताः॥" इति। कुलत्थशुण्ठीक्वाथेन तथा गोमूत्रेण च कुलत्थशुण्ठीमिश्रेण सेकः कार्य्यः। उक्तं हि वाग्भटे—"स्नानं मूत्राम्भसि सिद्धे कुष्ठतर्कारिचित्रकैः। कुलत्थनागराभ्यां वा" इति। चण्डा—चोरपुष्पी। अनुलेपनं—स्नानानन्तरमेव लेपनमिति चक्रः ॥ ७ ॥

अजाजीत्यादि।—वाग्भटस्य। एषां चूर्णमुष्णोदकेन पेयम्; एवं भूनिम्बमहौषधयोरपि। यद्यपि चरकेऽस्मिन् योगे चविकास्थाने गजपिप्पली पठ्यते, तथापि अत्र चविकैव ग्राह्या, गजपिप्पलीशब्देन चविकाया अप्यभिधानात्; यदुक्तं निघण्टौ—"चविका कोलवल्ली च हस्तिपिप्पल्यपीष्यते" इति। अनूक्तपाठादावपि चविकैव पठ्यते, तस्मात् चव्येव युक्ता। एतेन—"पिप्पल्यादिगणो ग्राह्यः चरके पठ्यते त्वयम्। योगेऽत्र चविकास्थाने ग्राह्या मातङ्गपिप्पली॥" इति वृन्दोक्तमतमपास्तम्। ननु चरके त्रिदोषजशोथस्यासाध्यत्वेनोक्तत्वात् कथं त्रिदोषजं शोथं प्रत्युक्तम्?—नैवम्। चरके पक्षोन्माथस्येत्यादिना एकैकदोषस्य यथा नवस्य च सुखसाध्यत्वाभिधानेन त्रिदोषज त्रिदोषजशोथस्य चिरजस्य च कृच्छ्रसाध्यत्वमेवोक्तं, न पुनरसाध्यत्वमिति ॥ ८ ॥

क्षारादिगुडिका—

क्षारद्वयं स्याल्लवणानि चत्वार्ययोरजो व्योषफलत्रिके च ।
सपिप्पलीमूलविडङ्गसारं मुस्ताऽजमोदामरदारुबिल्वम् ॥
कलिङ्गकश्चित्रकमूलपाठे यष्ट्याह्वयं सातिविषं पलांशम् ।
सहिङ्गुकर्षं त्वणुशुष्कचूर्णं द्रोणं तथा मूलकशुण्ठकानाम् ॥
स्यात्क्षारभस्मसलिलेन साध्यमालोड्य यावद्घनमप्यदग्धम् ।
स्त्यानं ततः कोलसमाश्च मात्राम्
कृत्वा सुशुष्कां विधिना प्रयुञ्ज्यात् ॥
प्लीहोदरश्वित्रहलीमकार्शः-
पाण्ड्वामयारोचकशोथशोषान् ।
विसूचिकागुल्मगराश्मरीश्च
सश्वासकासान् प्रणुदेत् सकुष्ठान् ॥ २३ ॥
सौवर्चलं सैन्धवञ्च विडमौद्भिदमेव च ।
चतुर्लवणमत्र स्याज्जलमष्टगुणं भवेत् ॥ २४ ॥

पुनर्नवाद्यं घृतम्—

पुनर्नवाचित्रकदेवदारु-पञ्चोषणक्षारहरीतकीनाम् ।
कल्केन पक्वं दशमूलतोये घृतोत्तमं शोथनिसूदनञ्च ॥ २५ ॥

स्वल्पपुनर्नवाघृतम्—

पुनर्नवाक्वाथकल्क-सिद्धं शोथहरं घृतम् ॥ २६ ॥

---

क्षारेत्यादि ।—क्षारद्वय—यवक्षारसर्जिकाक्षारौ । लवणानि—चत्वारीति सामुद्रवर्जितानि । अयोरजः,—लौहचूर्णं, मारितपुटितं ग्राह्यम् । पलांशमिति—प्रत्येकम् । अणुशुष्कचूर्णमिति—शुष्कसूक्ष्मचूर्णमित्यर्थः । तत्सलिलेनेति—क्षारसलिलेन, क्षारद्वयादिचूर्णापेक्षया चतुर्गुणेन, अन्ये त्वष्टगुणमाहुः । अत्र मूलकभस्मद्रोणे षड्द्रोणं वा जलं दत्त्वा त्रिभागावशिष्टमर्द्धभागावशिष्टं वा कार्य्यं, ततः परिस्राव्यं, ततः क्षारद्वयादिचूर्णापेक्षया चतुर्गुणं क्षारजलं दत्त्वा पक्तव्यम् ; पाकाच्च घनीभावे जाते क्षारद्वयादिचूर्णप्रक्षेप इत्याहुः ॥ २३ । २४ ॥

पुनर्नवेत्यादौ ।—पञ्चोषण—पञ्चकोलम् ॥ २५ । २६ ॥

पञ्चकोलाद्यं घृतम्—

रसे विपाचयेत् सर्पिः पञ्चकोलकुलत्थयोः।
पुनर्नवायाः कल्केन घृतं शोथविनाशनम् ॥ २७ ॥

षट्पलघृतम्—

विश्वौषधस्य कल्केन दशमूलजले शृतम्।
घृतं निहन्याच्छ्वयथुं ग्रहणीं पाण्डुतामयम् ॥ २८ ॥

चित्रकाद्यं घृतम्—

सचित्रका धान्ययमानिपाठाः सदीप्यकत्र्यूषणवेतसाम्लाः।
बिल्वात् फलं दाडिमयावशूकं सपिप्पलीमूलमथापि चव्यम् ॥
पिष्ट्वाक्षमात्राणि जलाढकेन
पक्त्वा घृतप्रस्थमथोपयुञ्ज्यात्।
अर्शांसि गुल्मं श्वयथुञ्च कृच्छ्रं
निहन्ति वह्निञ्च करोति दीप्तम् ॥ २९ ॥

चित्रकघृतम्—

क्षीरं घटे चित्रककल्कलिप्ते दध्यागतं साधु विमथ्य तेन।
तज्जं घृतं चित्रकमूलकल्कं तक्रेण सिद्धं श्वयथुघ्नमग्र्यम्।
अर्शोऽतिसारानिलगुल्ममेहांस्तद्धन्ति संवर्द्धयते च वह्निम् ॥ ३० ॥

---

रस इत्यादि।—रस,—क्वाथ इत्यर्थः। पञ्चकोलकुलत्थयोरिति।—द्विवचन-निर्द्देशात् पञ्चकोलस्य मिलित्वा एको भागः, अपरश्च कुलत्थस्येति वदन्ति। पाण्डुता-मयमिति—पाण्डुरोगम् ॥ २७। २८ ॥

सचित्रकेत्यादौ।—दीप्यकं—औरकमिति निबन्धः, तन्न,—"यवानकं यवक्षारे यमानी पञ्चकोलकम्" इति वाग्भटवचनविरोधात्। तस्मात् दीप्यकम्—अजमोदा। वेतसाम्ल,—अम्लवेतस.। बिल्वात् फलमित्यत्र—बिल्वात् फलमिति [redacted] पाठः, वाग्भटे "बालबिल्वञ्च कर्षांशम्" इत्युक्तत्वात् ॥ २९ ॥

क्षीरमित्यादौ।—दध्यागतमिति—दधिभावेन परिणतम्। तेनेति।—यथोक्त-दधिमथनजातेन तक्रेणेत्यन्वय.। तज्जं घृतमिति—यथोक्तदधिमथ घृतमिति ॥ ३० ॥

माणकघृतम्—

माणककाथकल्काभ्यां घृतप्रस्थं विपाचयेत् ।
एकजं द्वन्द्वजं शोथं त्रिदोषञ्च व्यपोहति ॥ ३१ ॥

स्थलपद्मघृतम्—

स्थलपद्मपलान्यष्टौ त्र्यूषणस्य चतुःपलम् ।
घृतप्रस्थं पचेदेभिः क्षीरं दत्त्वा चतुर्गुणम् ।
पञ्च कासान् हरेच्छ्वासं शोथञ्चैव सुदुस्तरम् ॥ ३२ ॥

शैलेयाद्यं तैलम्—

शैलेयकुष्ठागुरुदारुकौन्ती-त्वक्पद्मकैलाम्बुपलाशमुस्तैः ।
प्रियङ्गुथौणेयकहेममांसी-तालीशपत्रप्लवपत्रधान्यैः ॥
श्रीवेष्टकध्यामकपिप्पलीभिः स्पृक्कानखैश्चापि यथोपलाभम् ।
वातान्वितेऽभ्यङ्गमुशन्ति तैलं सिद्धं सुपिष्टैरपि च प्रदेहम् ॥ ३३ ॥

शुष्कमूलाद्यं तैलम्—

शुष्कमूलकवर्षाभू-दारुरास्नामहौषधैः ।
पक्वमभ्यञ्जनात् तैलं सशूलं श्वयथुं जयेत् ॥ ३४ ॥

पुनर्नवावलेहः—

पुनर्नवाऽमृतादारु-दशमूलरसाढके ।
आर्द्रकस्वरसप्रस्थे गुडस्य तु तुलां पचेत् ॥

---

माणकघृते—माणककाथार्थमष्टगुणं जलं देयं, न तु मृदुत्वाच्चतुर्गुणम्; तथा सति यवागूवत् क्वाथः स्यादिति । अन्ये तु—तन्त्रान्तरदर्शनात् माणककन्दस्य पलशतं तोयद्रोणे पक्त्वा गृह्णन्ति । व्यवहारस्तु पूर्वेणैव । माणककन्दञ्च आर्द्रमेव गृह्णन्ति वृद्धाः ॥३१॥

स्थलपद्मघृते ।—स्थलपद्म—माषमूलमेव । त्र्यूषणस्य च मिलित्वा चतुःपलम् ॥ ३२ ॥

शैलेयेत्यादौ ।—कौन्ती—रेणुका, पलाशः—शटी, थौणेयकं ग्रन्थिपर्णम्; छान्दसत्वादत्र सकारलोपः । हेम—नागकेशरम्, प्लवः—कैवर्तमुस्तकं, श्रीवेष्टकः—नवनीतखोटी, ध्यामक—गन्धतृणम्, एषां कल्कः; जलं चतुर्गुणमर्थात् । यथोपलाभमिति—यथालाभम् । तैलं सिद्धं सुपिष्टैरिति ।—शैलेयादिभिः सुपिष्टैस्तैलं सिद्धमुशन्ति, तथा तैरेव सुपिष्टैः प्रदेहं शोथघ्नं कथयन्ति इच्छन्ति वा ॥ ३३ । ३४ ॥

पुनर्नवेत्यादौ ।—पुनर्नवादीनां दशमूलान्तानां मिलित्वा चतुःषष्टिपलानि,

तत् सिद्धं व्योषपत्रैला-त्वक्चव्यैः कार्षिकैः पृथक्।
चूर्णीकृतैः क्षिपेच्छीते मधुनः कुड़वं लिहेत्॥
लेहः पौनर्नवो नाम शोथशूलनिसूदनः।
श्वासकासारुचिहरो बलवर्णाग्निवर्द्धनः॥ २५॥

दशमूलहरीतकी—

दशमूलकषायस्य कंसे पथ्याशतं पचेत्।
तुलां गुड़ाद्घने दद्याद्व्योषक्षारं चतुःपलम्॥
त्रिसुगन्धं सुवर्णांशं प्रस्थार्द्धं मधुनो हिमे।
दशमूलहरीतक्यः शोथान् हन्युः सुदारुणान्॥
ज्वरारोचकगुल्मार्शो-मेहपाण्डूदरामयान्।
प्रत्येकमेव कर्षांशं त्रिसुगन्धमितो भवेत्॥
कंसहरीतकी चैषा चरके पठ्यतेऽन्यथा।
एतन्मानेन तुल्यत्वं तेन तत्रापि वर्ण्यते॥ २६॥

कंसहरीतकी—

द्विपञ्चमूलस्य पचेत् कषाये कंसेऽभयानाञ्च शतं गुड़ाच्च।
लेहे सुसिद्धे च विनीय चूर्णं व्योषं त्रिसौगन्ध्यमुपास्थिते च॥

---

जलस्य चतुःषष्टिशरावा, शेषस्तु आढकः। व्योषेत्यादौ।—चकारौ समुच्चये वा तृतीया। मधुनः कुड़वमष्टौ पलानि। शूलशोथनिसूदन इति पाठान्तरम्, आयुर्वेदसारे तु कफशोथविनाशन इत्युक्तः॥ २५॥

दशमूलेत्यादौ।—कंस इत्याढकः। अत्र कषायस्य कंसमानतानिर्देशेन अनुक्तमपि क्वाथजलयोर्मानमुन्नीयते, यतः क्वाथ कंसचतुःषष्टिपले क्वाथ्ये जलद्रोणदानाच्चतुर्भागावशेषे सति भवति। पथ्याशतमाकृतिमानात्। व्योषक्षारं चतुःपलमिति मिलित्वा, निर्देशस्य मानप्रधानत्वात्। त्रिसुगन्धन्तु प्रत्येकं सुवर्णांशं कर्षांशं, निर्देशस्य द्रव्यप्रधानत्वात्। प्रस्थार्द्धं मधुन इति—षोड़श पलानि। एतद्योगोक्तमानसंवादात् चरकोक्तकंसहरीतक्यामपि प्रत्येकद्रव्यकार्षं कल्पनीयमित्याह—प्रत्येकमित्यादि। इत इति—सुगन्धात्रयस्, चतेर्थः। चरके पठ्यतेऽन्यथेति।—एतेन पाठभेदः पर न तु योगभेदः इत्यर्थः। एतेन मानभेदादयोगभेद इति कृष्णोक्तमपास्तम्॥ २६॥

चरके पठ्यतेऽन्यथेत्युक्तम्, अतस्तमेव पाठभेदं दर्शयितु चरकोक्तकंसहरीतकीमाह द्विपञ्चमूलस्येत्यादि।—शेषात् शतमिति—चतुर्पलं प्राप्नोति शोथम्। व्योष-

प्रस्थार्द्धमात्रं मधुनः सुशीते किञ्चिच्च चूर्णादपि यावशूकात्।
एकाभयां प्राश्य ततश्च लेहाच्छुक्तिं निहन्ति श्वयथुं प्रवृद्धम्॥
कासज्वरारोचकमेहगुल्मान् प्लीहत्रिदोषोदरपाण्डुरोगान्।
कार्श्यामवातावसृगम्लपित्तं वैवर्ण्यमूत्रानिलशुक्रदोषान्॥
अत्र व्याख्यान्तरं नोक्तं व्याख्या पूर्वैव यच्छुभा॥ १७॥
लेपोऽक्ष्करशोथं निहन्ति तिलदुग्धमधुकनवनीतैः।
तत्तत्तन्मज्जिवा शाल्मलदलैरत्यचिरेण॥
शोथे विषनिमित्ते तु विषोक्ता सम्मता क्रिया॥ १८॥
ग्राम्याब्जानूपं पिशित-लवणं शुष्कशाकं नवान्नम्
गौड़ं पिष्टान्नं दधि सकृशरं निर्जलं मद्यमम्लम्।
धाना वल्लूरं समशनमथो गुर्वसात्म्यं विदाहि
स्वप्नं चारात्रौ श्वयथुगदवान् वर्जयेन्मैथुनञ्च॥ १९॥

इति शोथ-चिकित्सा।

---

त्रिवृतमधीर्थमत्र मानं नोक्तं, तथापि पूर्वोक्तदशमूलहरीतक्यादानुसारेणात्रापि ज्ञातव्यम्; एवं यवक्षारस्यापि। किञ्चिदल्पोऽत्राप्यनुवचन.; तेन चोष-चारणीर्मिलिता चतुःपलकेऽपि चोषमात्रापेक्षया यवक्षारस्य किञ्चिन्न्यूनता ज्ञेयेत्यर्थः। यदुक्तम्—"किञ्चिच्च कर्षपादांशः प्रतिरूपपदे मतः। सान्निध्याद्युक्तमानं चोषादेर्मिलितस्य च॥" इति॥ १०॥

लेप इत्यादि।—शोथघ्नम्॥ १८॥

ग्राम्येत्यादौ।—पिशितञ्च लवणञ्चेति समाहारः, तस्य विशेषणं ग्राम्याब्जानूपमिति। तत्र छागादिमांसं ग्राम्यं, लवणञ्च यत् पांशुनाभिनिर्वृत्तं तत् ग्राम्यम्। अब्जं—कच्छपादिमांसम्, लवणञ्च सामुद्रं करकचेति ख्यातं तदब्जम्। आनूपं—शूकरादिमांसम्, लवणञ्च समुद्रतीरजं साम्भरीति ख्यातं, तदप्यानूपम्। गौड़ं—गुडविकारम्। धाना—भ्रष्टयवाः। वल्लूरं—शुष्कमांसम्। समशनं—पथ्यापथ्यसंकरं भोजनम्। अरात्राविति—दिने॥ १९॥

इति शोथाधिकार-विवृतिः।

# अथ वृद्धि-ब्रध्न-चिकित्सा।

गुग्गुलुं रुबुतैलं वा गोमूत्रेण पिबेन्नरः।
वातवृद्धिं निहन्त्याशु चिरकालानुबन्धिनीम्॥ १॥
सक्षीरं वा पिबेत् तैलं मासमेरण्डसम्भवम्।
पुनर्नवायास्तैलं वा तैलं नारायणं तथा।
पाने बस्तौ रुबोस्तैलं पेयं वा दशकाम्भसा॥ २॥
चन्दनं मधुकं पद्ममुशीरं नीलमुत्पलम्।
क्षीरपिष्टैः प्रदेहः स्याद्दाहशोथरुजापहः॥ ३॥
पञ्चवल्कलकल्केन सघृतेन प्रलेपनम्।
सर्वं पित्तहरं कार्यं, रक्तजे रक्तमोक्षणम्॥ ४॥ ५॥
श्लेष्मवृद्धिन्तूष्णवीर्य्यैर्मूत्रपिष्टैः प्रलेपयेत्।
पीतदारुकषायञ्च पिबेद्वा मूत्रसंयुतम्॥ ६॥

---

पूर्वोक्तप्रसङ्गेन श्लीपदानन्तरं वृद्धिब्रध्नचिकित्सितमुच्यते। वृद्धि,—कुरण्ड। गुग्गुलुमित्यादि। गोमूत्रपलद्वये एरण्डतैलपिष्टगुग्गुलुमाषकाष्टकं प्रक्षिप्य पेयम्। तथा गोमूत्रपलद्वये एरण्डतैलकर्षमेकं प्रक्षिप्य पिबेत्। इमौ योगौ क्रमात् कफानुबन्धे वाते च योज्याविस्याहुः॥ १॥

सक्षीरमित्यादि।—सुश्रुतः।—गव्यदुग्ध पल ८, एरण्डतैल कर्ष १; अयं योग पित्तानुबन्धे इत्याहुः। पुनर्नवातैलम् पुनर्नवाक्वाथकल्काभ्यां साध्यमित्याहुः। पाने बस्ताविति।—पूर्वेण सह सम्बध्यते। रुबोस्तैलम्—एरण्डतैलम्। दशक—दशमूलम्, अम्भसा क्वाथेन पेयमिति॥ २॥

पैत्तिकवृद्धिमधिकृत्याह चन्दनमित्यादि।—पद्म—पद्मकेशरम्। रक्तजे रक्तमोक्षणमिति।—अपक्वायां रक्तजवृद्धौ जलौकाभिः रक्तमोक्षणं कार्यं, सुश्रुतवचनात्। उष्णवीर्यैरिति—पञ्चकोलादिभिः सुश्रुतोक्तैः। पीतदारु—देवदारु, दीप्यकैश्चैव देवदारुक्वाथ मात्रं इत्याहुः। स्वकृतात् प्रलेपनिरुक्तम्। वाग्भटे तु—"गोमूत्रेण पिबेत् कल्कं वृद्धिषु पीतदारुजम्" इत्युक्तम्॥ ३—६॥

स्निग्धं मेदःसमुत्थन्तु लेपयेत् सुरसादिना ।
शिरोविरेकद्रव्यैर्वा सुखोष्णैर्मूत्रसंयुतैः ॥ ७ ॥
संस्वेद्य मूत्रप्रभवां वस्त्रपट्टेन वेष्टयेत् ।
सेवन्याः पार्श्वतोऽधस्ताद्विध्येद् व्रीहिमुखेन वै ॥ ८ ॥
शङ्खोपरि च कर्णान्ते त्यक्त्वा सेवनिमादरात् ।
व्यत्यासाद्वा शिरां विध्येदन्त्रवृद्धिनिवृत्तये ॥ ९ ॥
अङ्गुष्ठमध्ये त्वक् छित्त्वा दहेदङ्गविपर्य्यये ॥ १० ॥
रास्नायष्ट्यमृतैरण्ड-बलागोक्षुरसाधितः ।
क्वाथोऽन्त्रवृद्धिं हन्त्याशु रुबुतैलेन मिश्रितः ॥ ११ ॥

---

स्निग्धमित्यादि ।—सुश्रुतस्य । क्षीमधर्पिष्टादिना मृदु स्निग्धम् । चरके—"हृदयं वृषणौ दृष्टी स्वेदयेन्मृदु वा न वा" इत्युक्तत्वात् । सुरसादिना—सुरसादिगणेन । शिरोविरेचनद्रव्यैः,—पिप्पलीमरिचविडङ्गापामार्गादिभिः संशोधनसंशमनीयोक्तैः । मूत्रसंयुतैरिति ।—मूत्रपिष्टैर्लेपयेदिति पूर्वेणान्वयः ॥ ७ ॥

मूत्रजवृद्धिचिकित्सामाह, संस्वेद्येत्यादि ।—सुश्रुतस्य ।—मूत्रप्रभवामिति—मूत्रवेगसंरोधजन्मा संस्वेदनं कर्त्तव्यं प्रलम्बनवेदनानिवारणार्थं त्वगादिमृदुकरणार्थञ्च, वस्त्रपट्टेन घटिकाक्रान्तिवच्चैव वेष्टनं कर्त्तव्यम् । प्रलम्बमानः सौकर्य्यार्थं व्रीहिमुखेन शस्त्रविशेषेण वेध्यः । व्यधश्च मूत्रस्रावणार्थम् । एतदनन्तरं यदाह सुश्रुतः,—"ततोऽस्य द्विमुखीं नाडीं दत्त्वा विस्रावयेद्भिषक् । मूत्रं नाडीमथोद्धृत्य स्थगिकाबन्धमाचरेत् ॥" इति ॥ ८ ॥

अन्त्रजफलकोषाश्रयवृद्धिचिकित्सामाह, शङ्खेत्यादि ।—सुश्रुतस्य ।—त्यक्त्वा सेवनिमिति ।—कोषान्तःसेवनीं मर्मत्वात् परित्यज्य, अत एवोक्तं वाग्भटे—"षट् कूर्चाः सप्त सेवन्यो मेढ्रजिह्वाशिरोगताः । शस्त्रेण ताः परिहरेत्" इति । व्यत्यासादिति—वामकोषवृद्धौ दक्षिणे, दक्षिणकोषवृद्धौ तु वामे ; यदि तु पुनरुभयतो वृद्धिस्तदोभयभागे व्यधः ; वाशब्दो विध्यन्तरापेक्षया ॥ ९ ॥

अङ्गुष्ठेत्यादि ।—सुश्रुतस्य ।—हस्तस्य हस्ताङ्गुष्ठमध्ये त्वगग्रं छित्त्वा दहेत्, न स्नायुकण्डरावत् स्नायुमपि । त्वक्शब्दस्य नपुंसकलिङ्गता समाधेया, छान्दसत्वात् । अङ्गविपर्य्यय इति ।—विपर्य्ययार्थः पूर्ववदिति ॥ १० । ११ ॥

तैलमेरण्डजं पीत्वा बलासिद्ध-पयोऽन्वितम्।
आध्मानशूलोपचितामन्त्रवृद्धिं जयेन्नरः ॥ १२ ॥
हरीतकीं मूत्रसिद्धां सतैलां लवणान्विताम्।
प्रातः प्रातश्च सेवेत कफवातामयापहाम् ॥ १३ ॥
गोमूत्रसिद्धां रुबुतैलभृष्टां हरीतकीं सैन्धवचूर्णयुक्ताम्।
खादेन्नरः कोष्णजलानुपानां निहन्ति वृद्धिं चिरजां प्रवृद्धाम् ॥ १४ ॥
त्रिफलाक्वाथगोमूत्रं पिबेत् प्रातरतन्द्रितः।
कफवातोद्भवं हन्ति श्वयथुं वृषणोत्थितम् ॥ १५ ॥
सरलागुरुकुष्ठानि देवदारुमहौषधम्।
मूत्रारनालसम्पिष्टं शोथघ्नं कफवातनुत् ॥ १६ ॥
भृष्टो रुबुकतैलेन कल्कः पथ्यासमुद्भवः।
कृष्णासैन्धवसंयुक्तो वृद्धिरोगहरः परः ॥ १७ ॥
गव्यं घृतं सैन्धवसम्प्रयुक्तं शम्बूकभाण्डे निहितं प्रयत्नात्।
सप्ताहमादित्यकरैर्विपक्वं हन्यात् कुरण्डं चिरजं प्रवृद्धम् ॥
ऐन्द्रीमूलभवं चूर्णं रुबुतैलेन मर्दितम्।
क्षीरेणाक्षोपयसा पीतं सर्ववृद्धिनिवारणम् ॥ १८ ॥

---

बलासिद्धपयोऽन्वितमिति।—इदं क्षीरसाधनपरिभाषया बलामूलसाधिते क्षीरे एरण्डतैलं प्रक्षिप्य पेयमित्यर्थः ॥ १२ ॥

हरीतकीमित्यादौ।—तैलमेरण्डतैलमित्याहुः। अस्य योगस्य विरेचनत्वान्मूत्रेणैव पानमिच्छन्ति ; अन्ये तु—उष्णोदकेन पानमित्याहुः ॥ १३ ॥

गोमूत्रेत्यादौ।—पूर्वयोगापेक्षया, भृष्टामिति विशेषः। कोष्णजलानुपानमिति।—पाठपक्षे क्रियाविशेषणम् ॥ १४ ॥

त्रिफलेत्यादौ।—गोमूत्र प्रक्षेप्यम् ॥ १५ ॥

सरलेत्यादौ।—सरल—सरलकाष्ठ, लेपोऽयं योगः ॥ १६ ॥

भृष्ट इत्यादियोगो भक्षणविधया ॥ १७ ॥

गव्यमित्यादि।—शम्बूकभाण्ड इति।—शम्बूककपभाण्डे ; शम्बूकभाण्डश्च सुधाकृताद्यं, न तु पुराणमित्याहुः। घृतात् पादिकञ्च सैन्धवमिति च वदन्ति। लेपविधया योज्यमेतत्। ऐन्द्री—गोरक्षकर्कटी ॥ १८ ॥

रुद्रजटामूललिप्ता करटव्यङ्गचर्मणा ।
बद्धा वृद्धिः शमं याति चिरजापि न संशयः ॥ १९ ॥
निष्पिष्टमारनालेन रूपिकामूलवल्कलम् ।
लेपो वृद्धामयं हन्ति बद्धमूलमपि दृढम् ॥ २० ॥
वचासर्षपकल्केन प्रलेपो वृद्धिनाशनः ॥ २१ ॥
लज्जागृध्रमलाभ्याञ्च लेपो वृद्धिहरः परः ॥ २२ ॥
मूलं विल्वकपित्थयोररलुकस्याग्नेर्बृहत्योर्द्वयोः
श्यामापूतिकरञ्जशिग्रुकतरोर्बिम्बीविषारुष्करम् ।
कृष्णाग्रन्थिकचव्यपञ्चलवणक्षाराजमोदान्वितम्
पीतं काञ्जिककोष्णतोयमथितं चूर्णीकृतं ब्रध्नजित् ॥ २३ ॥
प्रवीचीरेण गोधूम-कल्कं कुन्दुरुकस्य वा ।
प्रलेपनं सुखोष्णं स्याद् ब्रध्नशूलहरं परम् ॥ २४ ॥

---

रुद्रजटेत्यादि ।—रुद्रजटा—रुद्रजटा इति ख्याता । आदौ रुद्रजटामूलकल्केन लिप्ता तदनु करटको कटा इति ख्याता नकुलाकारा प्रायशो वृक्षोपरि तिष्ठति, तस्या भङ्गचर्मणा कोठकचर्मणा बद्धा वृद्धिरित्यर्थः । रूपिका—अर्कपर्णः ॥ १९—२१ ॥

लज्जेत्यादि ।—लज्जा—वराहक्रान्ता, गृध्रपक्षिणो मलं विट् ॥ २२ ॥

सम्प्रति ब्रध्नचिकित्सामाह ।—ब्रध्नलक्षणञ्च यद्यपि वृद्धिनिदाने नास्ति, तथापि तन्त्रान्तरमनुसर्त्तव्यम्; यथा,—"अत्यभिष्यन्दि-गुर्वन्न सेवनान्निचयं गतः । करोति ग्रन्थि-वच्छोथं दोषो वङ्क्षणसन्धिषु ॥ ज्वरशूलाङ्गदाहाढ्यं तं ब्रध्नमिति निर्दिशेत् ॥" इति । ब्रध्नस्तु लोके वाघीति भाँकुरीति वा नाम्ना ख्यात. । मूलमित्यादि ।—वाग्भटस्य । मूलमिति प्रत्येकैः सर्वैर्योज्यम् । अरलुक.—श्योनाकः, विष.—विषक, श्यामा—वृद्धदारकः, पूतिकरञ्ज.—नाटाकरञ्जः, काञ्जिककोष्णतोयमथितानामन्यतमेन पानं प्रकृत्याद्यपेक्षया ज्ञेयम् ॥ २३ ॥

प्रवीचीरेत्यादि ।—वाग्भटस्य ।—प्रवीचीरेण गोधूमकुन्दुरुकयो पिष्टा लेप. कार्य., एक एवायं योगः । वाशब्द. पूर्वयोगापेक्षया । अत एव वाग्भटे वाशब्द स्थाने चकार. पठ्यते । अपरे तु—योगद्वयमाहु. । कुन्दुरु—स्वनामख्यातम् ॥ २४ ॥

मृतमात्रे तु वै काके विशस्ते सम्प्रवेशयेत् ।
व्रध्नं मुहूर्त्तं मेधावी तत्क्षणादरुजं भवेत् ॥ २५ ॥
अजाजी हवुषा कुष्ठं गोधूमं बदराणि च ।
काञ्जिकेन समं पिष्ट्वा कुर्य्याद्व्रध्नप्रलेपनम् ॥ २६ ॥

बृहत्सैन्धवाद्यं तैलम्—

सैन्धवं मदनं कुष्ठं शताह्वां निचुलं वचाम् ।
ह्रीबेरं मधुकं भार्गीं देवदारु सनागरम् ॥
कट्फलं पौष्करं मेदां चविकां चित्रकं शटीम् ।
विडङ्गातिविषे श्यामां रेणुकां नीलिनीं स्थिराम् ॥
बिल्वाजमोदे कृष्णाश्च दन्तीरास्ने प्रपिष्य च ।
साध्यमेरण्डजं तैलं तैलं वा कफवातनुत् ॥
अष्ठीलोदावर्त्तगुल्मार्शः-प्लीहमेहाढ्यमारुतान् ।
यानाङ्गमश्मरीश्चैव हन्यात् तदनुवासनात् ॥ २७ ॥

शतपुष्पाद्यं घृतम्—

शतपुष्पाऽमृता दारु चन्दनं रजनीद्वयम् ।
जीरके द्वे वचानाग-त्रिफलागुग्गुलुत्वचः ॥
मांसी कुष्ठं पत्रकैला-रास्नाम्लग्रो: सचित्रकाः ।
कृमिघ्नमश्वगन्धाश्च शैलेयं कटुरोहिणीम् ॥
सैन्धवं तगरं पिष्ट्वा कुटजातिविषे समे । रविधिना
एतैश्च कार्षिकैः कल्कैर्घृतप्रस्थं विपाचयेत् ॥ त्वादे,
सुपमुण्डितिकैरण्ड-निम्बपत्रभवं रसम् ।
कण्टकार्य्यास्तथा चीरं प्रस्थं प्रस्थं विनिक्षिपेत् ॥

---

मृतमात्र इत्यपि वाग्भटस्य । मृतमात्र इति—सद्योमारिते । विशस्त इति पाटिते । काकस्य क्रोडं पाटयित्वा तत्र कोष्ठे व्रध्नं प्रवेशनीयं, ततो बन्धः कार्यः ॥ २५ । २६ ॥

बृहत् सैन्धवाद्यतैले ।—निचुल,—वेतसः, श्यामा—त्रिवृतेति वैद्यमतारक सवादात् । नीलिनी—नीलवृक्षा । चतुर्गुणजलेन पाकः । तैलं वेति—तिलतैलं वा ॥ २७ ॥

रुद्रजटामूललिप्ता करटव्यङ्गचर्मणा।
बद्धा हृद्धिः शमं याति चिरजापि न संशयः॥ १८॥
निष्पिष्टमारनालेन रूपिकामूलवल्कलम्।
लेपो हृद्धामयं हन्ति बद्धमूलमपि दृढम्॥ २०॥
वचासर्षपकल्केन प्रलेपो हृद्धिनाशनः॥ २१॥
लज्जाश्वमलाभ्याञ्च लेपो हृद्धिहरः परः॥ २२॥
मूलं बिल्वकपित्थयोररलुकस्याग्नेर्बृहत्योर्द्वयोः
श्यामापूतिकरञ्जशिग्रुकतरोर्बिम्बीपधारुष्करम्।
कृष्णाग्रन्थिकचव्यपञ्चलवणक्षाराजमोदान्वितम्
पीतं काञ्जिककोष्णतोयमथितं चूर्णीकृतं ब्रध्नजित्॥ २३॥
यवीचीरेण गोधूम-कल्कं कुन्दुरुकस्य वा।
प्रलेपनं सुखोष्णं स्याद् ब्रध्नशूलहरं परम्॥ २४॥

---

रुद्रजटेत्यादि।—रुद्रजटा—रुद्रजटा इति ख्याता। आदौ रुद्रजटामूलकल्केन लिप्ता तदनु करटस्य जटा इति ख्याता नकुलाकारा प्रायशो वृक्षोपरि तिष्ठति, तस्याः चर्मणा कीटचर्मणा बद्धा हृद्धिरित्यर्थः। रूपिका—अर्कपर्णः॥ १८—२१॥

लज्जेत्यादि।—लज्जा—वराहक्रान्ता, शशपत्रिका मलं विट्॥ २२॥

सम्प्रति ब्रध्नचिकित्सामाह।—ब्रध्नलक्षणस्य यद्यपि वृद्धिनिदाने नास्ति, तथापि तन्त्रान्तरमनुसर्तव्यम्; यथा,—"यस्याभिष्यन्दि-गुर्वन्न सेवनाद्विषयं सतः। करोति ग्रन्थि-वत् शोथं दोषो वङ्क्षणसन्धिषु॥ ज्वरशूलाङ्गदाहाढ्यं तं ब्रध्नमिति निर्दिशेत्॥" इति। ब्रध्नस्तु लोके वाघीति भांड़ुसोति वा भाषा ख्यात। मूलमित्यादि।—वाग्भटस्य। मूलमिति यथायोग्यं सर्वत्रान्वयम्। अरलुक.,—श्योनाक., अग्नि.,—चित्रक., श्यामा—वृद्धदारक., पूतिकरञ्ज.,—नाटाकरञ्ज., काञ्जिककोष्णतोयमथिताद्यन्यतमेन पानं प्रकृत्याद्यपेक्षया ज्ञेयम्॥ २३॥

यवीचीरेत्यादि।—वाग्भटस्य।—यवीचीरेण गोधूमकुन्दुरुकौ पिष्टा लेप. कार्य., एक पदार्थ योग.। वाग्भटः पूर्वयोगापेक्षया। अत एव वाग्भटे वाकल्क-स्थाने चकार. पठ्यते। अपरे तु—योगद्वयमाहु.। कुन्दुरु—[illegible]॥ २४॥

मृतमात्रे तु वै काके विशस्ते सम्प्रवेशयेत् ।
अर्धं मुहूर्त्तं मेधावी तत्क्षणादरुजं भवेत् ॥ २५ ॥
अजाजी हवुषा कुष्ठं गोधूमं बदराणि च ।
काञ्जिकेन समं पिष्ट्वा कुर्य्याद्व्रणप्रलेपनम् ॥ २६ ॥

बृहत्सैन्धवाद्यं तैलम्—

सैन्धवं मदनं कुष्ठं शताह्वां निचुलं वचाम् ।
ह्रीवेरं मधुकं भार्गीं देवदारु सनागरम् ॥
कट्फलं पौष्करं मेदां चविकां चित्रकं शटीम् ।
विडङ्गातिविषे श्यामां रेणुकां नीलिनीं स्थिराम् ॥
बिल्वाजमोदे कृष्णाञ्च दन्तीरास्ने प्रपिष्य च ।
साध्यमैरण्डजं तैलं तैलं वा कफवातनुत् ॥
अभीदावर्त्तगुल्मार्शः-प्लीहमेहाढ्यमारुतान् ।
पानाद्भमश्मरीञ्चैव हन्यात् तदनुवासनात् ॥ २७ ॥

शतपुष्पाद्यं घृतम्—

शतपुष्पाऽमृता दारु चन्दनं रजनीद्वयम् ।
जीरके द्वे वचानाग-त्रिफलागुग्गुलुत्वचः ॥
मांसीं कुष्ठं पत्रकैला-रास्नाशृङ्गीः सचित्रकाः ।
क्रिमिघ्नमश्वगन्धञ्च शैलेयं कटुरोहिणीम् ॥
सैन्धवं तगरं पिष्ट्वा कुटजातिविषे समे ।
एतैश्च कार्षिकैः कल्कैर्घृतप्रस्थं विपाचयेत् ॥
इयमुण्डितिकैरण्ड-निम्बपत्रभवं रसम् ।
कण्टकार्य्यास्तथा क्षीरं प्रस्थं प्रस्थं विनिक्षिपेत् ॥

---

मृतमात्र इत्यपि वाग्भटस्य । मृतमात्र इति—सद्योमारिते । विशस्त इति पाटिते । काकस्य क्रोडं पाटयित्वा तत्र कोष्ठे अर्धं प्रवेशनीयं, ततो बन्धः कार्य्यः ॥ २५ । २६ ॥

बृहत् सैन्धवाद्यतैले ।—निचुल',—वेतस', श्यामा—त्रिवृतेति वैद्यप्रसारक संवादात् । नीलिनी – नीलवृक्षः । चतुर्गुणजलेन पाकः । तैलं वेति—तिलतैलं वा ॥ २७ ॥

सिद्धमेतद्घृतं पीतमन्त्रवृद्धिमपोहति ।
वातवृद्धिं पित्तवृद्धिं मेदोवृद्धिञ्च दारुणाम् ॥
मूत्रवृद्धिं श्लीपदं वा यकृत् प्लीहानमेव च ।
शतपुष्पाघृतं रोगान् हन्यादेव न संशयः ॥ २८ ॥
घृतं सौरेश्वरं योज्यं ब्रध्न-वृद्धिनिवृत्तये ॥ २९ ॥

इति वृद्धि ब्रध्न-चिकित्सा ॥

---

## अथ गलगण्डगण्डमालापचीग्रन्थ्यर्बुदचिकित्सा ।

यवमुद्गपटोलानि कटुरूक्षञ्च भोजनम् ।
छर्दिं सरक्तमुक्तिञ्च गलगण्डे प्रयोजयेत् ॥ १ ॥
तण्डुलोदकपिष्टेन मूलेन परिलेपितः ।
हस्तिकर्णपलाशस्य गलगण्डः प्रशाम्यति ॥ २ ॥
सर्षपान् शिग्रुबीजानि शणबीजातसीयवान् ।
मूलकस्य च बीजानि तक्रेणाम्लेन पेषयेत् ॥
गण्डानि ग्रन्थयश्चापि गलगण्डाः सुदारुणाः ।
प्रलेपात् तेन शाम्यन्ति विलयं यान्ति चाचिरात् ॥ ३ ॥
जीर्णकर्कारुकरसो विड्सैन्धवसंयुतः ।
नस्येन हन्ति तरुणं गलगण्डं न संशयः ॥ ४ ॥

---

सौरेश्वरघृतं वक्ष्यमाणम् ॥ २८ । २९ ॥

इति वृद्धि-ब्रध्न-चिकित्सा विवृतिः ।

---

चक्रदत्तोऽत्रैव गलगण्डादयोऽभिधीयन्ते । तण्डुलोदकेत्यादि ।— हस्तिकर्णपलाशस्य मूलेनेत्यन्वयः । सर्वेऽपि गलगण्डाः वातकफमेदोभिरारभ्यन्ते, न तु पित्तेन ; व्याधिस्वभावात् ; अतो गलगण्डोक्तलेपाः कोष्णा एव देया इत्याहुः । जीर्णकर्कारु,—परिपक्वतिक्तालाबुः ; अन्ये तु—कुष्माण्डभेद इत्याहुः ; व्यवहारस्तु पूर्वेणैव ।

जलकुम्भीकजं भस्म पक्वं गोमूत्रगालितम्।
पिबेत् कोद्रवभक्ताशी गलगण्डप्रशान्तये ॥ ५ ॥
सूर्य्यावर्त्त-रसोनाभ्यां गलगण्डोपनाहने।
स्फोटास्रावैः शमं याति गलगण्डो न संशयः ॥ ६ ॥
तिक्ताऽलाबुफले पक्वे सप्ताहमुषितं जलम्।
मद्यं वा गलगण्डघ्नं पानात् पथ्यानुसेविनः ॥ ७ ॥
कट्फलचूर्णोत्तर्गलघर्षो गलगण्डमपहरति।
घृतमिश्रं पीतमिव श्वेतगिरिकर्णिकामूलम् ॥ ८ ॥
महिषीमूत्रविमिश्रं लौहमलं संस्थितं घटे मासम्।
अन्तर्धूमविदग्धं लिह्यान्मधुनाऽथ गलगण्डे ॥ ९ ॥
जिह्वायाः पार्श्वतोऽधस्ताच्छिरा द्वादश कीर्त्तिताः।
तासां स्थूलशिरे कृष्णे छिन्द्याद् द्वे च शनैः शनैः ॥
वडिशेनैव संगृह्य कुशपत्रेण बुद्धिमान्।
स्रुते रक्ते व्रणे तस्मिन्दद्यात् सगुडमार्द्रकम्।
भोजनञ्चानभिष्यन्दि यूषः कौलत्थ इष्यते ॥ १० ॥
कर्णयुग्मवहिःसन्धि-मध्याभ्यासे स्थितञ्च यत्।
उपर्य्युपरि तच्छिन्द्याद् गलगण्डे शिरात्रयम् ॥ ११ ॥

---

तद्वणमिति—चविरजातम्। जलकुम्भी—पाना, तस्या भस्म पानीयक्षारविधिना गोमूत्रेण विपाच्य परिस्राव्य च पिबेत्। उपनाहनम्—उपनाहरूपप्रलेपः। स्फोटास्रावै, —उपनाहकृतैः। पीतेति।—श्वेतगिरिकर्णिका—श्वेतापराजिता ॥ १—८ ॥

महिषीत्यादी।—पुराणलौहमलं महिषीमूत्रे मासं स्थापयित्वा अन्तर्धूमं दग्ध्वा मधुना लिह्यादित्यर्थः ॥ ९ ॥

जिह्वाया इत्यादी।—कृष्णे स्थूलशिरे वडिशेन शनैः शनैः संगृह्य कुशपत्रेण शस्त्रविशेषेण छिन्द्यादित्यन्वयः। तस्मिन् व्रणे स्रुतरक्ते सति सगुडमार्द्रकमथवा भक्षयेत्। अन्ये तु—दद्यादिति पठन्ति, तन्मते—भक्षणार्थमिति शेषः। कर्णयुग्मवहिः सन्धिमध्याभ्यास इति।—कर्णयोः पृष्ठसमीपे उपर्य्युपरिस्थितमित्यन्वयः ॥ १०। ११ ॥

तुम्बीतैलम्—

विडङ्गक्षारसिन्धूग्रा-रास्नाऽग्निव्योषदारुभिः ।
कटुतुम्बीफलरसे कटुतैलं विपाचितम् ॥
चिरोत्थमपि नस्येन गलगण्डं विनाशयेत् ॥ १२ ॥

अमृताद्यं तैलम्—

तैलं पिबेच्चामृतवल्लिनिम्ब-हंसाह्वयावृक्षकपिप्पलीभिः ।
सिद्धं बलाभ्याञ्च सदेवदारु हिताय नित्यं गलगण्डरोगी ॥१३॥
माचिकाख्यः सकृत् पीतः क्वाथो वरुणमूलजः ।
गण्डमालां हरत्याशु चिरकालानुबन्धिनीम् ॥
पिष्टा ज्येष्ठाम्बुना पेयाः काञ्चनालत्वचः शुभाः ।
विश्वभेषजसंयुक्ता गण्डमालाहराः पराः ॥
आरग्वधशिफां छिन्नं पिष्टा तण्डुलवारिणा ।
सम्यङ्नस्यप्रलेपाभ्यां गण्डमालां समुद्धरेत् ॥
गण्डमालामयार्त्तानां नस्यकर्मणि योजयेत् ।
निर्गुण्ड्याश्च शिफां सम्यग्वारिणा परिपेषिताम् ॥ १४ ॥

---

तुम्बीतैले।—उग्रा—वचा। कटुतुम्बीफलरस इति।—परिपक्वतिक्ततुम्बीफलस्य चतुर्गुणस्वरस इत्यर्थः। उक्तं हि वाग्भटे—"कटायासितिक्ततुम्ब्याश्च रसे तैलाच्चतुर्गुणे" इति ॥ १२ ॥

तैलमित्यादि।—सुश्रुतस्य।—अमृतवल्ली—गुडूची, हंसाह्वा—हंसपादी, वृक्षकः,—कुटजः; यदाह वाग्भटः,—"गुडूचीनिम्बकुटज-हंसपादीबलाद्वयैः। साधितं पाययेत् तैलं सकृष्णादेवदारुभिः॥" इति। अन्ये तु—हंसाह्वयेति पठित्वा रक्तश्वेतपुष्पभेदेन कालाकहाय व्याख्यानयन्ति। अमृतवल्ल्यादिभिः क्वाथकल्कद्रव्यैरिति चन्द्रिका। अन्ये तु—एभिः सर्वैः कल्कः, जलं चतुर्गुणमित्याहुः॥ १३॥

अतः परं गण्डमालाचिकित्सामाह,—माचिकाख्य इत्यादि।—सकृदिति—एकवारं पीतः, स्तुतिवादोऽयम्। ज्येष्ठाम्बु—तण्डुलोदकम्। काञ्चनालः,—काञ्चनः। आरग्वधस्य शिफा—मूलम्॥ १४॥

कोशातकीनां स्वरसेन नस्यं तुम्ब्यास्तु वा पिप्पलिसंयुतेन।
तैलेन वारिष्टभवेन कुर्य्यादवीपकुल्ये सह माक्षिकेण ॥ १५ ॥

ऐन्द्रया वा गिरिकर्ण्या वा मूलं गोमूत्रयोगत:।
गण्डमालां हरेत् पीतं चिरकालोत्थितामपि ॥ १६ ॥

अलम्बुषादलोद्भूतां स्वरसाद् द्वे पले पिवेत्।
अपच्या गण्डमालाया: कामलायाश्च नाशन: ॥ १७ ॥

गलगण्डगण्डमाला: कुरण्डांश्च विनाशयेत्।
पिष्टं ज्येष्ठाम्बुना लेपान्मूलं ब्राह्मणयष्टिजम् ॥ १८ ॥

कुकुन्दरीतैलम्—

अभ्यङ्गान्नाशयेन्नृणां गण्डमालां सुदारुणाम्।
कुकुन्दर्य्या विपक्वन्तु अयात् तैलवरं ध्रुवम् ॥ १९ ॥

आखोटकविम्बाद्ये तैले—

गण्डमालापहं तैलं सिद्धं आखोटकत्वचा।
विम्बश्वमारनिर्गुण्डी-साधितञ्चापि नावनम् ॥ २० ॥

---

कोशातकीनामित्यादि—चत्वारो योगा:। पिप्पलीसंयुतेन—इति पदं कोशातकीनां स्वरसेनेत्यनेनापि सम्बध्यते। कोशातकी—घोषक:, तस्या: फलस्य स्वरस:; एव तिक्ततुम्ब्या अपि। वारिष्टभवेन निम्बफलजेन तैलेन तृतीयो योग:। अरिष्टभवेनेति पाठान्तरे—अरिष्टफलजेनेत्यर्थ:। अवीपकुल्ये इति।—अवीपकुल्ये पिप्पा मधुना सह विधेयमित्यर्थ: ॥ १५ ॥

एन्द्री—गौरक्षकर्कटी, गिरिकर्णी—श्वेतापराजिता, अलम्बुषा—मुण्डितिका, अलम्बुषी वा ॥ १६—१८ ॥

अभ्यङ्गादित्यादौ।—कुकुन्दरी—'कुकुया' इति ख्याता मूषिकाकृति, तस्या: कल्क, तले चतुर्गुणम् ॥ १९ ॥

गण्डमालापहमित्यादि।—आखोटकत्वचा स्वरसकल्करूपया, वृन्देऽप्युक्तं—"आखोटकल्कस्वरसेन सिद्धं तैलं हितं मस्तविरेचनेषु" इति। विम्बेत्यादि।—योगान्तरम्। विम्बी—डिम्बिरिति ख्याता, तेलाकुचा इत्यन्ये। अश्वमार:,—करवीर:। विम्बादीनां मूलस्य कल्क:, अत्र चतुर्गुणामिति शब्दाश: ॥ २० ॥

हिंस्रा सरोहिण्यमृता च भार्गी
श्योनाकबिल्वागुरुकृष्णगन्धाः ।
गोपित्तपिष्टाः सह तालपर्ण्या
ग्रन्थौ विधेयोऽनिलजे प्रलेपः ॥ ३१ ॥
जलायुकाः पित्तकृते हितास्तु
क्षीरोदकाभ्यां परिषेचनञ्च ।
काकोलिवर्गस्य तु शीतलानि
पिबेत् कषायाणि सशर्कराणि ॥ ३२ ॥

द्राक्षारसेनेक्षुरसेन वापि चूर्णं पिबेद्वापि हरीतकीनाम् ।
मधूकजम्ब्वर्जुनवेतसानां त्वग्भिः प्रदेहानवतारयेच्च ॥ ३३ ॥
हृतेषु दोषेषु यथाऽनुपूर्व्या ग्रन्थौ भिषक् श्लेष्मसमुत्थिते तु ।
स्विन्ने च विम्लापनमेव कुर्य्यादङ्गुष्ठवेणूद्दृषदौस्ततैश्च ॥ ३४ ॥
विकङ्कतारग्वधकाकणन्ती-काकादनीतापसवृक्षमूलैः ।
आलेपयेदेनमलाबुभार्गी-करञ्जकालामदनैश्च विद्वान् ॥ ३५ ॥

---

हिंस्रेत्यादि ।—सुश्रुतस्य ।—हिंस्रा—काण्डाकटा । कृष्णगन्धा—शोभाञ्जन. । गोपित्तपिष्टा इत्यत्र गोञ्जी च पिष्टेति पाठान्तरे,—गोञ्जी—भाखोटक: ; किन्तु गोञ्जी-पाठो युक्तः, आयुर्वेदशास्त्रप्रामाण्यात् तथा सुश्रुतटीकाकृद्भिर्व्याख्यातत्वाच्च । तालपर्णी—मासमूली ॥ ३१ ॥

जलायुका इत्यादि द्विश्लोकमिदं सुश्रुतस्य । काकोलिवर्गस्येति ।—काकोल्यादि-गणस्य ॥ ३२ । ३३ ॥

हृतेषु दोषेष्वित्यादि ।—वमनादिभिः तथा रक्तमोक्षणेन दोषेषु कफादि-रक्तान्तेषु हृतेषु सत्सु । यथाऽनुपूर्व्येति ।—स्नेहस्वेदादिक्रमं कृत्वेत्यर्थः । दृषदौस्तत:,—शिलापुत्रक: । अत्र छन्दोभङ्गभयं नाशङ्कनीयम्, अनन्तत्वाच्छन्दोमार्गाणाम् । क्वचित्तु सुश्रुतपुस्तके अङ्गुष्ठलोहोपलवेणुदण्डैरिति पठ्यते, केचित्तु वेणूद्दृषदौस्ततैरिति ॥ ३४ ॥

विकङ्कतेत्यादि-मदनान्त एको योगः, इति चन्द्रिका । विकङ्कतः,—बइँचवृक्षर, बयङ्गतिरिति वा ख्यातः । काकणन्ती—गुञ्जा, अस्या मूलं, काकादनी—काक-तिन्दुकः, तापसवृक्षः,—इङ्गुदीवृक्षः, अलाबु—कटुतुम्बी, काला—कालाञ्जना, मञ्जिष्ठा वा ॥ ३५ ॥

दन्तीचित्रकमूलत्वक् सुह्यर्कपयसो गुड़ः।
भल्लातकास्थि कासीसं लेपो भिन्द्याच्छिलामपि ॥ ३६ ॥
ग्रन्थ्यर्बुदादिजिल्लेपो माल्वाइककीटजः ॥ ३७ ॥
स्वर्जिकामूलकक्षारः शङ्खचूर्णसमन्वितः।
प्रलेपो विहितस्तीक्ष्णो हन्ति ग्रन्थ्यर्बुदादिकान् ॥ ३८ ॥

ग्रन्थीनमर्मप्रभवानपक्का-
नुद्धृत्य चाग्निं विदधीत वैद्यः।
क्षारेण वैतान् प्रतिसारयेत्तु
संलिख्य संलिख्य यथोपदेशम् ॥ ३९ ॥
ग्रन्थ्यर्बुदानाञ्च यतोऽविशेषः
प्रदेशहेत्वाकृतिदोषदूष्यैः।
ततश्चिकित्सेद्भिषगर्बुदानि
विधानविद् ग्रन्थिचिकित्सितेन ॥ ४० ॥
वातार्बुदे चाप्युपनाहनानि
स्निग्धैश्च मांसैरथ वेशवारैः।
स्वेदं विदध्यात् कुशलस्तु नाड्या
शृङ्गेण रक्तं बहुशो हरेच्च ॥ ४१ ॥

---

सुह्यर्कपयसीति।—सुह्यर्कयोः क्षीरम्। भल्लातकास्थि—भल्लातकबीजम्। कासीसं—धातुकासीसम्। माल्वाइककीट,—सुखाप्याद्भिभवपर्इकीट (पाइुर पोका) इति ख्यात ॥ ३६—३८ ॥

ग्रन्थीनित्यादि।—सुश्रुतस्य।—चाग्निं चेति—विकल्पो दोषापेक्षया, तेन वाते वातकफेऽपि, पित्ते च क्षार इति। प्रतिसारयेदिति—प्रलेपयेत्। यथोपदेशमिति—यथाशास्त्रम्। एतच्च अपि विदधीत इत्यनेनापि सम्बध्यते, तेनाग्निकर्मविधिना प्रतिसारणीयक्षारविधिना चेत्यर्थः ॥ ३९ ॥

अर्बुदे ग्रन्थिचिकित्सित मापपत्तिकमतिदिशति—ग्रन्थ्यर्बुदानामित्यादि।—अविशेष इव अविशेष इह ज्ञेय, तेन सुश्रुतोक्तभेदोऽपि भवत्युक्तः। सुश्रुते हि पृथक् ग्रन्थिलक्षणमुक्ता अर्बुदलक्षणञ्च गात्रप्रदेश इत्यादिना पृथग्विहितं, तस्मात् स्तोकविशेषे सत्यपि प्रायेणाविशेषादिह ग्रन्थिचिकित्सैवातिदिश्यतेऽर्बुदे। विधानविदिति—दाहादि-

दृष्टोऽर्बुदानां प्रशमाय केचिद्
दिने दिने रात्रिषु मर्मजानाम् ॥ ४९ ॥
लेपोऽर्बुदजिद् रम्भामोचकभस्मतुषशङ्खचूर्णकृतः ।
शरटरुधिरार्द्रगन्धकयवजविडङ्गनागरैर्वाथ ॥ ५० ॥
स्नुहीगण्डीरिकास्वेदो नाशयेदर्बुदानि च ।
सीसकेनाथ लवणैः पिण्डारकफलेन वा ॥ ५१ ॥
हरिद्रालोध्रपत्तङ्ग-गृहधूममनःशिलाः ।
मधुप्रगाढ़ो लेपोऽयं मेदोऽर्बुदहरः परः ॥ ५२ ॥
एतामेव क्रियां कुर्यादशेषां शर्करार्बुदे ॥ ५३ ॥
इति गलगण्ड-गण्डमाला-ऽपची-ग्रन्थ्यर्बुद-चिकित्सा ।

---

## अथ श्लीपद-चिकित्सा ।

लङ्घनालेपनस्वेद-रेचनै रक्तमोक्षणैः ।
प्रायः श्लेष्महरैरुष्णैः श्लीपदं समुपाचरेत् ॥ १ ॥
धूस्तूरैरण्डनिर्गुण्डी-वर्षाभूशिग्रुसर्षपैः ।
प्रलेपः श्लीपदं हन्ति चिरोत्थमतिदारुणम् ॥ २ ॥

---

विशेषणम् । सुश्रुते तु—यथोक्तमित्यत्र विधिना इति पाठः । पिडकार्बुदजातय इति ।—पिडकार्बुदप्रकारा इत्यर्थः ॥ ४६—४९ ॥

लेप इत्यादौ ।—रम्भा-मोचकः,—कदलीकाण्डकः, तस्य भस्म, क्षार इत्यर्थः । शरटः,—कृकलासः । यवजः,—यवक्षारः ॥ ५० ॥

स्नुहीत्यादि ।—चत्वारः स्वेदाः । स्नुहीगण्डीरिका—स्नुहीकाण्डः, तत्सम्भृदग्धेन, तथा तप्तसीसकेन, तथा तप्तलवणेन, तथा पिण्डारकफलमुत्स्विद्य पोट्टलिकां कृत्वा स्वेदः कार्य्य इत्यर्थः ॥ ५१ ॥

हरिद्रेत्यादौ ।—पत्तङ्ग—रक्तचन्दनम् ॥ ५२ । ५३ ॥

इति गलगण्ड-गण्डमाला-ऽपची-ग्रन्थ्यर्बुद चिकित्सा विवृतिः ।

---

निष्पिष्टमारनालेन रूपिकामूलवल्कलम्।
प्रलेपात् श्लीपदं हन्ति बद्धमूलमपि दृढ़म्॥ ३॥
पिण्डारकतरुसम्भव-वन्दाकशिफा जयति सर्पिषा पीता।
श्लीपदमुग्रं नियतं बद्धा सूत्रेण जङ्घायाम्॥ ४॥
हितयालेपने नित्यं चित्रको देवदारु वा।
सिद्धार्थशिग्रुकल्को वा सुखोष्णो मूत्रपेषितः॥ ५॥
स्नेहस्वेदोपनाहांश्च श्लीपदेऽनिलजे भिषक्।
कृत्वा गुल्फोपरि शिरां विध्येत् तु चतुरङ्गुले॥ ६॥
गुल्फस्याधः शिरां विध्येत् श्लीपदे पित्तसम्भवे।
पित्तघ्नीञ्च क्रियां कुर्य्यात् पित्तार्बुदविसर्पवत्॥ ७॥
मञ्जिष्ठां मधुकं रास्नां सहिंस्रां सपुनर्नवाम्।
पिष्ट्वारनालैर्लेपोऽयं पित्तश्लीपदशान्तये॥ ८॥
शिरां सुविदितां विध्येदङ्गुष्ठे श्लेष्मश्लीपदे।
मधुयुक्तानि चाभीक्ष्णं कषायाणि पिबेन्नरः॥ ९॥

---

पूर्वोक्तद्रव्यैव श्लीपदचिकित्सितमाह, सहनैत्यादि।—रूपिका अर्कमूलम्॥ १—३॥

पिण्डारकतरुः,—प्रगामपत्रात्'। बद्धा सूत्रेणेति।—पत्रापि वन्दाकशिफेति सम्ब-ध्यते। अयमर्थः,—वन्दाकशिफा मा ८, घृत तो २ पेयम्। अथवा श्लीपदाश्रयजङ्घायां रक्तसूत्रेण बन्धनीया॥ ४॥

हितयेत्यादि।—गोमूत्रपिष्टास्त्रयो लेपा बोध्याः। सिद्धार्थ,—श्वेतसर्षपः॥ ५॥

स्नेहेत्यादि।—सुश्रुतस्य। स्नेहस्वेदाविह शिराव्यधाङ्गभूतौ, न [illegible] स्वतन्त्रतया स्नेहौ देय', सर्वश्लीपदानां कफप्रधानतया विकर्षणीयत्वात्। विध्येदिति।—अयञ्च गुल्फोपरि पश्चाद्भागे शिराव्यधो रक्तदुष्टौ सत्यामेव कार्य्यः॥ ६॥

पैत्तिकश्लीपदचिकित्सामाह, गुल्फस्याध इत्यादि।—सुश्रुतस्य। पित्तघ्नीञ्चेति।—चकारात् कफघ्नीञ्च क्रियां कुर्य्यादिति श्रेयम्, श्लीपदानां कफप्रधानत्वात्॥ ७॥

मञ्जिष्ठामित्यादि।—हिंस्रा—कालाकडाभेदः॥ ८॥

शिरामित्यादि।—सुश्रुतस्य। सुविदितामिति—व्यक्ताम्। अङ्गुष्ठ इति।—पादाङ्गुष्ठसन्निधौ क्षिप्रमर्मण उपरि द्व्यङ्गुले शिराव्यधः कार्य्यः, क्षिप्रमर्मव्यधाद्धि मरणं

पिबेत् सर्षपतैलेन श्लीपदानां निवृत्तये ।
पूतीकरञ्जच्छदजं रसं वापि यथाबलम् ॥ १० ॥
अनेनैव विधानेन पुत्रञ्जीवकजं रसम् ।
काञ्जिकेन पिबेच्चूर्णं मूत्रैर्वा वृद्धदारजम् ॥ ११ ॥
रजनीं गुडसंयुक्तां गोमूत्रेण पिबेन्नरः ।
वर्षोत्थं श्लीपदं हन्ति दद्रुकुष्ठं विशेषतः ॥ १२ ॥
गन्धर्वतैलभृष्टां हरीतकीं गोजलेन यः पिबति ।
श्लीपदबन्धनमुक्तो भवत्यसौ सप्तरात्रेण ॥ १३ ॥
धान्याम्लं तैलसंयुक्तं कफवातविनाशनम् ।
दीपनञ्चामदोषघ्नमेतत् श्लीपदनाशनम् ॥ १४ ॥
गोधावतीमूलयुक्तां खादेन्माषेण्डरीं नरः ।
जयेत् श्लीपदकोपोत्थं ज्वरं सद्यो न संशयः ॥ १५ ॥
श्लीपदघ्नो रसोऽभ्यासाद् गुडूच्यास्तैलसंयुतः ॥ १६ ॥

वृद्धदारकचूर्णम्—

त्रिकटु त्रिफला चव्यं दार्वीवरुणगोक्षुरम् ।
अलम्बुषा गुडूचीञ्च समभागानि चूर्णयेत् ॥
सर्वेषां चूर्णमाहृत्य वृद्धदारस्य तत्समम् ।
काञ्जिकेन च तत् पेयमक्षमात्रं प्रमाणतः ॥

---

स्यादिति । तदुक्तं सुश्रुते—"पादाङ्गुष्ठाङ्गुल्योर्मध्ये क्षिप्रं नाम मर्म, तत्र विद्धस्याक्षेपकेण मरणम्" इति । कषायाणीति ।—कफहरारग्वधादिमध्य मुष्ककादिगणक्वाथानि ॥ ९ ॥

पूतीकरञ्जच्छदजमिति ।—कण्टकीकरञ्जपत्रस्वरस पलमात्रं कटुतैलाक्षं प्रक्षिप्य पिबेत् । अनेनैव विधानेनेति ।—कटुतैलप्रक्षेपेणेत्यर्थः ॥ १०—१२ ॥

गन्धर्वतैलम्,—एरण्डतैलम् । गोजलेन—गोमूत्रेण ॥ १३ ॥

तैलसंयुक्तमित्यत्र ।—तैलं—कटुतैलम् ॥ १४ ॥

गोधावती—गोदालिया लता, एतन्मूलस्यैको भागः, माषकलायस्य तु भागत्रयम् ॥ १५ ॥

गुडूच्या रसः इति ।—स्वरसः क्वाथो वा । तैलमत्र—कटुतैलम् ॥ १६ ॥

जीर्णे चापरिहारं स्याद्भोजनं सार्वकामिकम् ।
नाशयेत् श्लीपदं स्थौल्यमामवातञ्च दारुणम् ।
कुष्ठगुल्मानिलहरं वातश्लेष्मज्वरापहम् ॥ १७ ॥

पिप्पल्याद्यं चूर्णम्—

पिप्पलीत्रिफलादारु-नागरं सपुनर्नवम् ।
भागैर्द्विपलिकैरेषां तत्समं वृद्धदारकम् ॥
काञ्जिकेन पिबेच्चूर्णं कर्षमात्रं प्रमाणतः ।
जीर्णे चापरिहारं स्याद्भोजनं सार्वकामिकम् ॥
श्लीपदं वातरोगांश्च हन्यात् प्लीहानमेव च ।
अग्निञ्च कुरुते घोरं भस्मकञ्च नियच्छति ॥ १८ ॥

कृष्णाद्यमोदकः—

कृष्णाचित्रकदन्तीनां कर्षमर्द्धपलं पलम् ।
विंशतिश्च हरीतक्यो गुड़स्य तु पलद्वयम् ।
मधुना मोदकं खादेत् श्लीपदं हन्ति दुस्तरम् ॥ १९ ॥

सौरेश्वरघृतम्—

सुरसो देवकाष्ठञ्च त्रिकटुत्रिफले तथा ।
लवणान्यथ सर्वाणि विड़ङ्गान्यथ चित्रकम् ॥
चविका पिप्पलीमूलं गुग्गुलुर्हवुषा वचा ।
यवाग्रजञ्च पाठा च सूक्ष्मैला वृद्धदारकम् ॥

---

त्रिकट्वित्यादौ ।—अमृता—गुडूची । वृद्धदारस्य समांशमिति ।—त्रिकट्वादि-सर्वचूर्णसमं वृद्धदारस्य चूर्णमित्यर्थः । सार्वकामिकमिति—यथेच्छमित्यर्थः ॥ १७ ॥

पिप्पलीत्यादौ ।—अग्निञ्च कुरुते इति ।—विरेकेण पित्तहरत्वात् । अन्ये तु—यस्मादपि घोरं कुरुते अतो भस्मकं नियच्छति प्रयच्छतीत्याहुः ॥ १८ ॥

कृष्णेत्यादौ ।—कृष्णादीनां कर्षादिमानं यथाक्रमं ज्ञेयम् । विंशतिश्च हरीतक्य इत्याकृतिमानात् । मध्वत्र मोदककरणोचितं देयम् ॥ १९ ॥

सौरेश्वरघृते ।—सुरसः,—पर्णासः, अन्यलिखितनामान्तरपाठात् निर्गुण्डी वा ।

कल्कैश्च कार्षिकैरेभिर्घृतप्रस्थं विपाचयेत्।
दशमूलीकषायेण धान्ययूषद्रवेण च॥
दधिमण्डसमायुक्तं प्रस्थं प्रस्थं पृथक् पृथक्।
पक्वं स्यादुद्धृतं कल्कात् पिबेत् कर्षद्वयं हविः॥
श्लीपदं कफवातोत्थं मांसरक्ताश्रितञ्च यत्।
मेदःश्रितञ्च पित्तोत्थं हन्यादेव न संशयः॥
अपचीं गण्डमालाञ्च अन्त्रवृद्धिं तथाऽर्बुदम्।
नाशयेद् ग्रहणीदोषं श्वयथुं गुदजानि च॥
परमाग्निकरं हृद्यं कोष्ठक्रिमिविनाशनम्।
घृतं सौरेश्वरं नाम श्लीपदं हन्ति सेवितम्॥
जीवकेन कृतं ह्येतद्रोगानीकविनाशनम्॥ २०॥

विडङ्गाद्यं तैलम्—

विडङ्गमरिचार्केषु नागरे चित्रके तथा।
भद्रदार्वेलकाख्येषु सर्वेषु लवणेषु च।
तैलं पक्वं पिबेद्वापि श्लीपदानां निवृत्तये॥ २१॥

इति श्लीपद चिकित्सा॥

---

दशमूलीकषायस्य मिलित्वा प्रस्थः, जलं चतुर्गुणं, शेषं प्रस्थमेकम्। धान्ययूषद्रवेण,—काञ्जिकेन, न तु धन्याककाथेन ; धान्याम्लेति तन्त्रान्तरपाठात् व्यवहाराभावाच्च। ननु कषायद्रवयोः कियन्मानं ग्राह्यम् ? इत्याह,—प्रस्थमित्यादि। सौरेश्वरमिति।—इन्द्राणी निर्गुण्डीपर्यायवाची, तेन सुरेश्वरा निर्गुण्डी, तत्कृतत्वात् सौरेश्वरमिति संज्ञा। जीवकेनेति।—जीवो बृहस्पतिः, स्वार्थे कः। अन्यत्राप्युक्तम्—"द्राक्षा दुरालभा कृष्णा तुगा कर्कटकी तथा। एषां श्लक्ष्णानि चूर्णानि लीढ्वा मधुसर्पिषा॥ कासश्वासज्वरहरं विशेषात् तमकं जयेत्। निर्मितं जीवकेनेदं कुमाराणां सुखावहम्॥" इति॥ २०॥

विडङ्गाद्यतैले।—भद्रदारु—देवदारु, एलकाख्य,—ढोगला, एलबालुकमित्यन्ये, पैटिकेत्यपरे। विडङ्गादीनां कल्को द्रवन्तु जलं चतुर्गुणम्॥ २१॥

इति श्लीपद-चिकित्सा विवृतिः।

## अथ विद्रधि-चिकित्सा।

जलौकापातनं शस्तं सर्व्वस्मिन्नेव विद्रधौ।
मृदुर्विरेको लघ्वन्नं स्वेदः पित्तोद्भवं विना॥ १॥
वातघ्नमूलकल्कैस्तु वसातैलघृताप्लुतैः।
सुखोष्णो बहुलो लेपः प्रयोज्यो वातविद्रधौ॥ २॥
स्वेदोपनाहाः कर्त्तव्याः शिग्रुमूलसमन्विताः।
यवगोधूममुद्गैश्च सिद्धपिष्टैः प्रलेपयेत्।
विलीयते क्षणेनैवमपक्वश्चैव विद्रधिः॥ ३॥
पुनर्नवादारुविश्व-दशमूलाऽभयाम्भसा।
गुग्गुलुं रुबुतैलं वा पिबेन्मारुतविद्रधौ॥ ४॥
पैत्तिकं शर्कराळाजा-मधुकैः शारिवायुतैः।
प्रदिह्यात् क्षीरपिष्टैर्वा पयस्योशीरचन्दनैः॥ ५॥
पिबेद्वा त्रिफलाक्वाथं त्रिवृत्कल्काक्षसंयुतम्।
पञ्चवल्कलकल्केन घृतमिश्रेण लेपनम्॥ ६॥
यष्ट्याह्वशारिवादूर्वा-नलमूलैः सचन्दनैः।
क्षीरपिष्टैः प्रलेपस्तु पित्तविद्रधिशान्तये॥ ७॥

---

प्रागुक्तत्वादेव विद्रधिचिकित्स्यते—जलौकेत्यादि। मृदुर्विरेक इति।—अयञ्च मृदुर्विरेको बहुधा कार्य्यः। शरीरधातुगतदोषजत्वात् विद्रधिरिति भावः॥१॥

वातघ्नेत्यादि।—सुश्रुतस्य। वातघ्नमूलं—दशमूलम्। वातघ्नस्थाने सुरद्रौति पाठे—सुरद्रौ—शोभाञ्जनकः॥ २॥

स्वेदेत्यादि।—स्वेदो वेशवारादिभिः, यदाह सुश्रुतः,—"वेशवारैः सकृसरैः पायसैश्च। स्वेदयेच्चापि सततम्—" इति। उपनाहोऽपि सर्वदोष; यथा,—"यानूपौदकमांसञ्च काकोल्यादि सतर्कम्। क्षेत्रात्रसिद्धौ भवति प्रलेपोपनाहने॥" इति। सिद्धपिष्टैरिति—पक्वपिष्टैः॥ ३॥

पुनर्नवादौ।—अभया—हरीतकी॥ ४॥

पैत्तिकमित्यादि।—सुश्रुतस्य। क्षीरपिष्टैरिति क्षीरे पेषणार्थम्। शारिवा—अनन्तमूलम्। पयस्या—क्षीरकाकोली॥ ५—७॥

मातुलुङ्गाग्निमन्थौ च भद्रदारु-महौषधम् ।
अहिंस्रा चैव रास्ना च प्रलेपो वातशोथहा ॥ २ ॥
कल्कः काञ्जिकसंपिष्टः स्निग्धः शाखोटकत्वचः ।
सुपर्ण इव नागानां वातशोथविनाशनः ॥ ३ ॥
दूर्वा च नलमूलञ्च मधुकं चन्दनं तथा ।
शीतलाश्च गणाः सर्वे प्रलेपः पित्तशोथहा ॥ ४ ॥
न्यग्रोधोडुम्बराश्वत्थ-प्लक्षवेतसवल्कलैः ।
ससर्पिष्कैः प्रलेपः स्याच्छोथनिर्वापणः स्मृतः ।
आगन्तौ शोणितोत्थे च एष एव क्रियाक्रमः ॥ ५ ॥
अजगन्धाऽश्वगन्धा च काला सरलया सह ।
एकैषिकाऽजशृङ्गी च प्रलेपः श्लेष्मशोथहा ॥ ६ ॥
पुनर्नवादारुशिग्रु-दशमूलमहौषधैः ।
कफवातकृते शोथे लेपः कोष्णो विधीयते ॥ ७ ॥

---

वर्त्तते। अवसेचनमपि शोथनकर्षेऽन्त.परिमार्जने वमनविरेचकरशमौषधादौ च वर्त्तते। उपनाहोऽपि स्वेदे पाचनपिण्डे च वर्त्तते। एवमपरेऽप्युपक्रमाः शोथेषु यथायोगमनुसन्धेयाः, किंवा एष्वुपक्रमेषु प्राधान्यात् तत्र विम्लापनादयः आख्याः। विम्लापनादयो भाविप्रवविघातप्रयोजकतया प्रथमतोऽनुक्रम् ॥ १ ॥

मातुलुङ्गेत्यादि।—मधुरसश्च।—मातुलुङ्गस्य मूलम्। अहिंस्रा—कुक्कुरादि, कालाकडाभेदः ॥ २ ॥

कल्क इत्यादौ।—स्निग्ध इति—घृतेन। शीतलाश्च गणा इति।—काकोल्याद्युत्पलादिन्यग्रोधादयश्च सोत्पलाः। शोथनिर्वापण इति—शोथशमनः। एष एवेति।—पैत्तिकशोथविहित ॥ ३—५ ॥

अजगन्धेत्यादौ।—अजगन्धा—छागलगन्धेति भानुमती, अन्ये यमानिकेत्याहुः। काला—अहिंस्रा, कालाकडाभेदः। सरला—सरल एव, एकैषिका—त्रिवृदिति भानुमती, अन्ये तु—सरला त्रिवृत् एकैषिका पाठेत्याहुः। अजशृङ्गी—कर्कटशृङ्गीति भानुमती चन्द्रिका च ॥ ६। ७ ॥

स्थिरान् मन्दरुजः शोथान् स्नेहैर्वातकफापहैः।
अभ्यज्य स्वेदयित्वा च वेणुनाड्या ततः शनैः।
विम्लापनार्थं मृद्नीयात् तलेनाङ्गुष्ठकेन वा॥ १०॥
रक्तावसेचनं कुर्य्यादादावेव विचक्षणः।
शोथे महति संरब्धे वेदनावति च व्रणे॥
निवारणाय पाकस्य वेदनोपशमाय च।
अचिरोत्पतिते शोथे कार्य्यं शोणितमोक्षणम्॥ ११॥
यो न याति शमं लेप-स्वेदसेकावतर्पणैः।
सोऽपि नाशं व्रजत्याशु शोथः शोणितमोक्षणात्॥ १२॥
एकतश्च क्रियाः सर्वा रक्तमोक्षणमेकतः।
रक्तं हि व्यक्ततां याति तस्मेवास्ति न चास्ति रुक्॥ १३॥
स चेदेवमुपक्रान्तः शोथो न प्रशमं व्रजेत्।
तस्योपनाहैः पक्वस्य पाटनं हितमुच्यते॥ १४॥
तैलेन सर्पिषा वापि ताभ्यां वा सक्तुपिण्डिका।
सुखोष्णा शोथपाकार्थमुपनाहः प्रशस्यते॥ १५॥

---

कठिनशोथे पारिभाषिकविम्लापनमाह, स्थिरानित्यादि।—सुश्रुतस्य। वेणुनाड्या—वेणुदण्डेन। तलेन—करतलेन। आदावेवेति—उत्पन्नमात्रे। सुश्रुतेऽप्युक्तं—"अचिरोत्पतिते शोथे कार्य्यं शोणितमोक्षणम्" इति। शोथ इति।—व्रणपूर्वरूपशोथे। संरब्धे इति—शोथे, एतच्च व्रण इत्यनेन योज्यम्। शोथ इत्युक्तापि पुनः संरब्ध इति वचनम् एतादृशशोथे व्रणे विशेषेण रक्तस्रावविधानार्थम्; सुश्रुतेऽप्युक्तं—"सशोथे कठिने चामे सरुजे वेदनावति। सम्बन्धे विषमे वापि व्रणे विस्रावणं हितम्॥ सविषे च विशेषेण जलौकाभिः पदैस्तथा॥" इति। अन्ये तु—पच्यमानावस्थव्रणविषयक संरब्ध इत्यादिवचन मेयमित्याहुः॥ १०। ११॥

उपक्रमान्तरापेक्षया रक्तमोक्षणस्य प्रकर्षमाह, यो न यातीत्यादि।—उपनाहैरिति—शोथपाकजनकप्रलेपैः। पक्वस्य पाटनमिति—दारणौषधैः शस्त्रैर्वा॥ १९—१४॥

तानेवोपनाहानाह तैलेनेत्यादि।—तैलेन वाते, कफे च सर्पिषा, पित्ते रक्ते च

सतिला सातसीबीजा दध्यम्ला सक्तुपिण्डिका।
सकिण्वकुष्ठलवणा शस्ता स्यादुपनाहने ॥ १६ ॥
बालवृद्धासहक्षीण-भीरूणां योषितामपि।
मर्मोपरि च जाते तु पक्वे शोथे च दारुणे ॥ १७ ॥
शस्तं दत्तं जले दृष्टं विन्दुमात्रं प्रलेपनात्।
अत्यर्थकठिने चापि शोथे पाचनभेदनम् ॥ १८ ॥
कटुतैलान्वितैर्लेपात् सर्पनिर्मोकभस्मभिः।
चयः शाम्यति गण्डस्य प्रकोपः स्फुटति द्रुतम् ॥ १९ ॥
चिरविल्वाग्निको दन्ती चित्रको हयमारकः।
कपोतकङ्कगृध्राणां पुरीषाणि च दारणम् ॥ २० ॥
क्षारद्रव्याणि वा यानि क्षारो वा दारणः परः ॥ २१ ॥

---

ताभ्यां वेति तैलसर्पिर्भ्यां मिलिताभ्याम्। चतुर्भिर्वेति स्नेहभेदेन विकल्पो ज्ञेय इत्यर्थः ॥ १५ ॥

सतिलेत्यादौ।—किण्व—सुराबीजम्। चय इति—उपचयः। गण्डस्य—व्रणस्य। प्रकोप इति—प्रकोपहेतु, पूयरूपो दोषः ॥ १६—१९ ॥

चिरविल्वेत्यादि।—सुगमम्। चिरविल्व,—करञ्जः, अग्निक,—भल्लातकी, हयमारक,—करवीरः, एषां मूलं द्रव्यान्तरसाहचर्यात्, एते च चिरविल्वादयो व्यस्ताः समस्ता वा योज्याः। एतत् सर्वं दारणं सुकुमारविषयत्वेनोक्तम्। असुकुमारविषयमाह, क्षारेत्यादि।—क्षारसाधनद्रव्याणि—मुष्कक-पलाशादीनीत्यर्थः। क्षारो वेति।—तद्द्रव्यकृत, किन्तु वाग्भटे चरके च क्षारस्य क्षारद्रव्यस्य च दारणं सुकुमारविषयत्वेनोक्तम्, असुकुमारविषयन्तु शस्त्रमेवेति; यथा—"सुपक्वे पिण्डिते शोथे पीडनैरप्रपीडिते। दारणं दारणार्हस्य सुकुमारस्य चेष्यते ॥ गुग्गुल्वतसिगोदन्त स्वर्णक्षीरीकपोतविट्। क्षारौषधानि क्षाराश्च पक्वशोथप्रभेदनाः ॥" इति। तथा चरकेऽपि—"द्रव्याणां पिच्छिलानाञ्च त्वग्भिर्वा पयसापि वा। गुग्गुलु सीधं पयो दन्ती चित्रकोशौ, विट् पलाशस्य, क्षारो हेमक्षीरी मुष्कक॥ इत्युक्तो भिषजगणः पक्वशोथप्रभेदनः। सुकुमारस्य कक्षस्य शस्त्रन्तु परमुच्यते ॥" इति। अत्र सुकुमारस्येति पूर्वेण सम्बध्यते। कक्षस्येत्यसुकुमारस्य शस्त्रं परं भेदनमिति सम्बन्ध इति दीपिका च। तस्मात् क्षारद्रव्यं क्षारश्च सुकुमारविषयेऽपि ज्ञेय ॥ २० । २१ ॥

द्रव्याणां पिच्छिलानान्तु त्वङ्मूलानि निपीडनम्।
यवगोधूममाषाणां चूर्णानि च समासतः ॥ २२ ॥
ततः प्रक्षालनं क्वाथः पटोलीनिम्बपत्रजः।
अविशुद्धे विशुद्धे च न्यग्रोधादित्वगुद्भवः ॥ २३ ॥
पञ्चमूलद्वयं वाते न्यग्रोधादिश्च पैत्तिके ॥ २४ ॥
आरग्वधादिको योज्यः कफजे सर्वकर्मसु ॥ २५ ॥

तिलाष्टकः,—

तिलकल्कः सलवणो द्वे हरिद्रे त्रिवृद्घृतम्।
मधुकं निम्बपत्राणि लेपः स्याद्व्रणशोधनः ॥ २६ ॥
निम्बपत्रं तिला दन्ती त्रिवृत् सैन्धवमाक्षिकम्।
दुष्टव्रणप्रशमनो लेपः शोधनकेशरी ॥ २७ ॥
एकं वा शारिवामूलं सर्वव्रणविशोधनम् ॥ २८ ॥
पटोलीतिलयष्ट्याह्व-त्रिवृद्दन्तीनिशाद्वयम्।
निम्बपत्राणि चालेपः सपटुर्व्रणशोधनः ॥ २९ ॥
त्रिफला खदिरो दार्वी न्यग्रोधादिर्बलाकुशाः।
निम्बकोलकपत्राणि कषायः शोधने हितः ॥ ३० ॥

---

पीडनद्रव्याण्याह द्रव्याणामित्यादि।—पिच्छिलानामिति—शेलुशाल्मलीप्रभृतीनाम्। इदञ्च पीडनं मर्मादिसमीपस्थसूक्ष्ममुखव्रणविषयं ज्ञेयम्। उक्तं हि वाग्भटे—"पूयगर्भानणुद्वारान् सोत्सङ्गान् मर्मगानपि। निःशेषं पीडनद्रव्यैः समन्तात् परिपीडयेत्॥" इति ॥ २२ ॥

पटोलीपत्रं—पटोलपत्रमेव। अविशुद्ध इति च्छेदः। न्यग्रोधादिगणः सौश्रुतः। सर्वकर्मसु—प्रक्षालनलेपनादिषु ॥ २३—२५ ॥

तिलकल्क इत्यादि वचनं स्पष्टम्। शारिवामूलम्—अनन्तमूलम्। पटोली—पटोलपत्रम्। पटु च सैन्धवलवणम् ॥ २६—२९ ॥

त्रिफलेत्यादौ।—न्यग्रोधादीति—"न्यग्रोधोदुम्बराश्वत्थ-कदम्बप्लक्षवेतसाः। करवीरार्ककुटजाः कषाया व्रणशोधनाः॥" इत्यनेन श्लोकद्वयोपदिष्टं चरकीयं ग्राह्यम्; अस्य योगस्य चरकीयत्वात्; किंवा पञ्चवल्कमेव ग्राह्यम्। निम्बकोलकपत्राणि—कोमलनिम्बपत्राण्येवेदं इति दीपिका। अन्ये तु—कोलकं बदर इत्याहुः; युक्तमिद

अपेतपूतिमांसानां मांसस्थानामरोहताम्।
कल्कः संरोपणः कार्यस्तिलानां मधुकान्वितः ॥ ३१ ॥
निम्बपत्रमधुभ्यान्तु युक्तः संशोधनः स्मृतः ॥ ३२ ॥
पूर्वाभ्यां सर्पिषा वापि युक्तश्चाप्युपरोपणः ॥ ३३ ॥
निम्बपत्रतिलैः कल्को मधुना व्रतशोधनः।
रोपणः सर्पिषा युक्तो यवकल्केऽप्ययं विधिः ॥ ३४ ॥
निम्बपत्रघृतक्षौद्र-दार्वीमधुकसंयुता।
वर्त्तिस्तिलानां कल्को वा शोधयेद्रोपयेद्व्रणम् ॥ ३५ ॥
सप्तदलदुग्धकल्कः शमयति दुष्टव्रणं प्रलेपेन ॥ ३६ ॥
मधुयुक्ता शरपुङ्खा सव्रणरोपणी कथिता ॥ ३७ ॥
मानुषशिरःकपालं तदस्थि वा लेपनं मूत्रेण।
रोपणमिदं क्षतानां योगशतैरप्यसाध्यानाम् ॥ ३८ ॥

---

वाग्भटपाठात्। अन्ये तु—कुक्कुटपत्रीति पठित्वा पटोलपत्रीति व्याचक्षते ॥ ३० ॥

अपेतेत्यादि।—वाग्भटस्य। मधुकान्वितः,—यष्टिमधुयुक्तः। अत्र तिलश्री मधुसंयुत इति पाठः सुश्रुते बहुपुस्तके च दृश्यते, वाग्भटे तु—सर्वत्रैव मधुकान्वित इति। उभयमपि प्रमाणं प्रतिदेश्यम् ॥ ३१ ॥

निम्बपत्रेत्यादि।—पूर्वोक्तयष्टिमधुयुक्ततिलानां कल्क एव निम्बपत्रमधुभ्यां युक्त इत्यर्थः ॥ ३२ ॥

पूर्वाभ्यामिति।—यष्टिमधुयुक्ततिलकल्क एव निम्बपत्रमधुभ्यां सर्पिषा च युक्तो रोपण', अपिशब्दात् शोधनोऽपि भवतीत्यर्थः। उक्ततिलकल्कविधिं यवकल्केऽप्यतिदिशति—यवकल्केऽप्ययं विधिरिति ॥ ३३। ३४ ॥

निम्बपत्रघृतेत्यादि।—एभिर्द्रव्यैर्वस्त्रमालिप्य वर्त्तिः कार्या; वर्त्तिदानविषयो व्रण, सुश्रुते यथा—"अन्तःपूयानल्पमुखान् गम्भीरान् मांससंश्रितान्। शोधनद्रव्ययुक्ताभिर्वर्त्तिभिः समुपाचरेत् ॥" इति। तिलानां कल्को वेति।—वैकल्पिकया। सप्तदल,—सप्तपर्णः, तस्य क्षीरम् ॥ ३५—३७ ॥

मानुषशिरःकपालन्तु पुराणं ग्राह्यमित्याहुः। मूत्रेणेति—गोमूत्रेण ॥ ३८ ॥

व्रणान् विशोधयेद्वर्त्त्या सूक्ष्मास्यान् सन्धिमर्मगान् ।
अभयात्रिवृतादन्ती-लाङ्गलीमधुसैन्धवैः ॥ ३९ ॥
सुवर्चीयवपत्तूर-कर्णमोटकुठारिकाः ।
पृथगेते प्रलेपेन गम्भीरव्रणरोपणाः ॥ ४० ॥
पञ्चवल्कलचूर्णैर्वा शुक्तिचूर्णसमायुतैः ।
धातकीचूर्णलोध्रैर्वा तथा रोहन्ति ते व्रणाः ॥ ४१ ॥
सदाहा वेदनावन्तो ये व्रणा मारुतोत्तराः ।
'तेषां तिलानुमायैव भृष्टान् पयसि निर्वृतान् ॥
तेनैव पयसा पिष्ट्वा दद्यादालेपनं भिषक् ॥ ४२ ॥
वाताभिभूतान् सास्रावान् धूपयेदुग्रवेदनान् ।
यवाज्यभूर्जमदन-श्रीवेष्टकसुराह्वयैः ॥ ४३ ॥
श्रीवासगुग्गुल्वगुरु-शालनिर्य्यासधूपिताः ।
कठिनत्वं व्रणा यान्ति नश्यन्त्यास्राववेदनाः ॥ ४४ ॥

---

व्रणानित्यादि ।—वाग्भटस्य । वर्त्त्येत्यस्य स्थाने वर्त्तयैवेति पाठो वाग्भट-बहुपुस्तकेषु दृश्यते ॥ ३९ ॥

सुवर्ची—कारवेल्लः, पत्तूरः,—शालिञ्चः, कर्णमोटः,—स्वनामख्यातः । कुठारिका—कुडालिया । कुठेरक इति पाठे—पर्णासः ॥ ४० ॥

पञ्चवल्कलेत्यादि ।—चरकस्य । शुक्तिः,—मदरी, तस्यास्त्वक् । शुक्तिचूर्णसमायुतैरिति ।—पञ्चवल्कलचूर्णैरित्यस्य विशेषणम् ॥ ४१ ॥

उमा—अतसी । पयसि निर्वृतानिति—दुग्धे निर्वापितान् ॥ ४२ ॥

वाताभिभूतानित्यादि ।—वाग्भटस्य । सास्रावान्—अल्पस्रावान् । भूर्जः,—भूर्जग्रन्थिः । मदनः,—सिक्थक इति इन्दटिप्पनी । श्रीवेष्टकः,—नवनीतखोटिः । सुराह्वं—देवदारु ॥ ४३ ॥

श्रीवासेत्यादौ ।—श्रीवासः,—नवनीतखोटी ; न च पूर्वोक्तेन पौनरुक्त्यम्, यस्य वाक्यस्य तन्त्रान्तरीयत्वात् । इन्दटिप्पनिकायान्तु पौनरुक्त्यभयादत्र पूर्वोक्तश्रीवेष्टकशब्देन कुन्दुरुरिति व्याख्यातम् । शालनिर्यासः,—धूनकः ॥ ४४ ॥

तिलाः पयः सिता चौद्रं तैलं मधुकचन्दनम्।
लेपेन शोथरुग्दाह-रक्तं निर्वापयेद्व्रणान्॥ ४५॥
पित्तविद्रधिवीसर्प-शमनं लेपनादिकम्।
अग्निदग्धे व्रणे सम्यक् प्रयुञ्जीत चिकित्सकः॥ ४६॥
महाराष्ट्रीजटालेपो दग्धापिष्टावचूर्णनम्।
जीर्णारीहणाच्चूर्णं दग्धव्रणहरं परम्॥ ४७॥

क्षीरकाद्यं घृतम्—

क्षीरकपक्वं पश्चात् सिक्थकसर्जरसमिश्रितं हरति।
घृतमभ्यङ्गात् पावकदग्धजदुःखं क्षणार्द्धेन॥ ४८॥
अन्तर्दग्धकुठारको दहनजं लेपाद्विहन्ति व्रणम्।
अश्वत्थस्य विशुष्कवल्कलकृतं चूर्णं तथा गुण्डनात्॥ ४९॥
अभ्यङ्गाद्विनिहन्ति तैलमखिलं गण्डूपदैः साधितम्।
पिष्ट्वा शाल्मलितूलकैर्जलगता लेपात् तथा वालुका॥ ५०॥
सद्यःक्षतव्रणं वैद्यः सशूलं परिषेचयेत्।
यष्टिमधुकयुक्तेन नातिशीतेन सर्पिषा॥ ५१॥

---

तिला इत्यादौ।—पयः पिष्टार्थम्। सिता—शर्करा। चौद्रतैलाभ्यां सम्भाव्य लेपो देयः॥ ४५॥

इदानीं शारीरव्रणचिकित्सामभिधाय प्रसङ्गागतामागन्तुकव्रणाधिकारे, आगन्तुव्रणचिकित्साऽभिधानार्थं प्रकरणमारभ्यते। अत्र प्रथममग्निदग्धव्रणचिकित्सामाह, पित्तेत्यादि।—महाराष्ट्रीजटा—महाराष्ट्रीमूलम्, प्रथमेको योगः। पिष्ट—पिष्टकमेव। दग्धपिष्टकचूर्णेनावचूर्णनमिति द्वितीयः॥ ४६। ४७॥

क्षीरकेत्यादौ।—क्षीरकस्य कल्क, जलं चतुर्गुणमर्थात्, पश्चात् सिद्धे च सिक्थसर्जरसयोः प्रक्षेपः॥ ४८॥

अन्तरित्यादौ।—कुठारकः,—कुठारिया, स च स्थालिमध्ये अन्तर्धूमं दग्धव्यः। गुण्डनादिति—अवचूर्णनात्॥ ४९॥

गण्डूपदैः,—किञ्चुलुके कल्क, जलं चतुर्गुणमनुक्तत्वादिति निश्चयः। जलं विना चटचटावधि पाकः इष्यते। शाल्मलीतूलकैरिति।—सहार्थे तृतीया॥ ५०॥

इदानीं सद्य इत्यादिना सद्योव्रणचिकित्सामाह।—सद्य इति—सद्यःकाभ्यन्तरे।

बुद्धागन्तुव्रणं वैद्यो घृतक्षौद्रसमायुतम् ।
शीतां क्रियां प्रयुञ्जीत पित्तरक्तोष्मनाशिनीम् ॥ ५२ ॥
कान्तकामकमेकं सुश्लक्ष्णं गव्यसर्पिषा पिष्टम् ।
शमयति लेपान्नियतं व्रणमागन्तुजं न सन्देहः ॥ ५३ ॥
अपामार्गस्य संसिक्तं पत्रोत्थेन रसेन वा ।
सद्योव्रणेषु रक्तन्तु प्रवृत्तं परितिष्ठति ॥ ५४ ॥
कर्पूरपूरितं बद्धं सघृतं सम्प्ररोहति ।
सद्यःशस्त्रक्षतं पुंसां व्यथापाकविवर्जितम् ॥ ५५ ॥
शरपुङ्खा काकजङ्घा प्रथमं महिषीसुता- ।
मलं लज्जा च सद्यस्क-व्रणघ्नं पृथगेव तु ॥ ५६ ॥
शुनो जिह्वाकृतचूर्णः सद्यःक्षतविरोहणः ॥ ५७ ॥

---

यष्टिमधुकयुक्तेनेति ।—यष्टिमधुकं कल्कीकृत्य चतुर्गुणजलेन यथाविधि घृतं साधनीयम् । यदि पुनस्त्वरया यथाविधि घृतमिदं पक्तुं न शक्यते, तदा घृतात् पलद्वयं, जलात् चतुःपलं, यष्टिमधुकस्य कर्षद्वयं, किञ्चित् पक्त्वाऽवतार्य व्रणं सेचयेदित्याहुः । नातिशीतेनेति ।—कदुष्णेनेत्यर्थः । किञ्चिदुष्णेनेति पाठान्तरम् ॥ ५१ ॥

बुद्धेत्यादि ।—चक्राटस्य । बुद्धेत्यत्र बद्धेति पाठः साधुः । बन्धो हि सद्योव्रणेषु छिन्नभिन्नादिषु सन्धानजनकतया प्रधानम् । उक्तं हि—"बन्धः प्रधानं तेन शुद्धिर्व्रणरोपणमस्थिसन्धिस्थैर्यञ्च" इति । चक्राटादावयमेव पाठो दृश्यते । बुद्धेत्यादिपाठे—घृतक्षौद्रसमायुतमित्यनन्तरं कृत्वेति शेषः, किंवा प्रयुञ्जीतेति क्रियाविशेषणम् ॥ ५२ ॥

कान्तेत्यादौ ।—कान्तकामकं—भद्रमुस्तकम् । घृतमत्र शतधौतमित्युपदिशन्ति, एवं वक्ष्यमाणेऽपि ॥ ५३ । ५४ ॥

कर्पूरेत्यादि ।—सघृतं यथा स्यात् तथा कर्पूरपूरितं, तेन कर्पूरचूर्णेन शतधौतघृतमिश्रेण खड्गादिक्षतं सम्पूर्य बध्नीयादित्यर्थः ॥ ५५ ॥

शरपुङ्खेत्यादि ।—महिषीसुतस्य मलं महिषीसुतमलम् । "घृततैलवसामज्जविषधारपयोदधि- । मांसधावनतोयामम्" इतिवत् अयं प्रयोगः समर्थनीयः । अभिनवजातमहिषीवत्सस्य प्रथमं मलमित्यर्थः । लज्जा—लाजालु ; अन्ये तु—वराहक्रान्तामाहुः । शुन इति—कुक्कुरस्य, तस्याभावरसवादात् ; सर्वाङ्गलघुकुक्कुरीजिह्वेत्यन्ये ॥ ५६ । ५७ ॥

चक्रतैलं क्षते विद्धे रोपणं परमं मतम् ॥ ५८ ॥
यवक्षारं भर्जयित्वा पिण्डं दद्याद्व्रणोपरि।
शृगालकोलिमूलेन नष्टशल्यं विनिःसरेत् ॥ ५९ ॥
लाङ्गलीमूललेपाद्वा गवाचीमूलतस्तथा ॥ ६० ॥
क्षतोष्मणो निग्रहार्थं तत्कालं विस्तृतस्य च।
कषायशीतमधुर-स्निग्धालेपादयो हिताः ॥ ६१ ॥
आमाशयस्थे रुधिरे वमनं पथ्यमुच्यते।
पक्वाशयस्थे देयञ्च विरेचनमसंशयम् ॥ ६२ ॥
क्वाथो वंशत्वगेरण्ड- श्वदंष्ट्राश्मभिदा क्षतः।
सहिङ्गुसैन्धवः पीतः कोष्ठस्थं स्रावयेदसृक् ॥ ६३ ॥
यवकोलकुलत्थानां निःस्नेहेन रसेन च।
भुञ्जीतान्नं यवागूं वा पिबेत् सैन्धवसंयुताम् ॥ ६४ ॥

---

चक्रतैल—तत्कालचक्रोद्धृतमभ्रष्टसर्षपतैलम्। अन्ये तु—चक्रमाष्टीव तैलमाहुः ॥ ५८ ॥

अन्तःशल्यचिकित्सामाह, यवक्षारमित्यादिना तन्त्रेणैव। यवक्षार कर्ष १, उष्णजल पल २, आलोड़ा पीला नष्टशल्यव्रणोपरि शृगालकोलिमूल पिसा पिण्डी देय। शृगालकोली—शियाकुल इति ख्यात बदरीभेदः। एवं लाङ्गलिकामूलगोरक्षकर्कटीमूलाभ्यामपि ॥ ५९। ६० ॥

क्षतेत्यादि।—वाग्भटस्य। कषाय इति।—रत्न ॥ ६१ ॥

आमाशयस्थ इति।—सुश्रुतस्य।—आमाशयस्थमपक्वाशयस्थम्। अत्र पक्वाशयस्थं रक्तं विरेचनेन सुखेन निर्हर्तुं शक्यत इत्यभिप्रायेण विरेचनविधान, न तु पित्तप्रत्यनीकतया पक्वाशयस्य वातस्थानत्वात्। अन्ये तु—पक्वशब्देन पाक उच्यते, न पक्वाशयः, तेन पक्वाशयस्थ इत्यग्रपच्यमानाशयस्थ इत्यर्थः, तत्रैव हि पित्तस्थानत्वेन विरेचनमुपयोगिकमिति व्याचक्षते ॥ ६२ ॥

क्वाथ इत्यादौ।—वंशत्वक्। श्वदंष्ट्रा—गोक्षुर। अश्मभित्—पाषाणभेदी। हिङ्गु सैन्धवन्तु प्रक्षेप्यम्, अयं योगः प्रभावात् रक्तं स्रावयति ॥ ६३। ६४ ॥

अत्यर्थमस्रं स्रवति प्रायशो यत्र विद्यते।
ततो रक्तक्षयाद्वायौ कुपितेऽतिरुजाकरे॥
स्नेहपानं परीषेकं स्नेहलेपोपनाहनम्।
स्नेहवस्तिञ्च कुर्वीत वातघ्नौषधसाधितम्॥ ६५॥
इति साप्ताहिकः प्रोक्तः सद्योव्रणहितो विधिः।
सप्ताहात् परतः कुर्य्याच्छारीरव्रणवत् क्रियाम्॥ ६६॥
करञ्जारिष्टनिर्गुण्डी-रसो हन्याद्व्रणक्रिमीन्॥ ६७॥
कलायविदलीपत्र-कोशाम्रास्थि च पूरणात्।
सुरसादिरसैः सेको लेपनं स्वरसेन वा॥ ६८॥
निम्बसम्पाकजात्यर्क-सप्तपर्णाश्मारकाः।
क्रिमिघ्ना मूत्रसंयुक्ताः सेकालेपनधावनैः॥ ६९॥
प्रच्छाद्य मांसपेश्या वा क्रिमीनपहरेद् व्रणात्।
लसुनेनाथवा दद्याल्लेपनं क्रिमिनाशनम्॥ ७०॥

त्रिफलागुग्गुलुः,—

ये क्लेदपाकस्रुतिगन्धवन्तो
व्रणा महान्तः सरुजाः सशोथाः।

---

अत्यर्थमित्यादि।—वाग्भटस्य। विद्यत इति।—विविध्यते छिन्नभिन्नादौ। स्नेह-लेपोपनाहनमिति।—स्नेहयुक्तो लेपः स्नेहयुक्तमुपनाहनञ्च; किन्तु वाग्भटे स्वेदलेपोप-नाहनमिति पाठः। तन्मते—स्वेदो धान्यस्वेदः, उक्तं हि सुश्रुते—"धान्यस्वेदांश्च कुर्वीत स्निग्धाम्लालेपनानि च" इति। वातघ्नौषध—भद्रदार्वादि। सद्योव्रणचिकित्सा-मुपसंहरति—इति साप्ताहिक इत्यादि। वाग्भटस्य॥ ६५। ६६॥

करञ्जेत्यादौ।—करञ्जादिपत्रस्वरसः। कलायविदली—स्वनामख्याता लता। कोशाम्र,—कुसुम्ब इति ख्यात, तस्य फलास्थि, आभ्यां सपिष्टाभ्यां प्रत्येकं व्रणाव-काशपूरणम्। सुरसादिगणः सौश्रुतः। स्वरसेनेति—पत्रस्वरसेन॥ ६७। ६८॥

निम्बेत्यादौ।—जात्याः पत्रम्, निम्बादीनान्तु त्वक्। एते च निम्बादयो यथालाभं मूत्रपिष्टाः सेकादौ प्रयोज्याः। मांसपेशी—मांसखण्डः, तदामिषगन्धात् क्रिमय उपर्युपरि सञ्चरन्तीति भावः॥ ६९—७०॥

प्रयान्ति ते गुग्गुलुमिश्रितेन
पीतेन शान्तिं त्रिफलारसेन ॥ ७१ ॥

वटिकागुग्गुलुः,—

त्रिफलाचूर्णसंयुक्तो गुग्गुलुर्वटकीकृतः।
निर्यन्त्रणो विबन्धघ्नो व्रणशोधनरोपणः॥
अमृतागुग्गुलुः शस्तो हितं तैलञ्च वज्रकम् ॥ ७२ ॥

विडङ्गादिवटिकागुग्गुलुः,—

विडङ्गत्रिफलाव्योषचूर्णं गुग्गुलुना समम्।
सर्पिषा वटिकां कृत्वा खादेद्वा हितभोजनः।
दुष्टव्रणापचीमेह-कुष्ठनाडीव्रणापहः ॥ ७३ ॥

अमृतावटिकागुग्गुलुः,—

अमृतापटोलमूल-त्रिफलात्रिकटुक्रिमिघ्नानाम्।
समभागानां चूर्णं सर्वसमो गुग्गुलोर्भागः॥
प्रतिवासरमेकैकां गुडिकां खादेदक्षपरिमाणाञ्च।
जेतुं व्रणवातासृग्गुल्मोदरश्वयथुपाण्डुरोगांश्च ॥ ७४ ॥

जात्यादिघृतम्—

जातीनिम्बपटोलपत्रकटुकादार्वीनिशाशारिवा-
मञ्जिष्ठाभयसिक्थतुत्थमधुकैर्नक्ताह्वबीजैः समैः।

---

वहि.परिमार्जनमुक्ता अन्तःपरिमार्जनमाह, य इत्यादि।—कौशगुरुदीऽत्र गुग्गुलु' प्रक्षेप्यः॥ ७१ ॥

त्रिफलाचूर्णसंयुक्त इति।—त्रिफलाचूर्णेन समेन युक्तो गुग्गुलुः, घृतमनुरूपं दत्त्वा विमर्द्य चूर्णञ्च प्रक्षिप्य वटकीकर्त्तव्य', एवं सर्वत्र वटकविधाने। यन्त्रणा—आहाराचारनियमः। अमृतागुग्गुलुर्वातरक्तोक्तः। वज्रकतैलञ्च कुष्ठे वक्ष्यमाणम् ॥७२॥

विडङ्गादिवटिकागुग्गुलौ।—गुग्गुलुना समसिति—विडङ्गादिचूर्णसमेन।
अमृतावटिकागुग्गुलु. स्पष्ट.॥ ७३।७४ ॥

सर्पिः सिद्धमनेन सूक्ष्मवदना मर्माश्रिताः स्राविणो
गम्भीराः सरुजो व्रणा सगतिकाः शुष्यन्ति रोहन्ति च ॥७५॥

गौराद्यं घृतम्—

गौरा हरिद्रा मञ्जिष्ठा मांसी मधुकमेव च ।
प्रपौण्डरीकं ह्रीवेरं भद्रमुस्तं सचन्दनम् ॥
जातीनिम्बपटोलञ्च करञ्जं कटुरोहिणी ।
मधूच्छिष्टं मधूकञ्च महामेदा तथैव च ॥
पञ्चवल्कलतोयेन घृतप्रस्थं विपाचयेत् ।
एष गौरो महावीर्य्यः सर्वव्रणविशोधनः ॥
आगन्तुः सहजश्चैव सुचिरोत्थाश्च ये व्रणाः ।
विषमानपि नाड़ीश्च शोधयेच्छीघ्रमेव च ॥ ७६ ॥
गौराद्यं जातिकाद्यञ्च तैलमेवं प्रसाध्यते ।
तैलं सूक्ष्मानने दुष्टव्रणे गम्भीर एव च ॥ ७७ ॥

करञ्जाद्यं घृतम्—

नक्तमालस्य पत्राणि तरुणानि फलानि च ।
सुमनायाश्च पत्राणि पटोलारिष्टयोस्तथा ॥

---

जातीत्यादि ।—वाग्भटस्य । पत्रं—जात्यादीनां प्रत्येकं, दार्वी—दारुहरिद्रा, निशा—हरिद्रा, अभयम्—उशीरं, नक्ताह्वबीजं—करञ्जबीजम् ; शतिर्णाडी ॥ ७५ ॥

गौराद्यघृते ।—गौरा—हरिद्रा, प्रियङ्गुर्वा ; व्यवहारस्तु हरिद्रयैव । हरिद्रा—दारुहरिद्रा, जातीनिम्बपटोलानां पत्रं, करञ्जस्य फलं, मधूकं—मधूकपुष्पम् । मधूकघेत्यस्य स्थाने समधुकमिति पाठे—यष्टिमधुकस्य भागद्वयं, द्विःपाठात् । पञ्चवल्कलस्य तोयेन क्वाथेन । एष गौर इति ।—भीमो भीमसेन इतिवत् । गौराद्योऽयं महावीर्य्य इत्यपि पाठः । उक्तघृतद्वयविधिना तैलद्वयमपि साध्यमित्याह—गौराद्यमित्यादि । तैलविषयमाह,—तैलमित्यादि ॥ ७६ । ७७ ॥

द्वे हरिद्रे मधूच्छिष्टं मधुकं तिक्तरोहिणी।
मञ्जिष्ठा चन्दनोशीरमुत्पलं शारिवे त्रिवृत्।
एतेषां कार्षिकैर्भागैर्घृतप्रस्थं विपाचयेत्॥
दुष्टव्रणप्रशमनं तथा नाड़ीविशोधनम्।
सद्यश्छिन्नव्रणानाञ्च करञ्जाद्यमिदं शुभम्॥ ७८॥

प्रपौण्डरीकाद्य घृतम्—

प्रपौण्डरीकमञ्जिष्ठा-मधुकोशीरपद्मकैः।
सहरिद्रैः शृतं सर्पिः सक्षीरं व्रणरोपणम्॥ ७९॥

तिक्ताद्यं घृतम्—

तिक्तासिक्थनिशायष्टी-नक्ताह्वफलपल्लवैः।
पटोलमालतीनिम्ब-पत्रैर्व्रण्यं घृतं स्मृतम्॥ ८०॥

सिन्दूरहिङ्गुविषकुष्ठरसोनचित्र-
बाणाङ्घ्रिलाङ्गलिककल्कविपक्वतैलम्।
प्रासादमन्त्रयुतफुल्लतनुत्रफेनो
दुष्टव्रणप्रशमनो विपरीतमल्लः॥
खड्गाभिघातगुरुगण्डमहोपदंश-
नाड़ीव्रणव्रणविचर्चिककुष्ठपामाः।
एतान् निहन्ति विपरीतकमल्लनाम
तैलं यथेष्टशयनासनभोजनस्य॥ ८१॥

---

करञ्जस्येत्यादौ।—पत्राणि—तत्पत्राणीत्यर्थः। सुमनाः—जाती। उत्पलं—नीलोत्पलम्। शारिवे—अनन्तमूल-श्यामलते॥ ७८॥

प्रपौण्डरीकेत्यादौ। क्षीरमेव चतुर्गुणम्॥ ७९॥

तिक्तेत्यादौ।—पत्रशब्द प्रतिशि सम्बध्यते, जलञ्च चतुर्गुणम्॥ ८०॥

तैलान्याह, सिन्दूरेत्यादि।—चित्रकः,—रक्तचित्रक, बाणाङ्घ्रिः,—शरपुङ्खामूल, न तु किराटीमूलम्, जलं चतुर्गुणं, तैलञ्च सार्षपं, तन्त्रान्तरसंवादात्; यदुक्तं—"सिन्दूरहिङ्गुविषकुष्ठरसोनवाण पुङ्खाश्वमारलाङ्गलाह्वयमूलकल्कैः। एतच्चतुर्गुणजले

कुठारकं तैलम्—

कुठारकात् पलशतं क्राथयेत्सलिलेऽम्भसि।
तेन पादावशेषेण तैलप्रस्थं विपाचयेत्॥
कल्कैः कुठारापामार्ग-प्रोष्ठिकामक्षिकायुतैः।
एतदक्षारकं तैलं व्रणशोधनरोपणम्॥
नाड़ीषु परमाभ्यङ्गो निजास्वागन्तुकीषु च॥ ८२॥

प्रपौण्डरीकाद्यं तैलम्—

प्रपौण्डरीकं मधुकं काकोल्यौ द्वे सचन्दने।
सिद्धमेतैः समैस्तैलं तत् परं व्रणरोपणम्॥ ८३॥

दूर्वाद्यं तैलं घृतञ्च—

दूर्वास्वरससिद्धं वा तैलं कम्पिल्लकेन च।
दार्वीत्वचश्च कल्केन प्रधानं व्रणरोपणम्॥
येनैव विधिना तैलं घृतं तेनैव साधयेत्।
रक्तपित्तोत्तरं ज्ञात्वा सर्पिरेवावचारयेत्॥ ८४॥

---

विधिवत् सुसिद्धं सिद्धार्थतैलमिति सिद्धफलं प्रदिष्टम्॥" इति। प्रमादमन्त्रः,—महेश्वरमन्त्रः, गुप्तः,—चपवारितः। "ओं ह्रां ह्रीं ह्रूं ह्रैं ह्रौं ह्रः शिवाय स्वाहा" इति पठित्वा फुत्कारैश्च भिषमाचोक्षम्॥ ८१॥

कुठारकादित्यादौ।—कुठारकः,—कुडासिया, नम्बष,—द्रोण, प्रोष्ठिका—शफरीमत्स्यः, पोठिया माछा ख्याता; शिटपौत्यन्ये। मक्षिका—कोटविशेष, मक्षिक एव, मधाखियामक्षि इत्यन्ये॥ ८२। ८३॥

दूर्वेत्यादि।—योगद्वयम्। अत्र दूर्वा एव कल्को बोध्यः। चकारद्वयात् कम्पिल्लकदार्वीत्वचोर्मिलित्वा कल्कः, पाकाय जलेन, वाक्यपाविसंवादात्। अपरे तु—"दूर्वास्वरससिद्धं वा तैलं कम्पिल्लकेन वा" इति पठित्वा दूर्वास्वरसेन चकल्कमेव तैलं साध्यम्; कम्पिल्लकेन वा दार्वीकल्केन वा जलेन द्रवेणापरं तैलद्वयमित्याहुः। तैलसाधनविधिं घृतेऽप्यतिदिशति येनेत्यादि।—अयञ्च सर्वतैलविध्यतिदेशः। अन्ये तु—दूर्वादितैलविध्यतिदेश इत्याहुः॥ ८४॥

मञ्जिष्ठाद्यं घृतम्—

मञ्जिष्ठां चन्दनं मूर्वां पिष्ट्वा सर्पिर्विपाचयेत्।
सर्वेषामग्निदग्धानामेतद्रोपणमिष्यते ॥ ८५ ॥

पाटलीतैलम्—

सिद्धं कल्ककषायाभ्यां पाटल्याः कटुतैलकम्।
दग्धव्रणरुजास्राव-दाहविस्फोटनाशनम् ॥ ८६ ॥

चन्दनाद्यं यमकम्—

चन्दनं वटशुङ्गाश्च मञ्जिष्ठा मधुकं तथा।
प्रपौण्डरीकं दूर्वा च पतङ्गं धातकी तथा॥
एभिस्तैलं विपक्तव्यं सर्पिःक्षीरसमायुतम्।
अग्निदाहव्रणे श्रेष्ठं स्रवणाद्रोपणं परम् ॥ ८७ ॥
मनःशिलाले मञ्जिष्ठा सलाक्षा रजनीद्वयम्।
प्रलेपः सघृतक्षौद्रस्त्वग्विशुद्धिकरः परः ॥ ८८ ॥
अयोरजः सकाशीशं त्रिफलाकुसुमानि च।
प्रलेपः कुरुते कार्ष्ण्यं सद्य एव नवत्वचि ॥ ८९ ॥
कालीयकलताम्रास्थि-हेमकालारसोत्तमैः।
लेपः सगोमयरसः सवर्णकरणः परः ॥ ९० ॥
चतुष्पदां हि त्वग्रोम-खुरशृङ्गास्थिभस्मना।
तैलाक्ता चूर्णिता भूमिर्भवेद्रोमवती पुनः ॥ ९१ ॥

---

मञ्जिष्ठामित्यादौ।—अर्थं चतुर्मुखम् ॥ ८५ । ८६ ॥

चन्दनाद्यमके।—तैलघृताभ्यां समाभ्यां मिलित्वा यमकः। पतङ्गं—रक्तचन्दनम्; क्षीरमेवात्र चतुर्गुणम्। तैलमिति—तिलतैलमेव सर्वत्र विशेषोक्तिं विना ॥ ८७ ॥

मनःशिलेत्यादिना—सावर्ण्यकरमुपक्रममाह। अयोरज इत्यादौ।—काशीशं—धातुकाशीशम्। त्रिफलाकुसुमानि—हरीतक्यादित्रयकुसुमानि। कुसुमाभावे फलेन व्यवहारः ॥ ८८ । ८९ ॥

कालीयकेत्यादौ।—कालीयकं—कालीयाकाष्ठ, लता—प्रियङ्गुः, दूर्वेत्यन्ये, हेम—

व्रणग्रन्थिं ग्रन्थिवच्च जयेत् क्षारेण वा भिषक् ॥ ९२ ॥

इति व्रणशोथ-चिकित्सा ।

## अथ नाड़ीव्रण-चिकित्सा ।

नाड़ीनां गतिमन्विष्य शस्त्रेणापाट्य कर्मवित् ।
सर्वव्रणक्रमं कुर्याच्छोधनं रोपणादिकम् ॥
नाड़ीं वातकृतां साधु-पाटितां लेखयेद्भिषक् ।
प्रत्यक्पुष्पीफलयुतैस्तिलैः पिष्टैः प्रलेपयेत् ॥ १ ॥
पैत्तिकीं तिलमञ्जिष्ठा-नागदन्तीनिशाह्वयैः ॥ २ ॥

---

नागकेशरचूर्णं, काला—मञ्जिष्ठा ; रक्तोत्तमः—पारदः, घृतमित्यन्ये । गोमयरसः पेषणार्थम् । चतुष्पदानित्यादि सुगमम् ॥ ९० । ९१ ॥

व्रणग्रन्थिमिति ।—दुष्टतया सञ्जातं मांसग्रन्थिमित्यर्थः ॥ ९२ ॥

इति व्रणशोथ-चिकित्सा विवृतिः ।

व्रणत्वसामान्यान्नाडीव्रणचिकित्सामाह—नाडीनामित्यादि ।—गतिमिति ।—पूयगतिम् । आदिशब्देनोत्सादनावसादनसवर्णकरणादयो गृह्यन्ते । साधुपाटनमुपनाहपूर्वकम् । तदुक्तं वाग्भटे—"उपनाह्यानिलान्नाडीं पाटितां साधु लेखयेत् । प्रत्यक्पुष्पीफलयुतैस्तिलैः पिष्टैः ससैन्धवैः ॥" इति । अत एव वचनात् सैन्धवयोगादप्यत्र लेपो बोध्यः । प्रत्यक्पुष्पी—अपामार्गः, तस्य बीजम् । लेखयेदिति—क्षारेण प्रतिसारयेदित्यर्थः । एतच्च लेखनशीलत्वमेव प्रति बोध्यम् । उक्तं हि—"उद्वृत्तान् सूक्ष्मपर्यन्तानुन्नतान् कठिनान् व्रणान् । क्लिष्टाग्राणि सकुष्ठानि लिखेच्छस्त्राणि बुद्धिमान् ॥" इति ॥ १ ॥

पैत्तिकीमित्यादौ ।—नागदन्ती—स्थूलमूला दन्त्येव ।—"पित्तजां निशिमञ्जिष्ठा-नागदन्तीतिलैः समैः" इत्यायुर्वेदसारदर्शनात् । निशाह्वयैरित्यत्र निशायुतैरिति केचित् पठन्ति, तन्न, विशेष्याभावात्, निशिशब्देन हरिद्राया अनभिधानाच्च ; किन्तु निशीत्येव तत्र पाठ इति [illegible] । तथा वाग्भटेऽपि निशाह्वयैरित्येव पाठः, पठ्यते ; वृन्देऽपि तथा । सुश्रुते तु—हरिद्राद्वयव्यतिरेकेणाप्ययं योगः ॥ २ ॥

श्लैष्मिकीं तिलयष्ट्याह्व-निकुम्भारिष्टसैन्धवैः ॥ ३ ॥
शल्यजां तिलमध्वाज्यैर्लेपयेच्छिन्नशोधिताम् ॥ ४ ॥
आरग्वधनिशाकाला-चूर्णाज्यक्षौद्रसंयुता ।
सूत्रवर्त्तिर्व्रणे योज्या शोधनी गतिनाशिनी ॥ ५ ॥
घोण्टाफलत्वम् लवणं सलाक्षं पूगात् फलञ्चालवणस्य पत्रम् ।
स्नुह्यर्कदुग्धेन तु एष कल्को वर्त्तीकृतो हन्त्यचिरेण नाड़ीम् ॥६॥

---

श्लैष्मिकीमित्यादि ।—निकुम्भः,—दन्ती, अरिष्टः,—निम्बः । अत्र यष्ट्याह्वस्थाने सौराष्ट्रीयोगादप्यत्र योगः । तथा हि वाग्भटे—"श्लैष्मिकीं तिलसौराष्ट्रीनिकुम्भारिष्ट सैन्धवैः" इति ॥ ३ ॥

शल्यजामित्यादि ।—वाग्भटस्य । छिन्नशोधितामिति ।—आदौ छिन्नामिति पाटितां पश्चात् शल्यं निर्हृत्य शोधितामित्यर्थः । सुश्रुतेऽप्युक्तं—"नाडीन्तु शल्यप्रभवां विदार्य्य निर्हृत्य शल्यं प्रविशोध्य मार्गम् । संशोधयेत् क्षौद्रघृतप्रगाढैः तिलैस्ततो रोपणमस्य कुर्य्यात् ॥" इति ॥ ४ ॥

आरग्वधेत्यादि ।—आरग्वधस्य पत्र, काला—कालाञ्जकामूलं, न तु मञ्जिष्ठा, अस्यैवास्यैव दुष्टव्रणप्रशस्तत्वात् । सूत्रवर्त्तिरिति—सूत्रकृता वर्त्तिः । शोणाद्युपात्र, हरिद्रा, कालाञ्जकामूल एषां प्रत्येकं चूर्णं मा ८, घृत कर्ष १, मधु कर्ष १, गोमूत्र पल १, एतत् सर्वं पक्त्वा मधुलेपवर्त्तीयर्त्तितं वर्त्तिं कार्य्यात्., 'पाकमन्तरेण वर्त्तिकरणस्याशक्यत्वात् । सूत्रवर्त्तिरिति पाठे—एभिर्लिप्ता सूत्रवर्त्तिरित्यर्थः । वैद्यास्तु पूर्व्ववदेव व्यवहरन्ति ॥ ५ ॥

घोण्टेत्यादि ।—सुश्रुतस्य । घोण्टा—पारस्यबदरम्, तस्याः फलं त्वक् च । लवणं—सैन्धवम् । लाक्षा प्रसिद्धैव । पूगात् फलमिति—गुवाकपूगफलम् । आलवणस्य पत्रमिति—अलवणा ज्योतिष्मती, तस्याः पत्रमालवणम् । वाग्भटेऽप्युक्तं—"घोण्टा-फलत्वग्लवणं सलाक्षं पूगात् फलञ्चालवणस्य पत्रम् । स्नुह्यर्कदुग्धान्वित एष कल्को वर्त्तीकृतो हन्त्यचिरेण नाड़ीम्" ॥ इति । अन्ये तु—आलवणां ज्योतिष्मतीपत्रञ्च न पठन्ति, मदनफलञ्च पठन्ति, यथा,—"घोण्टाफलत्वङ्मदनात् फलानि पूगस्य च त्वग्लवणञ्च मुख्यम् । स्नुह्यर्कदुग्धेन सहैष कल्को वर्त्तीकृतो हन्त्यचिरेण नाड़ीम्" ॥ इति । एतत् सर्वं समभागं कृत्वा किञ्चित् सैन्धवं दत्त्वा स्नुहीक्षीरैरर्कक्षीरैश्चैकत्राप्लाव्य पक्त्वा वर्त्तिः कार्य्या ॥ ६ ॥

वर्त्तीकृतं माक्षिकसम्प्रयुक्तं नाड़ीघ्नमुक्तं लवणोत्तमं वा ।
दुष्टव्रणे यद्विहितञ्च तैलं तत् सेव्यमानं गतिमाशु हन्ति ॥ ७ ॥
जात्यर्कसम्पाककरञ्जदन्ती-सिन्धूत्थसौवर्चलयावशूकैः ।
वर्त्तिः कृता हन्त्यचिरेण नाड़ीं स्नुक्क्षीरपिष्टा सह चित्रकेण ॥८॥
माहिषदधिकोद्रवान्नमिश्रं हरति चिरविरूढाञ्च ।
भुक्तं कङ्गुनिकामूलचूर्णमतिदारुणां नाड़ीम् ॥ ९ ॥
क्षामदुर्बलभीरूणां गतिर्मर्माश्रिता च या ।
क्षारसूत्रेण तां छिन्द्यान्न शस्त्रेण कदाचन ॥ १० ॥
एषण्या गतिमन्विष्य क्षारसूत्रानुसारिणीम् ।
सूचीं निदध्याद्गत्यन्ते चोन्नाम्य चाशु निर्हरेत् ॥
सूत्रस्यान्तं समानीय गाढं बन्धनमाचरेत् ।
ततः क्षीणबलं वीक्ष्य सूत्रमन्यत् प्रवेशयेत् ॥
क्षाराक्तं मतिमान् वैद्यो यावन्न छिद्यते गतिः ।
भगन्दरेऽप्येष विधिः कार्य्यो वैद्येन जानता ॥

---

वर्त्तीकृतमित्यादि।—सुश्रुतस्य।—लवणोत्तममिति,—सैन्धवं, वर्त्तिकरणञ्च मधु-सिक्थयोरग्नौ पाकात्, अन्यथा वर्त्तिः न स्यात्। दुष्टव्रणे यद्विहितञ्च तैलमिति।—सुश्रुतोक्तारग्वधतैलादि ॥ ७ ॥

जात्येत्यादि।—जातीपत्राः, अर्कस्य मूलं, सम्पाक—आरग्वधः, तस्यापि पत्रं, करञ्जस्य बीजं, दन्ती—दन्तीमूलम्, अत्र स्नुहीक्षीरेणैव सह किञ्चिज्जलं दत्त्वा पक्वा च वर्त्तिः कार्य्येत्याहुः ॥ ८ ॥

माहिषेत्यादि।—कोद्रव,—धान्यविशेषः, तस्य भक्तम्। कङ्गुनिका—कायनिः, एतन्मूलचूर्णं, माहिषदधिकोद्रवभक्ताभ्यां मिश्रितं कृत्वा भुक्तं स्यादित्यर्थः ॥ ९ ॥

क्षामेत्यादि।—सुश्रुतस्य। क्षामः,—क्षीणमांसः, दुर्बलः,—हीनबलः। क्षारसूत्रेण छेदनविधिमाह, एषण्येत्यादि।—क्षारसूत्रेण सह अनुस्यूतं कोलं यस्याः एतादृशीं सूचीमुन्नाम्य तत्पिच्छ सूचयैव गतिमार्गं विद्धा सूचीं निर्हरेदिति भावः। अत्र यदि गतिर्दीर्घा भवति, तदा द्व्यङ्गुले त्र्यङ्गुले चतुरङ्गुले वा यथा क्रमेण गतिमानेन छेदयेत्; न पुनरेकदैव गतिप्रमाणेन यथा छेदः कार्य्यः; सूत्रच्छेदभयात् पीड़ाऽति-शयजनकत्वाच्च इत्याहुः। क्षाराक्तमिति—सूत्रविशेषणम्। अर्बुदादिषु बन्धनविशेष-

अर्बुदादिषु चोत्‌क्षिप्य मूले सूत्रं निधापयेत्।
सूचीभिर्यववक्त्राभिराचितं वा समन्ततः।
मूले सूत्रेण बध्नीयाच्छिन्ने चोपचरेद्‌व्रणम्॥ ११॥

सप्ताङ्गगुग्गुलु,—

गुग्गुलुस्त्रिफलाव्योषैः समांशैराज्ययोजितः।
नाड़ीदुष्टव्रणशूल-भगन्दरविनाशनः॥ १२॥

सर्जिकाद्यं तैलम्—

सर्जिकासिन्धुदन्त्यग्नि-रूपिकानलनीलिका।
खरमञ्जरिबीजेषु तैलं गोमूत्रपाचितम्।
दुष्टव्रणप्रशमनं कफनाड़ीव्रणापहम्॥ १३॥

कुम्भीकाद्यं तैलम्—

कुम्भीकखर्ज्जूरकपित्थबिल्व-वनस्पतीनाम्नु शलाटुकल्कैः।
कृत्वा कषायं विपचेत् तु तैलमावाप्य मुस्तासरलप्रियङ्गु॥
सौगन्धिकामोचरसाहिपुष्प-लोध्राणि दत्त्वा खलु धातकीञ्च।
एतेन शल्यप्रभवा हि नाड़ी रोहेद्‌व्रणो वै सुखमाशु चैव॥१४॥

---

शाव,—अर्बुदादिष्वित्यादि।—अर्बुदादिकं यदि तनुमूलं भवति, तदा उत्क्षिप्यैव मूले सूत्रेण बध्नीयादित्यर्थः। स्थूलमूलेषु तु सूत्रस्थैर्य्यार्थं मूले समन्ततः सूचीभिराचितं यथा स्यात् तथा बध्नीयात्। यववक्त्राभिरिति—यववन्मध्यस्थूलवक्त्राभिः; यववक्त्रत्वञ्च सूचीनां दार्ढ्यार्थम्। छिन्ने चोपचरेद्‌व्रणमिति।—छिन्नचौषीक्तविधिनेति शेष.॥१०।११॥

गुग्गुलुरित्यादौ।—त्रिफलाव्योषैरिति—त्रित्वञ्चे तृतीया। त्रिफलादीनाञ्च मिलित्वा गुग्गुलुसमत्वम्। आज्ययोजित इति—घृतपिष्टितः; घृतञ्च तावद्देयं यावता वटकीभवति॥ १२॥

सर्जिकेत्यादौ।—अग्निः,—चित्रक., रूपिका—श्वेतार्कः, नलञ्च स्वनामख्यातः। नीलिका—नीलीति प्रसिद्धा, नीलवुक्षेत्यन्ये। खरमञ्जरी—अपामार्गः, गोमूत्र पाकार्थे चतुर्गुणम्। सुश्रुतेऽप्युक्तं यथा—"सुवर्च्चिकासैन्धवचित्रकेषु निकुम्भनीलीनलरूपिकासु। फलेष्वपामार्गभवेषु चैव कुर्य्यात् समूत्रेषु हिताय तैलम्॥" इति॥ १३॥

कुम्भीकेत्यादि।—सुश्रुतस्य। कुम्भीका,—कुम्भाडुलता, दाड़िमसमानफला स्थूल-

भल्लातकाद्यं तैलम्—

भल्लातकार्कमरिचैर्लवणोत्तमेन
सिद्धं विडङ्गरजनीद्वयचित्रकैश्च ।
स्यान्मार्कवस्य च रसेन निहन्ति तैलं
नाडीं कफानिलकृतामपचीं व्रणांश्च ॥ १५ ॥

निर्गुण्डीतैलम्—

समूलपत्रां निर्गुण्डीं पीडयित्वा रसेन तु ।
तेन सिद्धं समं तैलं नाडीदुष्टव्रणापहम् ॥
हितं पामाऽपचीनान्तु पानाभ्यञ्जननावनैः ।
विविधेषु च स्फोटेषु तथा सर्वव्रणेषु च ॥ १६ ॥

हंसपादीतैलम्—

हंसपाद्यरिष्टपत्रं जातीपत्रं ततो रसैः ।
तत्कल्कैश्च पचेत् तैलं नाडीव्रणविशोधनम् ॥ १७ ॥

इति नाडीव्रण-चिकित्सा ।

---

दन्तीमूले ; वनस्पतयः,—वटादयः, एषां प्रवालं—कोमलपत्रम् ; सौगन्धिका—चन्दनमूलम् ; औषधयः,—शाल्यादीनि धान्यानि, नागपुष्पं—नागकेसरम् ॥ १४ ॥

भल्लातकेत्यादि ।—सुश्रुतस्य ।—मार्कवः,—भृङ्गराजः, तस्य स्वरसश्चतुर्गुणः ॥ १५ ॥

निर्गुण्डीतैले—समभिति—सहार्थे, तेन निर्गुण्डीस्वरसश्चतुर्गुण एव ग्राह्यः । कल्कस्तु समगन्धस्य तुल्यार्थतामित्याह । अकल्कमिदं तैलम् ॥ १६ ॥

हंसपादीतैले ।—हंसपादी—स्वनामख्याता, अरिष्टपत्र—निम्बपत्रम् । ततो रसैरिति ।—तेषां रसैरित्यर्थः, षष्ठ्याः लुक् । त्रयाणां रसो मिलित्वा तैलाच्चतुर्गुणः ॥ १७ ॥

इति नाडीव्रण-चिकित्सा विवृतिः ।

# अथ भगन्दर-चिकित्सा।

गुदस्य श्वयथुं दृष्ट्वा विशोष्य शोधयेत् ततः।
रक्तावसेचनं कुर्य्याद् यथा पाकं न गच्छति॥ १॥
वटपत्रेष्टकाशुण्ठी-गुडूच्यः सपुनर्नवाः।
सुपिष्टाः पिड़कारम्भे लेपः शस्तो भगन्दरे॥
पिड़कानामपक्कानामपतर्पणपूर्वकम्।
कर्म कुर्य्याद्विरेकान्तं भिन्नानां वक्ष्यते क्रिया॥ २॥
एषणीपाटनक्षार-वह्निदाहादिकं क्रमम्।
विधाय व्रणवत् कार्य्यं यथादोषं यथाक्रमम्॥ ३॥
त्रिवृत् तिला नागदन्ती मञ्जिष्ठा सह सर्पिषा।
उत्सादनं भवेदेतत् सैन्धवक्षौद्रसंयुतम्॥ ४॥

---

नाडीव्रणत्वसामान्यात् संख्यासामान्याच्च भगन्दरमाह, गुदस्येत्यादि।—विशोष्य इति—अपतर्पणादिना। शोधयेदिति—विरेचयेत्, न शोणितमोक्षणादिभिः॥ १॥

वटपत्रेत्यादौ।—वटस्य कोमलपत्रम्, इष्टका च पानीये चिरमुषिता पाद्येति इष्टा, व्यवहरन्ति। अपतर्पणपूर्वकं कर्म कुर्य्याद्विरेकान्तमिति।—अपतर्पणाद्यो विरेकान्ता एकादशोपक्रमा द्विव्रणीयोक्ताः कर्त्तव्या इत्यर्थः॥ २॥

एषणीत्यादौ।—कार्य्यमित्यत्र चिकित्सितमिति शेषः॥ ३॥

त्रिवृदित्यादि।—सुश्रुतस्य। नागदन्ती—स्थूलमूला दन्ती, उत्सादनमिति—शोधनं, न तु निम्नव्रणोत्थापनरूपमुत्सादनमिह व्याख्येयम्; त्रिवृदादीनां तीक्ष्णद्रव्यत्वात् उत्सादनस्य तु मृदुमधुरद्रव्यसम्पाद्यत्वात्; उक्तं हि चरके—"कल्यानि जीवनीयानि बृंहणीयानि यानि च। उत्सादनार्थं निम्नानां व्रणानां तानि कल्पयेत्॥" इति। अन्ये तु—संयोगमहिम्ना त्रिवृदादीनामप्युत्सादनत्वमिह बोध्यमित्याहुः॥ ४॥

ज्योतिष्मतीञ्च संहृत्य तैलं धीरो विपाचयेत् ।
एतद्विष्यन्दनं नाम तैलं दद्याद्भगन्दरे ।
शोधनं रोपणञ्चैव सवर्णकरणं तथा ॥ १४ ॥

करवीराद्यं तैलम्—

करवीरनिशादन्ती-लाङ्गलीलवणाग्निभिः ।
मातुलुङ्गार्कवत्साह्वैः पचेत् तैलं भगन्दरे ॥ १५ ॥

निशाद्यं तैलम्—

निशार्कक्षीरसिन्धग्नि-पुराश्वहनवत्सकैः ।
सिद्धमभ्यञ्जने तैलं भगन्दरविनाशनम् ॥ १६ ॥
व्यायामो मैथुनं युद्धं पृष्ठयानं गुरूणि च ।
संवत्सरं परिहरेदुपरूढव्रणो नरः ॥ १७ ॥

इति भगन्दर चिकित्सा ॥

---

चित्रकेत्यादि ।—मधुतस्य । चित्रकादीनां कल्कः, कल्कं चतुर्गुणम् । मलपूः,—काकोडुम्बरः, तस्य मूलं, रक्तपित्तादौ तु फलम् । विष्यन्दयति—पूयं स्रावयति, विष्यन्दनं—शोधनम् ॥ १४ ॥

करवीराद्ये ।—मातुलुङ्गस्य मूलं, वत्साह्वः,—कुटजः, तस्य त्वक्, चर्मे तु—तत्फलमाहुः ॥ १५ ॥

निशेत्यादौ ।—पुरः,—गुग्गुलुः, अश्वहनः,—करवीरः, तस्य मूलम् ॥ १६।१७ ॥

इति भगन्दर चिकित्सा-विवृतिः ।

## अथोपदंश-चिकित्सा।

स्निग्धस्विन्नशरीरस्य ध्वजमध्ये शिराव्यधः।
जलौकापातनं वा स्यादूर्द्ध्वाधःशोधनं तथा।
सद्यो निर्हृतदोषस्य रुक्‌शोथावुपशाम्यतः।
पाको रक्ष्यः प्रयत्नेन शिश्नक्षयकरो हि सः॥ १॥

पटोलनिम्बत्रिफलागुडूची-
क्वाथं पिबेद्वा खदिरासनाभ्याम्।
सगुग्गुलुं वा त्रिफलायुतं वा
सर्वोपदंशापहरः प्रयोगः॥ २॥

प्रपौण्डरीकं मधुकं रास्ना कुष्ठं पुनर्नवा।
सरलागुरुभद्राह्वैर्वातिके लेपसेचने॥ ३॥
गैरिकाञ्जनमञ्जिष्ठा-मधुकोशीरपद्मकैः।
सचन्दनोत्पलैः स्निग्धैः पैत्तिकं सम्प्रलेपयेत्॥ ४॥
निम्बार्जुनाश्वत्थकदम्बशाल-जम्बूवटोडुम्बरवेतसेषु।
प्रक्षालनालेपघृतानि कुर्य्याच्चूर्णानि पित्तासभवोपदंशे॥ ५॥
त्रिफलायाः कषायेण भृङ्गराजरसेन वा।
व्रणप्रक्षालनं कुर्य्यादुपदंशप्रशान्तये॥ ६॥

---

स्थानप्रस्तावत्ते उपदंशचिकित्सितमुच्यते—ध्वजमध्य इत्यादि।—ध्वजमध्ये—मेढ्रमध्ये। शिराव्यधश्च रक्तदुष्टौ मन्तव्यम्, अन्यावस्थायां जलौकया रक्तपातनम्॥ १॥

पटोलेत्यादि।—पटोलादिक्वाथं गुग्गुलुं त्रिफलाचूर्णं वा प्रक्षिप्य पिबेत्; एवं खदिरासनक्वाथमपि, असन,—पीतशालः। अन्ये तु—क्वाथद्वये यथासंख्य गुग्गुलु-त्रिफलाचूर्णयोः प्रक्षेप इत्याहुः। अपरे तु—केवलक्वाथेन योगद्वयम्; तदेव गुग्गुलोस्त्रिफलाचूर्णस्य वा प्रक्षेपेणापि योगद्वयमिति वदन्ति। व्यवहारस्तु पूर्वेणैव॥ २॥

प्रपौण्डरीकमित्यादि।—सुगमम्। भद्राह्व—देवदारु॥ ३॥

गैरिकाञ्जनेत्यादौ।—स्निग्धैरिति—घृतधौतघृतैः॥ ४॥

दहेत् कटाहे त्रिफलां सा मसी मधुसंयुता।
उपदंशे प्रलेपोऽयं सद्यो रोपयति व्रणम् ॥ ७ ॥
रसाञ्जनं शिरीषेण पथ्यया वा समन्वितम्।
सक्षौद्रं वा प्रलेपेन सर्वलिङ्गगदापहम् ॥ ८ ॥
बब्बूलदलचूर्णेन दाडिमत्वग्भवेन वा।
गुण्डनं अस्थिचूर्णेन उपदंशहरं परम् ॥ ९ ॥
लेपः पूगफलेनाश्वमारमूलेन वा तथा।
सेवेत् नित्यं यवान्नञ्च पानीयं कौपमेव च ॥ १० ॥
जयाजात्यश्वमारार्कसम्याकानां दलैः पृथक्।
कृतं प्रक्षालने क्वाथं मेढ्रपाके प्रयोजयेत् ॥ ११ ॥

भूनिम्बाद्यं घृतम्—

भूनिम्बनिम्बत्रिफलापटोल-करञ्जजातीखदिरासनानाम्।
सतोयकल्कैर्घृतमाशु पक्वं सर्वोपदंशापहरं प्रदिष्टम् ॥ १२ ॥

करञ्जाद्यं घृतम्—

करञ्जनिम्बार्जुनशालजम्बू-वटादिभिः कल्ककषायसिद्धम्।
सर्पिर्निहन्यादुपदंशदोषं सदाहपाकं स्रुतिरागयुक्तम् ॥१३॥

---

निम्बेत्यादौ।—प्रक्षालनमिति—कषायेन। घृतसाधनपक्षे—निम्बादिक्वाथकल्काभ्यामिति वदन्ति ॥ ५—७ ॥

रसाञ्जनमित्यादि।—योगद्वयम्। पथ्या—गुडूची। बब्बूलेति।—बब्बूलस्य दलं—पत्रं, गुण्डनम्—अवचूर्णनम्। अस्थि—मनुष्यकपालास्थि, चन्द्राटेऽपि नृकपालास्थीत्युक्तत्वात् ॥ ८—१२ ॥

करञ्जाद्यघृते।—करञ्जस्य मूलम्। वटादिभिरिति।—वटोदुम्बराश्वत्थप्लक्षकपीतनैः पञ्चभिः। कपीतनः—आम्रातकः। घृतस्यास्य पानं, अभ्यङ्गश्चानेन कार्यम् ॥ १३ ॥

आगारधूमाद्यं तैलम्—

आगारधूमरजनी-सुराकिण्वञ्च तैस्त्रिभिः।
भागोत्तरैः पचेत् तैलं कण्डूशोथरुजापहम्।
शोधनं रोपणञ्चैव सवर्णकरणं परम्॥ १४॥
अर्शसां छिन्नदग्धानां क्रिया कार्य्योपदंशवत्॥ १५॥

इत्युपदंश चिकित्सा।

---

## अथ शूकदोष-चिकित्सा।

हितश्च सर्पिषः पानं पथ्यञ्चापि विरेचनम्।
हितः शोणितमोक्षश्च यच्चापि लघुभोजनम्॥ १॥
सर्षपीं लिखितां सूक्ष्मैः कषायैरवचूर्णयेत्।
तैरेवाभ्यञ्जनं तैलं साधयेद्व्रणरोपणम्॥ २॥
क्रियेयमधिमन्थेऽपि रक्तं स्राव्यं तथोभयोः॥ ३॥

---

आगारधूमेति।—आगारधूम,—गृहधूम। किण्व—सुराबीजम्। भागोत्तरैरिति।—तैलप्रस्थे आगारधूमस्य पल १, कर्ष १, माषा ५, रत्ति २। हरिद्रा पल १, कर्ष १, माषा १०, रत्ति [illegible]। सुराबीज पल १, कर्ष १, माषा १५, रत्ति ८। एवं द्रेष्यादिकल्क कल्कस्य, पाकस्तु जलेनैव॥ १४॥

चिकित्सासामान्यादेव छिन्नार्शसां चिकित्सामाह, अर्शसामिति।—छिन्नार्शसामित्यर्थः॥ १५॥

इत्युपदंश चिकित्सा विवृतिः।

---

प्रागुक्तसङ्ख्यैव शूकदोषचिकित्सितमुच्यते। शूक,—जलशूक, सविषजन्तु, तत्कृतो दोषः शूकदोषः। हितमित्यादि।—सुश्रुतस्य। सर्पिष इति।—यथादोषं संस्कृतस्य विरेचनमपि पथ्य हितमित्यर्थः॥ १॥

सर्षपीमित्यादि।—वाग्भटस्य। कषायैरिति।—रसमिदोषे कषायवर्गोक्तैः पथ्या-विभीतकशिरीषादिभिः शोधनादिगणसम्भवैर्लोमत्यग्रोधादिभिर्वा। सूक्ष्मैरिति।—दृढ़ चूर्णीकृतैः। सुश्रुते तु—सूक्ष्मैरित्यत्र सम्यगिति पाठः। तैरेवेति।—पूर्वोक्तकषायैः कायकल्कैः। उभयोरिति।—सर्षप्यधिमन्थयोः॥ २। ३॥

अष्ठीलायां हृते रक्ते शेषग्रन्थिवदाचरेत् ॥ ४ ॥
कुम्भीकायां हरेद्रक्तं पक्वायां शोधिते व्रणे ।
तिन्दुकत्रिफलालोध्रैर्लेपस्तैलञ्च रोपणम् ॥ ५ ॥
अलज्यां हृतरक्तायामयमेव क्रियाक्रमः ॥ ६ ॥
स्वेदयेद् ग्रथितं स्निग्धं नाड़ीस्वेदेन बुद्धिमान् ।
सुखोष्णैरुपनाहैश्च सुस्निग्धैरुपनाहयेत् ॥ ७ ॥
उत्तमाख्यान्तु पिड़कां संछिद्य वड़िशोद्धृताम् ।
कल्कैश्चूर्णैः कषायाणां क्षौद्रयुक्तैरुपाचरेत् ॥ ८ ॥
क्रमः पित्तविसर्पोक्तः पुष्करीमूढ़योर्हितः ।
त्वक्पाके स्पर्शहान्याञ्च सेचयेन्मृदितं पुनः ।
बलातैलेन कोष्णेन मधुरैश्चोपनाहयेत् ॥ ९ ॥

---

अष्ठीलायामित्यादि ।—वाग्भटस्य । वातजायामप्यष्ठीलायां शुक्रदूषितरक्तस्याभ्यरक्तस्य निर्हरणं जलौकादिभिरुचितमेव ॥ ४ ॥

कुम्भीकायां हरेद्रक्तम् इति—आमावस्थायाम् । तैलञ्च रोपणमिति ।—उक्ततिन्दुकादिकल्कसिद्धम् । सुश्रुते तु—"कुम्भीकां पाकमापन्नां भित्त्वा संशोध्य रोपयेत् । तैलेन लोध्रत्रिफला-तिन्दुकाम्रकृतेन वा ॥" इत्युक्तम् । तिन्दुकाम्रयोः फलास्थीनि च गृह्येते ॥ ५ ॥

अलज्यामित्यादि ।—वाग्भटस्य ।—अयमेवेति—कुम्भीकोक्तः ॥ ६ ॥

स्वेदयेदिति ।—सुश्रुतस्य । ग्रथितमिति ।—ग्रथिताख्यं शूकदोषम् । स्निग्धमिति तैलयोगात् । स्वेदेनेति ।—स्वेदनद्रव्याणि चरकोक्तानि ; यथा—"शीरवासकैरण्ड-शिग्रुमूलकसर्षपैः । वासावंशकरञ्जार्कपत्रैरश्मन्तकस्य च ॥ शोभाञ्जनकशैरीय मालती-सुरसार्जकैः । पत्रैरुत्क्वाथ्य सलिलं नाड़ीस्वेदं प्रयोजयेत् ॥" इति । सुखोष्णैरुपनाहै-रिति ।—कफहरद्रव्यकृतैः, ग्रथितस्य कफकृतत्वात् । सुस्निग्धैरिति ।—तैलयोगात् ॥ ७ ॥

उत्तमाख्यामित्यादि ।—वाग्भटस्य । कषायाणामिति ।—कषायवर्गपठितानां प्रियङ्ग्वादीनां न्यग्रोधादीनां वा । उपाचरेदिति—प्रलेपेन ॥ ८ ॥

क्रम इत्यादि ।—वाग्भटस्य ।—पुष्करीमूढ़योरिति ।—पुष्करिका समूढ़पिड़कयोः । त्वक्पाके स्पर्शहान्याञ्चेति पूर्वेण सम्बध्यते । तेनैतयोरपि पित्तविसर्पोक्तः क्रमः कार्यः । मृदितं पुनः बलातैलेन सेचयेदिति योज्यम् । मधुरैरिति ।—काकोल्या-

## अथ भग्न-चिकित्सा ।

आदौ भग्नं विदित्वा तु सेचयेच्छीतलाम्बुना ।
पङ्केनालेपनं कार्य्यं बन्धनञ्च कुशान्वितम् ।
सुश्रुतोक्तञ्च भग्नेषु वीक्ष्य बन्धादिमाचरेत् ॥ १ ॥
अवनामितमुन्नह्येदुन्नतञ्चावनामयेत् ।
आञ्छेदतिक्षिप्तमधो-गतञ्चोपरि वर्त्तयेत् ॥
आलेपनार्थं मञ्जिष्ठा-मधुकञ्चाम्लपेषितम् ।
शतधौतघृतोन्मिश्रं शालिपिष्टञ्च लेपनम् ॥ २ ॥
सप्तरात्रात् सप्तरात्रात् सौम्येष्वृतुषु मोक्षणम् ।
कर्त्तव्यं स्यात् त्रिरात्राच्च तथाग्नेयेषु जानता ॥
काले च समशीतोष्णे पञ्चरात्राद्विमोक्षयेत् ॥ ३ ॥

---

आगन्तुजव्रणप्रस्तावाद्भग्नचिकित्सामाह, आदौ भग्नमित्यादि ।—कुशान्वितमित्यत्र कुशेति भग्नास्थिबन्धनसाधनकदम्बादित्वचः संज्ञा; तथा हि वाग्भटे,—"कदम्बोडुम्बराश्वत्थसर्ज्जार्जुनपलाशजैः । वल्कलैर्वेणुपृथुभिस्तनुभिः सुनिवेशितैः ॥ सुश्लक्ष्णैः सुप्रतिष्टम्भैर्वंशजैः शकलैरपि । कुशाह्वयैः समं नद्धं पट्टस्योपरि योजयेत् ॥" इति ॥ १ ॥

अवनामितमित्यादि ।—सुश्रुतस्य ।—अवनामितम् अवनतं कर्कटाख्यमर्म भग्नस्य उन्नह्येत् उन्नामयेत् । उन्नतमन्वकर्णादि अवपीडयेत् । अतिक्षिप्तम् अध ऊर्द्ध्वं वा अतिनिर्गतम् । आञ्छेदिति—प्रसारयेत्, आञ्छि आयामे इत्यस्य रूपम् । अधोगतमधःस्थितादि उपरि वर्त्तयेत् आकर्षयेत् । आलेपनार्थमित्यादि ।—सुश्रुतस्य । अम्लपेषितमिति—काञ्जिकपिष्टम् । शतधौतघृतोन्मिश्रमिति ।—पूर्व्वेण परेण च योज्यमिति चक्रः ॥ २ ॥

सप्तरात्रादित्यादि ।—सुश्रुतस्य ।—सौम्येषु ऋतुष्विति—शीते । आग्नेये—ग्रीष्मे, वाग्भटेऽप्युक्तम्,—"त्र्यहात् त्र्यहादृतौ घर्मे सप्ताहात्सौम्ययोर्हिमे । साधारणे तु पञ्चाहाद् भग्नदोषवशेन वा ॥" इति । जानता वैद्येनेति शेषः । समशीतोष्णे काले चेति ।—शरद्वसन्तकाले ॥ ३ ॥

न्यग्रोधादिकषायञ्च सुशीतं परिषेचने॥
पञ्चमूलीविपक्वन्तु क्षीरं दद्यात् सवेदने।
सुखोष्णमवतार्य्यं वा चक्रतैलं विजानता॥ ४॥
मांसं मांसरसः सर्पिः क्षीरं यूषः सतीनजः।
बृंहणञ्चान्नपानञ्च देयं भग्ने विजानता॥ ५॥
गृष्टिक्षीरं ससर्पिष्कं मधुरौषधसाधितम्।
शीतलं लाक्षया युक्तं प्रातर्भग्नः पिबेन्नरः॥ ६॥
सघृतेनास्थिसंहारं लाक्षां गोधूममर्जुनम्।
सन्धिमुक्तेऽस्थिभग्ने च पिबेत् क्षीरेण मानवः॥ ७॥
रसोनमधुलाक्षाज्य-सिताकल्कं समश्नताम्।
छिन्नभिन्नच्युतास्थीनां सन्धानमचिराद्भवेत्॥ ८॥
पीतवराटिकाचूर्णं द्विगुञ्जं वा त्रिगुञ्जकम्।
अपक्वक्षीरपीतं स्यादस्थिभग्नप्ररोहणम्॥ ९॥

---

न्यग्रोधेत्यादि।—सुश्रुतस्य। पञ्चमूलीत्यादि।—पञ्चमूली चात्र स्वल्पेति वदन्ति; एतत्पक्वञ्च क्षीरं वातविकोपहरे भग्ने, अत्रापि परिषेचने इति योज्यम्। चक्रतैलमिति।—सद्यः पीडितं तैलं किंवा श्रीयुतवातव्याधिचिकित्सितोक्ततैलविधानपक्वोक्तं तैलम्। शीतोपचारोचितेऽपि भग्ने सुखोष्णस्य विधानमिति कथोष्णेति ध्येयम्; अत एव विजानतेत्युक्तम्॥ ४॥

भग्नहितमन्नपानमाह,—मांसमित्यादि।—सुश्रुतस्य।—क्षीरमित्यत्र भग्ने सन्धानीयतया हितम्। यत् पुनर्नवधान्यादिवर्गे क्षीरं निषिद्धं तदव्रणविषय एवेति न विरोधः। अन्ये तु—क्षीरसर्पिरिति पठित्वा क्षीरादुत्थितं सर्पिरिति व्याचक्षते। सतीनः,—वर्त्तुलकलायः, स च यद्यपि वातजनकस्तथापि सन्धानीयत्वादिहोक्त इति॥ ५॥

गृष्टिक्षीरमित्यादि।—सुश्रुतस्य। गृष्टिः,—एकवारप्रसूता धेनुः, तस्याः क्षीरम्; मधुरौषध—काकोल्यादिगणः, तेन क्षीरपरिभाषासाधितम्। सर्पिरत्र प्रक्षेप्यं॥ ६॥

सघृतेनेत्यादिषु।—सघृतेन क्षीरेणास्थिसंहारादिकं व्यस्तं समस्तं वा पिबे-दित्याहुः॥ ७—९॥

क्षीरं सलाक्षामधुकं ससर्पिः स्याज्जीवनीयस्य सुखावहस्य ।
भग्नः पिबेत् त्वक्पयसार्जुनस्य गोधूमचूर्णं सघृतेन वाथ ॥१०॥

लाक्षागुग्गुलुः,—

लाक्षास्थिसंहृत्ककुभाश्वगन्धाचूर्णीकृता नागबला पुरश्च ।
संभग्नयुक्तास्थिरुजं निहन्यादङ्गानि कुर्य्यात् कुलिशोपमानि ॥
अत्रान्यतोऽपि दृष्टत्वात् तुल्यचूर्णेन गुग्गुलुः ॥ ११ ॥

आभागुग्गुलुः,—

आभाफलत्रिकैर्व्योषैः सर्वैरेभिः समीकृतैः ।
तुल्यो गुग्गुलुरायोज्यो भग्नसन्धिप्रसाधकः ॥ १२ ॥
सव्रणस्य तु भग्नस्य व्रणं सर्पिर्मधूत्तरैः ।
प्रतिसार्य्य कषायैश्च शेषं भग्नवदाचरेत् ॥ १३ ॥
भग्नं नैति यथापाकं प्रयतेत तथा भिषक् ।
वातव्याधिविनिर्द्दिष्टान् स्नेहानत्र प्रयोजयेत् ॥ १४ ॥

---

क्षीरमित्यादौ ।—जीवनीयमिति—आरोग्यहेतुत्वात् प्राणधारणम् । त्वक्पयसार्जुनस्येति ।—अर्जुनस्य त्वचा साधितं पयस्त्वक्पयः, अर्जुनत्वक्पयसा सघृतेन गोधूमचूर्णं पिबेदिति योज्यम् । अन्ये तु—त्वक्शब्दो नपुंसकलिङ्गोऽप्यस्तीति अर्जुनस्य त्वचं पिबेदित्याहुः ॥ १० ॥

लाक्षेत्यादौ ।—अस्थिसंहृत्—अस्थिसंहारः । ककुभः,—अर्जुनः । नागबला—गोरक्षतण्डुला । पुरः,—गुग्गुलुः, स च मिलितलाक्षादिचूर्णसमः ; वक्ष्यमाणाभादिगुग्गुलौ दृष्टत्वादिति चक्र. ॥ ११ ॥

एतदेवाह—आभेत्यादि । आभा—आढ़ेति ख्याता ॥ १२ ॥

सव्रणभग्नचिकित्सामाह, सव्रणस्येत्यादि ।—मधूत्तरैः । प्रतिसार्य्य कषायैरिति ।—न्यग्रोधादिकषायद्रव्यकृतकल्कैः, प्रतिसार्य्य—प्रलिप्य, कार्त्तिकस्तु—कषायैरिति शिशुरोपणकार्यैः प्रतिसार्य्य प्रतिसिच्य इति व्याचष्टे, धातूनामनेकार्थत्वात् । शेषमिति आहारादिकम् ॥ १३ । १४ ॥

गन्धतैलम्—

रात्रौ रात्रौ तिलान् कृष्णान् वासयेदस्थिरे जले ।
दिवा दिवैव संशोष्य क्षीरेण परिभावयेत् ॥
तृतीयं सप्तरात्रञ्च भावयेन्मधुकाम्बुना ।
ततः क्षीरं पुनः पीतान् सुशुष्कांश्चूर्णयेद्भिषक् ॥
काकोल्यादिं सदंष्ट्राञ्च मञ्जिष्ठां शारिवां तथा ।
कुष्ठं सर्जरसं मांसीं सुरदारु सचन्दनम् ॥
शतपुष्पाञ्च सञ्चूर्ण्य तिलचूर्णेन योजयेत् ।
पीडनार्थञ्च कर्त्तव्यं सर्वगन्धैः शृतं पयः ॥
चतुर्गुणेन पयसा तत् तैलं विपचेत् पुनः ।
एलामंशुमतीं पत्रं जीवकं तगरं तथा ॥
लोध्रं प्रपौण्डरीकञ्च तथा कालानुसारिवाम् ।
शैलेयकं क्षीरशुक्लामनन्तां समधूलिकाम् ॥

---

रात्रावित्यादि ।—सुश्रुतस्य ।—अस्थिरे जले इति ।—स्रोतोजले । चतुःशराव-तैलोचिततत्परिमितान् तिलान् गृहीत्वा वस्त्रेण पोट्टलीं बद्ध्वा स्रोतोजले प्रक्षिप्य रात्रौ स्थाप्यम्; ततो दिवसे आतपे शोषयेत्, एवं सप्त दिनानि यावत्, तदनु तिलतुल्यपरिमाण-गव्यक्षीरे रात्रौ तिलान् निक्षिप्य दिवा प्रखरातपे शोषयेत्; एवं सप्त दिनानि यावत्, तदनु "भाव्यद्रव्यसमं क्वाथ्यम्" इति वचनबलात् तिलतुल्यपरिमाणं यष्टिमधु गृहीत्वा चतुर्गुणोदके पक्त्वा चतुर्भागावशिष्टे क्वाथे तिलान् रात्रौ प्रक्षिप्य दिवातपे शोषयेत्, एवं सप्त दिनानि यावत्; एवं गव्यक्षीरेऽपि सप्ताहम् । पुनरपि तिलतुल्यपरिमाणे गव्यक्षीरे रात्रौ तिलान् निक्षिप्य दिवा सूर्यातपे शोषयेत्, एवं सप्त दिनानि यावत्, तदनु तिलान् निस्तुषीकृत्य चूर्णयेत् । तत्र एषां तिलचूर्णानां चत्वारो भागाः, भाग एकः काकोल्यादिशतपुष्पान्तमिलितचूर्णस्य; वक्ष्यति च—"तिलचूर्णचतुर्भागम्" इत्यादि । एतस्यैव चूर्णस्य पीडनार्थमुत्पादने कर्त्तव्ये आर्द्रताकरणार्थे सर्वगन्धसृतं क्षीरं तावन्मात्रं ग्राह्यं—यावता क्षीरेण चूर्णमार्द्रं भवति । सर्वगन्धैरिति ।—एलादिवर्गेण, क्षीरपरिभावनेन दुग्धं साध्यम् । एलादिगणश्च सौश्रुत. । एवमुक्तप्रकारेण गृहीततैलस्य चत्वारः शरावाः, तत्पाकार्थं च गव्यदुग्धस्य षोडश शरावा ग्राह्याः इत्यथ. । अंशुमती—शालपर्णी; कालानुसारिवा—तगरम्, क्षीरशुक्ला—क्षीरविदारी, अनन्ता—अनन्तमूलं, मधूलिका—

पिष्ट्वा शृङ्गाटकञ्चैव प्रागुक्तान्यौषधानि च ।
एभिस्तद्विपचेत् तैलं शास्त्रविन्मृदुनाग्निना ॥
एतत् तैलं सदा पथ्यं भग्नानां सर्वकर्मसु ।
आक्षेपके पक्षाघाते चाङ्गशोषे तथार्दिते ॥
मन्यास्तम्भे शिरोरोगे कर्णशूले हनुग्रहे ।
बाधिर्य्ये तिमिरे चैव ये च स्त्रीषु क्षयं गताः ॥
पथ्यं पाने तथाऽभ्यङ्गे नस्ये वस्तिषु योजयेत् ।
ग्रीवास्कन्धोरसां वृद्धिरनेनैवोपजायते ॥
मुखञ्च पद्मप्रतिमं स्यात् सुगन्धसमीरणम् ॥
गन्धतैलमिदं नाम्ना सर्ववातविकारनुत् ।
राजार्हमेतत् कर्त्तव्यं राज्ञामेव विचक्षणैः ।
तिलचूर्णात् चतुर्थांशं मिलितं चूर्णमिष्यते ॥ १५ ॥
लवणं कटुकं क्षारमम्लं मैथुनमातपम् ।
व्यायामञ्च न सेवेत भग्नो रूक्षान्नमेव च ॥ १६ ॥

इति भग्न चिकित्सा ॥

---

## अथ कुष्ठ-चिकित्सा ।

वातोत्तरेषु सर्पिर्वमनं श्लेष्मोत्तरेषु कुष्ठेषु ।
पित्तोत्तरेषु मोक्षो रक्तस्य विरेचनञ्चाग्रम् ॥

---

मर्कटहस्ततृणम्, अन्ये तु—गोधूमभेद इत्याहुः। प्रागुक्तानीति।—काकोल्यादिशत-पुष्पान्तानि। एभिरिति।—कल्कैरित्यर्थ.। यदंष्ट्राङ्गमित्यत्र सद्यस्त्वाङ्गमित्येव पाठः सुश्रुतटीकासु व्याख्यातः। अस्मिंस्तु पाठे—यष्टिमधुनो भागद्वय, काकोल्यादिगण-मध्येऽपि यष्टिमधुपाठात् ॥ १५। १६ ॥

इति भग्नाधिकार विवृतिः ।

प्रच्छन्नमल्पे कुष्ठे महति च शस्तं शिराव्यधनम् ।
बहुदोषः संशोध्यः कुष्ठी बहुशोऽनुरक्षता प्राणान् ॥ १ ॥

पञ्चकषायः,—

वचावासापटोलानां निम्बस्य फलिनीत्वचः ।
कषायो मधुना पीतो वान्तिकृन्मदनान्वितः ॥ २ ॥
विरेचनन्तु कर्त्तव्यं त्रिवृद्दन्तीफलत्रिकैः ॥ ३ ॥

ये लेपाः कुष्ठानां प्रयुज्यन्ते निर्गतास्रदोषाणाम् ।
संशोधिताशयानां सद्यः सिद्धिर्भवति तेषाम् ॥ ४ ॥
मनःशिलाले मरिचानि तैलमार्कं पयः कुष्ठहरः प्रलेपः ॥ ५ ॥
करञ्जबीजैडगजः सकुष्ठो गोमूत्रपिष्टश्च परः प्रदेहः ॥ ६ ॥

---

रक्तदुष्टत्वगतत्वसाधर्म्यात् कुष्ठचिकित्सामुपदिशति, वातोत्तरेष्वित्यादि ।—सर्पिरित्युपलक्षणम्, तेन तैलाभ्यङ्गोऽपि बोध्यः, यतो हि वाग्भटे—"तत्र वातोत्तरे तैलं घृतं वा साधितं हितम्" इति । प्रथममिति ।—सर्पिरादिषु बोध्यम्; तेन वातोत्तरादिषु सर्पिरेव प्रथमं कार्यं, तदनु वक्ष्यमाणा चिकित्सा कार्येत्यर्थः । पथ्यमिति पाठे—प्रधानमित्यर्थः । बहुश इति ।—अल्पबलत्वात् स्तोकं स्तोकं दोषनिर्हरणेन पुनः पुनः शोध्यः; एकदा हि भूरिदोषहरणेन बलक्षयः प्राणात्ययश्च स्यादिति । अत एव एतदनन्तरमुक्तं चरकेण—"दोषे ह्यतिमात्रहृते वायुर्हन्यादबलमाशु" । इति ॥ १ ॥

वचेत्यादौ ।—वचादीनां त्रयाणां मूलम् । फलिनी—प्रियङ्गुः । कषाय इति ।—वमनार्थकषायविधया, यथा—"क्वाथ्यद्रव्यस्य कुडवं श्रपयित्वा जलाढके । चतुर्भागावशिष्टन्तु वमनेष्ववचारयेत् ॥" इति परिभाषया कार्यः ॥ २ ॥

विरेचनमिति ।—त्रिफलाक्वाथे त्रिवृद्दन्तीमूले प्रक्षिप्य, अथवा दन्तीमूलत्रिवृता-सताचूर्णं प्रति मा २, त्रिफलाक्वाथेन पेयम् ॥ ३ ॥

ये लेपा इत्यादि ।—निर्गतोऽपगतो दोषो येषां ते तथा निर्गतास्रदोषाः ॥ ४ ॥

*मनःशिलेत्यादौ ।—आलं—हरितालम् । तैलम् आर्कं, कुष्ठहरत्वात् । आर्कं—*पयोऽर्कक्षीरम् ॥ ५ । ६ ॥

पर्णानि पिष्ट्वा चतुरङ्गुलस्य तक्रेण पर्णान्यथ काकमाच्याः ।
तैलाक्तगात्रस्य नरस्य कुष्ठान्युद्वर्त्तयेदश्वहनच्छदैश्च ॥ ७ ॥
आरग्वधः सैड़गजः करञ्जो वासा गुडूची मदनं हरिद्रे ।
श्र्याह्वः सुराह्वः खदिरो धवश्च निम्बो विड़ङ्गं करवीरकश्च ॥
ग्रन्थिश्च भौर्जो लशुनः शिरीषः सलोमशो गुग्गुलु-कृष्णगन्धे ।
फणिज्झको वत्सकसप्तपर्णौ पीलूनि कुष्ठं सुमनःप्रवालाः ॥
वचा हरेणुस्त्रिवृता निकुम्भो भल्लातकं गैरिकमञ्जनञ्च ।
मनःशिलाले गृहधूम एला काशीशलोध्रार्जुनमुस्तसर्जाः ॥
इत्यर्द्धरूपैर्विहिताः षड़ेते गोपित्तपीताः पुनरेव पिष्टाः ।
सिद्धाः परं सर्षपतैलयुक्ताश्चूर्णप्रदेहा भिषजा प्रयोज्याः ॥
कुष्ठानि कृच्छ्राणि नवं किलासं सुरेन्द्रलुप्तं किटिभं सदद्रुम् ।
भगन्दरार्शांस्यपचीं सपामां हन्युः प्रयुक्ता अचिरान्नराणाम् ॥८॥
मनःशिला त्वक् कुटजात् सकुष्ठा सलोमशः सैड़गजः करञ्जः ।
ग्रन्थिश्च भौर्जः करवीरमूलं चूर्णानि साध्यानि तुषोदकेन ॥
पलाशनिर्द्दाहरसेन वापि कर्षोद्धृतान्याढकसम्मितेन ।
दर्वीप्रलेपं प्रवदन्ति लेपमेतत् परं कुष्ठविनाशनाय ॥ ९ ॥

---

पर्णानीत्यादौ ।—चतुरङ्गुलः,—शोणालुः, अश्वहनच्छदः,—करवीरपत्रम्, एतदन्न एक एव योगः । योगमिमं चरकोक्तत्वाभिमन्प्रदेहसंख्याहद्धिः स्यादिति ॥ ७ ॥

आरग्वध इत्यादिना षड्भिः श्लोकार्द्धैः षड्योगाः । आरग्वधस्य पत्रं, श्र्याह्वः,—नवनीतखोटिः, करवीरकः,—करवीरस्य त्वक् । ग्रन्थिश्च भौर्ज इति ।—भूर्जपत्रग्रन्थिः; लोमशः,—धातुकाशीशं, तमालपत्रं वा, कृष्णगन्धा—शोभाञ्जनकः, फणिज्झकः,—पर्णासभेदः, पीलु—पीलुरापयिकं फलं, सुमनःप्रवाला—जातीपल्लवाः, निकुम्भः,—दन्ती, अञ्जनं—रसाञ्जनम् ; अर्द्धरूपैरिति ।—अर्द्धश्लोकैः । गोपित्तपीता इति ।—गोपित्तभावनया पीता पीतवर्णा, भावना च सप्ताहम् ॥ ८ ॥

मनःशिलेत्यादौ ।—त्वक् कुटजादिति—कुटजस्य त्वक् । लोमशः,—धातुकाशीशम् । तुषोदकं— सतुषैर्यवैः सन्धानविशेषात् कृतं काञ्जिकम् । पलाशनिर्दाह-

कुष्ठाद्युद्वर्त्तनम्—

कुष्ठं हरिद्रे सुरसं पटोलम्
निम्बाश्वगन्धे सुरदारुशिग्रु।
ससर्षपं तुम्बुरुधान्यवन्यम्
षड्ग्रन्था दूर्वाञ्च समानि कुर्य्यात् ॥
तैस्तक्रपिष्टैः प्रथमं शरीरम्
तैलाक्तमुद्वर्त्तयितुं यतेत।
तथास्य कण्डूः पिड़काः सकोठाः
कुष्ठानि शोथाश्च शमं प्रयान्ति ॥ १० ॥
धात्र्यक्षपथ्याक्रिमिशत्रुवह्नि-
भल्लातकावल्गुजलौहभृङ्गैः।
भागाभिवृद्धैस्तिलतैलमिश्रैः
सर्वाणि कुष्ठानि निहन्ति लेपः ॥ ११ ॥
विड़ङ्गसैन्धवशिवाशिखिरिखासर्षपकरञ्जरजनीभिः।
गोजलपिष्टो लेपः कुष्ठहरो दिवसनाथसमः ॥ १२ ॥

---

स्विन्नेति।—पलाशवृक्षस्य प्रधानमूलं छित्वा तदधः कुम्भं स्थापयित्वा उपरि प्रचलाग्निदाह्य, यः स्वरसो गलति स पलाशनिर्दाहरसः, अन्ये तु—पलाशक्षारोदकमाहुः ॥ ९ ॥

कुष्ठनिम्बादी।—सुरसः,—पर्णासः, तुम्बुरु—वनयमानी, वन्य—कैवर्त्तमुस्तकं, षड्ग्रन्था—चोरपुष्पी, प्रथमं तैलाक्तमिति बोध्यम्। तैलञ्च इह सार्षपम् ॥ १० ॥

धात्रीत्यादी।—अक्षः,—बिभीतकं, क्रिमिशत्रु—विडङ्गसारः, वह्निः,—चित्रकः, लौह इति।—कान्तलौहचूर्णं, न मण्डूरं। भृङ्ग इति।—भृङ्गराजस्य चूर्णं, न तु गुड़-त्वक्, यत्र हि विश्वामित्रः—"त्रिफलाऽथ विडङ्गानि चित्रकोऽयस्करस्तथा। इन्दुरेखा-षड्चूर्णं भृङ्गराजरसोऽपि च। समाभिवृद्धा संयुक्तं तैलेन सुपरिप्लुतम्। सर्वायसमिदं नाम रसायनमनुत्तमम्।" इति। तथा लेप इति प्रमादपाठः, किन्तु लेह इति। यत्र हि तन्त्रान्तरे—"धात्री विभीतकं पथ्या विडङ्गाग्निसमस्करम्। वागुजीलौह-भृङ्गञ्च सचूर्णं समभागिकम्। तिलतैलान्वितं लिह्यात् लेहमेतद्रसायनम्।" इति।

॥ ११ ॥

विडङ्गैडगजाकुष्ठ-निशासिन्धूत्थसर्षपैः।
धान्याम्लपिष्टैर्लेपोऽयं दद्रुकुष्ठरुजापहः॥ १३॥

दूर्वाऽभयासैन्धवचक्रमर्द-कुठेरकाः काञ्जिकतक्रपिष्टाः।
त्रिभिः प्रलेपैरपि बद्धमूलं दद्रुश्च कण्डूश्च रुजाश्च हन्युः॥ १४॥

तुल्यो रसः शालतरोस्तुषेण सचक्रमर्दोऽप्यभयाविमिश्रः।
पानीयभक्तेन तदम्बुपिष्टो लेपः क्षतो दद्रुगजेन्द्रसिंहः॥ १५॥

प्रपुन्नाडस्य बीजानि धात्री सर्जरसः स्नुहाः।
सौवीरपिष्टं दद्रूणामेतदुद्वर्त्तनं परम्॥ १६॥

चक्रमर्दकबीजानि जीरकञ्च समांशिकम्।
स्तोकं सुदर्शनामूलं दद्रुकुष्ठविनाशनम्॥ १७॥

लेपनाच्चवणाच्चैव ठणकं दद्रुनाशनम्॥ १८॥

यूथीपुन्नागमूलञ्च लेपात् काञ्जिकपेषितम्।
कासमर्दकमूलञ्च सौवीरेण च पेषितम्।
दद्रुकिटिमकुष्ठानि जयेदेतत् प्रलेपनात्॥ १९॥

---

विडङ्गेत्यादौ।—अग्निशिखा—सोमराजीबीजं, शीतलं—शीमूत्र, दिवसनाथः,—सूर्य्यः॥ १२। १३॥

दूर्वेत्यादौ।—चक्रमर्दः,—एडगजः, कुठेरकः,—पर्णासभेदः। काञ्जिकतक्रपिष्टा इति।—काञ्जिकतक्रयोरन्यतरेण पिष्टा इत्यर्थः। त्रिभिः प्रलेपैरिति।—अनेन शीघ्रप्रशमनकारितां दर्शयति, न तु नियमोऽयम्॥ १४॥

तुल्य इत्यादौ।—शालतरो रसो धूनक, तुषेणेति—धान्यतुषः। धूनकादीनां पानीयभक्तान्तानां समो भागः। तदम्बुपिष्ट इति।—पानीयभक्तजलेन पिष्टः॥ १५॥

प्रपुन्नाडस्येति।—प्रपुन्नाडः,—एडगजः। स्नुहायाः क्षीरम्,—अन्ये [illegible] मूलमाहुः। सौवीरं—काञ्जिकम्। स्तोक सुदर्शनामूलमिति।—मिलितचक्रमर्दजीरकापेक्षया माषिकमित्याहुः॥ १६। १७॥

लेपनादिति।—ठणक—चीनाघास इति नाम्ना ख्यातम्॥ १८॥

यूथीपुन्नागमूल—स्वनामख्यातम्। कासमर्दकः,—कालकासुन्दा, एतन्मूलं सौवीरेण पिष्टा रात्रौ स्थाप्य, प्रातश्चाकाकरुते लेपो विधेय इत्युपदिशन्ति॥ १९॥

शिखरिरसेन सुपिष्टं मूलकबीजं प्रलेपतः सिध्म।
चारेण वा कदल्या रजनीमिश्रेण नाशयति ॥ २० ॥

गन्धपाषाणचूर्णेन यवचारेण पेषितम्।
सिध्म नाशं व्रजत्याशु कटुतैलयुतेन वा ॥ २१ ॥
कासमर्दकबीजानि मूलकानां तथैव च।
गन्धपाषाणमिश्राणि सिध्मानां परमौषधम् ॥ २२ ॥

धात्रीरसः सर्जरसः सपाक्यः सौवीरपिष्टश्च तदायुतश्च।
भवन्ति सिध्मानि यथा न भूयस्तथैवदमुद्वर्त्तनकं करोति ॥ २३ ॥

कुष्ठं मूलकबीजं प्रियङ्गवः सर्षपास्तथा रजनी।
एतत् केशरषष्ठं निहन्ति बहुवार्षिकं सिध्म ॥ २४ ॥
नीलकुरुण्टकपत्ररसेनालिप्य गात्रमतिबहुशः।
लिम्पेन्मूलकबीजैः पिष्टैस्तक्रेण सिध्मनाशाय ॥ २५ ॥

चक्राह्वयं सुधीचीर-भावितं मूत्रसंयुतम्।
रवितप्तं हि किञ्चित् तु लेपनात् किटिमापहम् ॥ २६ ॥
आरग्वधस्य पत्राणि आरनालेन पेषयेत्।
दद्रुकिटिमकुष्ठानि हन्ति सिध्मानमेव च ॥ २७ ॥

---

शिखरिरसेन —अपामार्गरसेन। चारेण वा कदल्या इति।—कदलीचारोदकेन पिष्टमित्यर्थः, पेषणं प्रति विकल्पेनास्य प्रयोगात् ॥ २० ॥

गन्धपाषाण,—गन्धक। मूलकानां तथैव चेति।—मूलकानां बीजानीति शेषः ॥ २१। २२ ॥

धात्रीरस,—आमलकीस्वरस, पाक्य,—यवक्षार, विड्लवणमित्यन्ये। तदायुत इति।—सौवीरेणैव दिनत्रय सभावित,—"पूतिकृत दिवसत्रयम्" इति योगान्तरदर्शनात। धात्रीरसस्थाने धात्रीफलमिति चन्द्राटः पठति ॥ २३ ॥

कुष्ठमित्यादौ।—केशर—नागकेशरम् ॥ २४ ॥

नीलकुरुण्टक,—नीलझिण्टी ॥ २५ ॥

चक्राह्वयम्—एडगजबीजम्। "रवितप्त सकिञ्च" इत्यपि पाठान्तरम् ॥२६।२७॥

बीजानि वा मूलकसर्षपाणाम्
लाक्षारजन्यौ प्रपुन्नाड़बीजम् ।
श्रीवेष्टकव्योषविड़ङ्गकुष्ठम्
पिष्ट्वा च मूत्रेण तु लेपनं स्यात् ॥
दद्रूणि सिध्मं किटिमानि पामाम्
कपालकुष्ठं विषमञ्च हन्यात् ॥ २८ ॥

एड़गजकुष्ठसौवीरक-सैन्धवसर्षपैः क्रिमिघ्नैश्च ।
क्रिमिसिध्मदद्रुमण्डलकुष्ठानां नाशनो लेपः ॥ २९ ॥

स्नुक्काण्डे सर्षपात् कल्कः कुकूलानलपाचितः ।
लेपाद्विचर्चिकां हन्ति रागवेग इव त्रपाम् ॥ ३० ॥
स्नुक्काण्डशुषिरे दग्ध्वा गृहधूमं ससैन्धवम् ।
अन्तर्धूमं तैलयुक्तं लेपाद्धन्ति विचर्चिकाम् ॥ ३१ ॥

एड़गजातिलसर्षपकुष्ठं मागधिकालवणत्रयमस्तु ।
पूतिक्लिन्नं दिवसत्रयमेतद्धन्ति विचर्चिकदद्रु सकुष्ठम् ॥

उन्मत्तकस्य बीजेन माणकक्षारवारिणा ।
कटुतैलं विपक्तव्यं शीघ्रं हन्याद्विपादिकाम् ॥ ३२ ॥

---

बीजानीत्यादौ ।—लाक्षारजन्याविति द्वन्द्व, न तु हरिद्रालक्षमित्याहुः । श्रीवेष्टक',—नवनीतखोटी ॥ २८ ॥

एड़गजेत्यादौ ।—सौवीरक—सौवीराञ्जनम्, अत्र विशिष्टद्रव्यस्यानुक्तत्वात् गोमूत्रमेव कुष्ठहरतया पेषणार्थं ग्राह्यमिति वदन्ति। अपरे तु—सौवीरशब्दस्य काञ्जिकार्थता परिकल्प्य तेनैव पेषणमित्याहुः ॥ २९ ॥

स्नुक्काण्ड इत्यादि ।—वाग्भटस्य । कुकूलानल,—करीषाग्नि । स्नुक्काण्डमध्ये गर्त्तं कृत्वा पिष्टश्वेतसर्षपैस्तु तत् प्रपूर्य स्नुहीकाण्डान्तरेणाच्छाद्य कुशादिभिर्वेष्टा मृत्तिकया प्रलिप्य गोमयाग्निना दहेत् । ततः आकृष्य तेन कल्केन लेपः ॥ ३० ॥

स्नुक्काण्डशुषिर इत्यादौ ।—स्नुक्काण्ड—सौत्रुपर्व कोरयित्वा तद्विवरं गृहधूमसैन्धवचूर्णाभ्यां पूरयित्वा स्थालीमध्ये तन्निधाय तदुपरि शराव दत्त्वा मृत्तिकया शरावसन्धिं पिधायान्तर्धूमं दहेत्, तदनु कटुतैलेन संमिश्र्य लेप. ॥ ३१ ॥

एड़गजेत्यादौ ।—लवणत्रय—सौवर्चल-सैन्धव-विड्लवणम् ; उन्मत्तकस्य—

नारिकेलोदके न्यस्तस्तण्डुलः पूतितां गतः।
लेपाद्विपादिकां हन्ति चिरकालानुबन्धिनीम् ॥ ३३ ॥
सर्जरससिन्धुसम्भव-गुड़मधुमहिषाच्चगैरिकं सघृतम्।
सिक्थकमेतत् पक्वं पादस्फुटनापहं सिद्धम् ॥
अवल्गुजं कासमर्दं चक्रमर्दं निशायुतम्।
माणिमन्थेन तुल्यांशं मस्तुकाञ्जिकपेषितम् ॥
कच्छूं कण्डूं जयत्युग्रां सिद्ध एष प्रयोगराट् ॥ ३४ ॥
कोमलसिंहास्यदलं सनिशं सुरभीजलेन सम्पिष्टम्।
दिवसत्रयेण नियतं क्षपयति कच्छूं विलेपनतः ॥ ३५ ॥
हरिद्राकल्कसंयुक्तं गोमूत्रस्य पलद्वयम्।
पिबेन्नरः कामचारी कच्छूपामाविनाशनम् ॥ ३६ ॥
शोथपाण्डुामयहरी गुल्ममेहकफापहा।
कच्छूपामाहरी चैव पथ्या गोमूत्रसाधिता ॥ ३७ ॥
पिबति सकटुतैलं गन्धपाषाणचूर्णम्
रविकिरणसुतप्तं पामली यः पलार्द्धम्।

---

धुस्तूरकस्य बीजं कल्कः। मापकक्षारपरिस्रुतजलस्य चतुर्गुणं पाकार्थम्; विपादिका—पादस्फोटनम् ॥ ३२ ॥

नारिकेलोदक इत्यादौ।—नारिकेलस्य सजलशस्यं सम्यक् ग्राह्यम् ॥ ३३ ॥

सर्जरसेत्यादौ।—सिन्धुसम्भवं—सैन्धवम्। महिषाच्च इति—गुग्गुलुः। एतत् सर्वं समभागमिलितञ्च मनाक् पक्वञ्च यथा सिक्थकाकृति भूत्वा लेपयोग्यं भवति। अवल्गुजमित्यादौ।—अवल्गुजं—सोमराजीबीजम्; माणिमन्थ—सैन्धवम्। मस्तुकाञ्जिकपेषितमिति—मस्तुकाञ्जिकयोरन्यतरेण ॥ ३४ ॥

कोमलेत्यादौ।—सिंहास्य,—वासकः, तस्य पत्रम्; सुरभीजलं—गोमूत्रम् ॥३५॥

हरिद्रेत्यादौ।—शास्त्रयुक्त्या हरिद्राकल्ककर्षस्य प्रक्षेपः, "कर्षश्चूर्णस्य कल्कस्य" इति वचनात्, व्यवहारस्तु—हरिद्राकल्कस्याष्टौ माषकाः, गोमूत्रस्य पलमेकम्। पथ्या गोमूत्रसाधितेति—गोमूत्रेलक्षिता हरीतकी ॥ ३६। ३७ ॥

पिबतीत्यादौ।—पलार्द्धमिति।—उत्तमबलानल प्रति प्राप्ताधिकी मात्रा, किंवा

त्रिदिनं तदनुपिबः क्षीरभोजी च गोग्रम्
भवति कनकदीप्त्या कामतुल्यो मनुष्यः ॥ ३८ ॥

निशासुधारग्वधकाकमाची-पत्रैः सदार्वीप्रपुनाडबीजैः ।
तक्रेण पिष्टैः कटुतैलमिश्रैः पामादिषूद्वर्तनमेतदिष्टम् ॥ ३९ ॥

सिन्दूरमरिचचूर्णं महिषीनवनीतसंयुतं यद्वा ।
लेपाद्विनिहन्ति पामां तैलं करवीरसिद्धं वा ॥ ४० ॥

मांसीचन्दनसम्पाक-करञ्जारिष्टसर्षपम् ।
यष्टीकुटजदार्व्यब्दं हन्ति कण्डूमयं गणः ॥ ४१ ॥

भल्लातकं द्वीपिसुधार्कमूलं गुञ्जाफलं त्र्यूषणशङ्खचूर्णम् ।
तुत्थं सकुष्ठं लवणानि पञ्च क्षारद्वयं लाङ्गलिकाश्च पक्वा ॥
स्नुह्यर्कदुग्धे घनमायसस्थं शलाकया तं विदधीत लेपम् ।
कुष्ठे किलासे तिलकालके च मषेषु दुर्नामसु चर्मकीले ॥ ४२ ॥

---

पक्षार्धं त्रिदिनं वा पिबतीति योज्यम्, त्रिदिनेत्यत्रानुस्वारस्य लोपश्छान्दसत्वात्; तेन पक्षार्धं दिनत्रयं विभज्य योज्यं, तेन किञ्चिदधिकदशमाषकाः प्रत्यहं भवन्ति। व्यवहारस्तु—त्रिफलागन्धकचूर्णस्य माषकचतुष्टयं कटुतैलस्य तु कर्षं पेयम् इति। तदनु पिब इति।—तेन सर्वेणगन्धकचूर्णेन बध्नलगावः। क्षीरभोजीति।—क्षीरान्नभक्तेन व्यवहारः। दिनत्रयं पक्षार्धं वा प्रयोगावधिः वातातप[...]चेति। कनकदीप्त्येति।—षष्ठ्यर्थे तृतीया। "कनकक्षीरः" इति च पाठः। [...]गुप्त इति—वरचितप्रकथातुः "कामतुल्यः" इत्यपि पाठः॥ ३८॥

निशेत्यादौ।—निशादिचतुष्टयस्य पत्राणि, अन्ये तु—निशा हरिद्रे, सुधादीनामेव पत्राणीत्याहुः॥ ३९॥

सिन्दूरेत्यादौ।—करवीरकाथकल्काभ्यां सिद्धं कटुतैलमित्यर्थः॥ ४०॥

मांसीत्यादौ।—सम्पाकस्य पत्रम्; करञ्जस्य फलम्; अरिष्टः,—निम्बः, तस्य पत्रम्, यष्टीति—यष्टिमधु। कण्डूमिश्रम् कुष्ठमिति क्वचित् पाठः। किन्तु चरकेऽप्यस्मिन् गणे दर्शनानि कण्डूघ्नानीत्युक्तम्॥ ४१॥

भल्लातकमित्यादि।—वाग्भटस्य। द्विपी—चित्रकः, अत्र भल्लातकादार्कान्तानां मूलमिति केचित्; अन्ये तु—भल्लातकस्य बीजं तस्यैव सर्वत्रोपयोगित्वादित्याहुः। चित्रकादित्रयाणां मूलम्; एषां भल्लातकादिलाङ्गलिकान्तानां चूर्णं स्नुह्यर्कक्षीराभ्यां

विषवरुणहरिद्राचित्रकागारधूम-

मनलमरिचदूर्वाः चीरमर्कस्नुहाभ्याम् ।

दहति पतितमात्रात् कुष्ठजातीरशेषाः

कुलिशमिव सरोषाच्छक्रहस्ताद्विमुक्तम् ॥ ४२ ॥

शशाङ्कलेखा सविडङ्गसारा

सपिप्पलीका सहुताशमूला ।

सायोमला सामलका सतैला

सर्वाणि कुष्ठानि निहन्ति लीढ़ा ॥ ४४ ॥

तीव्रेण कुष्ठेन परीतदेहो

यः सोमराजीं नियमेन खादेत् ।

संवत्सरं कृष्णतिलद्वितीयाम्

स सोमराजीं वपुषाऽतिशेते ॥ ४५ ॥

घर्मसेवी कदुष्णेन वारिणा वागुजीं पिबेत् ।

चीरभोजी त्रिसप्ताहात् कुष्ठरोगाद्विमुच्यते ॥ ४६ ॥

एकस्तिलस्य भागो द्वौ सोमराज्यास्तथैव च ।

भक्ष्यमाणमिदं प्रातर्गुह्यदद्रुविनाशनम् ॥ ४७ ॥

---

मिलित्वा चूर्णमपेक्ष्य चतुर्गुणाभ्यां लौहपात्रे लेपयोग्यता यावत् तावत् पाक कुर्यात् ॥ ४१ ॥

विषेत्यादौ ।—विष—स्थावरविषम्, अनलः,—भल्लातकः । अत्रापि पूर्वचूर्णादि-मानम्, अर्कस्नुहीचीराभ्यां पाकविधिरेवेति वदन्ति ॥ ४२ ॥

शशाङ्कलेखेत्यादि ।—वाग्भटस्य । शशाङ्कलेखा—सोमराजी, हुताशः,—चित्रकः, अयोमल—शोधितमण्डूरचूर्णम् । अत्रानिर्दिष्टचूर्णस्य माषकत्रयं चतुष्टयं वा गृहीत्वा तिलतैलेन लेह्यम् ॥ ४४ ॥

तीव्रेणेत्यादौ ।—नियमेन इत्यनेन प्रात्यहिकत्व पथ्याशित्वञ्च गमयति । सोम-राजीकृष्णतिलयोस्तु प्रत्येकं माषकत्रयं माषकचतुष्टयं वा व्यवहरन्ति । सोमराजी-मिति—चन्द्रश्रेणीम् ॥ ४५ ॥

घर्मसेवी—आतपसेवी । वागुजी—सोमराजीबीजम्, अस्य च माषकचतुष्टय-मुष्णोदकेनालोड्य पिबेत् ॥ ४६ ॥

अवल्गुजाद्वीजकर्षं पीत्वा कोष्णेन वारिणा।
भोजनं सर्पिषा कार्य्यं सर्वकुष्ठप्रणाशनम्॥ ४८॥

नवकषायः,—

त्रिफलापटोलरजनी-मञ्जिष्ठारोहिणीवचानिम्बैः।
एष कषायोऽभ्यस्तो निहन्ति कफपित्तजं कुष्ठम्॥ ४९॥

छिन्नायाः स्वरसो वापि सेव्यमानो यथाबलम्।
जीर्णे घृतेन भुञ्जीत मुद्गयूषोदकेन वा।
अतिपूतिशरीरोऽपि दिव्यरूपो भवेन्नरः॥ ५०॥
पटोलखदिरारिष्ट-त्रिफलाकृष्णवेत्रजम्।
तिक्ताशनः पिबेत् क्वाथं कुष्ठी कुष्ठं व्यपोहति॥ ५१॥

सप्तसमो योगः,—

तिलाज्यत्रिफलाक्षौद्र-व्योषभल्लातशर्कराः।
वृष्यः सप्तसमो मेध्यः कुष्ठहा कामचारिणः॥ ५२॥
विडङ्गत्रिफलाकृष्णा-चूर्णं लीढं समाक्षिकम्।
हन्ति कुष्ठं क्रिमीन् मेहान् नाडीव्रणभगन्दरान्॥ ५३॥
इन्द्राशनं समादाय प्रशस्तेऽहनि चोद्धृतम्।
तच्चूर्णं मधुसर्पिर्भ्यां लिहेत् क्षीरघृताशनः।
हत्वा च सर्वकुष्ठानि जीवेद्वर्षशतद्वयम्॥ ५४॥

---

एवं इत्यादावपि उष्णोदकमनुपेयम्॥ ४७। ४८॥

त्रिफलेत्यादि—स्पष्टम्॥ ४९॥

छिन्नाया इत्यादौ।—छिन्ना—गुडूची॥ ५०॥

पटोलेत्यादौ।—कृष्णवेत्रं—कालियालतेति ख्यातम्। तिक्ताशन इति—तिक्त-भूयिष्ठाहारः॥ ५१॥

तिलेत्यादौ।—सप्तसम इति—संज्ञाबलात् मिलितत्रिफलैव तिलाद्येकभाग-समा, एवं व्योषमपि॥ ५२। ५३॥

इन्द्राशनमित्यादौ।—चूर्णमिति।—माषकद्वयं त्रयं वा देयम्॥ ५४॥

य: खादेदभयारिष्टमरिष्टामलकानि वा।
स जयेत् सर्वकुष्ठानि मासादूर्द्ध्वं न संशय: ॥ ५५ ॥
दह्यमानाघृत: कुम्भे मूलगो खदिरादरस:।
साज्यधात्रीरसक्षौद्रो हन्यात् कुष्ठं रसायनम् ॥ ५६ ॥
वायस्येडगजाकुष्ठ-कृष्णाभिर्गुड़िका कृता।
वस्तमूत्रेण सम्पिष्टा लेपाच्छ्वित्रविनाशिनी ॥ ५७ ॥
पूतीकार्कस्नुङ्नरेन्द्रद्रुमाणाम्
मूत्रै: पिष्टा: पल्लवा: सौमनाय।
लेपाच्छ्वित्रं घ्नन्ति दद्रुव्रणांय
कुष्ठान्यर्शांस्युग्रनाड़ीव्रणांय ॥ ५८ ॥
गजचित्रव्याघ्रचर्म-मसीतैलविलेपनात्।
श्वित्रं नाशं व्रजेत् किंवा पूतिकीटविलेपनात् ॥ ५८ ॥
कुड़वोऽवल्गुजबीजाद्धरितालचतुर्थभागसंमिश्र:।
मूत्रेण गवां पिष्ट: सवर्णकरण: पर: श्वित्रे ॥ ६० ॥
धात्रीखदिरयो: क्वाथं पीत्वावल्गुजसंयुतम्।
शङ्खेन्दुधवलं श्वित्रं तूर्णं हन्ति न संशय: ॥ ६१ ॥

---

य: खादेदित्यादौ।—अरिष्ट:,—निम्ब ॥ ५५ ॥

दह्यमानादित्यादौ।—खदिररसधात्रीरसौ तुल्यौ। घृतक्षौद्रे तु प्रक्षेप्ये इत्याहु: ॥ ५६ ॥

वायसीत्यादौ।—वायसी—काकमाची ॥ ५७ ॥

पूतीकेत्यादि।—मुमुनस्व। पूतीक,—नाटाकरञ्ज, नरेन्द्रद्रुम,—आरग्वध:, एषां पल्लवा इत्यन्वय, तथा सौमनाय पल्लवा—जातीपल्लवा इत्यर्थ. ॥ ५८ ॥

गजेत्यादौ।—चित्रव्याघ्र,—चित्रितचर्मा व्याघ्र.। केवलगजचर्ममसीलेपश्च श्वित्र-हरत्वेनोक्तो यथा—"गजजन्त्वङ्घ्रिमूलं चौर विषविनाशनम्। गजचर्ममसीलेपो लेपो वा पूतिकीटक: ॥" इति। पूतिकीट:,—पादुकाकीट:, "पादकुरा" इति लोके ख्यात. ॥ ५९—६१ ॥

क्षारे सुदग्धे गजलण्डजे च
गजस्य मूत्रेण बहुस्रुते च ।
द्रोणप्रमाणं दशभागयुक्तम्
दत्त्वा पचेद्वीजमवल्गुजस्य ॥
एतद्यदा चिक्कणतामुपैति
तदा सुसिद्धां गुडिकां प्रयुञ्ज्यात् ।
श्वित्रं विलिम्पेदथ तेन घृष्टम्
तदा व्रजत्याशु सवर्णभावम् ॥ ६२ ॥
श्वेतजयन्तीमूलं पिष्टं पीतञ्च गव्यपयसैव ।
श्वित्रं निहन्ति नियतं रविवारे वैद्यनाथाज्ञा ॥ ६३ ॥

चक्रनिम्बम्,—

पुष्पकाले च पुष्पाणि फलकाले फलानि च ।
सञ्चूर्ण्य पिचुमर्दस्य त्वङ्मूलानि दलानि च ।

---

क्षार इत्यादि ।—सुश्रुतस्य । गजलण्ड—गजपुरीषं ; जलगण्डजेति पाठे—जलगण्ड.,—भ्रमठ. । गजस्य मूत्रेण इत्यनन्तरं पक्व इति शेषः । बहुस्रुत इति ।—एकविंशतिवारं सप्तवारं वा परिस्रुते । दशभागयुक्तमिति ।—द्रोणस्य दशमांशेन युक्तमवल्गुजमित्यर्थः । एतस्य क्रियापरिपाटी लिख्यते । प्रथमतो गजलण्डक्षारस्य द्रोणमेकं २५६ पलं ग्राह्यम् ; ततस्तत्पाकार्थं गजमूत्रं क्षारपरिभाषया षड्गुणं दीयमानं द्रवद्वैगुण्येन द्वादश द्रोणा भवन्ति, चतुर्गुणगणनया तु—षड् द्रोणानि स्युः, तेन मूत्रशराव १९२—"प्रायस्त्रिभागावशिष्टेऽग्निम्" इति वचनेन तृतीयभागावशेषात् द्वैगुण्येन द्रोणमेकं ग्राह्यं, तत्र शराव ६४ । ततस्तृतीयभागावशिष्टक्षारोदकद्रोणापेक्षया दशमांशेनावल्गुजबीजं पिष्टा तत्र प्रक्षिप्य पचेत् । तेनावल्गुजबीजस्य किञ्चिन्न्यूनत्रयोदशमाषकाधिकैकपञ्चाशत्पलानि भवन्ति, पल ३१, तोला १, माषा ५ ; अन्ये तु—षट्पञ्चाशदधिकपलशतद्वयरूपक्षारद्रोणापेक्षया दशमांशेनावल्गुजबीजं रक्षन्ति, तेन तन्मते—अवल्गुजबीजस्य पल २५, कर्ष २, माषा ६, रति ४, एतन्मानं भवति ; किन्तु व्यवहारः पूर्वेणैव । ततोऽवतार्य शिलायां पिष्टा चिक्कणतामुपगते सति गुडिका कार्या । घृष्टमिति ।—फल्गुपत्रकरीषादिना ॥ ६२ ॥

श्वेतजयन्तीत्यादौ ।—गोपयसैव पिष्टं पीतञ्चेत्यर्थः ॥ ६३ ॥

विडङ्गान्यजमोदाञ्च मुस्तान्यमरदारु च।
यावन्त्येतानि सर्वाणि तावन्मात्रन्तु गुग्गुलुम्॥
संक्षुद्य सर्पिषा सार्द्धं गुड़िकां कारयेद्भिषक्।
प्रातर्भोजनकाले वा भक्षयेत् तु यथाबलम्॥
हन्त्यष्टादश कुष्ठानि क्रिमीन् दुष्टव्रणानपि।
ग्रहण्यर्शोविकारांश्च मुखामयगलग्रहान्॥
गृध्रसीमथ भग्नञ्च गुल्मञ्चापि नियच्छति।
व्याधीन् कोष्ठगतांश्चान्यान् जयेद्विष्णुरिवासुरान्॥ ६५॥

पञ्च भल्लातकांश्छित्त्वा साधयेद्विधिवज्जले।
कषायं तं पिबेच्छीतं घृतेनाक्तौष्ठतालुकः॥
पञ्चवृद्ध्या पिबेद् यावत् सप्ततिं ह्रासयेत् ततः।
जीर्णेऽद्यादोदनं शीतं घृतक्षीरोपसंहितम्॥
एतद्रसायनं मेध्यं वलीपलितनाशनम्।
कुष्ठार्शःक्रिमिदोषघ्नं दुष्टशुक्रविशोधनम्॥ ६६॥

तैलं भल्लातकानाञ्च पिबेन्मासं यथाबलम्।
सर्वोपतापनिर्मुक्तो जीवेद्वर्षशतं दृढः॥ ६७॥

प्रलेपोद्वर्त्तनस्नान-पानभोजनकर्मणि।
शीलितं खादिरं वारि सर्वत्वग्दोषनाशनम्॥ ६८॥

तिक्तषट्पलकं घृतम्—

निम्बपटोलं दार्वीं दुरालभां तिक्तरोहिणीं त्रिफलाम्।
कुर्य्यादर्द्धपलांशान् पर्पटकं त्रायमाणाञ्च॥

---

चित्रकेत्यादि।—स्पष्टम्॥ ६५॥

पञ्चेत्यादौ।—*विधिवदिति—क्वाथविधिना, पिप्पलीवर्द्धमानवदनापि हृद्धि-*
ह्रासौ॥ ६६॥

तैलमित्यादौ।—भल्लातकतैलं सूर्य्यतेन ग्राह्यम्॥ ६७। ६८॥

निम्बेत्यादौ।—यद्यपि "सर्पिश्चाप्यनव हितम्" इति वचनात् पुराणसर्पिष एव सर्व्वत्रौपयौगिकत्व, तथाप्यत्र योगमहिम्ना नवसर्पिष एव प्रयोजकत्वमिति वचनात्

सलिलाढ़कसिद्धानां रसेऽष्टभागस्थिते क्षिपेत् पूते।
चन्दनकिराततिक्तकमागधिकात्रायमाणाश्च॥
मुस्तकवत्सकवीजं कल्कीकृतमर्द्धकार्षिकान् भागान्।
नवसर्पिषश्च षट्पलमेतत् सिद्धं घृतं पेयम्॥
कुष्ठज्वरगुल्मार्शोग्रहणीपाण्डामयश्वयथून् हन्ति।
पामाविसर्पपिड़काकण्डूगलगण्डनुत् सिद्धम्॥ ६९॥

पञ्चतिक्तघृतम्—

निम्बं पटोलं व्याघ्रीञ्च गुडूचीं वासकं तथा।
कुर्याद्दशपलान् भागानेकैकस्य सुकुट्टितान्॥
जलद्रोणे विपक्तव्यं यावत् पादावशेषितम्।
घृतप्रस्थं पचेत् तेन त्रिफलागर्भसंयुतम्॥
पञ्चतिक्तमिदं ख्यातं सर्पिः कुष्ठविनाशनम्।
अशीतिं वातजान् रोगांश्चत्वारिंशच्च पैत्तिकान्॥
विंशतिं श्लैष्मिकांश्चैव पानादेवापकर्षति।
दुष्टव्रणक्रिमीनर्शः पञ्च कासांश्च नाशयेत्॥ ७०॥

तिक्तकघृतम्—

त्रिफलाद्विनिशावासा-यासपर्पटकूलकान्।
त्रायन्तीकटुकानिम्बान् प्रत्येकं द्विपलोन्मितान्॥
क्वाथयित्वा जलद्रोणे पादशेषेण तेन तु।
घृतप्रस्थं पचेत् कल्कैः पिप्पलीघनचन्दनैः॥

---

प्रदीप्यते। 'सर्पिष' इति पद—षट्पलमानप्रदर्शनार्थम्। द्वितीयन्तु 'घृतम्' इति पद—पेयत्वोपदर्शनार्थम्, तथा प्रथमं सिद्धमिति पक्व, द्वितीयन्तु प्रसिद्धिख्यापकम्। अनेन च षट्पलाभिधानेन कुष्ठे व्योषा षट्पली चेदभावा एकाङ्गोपयोज्या दर्शितत्वात्॥ ६९॥

पञ्चतिक्तघृत।—चत्वारिंशच्च पैत्तिकानिति।—चत्वारिंशद्रोगाश्चानपकर्षति। कालानित्याकाङ्क्षायामुक्त—पैत्तिकानिति।—एव मेदस्विता श्लोकता कार्य्या, अन्यथा चत्वारिंशतमिति द्वितीया स्यात्॥ ७०॥

करवीराद्यं तैलम्—

श्वेतकरवीरकरसो गोमूत्रं चित्रको विडङ्गञ्च ।
कुष्ठेषु तैलयोगः सिद्धोऽयं सम्मतो भिषजाम् ॥ ८३ ॥

श्वेतकरवीराद्यं तैलम्—

श्वेतकरवीरमूलं विषांशसाधितं गवां मूत्रे ।
चर्मदलसिध्मपामाविस्फोटक्रिमिकिटिमजित् तैलम् ॥८४॥

स्वल्पसिन्दूराद्यं तैलम्—

सिन्दूरार्द्धपलं पिष्ट्वा जीरकस्य पलं तथा ।
कटुतैलात् पचेन्मानीं सद्यः पामाहरं परम् ॥ ८५ ॥

महासिन्दूराद्यं तैलम्—

सिन्दूरं चन्दनं मांसी विडङ्गं रजनीद्वयम् ।
प्रियङ्गुं पद्मकं कुष्ठं मञ्जिष्ठां खदिरं वचाम् ॥
जात्यर्कविवृतानिम्ब-करञ्जं विषमेव च ।
कृष्णावेत्रकलोध्रञ्च प्रपुन्नाडञ्च संहरेत् ॥

---

चित्रतैले ।—नक्तमालं—करञ्जबीजम् ; अर्कज्—अर्कस्य क्षीरम् ; तगरं—तगर-पादिका ; मालती—जाती, तस्याः पत्रम् ; सिन्धुवारिका—निर्गुण्डी ॥ ८१ ॥

श्वेतकरवीरेत्यादौ ।—करवीररसगोमूत्रयोर्मिलित्वा चातुर्गुण्यम् । शेषस्य तु कल्कत्वम् ॥ ८३ ॥

श्वेतकरवीरमूलमित्यादौ ।—श्वेतकरवीरस्य मूलं यत्र, श्वेतं करवीरस्य मूलं यत्रेति वा विग्रहः तैलविशेषणता ज्ञेया । विषांशसाधितमिति ।—विषस्यांशश्चतुर्थो भागः, स च करवीरमूलापेक्षया इति केचित् । अन्ये तु—गतविषतैले विषस्य पलमुक्तं तदपेक्षया कर्षमाहुः ; तन्न, तन्त्रान्तरीयवाक्यत्वात् । अन्ये पुनः, अंशः,—भागः, तेन विषकरवीरमूलयोः समभागयोरेव स्नेहपादिकत्वेन कल्कत्वं, व्यवहारोऽप्यनेनैव ॥८४॥

स्वल्पसिन्दूराद्ये ।—मानीम् इति ।—अष्टौ पलानि । वृन्दे तु—"कटुतैलं पचेदाभ्यां सद्यःपामाहरं परम्" इति पठ्यते । तन्मते—वृद्धवैद्यव्यवहारादेव अष्टपलं ग्राह्यम् ॥ ८५ ॥

श्लक्ष्णपिष्टानि सर्वाणि योजयेत् तैलमात्रया।
अभ्यङ्गेन प्रयुञ्जीत सर्वकुष्ठविनाशनम्॥
पामाविचर्चिकाकण्डू-विसर्पादिविनाशनम्।
रक्तपित्तोत्थितान् हन्ति रोगानेवंविधान् बहून्॥ ८६॥

आदित्यपाकं तैलम्—

मञ्जिष्ठात्रिफलालाक्षा-निशाशिलालगन्धकैः।
चूर्णितैस्तैलमादित्य-पाकं पामाहरं परम्॥ ८७॥

दूर्वाद्यं तैलम्—

स्वरसेन तु दूर्वायाः पचेत् तैलं चतुर्गुणम्।
कच्छूविचर्चिकापामा अभ्यङ्गादेव नाशयेत्॥ ८८॥

अर्कमनःशिलातैले—

अर्कपत्ररसे पक्वं कटुतैलं निशायुतम्।
मनःशिलायुतं वापि पामाकण्ड्वादिनाशनम्॥ ८९॥

गण्डीरिकाद्यं तैलम्—

गण्डीरिकाचित्रकमार्कवार्क-कुष्ठद्रुमत्वग्लवणैः समूत्रैः।
तैलं पचेन्मण्डलकुष्ठदद्रु-दुष्टव्रणारुःकिटिभापहारि॥ ९०॥

---

महासिन्दूराद्ये—लाक्षा, पत्रं, अर्कस्य क्षीरं, करञ्जस्य फलम्। तैलमात्रया—मध्यरूपया॥ ८६॥

आदित्यपाकतैले।—अत्र तैलसमं दत्त्वा जलमौषधपर्यन्तमातपे स्थाप्यं, जलं विना पाकानुपपत्तेः। एवमिन्द्रलुप्तीकादित्यपाकेऽपि गुडूचीरसमेव तैलसमं व्यवहरन्ति वृद्धाः। अन्ये तु—द्रवानुक्तावद्रवमेवादित्यपाकमाहुः॥ ८७॥

दूर्वातैले।—चतुर्गुणं यथा स्यात् तथा दूर्वास्वरसेन पचेत्। दूर्वास्वरसेन चतुर्गुणेन तैलं पचेदित्यर्थः। क्वचेऽपि—"स्वरसेऽपि च दूर्वायाः पचेत्तैलं चतुर्गुणे" इति पाठः॥८८॥

अर्कतैले।—कल्कभेदात् योगद्वयं, स्वरसश्च चतुर्गुणः, कल्कश्चाष्टांश एव स्वरससाध्यत्वात्॥ ८९॥

गण्डीरिकेत्यादौ।—गण्डीरिका—सुही, तस्याः क्षीरम्; एवमर्कस्यापि, द्रुम,—स्वर्णालु, तस्य त्वक्, लवण—सैन्धव, यदुक्तमायुर्वेदसारे—"पक्वं कणार्कसिन्धूत्थकुष्ठसुव्रक्षिमार्कवैः। समूत्रैस्तैलमाहन्ति दद्रूंश्च किटिमानि च॥" इति। अत्र कर्षी—

पृथ्वीसारतैलम्—

चित्रकस्याथ निर्गुण्ड्या हयमारस्य मूलतः।
नाड़ीचवीजादियतः काञ्जिपिष्टं पलं पलम्॥
करञ्जतैलाष्टपलं काञ्जिकस्य पलं पुनः।
मिश्रितं सूर्यसंपक्वं तैलं कुष्ठव्रणास्रजित्॥ ९१॥

सोमराजीतैलम्—

सोमराजी हरिद्रे द्वे सर्षपाः कुष्ठमेव च।
करञ्जैड़गजावीजं पथमारग्वधस्य च॥
चतुर्गुणं जलं दत्त्वा गोमूत्रप्रस्थसंयुतम्।
विपचेत् सार्षपं तैलं नाड़ीदुष्टव्रणापहम्॥
अनेनाशु प्रणश्यन्ति कुष्ठान्यष्टादशैव तु॥
नीलिका पिप्लवो व्यङ्गो गम्भीरं वातशोणितम्।
कण्डूत्यच्छप्रशमनं कच्छूपामाविनाशनम्॥ ९२॥

पक्षात् पक्षाच्छर्दनान्यभ्युपेयात्
मासान्मासात् संसनञ्चाप्यधस्तात्।
त्र्यहात् त्र्यहाद्वस्ततश्चावपीड़ान्
मासेष्वस्रस्रोचयेत् षट्सु षट्सु॥ ९३॥

योषिन्मांससुरात्यागः शालिमुद्गयवादयः।
पुराणास्तिक्तशाकञ्च जाङ्गलं कुष्ठिनां हितम्॥ ९४॥

इति कुष्ठ-चिकित्सा।

---

स्वर्णालुः। तथा च द्रव्यावली—"चारिवतक्तया कर्षी कर्षिकारोऽथ चैरतः" इति। अन्ये तु—गन्धीरिका—मञ्जिष्ठा, द्रुमः,—कुटजः, तस्य त्वगित्याहुः॥ ९०॥

चित्रकेति।—अत्यन्तोत्कृष्टगुणत्वात् पृथ्वीसार इति संज्ञा॥ ९१। ९२॥

पक्षादित्यादि।—पृथुतस।—संसन—विरेचनम्। नस्तत इति।—मासापुटयोरवपीडान् नस्यविशेषान् दद्यात्। अवपीड़शब्देन बहुमावसर्पिःप्रयोगोऽप्युच्यते तन्निरासार्थं नस्तत इति पदम्॥ ९३॥

योषिदित्यादौ।—मांसमात्रं निषिद्धं, जाङ्गलस्य विधानात्॥ ९४॥

इति कुष्ठ चिकित्सा विवृतिः।

## अथोदर्द-कोठ-शीतपित्त-चिकित्सा ।

अभ्यङ्गः कटुतैलेन सेकश्चोष्णाम्बुभिस्ततः ।
उदर्दे वमनं कार्यं पटोलारिष्टवारिणा ॥ १ ॥
त्रिफलापुरकृष्णाभिर्विरेकश्चात्र शस्यते ।
त्रिफलां क्षौद्रसहितां पिबेद्वा नवकार्षिकम् ॥ २ ॥
विसर्पोक्तममृतादिं भिषगत्रापि योजयेत् ।
सितां मधुकसंयुक्तां गुड़मामलकैः सह ॥ ३ ॥
सगुड़ं दीप्यकं यस्तु खादेत् पथ्याशभुङ् नरः ।
तस्य नश्यति सप्ताहादुदर्दः सर्वदेहजः ॥ ४ ॥
सिद्धार्थरजनीकल्कैः प्रपुन्नाड़तिलैः सह ।
कटुतैलेन संमिश्रमेतदुद्वर्त्तनं परम् ॥ ५ ॥
दूर्वानिशायुतो लेपः कच्छूपामाविनाशनः ।
क्रिमिदद्रुहरश्चैव शीतपित्तापहः स्मृतः ॥ ६ ॥
अग्निमन्थभवं मूलं पिष्टं पीतञ्च सर्पिषा ।
शीतपित्तोदर्दकोठान् सप्ताहादेव नाशयेत् ॥ ७ ॥

---

प्रायस्तुल्यचिकित्सितत्वात् उदर्दादिचिकित्सामाह, अभ्यङ्ग इत्यादि ।—सेक इत्यत्र स्वेद इत्यपि पाठः । अत एवोक्तमन्यत्र—"अभ्यङ्गः कटुतैलेन स्वेदनं चोष्णवारिणा" इति । पटोलारिष्टवारिणेत्यत्रानुक्तमपि मदनफलकल्कं प्रक्षेप्यम् ॥ १ ॥

त्रिफलापुरकृष्णाभिरिति ।—त्रिफलाया: कषायः, गुग्गुलुपिप्पल्यौ प्रक्षेप्ये, अत्रैव च व्यवहाराद् गुग्गुलोर्द्वय माषका, पिप्पल्यास्तु चत्वारो माषका इति । त्रिफलां क्षौद्रसहिता-मिति ।—त्रिफलायाः कषायः, क्षौद्रन्तु प्रक्षेप्यम् । नवकार्षिकं वातरक्तोक्तम् ॥ २ ॥

विसर्पोक्तममृतादिमिति ।—"अमृतवृषपटोलं मुस्तकम्" इत्यादिनोक्तम् । तस्यैव शीतपित्तघ्नत्वेनोक्तत्वात्; न पुनरमृतवृषपटोलं निम्बकल्कैरुपेतमित्यादिकम् । सितां मधुकसंयुक्तामिति ।—अत्र सितां कटुकया युक्तामिति केचित् पठन्ति ॥ ३ ॥

दीप्यक—यमानिकाम् ॥ ४—७ ॥

कुष्ठोक्तञ्च क्रमं कुर्य्यादम्लपित्तघ्नमेव च ।
उदर्द्दोक्तां क्रियाञ्चापि कोठरोगे समासतः ।
सर्पिः पीत्वा महातिक्तं कार्य्यं शोणितमोक्षणम् ॥ ८ ॥
निम्बस्य पत्राणि सदा घृतेन धात्रीविमिश्राण्यथवोपयुञ्ज्यात् ।
विस्फोटकोठक्षतशीतपित्तं कण्ड्वस्रपित्तं रकसाञ्च हन्यात् ॥९॥
क्षारसिन्धूत्थतैलैश्च गात्राभ्यङ्गं प्रयोजयेत् ।
गाम्भारिकाफलं पक्वं शुष्कमुत्स्वेदितं पुनः ।
क्षीरेण शीतपित्तघ्नं खादितं पथ्यसेविना ॥ १० ॥
तैलोद्वर्त्तनयोगेन योज्य एलादिको गणः ।
शुष्कमूलकयूषेण कौलत्थेन रसेन वा ॥
भोजनं सर्वदा कार्य्यं लावतित्तिरिजेन वा ।
शीतलान्यन्नपानानि बुद्ध्वा दोषगतिं भिषक् ।
उष्णानि वा यथाकालं शीतपित्ते प्रयोजयेत् ॥ ११ ॥

इत्युदर्द्द कोठ शीतपित्त चिकित्सा ।

---

उदर्द्दचिकित्सां कोठरोगेऽप्यतिदिशति—उदर्द्दोक्तेत्यादि ।—महातिक्तं सर्पिः, कुष्ठोक्तम् ॥ ८ ॥

निम्बस्येत्यादि ।—योगद्वयम् ; अन्ये तु—एकमेव योगं वदन्ति । रकसा—क्षुद्रकुष्ठभेद इति श्रीकण्ठः ॥ ९ ॥

क्षारो—यवक्षारः, तैलञ्च कटुतैलं वदन्ति । गाम्भारिकेत्यादि ।—दुग्धकाथ्यं गाम्भारीफलं गव्यदुग्धं दत्त्वा उत्स्विद्य खादयम् ॥ १० ॥

तैलेत्यादि ।—वक्ष्यमाण एलादिको गणः,—तैलयोगेन उद्वर्त्तनयोगेन च योज्य इत्याहुः ॥ ११ ॥

इत्युदर्द्द कोठ शीतपित्त-चिकित्सा विवृतिः ।

## अथाम्लपित्त-चिकित्सा।

वान्तिं कृत्वाम्लपित्ते तु विरेकं मृदु कारयेत्।
सम्यग्वान्तविरिक्तस्य सुस्निग्धस्यानुवासनम्।
आस्थापनं चिरोद्भूते देयं दोषाद्यपेक्षया॥१॥
क्रिया शुद्धस्य शमनी ह्यनुबन्धव्यपेक्षया।
दोषसंसर्गजे कार्य्या भेषजाहारकल्पना।
ऊर्द्ध्वगं वमनैर्धीमानधोगं रेचनैर्हरेत्॥२॥
तिक्तभूयिष्ठमाहारं पानं वापि प्रकल्पयेत्।
यवगोधूमविकृतीस्तीक्ष्णसंस्कारवर्जिताः।
यथास्वं लाजशक्तून् वा सितामधुयुतान् पिबेत्॥३॥
निस्तुषयववृषधात्रीक्वाथस्त्रिसुगन्धिमधुयुतः पीतः।
अपनयति चाम्लपित्तं यदि भुङ्क्ते मुद्गयूषेण॥४॥

---

अथाम्लपित्तचिकित्सितमुच्यते, वान्तिं कृत्वेति।—वमनञ्च पटोला-दिभिः। अत्र तन्त्रान्तरं यथा,—"प्रागम्लपित्तरोगार्त्तं कुलत्थारिष्टवासरिभिः। सराठ-क्षौद्रसिन्धूत्थैर्वमनं कारयेद्भिषक्।" इति। राठ—मदनफलम्॥१॥

क्रियेत्यादि।—दोषसंसर्गजे अनुबन्ध्यापेक्षया अनुबन्धभूतदोषाविरोधेन शमनी प्रधानरूपा भेषजाहारकल्पना क्रिया कार्य्येत्यर्थः। प्रकृतवमनविरेचनयोर्विषयमाह, ऊर्द्ध्वगमित्यादि।—ऊर्द्ध्वगे बहुकफे वमनम्, अधोगे तु—अम्लपित्ते सपित्ते विरे-चनम्॥२॥

*यवगोधूमेति।*—यवगोधूमौ हि सरत्वमधुरत्वादिना अम्लपित्ते हितौ, तयोः पैष्यादिरूपान् विकारान्। तीक्ष्णसंस्कारवर्जिता इति।—कट्वम्ललवणादिसंस्कारयोग-रहिताः। यथास्वमिति।—पिबेदित्यनेन योज्यम्, तेन दोषसंसर्गाद्यपेक्षया तत्तद्दोष-प्रत्यनीकेन द्रव्येण पिबेदित्यर्थः॥३॥

त्रिसुगन्धिमधुयुत इति।—त्रिसुगन्धि—त्वगेलापत्रम्, तच्च सौगन्ध्यभावकारकम्; मधु तु प्रक्षेपन्यायेन योज्यम्॥४॥

कफपित्तवमीकण्डूज्वरविस्फोटदाहहा।
पाचनो दीपनः क्वाथः शृङ्गवेरपटोलयोः ॥ ५ ॥
पटोलं नागरं धान्यं क्वाथयित्वा जलं पिबेत्।
कण्डूपामार्तिशूलघ्नं कफपित्ताग्निमान्द्यजित् ॥ ६ ॥
पटोलविश्वामृतरोहिणीकृतम्
जलं पिबेत् पित्तकफोच्छ्रये तु।
शूलभ्रमारोचकवह्निमान्द्य-
दाहज्वरच्छर्दिनिवारणं तत् ॥ ७ ॥
यवक्षाथापटोलानां क्वाथं क्षौद्रयुतं पिबेत्।
नाशयेदम्लपित्तञ्च अरुचिञ्च वमिं तथा ॥ ८ ॥

द्राक्षे;—

वासामृतापर्पटकभूनिम्बनिम्बमार्कवैः।
त्रिफलाकुलकैः क्वाथः सक्षौद्रयाम्लपित्तहा ॥ ९ ॥
फलत्रिकं पटोलञ्च तिक्ताक्वाथः सितायुतः।
पीतः क्लीतकमध्वाक्तो ज्वरच्छर्द्यम्लपित्तजित् ॥ १० ॥
पथ्याभृङ्गरजचूर्णं युक्तं जीर्णगुडेन तु।
जयेदम्लपित्तजन्यां छर्दिमन्नविदाहजाम् ॥ ११ ॥

वासागुग्गुलुः;—

वासानिम्बपटोलत्रिफलाऽसनयासयोजितो जयति।
अधिककफमम्लपित्तं प्रयोजितो गुग्गुलुः क्रमशः ॥ १२ ॥

---

कफेत्यादौ।—शृङ्गवेर—शुण्ठी ॥ ५—९ ॥

फलत्रिकमित्यादौ।—तिक्तेत्यतः परमेषामिति शेषः; तेन त्रिफलादीनि यान्येतानि एषां क्वाथ इत्यर्थः। क्लीतकं—यष्टिमधु, सिताक्लीतकमधूनीह प्रक्षेप्याणि ॥ १० ॥

पथ्येत्यादौ।—भृङ्गरजचूर्णं—भृङ्गराजस्य चूर्णम् ॥ ११ ॥

वासेत्यादौ।—असनः—पीतशालः, यासः—दुरालभा। वासादीनां चूर्णं गुग्गुलुसमं, गुग्गुलोः प्राधान्यात्। क्रमश इति।—अभ्यासेन ॥ १२ ॥

छिन्नाखदिरयष्ट्याह्व-दार्वम्भो वा मधुद्रवम्।
सद्राक्षामभयां खादेत् सक्षौद्रां सगुडाञ्च ताम्॥ १३॥
कटुका मितावलेह्या पटोलविश्वञ्च मधुसमायुक्तम्॥ १४॥
रक्तस्रुतौ च युक्त्या खण्डं कुष्माण्डकं श्रेष्ठम्॥ १५॥
पटोलधन्याकमहौषधाब्दैः
कृतः कषायो विनिहन्ति शीघ्रम्।
मन्दानलं पित्तबलासदाह-
च्छर्दिज्वरामानिलशूलरोगान्॥ १६॥
छिन्नोद्भवानिम्बपटोलपत्रं फलत्रिकं सुक्वथितं सुशीतम्।
क्षौद्रान्वितं पीतमनेकरूपं सुदारुणं हन्ति तदम्लपित्तम्॥ १७॥
पटोलत्रिफलाऽरिष्ट-शृतं मधुयुतं पिबेत्।
पित्तश्लेष्मज्वरच्छर्दि-दाहशूलोपशान्तये॥ १८॥
सिंहास्यामृतभण्टाकी-क्वाथं पीत्वा समाक्षिकम्।
अम्लपित्तं जयेज्जन्तुः कासं श्वासं ज्वरं वमिम्॥ १९॥
वासाघृतं तिक्तघृतं पिप्पलीघृतमेव वा।
अम्लपित्ते प्रयोक्तव्य गुडकुष्माण्डकं तथा।
पक्तिशूलापहा योगास्तथा खण्डामलक्यपि॥ २०॥

---

छिन्नेत्यादौ।—मधुद्रवमिति।—बहुव्रीहि, तेनाम्भ इत्यस्य विशेषणम्, मध्वत्र प्रक्षेप्यम्। सद्राक्षामित्यादि।—योगद्वयमेतत्॥ १३॥

कटुका सिता चेति।—कटुका—कटुरोहिणी, असिता शर्करेत्यर्थः। पटोलविश्वञ्च मधुसमायुक्तमिति।—पटोलविश्वयोः क्वाथं मधु प्रक्षिप्य पिबेत् इत्यर्थः॥ १४॥

कुष्माण्डखण्डक — रक्तपित्तोक्तम्॥ १५॥

तन्त्रान्तरे पटोलधन्याकेत्यादियोगः, तथा छिन्नोद्भवानिम्बेत्यादियोगश्च क्वचित् पुस्तके दृश्यते, तौ च निर्दोषत्वाद्धन्देन च धृतौ॥ १६। १७॥

पटोलत्रिफलेत्यादौ।—अरिष्ट,—निम्ब॥ १८॥

*सिंहास्येत्यादौ।—सिंहास्य,—वासक, भण्टाकी—कण्टकारी॥ १९॥*

वासाघृत—रक्तपित्तोक्तम्। तिक्तघृतं—कुष्ठोक्तमहातिक्तकं, तथैव अम्लपित्त-

पिप्पली मधुसंयुक्ता चाम्लपित्तविनाशिनी।
जम्बीरस्वरसः पीतः सायं हन्त्यम्लपित्तकम् ॥
गुड़पिप्पलिपथ्याभिस्तुल्याभिर्मोदकः कृतः।
पित्तश्लेष्मापहः प्रोक्तो मन्दमग्निञ्च दीपयेत् ॥ २१ ॥

हिङ्गु च कतकफलानि चिञ्चात्वचो घृतञ्च पुटदग्धम्।
शमयति तदम्लपित्तमम्लभुजो यदि यथोत्तरं द्विगुणम् ॥ २२ ॥

कान्तपात्रे वराकल्को व्युषितोऽभ्यासयोगतः।
सिताक्षौद्रसमायुक्तः कफपित्तहरः स्मृतः ॥ २३ ॥

पञ्चनिम्बादिचूर्णम्—

एकोऽंशः पञ्चनिम्बानां द्विगुणो वृद्धदारकः।
शक्तुर्दशगुणो देयः शर्करामधुरीकृतः ॥
शीतेन वारिणा पीतः शूलं पित्तकफोत्थितम्।
निहन्ति चूर्णं सक्षौद्रमम्लपित्तं सुदारुणम् ॥ २४ ॥

---

कन्तृत्वयुते.। पिप्पलीघृतमत्र परिणामशूलोक्तम्; एतच्च यद्यपि "पक्तिशूलापहा योगा" इत्यनेनैव लभ्यते, तथापि विशेषार्थमुक्तम्, तथा गुडकुष्माण्डकं तथा खण्डामलकी च योज्या ॥ २० ॥

पिप्पलीमधुसंयुक्तेति—अवलेहविधया। जम्बीरेत्यादौ।—पक्वजम्बीरफलरसः, अयञ्च योगो वातोल्बणे अम्लपित्त इत्याह. ॥ २१ ॥

हिङ्ग्वित्यादौ।—कतकफलं जलप्रसादनफलं, प्रायो मगधे भवति। यथोत्तरं द्विगुणमिति।—हिङ्ग्वपेक्षया कतकफलं द्विगुणं, कतकफलापेक्षया तिन्तिडीत्वचम् द्विगुणा, तिन्तिडीत्वगपेक्षया च घृतं द्विगुणमिति। एतत् सर्वं स्थालीमध्ये निक्षिप्य शरावेण पिधायान्तर्धूमं दग्ध्वा माषकचतुष्टयमुपयोज्यम्। तत्रमलस्यानुपूर्व्यं, तन्त्रान्तरसंवादात् ॥ २२ ॥

कान्तपात्र इति।—कान्ताख्यलौहविशेषपात्रे प्रक्षिप्य स्थापितत्रिफलाकल्क इत्यर्थः। शर्करामधुनी प्रक्षेप्ये ॥ २३ ॥

एकोऽंश इत्यादौ।—पञ्चनिम्बानामिति।—निम्बस्य त्वक्पत्रपुष्पफलमूलानां पञ्चानां मिलितानामेको भागः। शक्तुर्दशगुण इति।—निम्बभागापेक्षया; मात्रा चास्य पलमर्द्धपलं वा आहारद्रव्यशक्तुबाहुल्यात् ॥ २४ ॥

अभ्रपर्पटी,—

आशुभक्तोदकैः पिष्टमभ्रकं तत्र संस्थितम्।
कन्दमाणास्थिसंहार-खण्डकर्णरसैरथ॥
तण्डुलीयकशालिञ्च-कालमारिषजेन च।
द्वयोरप्युभृङ्ग-लक्ष्मणाकेशराजजैः॥
पेषणं भावनं कुर्य्यात् पुटस्थानेकशो भिषक्।
यावच्चिन्द्रकं तत् स्याच्छुद्धिरेवं विहायसः॥ २५॥

लौहपर्पटी,—

स्वर्णमाक्षिकशालिञ्च-ध्मातं निर्वापितं जले।
त्रैफलेऽथ विचूर्ण्यैवं लौहं कान्तादिकं पुनः॥
बृहत्पत्रकरीकर्ण-त्रिफलावृद्धदारजैः।
माणकन्दास्थिसंहार-शृङ्गवेरभवैः रसैः॥
दशमूलीमुण्डितिका-तालमूलीसमुद्भवैः।
पुटितं साधु यत्नेन शुद्धिमेवमयो व्रजेत्॥ २६॥

---

सम्प्रति सुधावती व्याख्या। तत्र प्रथममाशुभक्तेत्यादिना अभ्रकपर्पटीमाह।—आशु,—धान्यभेदः। आशुभक्तं धान्याम्लक काञ्जी, गौरवात्। तत्रैकपर्यायोऽस्य कन्द-खलादिषु सचूर्णं आशुभक्तकाञ्जिकं अहोरात्रं स्थापयित्वा तेनैव काञ्जिकेन पेषणीयम्। तत्र कन्दादीनां व्यस्तसमस्तानां स्वरसेन पुनः पेषणं भावनं पुटनञ्च बहुधा कुर्वीत, यावच्चिन्द्रकमभ्रकं स्यादित्यर्थः। तत्र कन्दः,—वन्य ओल, खण्डकर्णः,—खाण्डकाम 'खारकोन' इति ख्यातः। तण्डुलीयकालमारिषौ, स्वल्पपत्र-बृहत्पत्रभेदेन भेदः। द्वयोः,—पुनर्नवा, भृङ्गः,—भृङ्गराजः, लक्ष्मणा—श्वेतकण्टकारी ख्याता। विहायस इति—अभ्रस्य॥ २५॥

लौहपर्पटीमाह, स्वर्णमाक्षिकेत्यादि।—पिष्टाभ्यां स्वर्णमाक्षिकशालिञ्चाभ्यां कान्तादिलौहं लिप्त्वा ततो भस्त्रया वह्नौ ध्मातम्; ततोऽप्यनन्तरमात्यमावविधिवदित-त्रिफलाक्वाथे निर्वापितमित्यर्थः। त्रैफले जले इति।—त्रिफलाक्वाथ इत्यर्थः। तदेव निरुत्थमारितं लौहचूर्णं प्रधानं भृङ्गराजादिना शोधितं बृहत्पत्रकरिकर्णपलाशादि-स्वरसे पुटितं कुर्य्यादित्याह,—बृहत्पत्रेत्यादि।—बृहत्पत्र,—'कदम्ब' इति ख्यातः, अत्र बृहत्पत्रकरिकर्णादेकमपुटनद्रव्येषु मध्ये येषां स्वरसप्राप्तिस्तेषां स्वरसो ग्राह्यः;

मण्डूरशुद्धिः,—

वशिरं श्वेतवाट्यालं मधुपर्णीमयूरकम्।
तण्डुलीयञ्च वर्षाभूं दत्त्वाधश्चोर्द्ध्वमेव च॥
पाक्यं सुजीर्णमण्डूरं गोमूत्रेण दिनत्रयम्।
अन्तर्वाष्पमदग्धञ्च तथा स्थाप्यं दिनत्रयम्।
विचूर्णितं शुद्धिरियं लौहकिट्टस्य दर्शिता॥ २७॥

रसशुद्धिः,—

जयन्त्या वर्द्धमानस्य चार्द्रकस्वरसेन च।
वायस्याश्चानुपूर्व्व्येण मर्दनं रसशोधनम्॥ २८॥

गन्धकशुद्धिः,—

गन्धकं नवनीताख्यं मुद्रितं लौहभाजने।
त्रिधा चण्डातपे शुष्कं भृङ्गराजरसाप्लुतम्॥
ततो वह्नौ द्रवीभूतं त्वरितं वस्त्रगालितम्।
यत्नाद्‌ भृङ्गरसे क्षिप्तं पुनः शुष्कं विशुध्यति॥ २९॥

---

येषान्तु स्वरसो न लभ्यते तेषां पुटनीयलौहसमानानामष्टगुणं जलं दत्त्वा चतुर्भागावशेषकाथेन पुटनं कर्त्तव्यमिति॥ २६॥

वशिरमित्यादिना लौहमलशुद्धिमाह।—वशिरः,—श्वेतवर्षाभूः। मधुपर्णी—गुडूची। मयूरकः,—अपामार्गः। तण्डुलीयः,—तण्डुलीयः। वर्षाभूः,—पुनर्नवा। सुजीर्णमण्डूर—पुराणमण्डूरम्। वशिरादीनां मूलत्वक्पत्रपल्लवान् स्थालीमध्ये पातयित्वा तदुपरि जीर्णमण्डूरं दत्त्वा तैरेव पत्रादिभिराच्छाद्य गोमूत्रं दत्त्वा दिवसत्रयं व्याप्य सुदग्धं यथा स्यात् तथा पाको विधेयः। तदनु पुनरप्येवं विधायान्तर्वाष्पं यथा स्यात् तथा दिनत्रयं स्थाप्यम्। तदनु प्रक्षाल्य आतपे शोषयित्वा चूर्णयेदिति मण्डूरशुद्धिः॥ २७॥

अथ रसशुद्धिमाह, जयन्त्या इत्यादि।—वर्द्धमानः,—एरण्डः। वायसी—काकमाची॥ २८॥

गन्धकशुद्धिमाह, गन्धकमित्यादि।—मुद्रितमिति।—तण्डुलकणपरिमितं कृत्वा लौहभाजने स्थापयित्वा भृङ्गराजस्वरसेनाप्लाव्य चण्डातपे शोषयेत्, एवमपरवारद्वयमपि। तदनु प्रक्षाल्य आतपे संशोष्य लौहपात्रमध्ये स्थापयित्वा ज्वलदङ्गारोपरि दत्त्वा दर्व्विकया सञ्चाल्य यदा तैलवद्‌ द्रवीभवति तदा भृङ्गराजस्वरसपरिपूरित-

सुधावती गुडिका—

गगनाद् द्विपलं चूर्णं लौहस्य पलमात्रकम्।
लौहकिट्टपलार्द्धञ्च सर्व्वमेकत्र संस्थितम्॥
मण्डूकपर्णीवशिर-तालमूलीरसैः पुनः।
वरीभृङ्गकेशराज-कालमारिषजैरथ॥
त्रिफलाभद्रमुस्ताभिः स्थालीपाकाद्विचूर्णितम्।
रसगन्धकयोः कर्षौ प्रत्येकं ग्राह्यमेकतः॥
तन्मर्द्दनाच्छिलाखल्वे यत्नतः कज्जलीकृतम्।
वचा चव्यं यमानी च जीरके शतपुष्पिका॥
व्योषं मुस्तं विडङ्गञ्च ग्रन्थिकं खरमञ्जरी।
त्रिवृता चित्रको दन्ती सूर्य्यावर्त्तः सितस्तथा॥
भृङ्गमाणककन्दौ च खण्डकर्णक एव च।
दण्डोत्पला केशराज-कालावकड़कोऽपि च॥
एषामर्द्धपलं ग्राह्यं पटघृष्टं सुचूर्णितम्।

---

पात्रे घृताक्तमृन्मयलेप पिहितमुखे ग्रन्थक क्षिप्तं ज्वालयित्वा पावान्तरेण पिदध्यात्। तदनु प्रक्षाल्य आतपे शोषयित्वा चूर्णयेदिति अभ्रकशुद्धिः॥ २९॥

अथ शोधिताभ्रक-लौह-लौहमलचूर्णानां मिलित्वा स्थालीपाकमाह, गगनादित्यादि।—गगनादिति।—अभ्रकात्। मण्डूकपर्ण्यादितालमूल्यन्तस्य रसेनाभ्रकलौहतन्मलमिलितचूर्णस्यैकः स्थालीपाकः। वरीति—शतावरी। ततः शतावर्य्यादिकालमारिषान्तरसेन च द्वितीयः स्थालीपाकः। तदनु त्रिफलाभद्रमुस्ताभिरष्टगुणितजलाथविधिकृतक्वाथेन तथैव तृतीयः स्थालीपाक इति। केचित्तु मण्डूकपर्ण्यादितालमूल्यन्तरसेन पुटदानमाह, तत्तु न सम्यक्, पुटदानात् पुरे; पूर्वपुटदानस्य तु रसशोषणादिकर्मेण व्यवधानायेति। स्थालीपाकाद्विचूर्णितमिति।—स्थालीपाकानन्तरं पुनर्लौहशिलायां चूर्णीकर्त्तव्यमित्यर्थः। एतदनन्तरं यद्विधेयं तदाह, रसगन्धकयोः कर्षावित्यादि।—रसगन्धकयोः कर्षौ प्रत्येकमिति च्छेदः। तन्मिलितरसगन्धककर्षचतुष्टयमेकत्र इत्येकीकृत्य कज्जलीकृतं ग्राह्यमिति योज्यम्। वचा चव्यमित्यादिना प्रक्षेप्यचूर्णद्रव्याण्याह। खरमञ्जरी—अपामार्गः। सूर्य्यावर्त्तः,—आमावटसूर्य्यावर्त्तः, स च श्वेतः। माणककन्द,—माणकन्दः। एषाञ्च वचादीनां

प्रत्येकं त्रिफलायाश्च पलार्द्धं पलमेव च ॥
एतत् सर्वं समालोड्य लौहपात्रे तु भावयेत् ।
आतपे दण्डसंघृष्टमार्द्रकस्य रसैस्त्रिधा ॥
तद्रसेन शिलापिष्टां गुड़िकां कारयेद्भिषक् ।
बदरास्थिमितां शुष्कां सुनिगुप्तां निधापयेत् ॥
तत् प्रातर्भोजनादौ च सेवितं गुड़िकात्रयम् ।
अम्लोदकानुपानञ्च हितं मधुरवर्जितम् ॥
दुग्धञ्च नारिकेलञ्च वर्जनीयं विशेषतः ।
भोज्यं यथेष्टमिष्टञ्च वारिभक्ताम्लकाञ्जिकम् ॥
हन्त्यम्लपित्तं विविधं शूलञ्च परिणामजम् ।
पाण्डुरोगञ्च गुल्मञ्च शोथोदरगुदामयान् ॥
यक्ष्माणं पञ्च कासांश्च मन्दाग्नित्वमरोचकम् ।
प्लीहानं श्वासमानाहमामवातं सुदारुणम् ।
गुड़ी क्षुधावती सेयं विख्याता रोगनाशिनी ॥ ३० ॥

जीरकाद्यं घृतम्—

पिष्ट्वाजाजीं सधन्याकं घृतप्रस्थं विपाचयेत् ।
कफपित्तारुचिहरं मन्दानलवमिं जयेत् ॥ ३१ ॥

पटोलशुण्ठीघृतं—

पटोलशुण्ठ्योः कल्काभ्यां केवलं कुलकेन वा ।
घृतप्रस्थं विपक्तव्यं कफपित्तहरं परम् ॥ ३२ ॥

---

चूर्णं प्रत्येकमर्द्धपलम्; त्रिफलायाः मिलिता सार्द्धपलमेकम्; तेन त्रिफलाया प्रत्येकमर्द्धपलमिति फलति । बदरास्थिमितामिति ।—अत्रोपदेशात् कलायपरिमाणाम् इत्याहुः । अत्र क्षीरादिवर्जनं तथा वारिभक्ताम्लकाञ्जिकादिविधानञ्च प्रयोगमाहात्म्यात् । अचिन्त्या हि योगशक्तिरिति ॥ ३० ॥

पिष्ट्वेत्यादौ ।—अर्थं चतुर्गुणम् ॥ ३१ । ३२ ॥

पिप्पलीघृतम्—

पिप्पलीक्वाथकल्केन घृतं सिद्धं मधुप्लुतम् ।
पिबेत्तत् प्रातरुत्थाय अम्लपित्तनिवृत्तये ॥ २३ ॥

द्राक्षाद्यं घृतम्—

द्राक्षामृताशक्रपटोलपत्रैः सोशीरधात्रीघनचन्दनैश्च ।
त्रायन्तिकापद्मकिरातधान्यैः कल्कैः पचेत् सर्पिरुपेतमेभिः ॥
युञ्जीत मात्रां सह भोजनेन सर्वेष्वपानेऽपि भिषग्विदध्यात् ।
बलासपित्तग्रहणीं प्रवृद्धां कासाग्निसादज्वरमम्लपित्तम् ।
सर्वं निहन्यात्तु घृतमेतदाशु सम्यक् प्रयुक्तं ह्यमृतोपमञ्च ॥ २४ ॥

शतावरीघृतम् —

शतावरीमूलकल्कं घृतप्रस्थं पयः समम् ।
पचेन्मृद्वग्निना सम्यक् क्षीरं दत्त्वा चतुर्गुणम् ॥
नाशयेदम्लपित्तञ्च वातपित्तोद्भवान् गदान् ।
रक्तपित्तं तृषां मूर्च्छां श्वासं सन्तापमेव च ॥ २५ ॥

इत्यम्लपित्त चिकित्सा ।

---

पिप्पलीघृते ।—मधुप्लुतमिति ।—सिद्धे घृते घृतपादिकं मधु संमिश्रणीयम् ॥२३॥
द्राक्षेत्यादौ ।—शक्र,—कुटज, तस्य फलमिति वदन्ति । पद्म—पद्मकाष्ठम् ॥२४॥
शतावरीघृते ।—पय समिति ।—पय.शब्देनेह पय.साधर्म्यात् शतावर्या रसो ग्राह्यः, न तु क्षीरं, तस्य पृथगुपादानात् । सममिति ।—घृतेन सह तुल्यम् ॥ २५ ॥

इत्यम्लपित्त चिकित्सा विवृतिः ।

## अथ वीसर्प-विस्फोट-चिकित्सा ।

विरेकवमनालेप-सेचनासृग्विमोक्षणैः ।
उपाचरेद् यथादोषं वीसर्पानविदाहिभिः ॥ १ ॥
पटोलपिचुमर्दाभ्यां पिप्पल्या मदनेन च ।
वीसर्पे वमनं शस्तं तथैवेन्द्रयवैः सह ॥ २ ॥
त्रिफलारससंयुक्तं सर्पिस्त्रिवृतया सह ।
प्रयोक्तव्यं विरेकार्थं वीसर्पज्वरशान्तये ॥
रसमामलकानां वा घृतमिश्रं प्रदापयेत् ॥ ३ ॥
तृणवर्जं प्रयोक्तव्यं पञ्चमूलचतुष्टयम् ।
प्रदेहसेकसर्पिर्भिर्वीसर्पे वातसम्भवे ॥ ४ ॥
कुष्ठं शताह्वासुरदारुमुस्ता-वाराहिकुस्तुम्बुरुकृष्णगन्धाः ।
वातेऽर्कवंशार्त्तगलाश्च योज्याः सेकेषु लेपेषु तथा घृतेषु ॥ ५ ॥

---

यद्यपि त्रिदोषजोऽपि पित्तस्यैवाधिक्यात् प्रायस्तुल्यचिकित्सत्वात् पित्तानन्तरं वीसर्पचिकित्सितमुच्यते । अविदाहिभिरिति—अन्नप्रपानैरिति शेषः ॥ १ ॥

पटोलेत्यादि ।—पटोलपिचुमर्दाभ्यामित्येको योगः । पिप्पल्या मदनेन चेति—द्वितीयः । इन्द्रयवस्तु योगद्वयेऽपि सम्बध्यते इति केचित् । अन्ये तु—पटोलनिम्बयोः क्वाथः पिप्पल्यादिकश्च प्रक्षेप्यमित्येकं योगमाहुः । व्यवहारः पुनरनेनैव ॥ २ ॥

त्रिफलेत्यादि ।—त्रिफलायाः क्वाथे सर्पिस्त्रिवृतं प्रक्षिप्य पिबेत् । रसमित्यादावपि विरेकार्थमिति सम्बध्यते ॥ ३ ॥

तृणवर्जमिति ।—तृणपञ्चमूलं वर्जयित्वा पञ्चमूलचतुष्टयम् । तत्र स्वल्पमहत्पञ्चमूलद्वयं प्रसिद्धमेव । कण्टकिपञ्चमूलं वल्लीपञ्चमूलञ्च यथा,—"मेषशृङ्गी हरिद्रा च विदारी सारिवाऽमृता । वल्ल्याख्यं कण्टकाख्यन्तु श्वदंष्ट्राऽभीरुसैर्यकैः ॥ अहिंसाकरमर्दैश्च सर्वदोषहराश्च ते ॥" अत्र अभीरुः,—शतावरी, सैर्यकः,—झिण्टी, अहिंसा—कालाकडः, करमर्दः,—स्वल्पमधुरफलः, धारीति लोके इति मधुकटीका । तृणपञ्चमूलस्य वर्जनमिह पित्तहरत्वेन वातेऽयौगिकत्वात् ॥ ४ ॥

कुष्ठमित्यादि ।—सुगुतम ।—वाराही—वाराहीकन्दः, एतदभावे चर्मकारालुकः ।

प्रपौण्डरीकमञ्जिष्ठा-पद्मकोशीरचन्दनैः।
सयष्टीन्दीवरैः पित्ते क्षीरपिष्टैः प्रलेपनम् ॥ ६ ॥
कशेरुशृङ्गाटकपद्मगुन्द्राः सशैवलाः सोत्पलकर्दमाश्च।
वस्त्रान्तराः पित्तकृते विसर्पे लेपा विधेयाः सघृताः सुशीताः ॥७॥
प्रदेहाः परिषेकाश्च शस्यन्ते पञ्चवल्कलैः।
पद्मकोशीरमधुक-चन्दनैर्वा प्रशस्यते ॥ ८ ॥
पित्ते तु पद्मिनीपङ्कं पिष्टं वा शङ्खशैवलम्।
गुन्द्रामूलन्तु शुक्तिर्वा गैरिकं वा घृतान्वितम् ॥ ९ ॥
न्यग्रोधपादास्तरुणाः कदलीगर्भ एव च।
बिसग्रन्थिश्च लेपः स्याच्छतधौतघृताप्लुतः ॥ १० ॥
हरेणवो मसूराश्च मुद्गाश्चैव सशालयः।
पृथक् पृथक् प्रदेहाः स्युः सर्वैर्वा सर्पिषा सह ॥ ११ ॥

---

कुस्तुम्बुरु—धन्याक, कृष्णगन्धा—शोभाञ्जनं तस्य मूलं [ अन्ये तु—बीजम् ] अर्कः,—अर्कस्य मूलं, वचा—वचमेली, आर्तगल,—वाघनखामूलम्, अर्जुनवल्कलं वा ॥ ५ ॥

प्रपौण्डरीकेत्यादौ ।—इन्दीवर—नीलोत्पलम् ॥ ६ ॥

कशेर्वित्यादि ।—वृत्तम् ।—पद्म—पद्मकाष्ठ, गुन्द्रा—गुलच, उत्पलं—नीलोत्पल, कर्दम,—पद्मिनीस्थानगतकर्दमः, वस्त्रान्तरा—वस्त्रेणान्तरिताः, एवं सति पित्तवीसर्पेऽतिमृदौ त्वगाद्युपघातो न स्यात्, लेपः स्फोटनश्च सुकर भवतीति। लेपा इति ।—बहुवचननिर्देशादेकैकशोऽप्येते लेपा योज्या इति वदन्ति ॥ ७ ॥

पञ्चवल्कलैरिति ।—"कपीतनवटाश्वत्थ-प्लक्षोदुम्बरवल्कलैः"। प्रशस्यते इत्येक वचनपरिणामेन प्रदेह इति योज्यम् ॥ ८ ॥

*पित्ते त्वित्यादि* ।—श्लोकपादेऽस्मिन्नाद्यो योगः, शङ्खश्च शैवलञ्चेति समाहारः। गुन्द्रा—गुलुच, शुक्तिः,—मुक्तोत्पत्तिस्थानम् [शीतवीर्यत्वात् मौक्तिकमपीति केचित्]। घृतान्वितमिति—योगचतुष्टयेऽपि योज्यम् ॥ ९ ॥

न्यग्रोधेत्यादि ।—वाग्भटस्य। न्यग्रोधस्य पादाः प्ररोहाः, अन्ये तु—मूलानीत्याहुः। तरुणा इति ।—अभिनवाः। 'तरुणाः' इत्यत्र 'गुन्द्रा' इति न पाठः, वाग्भटे चरके च 'तरुणाः' इति पाठात्। कदलीगर्भः,—गर्भस्था कदलीमञ्जरी; बिसग्रन्थिः,—मृणालग्रन्थिः। हरेणवः,—वर्तुलकलायाः ॥ १० ॥ ११ ॥

द्राक्षारग्वधकाश्मर्य्य-त्रिफलाऽमण्डपीलुभिः ।
त्रिवृद्धरीतकीभिश्च वीसर्पे शोधनं हितम् ॥ १२ ॥
गायत्रीसप्तपर्णाब्द-वासारग्वधदारुभिः ।
कुटन्नटैर्भवेल्लेपो वीसर्पे श्लेष्मसम्भवे ॥ १३ ॥
अजाश्वगन्धा सरला च काला सैकैषिका चाप्यथवाजशृङ्गी ।
गोमूत्रपिष्टो विहिमः प्रदेहो हन्याद्विसर्पं कफजं सुशीघ्रम् ॥
मदनं मधुकं निम्बं वत्सकस्य फलानि च ।
वमनञ्च विधातव्यं वीसर्पे कफसम्भवे ॥ १४ ॥
त्रिफलापद्मकोशीर-समङ्गाकरवीरकम् ।
नलमूलमनन्ता च लेपः श्लेष्मविसर्पहा ॥
आरग्वधस्य पत्राणि त्वचः श्लेष्मातकोद्भवाः ।
शिरीषपुष्पं कामाची हिता लेपावचूर्णनैः ॥

---

द्राक्षेत्यादौ ।—आरग्वधम्—आरग्वधस्य फलम्, आमण्डः—एरण्डः, तस्य बीजं, विरेचकत्वात् ; पीलु—पीलुपापयिकं फलम् । क्वाथेन कल्केन वा योगद्वयमिदम् । तत्र पील्वन्त एको योगः, हरीतक्यन्तश्च द्वितीयो योगः इति ॥ १२ ॥

गायत्रीत्यादौ ।—[illegible] आरग्वधस्य पत्रं, कुटन्नटं—कैवर्त्तमुस्तकम् । अयं योगो वासास्थाने धवस्य कुटन्नटस्थाने कुरण्टकस्य प्रक्षेपादपि बोध्यः । यदाह चरकः,— "खदिरं सप्तपर्णञ्च मुस्तमारग्वधं धवम् । कुरण्टकं देवदारु दद्यादालेपनं भिषक् ॥" इति ॥ १३ ॥

अजेत्यादि ।—सुश्रुतस्य ।—अजगन्धा—कीकान्दी, अश्वगन्धा—ख्यातैव ; सरला—त्रिवृत्, काला—कालाकष्ठः, एकैषिका—पाठा, अजशृङ्गी—मेषशृङ्गी, कर्कटशृङ्गी वा । अजगन्धादिरजशृङ्ग्यन्त एको योगः । उक्तं हि वाग्भटे—"कालाऽजशृङ्गी सरला वनगन्धा हयाह्वयाः । एकैषिका च लेपः स्यात् श्वयथावेकगात्रजे ॥" इति । विहिम इति ।—हिमविपरीत, कोष्ण इत्यर्थः ॥ १४ ॥

त्रिफलेत्यादि ।—वाग्भटस्य । समङ्गा—वराहक्रान्ता । करवीरकमित्यत्र करवीरज-मिति पाठे—मूलम् । अनन्ता—अनन्तमूलम् । अयं लेपस्तथा वक्ष्यमाणोऽप्यारग्व-धादिः सम्पृक्तयोगेन स्निग्धः कार्यः ; एवमनन्तरं प्रदेहाः सर्वत्रैव एते देयाः ।

मुस्तारिष्टपटोलानां क्वाथः सर्वविसर्पनुत्।
धात्रीपटोलमुद्गानामथवा घृतसंप्लुतः ॥ १५ ॥

नवकषायगुग्गुलुः,—

अमृतवृषपटोलं निम्बकल्कैरुपेतम्
त्रिफलखदिरसारं व्याधिघातञ्च तुल्यम्।
क्वथितमिदमशेषं गुग्गुलोर्भागयुक्तम्
जयति विषविसर्पान् कुष्ठमष्टादशाख्यम् ॥ १६ ॥

अमृतादिः,—

अमृतवृषपटोलं मुस्तकं सप्तपर्णम्
खदिरमसितवेत्रं निम्बपत्रं हरिद्रे।
विविधविषविसर्पान् कुष्ठविस्फोटकण्डू-
रपनयति मसूरीं शीतपित्तं ज्वरञ्च ॥ १७ ॥

पटोलामृतभूनिम्ब-वासकारिष्टपर्पटैः।
खदिराब्दयुतैः क्वाथो विस्फोटार्त्तिज्वरापहः ॥ १८ ॥
पटोलत्रिफलारिष्ट-गुडूचीमुस्तचन्दनैः।
समूर्वा रोहिणी पाठा रजनी सदुरालभा ॥

---

मन्भृताद्युत इति।—चरकेणोक्तत्वात्। वृषातक,—अडूषर.। काकमाची—काकमाची। सर्वविसर्पनुदिति।—प्रत्येकदोषजसर्वविसर्पनुत्, सन्निपातविसर्पस्यासाध्यत्वात् ॥ १५ ॥

अमृतेत्यादौ।—त्रिफलं—त्रिफला, व्याधिघातः—आरग्वधफलम्। गुग्गुलोर्भागयुक्तमिति।—प्रत्यङ्गोपयोगे प्रक्षेपपरिभाषयैव देयम्। विरिक्ते कर्त्तव्ये प्रक्षेपकालापेक्षया द्वैगुण्येनेत्याह ॥ १६ ॥

अमृतेत्यादौ।—असितवेत्रं—कालिया लता, तस्या मूलम्; अत्रापि विरिक्ते कर्त्तव्ये गुग्गुलुं प्रक्षिपन्ति वृद्धाः ॥ १७ ॥

पटोलत्यादिना—विस्फोटचिकित्सामाह ॥ १८ ॥

कषायं पाययेदेतत् पित्तश्लेष्मज्वरापहम् ।
कण्डूत्वग्दोषविस्फोट-विषवीसर्पनाशनम् ॥ १९ ॥
भूनिम्बवासाकटुकापटोल-फलत्रिकाचन्दननिम्बसिद्धः ।
वीसर्पदाहज्वरवक्त्रशोष-विस्फोटतृष्णावमिनुत् कषायः ॥ २० ॥
सकफे पित्तयुक्ते तु त्रिफलां योजयेत् पुरैः ॥ २१ ॥
दुरालभां पर्पटकं पटोलं कटुकां तथा ।
सोष्णं गुग्गुलुसंयुक्तं पिबेद्वा खदिराष्टकम् ॥ २२ ॥
कुण्डलीपिचुमर्दाम्बु खदिरेन्द्रयवाम्बु वा ।
विस्फोटान् नाशयत्याशु वायुर्जलधरानिव ॥ २३ ॥
चन्दनं नागपुष्पञ्च तण्डुलीयकशारिवे ।
शिरीषवल्कलं जाती लेपः स्याद्दाहनाशनः ॥ २४ ॥
शुकतरुनते च माची रजनी पद्मा च तुल्यानि ।
पिष्टानि शीततोयेन लेपः स्यात् सर्वविस्फोटे ॥ २५ ॥
शिरीषमूलमञ्जिष्ठा-चव्यामलकयष्टिकाः ।
सजातीपल्लवक्षौद्रा विस्फोटे कवडग्रहाः ॥ २६ ॥

---

पटोलत्रिफलेत्यादौ।—"अमृता रोहिणी पाठा रजनी सदुरालभा" इत्यतःपरम् एभिरिति शेषः ; तेन एभिः कृत कषायं पाययेदित्यर्थस्तदति. कार्या ॥१९।२०॥

त्रिफलां योजयेत् पुरैरिति ।—त्रिफलाक्वाथे गुग्गुलुः प्रक्षेप्यः इत्यर्थः ॥ २१ ॥

दुरालभामित्यादावपि दुरालभादीनां क्वाथे गुग्गुलुः प्रक्षेप्यः । सोष्णमिति ।—सहशब्दः ईषदर्थे । खदिराष्टकं मसूर्यां वक्ष्यमाणम्, इदमपि गुग्गुलुयुक्तमेव पिबेत् ॥ २२ ॥

कुण्डलीत्यादि ।—योगद्वयम् । कुण्डली—गुडूची, अम्बु—क्वाथः ॥ २३ ॥

चन्दनमित्यादौ ।—शारिवा—अनन्तमूल, जात्यास्तु पत्रम् ॥ २४ ॥

शुकतर्वित्यादि ।—वाग्भटस्य ।—शुकतरुः—शिरीषः, नतं—तगरपादिका । माची—देवदारु, पद्मा—ब्राह्मणयष्टिका ॥ २५ ॥

शिरीषेत्यादि ।—शिरीषमूलेत्यत्र शिरीषपूगेति पाठे—पूगस्य फलम् । अत्र वा-

शिरीषोडुम्बरौ जम्बूः सेकालेपनयोर्हिताः ।
श्लेष्मातकत्वचो वापि प्रलेपाश्च्योतने हिताः ॥ २७ ॥

दशाङ्गः,—

शिरीषयष्टीनतचन्दनैला-मांसीहरिद्राद्वयकुष्ठबालैः ।
लेपो दशाङ्गः सघृतः प्रदिष्टो विसर्पकण्डूज्वरशोथहारी ॥ २८ ॥

चतुःसमम्—

शिरीषोशीरनागाह्व-हिंस्राभिर्लेपनाद् द्रुतम् ।
विसर्पविषविस्फोटाः प्रशाम्यन्ति न संशयः ॥ २९ ॥

वृषाद्यं घृतम्—

वृषखदिरपटोलपत्रनिम्ब-त्वगमृताऽऽमलकीकषायकल्कैः ।
घृतमभिनवमेतदाशु पक्वं जयति विसर्पगदान् सकुष्ठगुल्मान्॥३०॥

पञ्चतिक्तघृतम्—

पटोलसप्तच्छदनिम्बवासा-फलत्रिकाच्छिन्नरुहाविपक्वम् ।
तत् पञ्चतिक्तं घृतमाशु हन्ति त्रिदोषविस्फोटविसर्पकण्डूः॥३१॥

महापद्मकघृतम्—

पद्मकं मधुकं लोध्रं नागपुष्पस्य केशरम् ।
द्वे हरिद्रे विडङ्गानि सूक्ष्मैला तगरं तथा ॥

---

वचननिर्देशात् प्रत्येकमप्येते कवडे श्रीत्या इति वदन्ति। आलेपनं चौदक सर्वत्र ज्ञेयम् ॥ २६ ॥

आश्च्योतन—सर्वत्र चक्षुषि द्रवौषधदानम् ॥ २७ ॥

शिरीषेत्यादौ।—यष्टी—यष्टिमधु, बाल—ह्रीवेरम् ॥ २८ ॥

शिरीषेत्यादौ।—नागाह्व—नागकेशरत्वक्, हिंस्रा—कालाकड. ॥ २९ ॥

वृषाद्यघृते।—निम्बत्वगमृतामलकीकषायकल्कैरित्यस्य स्थाने छन्दपूरणार्थं निम्बत्वगमृताधात्रीकषायकल्कयुक्तमिति केचित् पठन्ति। अन्ये तु—त्वगमृतकामलकीति पठन्ति, क्वचित्तु तामलकीति पाठ, तन्न, व्यवहाराभावात् ॥ ३० ॥

पञ्चतिक्तघृते—त्रिफलाया कल्क, शेषाणाञ्च कषाय इति व्यवहरन्ति वृद्धवैद्या ॥ ३१ ॥

कुष्ठं लाक्षा पद्मकञ्च सिक्थकं तुत्थमेव च ।
मधूवारः शिरीषश्च कपित्थफलमेव च ॥
तोयेनालोड्य तत् सर्वं घृतप्रस्थं विपाचयेत् ।
यांश्च रोगान् निहन्त्याशु तान् निबोध महामुने ! ॥
सर्पकीटाखुदष्टेषु लूतामूत्रक्षतेषु च ।
विविधेषु स्फोटकेषु तथा कुष्ठविसर्पिषु ॥
नाड़ीषु गण्डमालासु प्रभिन्नासु विशेषतः ।
अगस्त्यविहितं धन्यं पद्मकन्तु महाघृतम ॥ ३२ ॥
रोगस्तु स्नायुकाख्यो यः क्रिया तत्र विसर्पवत् ।
गव्यं सर्पिस्त्र्यहं पीत्वा निर्गुण्डीस्वरसं त्र्यहम् ॥
पिबन् स्नायुकमत्युग्रं हन्त्यवश्यं न संशयः ॥ ३३ ॥
शोभाञ्जनमूलदलैः काञ्जिकपिष्टैः सलवणैर्लेपः ।
हन्ति स्नायुकरोगं यद्वा मोचत्वचो लेपः ॥ ३४ ॥

इति शीतपर्यं विस्फोट चिकित्सा ।

---

महापद्मकघृते ।—नागपुष्पस्य केशरमिति—नागकेशरचूर्णमित्यर्थः ॥ ३२ ॥

स्नायुकरोगचिकित्सामाह, रोगस्त्वित्यादि ।—स्नायुकरोगो गब्दस्या नाम्ना पश्चिमदेशे ख्यातः । यश्च रोगो रुक्मिनिरये गीतः । छन्देन पुनरुक्तः ; यथा,—"शाखासु कुपितो वायुः शोथं कृत्वा विसर्पवत् । भित्त्वैव तं क्षते तत्र शोफं मांसं विशोष्य च ॥ कुर्यात् तन्तुनिभं सूत्रं तत् पिष्टेत्क्रमशस्तुजेः । छिन्ने शनैः क्षतादिति छेदात् तत् कोपमावहेत् ॥ तत्पातात् क्षीयशान्तिः स्यात् पुनः स्यादन्तरे भवेत् । रोगः स स्नायुको नाम्ना तन्तुकश्च प्रकीर्त्तितः ॥" इति । [शाखास्विति—हस्तादिषु, तदिति—सूत्रम् , क्रमशस्तुजेः पिष्टेऽपि सत् क्षतादिति निःसरति । छेदादिति—कदाचिदभिघातादिना सूत्रच्छेदात् । तत्पातादिति—तस्य सूत्रस्य स्वयमेव पतनात् ]। पिबन्नित्यत्र पीत इति पाठे—कर्त्तरि क्तः । मोचत्वचो लेप इति ।—मोचं कदलीफलं, कोष्टकं वा, तस्य त्वक् ॥ ३३ । ३४ ॥

इति शीतपर्यं विस्फोट चिकित्सा विवृतिः ।

# अथ मसूरिका-चिकित्सा ।

सर्वासां वमनं पथ्यं पटोलारिष्टवासकैः ।
कषायैश्च वचावत्स-यष्ट्याह्वफलकल्कितैः ॥ १ ॥
सक्षौद्रं पाययेद् ब्राह्म्या रसं वा हैलमोचिकम् ।
वान्तस्य रेचनं देयं शमनञ्चाबले नरे ॥ २ ॥
सुवर्चोपत्रनिर्यासं हरिद्राचूर्णसंयुतम् ।
रोमान्तीज्वरविस्फोट-मसूरीशान्तये पिबेत् ॥ ३ ॥
उभाभ्यां हृतदोषस्य विशुष्यन्ति मसूरिकाः ।
निर्विकाराश्चाल्पपूयाः पच्यन्ते चाल्पवेदनाः ॥ ४ ॥

कण्टाकुम्भाण्डुमूलं क्वथनविधिकृतं हिङ्गुमाषैकयुक्तम्
पीतं बीजं जयायाः सघृतमुषितवाःपीतमङ्घ्रिः सिकत्याः ।
मध्या मूलं शिफा वा मदनकुसुमजा सोषणा वाऽथ पूति-
योगा वास्यम्बुनैते प्रथममथ गदे दृश्यमाने प्रयोज्याः ॥ ५ ॥

---

विस्फोटभेदत्वात् प्रायस्तच्चिकित्सितत्वाच्च मसूरीचिकित्सितमुच्यते,—सर्वासा-मित्यादि ।—वासकैरित्यत्र क्वथैरिति शेषः । तेन कषायैरित्यनेन, सामानाधिकरण्यं न विरुध्यते । वत्सकः,—इन्द्रयवः । फल—मदनफलम् ॥ १ ॥

सक्षौद्रमित्यादि ।—रसमिति—स्वरसम्, एतच्च वामकं विरेचकञ्च ॥ २ ॥

सुवर्ची—कारवेल्लकः, एतद्रसोऽप्युभयभागहरः ॥ ३ ॥

उभाभ्यामिति—वमनविरेचनाभ्याम् ॥ ४ ॥

मुष्टियोगमाह ।—कण्टाकुम्भाण्डुमूलमित्यादि ।—कण्टाकुम्भाण्डुलता—स्वनाम-ख्याता । हिङ्गुमाषैकयुक्तं पीतमिति—पूर्वेणैव सम्बध्यते । बीजं जयायाः सघृत-मुषितवाः पीतमिति ।—द्वितीयो योगः । जया—जयन्ती, चक्रस्तु बीजमुपदंशादिका-धिकाषड्गव्यकं सघृतं पर्युषितजलेन पीतमित्याहुः । ये तु "उषितवाः पीतम्" इति पदं जयाबीजमित्यनेन सह न योजयन्ति, तन्मते—पीतमिति नपुंसकलिङ्गनिर्देशो नोपपद्यते इति ; सामान्यविशेषभावेन योजनापि कष्टकल्पनैवेति । अङ्घ्रिः सिकत्या इति—तृतीयो योगः । अत्राप्युषितवाः पीतमिति लिङ्गविपरिणामेन सम्बध्यते । अङ्घ्रिरिति—मूलम् । सिकटी—स्वनामख्यातैव । मध्या अपि तथैव च । [ मधौ—

उद्धृत्य मुष्टिनाऽऽच्छाद्य भेषजं यत् प्रयुज्यते ।
तन्मुष्टियोगमित्याहुर्मुष्टियोगपरायणाः ॥
उष्ट्रकण्टकमूलं वाप्यनन्तामूलमेव वा ।
विधिगृहीतं ज्येष्ठाम्बु पीतं हन्ति मसूरिकाम् ।
तद्वच्छृगालकण्टकमूलञ्च व्युषिताम्भसा ॥ ६ ॥
मसूरीं मूर्च्छितो हन्ति गन्धकार्द्रस्तु पारदः ।
निशाचिञ्चाच्छदे शीत-वारिपीते तथैव तु ॥ ७ ॥
यावत्संख्या मसूर्यङ्गे तावद्भिः शेलुजैर्दलैः ।
छिन्नैरातुरनाम्ना तु गुणी व्येति न वर्द्धते ॥
व्युषितं वारि सक्षौद्रं पीतं दाहगुणीहरम् ।
शेलुत्वक्कृतशीताम्भः सेकं वा कायशोषणे ॥ ८ ॥

---

गुवाकः, तस्य मूलम् । ] क्षोषणा—समष्ठिला । एतच्च पूतिरित्यनेनैव सम्बध्यते । पूतिः,—खट्टासिकाण्डम् ; अन्ये तु—मदनकुसुमजा शिफा क्षोषणा, पूतिर्नाटाकरञ्जोऽपि क्षोषण इति वदन्ति । अत्र मरिचमेकाधिकमङ्गल्लकमित्युपदिशन्ति । अघगदः,—पापरोगो मसूरीपर्याय एव ॥ ५ ॥

मुष्टियोगस्वरूपमाह उद्धृत्येत्यादि । उष्ट्रकण्टकं स्वनामख्यातम् 'उटुर' इति केचित् । अनन्तामूलम्—अनन्तमूलं, ज्येष्ठाम्बु—तण्डुलोदकम् । शृगालकण्टकमपि स्वनामख्यातम् ॥ ६ ॥

मूर्च्छित इति ।—कज्जलीकृतः । शोधितगन्धक कर्ष १, शोधितरस मा ८, कज्जली कर्त्तव्या ; ततो माषकचतुष्टयं षट्कं वा पर्णे कृत्वा खादयेदिति व्यवहारः । निशेत्यादौ ।—छदः,—पत्रम् ; छदशब्दस्य नपुंसकलिङ्गता छान्दसत्वात्, किंवा निशाचिञ्चाच्छदाविति पाठः । द्विवचनदर्शनात् पत्रद्वयं ग्राह्यमित्यन्ये ॥ ७ ॥

यावदित्यादौ ।—शेलुः,—बहुवारः । मसूरिका गणयित्वा तावत्सङ्ख्यया आतुरनाम्ना पत्राणि छिन्द्यादित्यर्थः । गुणी—मसूरिकेत्यर्थः । शेलुत्वगित्यादौ ।—शीताम्भः,—शीतकषायः । कायशोषणे इति ।—उच्छूनकायप्रदेशशोषणनिमित्तमित्याहुः । कायशोधनमिति पाठे—शरीरमलक्लेदनिरासार्थमित्यर्थः, किंवा कायशब्देनोपचारान्मसूरिकै-
[illegible] ॥ ८ ॥

उग्राज्यवंशनीलि-यवहपकार्पासकोकसवल्को- ।
सुरसमयूरकलाक्षाधूपो रोमान्तिकादिहरः ॥ ९ ॥

तर्पणं वातजायां प्राग् लाजचूर्णैः सशर्करैः ।
भोजनं तिक्तयूषैश्च प्रतुदानां रसेन वा ॥ १० ॥
द्विपञ्चमूलं रास्ना च दार्व्युशीरं दुरालभा ।
साम्लतं धान्यकं मुस्तं जयेद्वातमसूरिकाम् ॥
गुडूचीमधुकं रास्नां पञ्चमूलं कनिष्ठकम् ।
चन्दनं काश्मर्य्यफलं बलामूलं विकङ्कतम् ॥
पाककाले मसूर्य्यान्तु वातजायां प्रयोजयेत् ॥ ११ ॥
द्राक्षाकाश्मर्य्यखर्जूर-पटोलारिष्टवासकैः ।
लाजामलकदुःस्पर्शैः सितायुक्तैश्च पैत्तिके ॥ १२ ॥
शिरीषोडुम्बराश्वत्थ-शेलुन्यग्रोधवल्कलैः ।
प्रलेपः सघृतः शीघ्रं व्रणविस्फोटदाहहा ॥ १३ ॥
दुरालभां पर्पटकं भूनिम्बं कटुरोहिणीम् ।
श्लेष्मिकायां पित्तजायां वा पाने निःक्वाथ्य दापयेत् ॥१४॥

निम्बादिः,—

निम्बं पर्पटकं पाठां पटोलं कटुरोहिणीम् ।
वासां दुरालभां धात्रीमुशीरं चन्दनद्वयम् ॥
एष निम्बादिकः ख्यातः पीतः शर्करया युतः ।
हन्ति त्रिदोषमसूरीं ज्वरवीसर्पसम्भवाम् ।
उत्थिता प्रविशेद् या तु पुनस्तां वाह्यतो नयेत् ॥१५॥

---

उग्रेत्यादौ ।—उग्रा—वचा, आज्य—घृतं, वृषस्य—वासकस्य मूलं, कार्पासकोकस—कार्पासास्थि, सुरसः,—पर्णासः, मयूरकः,—अपामार्गः ॥ ९ ॥

तर्पणमिति ।—द्रवेणालोडिता. सक्तवः । तिक्तयूषैरिति ।—तिक्तद्रव्यकृतयूषैः ।
प्रतुदाः,—पारावतादयः ॥ १० ॥

द्विपञ्चमूलमित्यादि ।—योगोऽयं क्वाथेन, एवं गुडूच्यादिकमपि ॥ ११ ॥

द्राक्षेत्यादौ ।—सितायुक्तमित्यनन्तरं कषायमिति शेषः ॥ १२—१४ ॥

पटोलकुण्डलीमुस्त-वृषधन्वयवासकैः ।
भूनिम्बनिम्बकटुका-पर्पटैश्च शृतं जलम् ॥
मसूरीं शमयेदामां पक्वाश्चैव विशोधयेत् ।
नातः परतरं किञ्चिद्विस्फोटज्वरशान्तये ॥ १६ ॥
पटोलमूलारुणतण्डुलीयकं पिबेद्धरिद्रामलकल्कसंयुतम् ।
मसूरिविस्फोटविदाहशान्तये तदेव रोमान्तिवमिज्वरापहम् ॥
पटोलमूलारुणतण्डुलीयकं तथैव धात्रीखदिरेण संयुतम् ।
पिबेज्जलं सुक्वथितं सुशीतलं मसूरिकारोगविनाशनं परम् ॥१७॥

खदिराष्टकम्,—

खदिरत्रिफलारिष्ट-पटोलामृतवासकैः ।
क्वाथोऽष्टकाख्यो जयति रोमान्तिकमसूरिकाः ।
कुष्ठवीसर्पविस्फोट-कण्ड्वादीनपि पानतः ॥ १८ ॥
अमृतादिकषायस्तु जयेत् पित्तकफात्मिकाम् ।
सौवीरेण तु संपिष्टं मातुलुङ्गस्य केशरम् ।
प्रलेपात् पातयत्याशु दाहश्चाशु नियच्छति ॥ १९ ॥
पाददाहं प्रकुरुते पिड़का पादसम्भवा ।
तत्र सेकं प्रशंसन्ति बहुशस्तण्डुलाम्बुना ॥ २० ॥

---

निम्बादिरपि क्वाथविधया देयः ॥ १५ ॥

पटोलेत्यादौ ।—कुण्डली—गुडूची । यवासः,—दुरालभा ॥ १६ ॥

पटोलमूलेत्यादि ।—क्वाथे हरिद्रामलकचूर्णं प्रक्षिप्य अनुलोमनार्थं पिबेत् । अरुणतण्डुलीयकं—लोहिततण्डुलीयकम् । धात्रीखदिरेण संयुतमिति ।—धात्रीखदिरावपि पटोलमूलारुणतण्डुलीयकाभ्यां सह क्वथनीयौ ॥ १७ ॥

खदिरेत्यादौ ।—अष्टकाख्य इति—खदिराष्टक इति सञ्ज्ञा । अत्र शोधने कर्त्तव्ये गुग्गुलुमपि प्रक्षिपन्ति ॥ १८ ॥

अमृतादिकषायो विसर्पोक्तदशाङ्गलक्षणैव मसूरीहरत्वश्रुतेः ; न तु ज्वराधिकारोक्तोऽमृतादिरिति । सौवीरेणेति—काञ्जिकेन ॥ १९ । २० ॥

पाककाले तु सर्वास्ता विशोषयति मारुतः।
तस्मात् संहंहणं कार्य्यं न तु पथ्यं विशोषणम्॥ २१॥
गुडूची मधुकं द्राक्षा मोरटं दाड़िमैः सह।
पाककाले तु दातव्यं भेषजं गुड़संयुतम्।
तेन पाकं व्रजत्याशु न च वायुः प्रकुप्यति॥ २२॥
लिह्येद्वा बादरं चूर्णं पाचनार्थं गुड़ेन तु।
अनेनाशु विपच्यन्ते वातपित्तकफात्मिकाः॥ २३॥
शूलाध्मानपरीतस्य कम्पमानस्य वायुना।
धन्वमांसरसाः शस्ता ईषत्सैन्धवसंयुताः॥ २४॥
दाड़िमाम्लरसैर्युक्ता यूषाः स्युररुचौ हिताः।
पिवेदम्भस्तत्मशीतं भावितं खदिरासनैः॥ २५॥
शौचे वारि प्रयुञ्जीत गायत्रीबहुवारजम्।
जातीपत्रं समञ्जिष्ठं दार्वीपूगफलं शमीम्॥
धात्रीफलं समधुकं क्वथितं मधुसंयुतम्॥
मुखरोगे कण्ठरोगे गण्डूषार्थं प्रशस्यते।
अक्ष्णोः सेकं प्रशंसन्ति गवेधुमधुकाम्बुना॥ २६॥

---

पाककाले वायुप्रशमनार्थं बृंहणाहारमाह, पाकेत्यादि।—विशोषणेन पाकोन्मुखस्य दोषस्यान्तःप्रवेशाद्दुराधिक्यं स्यादिति भावः॥ २१॥

गुडूच्यादौ।—मोरटम्—इक्षुमूलम्, एषां क्वाथः। गुडस्तु प्रक्षेप्यः॥२२।२३॥

धन्वमांसरसा इति।—जाङ्गलपशुमांसरसाः॥ २४॥

पिबेदम्भस्तत्प्रशीतमिति।—श‍ृतं शीतञ्च, एवं वक्ष्यमाणयोगेऽपि। भावित खदिरासनैरिति।—खदिरासनैः साधितं क्वाथमित्यर्थः। असनः,—पीतशालः, अशन एव इत्यन्ये॥ २५॥

गायत्री—खदिरः। गवेधुमधुकाम्बुनेति।—गवेधुकः,—गुलुच। अक्ष्णोः कल्कं कर्पटे बद्ध्वा प्रपीड्याक्षिसेकः कार्यः॥ २६॥

मधुकं त्रिफला मूर्वा दार्वीत्वङ्नीलमुत्पलम् ।
उशीरलोध्रमञ्जिष्ठाः प्रलेपाश्च्योतने हिताः ।
नश्यन्त्यनेन दृग्जाता मसूर्य्यो न द्रवन्ति च ॥ २७ ॥
पञ्चवल्कलचूर्णेन क्लेदिनीमवचूर्णयेत् ।
भस्मना केचिदिच्छन्ति केचिद्गोमयरेणुना ॥
क्रिमिपातभयाच्चापि धूपयेत् सरलादिना ।
वेदनादाहशान्त्यर्थं सुतानाञ्च विशुद्धये ॥ २८ ॥
सगुग्गुलुं वराक्वाथं युञ्ज्याद्वा खदिराष्टकम् ।
क्वाथाऽभयारजो लिह्यान्मधुना कण्ठशुद्धये ॥ २९ ॥
अथाष्टाङ्गावलेहो वा कवडश्चार्द्रकादिभिः ।
पञ्चतिक्तं प्रयुञ्जीत पानाभ्यञ्जनभोजनैः ॥ ३० ॥
कुर्य्याद्व्रणविधानञ्च तैलादीन् वर्जयेच्चिरम् ।
विपन्नैः सिद्धमन्त्रैश्च प्रमृज्यात् तु पुनः पुनः ।
तथा शोणितसंसृष्टाः काश्चिच्छोणितमोक्षणैः ॥ ३१ ॥
निम्बाह्वयोशीरगिरीषमुस्तकैः सलोध्रभद्रश्रियनागकेशरैः ।
सस्वेदविस्फोटविसर्पकुष्ठ-दौर्गन्ध्यरोमाञ्चिहरः प्रदेहः ॥
बिम्बातिमुक्तकाशोक-प्लक्षवेतसपल्लवैः ।
निशि पर्य्युषितः क्वाथो मसूरीभयनाशनः ॥ ३२ ॥

---

मधुकमित्यादौ ।—"हिताः" इति बहुवचननिर्देशात् व्यस्तैः समस्तैर्मधुकादिभिः प्रलेपः । चाश्च्योतनं तैराश्च्योतनमित्याहुः । आश्च्योतनं—परिषेकः ॥ २७ ॥

पञ्चवल्कलेत्यादौ ।—क्लेदिनीं—क्लेदयुक्तां मसूरीम् । भस्मनेति ।—शुष्कगोमय-भस्मना । गोमयरेणुनेति ।—गोमयचूर्णेन वस्त्रच्छानितेन । सरलादिभिरिति ।—सरलागुरुगुग्गुलुप्रभृतिभिः ॥ २८ ॥

सगुग्गुलुमित्यादि ।—सगुग्गुलुमित्युभयत्रापि सम्बध्यते ॥ २९ ॥

अष्टाङ्गावलेहार्द्रकादिकवडौ ज्वराधिकारोक्तौ । पञ्चतिक्तकघृतं—कुष्ठोक्तम् ॥ ३० । ३१ ॥

निम्बाह्वयेत्यादौ ।—भद्रश्रियं—श्वेतचन्दनम् । बिम्बेत्यादि ।—बिम्बी—कुम्दरीति

मसूरीस्फोटयोरन्ते कूर्परे मणिबन्धके ।
मुखांशफलके शोथो जायते यः सुदारुणः ॥ ३३ ॥
व्रणशोथहरैर्योगैर्वातघ्नैश्च जलौकसा ।
हर्त्तव्यस्तैलभृष्टस्य हयिकस्य विलेपनैः ॥ ३४ ॥
चैत्रासितभूतदिने रक्तपताकान्विता स्नुही भवने ।
धवलितकलसन्यस्ता पापरुजो दूरतो धत्ते ॥ ३५ ॥

इति मसूरी चिकित्सा ।

---

## अथ क्षुद्ररोग-चिकित्सा ।

तत्राजगल्लिकामामां जलौकाभिरुपाचरेत् ।
शुक्तिसौराष्ट्रिकाक्षार-कल्कैश्चालेपयेन्मुहुः ॥ १ ॥
नवीनकण्टकार्यास्तु कण्टकैर्वेधमात्रतः ।
किमाश्चर्यं विपच्याशु प्रशाम्यत्यजगल्लिका ॥ २ ॥

---

श्रीकण्ठ.। अतिमुक्तकः,—माधवीलता। श्रीगोऽयमयायतमसूरीनिवारणार्थं चैत्रे मासि पेयः ॥ ३२—३४ ॥

चैत्रासितभूतदिने इति ।—चैत्रकृष्णचतुर्दश्याम् ॥ ३५ ॥

इति मसूरी चिकित्सा विवृतिः ।

---

विसर्पादीनामक्षुद्रहेतुलक्षणचिकित्सितानामभिधानेन क्षुद्रहेतुलक्षणचिकित्सितानां रोगाणां पारिशेष्यात् क्षुद्ररोगचिकित्सितमुच्यते। ननु यदि क्षुद्रत्वमेषां हेतुलक्षणचिकित्सितात्पत्वेन तर्हि अग्निरोहिणीवल्मीकादीनां त्रिदोषजत्वेन हेत्वादिबाहुल्यात् तत् कथं क्षुद्रत्वम् ? नैवं, बाहुल्येन तच्छब्दात् छत्रिणो गच्छन्तीतिवत्, किंवा अवान्तरभेदविरहत्वं क्षुद्रत्वम्; येनात्र वक्तव्यानामजगल्लिकादीनां दोषदूष्यादिकृतभूरिसङ्ख्याभेदेन वचनादिविनिर्देशः; किन्तु प्रत्येकं लोकसङ्ख्याभिधानं तेषाम्। अजगल्लिका—अंचलोति लोके। आमामिति—अपक्वाम्, आमाऽपि अपक्वामित्युक्तम्। शुक्तीत्यादि।—शुक्तिः,—शुक्तीत्यस्थिभाण्डम्; सौराष्ट्रिका—सौराष्ट्र-

कठिनां चारयोगैश्च द्रावयेदजगल्लिकाम् ।
श्लेष्मविद्रधिकल्केन जयेदनुशयीं भिषक् ॥
विवृतामिन्द्रवृद्धाञ्च गर्दभीं जालगर्दभम् ।
इरिवेल्लिं गन्धमालां जयेत् पित्तविसर्पवत् ॥
मधुरौषधसिद्धेन सर्पिषा शमयेद्व्रणान् ।
रक्तावसेकैर्बहुभिः स्वेदनैरपतर्पणैः ॥
जयेद्विदारिकां लेपैः शिग्रुदेवद्रुमोद्भवैः ।
पनसिकां कच्छपिकामनेन विधिना भिषक् ॥
अन्यालजीं कच्छपिकां तथा पाषाणगर्दभम् ।
साधयेत् कठिनानन्यान् शोथान् दोषसमुद्भवान् ॥
सुरदारुशिलाकुष्ठैः स्वेदयित्वा प्रलेपयेत् ।
कफमारुतशोथघ्नो लेपः पाषाणगर्दभे ॥ २ ॥
शस्त्रेणोत्कृत्य वल्मीकं चाराग्निभ्यां प्रसाधयेत् ।
मनःशिलालभल्लात-सूक्ष्मैलाऽगुरुचन्दनैः ॥
जातीपल्लवकल्कैश्च निम्बतैलं विपाचयेत् ।
वल्मीकं नाशयेत् तद्धि बहुच्छिद्रं बहुस्रवम् ॥

---

नम् ; सुश्रुते तु—क्षीरादीस्थाने शुक्तिका पठ्यते, शुक्तिका—सर्जिचारः । चारः,—यवचार इति ॥ १ । २ ॥

चारयोगैरिति—षट्पलाशभस्मादियोगैः । मधुरौषधं—काकोल्यादिगणः । व्रणानिति ।—विवृतादीनेव गन्धमालान्तान् पाकेन व्रणभावमापन्नान् मधुरौषधसिद्धेन सर्पिषा शमयेदित्यर्थः । सुश्रुतेऽप्युक्तं—"विवृतामिन्द्रवृद्धां गर्दभिकां जालगर्दभमिरिवेल्लिकां गन्धमालां विस्फोटकांश्च पित्तविसर्पविधानेनोपाचरेत् । पक्वांश्च मधुरौषधसिद्धेन सर्पिषा" इति । रक्तावसेकैरित्यादिना विदारिकाचिकित्सा । अनेन विधानेनेति ।—विदारिकोक्तेन । अन्यान् शोथानिति—पाषाणगर्दभादीन् । दोषसमुद्भवानिति ।—दौष्ट्यतया कफवातजान् साधयेत् । पाषाणगर्दभः,—"गाषठाकृपा" इति ख्यातः ॥ २ ॥

मनःशिलादौ ।—चालं—हरितालम् । निम्बतैलमिति—निम्बबीजभवतैलम् ।

पाददारीषु च शिरां व्यधयेत् तलशोधनीम् ।
स्नेहस्वेदोपपन्नौ तु पादौ चालेपयेन्मुहुः ॥
मधूच्छिष्टवसामज्ज-घृतक्षारैर्विमिश्रितैः ।
सर्जाख्यसिन्धूद्भवयोश्चूर्णं मधुघृताप्लुतम् ॥
निर्मथ्य कटुतैलाक्तं हितं पादप्रमार्जनम् ॥ ४ ॥

उपोदिकाद्यं तैलम्—

उपोदिकासर्षपनिम्बमोच-
कर्कारुकैर्वारुकभस्मतोये ।
तैलं विपक्वं लवणांशयुक्तम्
तत् पाददारीं विनिहन्ति लेपात् ॥ ५ ॥

अलसेऽम्लैश्चिरं सिक्तौ चरणौ परिलेपयेत् ।
पटोलारिष्टकाश्मीर-त्रिफलाभिर्मुहुर्मुहुः ॥ ६ ॥
करञ्जबीजं रजनी काशीशं मधुकं मधु ।
रोचना हरितालञ्च लेपोऽयमलसे हितः ॥ ७ ॥

---

मधुप्लुतमिति—मधुप्लावम् । सुश्रुते चालसस्थाने पिप्पलीयोगादयमयं योग पठित । तलशोधनीमिति—पादतलगामिनीम् । स्नेहस्वेदोपपन्नाविव्यनन्तरं कृत्वेति शेषः । अन्ये तु—शिराव्यधात् पूर्वं स्नेहस्वेदौ कृत्वा शिरां व्यधयेदिति बोध्यम् । एवमनन्तरमेव शिराव्यधस्याप्रसङ्गे । स्नेहस्वेदोपपन्नाविव्यादिना तु पश्चात् कर्मोपदेशः दोषशैथिल्यार्थं रक्तादिदुष्टिनिर्घातनार्थं चेति । चालेपयेन्मधूच्छिष्टादिभिरित्यन्वयः । घृतक्षीरैर्विमिश्रितैरित्यपपाठः, सुश्रुते यवक्षारैरिति पाठात् । सर्जेत्यादि ।—सर्जः,—धूनक. । कटुतैलाक्तमिति ।—कटुतैलयुक्तं यथा स्यात् तथा पादप्रमार्जनमित्यर्थः, क्रिया चूर्णविशेषणम् ॥ ४ ॥

उपोदिकेत्यादि ।—उपोदिकानाम्नं शाकम् । मोचक,—कदलीकोष्टक. । कर्कारु,—कुष्माण्डभेद, एर्वारु,—ककंटी, बनवोगोंडी । एषां चारोदके चतुर्गुणे सैन्धवकल्केन तैलं पक्तव्यम् । लेपादिति—प्रतिसरणात् तैलस्य ॥ ५ ॥

अलसः,—'पानीपाका' इति ख्यातः ।—अम्लैरिति—काञ्जिकैः । अरिष्ट,—निम्ब ॥ ६ । ७ ॥

लाचाऽभयारसालेपः कार्य्यं वा रक्तमोचणम्।
जातीपत्रञ्च सम्मर्द्य दद्यादलसके भिषक्॥ ८॥
वृहतीरससिद्धेन तैलेनाभ्यज्य बुद्धिमान्।
शिलारोचनकाशीश-चूर्णैर्वा प्रतिसारयेत्॥ ९॥
दहेत् कदरमुत्कृत्य तैलेन दहनेन वा॥ १०॥
चिप्यमुष्णाम्बुना स्विन्नमुत्कृत्याभ्यज्य तं व्रणम्।
दत्त्वा सर्जरसं चूर्णं बद्धा व्रणवदाचरेत्॥
स्वरसेन हरिद्रायाः पात्रे क्षृष्णायसेऽभयाम्।
घृष्ट्वा तज्जेन कल्केन लिम्पेच्चिप्यं पुनः पुनः॥ ११॥
चिप्ये सटङ्कणास्फोता-मूललेपो नखप्रदः।
निम्बोदकेन वमनं पद्मिनीकण्टके हितम्॥ १२॥
निम्बोदकक्वतं सर्पिः सक्षौद्रं पानमिष्यते।
पद्मनालकृतः क्षारः पद्मिनीं हन्ति लेपतः॥ १३॥

---

लाचेत्यादौ।—रस,—गन्धरसः॥ ८॥

वृहतीत्यादि।—वृहती—कण्टकारी, तस्याः स्वरसः, तैलञ्च सार्षपं, सुश्रुतसंवादात्। प्रतिसारयेदिति—घर्षयेत्॥ ९॥

दहेदित्यादि।—कदरं शस्त्रेणोद्धृत्य तप्ततैलेन दहनेन वा दहेदित्यर्थः। दहनेनेत्यत्र मदनेनेति पाठे—मदनः,—सिक्थकः, तेनापि तप्तेन दाहः॥ १०॥

चिप्यमिति।—चिप्यमिह कुनखमभिप्रेतं न त्वङ्गुलीवेष्टनम्, तत्रोपचिकित्सायास्तवानर्हत्वादिति केचित्। उष्णाम्बुना स्वेदनमिह मार्दवजननार्थम्; मृदुत्वे सत्येव कुनखोत्कर्त्तनं कर्त्तुं शक्यमिति। बद्धेति।—यथोक्तबन्धनविधिना। व्रणवदाचरेदिति।—व्रणहितैराहाराचारादिभिरित्यर्थः। कृष्णायसे पात्रे—कान्तलौहपात्रे॥ ११॥

चिप्य इत्यादौ।—आस्फोता—हाफरमाली। योगोऽयं व्यस्तसमस्ततया व्यवह्रियते ऽत्र। निम्बोदकेन—निम्बक्वाथेन मदनफलादियुक्तेनेत्याहुः॥ १२। १३॥

निम्बारग्वधकल्कैर्वा मुहुरुद्वर्त्तनं हितम्।
नीलीपटोलमूलाभ्यां साज्याभ्यां लेपनं हितम्॥
जालगर्दभरोगे तु सद्यो हन्ति च वेदनाम्॥ १४॥
अहिपूतनके धात्र्याः पूर्वं स्तन्यं विशोधयेत्।
त्रिफलाखदिरक्वाथैर्व्रणानां धावनं सदा॥ १५॥
करञ्जत्रिफलातिक्तैः सर्पिः सिद्धं शिशोर्हितम्।
रसाञ्जनं विशेषेण पानालेपनयोर्हितम्॥ १६॥
गुदभ्रंशे गुदं स्वेदैरभ्यज्याशु प्रवेशयेत्।
प्रविष्टे स्वेदयेच्चापि बद्धं गोफणया दृढम्॥ १७॥
कोमलं पद्मिनीपत्रं यः खादेच्छर्कराान्वितम्।
एतन्निश्चित्य निर्दिष्टं न तस्य गुदनिर्गमः॥ १८॥
वृक्षाम्लानलचाङ्गेरी-बिल्वपाठायवाग्रजम्।
तक्रेण शीलयेत् पायु-भ्रंशार्त्तोऽनलदीपनम्॥ १९॥
गुदस्य गव्यवसया म्रक्षयेदविशङ्कितः।
दुष्प्रवेशो विशत्याशु गुदभ्रंशो न संशयः॥ २०॥

---

निम्बेत्यादि।—"निम्बारग्वधयोः क्वाथो हित उत्सादने भवेत्" इति यत् सुश्रुते-ऽभिहितं तत्रापि क्वाथशब्दस्य कल्क एवार्थः। नीली—नीलवृक्षः॥ १४॥

स्तन्य विशोधयेदिति।—विशोधनैः,—स्तन्यशोधनद्रव्यैरित्यर्थः। यतो हि—"तत्र धात्र्याः पय शोध्य पित्तश्लेष्महरौषधैः" इति॥ १५॥

करञ्जेत्यादौ।—तिक्तस्तिक्तकः। अन्ये तु—पटोलपत्रमाहुः॥ १६॥

गुदभ्रंश इत्यादौ।—स्वेदैरिति बहुवचनात् चतुर्भिरेव स्वेदैरित्यर्थः,'किंवा "गुदस्य गव्यवसया म्रक्षयेत्" इति वक्ष्यमाणश्लोकदर्शनादत्रापि स्नेहशब्देन गव्यवसैव ग्राह्या; गोफणा—बन्धविशेष, स हि सुश्रुते व्रणालेपनबन्धविधौ व्यक्तः। यतो हि—"बर्हिर्गमनार्थे सच्छिद्रेण चर्मणास्य कौपीनबन्धः कार्यः" इति॥ १७। १८॥

वृक्षाम्लं—महार्द्रकम्। अनलः,—चित्रकः। एषां कल्कं तक्रेण पिबेत्॥ १९। २०॥

मूषिकाणां वसाभिर्वा गुदे सम्यक् प्रलेपनम् ।
खिन्नमूषिकमांसेन चाथवा स्वेदयेद् गुदम् ॥ २१ ॥

चाङ्गेरी-घृतम्—

चाङ्गेरीकोलदध्यम्ल-नागरक्षारसंयुतम् ।
घृतमुत्क्वथितं पेयं गुदभ्रंशरुजापहम् ॥
शुण्ठीक्षारावत्र कल्कौ शिष्टन्तु द्रवमिष्यते ॥ २२ ॥

मूषिकाद्यं तैलम्—

क्षीरे महत् पञ्चमूलं मूषिकामन्त्रवर्जिताम् ।
पक्त्वा तस्मिन् पचेत् तैलं वातघ्नौषधसाधितम् ॥
गुदभ्रंशमिदं तैलं पानाभ्यङ्गात् प्रसाधयेत् ॥ २३ ॥
स्वेदोपनाहौ परिवर्त्तिकायाम्
कृत्वा समभ्यज्य घृतेन पद्यात् ।

---

खिन्नमूषिकमांसेन इति ।—अत्र काञ्जिकेन खिन्नं घृतेन भृष्टमित्याहुः ॥ २१ ॥

चाङ्गेरीघृते ।—चाङ्गेर्याः स्वरसः, कोलस्य—पक्वबदरस्य क्वाथः, अम्लं दधि—दध्यम्लम् । एभिस्त्रिभिर्द्रवैर्मिलित्वा चातुर्गुण्यम् । किंवा चाङ्गेरीस्वरसः स्नेहसमः, "स्वरसे क्षीरवद्विधिः" इति वचनात् ; दधिकोलरसौ तु मिलित्वा त्रिगुणौ । पूर्वमेव व्यवहारः । नागरक्षारौ—कल्कौ ॥ २२ ॥

क्षीरे इत्यादौ ।—मूषिकागुड्डमीकं त्याज्यम् , पञ्चमूलस्य मिलित्वा प्रस्थ एकः, क्षीरस्यापि प्रस्थ एकः, तोयस्य प्रस्थत्रयम् । एवं निःक्वाथ्य शेषः क्षीरप्रस्थः स्थाप्यः ; अनेन तैलकुडवः साध्य इति कथितम् । अन्ये तु—"द्रव्यादष्टगुणे क्षीरे क्षीरात् तोयं चतुर्गुणम् । क्षीरावशेष." इत्यादिपरिभाषया क्षीरं साधयित्वा तेन चतुर्गुणेन तैलकुडवः साध्य इत्याहुः । चक्रस्तु, अन्त्रवर्जितामिति ।—अत्रपद्योऽयत्नोपदर्शनार्थम् ; तेन मूषिकमांसस्य पलाष्टकौ, क्षीरस्य पञ्चमूलस्यापि प्रस्थः, तोयस्य प्रस्थत्रयम्, शेषः क्षीरप्रस्थः, तेन तैलकुडवः साध्यः , एवमन्यत्रापि । पक्वेन क्षीरेण स्नेहसाधने पञ्चैव व्यवस्थेति । व्यवहारः प्रायः अदसम्प्रदायादेव । वातघ्नौषधं—भद्रदार्वादिगणः ; स च कल्कः ॥ २३ ॥

प्रवेशयेच्चर्म शनैः प्रविष्टे
मांसैः सुखोष्णैरुपनाहयेच्च ॥
स्नेहस्वेदैस्तथैवैनां चिकित्सेदवपाटिकाम्।
निरुद्धप्रकशे नाड़ीं द्विमुखीं कनकादिजाम् ॥
चिक्षाज्याक्तां सुखकादि-स्नेहेन परिषेचयेत्।
तैलेन वा वचादारु-कल्कैः सिद्धेन च त्र्यहात् ॥
पुनः स्थूलतरा नाड़ी देया स्रोतोविशुद्धये।
शस्त्रेण सेवनीं त्यक्त्वा भित्त्वा व्रणवदाचरेत्।
स्निग्धञ्च भोजनं रुद्ध-गुदेऽप्येष क्रियाक्रमः ॥ २४ ॥
चर्मकीलं जतुमणिं मशकांस्तिलकालकान्।
उद्धृत्य शस्त्रेण दहेत् क्षाराग्निभ्यामशेषतः ॥ २५ ॥
रुवुनालात्तचूर्णेन घर्षो मशकनाशनः।
निर्मोकभस्मघर्षाद्वा मशः शान्तिं व्रजेत् सदा ॥ २६ ॥

---

स्नेहेत्यादौ।—परिवर्त्तिकायां चर्मणा अभ्यज्य अनन्तरं शाल्वणोपनाहादिभिः स्वेदं कृत्वा शाल्वणादिना च उपनाहं कृत्वा च परिवर्त्तितं चर्म यथोक्तस्वेदादिना मृदुभूतं प्रवेशयेत् सम्यगानयेदित्यर्थः। प्रविष्टे च सुखोष्णैर्मांसैरुपनाहयेत्। सुश्रुतेऽप्येवमेवोक्तम्। तथैवैनामिति।—अनेनावपाटिकायामप्युपनाहं चर्मानयनञ्चातिदिशति। निरुद्धेत्यादौ।—कनकादीत्यादिना त्रपुसीसप्रभृतीनां ग्रहणम्। त्रपुसी—'शयुक' इति ख्याती अलाबुः। आदिशब्दात् शराद्यादयः। त्र्यहादित्यत्र वीप्सा बोध्या, तेन त्र्यहात् त्र्यहात् प्रागुक्तनाड्यपेक्षया पुनःपुनः स्थूलतरा नाडी देया। स्रोतोविशुद्धये इति।—अत्र स्रोतोविवृद्धये इति पाठः। यदाह सुश्रुतः,—"एवमस्य स्रोतोद्वारं वर्द्धयेत्" इति। व्रणवदिति—सद्योव्रणवत्। स्निग्धञ्च भोजनमिति।—चाधर्वदित्यनेन सम्बध्यते। सुश्रुतेऽपि—"निरुद्धप्रकाशे स्निग्धमाहारमुपसेवते" इत्युक्तम्। एष क्रम इति।—निरुद्धप्रकाशोक्तविधिः ॥ २४ ॥

जतुमणिः,—जड़ूल। क्षाराग्निभ्यामिति।—अनवगाढे क्षारेण; अवगाढे त्वग्निना ॥ २५ ॥

रुवु,—एरण्डः, तस्य नालेन नालं गृहीतं यच्चूर्णमिति अङ्गचूर्णं, तेन घर्षो घर्षणमित्यर्थः। निर्मोक इति।—सर्पनिर्मोकः ॥ २६ ॥

युवानपिड़कान्यच्छ-नीलिकाव्यङ्गशर्कराः ।
शिराव्यधैः प्रलेपैश्च जयेदभ्यञ्जनैस्तथा ॥
लोध्रधान्यवचालेपस्तारुण्यपिड़कापहः ।
तद्वद्गोरोचनायुक्तं मरिचं मुखलेपनात् ॥ २७ ॥
सिद्धार्थकवचालोध्र-सैन्धवैश्च प्रलेपनम् ।
वमनञ्च निहन्त्याशु पिड़कां यौवनोद्भवाम् ॥ २८ ॥
व्यङ्गेषु चार्जुनत्वग्वा मञ्जिष्ठा वा समाक्षिका ।
लेपः सनवनीता वा श्वेताश्वखुरजा मसी ॥ २९ ॥
रक्तचन्दनमञ्जिष्ठा-कुष्ठलोध्रप्रियङ्गवः ।
वटाङ्कुरमसूराश्च व्यङ्गघ्ना मुखकान्तिदाः ॥
व्यङ्गानां लेपनं शस्तं रुधिरेण शशस्य च ।
कोवशान् पयसा पिष्ट्वा तीक्ष्णान् शाल्मलिकण्टकान् ।
आलिप्तं त्र्यहमेतेन भवेत् पद्मोपमं मुखम् ॥ ३० ॥
मसूरैः सर्पिषा पिष्टैर्लिप्तमास्यं पयोऽन्वितैः ।
सप्तरात्राद्भवेदक्तं पुण्डरीकदलोपमम् ॥ ३१ ॥
मातुलुङ्गजटा सर्पिः शिला गोशकृतो रसः ।
मुखकान्तिकरो लेपः पिड़कातिलकालजित् ॥

---

यूनामाननपिड़का—युवानपिड़का, "वर्णागमः" इत्यादिनिरुक्तविधिना वर्णलोपः । धान्यं—धनियकम् ॥ २७ । २८ ॥

व्यङ्गेष्वित्यादि ।—वाग्भटस्य ।—समाक्षिकेति—अर्जुनत्वक् चापि सम्बध्यते । अर्जुनत्वक् इत्यसम्बन्धादेव स्वयमुष्या वाच्या । श्वेता—श्वेतापराजिता, अश्वखुरः,—अश्वस्य घोटकस्य खुरः, तयोर्मसी भस्म ; अन्ये तु—धवलघोटकखुरमसीत्याहुः ॥ २९ ॥

रक्तचन्दनेत्यादौ ।—बहुवचनात् व्यस्तसमस्तमिति वदन्ति । वटाङ्कुराः,—वटस्य अभिनवपत्रमुकुलाः । तीक्ष्णानिति—अभिनवान् ॥ ३० ॥

मसूरैरित्यादौ ।—सर्पिषेति विशेषणे तृतीया । पिष्टैरित्यर्थात् पयसैव पिष्टैरित्यर्थः । पिष्टैरित्यत्र भृष्टैरित्यपि केचित् पठन्ति । वाग्भटेऽप्युक्तं—"क्षीरपिष्टा घृतक्षौद्रयुक्ता वा भृष्टनिस्तुषाः । मसूराः" इति ॥ ३१ ॥

नवनीतगुडक्षौद्र-कोलमज्जप्रलेपनम् ।
व्यङ्गजिद्वटत्वग्वा च्छागीक्षीरप्रपेषिता ॥
जातीफलकल्कलेपो नीलीव्यङ्गादिनाशनः ।
सायच्च कटुतैलेनाभ्यङ्गो वक्त्रप्रसादनः ॥ ३२ ॥
कालीयकोत्पलामयदधिसरबदरास्थिमध्यफलिनीभिः ।
लिप्तं भवति च वदनं शशिप्रभं सप्तरात्रेण ॥ ३३ ॥
तुषरहितमसृणयवचूर्णसयष्टीमधुकलोध्रलेपेन ।
भवति मुखं परिनिर्जितचामीकरचारुसौभाग्यम् ॥
रक्षोघ्नशर्वरीद्वयमञ्जिष्ठागैरिकाज्यवस्तपयः ।
सिद्धेन लिप्तमाननमुद्यद्रविबिम्बवद् विभाति ॥ ३४ ॥
परिणतदधिशरपुङ्खैः कुवलयदलकुष्ठचन्दनोशीरैः ।
मुखकमलकान्तिकारी भ्रुकुटीतिलकालकान् जयति ॥ ३५ ॥

हरिद्राद्यं तैलम्—

हरिद्राद्वययष्ट्याह्व-कालीयककुचन्दनैः ।
प्रपौण्डरीकमञ्जिष्ठा-पद्मपद्मककुङ्कुमैः ॥
कपित्थतिन्दुकप्लक्ष-वटपत्रैः पयोऽन्वितैः ।
लेपयेत् कल्कितैरेभिस्तैलं वाभ्यञ्जनं चरेत् ॥
पिप्लवं नीलिकाव्यङ्गांस्तिलकान् मुखदूषिकान् ।
नित्यसेवी जयेत् क्षिप्रं मुखं कुर्यान्मनोरमम् ॥ ३६ ॥

---

मातुलुङ्गस्य जटा—मूलम्, शिवा—नवशिवा, कोलमज्जा—बदरमज्जा । वटत्वग् वेति—द्वितीयो योगः ॥ ३१ ॥

कालीयकेत्यादौ ।—उत्पलं नीलोत्पलम्, आमयः—कुष्ठं, बदरास्थिमध्यं—बदरास्थिमज्जा, फलिनी—प्रियङ्गुः ॥ ३३ ॥

रक्षोघ्नः—श्वेतसर्षपः, आज्यं—घृतम् । वस्तपयःसिद्धेनेति—समासपदं, रक्षोघ्नादिसिद्धेन लेपेनेत्यर्थः ॥ ३४ ॥

परिणतेत्यादि ।—परिणतदधिसरविमिश्रलेपः । भ्रुकुटी—ललाटे बलीरूपा ॥ ३५ ॥

हरिद्रादौ ।—कुचन्दनं—चन्दनभेदः ; पद्म—पद्मपुष्पम् । पयोऽन्वितैः कपित्थादिभिः

कनक-तैलम्—

मधुकस्य कषायेण तैलस्य कुड़वं पचेत्।
कल्कैः प्रियङ्गुमञ्जिष्ठा-चन्दनोत्पलकेशरैः॥
कनकं नाम तत् तैलं मुखकान्तिकरं परम्।
अभीरुनीलिकाव्यङ्ग-शोधनं परमर्चितम्॥ २० ॥

मञ्जिष्ठाद्य तैलम्—

मञ्जिष्ठा मधुकं लाक्षा मातुलुङ्गं सयष्टिकम्।
कर्षप्रमाणैरेतैस्तु तैलस्य कुड़वं तथा॥
आजं पयस्तद्द्विगुणं शनैर्मृद्वग्निना पचेत्।
नीलिकापिड़काव्यङ्गानभ्यङ्गादेव नाशयेत्॥
मुखं प्रसन्नोपचितं वलीपलितवर्जितम्।
सप्तरात्रप्रयोगेण भवेत् कनकसन्निभम्॥ १८ ॥

(१) कुङ्कुमाद्य तैलम्—

कुङ्कुमं चन्दनं लाक्षा मञ्जिष्ठा मधुयष्टिका।
कालीयकमुशीरञ्च पद्मकं नीलमुत्पलम्॥
न्यग्रोधपादाः प्लक्षस्य शुङ्गाः पद्मस्य केशरम्।
द्विपञ्चमूलसहितैः कषायैः पलिकैः पृथक्॥
जलाढ़के विपक्तव्यं पादशेषमथोद्धरेत्।
मञ्जिष्ठा मधुकं लाक्षा पत्तङ्गं मधुयष्टिका॥

---

प्रत्येकं सम्बध्यते। त्रिपयसि—पयसैव पेषणम्। तैलपाककाले—हरिद्रादीनां कल्कः; क्षीरन्तु चतुर्गुणम्। पिप्लवमिति जटुलम्॥ १९॥

मधुकस्येत्यादौ।—केसर—नागकेसरम्। अभीरु—जटुलम्॥ २०॥

मञ्जिष्ठेत्यादौ।—मातुलुङ्गस्य मूलम्। मधुकं सयष्टिकम् इति पदद्वयोपादानात् स्थलजजलजभेदेन यष्टिमधुद्वयमिह ग्राह्यमिति ज्ञेयम्॥ १८॥

कुङ्कुममित्यादौ।—न्यग्रोधस्य वटस्य पादाः शुङ्गाः; प्लक्षः—पाकडी। कषायैरिति।—कषायसाधनैः कुङ्कुमरक्तचन्दनादिभिः, पद्मवल्कलैरित्यर्थः। पतङ्ग—रक्त-

कर्षप्रमाणैरेतैस्तु तैलस्य कुड़वं पचेत्।
अजाक्षीरं तद्द्विगुणं शनैर्मृद्वग्निना पचेत्॥
सम्यक् पक्वं परं ह्येतन्मुखवर्णप्रसादनम्।
नीलिकापिड़काव्यङ्गानभ्यङ्गादेव नाशयेत्॥
सप्तरात्रप्रयोगेण भवेत् काञ्चनसन्निभम्।
कुङ्कुमाद्यमिदं तैलमश्विभ्यां निर्मितं पुरा॥ ३९॥

(२) कुङ्कुमाद्यं तैलम्—

कुङ्कुमं चन्दनं लाक्षा मञ्जिष्ठा मधुयष्टिका।
कर्षप्रमाणैरेतैस्तु तैलस्य कुड़वं पचेत्।
अजाक्षीरं तद्द्विगुणं शनैर्मृद्वग्निना पचेत्॥
सम्यक् पक्वं परं ह्येतन्मुखकान्तिप्रसादनम्।
नीलिकापिड़काव्यङ्गानभ्यङ्गादेव नाशयेत्॥
सप्तरात्रप्रयोगेण भवेत् काञ्चनसन्निभम्।
कुङ्कुमाद्यमिदं तैलमश्विभ्यां निर्मितं पुरा॥ ४०॥

(३) कुङ्कुमाद्यं तैलम्—

कुङ्कुमं किंशुकं लाक्षा मञ्जिष्ठा रक्तचन्दनम्।
कालीयकं पद्मकञ्च मातुलुङ्गं सकेशरम्॥
कुसुम्भं मधुयष्टीकं फलिनी मदयन्तिका।
निशे द्वे रोचनापद्मसुत्पलञ्च मनःशिला॥
काकोल्यादिसमायुक्तैरेतैश्चसमैर्भिषक्।
लाक्षारसपयोभ्याञ्च तैलप्रस्थं विपाचयेत्॥

---

चन्दनम्। द्विपञ्चमूलसहितैरिति—अत्र पञ्चकिञ्जल्कसहितैरिति केचित् पठन्ति; वाग्भटेऽपि दशमूलं विना योगोऽयं दृश्यते, एवं चक्रटेऽपि, तेनापि योगान्तरम्॥ ३९॥

द्वितीयकुङ्कुमाद्यं तैलमाह, कुङ्कुममित्यादि।—स्पष्टम्॥ ४०॥

तृतीयकुङ्कुमाद्यतैले।—किंशुक,—पलाश, तस्य पुष्पं ग्राह्यम्। ,मातुलुङ्ग

कुङ्कुमाद्यमिदं तैलमाभ्यङ्गात् काञ्चनोपमम् ।
करोति वदनं सम्यक् पुष्टिलावण्यकान्तिदम् ॥
सौभाग्यलक्ष्मीजननं वशीकरणमुत्तमम् ॥ ४१ ॥

वर्णकं घृतम्—

मधुकं चन्दनं कङ्गुः सर्षपं पद्मकं तथा ।
कालेयकं हरिद्रा च लोध्रमेभिश्च कल्कितैः ।
विपचेद्धि घृतं वैद्यस्तत्पक्वं वस्त्रगालितम् ।
पादांशं कुङ्कुमं सिक्थं क्षिप्त्वा मन्दानले पचेत् ॥
तत् सिद्धं शिशिरे नीरे प्रक्षिप्याकर्षयेत् ततः ।
तदेतद्वर्णकं नाम घृतं वर्णप्रसादनम् ॥
अनेनाभ्यासलिप्तं हि वलीपलितनाशनम् ।
निष्कलङ्केन्दुबिम्बाभं स्याद्विलासवतीमुखम् ॥ ४२ ॥

अर्द्धविकायां रुधिरेऽवसिक्ते
शिराव्यधेनाथ जलौकसा वा ।
निम्बाम्बुसिक्ते शिरसि प्रलेपो
देयोऽक्षवर्चोरससैन्धवाभ्याम् ॥ ४३ ॥

---

सकेसरमिति ।—मातुलुङ्गस्य मूलं केसरमेवाहुः । मदयन्ती—मल्लिकाभेदः । काकोल्यादिः,—क्षीरशुक्लपयः, अष्टवर्गो ह्यत्रो । लाक्षारसपयसी मिलित्वा तैलाच्चतुर्गुणे ॥ ४१ ॥

मधुकमित्यादौ ।—कङ्गुः,—कायोलीसंज्ञकं धान्यम् । वस्त्रगालितमिति ।—किञ्चिज्ज्वलसम्बन्धं सक्षेत वस्त्रेण गालनीयं, ततो मिलित्वा घृतात् पादांशं कुङ्कुमं सिक्थकञ्च कल्कं प्रक्षिप्य मन्दाग्निना पुनरप्यवधानेन आसमयपर्यन्तं पक्तव्यं,—यथा सिक्थकदाहो न स्यात्; सिद्धे च तद्घृतपात्रं शीतलजले निधाय शीतीभूते चाकर्षयेत्, तथा सति सिक्थकस्य दाहो न स्यादिति भावः ॥ ४२ ॥

अर्द्धविकायामित्यादौ ।—निम्बाम्बु—पत्रैर्मदी निम्बक्वाथः ॥ ४३ ॥

पुराणमपि पिण्याकं पुरीषं कुक्कुटस्य वा ।
मूत्रपिष्टं प्रलेपोऽयं शीघ्रं हन्यादरुंषिकाम् ॥
अरुंषिघ्नं अष्टकुष्ठ चूर्णं तैलेन संयुतम् ॥ ४४ ॥

हरिद्राद्य तैलम्—

हरिद्राद्वयभूनिम्ब-त्रिफलारिष्टचन्दनैः ।
एतत् तैलमरुंषीणां सिद्धमभ्यञ्जने हितम् ॥ ४५ ॥
दारुणे तु सिरां विध्येत् स्निग्धां स्विन्नां ललाटजाम् ।
अवपीड़शिरोवस्तीनभ्यङ्गांश्चावचारयेत् ॥
कोद्रवाणां तृणक्षार-पानीयं परिधावने ।
कार्य्यो दारुणके मूर्ध्नि प्रलेपो मधुसंयुतः ॥
पियालबीजमधुक-कुष्ठमिश्रैः ससैन्धवैः ।
कञ्जिकस्याक्षिसमाषं माषा दारुणकापहाः ॥ ४६ ॥
सह नीलोत्पलकेशर-यष्टीमधुकतिलैः सहयामलकम् ।
चिरजातमपि च शीर्षे दारुणरोगं शमं नयति ॥ ४७ ॥

त्रिफलाद्य तैलम्—

त्रिफलाया रजो मांसी-मार्कवोत्पलशारिवैः ।
ससैन्धवैः पचेत् तैलमभ्यङ्गादरुंषिकां जयेत् ॥ ४८ ॥

---

पुराणमित्यादि ।—चीनवयम्, अत एव शाक्यम्: । पिण्याकः,—तिलखली, एक-धीगताऽप्यायुर्वेदसारसवादात् । अष्टकुष्ठचूर्णमिति ।—कपाले कुष्ठं धृत्वा दग्ध्वा चूर्णं कर्त्तव्यमित्यर्थः ॥ ४४ । ४५ ॥

दारुण इति—उक्तचिकित्सायाम् । अवपीड,—नस्यभेदः । शिरोवस्तिश्च हरिद्राद्य-तैलेन देय इत्याहुः । पियालबीजमधुककुष्ठमिश्रैरिति ।—पियालबीजमधुककुष्ठानि च तानि मिश्राणि चेति विग्रहं कृत्वा समाधेयम् ; मिश्रैरित्यत्र स्थाने माषैरित्यपि पाठान्तरम् ॥ ४६ ॥

सहेत्यादौ ।—नीलोत्पलस्य केशरं—किञ्जल्कः । सहयमिति—तुल्यम् ॥ ४७ ॥

त्रिफलाया इत्यादौ ।—मार्कव,—भृङ्गराजः ; उत्पलशारिवा—अनन्तमूलम् ; कान्दपलाङ्कुरः ; पक्षे तु—उत्पलं—नीलोत्पलं, शारिवा च इत्याहुः ॥ ४८ ॥

चित्रकाद्यं तैलम्—

चित्रकं दन्तिमूलञ्च कोषातकीसमन्वितम् ।
कल्कं पिष्ट्वा पचेत् तैलं केशदद्रुविनाशनम् ॥ ४८ ॥

गुञ्जाद्यं तैलम्—

गुञ्जाफलैः शृतं तैलं भृङ्गराजरसेन तु ।
कण्डूदारुणहृत् कुष्ठ-कपालव्याधिनाशनम् ॥ ५० ॥

भृङ्गराजतैलम्—

भृङ्गरजस्त्रिफलोत्पलशारि-लौहपुरीषसमन्वितकारि ।
तैलमिदं पच दारुणहारि कुञ्चितकेशघनस्थिरकारि ॥ ५१ ॥

प्रपौण्डरीकाद्यं तैलम्—

प्रपौण्डरीकमधुक-पिप्पलीचन्दनोत्पलैः ।
कार्षिकैस्तैलकुडवं तैर्हिरामलकीरसः ।
साध्यः सप्रतिमर्षः स्यात् सर्वशीर्षगदापहः ॥ ५२ ॥

मालत्याद्यं तैलम्—

मालतीकरवीराग्नि-नक्तमालविपाचितम् ।

---

चित्रकमित्यादौ ।—कोषातकी—घोषकः ॥ ४८ ॥

भृङ्गराजरसेनेति—चतुर्गुणेनेत्यर्थः ॥ ५० ॥

भृङ्गरज इत्यादौ ।—भृङ्गरजः,—भृङ्गराजः, तस्य रसश्चतुर्गुणः, पाकार्थत्वात् । भृङ्गरजःशब्दोऽप्यस्ति, यथा—"ये मासमेकं स्वरसं पिबन्ति दिने दिने भृङ्गरजःसमुत्थम्" इति । त्रिफलादीनां कल्कः । उत्पलं—नीलोत्पलम् ; शारि—शारिवा, अनन्तमूलम् ; समन्वितकारः,—सहकारः ; समन्वितशब्दस्य सहार्थत्वात्, यस्य च फलमध्य याह्यं, केशघ्नत्वात् कृष्णीकरणत्वात् । भृङ्गराजादिसमन्वितकारात्मं द्रव्यमस्मिन्नस्तीति इन् ; तैलविशेषणमेतत् । अन्ये तु—भृङ्गरज आदि सर्वं द्रव्यं कल्कः, जलेन पाकः । उत्पलशारिवा—अनन्तमूलं, भृङ्गराजादिभिः सह समन्वयं कर्त्तुं शीलमस्येति तैलविशेषणमिति । व्यवहारस्तु—पूर्वव्याख्ययैव । कुञ्चितकेशघनस्थिरकारीति ।—केशस्य कुञ्चितत्वघनत्वस्थिरत्वकारीत्यर्थः । कुञ्चितशब्दस्य पूर्वनिपातश्छान्दसत्वात् ॥ ५१ ॥

प्रपौण्डरीकेत्यादौ ।—तैलापेक्षया द्विगुणेनामलकीरसेनैव पाकः । प्रतिमर्षः,—नस्यभेदः । सप्रतिमर्ष इति ।—प्रतिमर्षविधिना उपयुक्त इत्यर्थः ॥ ५२ ॥

तैलमभ्यञ्जने शस्तमिन्द्रलुप्तापहं परम्।
इदं हि त्वरितं हन्ति दारुणं नियतं नृणाम् ॥ ५३ ॥
धात्र्याम्रमज्जलेपात् स्यात् स्थिरता स्निग्धकेशता।
इन्द्रलुप्ते शिरां विद्धा शिलाकाशीशतुत्थकैः ॥
लेपयेत् परितः कल्कैस्तैलञ्चाभ्यञ्जने हितम्।
कुटन्नटशिखिजाती-करञ्जकरवीरजैः ॥ ५४ ॥
अवगाढ़पदञ्चैव प्रच्छयित्वा पुनःपुनः।
गुञ्जाफलैर्विरं लिम्पेत् केशभूमिं समन्ततः ॥ ५५ ॥
हस्तिदन्तमसीं कृत्वा मुख्यञ्चैव रसाञ्जनम्।
लोमान्यनेन जायन्ते नृणां पाणितलेष्वपि ॥ ५६ ॥
भल्लातकबृहतीफल-गुञ्जामूलफलैश्च एकेन।
मधुसहितेन विलिप्तं सुरपतिलुप्तं शमं याति ॥ ५७ ॥

---

मालत्यादि।—मालती—जाती,—वह्नि,—चित्रक.। अत्र तीसटेन पाठ इति श्रीकण्ठः ॥ ५२ ॥

धात्रीत्यादौ।—मज्जशब्दस्याम्रेणैव सम्बन्धः, धात्र्यमज्जा तु नास्त्यास्थि। इन्द्रलुप्त इत्यादौ।—शिरामिति—इन्द्रलुप्तसन्निहितां शिराम्। तैलञ्चाभ्यञ्जने हितमिति। —कुटन्नटादिकरवीरान्तैः कल्कैः सिद्धं तैलमित्यर्थः। कुटन्नटमिति—कुटन्नटं कैवर्तमुस्तकं, शिखी—चित्रक.। अन्ये तु—कुटन्नटमिति च्छेदः, विच्छेदपाठात् कुटन्नटं विनापि चित्रकादिद्रव्यचतुष्टयेन तैलसाधनं सूचयन्ति, व्याख्यानयन्ति च—शिखीति दीर्घपाठश्छान्दसत्वात् समर्थनीय। अन्ये तु—कुटन्नटादिभिरपि लेप एव, तैलन्तु पूर्वोक्तमालतीकरवीरादिसिद्धमेव बोध्यमित्याहुः ॥ ५४ ॥

अवगाढेत्यादि।—अवगाढपदमिति—गम्भीरपदं यथा स्यात् तथा सूचीनखशस्त्रादिभि. प्रच्छयित्वा रक्तगुञ्जाफलैः पुनःपुनर्लिम्पेत् ॥ ५५ ॥

हस्तिदन्तेत्यादौ।—मुख्यमिति—अकृत्रिम,—तेन दार्वीक्वाथोद्भवरसाञ्जननिषेधः। तत्र जलेन पेषणं बोध्य, द्रव्यान्तरस्यानुक्तेः। अत एव वक्ष्यमाणेन काशीचौररसाञ्जने-त्यादिना अस्य न पौनरुक्त्यम् ॥ ५६ ॥

भल्लातकेत्यादौ।—भल्लातकबृहतीफलयोः रसः। अत्र हि वाग्भटे—"सचौद्र-

बृहतीफलरसपिष्टं गुञ्जामूलफलमिन्द्रलुप्तस्य ।
कनकनिघृष्टस्य सतो दातव्यं प्रच्छितस्य सदा ॥
घृष्टस्य कर्कशैः पत्रैरिन्द्रलुप्तस्य गुण्डनम् ।
चूर्णितैर्मरिचैः कार्यमिन्द्रलुप्तविनाशनम् ॥ ५८ ॥
छागक्षीररसाञ्जनपुटदग्धगजेन्द्रदन्तमसिलिप्ताः ।
जायन्ते सततरायात् खल्वतामपि कुञ्चिताश्चिकुराः ॥ ५९ ॥
मधुकेन्दीवरमूर्वातिलाज्यगोक्षीरभृङ्गलेपेन ।
अचिराद्भवन्ति घनकेशा दृढमूलायतास्त्वृजवः ॥ ६० ॥

स्नुह्याद्यं तैलम्—

स्नुहीपयः पयोऽर्कस्य मार्कवो लाङ्गलीविषम् ।
मूत्रमाजं सगोमूत्रं रक्तिका सेन्द्रवारुणी ॥
सिद्धार्थं तीक्ष्णतैलस्य गर्भं दत्त्वा विपाचितम् ।
वह्निना मृदुना पक्वं तैलं खालित्यनाशनम् ॥
कूर्मपृष्ठसमानापि रुक्षा या रोमतस्करी ।
दिग्धा सानेन जायेत ऋक्षगात्रेव लोमशी ॥ ६१ ॥

---

क्षुद्रवार्ताकुरसेन रसेन वा। धुस्तूरस्य च पत्राणां भल्लातकरसेन वा॥" इति ॥ ५७ ॥

बृहतीत्यादौ।—पक्वबृहतीफलरसेन पिष्टं गुञ्जाया मूलं फलं वा। कनकनिघृष्टस्येति।—कनकं—सुवर्णं, धुस्तूरस्य मूलं वा। प्रच्छितस्येति।—शस्त्रप्रान्तादिना विलिखितस्य, गुण्डनमिति—अवचूर्णनम् ॥ ५८ । ५९ ॥

मधुकेत्यादौ।—इन्दीवरं—नीलोत्पलं, भृङ्गः—भृङ्गराजः। ऋजवः—अकुटिलाः ॥ ६० ॥

स्नुहीत्यादौ।—मार्कवः—भृङ्गराजः; लाङ्गलीविषं—विषलाङ्गलियामूलाख्यं विषं, किंवा लाङ्गली च विषञ्चेति द्रव्यद्वयम्। रक्तिका—गुञ्जिका, तस्या मूलं, फलमित्यन्ये। इन्द्रवारुणी—गोरक्षकर्कटी; सिद्धार्थः—श्वेतसर्षपः; तीक्ष्णतैलं—सार्षपतैलं, ज्योतिष्मतीमूलं फलमित्यन्ये। सिद्धार्थतीक्ष्णतैलमिति—समस्तपाठपक्षे—तीक्ष्णमिति तैलविशेषणम्। असर्जितस्य सर्षपस्य तैलं ज्ञेयम्। अजामूत्रगोमूत्रे

आदित्यपाक गुडूची तैलम्—

वटावरोहकेशिन्योश्चूर्णेनादित्यपाचितम् ।
गुडूचीस्वरसे तैलमभ्यङ्गात् केशरोपणम् ॥ ६२ ॥

चन्दनाद्यं तैलम्—

चन्दनं मधुकं मूर्वा त्रिफला नीलमुत्पलम् ।
कान्ता वटावरोहश्च गुडूची विसमेव च ॥
लौहचूर्णं तथा केशी शारिवे द्वे तथैव च ।
मार्कवस्वरसेनैव तैलं मृद्वग्निना पचेत् ॥
शिरस्युत्पतिताः केशा जायन्ते घनकुञ्चिताः ।
दृढमूलाश्च स्निग्धाश्च तथा भ्रमरसन्निभाः ।
नस्येनाकालपलितं निहन्यात् तैलमुत्तमम् ॥ ६३ ॥
तैलं सयष्टिमधुकैः क्षीरे धात्रीफलैः शृतम् ।
नस्ये दत्तं जनयति केशान् श्मश्रूणि चाप्यथ ॥ ६४ ॥
त्रिफला नीलिनीपत्रं लौहभृङ्गरजः समम् ।
अविमूत्रेण संयुक्तं कृष्णीकरणमुत्तमम् ॥ ६५ ॥
त्रिफलाचूर्णसंयुक्तं लौहचूर्णं विनिक्षिपेत् ।
ईषत्पक्वे नारिकेले भृङ्गराजरसान्विते ॥

---

मिलित्वा चतुर्गुणे, शेष कल्क । छिन्ना इति—खण्डिता । रूपस्य—भल्लूकस्य, मारी—पीडिका इव ॥ ६१ ॥

वटावरोहेत्यादौ ।—केशिनी—भूतकेशी मांसी वा, एतयोश्चूर्णं तैलात् पादिकं कल्कत्वात्, गुडूचीरसस्तु तैलसमः आदित्यपाकत्वात् ॥ ६२ ॥

चन्दनमित्यादौ ।—कान्ता—प्रियङ्गु, विस—मृणालम्, केशी—भूतकेशी; मार्कवरसश्चतुर्गुण ॥ ६३ ॥

तैलमित्यादौ ।—क्षीरमेव चतुर्गुणं द्रवान्तराभावात् ॥ ६४ ॥

त्रिफलेत्यादौ ।—नीलिनी—नीलीति प्रसिद्धा लता, तस्याः पत्रम्; लौह भृङ्ग-रजसोश्चूर्णमित्यर्थः । अविमूत्रेण संयुक्तमिति ।—भावितम्, शिरोलेपोऽयं प्रहरौ द्वौ त्रीन् वा धार्यः; एवमन्यत्रापि शिरोलेपनधारणम् ॥ ६५ ॥

मासमेकन्तु निक्षिप्य सम्यग् गर्भात् समुद्धरेत् ।
ततः शिरो मुण्डयित्वा लेपं दद्याद्विपश्वरः ॥
संवेष्ट्य कदलीपत्रैर्मोचयेत् सप्तमे दिने ।
क्षालयेत् त्रिफलाक्वाथैः क्षीरमांसरसाशिनः ।
कपालरञ्जनञ्चैतत् कृष्णीकरणमुत्तमम् ॥ ६६ ॥
उत्पलं पयसा सार्द्धं मासं भूमौ निधापयेत् ।
केशानां कृष्णीकरणं स्नेहनञ्च विधीयते ॥ ६७ ॥
भृङ्गपुष्पं जवापुष्पं मेषीदुग्धप्रपेषितम् ।
तेनैवालोड़ितं लोह-पात्रस्थं भूम्यधःकृतम् ॥
सप्ताहादुद्धृतं पश्चाद् भृङ्गराजरसेन तु ।
आलोड्याभ्यज्य च शिरो वेष्टयित्वा वसेन्निशाम् ॥
प्रातस्तु क्षालनं कार्य्यमेवं स्यान्मूर्द्धरञ्जनम् ।
एवं सिन्दूरबालाम्र-शङ्खभृङ्गरसैः क्रिया ॥ ६८ ॥
नरदुग्धशङ्खचूर्णं काञ्जिकसिक्तं हि सीसकं घृष्ट्वा ।
लेपात् काचमकेदलावनद्धं शुभ्रं करोति नीलतरम् ॥ ६९ ॥

---

त्रिफलेत्यादौ ।—गर्भादिति—नारिकेलोदरात् । गर्त्तादिति च पाठे—स एवार्थः ॥ ६६ ॥

उत्पलमित्यादौ ।—उत्पल—नीलोत्पलम् ; मासं भूमौ निधापयेदिति ।—लौहपात्रे कृत्वा भूम्यधः स्थापयेदित्यर्थः ॥ ६७ ॥

भृङ्गेति ।—भृङ्गराजरसालोड़ितेन—भृङ्गराजपुष्पादिना मर्दितेनेत्यर्थः । वेष्टयित्वा इति—कदलीपत्रेणेति शेषः । शिर प्रक्षालनञ्च त्रिफलाक्वाथेनेति वदन्ति । एवमित्यादि ।—बालाम्र—बालाम्रबीजं, शङ्ख,—शङ्खनाभिः । "एवम्" इत्यनेन सिन्दूरादिद्रव्यैरपि पूर्ववन्मेषदुग्धपेषणादिकमतिदिशति । भृङ्गरसैरिति ।—भृङ्गराजरसेऽपि आलोडनार्थमेव ; एतच्च यद्यपि एवमित्यतिदेशेनैव लभ्यते तथापि स्पष्टार्थमुक्तम् ॥ ६८ ॥

नरेत्यादि ।—अत्र किञ्चित् पारद गृहीत्वा काचपात्रे सीसके प्रक्षिपेत, ततस्तेन सह एकीभूतं सीसकं घृष्ट्वा शिरसि लेपो देय इत्युपदिशन्ति वृद्धाः । अर्कदलावनद्धमिति ।—अर्कपत्रेण पिधाय बद्धमित्यर्थः ॥ ६९ ॥

लौहमलामलकल्कैः सजपाकुसुमैर्नरः सदा स्नायी।
पलितानीह न पश्यति गङ्गास्नायीव नरकाणि ॥ ७० ॥

निम्बस्य बीजानि हि भावितानि
भृङ्गस्य तोयेन तथाऽसनस्य।
तैलन्तु तेषां विनिहन्ति नस्याद्
दुग्धान्नभोक्तुः पलितं समूलम् ॥ ७१ ॥
निम्बस्य तैलं प्रकृतिस्थमेव
नस्यो निषिक्तं विधिना यथावत्।
मासेन गोक्षीरभुजो नरस्य
जराप्रभूतं पलितं निहन्ति ॥ ७२ ॥

क्षीरात् समार्कवरसाद्द्विप्रस्थे मधुकात् पले।
तैलस्य कुडवं पक्वं तन्नस्यं पलितापहम् ॥ ७३ ॥

महानील तैलम्—

आदित्यवल्ल्या मूलानि कृष्णशैरीयकस्य च।
सुरसस्य च पत्राणि फलं कृष्णशणस्य च॥
मार्कवः काकमाची च मधुकं देवदारु च।
पृथग्दशपलांशानि पिप्पल्यस्त्रिफलाञ्जनम्॥

---

लौहमलेत्यादी।—लोहमलं—लौहकिट्टं, जपाकुसुमम्—ओड्रपुष्पम् ॥ ७० ॥
निम्बस्येत्यादि।—भृङ्गः,—भीमराजः। भावना च प्रत्येकं सप्ताहम् ॥ ७१ ॥
निम्बस्य तैलं—निम्बबीजस्य तैलम्। प्रकृतिस्थमेवेति।—भृङ्गराजरसादिभावना-रहितम्। विधिनेति।—नस्योक्तविधिना। जराप्रभूतमिति।—जरासमुद्भवम् ॥ ७२ ॥
क्षीरादित्यादि।—क्षीरभृङ्गराजरसयोर्मिलित्वा प्रस्थद्वयम्; निर्देशस्य ... मानात्। मधुकात् पले इति।—यष्टीमधुनः, न तु मदनादौ विवर्णं, मधुकं ... ॥ ७३ ॥
महानीलतैले।—आदित्यवल्ली—सूर्यावर्त्तं, आदित्यभक्तेति ... ।

प्रपौण्डरीकं मञ्जिष्ठा लोध्रं कृष्णागुरूत्पलम् ।
आम्रास्थि कर्दमः कृष्णो मृणाली रक्तचन्दनम् ॥
नीली भल्लातकास्थीनि काशीशं मदयन्तिका ।
सोमराज्यशनः शस्त्रं कृष्णौ पिण्डीतचित्रकौ ॥
पुष्पाण्यर्जुनकाश्मर्य्योराम्रजम्बूफलानि च ।
पृथक् पञ्चपलैर्भागैः सुपिष्टैराढकं पचेत् ॥
वैभीतकस्य तैलस्य धात्रीरसचतुर्गुणम् ।
कुर्य्यादादित्यपाकं वा यावच्छुष्को भवेद्रसः ॥
लौहपात्रे ततः पूतं संशुद्धमुपयोजयेत् ।
पाने नस्तःक्रियायाञ्च शिरोऽभ्यङ्गे तथैव च ॥
एतच्चक्षुष्यमायुष्यं शिरसः सर्वरोगनुत् ।
महानीलमिति ख्यातं पलितघ्नमनुत्तमम् ॥ ७४ ॥

भृङ्गराज-घृतम्—

भृङ्गराजरसे पक्वं शिखिपित्तेन कल्कितम् ।
घृतं नस्येन पलितं हन्यात् सप्ताहयोगतः ॥ ७५ ॥

---

प्रपौण्डरीकः,—पौण्डरिया ; सरसः,—पर्य्यायः ; शस्त्रं—रसाञ्जनम् ; कृष्णकर्दमः,—नलिनीमूलस्थितकर्दमः, सुश्रुतेऽपि—"पङ्केन नलिनीभवेन" इत्युक्तम् । नीली—नीलीति ख्याता लता , अशनः,—पीतशालः ; शस्त्रं—कान्तलौहचूर्णम् ; पिण्डीतः,—मदनः, कृष्णाविति—कृष्णपुष्पौ । पुष्पाण्यर्जुनकाश्मर्य्योरिति ।—अर्जुनकाश्मरीभवानि पुष्पाणि । अर्जुनकाश्मर्य्योरित्यपि पाठः । लौहपात्रेऽग्निना पचेदादित्यपाकं वा कुर्य्यादिति, योज्यम् । आदित्यपाकस्तु आदित्यरश्मिसम्बन्धादेव द्रवशोषावधिः । अत्र भागैरिति बहुवचनादेव पृथग्भावे लब्धे पृथगिति पदं न्यायसिद्धस्यापि विकल्पायाः पृथग्भागस्य द्योतनार्थं, अल्पभूयस्त्वात वचनादेव भवति विकल्पनीयम् ॥ ७४ ॥

भृङ्गराजेत्यादौ ।—शिखी—मयूरः । एतत्तु कुड़वमानमत्र नस्ययोगत्वात् ॥ ७५ ॥

काश्मीरीपिष्टशेलुफल-मज्जि सच्छिद्रलौहगे।
यदर्कतापात् पतति तैलं तन्नस्यभ्रंशणात् ॥
केशा नीलालिसङ्काशाः सद्यः स्निग्धा भवन्ति च।
नयनश्रवणग्रीवा-दन्तरोगांश्च हन्त्यदः ॥ ७६ ॥
काशीशं रोचना तुत्थं हरितालं रसाञ्जनम्।
अम्लपिष्टैः प्रलेपोऽयं वृषणकच्छुविपूतयोः ॥ ७७ ॥

पटोलाद्य घृतम्—

पटोलपत्रत्रिफला-रसाञ्जनविपाचितम्।
पीतं घृतं निहन्त्याशु कृच्छ्रामप्यहिपूतनाम् ॥ ७८ ॥
रजनीमार्कवमूलं पिष्टं शीतेन वारिणा तुल्यम्।
हन्ति विसर्पं लेपाद्वराहदशनाह्वयं घोरम् ॥ ७९ ॥
नागकेशरचूर्णं वा शतधौतेन सर्पिषा।
पिष्ट्वा लेपो विधातव्यो दाहे हर्षे च पादयोः ॥ ८० ॥

इति क्षुद्ररोग चिकित्सा।

---

काश्मीत्यादौ।—शेलु,—बहुवार॰। सच्छिद्रलौहग इति।—बहुच्छिद्रलौहपात्रस्थं। नीलालिसङ्काशा इति।—नीलपद्म विप्रलम्भमरनिरतानां ॥ ७६ ॥

काशीशमित्यादौ।—एभैरिति शेष। "काशीशरोचनातुत्थहरितालरसाञ्जनैः" इत्यपि पाठ. ॥ ७७। ७८ ॥

वराहदशनाह्वयमिति।—वराहदन्तमिति प्रसिद्धम् ॥ ७९। ८० ॥

इति क्षुद्ररोग चिकित्सा-विवृतिः।

# अथ मुखरोगचिकित्सा ।

ओष्ठरोग-चिकित्सा ।

ओष्ठप्रकोपे वातोत्थे शाल्वणेनोपनाहनम् ।
मस्तिष्के चैव नस्ये च तैलं वातहरैः शृतम् ॥ १ ॥
स्वेदोऽभ्यङ्गः स्नेहपानं रसायनमिहेष्यते ।
श्रीवेष्टकं सर्जरसं गुग्गुलुं सुरदारु च ।
यष्टीमधुकचूर्णञ्च विदध्यात् प्रतिसारणम् ॥ २ ॥

वेधं शिराणां वमनं विरेकम्
तिक्तस्य पानं रसभोजनञ्च ।
शीतान् प्रलेपान् परिषेचनञ्च
पित्तोपसृष्टेष्वधरेषु कुर्य्यात् ॥

पित्तरक्ताभिघातोत्थान् जलौकाभिरुपाचरेत् ।
पित्तविद्रधिवच्चापि क्रियां कुर्य्यादशेषतः ॥
शिरोविरेचनं धूमः स्वेदः कवड़धारणम् ।
हृते रक्ते प्रयोक्तव्यमोष्ठकोपे कफात्मके ॥
त्रिकटु स्वर्जिकाक्षारः क्षारश्च यावशूकजः ।
क्षौद्रयुक्तं विधातव्यमेतच्च प्रतिसारणम् ॥ ३ ॥

---

क्षुद्ररोगास्तु चतुश्चत्वारिंशत्, मुखरोगास्तु पञ्चषष्टिः, अतो रोगगणसामान्यात् क्षुद्ररोगचिकित्सितप्रसङ्गान्मुखरोगचिकित्सितमुच्यते, ओष्ठेत्यादि।—सुश्रुतस्य।—मस्तिष्के चैवेति।—मस्तिष्कः शिरोबस्तिः स्नेहोक्तपिचुधारणं वा। वातहरैरिति।—भद्रदार्वादिभिः॥ १ ॥

रसायनमिहेष्यत इति।—रसायनं च्यवनप्राशादि। श्रीवेष्टकमित्यादि।—सुश्रुतस्य।—श्रीवेष्टकं—नवनीतखोटी। प्रतिसारणं—घर्षणम्। वाग्भटे तु—श्रीवेष्टकस्थाने मधूच्छिष्टं पठ्यते॥ २ ॥

वेधमित्यादि।—शिरा च ओष्ठसमीपगता बोध्या। तिक्तस्येति।—अत्र सर्पिष इति शेषः। पित्तेत्यादि।—सुश्रुतस्य।—पित्तोत्थं—रक्तोत्थमभिघातजञ्चेत्यर्थः। यद्यपि—"ओष्ठप्रकोपे वर्ज्याः स्युर्मांसरक्तत्रिदोषजाः" इत्युक्तं, तथाप्यप्रतिरुद्धे तत्र चिकित्सेयम्

मेदोजे स्वेदिते भिन्ने शोधिते ज्वलनो हितः।
प्रियङ्गुत्रिफलालोध्रं सचौद्रं प्रतिसारणम्॥
हितश्च त्रिफलाचूर्णं मधुयुक्तं प्रलेपनम्॥ ४॥
सर्जरसकनकगैरिकधन्याकतैलघृतसिन्धुसंयुक्तम्।
सिद्धं सिक्थकमधरे स्फुटितोच्चटिते व्रणं हरति॥ ५॥

ओष्ठरोग चिकित्सा।

## अथ दन्तरोग-चिकित्सा।

शीतादे हृतरक्ते तु तोये नागरसर्षपान्।
निःक्वाथ्य त्रिफलाञ्चापि कुर्य्याद्गण्डूषधारणम्।
प्रियङ्गवश्च मुस्ता च त्रिफला च प्रलेपनम्॥ १॥

कुष्ठं धात्री लोध्रमब्दं समङ्गा
पाठा तिक्ता तेजनी पीतिका च।
चूर्णं शस्तं घर्षणं तद्द्विजानाम्
रक्तस्रावं हन्ति कण्डूं रुजाश्च॥ २॥

---

इत्याह। भिन्न इत्यादि।—सुगमम्।—धूमोऽत्र वैरेचनिक, कफहरणयोग्यत्वात्; एवं कवडधारणमपि कफहरद्रव्यकृतम्; वाग्भटेऽप्युक्तं—"धूमस्वेदनगण्डूषाः वमनं चाथ कफच्छिद." इति॥ ३॥

मेदोज इत्यादि।—सुगमम्।—शोधिते इति।—मेदोहरणेन विशुद्धे। ज्वलन इति।—अग्निकर्म॥ ४॥

सर्जेत्यादौ।—कनकगैरिकम्—उत्कृष्टस्वर्णगैरिकमित्यर्थः। एतच्च सर्जरसादि-चूर्णं सिक्थकाक्तं स्नेहके किञ्चिदग्नावुष्णीकृत्य प्रक्षेपयोग्यं पक्त्वा यथार्थं अधरे धारणीयम्॥ ५॥

ओष्ठरोग-चिकित्सा विवृतिः।

---

दन्तरोगचिकित्सामाह, शीताद इत्यादि।—सुगमम्।—नागरादित्रिफलान्त एको योग.॥ १॥

कुष्ठमित्यादौ।—तेजनी—चवी। पीतिका—हरिद्रा॥ २॥

चलदन्तस्थिरकरं कुर्य्याद्वकुलचर्वणम्।
आर्त्तगलदलक्काथ-गण्डूषो दन्तचालनुत्॥
दन्तचाले हितं येष्टं तिलोग्राचर्वणं सदा।
दन्तपुप्पुटके कार्य्यं तरुणे रक्तमोक्षणम्॥
सपञ्चलवणक्षारः सक्षौद्रः प्रतिसारणम्।
दन्तानां तोदहर्षे च वातघ्नाः कवडा हिताः॥ ३॥
दन्तचाले तु गण्डूषो बकुलत्वक्कृतो हितः।
माक्षिकं पिप्पलीसर्पिर्मिश्रितं धारयेन्मुखे।
दन्तशूलहरं प्रोक्तं प्रधानमिदमौषधम्॥ ४॥
विस्राविते दन्तवेष्टे व्रणन्तु प्रतिसारयेत्।
लोध्रपत्तङ्गमधुक-लाक्षाचूर्णैर्मधूत्तरैः।
गण्डूषे क्षीरिणो योज्याः सक्षौद्रघृतशर्कराः॥ ५॥
शौषिरे हृतरक्ते तु लोध्रमुस्तारसाञ्जनैः।
सक्षौद्रैः शस्यते लेपो गण्डूषे क्षीरिणो हिताः॥ ६॥

---

चलेत्यादौ।—बकुलस्य फलं, दन्तस्थैर्य्यकरत्वात्। आर्त्तगलः,—झागडा इति ख्याता ; उग्रा—वचा। दन्तपुप्पुटक इत्यादि।—सुश्रुतस्य।—तरुण इति।—अल्पप्रमाणे, रक्तमोक्षणञ्च प्रच्छनेन। क्षारः,—यवक्षारः। वातघ्ना कवडा इति।—तैलघृतसर्पिर्दशमूलक्काथादयः॥ ३॥

माक्षिकमित्यादौ।—पिप्पलीघृतापेक्षया, मधु तु बहुमात्रं देयमिति वदन्ति। मधुन, कर्षमेकं, गव्यघृतं माषकाष्टकं, पिप्पलीचूर्णं माषकचतुष्टयम्, आलोड्य मुखे धार्य्यम्॥ ४॥

विस्राविते इत्यादि।—जलौकाप्रच्छनादिना रक्ते हृते। व्रणमिति—जलौकाप्रच्छनादिजं क्षतम्। पतङ्ग—रक्तचन्दनम्। क्षीरिण इति।—वटोडुम्बरादयः, एषां क्काथः, क्षौद्रघृतशर्कराः प्रक्षेपणीयाः॥ ५॥

शौषिरे इति।—दन्तरोगविशेषे, एवं परिदरेऽपि॥ ६॥

क्रियां परिदरे कुर्य्याच्छीतादोक्तां विचक्षणः।
संशोध्योभयतः कायं शिरश्चोपकुशे ततः॥ ७॥
काकोडुम्बरिकागोजी-पत्रैर्विस्रावयेद्भिषक्।
क्षौद्रयुक्तैश्च लवणैः सव्योषैः प्रतिसारयेत्॥ ८॥
पिप्पल्यः सर्षपाः श्वेता नागरं नैचुलं फलम्।
सुखोदकेन संसृज्य कवड़ं तस्य योजयेत्॥
शस्त्रेण दन्तवैदर्भे दन्तमूलानि शोधयेत्।
ततः क्षारं प्रयुञ्जीत क्रियाः सर्वाश्च शीतलाः॥ ९॥
उद्धृत्याधिकदन्तन्तु ततोऽग्निमवचारयेत्।
क्रिमिदन्तकवच्चात्र विधिः कार्य्यो विजानता॥ १०॥

क्रियामित्यादि।—सुश्रुतस्य।—कायमुभयतः संशोध्येति।—कायं—शरीरम्, उभयतः इति—वमनविरेचनाभ्यां, शिरश्च शिरोविरेचनेन। शिरःशोधनञ्च शिरोविरेचनेनैव। 'संशोध्योभयतः कायं शिरश्च' इति पदं परिदरे उपकुशे च योजयन्ति, युक्तञ्चैतत्। यतः परिदरो रक्तपित्तकफजः, अत एव कफप्रत्यनीकं वमनं पित्तरक्तप्रत्यनीकञ्च विरेचनं हितमेव, शिरोविरेचनञ्च शिरोगतकफक्षयार्थम्, एवमुपकुशेऽपि। उपकुशस्तु यद्यपि निदाने माधवेन पित्तरक्तजत्वेनैवोक्तः, तथापि तन्त्रान्तरप्रत्ययात् कफोऽप्यत्र ज्ञेयः, तद्यथा,—"वेष्टे च दाहपाकौ चलनं दन्तेषु नातिकापचनम्। कुर्य्यात् पित्तं रक्तं कफश्च कुपितस्तथोपकुशम्"॥ इति। तेन उपकुशेऽपि वमनशिरोविरेचने युक्ते एव भवतः। कायमित्यत्र कार्य्यमिति पाठे—शीतादोक्तां क्रियां परिदरे कुर्य्यात्। उपकुशे तु—वक्ष्यमाणरक्तस्रावादि कार्य्यमिति ज्ञेयम्॥ ७॥

गोजी—शाखोटकः। सव्योषैरिति—त्र्यूषणैः॥ ८॥

पिप्पल्य इत्यादौ।—श्वेता इति सर्षपविशेषणम्। नैचुलफलं—हिज्जलफलम्। एते च पिप्पल्यादयो व्यस्ताः समस्ताश्च कवले योज्याः। शोधयेदिति—दन्तमूलानि शोधयेत्। शस्त्रेणेति—मण्डलाग्रेण। अभिघातजेऽपि दन्तवैदर्भे शस्त्रेण दन्तमूलमांसच्छेदनम्, अभिघातदुष्टरक्तजनपाकेन शोथमांसस्रावणमनार्थम्। क्षारप्रयोगोऽपीषत्शोधितमेव पूतिमांसदूरीकरणार्थं, तदनन्तरञ्च शीतक्रिया, क्षारकुपितपित्तरक्तनिर्वापणार्थं, तत्र मधुमधूकादयः। उक्तं हि वाग्भटे—"क्षारं दद्यात् ततो नस्यं मधुकादि च शीतलम्" इति॥ ९॥

उद्धृत्येत्यादि।—सुश्रुतस्य।—अधिदन्तोऽत्र रक्तादिस्रुतिनिषेधार्थम्। क्रिमिदन्तो

छित्त्वाऽधिमांसं सक्षौद्रैरेतैश्चूर्णैरुपाचरेत् ।
पाठावचातेजोवती-सर्जिकायावशूकजैः ॥
क्षौद्रद्वितीयाः पिप्पल्यः कवलश्चात्र कीर्त्तितः ।
पटोलनिम्बत्रिफला-कषायश्चात्र धावने ।
शिरोविरेकश्च हितो धूमो वैरेचनश्च यः ॥
नाड़ीव्रणहरं कर्म दन्तनाड़ीषु कारयेत् ।
यं दन्तमधि जायेत नाड़ी तं दन्तमुद्धरेत् ॥
छित्त्वाऽधिमांसं शस्त्रेण यदि नोपरिजो भवेत् ।
शोधयित्वा दहेच्चापि क्षारेण ज्वलनेन वा ॥
गतिर्हिनस्ति हन्वस्थि दशने समुपेक्षिते ।
तस्मात् समूलं दशनमुद्धरेद्भग्नमस्थि च ॥ ११ ॥
उद्धृते तूत्तरे दन्ते शोणितं सम्प्रसिच्यते ।
रक्ताभियोगात् पूर्वोक्ता घोरा रोगा भवन्ति च ॥

---

द्विविधः, चलश्चाचलश्च ; तत्र चलः स उद्धार्य्यस्तद्विधिरेवातिदिश्यते। उद्धार्य्यत्वेन समानत्वात् न त्वचलस्य, तस्यानुद्धार्य्यत्वात्। चल एव क्रिमिदन्ते उद्धरणदाहौ युक्तौ। अधिदन्ते पुनश्चलेऽपि तद्विधानार्थमिह क्रिमिदन्तकविधातिदेशस्तयोरप्युद्धरणदाहयोरभिधानम् ॥ १० ॥

छित्त्वेत्यादि।—सयुतस्य।—तेजोवती—चवी, कवलग्रहोऽयम्। क्षौद्रद्वितीयाः पिप्पल्य इति।—क्षौद्रसहितपिप्पलीकवलः। वैरेचनिकधूमसाहचर्य्यात् शिरोविरेकोऽपि तीक्ष्णोऽत्र बोध्यः। यमिति।—यस्य दन्तस्य समीपे नाड़ी स्यात्, तं दन्तं चलमचलं वा शस्त्रेण दन्तावरकमांसं छित्त्वा उद्धरेत्। यदि नोपरिजो भवेदित्युद्धरणस्यापवादः। अधोभवदन्तानुद्धरणे दोषमाह, गतिरित्यादि।—गतिः,—नाड़ी, हन्वस्थि—कपोलसमीपास्थि, हिनस्ति—दारयति। दशने 'समुपेक्षिते सम्यगनुद्धृते सतीत्यर्थः। किंवा—"गतिर्हिनस्ति हन्वस्थि दशनं समुपेक्षिता" इति पाठान्तरे—दन्ते गतिरुपेक्षितेत्यर्थः। भग्नमस्थि चेति।—असम्यगुद्धृतदन्तस्य भग्नशेषमस्थि चेत्यर्थः। किंवा गतिविशोषितहन्वस्थि भग्नास्थीत्युच्यते ॥ ११ ॥

उपरिजदन्तानुद्धरणे हेतुमाह, उद्धृत इत्यादि।—उत्तर इति—उपरिजाते, सम्प्रसिच्यते अतिस्रवतीत्यर्थः। पूर्वोक्ता इति।—शोणितवर्णनीयोक्ता आक्षेपकादयः।

चलमप्युत्तरं दन्तमतो नापहरेद्भिषक् ।
कषायं जातीमदन-कटुकास्वादुकण्टकैः ॥
लोध्रखदिरमञ्जिष्ठा-यष्ट्याह्वैश्चापि यत् कृतम् ।
तैलं संशोधनं तद्धि हन्याद्दन्तगतां गतिम् ॥
कषायं परतः कृत्वा पिष्ट्वा लोध्रादिकल्कितम् ।
कण्टकी मदनो योज्यः स्वादुकण्टो विकङ्कतः ॥ १२ ॥
सुखोष्णाः स्नेहकवडाः सर्पिषस्त्रैवृतस्य वा ।
निर्यूहाश्चानिलघ्नानां दन्तहर्षप्रमर्दनाः ।
स्नैहिकश्च हितो धूमो नस्यं स्नैहिकमेव च ॥ १३ ॥

---

कषायमित्यादि ।—सुश्रुतस्य ।—जात्याः पत्रम्, मदनं—मदनकण्टकम्, कटुका—कटुरोहिणी, स्वादुकण्टकः,—विकङ्कतः । एतैः कृतः कषायः मुखधावनरूपः क्वाथः दन्तगतां गतिं हन्यात्, तथा लोध्रादिभिश्च यष्ट्याह्वान्तैः कल्करूपैर्यत् कृतं तैलं तदपि दन्तगतिं हन्यादित्यर्थः । अन्ये तु—कषायमित्यत्र परं कृत्वेति शेषः, तेन जात्यादिभिः कषायं कृत्वा लोध्रादिकल्केन च कृतं यत् तैलमिति व्याचक्षते । इत्येतावदनुमतोऽयमर्थः; व्यवहारोऽप्यनेनैव । जेज्जटस्तु—"धावनं जातीमदनस्वादुकण्टकखदिरम्" इत्यधिकं श्लोकार्द्धं पठित्वा तदनन्तरमेव "कषाय जातीमदन" इत्यादिकं पठति, व्याचष्टे च,—कषायमिति पदं धावनमित्यनेन सम्बध्यते, तेन जात्यादिद्रव्यचतुष्टयकषायेण धावनं, परेण तु जातीमदनकादिद्रव्याष्टकेन कल्केन तैलं साधनीयमिति । अत एव अष्टाङ्गसंग्रहेऽपि—"धावनं जातीमदनखदिरस्वादुकण्टकैः" इत्युक्तम् । अन्ये तु—कषायशब्दं समासे विभक्तिरहितं पठन्ति, तेषां मते—कषायमाम्रपूगफल, निम्बकाश्मर्यादीनां मञ्जिष्ठादिभिश्च कषायद्रव्यं वा, अस्मिन् पक्षे—कषायद्रव्यादिभिः यष्ट्याह्वान्तैस्तैलपाकः । कषायद्रव्यान्तर्गताया अपि जात्याः पृथगभिधानं भागद्वयदानार्थमित्यपि वदन्ति ॥१२॥

दन्तमूलगतचिकित्सितमभिधाय दन्तगतव्याधिचिकित्सामाह, सुखोष्णा इत्यादि । —सुश्रुतस्य ।—स्नेहाः सर्पिस्तैलवसामज्जानस्तेषां व्यस्तानां समस्तानाञ्च, कवडा गण्डूषाः । सर्पिषस्त्रैवृतस्य वेति ।—त्रैवृतसर्पिर्वातव्याधि-चिकित्सायां सुश्रुतेनोक्तम् । अनिलघ्नानामिति ।—भद्रदार्वादिदशमूलादीनां निर्यूहाः क्वाथाः ॥ १३ ॥

अहिंसन् दन्तमूलानि शर्करामुद्धरेद्भिषक्।
लाक्षाचूर्णैर्मधुयुतैस्ततस्तां प्रतिसारयेत्॥
दन्तहर्षक्रियाश्चापि कुर्य्यान्निरवशेषतः।
कपालिका कृच्छ्रसाध्या तत्राप्येषा क्रिया हिता॥ १४॥
जयेद्विस्रावणैः स्विन्नमचलं क्रिमिदन्तकम्।
तथाऽवपीडैर्वातघ्नैः स्नेहगण्डूषधारणैः॥
भद्रदार्वादिवर्षाभू-लेपैः स्निग्धैश्च भोजनैः।
हिङ्गु सोष्णन्तु मतिमान् क्रिमिदन्तेषु दापयेत्॥ १५॥
बृहतीभूमिकदम्बकपञ्चाङ्गुलकण्टकारिकाक्वाथः।
गण्डूषस्तैलयुक्तः क्रिमिदन्तकवेदनाशमनः॥
नीलीवायसजङ्घास्नुग्दुग्धीनान्तु मूलमेकैकम्।
सञ्चर्व्य दशनविधृतं दशनक्रिमिपातनं प्राहुः॥ १६॥
चलमुद्धृत्य वा स्थानं दहेत्तु शुषिरस्य वा॥
ततो विदारीयष्ट्याह्व-शृङ्गाटककशेरुभिः।
तैलं दशगुणं क्षीरं सिद्धं नस्ये तु योजयेत्॥ १७॥

---

अहिंसन्नित्यादि।—सुश्रुतस्य।—दन्तमूलहिंसया हि स्थिरिभवातजा दन्तनाडी दन्तचातश्च स्यात्। कृच्छ्रसाध्या इति।—अनेन कपालिकायाः शीघ्रप्रतिकर्त्तव्यतां सूचयति। एषा क्रियेति।—दन्तहर्षोक्ता; कपालिकाया अपि वातजत्वात्, शर्करोक्तेत्यन्ये॥१४॥

जयेद् विस्रावणैरिति।—विस्रावण—क्रिमिदूषितरक्तस्य। अवपीडः,—नस्यभेदः।• वातघ्नैरिति।—वातघ्नद्रव्यकृतैरवपीडैरिति चक्र। अन्ये तु—अवपीडो यद्यपि कफहर-स्तथापि स्थानानुरोधात् क्रियते, अतो विस्रावणादिकुपितवातशान्त्यर्थं वातहरं कर्म कर्त्तव्यमिति दर्शयितुं वातघ्नैरिति स्नेहगण्डूषादिविशेषणं कृतम्; वाग्भटेऽप्येवमेवोक्तम्। हिङ्ग्वित्यादौ।—सोष्णमिति—ईषदुष्णम्॥ १५॥

भूमिकदम्बः,—थलम्बुषः, पञ्चाङ्गुल—एरण्डः। स्नुक्—सुही, दुग्धी—धीराइ। चलमित्यादि।—सुश्रुतस्य।—वाशब्दोऽवधारणे, चलमुद्धृत्यैवेत्यर्थः। स्थानमिति।—उद्धृतदन्तस्य मसयस्थानम्। शुषिरस्येति।—क्रिमिकृतच्छिद्रस्य यावन्मात्रं स्थानं तावदेव दहेत्। स्थानशब्दोऽत्रापि योजनीयः। भूरिदन्तदुष्टौ समस्तस्यैव दन्तस्थानस्य दाहः, एकस्थानदुष्टौ च शुषिरस्थानमात्रदाह इति॥ १६। १७॥

हनुमोक्षे समुद्दिष्टा कार्य्या चार्दितवत् क्रिया ।
फलान्यम्लानि शीताम्बु रूक्षान्नं दन्तधावनम् ।
तथाऽतिकठिनान् भक्ष्यान् दन्तरोगी विवर्जयेत् ॥ १८ ॥
सप्तच्छदार्कदुग्धाभ्यां पूरणं क्रिमिदन्तनुत् ।
जीवनीयेन दुग्धेन क्रिमिरन्ध्रप्रपूरणम् ।
अर्कक्षीरेणैवमेक-योगः सद्भिः प्रशस्यते ॥ १९ ॥
द्रोणपुष्पद्रवैः फेन-मधुतैलसमायुतैः ।
क्रिमिदन्तविनाशाय कार्य्यं कर्णस्य पूरणम् ॥ २० ॥
पटोलकटुकाव्योष-पाठासैन्धवभार्गिकैः ।
चूर्णैर्मधुयुतो लेपः कवडो मधुतैलयोः ॥ २१ ॥
जिह्वारोगेषु कर्त्तव्यं विधानमिदमौषधम् ।
मुस्तामधुकनिर्गुण्डी-खदिरोशीरदारुभिः ।
समञ्जिष्ठाविडङ्गैश्च सिद्धं तैलं हरेत् क्रिमीन् ॥ २२ ॥

इति दन्तरोग-चिकित्सा ।

---

## अथ जिह्वारोग-चिकित्सा ।

ओष्ठप्रकोपेऽनिलजे यदुक्तं प्राक् चिकित्सितम् ।
कण्टकेष्वनिलोत्थेषु तत् कार्य्यं भिषजा खलु ॥ १ ॥

---

समुद्दिष्टा इति पदम् अर्दितोक्तसमस्तविध्यर्थमाह । दन्तधावन—द-काष्ठम् ॥ १८—२२ ॥

इति दन्तरोग चिकित्सा-विवृतिः ।

---

जिह्वारोग चिकित्सामाह, ओष्ठेत्यादि ।—[illegible] ।—कण्टक ,—आरोग्य [illegible] रोग. ॥ १ ॥

पित्तजेषु निघृष्टेषु निःसृते दुष्टशोणिते।
प्रतिसारणगण्डूष-नस्यञ्च मधुरं हितम् ॥
कण्टकेषु कफोत्थेषु लिखितेष्वसृजः क्षये।
पिप्पल्यादिर्मधुयुतः कार्यस्तु प्रतिसारणम् ॥ २ ॥
गृह्णीयात् कवलान् वापि गौरसर्षपसैन्धवैः।
पटोलनिम्बवार्त्ताकु-क्षारयूषैश्च भोजयेत् ॥ ३ ॥
जिह्वाजाड्यं चिरजं माणकभस्मलवणतैलघर्षणं हन्ति।
ईषत्स्नुक्क्षीराक्तं जम्बीराद्यम्लचर्वणं चापि ॥ ४ ॥
कर्कटाङ्घ्रिक्षीरपक्व-घृताभ्यङ्गेन नश्यति।
दन्तशब्दः कर्कटाङ्घ्रि-लेपाद्वा दन्तयोजितात् ॥ ५ ॥
उपजिह्वान्तु संलिख्य क्षारेण प्रतिसारयेत्।
शिरोविरेकगण्डूष-धूमैश्चैनामुपाचरेत् ॥
व्योषक्षाराभयावह्नि-चूर्णमेतत् प्रघर्षणम्।
उपजिह्वाप्रशान्त्यर्थमेभिस्तैलं विपाचयेत् ॥ ६ ॥

---

निघृष्टेष्विति—आस्फोटकादिपत्रैः। मधुरमिति।—मधुरेण काकोल्यादिगणेनैव कृतं नस्यादित्रयमित्याहुः। लिखितेष्विति।—मण्डलाग्रादिना। असृजः क्षये—असृक्स्रावे विरते इत्यर्थः। पिप्पल्यादिरिति।—पिप्पल्यादिगणः ॥ २ ॥

श्वेतसर्षप-सैन्धवाभ्याञ्च कवलः कफोद्रेके कार्यः। पटोलादिभिर्भोजयेत्, तथा क्षारयूषेण भोजयेदिति।—क्षारप्रधानकुलत्थादियूषः क्षारयूषः। तदुक्तं—"शुष्कमूलकुलत्थादियूषाः क्षारोत्तरा हिताः। कुलत्थं बिल्वमध्यञ्च वार्त्ताकुर्वमने हितम् ॥" इति ॥ ३ ॥

जिह्वाजाड्यं—आड़ीसञ्ज्ञकं रोगमिति लोके। ईषत्स्नुक्क्षीरेण युक्तं चर्वितं यज्जम्बीरादिकं तच्चर्वणम्। चर्वणमित्यत्र घर्षणमित्यपि पाठः ॥ ४ ॥

कर्कटेत्यादौ।—क्षीरसाधनपरिभाषया कर्कटपादेन साधितं यत् क्षीरं तत्पक्व-घृताभ्यङ्गेनेत्यर्थः। अभ्यङ्गश्च दन्तप्रदेशे सर्वत्रेत्याहुः। अन्ये तु—कर्कटपादकल्कक्षीराभ्यां साधितं यद् घृतं तेनाभ्यङ्ग इत्याहुः। दन्तशब्दो दन्तकटकटध्वनिः ॥ ५ ॥

उपजिह्वामित्यादि।—सुगमम्।—संलिख्येति—आस्फोटकादिपत्रेण। क्षारेण

छित्त्वा घर्षेद्गलशुण्डीं व्योषोग्राचौद्रसिन्धुजैः ।
कुष्ठोषणवचासिन्धु-कणापाठाप्लवैरपि ।
सचौद्रैर्भिषजा कार्य्यं गलशुण्ड्या विघर्षणम् ॥ ७ ॥
उपनासाव्यधो हन्ति गलशुण्डीमशेषतः ।
गलशुण्डीहरं तद्वच्छेफालीमूलचर्वणम् ॥ ८ ॥
वचामतिविषां पाठां रास्नां कटुकरोहिणीम् ।
निःक्वाथ्य पिचुमर्दञ्च कवलं तत्र योजयेत् ।
चारसिद्धेषु मुद्गेषु यूषाश्चाप्यशने हिताः ॥ ९ ॥

इति जिह्वारोग चिकित्सा ।

---

इति—घर्षयेत् । उक्तं हि वाग्भटे—"उपजिह्वां परिस्राव्य यवक्षारेण घर्षयेत्" । अन्ये तु—प्रतिसारयेदयक्षारेणेत्याहुः । एभिर्योगैरिति ।—व्योषादिभिः कल्कपेषितैरित्यर्थः । जलं चतुर्गुणम् ॥ ६ ॥

छित्त्वेत्यादौ ।—उग्रा—वचा । कुष्ठोषणेत्यादौ ।—उषण—मरिच ; प्लव,—कैवर्त्तमुस्तक । सिन्धुकणेऽत्र शिग्रुकणेति केचित् पठन्ति । अथवा—अतिविषा । वाग्भटेऽप्युक्त—"मरिचाऽतिविषापाठा-वचाकुष्ठकुटन्नटैः । जिह्वायां सपटुचौद्रै-र्घर्षणम्—" इति, एवं सुश्रुतेऽप्यायुर्वेदसारेऽपि ॥ ७ ॥

उपनासाव्यध इति ।—नासासमीपवर्त्तिशिराव्यध इत्यर्थः । नासायां शिराश्चतुर्विंशतिः ; तन्मध्ये नासिकायां प्रतिबद्धशिराचतस्रः परिहार्य्याः । यत्र हि सुश्रुते—"शिरांदश नासायां, तासामौपनासिक्यश्चतस्रः परिहार्य्याः." इति ॥ ८ ॥

वचामित्यादि ।—सुश्रुतस्य ।—पिचुमर्द ,—निम्ब, । चारसिद्धेष्विति ।—मुष्ककापामार्गादिक्षारोदकसिद्धेषु ॥ ९ ॥

इति जिह्वारोग चिकित्सा विवृतिः ।

## अथ कण्ठगतरोग-चिकित्सा ।

तुण्डिकेर्य्यध्रुषे कूर्मे सङ्घाते तालुपुप्पुटे ।
एष एव विधिः कार्य्यो विशेषः शस्त्रकर्म्मणि ॥ १ ॥
तालुपाके तु कर्त्तव्यं विधानं पित्तनाशनम् ।
स्नेहस्वेदौ तालुशोषे विधिश्चानिलनाशनः ॥ २ ॥
साध्यानां रोहिणीनान्तु हितं शोणितमोक्षणम् ।
छर्दनं धूमपानञ्च गण्डूषो नस्तकर्म च ॥
वातिकीन्तु हृते रक्ते लवणैः प्रतिसारयेत् ।
सुखोष्णान् स्नेहकवडान् धारयेच्चाप्यभीक्ष्णशः ॥
पतङ्गशर्कराक्षौद्रैः पैत्तिकीं प्रतिसारयेत् ।
द्राक्षापरूषकक्वाथो हितश्च कवलग्रहे ॥ ३ ॥
आगारधूमकटुकैः कफजां प्रतिसारयेत् ।
श्वेताविडङ्गदन्तीषु सिद्धं तैलं ससैन्धवम् ।
नस्तकर्म्मणि दातव्यं कवडञ्च कफोच्छ्रये ॥ ४ ॥
पित्तवत् साधयेद्वैद्यो रोहिणीं रक्तसम्भवाम् ।
विस्राव्य कण्ठशालूकं साधयेत् तुण्डिकेरिवत् ।
एककालं यवान्नञ्च भुञ्जीत स्निग्धमल्पशः ॥ ५ ॥

---

तुण्डिकेर्य्यध्रुष इत्यादि ।—सुश्रुतस्य ।—कूर्म इति— कच्छपरोगे । एष एवेति ।—गलशुण्ड्युक्तविधिविशेषः । शस्त्रकर्म्मणीति ।—तुण्डिकेरी-तालुपुप्पुटौ भेद्यौ, अपरं छेद्या इति शेषः ॥ १ ॥

पित्तनाशनं—पित्तप्रशमनमित्यर्थः ॥ २ ॥

साध्यानामित्यादि ।—सुश्रुतस्य ।—साध्यानामित्यादिना सन्निपातजाया असाध्याया व्यवच्छेदः । लवणैरिति—पञ्चभिः । पतङ्गं—रक्तचन्दनम् ॥ ३ ॥

आगारधूमेत्यादौ ।—श्वेता—कटभी अपराजिता वा । श्वेतादिभिः सैन्धवान्तः कल्कः । कवडश्चेति—श्वेतादिभिः सैन्धवान्तैः सिद्धं तैलमेव कवडमपीत्यर्थः ॥ ४ ॥

पित्तवदिति—पित्तरोहिणीवदित्यर्थः । विस्राव्येत्यत्र रक्तमिति शेषः । कण्ठश

उपजिह्विकवच्चापि साधयेदधिजिह्विकाम् ।
उद्वाम्य जिह्वामाकृष्य बडिशेनाधिजिह्विकाम् ।
छेदयेन्मण्डलाग्रेण तीक्ष्णोष्णैर्घर्षणादिभिः ॥ ६ ॥
एकवृन्दन्तु विस्राव्य विधिं शोधनमाचरेत् ।
शिलायुश्चापि यो व्याधिस्तञ्च शस्त्रेण साधयेत् ॥ ७ ॥
असमर्मस्थं सुपक्वञ्च भेदयेद्गलविद्रधिम् ।
कण्ठरोगेष्वसृङ्मोक्षस्तीक्ष्णनस्यादिकर्म च ॥
क्वाथपानन्तु दार्वीत्वङ्-निम्बतार्क्ष्यकलिङ्गजम् ।
हरीतकीकषायो वा पेयो माक्षिकसंयुतः ॥ ८ ॥
कटुकातिविषादारु-पाठामुस्तकलिङ्गकाः ।
गोमूत्रक्वथिताः पेयाः कण्ठरोगविनाशनाः ॥ ९ ॥

---

पूर्वेण सम्बध्यते । साधयेत् तुण्डिकेरीवदिति ।—तुण्डिकेर्यामपि गलशुण्डिकाविध्युपदेशात् साधयेत्, गलशुण्डिकावदिति वाच्ये तुण्डिकेरीविधावतिदेशो निःशेषच्छेदनार्थं, तेन गलशुण्डीवदत्र त्रिभागच्छेदो न कार्य्य इति बोधयति ॥ ५ ॥

छेदयेदित्यादि ।—वाग्भटस्य । तीक्ष्णोष्णैर्घर्षणादिभिरिति ।—अत्र उपायैरिति शेष । आदिशब्दात् कवलादिपरिग्रह ॥ ६ ॥

एकवृन्दमित्यादि ।—सुश्रुतस्य ।—विस्राव्येति ।—जलौकादिभी रक्तं विस्राव्येत्यर्थः । शोधनमिति ।—गलगतदोषशोधनं प्रतिसारणशिरोविरेचनकवलादिकं, तथा कायशोधनञ्च वमनादिकं, तत्रापि कायशोधनेन शिरोगतदोषस्यापि शोधकत्वात् । तच्च शस्त्रेण साधयेदिति ।—कठिनमल्पवेदनमपक्वं शिलायु छेदयेत्, पक्वन्तु भेदयेत् । पूयनिःसारणार्थं ततो व्रणशोधनविधिना शोधनादिरत्रापि लभ्यते ॥ ७ ॥

असमर्मस्थमित्यादि ।—सुश्रुते गलविद्रधिरत्र त्रिदोषविद्रधितुल्यत्वेनोक्तोऽपि चिकित्सितोपदेशात् साध्य इति ज्ञेयः । अन्ये तु गलविद्रधेस्त्रिदोषजविद्रधितुल्यत्वेनोक्तत्वेऽपि चिकित्साविधानात् कृच्छ्रसाध्यत्वं ज्ञेयम् । अपरञ्च "सर्वं गलं व्याप्य समुत्थितो यः" इत्यभिधानेन मर्मव्यापकोऽपि गलगतममर्मणि सुखास्यदविरहादमर्मज प्रयुज्यते, किंवा असमर्मस्थमिति क्रियाविशेषणम् । अयमर्थोऽन्तरेण मर्माभ्यन्तरास्पर्शीयं यथा स्यात् तथा भेदयेदित्यर्थः । सामान्यकण्ठरोगचिकित्सामाह, कण्ठ-

कालकचूर्णम्—

गृहधूमो यवक्षारः पाठाव्योषरसाञ्जनम् ।
तेजोह्वात्रिफलालौह-चित्रकश्चेति चूर्णितम् ॥
सक्षौद्रं धारयेदेतद् गलरोगविनाशनम् ।
कालकं नाम तच्चूर्णं दन्तजिह्वास्यरोगनुत् ॥ १० ॥
पिप्पलीपिप्पलीमूल-चव्यचित्रकनागरैः ।
सर्जिकाक्षारतुल्यांशैश्चूर्णोऽयं गण्डरोगनुत् ॥ ११ ॥

पीतकचूर्णम्—

मनःशिला यवक्षारो हरितालं ससैन्धवम् ।
दार्वीत्वक् चेति तच्चूर्णं माक्षिकेण समायुतम् ॥
मूर्च्छितं घृतमण्डेन कण्ठरोगेषु धारयेत् ।
मुखरोगेषु च श्रेष्ठं पीतकं नाम कीर्त्तितम् ॥ १२ ॥

यवाग्रजं तेजवतीं सपाठाम्
रसाञ्जनं दारुनिशां सकृष्णाम् ।
क्षौद्रेण कुर्य्याद् गुड़िकां सुखेन
तां धारयेत् सर्वगलामयेषु ॥ १३ ॥

---

रोगेष्वित्यादि । वाग्भटे—'क्वाथः पाने तु दार्वीत्वङ्-निम्बतार्क्ष्यकलिङ्गजः' इति पाठः । दार्व्यास्त्वक्; तार्क्ष्यं—रसाञ्जनम् ॥ ८ । ९ ॥

कालकचूर्णे ।—तेजोह्वा—चवी; लौह—कान्तलौहचूर्णम् मण्डूरं वा । व्यवहारस्तु पूर्ववत् । लौहस्थाने लोध्रमिति केचित् पठन्ति । अस्य योगस्य लौहचूर्णरसाञ्जनचूर्णयोगात् कृष्णत्वेन कालक इति संज्ञा; एवं वक्ष्यमाणपीतकचूर्णेऽपि मनःशिलादियोगात् पीतत्वेन पीतकसंज्ञा विधेया ॥ १० । ११ ॥

पीतकचूर्णे ।—दार्वीत्वगिति—षष्ठीसमासः । मूर्च्छितमिति—चालोडितम् । एतच्चूर्णं तथा कालकचूर्णं सर्वस्मिन्नेव मुखरोगे धार्य्यम् । अत एवोक्तं चरके—"योगास्त्वेते त्रयः प्रोक्ता वातपित्तकफापहाः" इति । प्रत्येकमेव कालकादयस्त्रिदोषहरा इति चक्रव्याख्या ॥ १२ ॥

यवाग्रजमिति ।—तेजवती—ज्योतिष्मती, चवी इत्यन्ये । दारुनिशा—दारुहरिद्रा ॥ १३ ॥

दशमूलं पिबेदुष्णं यूषं मूलककुलत्थयोः ।
क्षीरेक्षुरसगोमूत्र-दधिमस्त्वम्लकाञ्जिकैः ।
विदध्यात् कवलान् वीक्ष्य दोषं तैलघृतैरपि ॥ १४ ॥

क्षारगुडिका—

पञ्चकोलकतालीश-पत्रैलामरिचत्वचः ।
पलाशमुष्ककक्षार-यवक्षाराश्च चूर्णिताः ॥
गुडे पुराणे क्वथिते द्विगुणे गुडिकाः कृताः ।
कर्कन्धुमात्राः सप्ताहं स्थिता मुष्ककभस्मनि ॥
कण्ठरोगेषु सर्वेषु धार्याः स्युरमृतोपमाः ॥ १५ ॥

इति कण्ठगतरोग-चिकित्सा ।

---

## अथ मुखगतरोग-चिकित्सा ।

मूत्रस्विन्नां शिवां तुल्यां मधुरीकुष्ठवाम्बयैः ।
अभ्यस्य मुखरोगांस्तु जयेद्विरसतामपि ॥ १ ॥
वातात् सर्वसरं चूर्णैर्लवणैः प्रतिसारयेत् ।
तैलं वातहरैः सिद्धं हितं कवडनस्ययोः ॥ २ ॥

---

दशमूलमित्यादौ ।—मूल—मूलकयष्ठकम् । क्षीरेत्यादि ।—सुश्रुतस्य ।—क्षीरादिभिः प्रत्येकं यथादोषं कवडा. कार्य्या , एवं तैलघृतैरपि ॥ १४ ॥

पञ्चकोलकेत्यादौ ।—पत्र—तेजपत्र, त्वक्—गुडत्वक् । मुष्कक,—घण्टापारुली । अत्र समुदितचूर्णात् द्विगुणो गुड. । क्वथित इति ।—वह्निसंयोगात् द्रवीभूते । कर्कन्धुमात्रा इति—बदरमात्रकमात्रा. ॥ १५ ॥

इति कण्ठगतरोग-चिकित्सा विवृतिः ।

---

मूत्रेत्यादौ ।—शिवा—हरीतकी , मधुरी—मधुरिकैव । अभ्यस्य इति—अभ्यस्य-विषया । विरसतामिति—आस्यवैरस्यम् ॥ १ ॥

वातादित्यादि ।—सुश्रुतस्य ।—सर्वसर,—मुखपाकः । लवणैश्चूर्णैरिति—सैन्धवचूर्णैः । अन्ये तु—लवणा—ज्योतिष्मती, तद्द्रव लावणमित्याहुः । विदेहस्तु—पञ्चलवणचूर्णैरित्याह । वातहरैः सिद्धमिति ।—भद्रदार्व्वादिभिः कल्ककाथरूपैः ॥ २ ॥

पित्तात्मके सर्वसरे शुद्धकायस्य देहिनः ।
सर्वपित्तहरः कार्य्यो विधिर्मधुरशीतलः ॥ ३ ॥
प्रतिसारणगण्डूषान् धूमं संशोधनानि च ।
कफात्मके सर्वसरे क्रमं कुर्य्यात् कफापहम् ॥ ४ ॥
मुखपाके शिरावेधः शिरःकायविरेचनम् ।
कार्य्यन्तु बहुधा नित्यं जातीपत्रस्य चर्वणम् ॥ ५ ॥
जातीपत्रामृताद्राक्षा-यासदार्वीफलत्रिकैः ।
क्वाथः क्षौद्रयुतः शीतो गण्डूषो मुखपाकनुत् ॥ ६ ॥
कृष्णजीरककुष्ठेन्द्र-यवाणां चूर्णतस्त्र्यहात् ।
मुखपाकव्रणक्लेद-दौर्गन्ध्यमुपशाम्यति ॥ ७ ॥
रसाञ्जनं लोध्रमथामयञ्च मनःशिला नागरगैरिकञ्च ।
पाठा हरिद्रा गजपिप्पली च स्याद्वारणं क्षौद्रयुतं मुखस्य ॥८॥
पटोलनिम्बजम्ब्वाम्र-मालतीनवपल्लवाः ।
पञ्चपल्लवजः श्रेष्ठः कषायो मुखधावने ॥ ९ ॥
पञ्चवल्ककषायो वा त्रिफलाक्वाथ एव वा ।
मुखपाकेषु सक्षौद्रः प्रयोज्यो मुखधावने ॥

---

शुद्धकायस्येति ।—विरेकेण वमनेनापि, कफस्थानगतत्वेन पित्तस्यापि वमनार्ह-त्वात् । मधुरशीतल इति—विशेषणार्थमुक्तम् ॥ ३ ॥

प्रतिसारणेत्यादिना कफजसर्वसरचिकित्सामाह, क्रमं कुर्य्यात् कफापह-मिति ।—अनुक्तकफहरविधिसंग्रहार्थमुक्तम् ॥ ४ ॥

मुखपाके शिरावेध इति ।—शिरावेधस्त्वत्र पुनि अधोजिह्विकायां वा कार्यः । शिरोविरेचनं कायविरेचनञ्च बहुधा कार्य्यमिति योज्यम् । नित्यमिति तु परेण सम्बध्यते ॥ ५ ॥

जातीपत्रेति ।—जाती—मालती, तस्याः पत्रं, जातीपत्रकम् ; अमृता—गुडूची ; यासः,—दुरालभा ; दार्वी—दारुहरिद्रा । यासस्थाने पाठेति केचित् पठन्ति ॥६—८॥

पटोलेत्यादौ ।—पटोलादिभिः पल्लवशब्दस्य प्रत्येकमन्वयः ॥ ९ ॥

पञ्चवल्केत्यादौ ।—सक्षौद्र इत्युभयत्रापि सम्बध्यते । खरस इत्यादि ।—अयं

स्वरसः क्वथितो दार्व्या घनीभूतो रसक्रिया।
सक्षौद्रा मुखरोगासृग्दोषनाडीव्रणापहा॥ १०॥
सप्तच्छदोशीरपटोलमुस्त-हरीतकीतिक्तकरोहिणीभिः।
यष्ट्याह्वराजद्रुमचन्दनैश्च क्वाथं पिबेत् पाकहरं मुखस्य॥ ११॥
पटोलशुण्ठीत्रिफलाविशाला-त्रायन्तितिक्ताद्विनिशाऽमृतानाम्।
पीतः कषायो मधुना निहन्ति मुखे स्थितयास्यगदानशेषान्॥१२॥
क्वथितास्त्रिफलापाठा-मृद्वीकाजातिपल्लवाः।
निषेव्या भक्षणीया वा त्रिफला मुखपाकहा॥ १३॥
तिला नीलोत्पलं सर्पिः शर्करा क्षीरमेव च।
सक्षौद्रो दग्धवक्त्रस्य गण्डूषो दाहपाकनुत्।
तैलेन काञ्जिकेनाथ गण्डूषपूर्णदाहहा॥ १४॥
घनकुष्ठैलाधान्यक-यष्टीमध्वेलवालुकावङ्ः।
वदनेऽतिपूतिगन्धं हरति सवालम्बुलगन्धश्च॥ १५॥

महासहचर तैलम्—

तुलां धृतां नीलसहाचरस्य
द्रोणेऽम्भसः संश्रपयेद् यथावत्।
पूत्वा चतुर्भागरसे तु तैलम्
पचेच्छनैरर्द्धपलप्रयुक्तैः॥

---

योग चास्मै धार्य्य। वाग्भटे तु—गैरिकमप्यत्र मीवे पठ्यते, यथा—"स्वरसः क्वथितो दार्व्या घनीभूतः सगैरिकः। चास्वस्य समधुर्नक पाकनाडीव्रणापहः॥" इति॥१०॥

सप्तच्छदेति।—सप्तच्छदः,—छातिम, तिक्तरोहिणी—कटुकी; राजद्रुमः,—आरग्वध॥ ११। १२॥

क्वथिता इत्यादौ।—निषेव्या इति।—पानगण्डूषाभ्यामुपयोज्या इत्यर्थः। भक्षणीयेति—परेण सम्बध्यते; तेन लेहादिविषया त्रिफला भक्षणीयेत्यर्थः॥ १३॥

तिला इत्यादौ।—एतैर्गण्डूष इत्यर्थः। सक्षौद्र इति।—प्रत्येकमपो सक्षौद्रा योगा इति निश्चयः। दग्धवक्त्रस्येति।—भल्लातकचूर्णादिनेत्यर्थः। घनकुष्ठैलादि-योगमत्र केचित् पठन्ति; तदयुक्तम्, कृष्णाधिकारे चास्य योगस्य वक्ष्यमाणत्वात्। निश्चलेन तु—क्रमादुभयमेवाय योग. पठितो व्याख्यातश्च॥ १४। १५॥

कल्कैरनन्ताखदिरारिमेद-
जम्ब्वाम्रयष्टीमधुकोत्पलानाम् ।
सत् तैलमाश्वेव धृतं मुखेन
स्थैर्य्यं द्विजानां विदधाति सद्यः ॥ १६ ॥

इरिमेदाद्यं तैलम्—

इरिमेदत्वक्पलशतमभिनवमापोथ्य खण्डशः कृत्वा ।
तोयाढ़कैश्चतुर्भिर्निःक्वाथ्य चतुर्थशेषेण ॥
क्वाथेन तेन मतिमांस्तैलस्यार्द्धाढ़कं शनैर्विपचेत् ।
कल्कैश्च समांशैर्मञ्जिष्ठालोध्रमधुकानाम् ॥
इरिमेदखदिरकट्फललाक्षान्यग्रोधमुस्तसूक्ष्मैला- ।
कर्पूरागुरुपद्मक-लवङ्गकक्कोलजातीफलानाम् ॥
पत्तङ्गगैरिकवराङ्गगजकुसुमधातकीनाञ्च ।
सिद्धं भिषग्विदध्यादिदं मुखोत्थेषु रोगेषु ॥
परिशीर्णदन्तविद्रधि-शौषिरशीतादद्दन्तहर्षेषु ।
क्रिमिदन्तदालनचलितप्रहृष्टमांसावशीर्णेषु ।
मुखदौर्गन्ध्ये कार्य्यं प्रागुक्तेष्वामयेषु तैलमिदम् ॥ १७ ॥

लाक्षाद्यं तैलम्—

तैलं लाक्षारसं क्षीरं पृथक् प्रस्थं समं पचेत् ।
चतुर्गुणेऽरिमक्वाथे द्रव्यैश्च पलसम्मितैः ॥

---

तुलामित्यादि ।—नीलसहचरः,—नीलझिण्टी । चतुर्भागरस इति ।—चतुर्थभागरसे । अनन्ता—अनन्तमूलम्, इरिमेदः—विट्खदिरः, तदभावे खदिरमेव हिगुणं गृह्णन्ति ॥ १६ ॥

इरिमेदत्वगित्यादौ ।—पद्मकं—पद्मकाष्ठम्; जाती—जातीकोषः; फलं—जातीफलम्; पत्तङ्गं—रक्तचन्दनम्; वराङ्गं—गुड़त्वक्, गजकुसुमं—नागकेशरम् । परिशीर्णदन्तः,—दन्तभेदः । उक्तं हि वाग्भटे—"दन्तभेदे द्विधासीदभेदरुक्स्फुटनान्विताः" इति । विद्रधिः,—गलविद्रधिः । दालनः,—दारणशब्दपर्य्यायेोगात् । प्रहृष्टमांसः,—अधिमांसः । अवशीर्णः,—अवशीर्णमांसः परिदरः,—"दन्तमांसानि शीर्य्यन्ते" इत्यादि लक्षणम् ॥ १७ ॥

लोध्रकट्फलमञ्जिष्ठा-पद्मकेशरयष्ट्यकैः।
चन्दनोत्पलयष्ट्याह्वैस्तैलं गण्डूषधारणम्॥
दालनं दन्तचालञ्च हनुमोक्षं कपालिकाम्।
शीतादं पूतिवक्त्रञ्च चारुचिं विरसास्यताम्॥
हन्यादास्यगदानेतान् कुर्य्याद्दन्तानपि स्थिरान्॥ १८॥

बकुलाद्यं तैलम्—

बकुलस्य फलं लोध्रं वज्रवल्ली कुरण्टकम्।
चतुरङ्गुलवब्बोल-वाजिकर्णैरिमासनम्॥
एषां कषायकल्काभ्यां तैलं पक्वं मुखे धृतम्।
स्थैर्य्यं करोति चलतां दन्तानां धावनेन च॥ १९॥

खदिरसारगुटिका—

एलालतालवलिकाफलशीतकोष-
कोलदिकानि खदिरस्य शते कषाये।
तुल्यांशकानि दशभागमिते निधाय
प्रोद्भिन्नकेतकपुटे पुटवद्विपाच्य॥

---

तैलमित्यादौ।—लाक्षाया रस. क्वाथ.। इरिमक्वाथ इति।—इरिमेदक्वाथ, मधु-कुष्ठीऽयं पाठः। हनुमोक्षः,—हनुरोगविशेष.। यत्र हि सुश्रुते—"वातेन तैस्तै-र्भावैस्तु हनुसन्धी विसंहिते। हनुमोक्ष इति ज्ञेयो व्याधिरर्द्दितलक्षण.॥" इति। अयञ्च दन्तदेशसामीप्याद दन्तरोगाणनन्तरञ्च दन्तरोगमध्ये सुश्रुतेन पठित। चन्द्रादि-ष्वपि हनुमोक्ष इत्येव पाठः, तेन हनुमोक्ष इत्यपपाठ. एव॥ १८॥

बकुलाद्ये।—वज्रवल्ली—अस्थिसंहार., कुरण्टक,—पीतझिण्टी, चतुरङ्गुल,—आरग्वध, बब्बोल,—गुवाकी, "बाबहर" इति ख्यात., वाजिकर्ण.,—शालभेद.; असन,—पीतशाल। चलतामिति—षष्ठीबहुवचनम्॥ १९॥

एलेत्यादि।—लता—लताकस्तूरी, लवलिका—लवङ्गम्, फलं—जातीफलम्, शीत—कर्पूरम्; कोष.,—जातीकोषः, कोलं—कक्कोलम्; दिकम्—अगुरु। एला-दीना तुल्योऽश., एषां मिलितानामपेक्षया दशभागपरिमिते खदिरक्वाथ इत्यर्थ.। प्रोद्भिन्नकेतकपुट इति।—विकसितकेतकपत्रकृतपुटके खदिरक्वाथालोडितमेलादिचूर्णं निधाय पुटविधिना मनाक् विपाच्य तत. शीतीकृत्य प्रथमम्लानीतकर्पूरकस्तूरिका-

## अथ कर्णरोग-चिकित्सा।

कपित्थमातुलुङ्गाम्ल-शृङ्गवेररसैः शुभैः।
सुखोष्णैः पूरयेत् कर्णं कर्णशूलोपशान्तये ॥ १ ॥
शृङ्गवेरञ्च मधु च सैन्धवं तैलमेव च।
कदुष्णं कर्णयोर्देयमेतद्वा वेदनापहम् ॥ २ ॥
लशुनार्द्रकशिग्रूणां सुरङ्ग्या मूलकस्य च।
कदल्याः स्वरसः श्रेष्ठः कदुष्णः कर्णपूरणे ॥
समुद्रफेनचूर्णेन युक्त्या वाप्यवचूर्णयेत् ॥ ३ ॥
आर्द्रकसूर्य्यावर्त्तक-शोभाञ्जनमूलकस्वरसाः।
मधुतैलसैन्धवयुताः पृथगुष्णाः कर्णशूलहराः ॥ ४ ॥

---

मुखरोगेषु जिह्वाश्रयरोगा उक्ताः, जिह्वा चेन्द्रियाधिष्ठानम्; अत इन्द्रियाधिष्ठानगतरोगचिकित्साप्रसङ्गात् कर्णरोगचिकित्सितमुच्यते, कपित्थेत्यादि।—सुश्रुतस्य।—कपित्थस्य फलम्, एवं मातुलुङ्गस्यापि; अम्लेति विशेषणात् सुपक्वफलं ग्राह्यम्। रसशब्दस्य कपित्थादिभिरन्वयः। एते च सर्वे योज्याः ॥ १ ॥

शृङ्गवेरमित्यादि।—शृङ्गवेरस्वरसमाषकचतुष्टयम्, मधुनो माषकत्रयम्; सैन्धवस्य रक्तिकामेकाम्; तैलं तिलजं माषकद्वयं गृहीत्वा सर्वमालोड्य कदुष्णं कृत्वा कर्णं पूरयेत् ॥ २ ॥

लशुनेत्यादि।—सुश्रुतस्य।—सुरङ्गी—रक्तशोभाञ्जनम्; कदली—कदलीवागुडा, तस्याः स्वरसः। एते च लशुनस्वरसादयो व्यस्ताः समस्ता वा योज्याः। पूर्वोक्तव्याख्यार्द्रकरसस्य पुनरुपादानं समस्तपक्षे सम्प्रयोजनमेव। युक्त्येति।—प्रथमं तैलेन कर्णं लेपयित्वा ततोऽवचूर्णनमिति युक्त्यर्थ इति केचित्। अन्ये तु—रसेन कर्णौ पूरयित्वा ततो समुद्रफेनावचूर्णनमिति युक्त्यर्थमाहुः, युक्तञ्चैतत्; यदाह वाग्भटः,—"रसेन पूरयित्वा वा फेनेनान्ववचूर्णयेत्" इति। अत एव समुद्रफेनचूर्णेनेत्यत्र समुद्रफेनयुक्तेनेति पाठान्तरं सुश्रुते केचित् पठन्ति; तन्मते—समुद्रफेनयुक्तेनेति पदं पूर्वोक्तरसविशेषणम्, सुश्रुते हि एतस्मात् पूर्वं—"कर्णं कोष्णेन रसेन पूरयेत् कर्णशूलिन" इत्युक्तम्। अस्मिन् पक्षे—युक्त्येति अत्र मात्रया इत्यर्थः ॥ ३ ॥

आर्द्रकेत्यादौ।—शोभाञ्जनं—शोभाञ्जनमूलम्, मूलकन्तु—मूलकन्दः। एते च

शोभाञ्जनकनिर्य्यासस्तिलतैलेन संयुतः।
व्यक्तोष्णः पूरणः कर्णे कर्णशूलोपशान्तये॥
अष्टानामपि मूत्राणां मूत्रेणान्यतमेन वा।
कोष्णेन पूरयेत् कर्णौ कर्णशूलोपशान्तये॥ ५॥
अश्वत्थपत्रखल्लं वा विधाय बहुपत्रकम्।
तैलाक्तमङ्गारपूर्णं विदध्यात् श्रवणोपरि॥
यत् तैलं च्यवते तस्मात् खल्लादङ्गारतापितात्।
तत् प्राप्तं श्रवणस्रोतः सद्यो गृह्णाति वेदनाम्॥ ६॥
अर्कपत्रपुटे दग्ध-स्नुहीपत्रभवो रसः।
कदुष्णः पूरणादेव कर्णशूलनिवारणः॥ ७॥

दीपिका-तैलम्—

महतः पञ्चमूलस्य काण्डान्यष्टाङ्गुलानि च।
क्षौमेणावेष्ट्य संसिच्य तैलेनादीपयेत् ततः॥
यत् तैलं च्यवते तेभ्यः सुखोष्णं तत् प्रयोजयेत्॥
ज्ञेयं तद्दीपिकातैलं सद्यो गृह्णाति वेदनाम्॥

---

कदुष्णीकृत्योपयोज्याः। अत एव पृथगुक्ता इत्यत्र पृथग्वा इति पाठान्तरं केचित् पठन्ति॥ ४॥

शोभाञ्जनेत्यादौ।—शोभाञ्जननिर्य्यासः,—शोभाञ्जनमूलस्वरसः॥ ५॥

अश्वत्थेत्यादि।—सुश्रुतस्य।—अश्वत्थपत्रैर्बहुभिस्तैलाक्तैः शुषिरां सरणीं कृत्वा तदुपरि ज्वलदङ्गारं विन्यस्य कर्णयोरुपरि धारयेत्, ततः पतिततैलेन कर्णपूरणम्। दिनानुबन्धे तु—तैलस्थाने सर्पिरिदं, विदेहवचनात्॥ ६॥

अर्कपत्रेत्यादि।—स्नुहीपत्रमर्कपत्रेण वेष्टयित्वा तदनु स्नुहीपत्रं दग्ध्वा पीडयित्वा तद्रसेन कर्णयोः पूरणमित्युपदेशः॥ ७॥

महत इत्यादि।—सुश्रुतस्य।—पञ्चमूलस्येति—बिल्वमूलादीनामन्यतमस्य। अष्टाङ्गुलानीति।—अथवाऽष्टाङ्गुलानि व्याप्य क्षौमेण वेष्टनं कार्य्यमित्यर्थः। तेन तत्काष्ठमष्टाङ्गुलाधिकं कर्त्तव्यं यथावेष्टुं पार्य्यत इति। तन्त्रान्तरे—अष्टादशाङ्गुलमित

एवं कुर्य्यादिद्रकाष्ठे कुष्ठे काष्ठे च सारले ।
मतिमान् दीपिकातैलं कर्णशूलनिवारणम् ॥ ८ ॥

अर्कस्य पत्रं परिणामपीतमाज्येन लिप्तं शिखिनाऽवतप्तम् ।
आपीड्य तोयं श्रवणे निषिक्तं निहन्ति शूलं बहुवेदनञ्च ॥ ९ ॥

तीव्रशूलान्विते कर्णे सशब्दे क्लेदवाहिनि ।
वस्तमूत्रं क्षिपेत् कोष्णं सैन्धवेनाऽवचूर्णितम् ॥
वंशावलेखसंयुक्ते मूत्रे चाजाविके भिषक् ।
तैलं पचेत् तेन कर्णं पूरयेत् कर्णशूलिनः ॥ १० ॥
हिङ्गुतुम्बुरुशुण्ठीभिः साध्यं तैलन्तु सार्षपम् ।
कर्णशूले प्रणादे च पूरणं हितमुच्यते ॥ ११ ॥

क्षार-तैलम्—

बालमूलकशुण्ठीनां क्षारो हिङ्गु सनागरम् ।
शतपुष्पा वचा कुष्ठं दारुशिग्रुरसाञ्जनम् ॥
सौवर्चलं यवक्षारः सर्जिकोद्भिदसैन्धवम् ।
भूर्जग्रन्थिविडं मुस्तं मधुशुक्तं चतुर्गुणम् ॥

---

पञ्चमूलकाष्ठं गडूच्या समायामायीऽष्टाङ्गुलं व्याप्य तिलतैलाक्तं वस्त्रं बद्ध्वा प्रज्वाल्य ततो गलिततैलेन कर्णपूरणं कुर्वन्ति । मत्स्वाम्भटे तु—भद्राङ्गुलादिपरिमाणं नोक्तम्; यथा—"महतः पञ्चमूलस्य काष्ठात् क्षौमेण वेष्टितात् । तैलसिक्तात् प्रदीपाद्यात् स्नेहः सद्यो रुजापहः ॥" इति ॥ ८ ॥

अर्कस्येत्यादौ ।—परिणामपीतमिति ।—कालप्रकर्षेण पाकवशात् पीतवर्णमित्यर्थः । शिखिना वह्निना अवतप्तं स्विन्नमित्यर्थः । तोयमिति—रसः । बहुवेदनमिति ।—नानाविधतोदभेदादिवेदनासहितम् ॥ ९ ॥

वस्तेत्यादि ।—सुगुलस्य ।—वंशावलेखः,—वंशनेखी, यस्याः कल्कः । मूत्रे चाजाविके इति ।—छागे वा आविके मूत्रे वा पचेदित्यर्थः । तदाह करालः,—"वंशावलेख कल्केन मूत्रे चाजेऽथवाविके । पचेत् तैलं तत्रः प्राज्ञो कर्णयोः पूरणं भिषक् ॥" इति । निर्देशवशात् पूतमध्येन विधिना पक्तव्यम् ॥ १० ॥

हिङ्ग्वित्यादौ ।—साध्यमिति—अत्र चतुर्गुणेन ॥ ११ ॥

मातुलुङ्गरसश्चैव कदल्या रस एव च।
तैलमेभिर्विपक्तव्यं कर्णशूलहरं परम्॥
बाधिर्य्यं कर्णनादश्च पूयास्रावश्च दारुणः।
पूरणादस्य तैलस्य क्रिमयः कर्णसंश्रिताः॥
क्षिप्रं विनाशं गच्छन्ति कृष्णात्रेयस्य शासनात्।
क्षारतैलमिदं श्रेष्ठं मुखदन्तामयापहम्॥

मधुशुक्तम्—

मधुप्रधानं शुक्तन्तु मधुशुक्तं तथापरम्।
जम्बीरस्य फलरसं पिप्पलीमूलसंयुतम्॥
मधुभाण्डे विनिक्षिप्य धान्यराशौ निधापयेत्।
मासेन तज्जातरसं मधुशुक्तमुदाहृतम्॥ १२॥
कर्णनादे कर्णक्ष्वेडे कटुतैलेन पूरणम्।
नादबाधिर्य्ययोः कुर्य्याद्वातशूलोक्तमौषधम्॥ १३॥

---

बालमूलकेत्यादौ।—मधुशुक्तं चतुर्गुणमिति।—मधूपलक्षितं शुक्तं मधुशुक्तम्। एतेन "प्रस्थं तण्डुलतोयतः" इत्याद्युक्तस्य मधुरहितशुक्तस्य निषेधः। यत्तत्तु "धान्यराशौ घृते भाण्डे" इत्याद्युक्तस्य, तथा जम्बीरस्य फलरसमित्यादिना वक्ष्यमाणस्य वा ग्रहणम्। एतदेव मधुप्रधानं शुक्तमित्यादिना वक्ष्यति। अन्ये तु—मध्विति छेदः, तेन मधुनः शुक्तस्य, शुक्तस्य चतुर्गुणत्वमित्याहुः। अपरे तु—मधु चतुर्गुणं शुक्तञ्च चतुर्गुणमित्याचक्षते। एतन्मतद्वयमपि नोपपद्यते, समासगतस्य अनूक्तत्वे मधुनोऽपठितत्वात्। मातुलुङ्ग-कदलीशाखास्वरसौ तु तैलसमौ, अनुक्तमानत्वात्; तत्र हि—"पक्वफलपूरकदलीरसैः समांशैः" इत्युक्तत्वात्। अतः षड्गुणः पाकः। अन्ये तु—वाग्भटसंवादात् मातुलुङ्गकदलीस्वरसयोः प्रत्येकं चतुर्गुणत्वमाहुः; तत्र हि "मधुशुक्तं चतुर्गुणं, मातुलुङ्गरसस्तद्वत् कदलीस्वरसस्य" इत्युक्तम्। उभयमपि प्रमाणं श्रुतिद्वैधवत्। व्यवहारस्तु पूर्वेणैवेति। जम्बीरस्येति।—जम्बीरफलरसस्य द्वात्रिंशत्पलानि, पिप्पलीमूलस्य तु चत्वारि, मधुनोऽष्टौ पलानि इति वृद्धवैद्योपदेशात् मानक्रमः॥ १२॥

कर्णनाद इत्यादौ।—कटुतैलं—सार्षपतैलम्॥ १३॥

अपामार्गक्षार-तैलम्—

मार्गक्षारजलेन च तत्कृतकल्केन साधितं तिलजम् ।
अपहरति कर्णनादं बाधिर्य्यञ्चापि पूरणतः ॥ १४ ॥

स्वर्जिकाक्षार तैलम्—

स्वर्जिका मूलकं शुष्कं हिङ्गु कृष्णा महौषधम् ।
शतपुष्पा च तैस्तैलं पक्वं शुक्तचतुर्गुणम् ।
प्रणादशूलबाधिर्य्यं स्रावश्चाशु व्यपोहति ॥ १५ ॥

दशमूली-तैलम्—

दशमूलीकषायेण तैलप्रस्थं विपाचयेत् ।
एतत् कल्कं प्रदायैव बाधिर्य्ये परमौषधम् ॥ १६ ॥

बिल्व-तैलम्—

फलं बिल्वस्य मूत्रेण पिष्ट्वा तैलं विपाचयेत् ।
साजाक्षीरं तद्धि हरेद्बाधिर्य्यं कर्णपूरणे ॥ १७ ॥
एष एव विधिः कार्य्यः प्रणादे नस्यपूर्वकः ।
गुडनागरतोयेन नस्यं स्यादुभयोरपि ॥ १८ ॥

---

मार्गेत्यादौ ।—मार्गः,—अपामार्गः । अपामार्गक्षारपलानि षोडश, जलस्य तु द्रव्यद्वैगुण्यात् चतुर्विंशतिशरावाः, एकविंशतिवारान् परिस्राव्य यतः क्षारजलात् षोडश शरावा ग्राह्याः । तत्कृतकल्केनेति ।—अपामार्गक्षारकल्केन । स च तैलशोषभयाच्छनैर्नातीव तैले देयः, यदा तु पिण्डीभूतात् कल्कात् तैलं सम्यक् पृथग्भूतं दृश्यते, तदैव तैलं पात्रान्तरे कृत्वा ग्राह्यम्, न तु कल्को गालनीयः, क्षारमिश्रताभयात् । अन्ये तु—समासान्तर्भूतमपि मार्गपदं तच्छब्देन समाकृष्य अपामार्गमूलमेव कल्कमाहुः ॥ १४—१६ ॥

फलमित्यादौ ।—मूत्रेणेत्यस्य पिष्ट्वेत्यनेन तथा पाचयेदित्यनेन च सम्बन्धः । विपाचयेदित्यनेनैव वा, तदुक्तं तन्त्रान्तरे—"बिल्वफलं पचेत् तैलं गोमूत्राजपयोऽन्वितम् । बाधिर्य्यं पूरयेत् तेन कर्णौ सकफवातजे ॥" इति । अजाक्षीरं तैलसमं, गोमूत्रं त्रिगुणं चतुर्गुणं वेत्याहुः ॥ १७ ॥

एष एवेति ।—विधिः,—बाधिर्य्यहरः । उभयोरपि—बाधिर्य्यकर्णनादयोः ॥ १८ ॥

चूर्णं पञ्चकषायाणां कपित्थरससंयुतम् ।
कर्णस्रावे प्रशंसन्ति पूरणं मधुना सह ॥ १९ ॥
मालतिदलरसमधुना पूरितमथवा गवां मूत्रैः ।
दूरात् परित्यज्यते च श्रवणयुगलं पूतिरोगेण ॥
हरितालं सगोमूत्रं पूरणं पूतिकर्णजित् ॥ २० ॥
सर्जत्वक्चूर्णसंयुक्तः कार्पासीफलजो रसः ।
मधुना संयुतः साधुः कर्णस्रावे प्रशस्यते ॥ २१ ॥

जम्ब्वाद्यं तैलम्—

जम्ब्वाम्रपत्रं तरुणं समांशं कपित्थकार्पासफलञ्च सार्द्रम् ।
क्षुत्त्वा रसं तन्मधुना विमिश्रं स्रावापहं सम्प्रवदन्ति तज्ज्ञाः ॥
एतैः शृतं निम्बकरञ्जतैलं ससार्षपं स्रावहरं प्रदिष्टम् ॥ २२ ॥

---

कर्णस्रावचिकित्सामाह, चूर्णमित्यादि।—सुश्रुतस्य।—पञ्चकषायाणां—पञ्चवल्कलानां चूर्णम्। उक्तं हि ग्रन्थान्तरे—"पञ्चवल्कलचूर्णं च कपित्थरससंयुतम्। मधुना योजितं कुर्यात् कर्णस्रावप्रपूरणात् ॥" इति। अन्ये तु—पञ्चकषायशब्देन सौश्रुतम् एव कर्णस्रावोक्तं तिन्दुकादिपञ्चकमुच्यते, यथा—"तिन्दुकान्यभया लोध्रं समङ्गामलकं तथा। पूरणार्थं पथ्यं स्यात् कपित्थरसयोजितम् ॥" इति न च उभयोरपि वचनयोः सौश्रुतत्वेन पौनरुक्त्यमिति वाच्यं, मधुयोगायोगाभ्यां योगद्वैविध्यादित्याहुः ॥ १९ ॥

मालतिदलेति।—वृन्दोद्धृतपाठात् कृतलम् ॥ २० ॥

सर्जेत्यादि।—सुश्रुतस्य।—सर्ज्जः—शालः, कार्पासी—वनकार्पासी, ग्रामकार्पासी वा। तथा च विदेहः,—"कार्पासीतुण्डिकेरीणां स्वरसो मधुसंयुतः। सर्ज्जत्वक्चूर्णसंयुक्तः कर्णस्रावस्य भेषजम्" ॥ इति। अत्र कार्पासीफलरसमपेक्ष्य अर्द्धं मधु, रसापेक्षया च सर्ज्जत्वक्चूर्णमर्द्धमिति वृद्धोपदेशः। साधुरिति—कार्पासीफलरसविशेषणं, तेन कीटाद्यनुपहतकार्पासीफलरसो ग्राह्य इति ॥ २१ ॥

जम्ब्वाम्रेत्यादौ।—सार्द्रमिति।—सहशब्दः साकल्ये, "सह साकल्य इष्यते" इति मेदिनी, समन्तादार्द्रमित्यर्थः। क्षुत्त्वेति—कुट्टयित्वेत्यर्थः। एतैरिति।—जम्ब्वाम्रपत्रादिभिः कल्कद्रव्यैरित्यर्थः, जलञ्चात्र चतुर्गुणम्। अन्ये तु—जम्बूपत्रादिरसैरित्याहुः। एतन्मते—तत्कल्क एवात्र पाके, पाकोत्तरकालञ्च मधुप्रक्षेप इत्याहुः। निम्ब-

पुटपाकविधिस्विन्न-हस्तिविड्जातगोण्डकः ।
रसः सतैलसिन्धूत्थः कर्णस्रावहरः परः ॥ २३ ॥

शम्बूकाद्यं तैलम्—

शम्बूकस्य तु मांसेन कटुतैलं विपाचयेत् ।
तस्य पूरणमात्रेण कर्णनाड़ी प्रशाम्यति ॥ २४ ॥

धुस्तूराद्यं तैलम्—

निशागन्धपले पक्वं कटुतैलं पलाष्टकम् ।
धुस्तूरपत्रजरसे कर्णनाड़ीजिदुत्तमम् ॥ २५ ॥
अथ कर्णप्रतीनाहे स्नेहस्वेदौ प्रयोजयेत् ।
ततो विरिक्तशिरसः क्रियां प्राप्तां समाचरेत् ॥
कर्णपाकस्य भैषज्यं कुर्य्यात् क्षतविसर्पवत् ।
नाड़ीस्वेदोऽथ वमनं धूमो मूर्द्धविरेचनम् ॥
विधिश्च कफहा सर्वः कर्णकण्डूं व्यपोहति ।
क्लेदयित्वा तु तैलेन स्वेदेन प्रविलाप्य च ।
शोधयेत् कर्णगूथन्तु भिषक् सम्यक् शलाकया ॥ २६ ॥

---

करञ्जतैल—निम्बबीज-करञ्जबीजभवं तैलं, सार्षपतैलञ्च सम्मिश्र पक्तव्यम् । पृथगेव तैलत्रय पक्तव्यमित्यन्ये ॥ २२ ॥

पुटपाकेत्यादौ ।—हस्तिविड्जातगोण्डकः,—हस्तिपुरीषोद्भूतच्छत्रकः ; रस इत्यत्र सञ्जेति शेषः ; तेन हस्तिपुरीषोद्भूतच्छत्रकरस इत्यर्थः । अन्ये तु—कोष्ठज इति पठन्ति । अपरे तु—कोष्ठकरस इति समस्तमेव पठन्ति—'वेश्मवारपयोदधि ।...मास-धावनतोयाभम्' इतिवत् ॥ २३ ॥

शम्बूकस्येत्यादि ।—शम्बूकमांसस्य कल्कः, जलं चतुर्गुणमिति ॥ २४ ॥

निशेत्यादौ ।—निशा—हरिद्रा । निशागन्धयोर्मिलित्वा पलमेकं, तथा धुस्तूरपत्र-स्वरसश्च तैलसमः । उक्तं हि—"चूर्णेन गन्धकनिशारजनीभवेन मुस्ताम्बिकेन कटुतैल-पलाष्टकञ्च । धुस्तूरपत्ररसतुल्यमिदन्तु सिद्धं नाडीं जयेच्चिरभवामपि कर्णजाताम्" ॥ इति । कटुतैलस्थाने केचित् तुवरतैलं पठन्ति ॥ २५ ॥

अथेत्यादि ।—प्रतीनाहः ।—क्रियां प्राप्तामिति—दोषानुरूपाम् । नाड़ीस्वेद

निर्गुण्डीस्वरसस्तैलं सिन्धुधूमरजो गुडः।
पूरणात् पूतिकर्णस्य शमनो मधुसंयुतः।
जातीपत्ररसे तैलं विपक्वं पूतिकर्णजित् ॥ २७ ॥
वरुणार्ककपित्थाम्र-जम्बूपल्लवसाधितम्।
पूतिकर्णापहं तैलं जातीपत्ररसोऽथ वा ॥
सूर्य्यावर्त्तकस्वरसं सिन्धुवाररसं तथा।
लाङ्गलीमूलजरसं त्र्यूषणेनावचूर्णितम्।
पूरयेत् क्रिमिकर्णन्तु जन्तूनां नाशनं परम् ॥
क्रिमिकर्णकनाशार्थं क्रिमिघ्नं योजयेद्विधिम्।
वार्त्ताकुधूमश्च हितः सार्षपस्नेह एव च ॥ २८ ॥
हलिसूर्य्यावर्त्तव्योष-स्वरसेनाभिपूरिते।
कर्णे पतन्ति सहसा सर्व्वास्तु क्रिमिजातयः ॥ २९ ॥
नीलवृक्षरसस्तैल-सिन्धुकाञ्जिकसंयुतः।
कदुष्णः पूरणात् कर्णे निःशेषक्रिमिपातनः ॥
धूपनः कर्णदौर्गन्ध्ये गुग्गुलुः श्रेष्ठ उच्यते ॥ ३० ॥
राजवृक्षादितोयेन सुरसादिजलेन वा।
कर्णप्रक्षालनं कुर्य्याच्चूर्णैरेतैः प्रपूरणम् ॥ ३१ ॥

---

इत्यादौ क्षेदस्वेद इति पाठे—कफकृतायामपि कर्णकण्ड्वां स्वेदो ममनाद्भतया बोध्यः ॥ २६ ॥

*निर्गुण्डीत्यादौ।—निर्गुण्डीस्वरसतिलतैलयोः* प्रत्येकं माषकचतुष्टयं, अत्र धूमचूर्णगुडयोस्तु प्रत्येकमेकमाषकं, मधुनस्तु माषकद्वयं, सैन्धवन्तु रक्तिद्वयमिति व्यवहरन्ति ॥ २७ ॥

वरुणेत्यादौ।—वरुणादिपत्रकाथो कल्क। सूर्य्यावर्त्तकादिषु त्रिषु योगेषु व्योष चूर्णं प्रक्षेप्यम्। वार्त्ताकुधूम इति।—परिपक्ववार्त्ताकुफलचूर्णम् शरावसम्पुटे दत्वा नलिकया कर्णे धूमो देयः। वार्त्ताकुबीजेन धूम. कार्य्य इति डल्वणमतः ॥ २८ ॥

हलीत्यादौ।—हली—लाङ्गलीमूलं, हलीसूर्य्यावर्त्तयोर्व्योषयुक्तस्वरसेन कर्णपूरणमित्यर्थः ॥ २९ । ३० ॥

घृष्टं रसाञ्जनं नार्य्याः क्षीरेण क्षौद्रसंयुतम्।
प्रशस्यते चिरोत्थेऽपि सास्रावे पूतिकर्णके॥ ३२॥

कुष्ठाद्यं तैलम्—

कुष्ठहिङ्गुवचादारु-शताह्वाविश्वसैन्धवैः।
पूतिकर्णापहं तैलं वस्तमूत्रेण साधितम्॥ ३३॥
विद्रधौ चापि कुर्वीत विद्रध्युक्तं हि भेषजम्।
शतावरीवाजिगन्धा-पयस्यैरण्डबीजकैः।
तैलं विपक्वं सक्षीरं पालीनां पुष्टिकृत् परम्॥ ३४॥
गुञ्जाचूर्णयुते जाते माहिषे क्षीर उद्धृतम्।
नवनीतं तदभ्यङ्गात् कर्णपालिविवर्द्धनम्॥ ३५॥
विषगर्भं तिक्ततुम्बी-तैलमष्टगुणे खरे।
मूत्रे पक्वं तदभ्यङ्गात् कर्णपालिविवर्द्धनम्॥ ३६॥

जीवनीयाद्यं तैलम्—

कल्केन जीवनीयेन तैलं पयसि साधितम्।
आनूपमांसक्वाथेन पालीपोषणवर्द्धनम्॥ ३७॥

---

राजवृक्षेत्यादि।—राजवृक्षादिगणः,—आरग्वधादिगणः। सुरसादिः,—सुरसादिगणः। चूर्णैरेतैरिति—आरग्वधादिसुरसादिजैः॥ ३१। ३२॥

कुष्ठेत्यादौ।—कुष्ठादीनां कल्कः॥ ३३॥

विद्रधावित्यादौ।—विद्रध्युक्तमिति—यद्विद्रध्युक्तमिति श्रीकण्ठः। शतावरीत्यादि।—वाग्भटस्य।—पयस्या—क्षीरकाकोली, विदारीकन्द इत्यन्ये। एरण्डबीजकम्—एरण्डस्य बीजं, न तु बीजकः पीतसालः, तस्य वल्कलादिति। बीजकैरित्यत्र बीजकैरित्येव पाठ इति नियमः॥ ३४॥

गुञ्जेत्यादि।—गुञ्जाचूर्णं क्षीरापेक्षया अष्टमांशमित्याहुः। जाते इत्यत्र दधीति शेषः। अष्टमांशगुञ्जाचूर्णयुते माहिषीक्षीरे जातस्य दध्नो नवनीतमित्यर्थः॥ ३५॥

विषगर्भमित्यादि।—विषगर्भं—विषकल्कम्। तिक्ततुम्बीबीजभवं तैलं तिक्ततुम्बीतैलम्। खरस्य गर्दभस्य मूत्रे खरमूत्रे॥ ३६॥

कल्केनेत्यादि।—वाग्भटस्य।—जीवनीयेनेति—जीवनीयदशकेन अष्टवर्गेण

माहिषनवनीतयुतं सप्ताहं धान्यराशिपरिवासितं तत् ।
नवमूर्वालिकन्दचूर्णं वृद्धिकरं कर्णपालीनाम् ॥ ३८ ॥

कर्णस्य दुर्व्यधे भूते संरम्भो वेदना भवेत् ।
तत्र दुर्व्यधरोहार्थं लेपो मध्वाज्यसंयुतैः ।
मधूकयवमञ्जिष्ठा-रुबुमूलैः समन्ततः ॥ ३९ ॥
अनेकधा तु छिन्नस्य सन्धिः कर्णस्य वै भिषक् ।
यो यथा विनिविष्टः स्यात् तं तथा विनियोजयेत् ॥
धान्याम्लोष्णोदकाभ्यान्तु सेको वातेन दूषिते ।
रक्तपित्तेन पयसा श्लेष्मणा तूष्णवारिणा ।
ततः सीव्य स्थिरं कुर्यात् सन्धिं बन्धेन वा पुनः ॥

वैवर्ण्ये। दुग्धमत्र क्षेपणमम्, आनूपमांसक्वाथस्तु विरुद्ध.। पोषय—परिणाहेन, वर्द्धनन्तु दैर्घ्येण ॥ ३७ ॥

माहिषेत्यादौ।—सप्ताहं धान्यराशौ परिवसु भोजनमथेति तत् तथा। नवमूर्वालिकन्दचूर्णमिति।—तत्पश्चानीतमूर्वाताक्ष्मूलीकन्दचूर्णं पल १, माहिषनवनीत पल १, समस्तं सप्ताह धान्यराशौ स्थाप्यमित्यर्थः ॥ ३८ ॥

दुर्विद्धकर्णचिकित्सामाह, कर्णस्येत्यादि।—रुबुमूलम्—एरण्डमूलम्। अन्यं हि तन्त्रान्तरे—"यवैरण्डजटाकर्पिमंधुकमधुसयुतम्। विडङ्गाधवचूर्णं वा केवलं रोपणे हितम् ॥" इति। अत एव रुबुमूलस्थाने रुबुतैलमितिपपाठ ॥ ३९ ॥

छिन्नकर्णपालिसन्धानार्थं विधिमाह, अनेकधेत्यादि।—कर्णपालिच्छेदो हि हेतुद्वयेन भवति; उक्तं हि सुश्रुते—"एव विवर्द्धित. कर्णश्छिद्यते तु द्विधा नृणाम्। दोषतश्चाभिघाताद्वा" इति। दोषत इति।—वातादिकोपात्। छिन्नस्य कर्णस्येति।—छिन्नाया. कर्णलतिकाया। अथ स्थूलह्रस्वदीर्घ ऋजुतिर्यगादिभेदेन अनेकविधत्वात् तत्सन्धिरपि अनेकधा भवति, तत्र य सन्धिर्यथा येन प्रकारेण विनिविष्टः सुसम्बद्ध स्यात्, त सन्धि तथा तेन प्रकारेण विनियोजयेत्, सन्धानार्थं योजयेदित्यर्थः। तत्र सुश्रुते पञ्चदश छिन्नकर्णसन्धानप्रकारा आकृतिभेदेनोक्ता, ते च तत्रैव कर्णव्यधबन्धविध्यध्याये चानुसन्धेयाः, इह तु विस्तरभयान्नोक्तम्। तत्र दोषानुरूपं प्रक्षालनमाह—धान्याम्लेत्यादि। पयसेति—दुग्धेन, शीतोदकेनेति वा। उक्तं हि सुश्रुते—"पित्तदुष्टे शीतोदकपयोभ्याम्" इति। तत इत्यादि।—तत इति—सन्धिद्वय-संयोगानन्तरम्। सीव्येति।—सीव्य तन्तुसन्तान द्रव्यस्य स्थापि रूप छान्दसत्वात्। सीव्ये-

मध्वाज्येन ततोऽभ्यज्य पिचुना सन्निवेष्टकम्।
कपालचूर्णेन ततश्चूर्णयेत् पथ्ययाऽथवा॥ ४०॥

इति कर्णरोग चिकित्सा।

---

## अथ नासारोग चिकित्सा।

पञ्चमूलीशृतं चीरं स्याच्चित्रकहरीतकी।
सर्पिर्गुडः षडङ्गश्च यूषः पीनसशान्तये॥ १॥

व्योषादिचूर्णम्—

व्योषचित्रकतालीश-तिन्तिड़ी चाम्लवेतसम्।
सचव्याजाजितुल्यांशमेलात्वक्पत्रपादिकम्॥

---

त्वच चौमसूत्रेणेति शेषः। सन्धि—कर्णपालिद्वयसन्धिं, चौमसूत्रेण सीव्य स्थिरं कुर्य्यात्, तथा बन्धेन वा सन्धिं स्थिरं कुर्य्यादित्यर्थः। तत इति।—सन्धिस्थिरीकरणानन्तरं मधुघृताभ्यां सन्धिमभ्यज्य पिचुना तूलकपिण्डेन सन्निवेष्टनं कुर्य्यात्। सन्निवेष्टनानन्तरञ्च सूत्रेण नातिगाढं नातिशिथिलञ्च बन्धनं बोध्यम्; उक्तं हि वाग्भटे,—"अभ्यज्य मधुसर्पिर्भ्यां पिचुप्लोतावगुण्ठितम्। सूत्रेणागाढशिथिलं बद्धा चूर्णैरवाकिरेत्"॥ इति। कपालः,—मृत्पात्रकपालः॥ ४०॥

इति कर्णरोग-चिकित्सा-विवृतिः।

---

क्रमसङ्गत्यैव कर्णरोगचिकित्सानन्तरं नासारोगचिकित्सितमुच्यते, पञ्चमूली आदि।—पञ्चमूली—स्वल्पेति निश्चयः, महतीत्यन्ये। चित्रकहरीतकी वक्ष्यमाणाधिकारे द्रष्टव्या। सर्पिर्गुड़षडङ्गयूषौ यथोक्तौ। इदन्तु क्रियामूर्त्तं पीनसे बोध्यम्॥ १॥

व्योषादिकं चूर्णमिदं पुराणगुड़संयुतम् ।
पीनसश्वासकासघ्नं रुचिस्वरकरं परम् ॥ २ ॥

पाठादि तैलम्—

पाठाद्विरजनीमूर्वा-पिप्पलीजातिपल्लवैः ।
दन्त्या च तैलं संसिद्धं नस्यं सम्यग्गपीनसे ॥ ३ ॥

व्याघ्री-तैलम्—

व्याघ्रीदन्तीवचाशिग्रु-सुरसव्योषसैन्धवैः ।
पाचितं नावनं तैलं पूतिनासागदं जयेत् ॥ ४ ॥

त्रिकट्वाद्यं तैलम्—

त्रिकटुविड़ङ्गसैन्धवबृहतीफलशिग्रुसुरसदन्तीभिः ।
तैलं गोजलसिद्धं नस्यं स्यात् पूतिनस्यस्य ॥ ५ ॥

कलिङ्गहिङ्गुमरिच-लाक्षासुरसकट्फलैः ।
कुष्ठोग्राशिग्रुजन्तुघ्नैरवपीड़ः प्रशस्यते ॥
तैरेव मूत्रसंयुक्तैः कटुतैलं विपाचयेत् ।
अपीनसे पूतिनस्ये शमनं कीर्त्तितं परम् ॥ ६ ॥

---

व्योषादिचूर्णे ।—व्योष,—त्रिकटु , तिन्तिडी—वृक्षाम्लम् , अजाजी—जीरकम् ; एलात्वक्पत्रपादिकमिति ।—एलात्वक्पत्रादि प्रत्येकमेकभागापेक्षया पादिकं, गुडस्तु सर्वचूर्णसम इति निश्चयः । किन्तु "तालीसचित्रकव्योष-तिन्तिडीकाम्लवेतसम् । सचव्याजाजीपिप्पलीमेलात्वक्पत्रपादिकम् ॥ चौर्णादिगुडात् तुलार्द्धेन पक्वेन वटकी-कृतम् । पीनसश्वासकासघ्नं रुचिस्वरकरं परम् ॥" इति वाग्भटे वाक्योंनविमतिपलचूर्णे गुडतुलार्द्धस्योक्तत्वात् गुडस्य सर्वचूर्णसमत्वं नोपपद्यत इति ॥ २ ॥

पाठेत्यादौ ।—पाठादीनां कल्कः, अत्र चतुर्गुणमिति ॥ ३ ॥

व्याघ्रीत्यादौ ।—सुरस,—सिन्धुवार, पर्णास इत्यन्ये ॥ ४ ॥

त्रिकटुकेत्यादि ।—अत्रापि सुरस,—सिन्धुवार, पर्णास इत्यन्ये । अत्र शिग्रुबीज दन्तीबीजञ्च ग्राह्य, तथा बृहतीफलस्यापि बीजम् । उक्तं हि वाग्भटे—"शिग्रुसिंही-निकुम्भानां बीजैः सव्योषसैन्धवैः । सतैलसुरसैस्तैलं नावनं परमं हितम् ॥" इति ॥ ५ ॥

कलिङ्गेत्यादौ ।—सुरस,—पर्णासः ; उग्रा—वचा, जन्तुघ्न,—विडङ्गः । अत्रापि

नासापाके पित्तहरं विधानम्
कार्य्यं सर्वं वाह्यमाभ्यन्तरञ्च।
हरेद्रक्तं क्षीरिवृक्षत्वचश्च
योज्याः सेके सघृताश्च प्रदेहाः।
पूयास्ररक्तपित्तघ्नाः कषाया नावनानि च ॥ ७ ॥
शुण्ठीकुष्ठकणाविल्व-द्राक्षाकल्ककषायवत्।
साधितं तैलमाज्यं वा नस्यं क्षवथुरुक्प्रणुत् ॥ ८ ॥
दीप्ते रोगे पैत्तिके पैत्तिकन्तु
विधिं कुर्य्यान्मधुरं शीतलञ्च।
नासानाहे स्नेहपानं प्रधानम्
स्निग्धा धूमा मूर्द्धवस्तिश्च नित्यम् ॥ ९ ॥
वातिके तु प्रतिश्याये पिवेत् सर्पिर्यथाक्रमम्।
पञ्चभिर्लवणैः सिद्धं प्रथमेन गणेन च ॥

---

वक्ष्यमाणमूत्रसङ्कलितस्य सम्बन्धं कृत्वा चवधीकमपि मूत्रेण पिष्टं कुर्यात्। तैलपाके तु गोमूत्रमेव चतुर्गुणमिति ॥ ६ ॥

नासापाके पित्तहर विधानमिति।—अत्र पित्तहृत् संविधानमिति पाठो रत्नप्रभासम्मतः। हरेद्रक्तमिति।—अत्र हत्वा रक्तमित्यपि तथा। वाह्यमाभ्यन्तरञ्चेति।—वाह्यं—सेकादि, आभ्यन्तरं—स्नेहपानादि। क्षीरिवृक्षा—वटोडुम्बरादयः पञ्च ॥ ७ ॥

शुण्ठीत्यादि।—वाग्भटस्य।—विल्वं—विल्वस्य मूलम्। क्षवपुटप्रणुदित्येव पाठो वाग्भटे तु दृश्यते, टीकायाञ्चैवमेवोक्तम्; अस्यार्थमनुद्दैव क्षवथुरुक्प्रणुदिति पाठभ्रमाः कुर्वन्ति।—क्षव,—क्षवथुः, पुटोऽपि नासारोगविशेषः। उक्तं हि वाग्भटे—"पित्तश्लेष्मावरुद्धोऽन्तर्नासायां शोषयेन्मरुत्। कफं सम्पक्कपुटतां प्राप्नोति पुटकन्तु तत् ॥" इति ॥ ८ ॥

दीप्त इत्यादि।—सुश्रुतस्य।—दीप्ते रोगे पैत्तिककर्मविधानमिति पाठः सुश्रुते दृश्यते ॥ ९ ॥

वातिक इत्यादि।—सुश्रुतस्य।—पञ्चभिर्लवणैरिति।—पञ्चभिर्लवणैः कल्करूपैः सिद्धं सर्पिः पिवेत्। यथाक्रममिति।—स्नेहोपयोगिकाध्यायोक्तविधमनतिक्रम्य। प्रथमेन

नस्यादिषु विधिं कृत्स्नमवेक्षेतार्दितेरितम् ।
पित्तरक्तोत्थयोः पेयं सर्पिर्मधुरकैः शृतम् ।
परिषेकान् प्रदेहांश्च कुर्यादपि च शीतलान् ॥ १० ॥
कफजे सर्पिषा स्निग्धं तिलमाषविपक्वया ।
यवाग्वा वामयित्वा वा कफघ्नं क्रममाचरेत् ॥ ११ ॥
दार्व्यङ्गुदीनिकुम्भैश्च किणिह्या सुरसेन च ।
वर्त्तयोऽत्र कृता योज्या धूमपाने यथाविधि ॥ १२ ॥
अथवा सघृतान् सक्तून् कृत्वा मल्लकसम्पुटे ।
नवप्रतिश्यायवतां धूमं वैद्यः प्रयोजयेत् ॥ १३ ॥

---

गणेनेति ।—विदारीगन्धादिगणेन वा क्वाथकल्काभ्यां सिद्धं सर्पिः पिबेदित्यर्थः । तथा नस्यादिकर्मसु कर्त्तव्येषु अर्दितोक्तं विधिम् अवेक्षेत आलोचयेत् । वाग्भटेऽप्युक्तं—"पिबेद् वातप्रतिश्यायी सर्पिर्वातघ्नसाधितम् । पञ्चपञ्चकसिद्धं वा विदार्यादिगणेन वा ॥ स्वेदनस्यादिकां कुर्य्यात् चिकित्सामर्दितेरिताम् ॥" इति । अन्ये त्वाहुः,—प्रथमेन गणेनेत्येतन्नस्यादिविधानेन सम्बध्यते, तेन प्रथमेन गणेन सिद्धं सर्पिर्नस्यौपनाहशिरो-बस्त्यादिषु योज्यमित्यर्थः । एतत् तु—वाग्भटविरोधादुपेक्षणीयमिति । पित्तेत्यादि ।—सुश्रुतस्य ।—पित्तरक्तोत्थयोरनयोः प्रतिश्याययोरिति शेषः । मधुरकैः शृतमिति ।—काकोल्यादिभिर्विपक्वम् । शीतलानिति ।—यष्टीमधुमुस्तादिद्रव्यैः शीतलान् कृतान् ॥ १० ॥

कफज इत्यादौ ।—सुश्रुतस्य ।—तिलमाषौ कल्करूपौ, अत्र मदनफलमपि बोध्यं, वमनयोगात् । कफघ्नं क्रममिति ।—कफहरद्रव्यकृतपेयादिक्रमम् ॥ ११ ॥

दार्व्वीत्यादि ।—सुश्रुतस्य ।—दार्व्वी—दारुहरिद्रा, इङ्गुदी—पुत्रजीवक.। निकुम्भ.,—दन्ती, तस्या बीजं मूलं वा । किणिही—कटभीबीजम्, अपामार्ग इत्यन्ये । सुरसेनेत्यत्र सरलेनेति सुश्रुते पठ्यते ; तन्मते—सरलं—सरलकाष्ठमेव । सुरस,—पर्णासः, निर्गुण्डी वा । यथाविधीति ।—वैरेचनधूमवर्त्तिविधानक्रमेण ॥ १२ ॥

अथवेत्यादौ ।—यवसक्तून् सघृतान् शरावस्थिताङ्गारे दत्त्वा तदुपरि क्षुद्र-च्छिद्रेण शरावान्तरेण पिधाय तस्मिन्नेव च्छिद्रे नलिकां दत्त्वा धूमं पिबेदि-त्यर्थः ॥ १३ ॥

यः पिबति शयनकाले शयनारूढ़ः सुशीतलं भूरि।
सलिलं पीनसयुक्तः स मुच्यते तेन रोगेण ॥ १४ ॥

पुटपक्कं जयापत्रं सिन्धुतैलसमन्वितम्।
प्रतिश्यायेषु सर्वेषु शीलितं परमौषधम् ॥ १५ ॥

सोपणं गुड़संयुक्तं स्निग्धदध्यम्लभोजनम्।
नवप्रतिश्यायहरं विशेषात् कफपाचनम् ॥ १६ ॥

प्रतिश्याये नवे शस्तो यूषश्चिञ्चादलोद्भवः।
ततः पक्कं कफं ज्ञात्वा हरेच्छीर्षविरेचनैः ॥

शिरसोऽभ्यञ्जनस्वेद-नस्यकट्वन्नभोजनैः।
वमनैर्घृतपानैश्च तान् यथास्वमुपाचरेत् ॥ १७ ॥

भक्षयति भुक्तमात्रे सलवणमुत्स्विन्नमाषमत्युष्णम्।
स जयति सर्वसमुत्थं चिरजातञ्च प्रतिश्यायम् ॥

पिप्पल्यः शिग्रुबीजानि विड़ङ्गं मरिचानि च।
अवपीड़ः प्रशस्तोऽयं प्रतिश्यायनिवारणः ॥ १८ ॥

समूत्रपिष्टास्तूद्दिष्टाः क्रियाः क्रिमिषु योजयेत्।
नावनार्थं क्रिमिघ्नानि भेषजानि च बुद्धिमान्।
शेषाणान्तु विकाराणां यथास्वं स्याच्चिकित्सितम् ॥ १९ ॥

---

यः पिबतीत्यादि।—योगोऽयं वातपित्तोत्तरे प्रतिश्याये बोध्यः ॥ १४ ॥

पुटेत्यादौ।—जया—जयन्ती ॥ १५ ॥

सोपणमित्यादि।—ऊषणं—मरिचम्। योगोऽयं वातिके इत्याहुः ॥ १६ ॥

प्रतिश्याय इत्यादि।—चिञ्चा,—तिन्तिड़ी, तस्याः दलः पत्रम्। यूषः,—क्वाथ.। अत्र हिङ्गुमरिचचूर्णं मात्राऽनुरूपं प्रक्षिपन्ति वृद्धाः। शिरस इत्यादौ।—यथास्वमिति।—पक्वे शिरोऽभ्यङ्गस्वेदनस्य-घृतपानादिर्विषमपक्वे खेदश्च ॥ १७ ॥

भक्षयतीत्यादि।—योगोऽयं वातोत्तरे बोध्यः ॥ १८ ॥

समूत्रेत्यादि।—सुश्रुतस्य।—समूत्रं यथा स्यात् तथा पिष्टाः, कर्मधारयो वा। उद्दिष्टा इति।—सुश्रुतेऽनन्तरोक्ताः सर्वाः क्रियाः मूत्रपिष्टाः प्रतिश्याये क्रिमिसम्बन्धे सति योजयेदित्यर्थः। अन्ये तु—क्रिमिषु याः क्रियाः उक्तास्तास्ताश्च सर्वा मूत्रपिष्टा

करवीराद्यं तैलम्—

रक्तकरवीरपुष्पं जात्यश्वनमल्लिकाश्च।
एतैः समन्तु तैलं नासार्शोनाशनं श्रेष्ठम्॥ २०॥

शिखरि-तैलम्—

गृहधूमकणादारु-क्षारनक्ताह्वसैन्धवैः।
सिद्धं शिखरिबीजैश्च तैलं नासार्शसां हितम्॥ २१॥

चित्रक तैलम्—

चित्रकचविकादीप्यक-निदिग्धिकाकरञ्जबीजलवणार्कैः।
गोमूत्रयुतं सिद्धं तैलं नासार्शसां विहितम्॥ २२॥

चित्रकहरीतकी—

चित्रकस्यामलक्याश्च गुडूच्या दशमूलजम्।
शतं शतं रसं दत्त्वा पथ्याचूर्णाढकं गुडात्॥
शतं पचेद्घनीभूते पलद्वादशकं क्षिपेत्।
व्योषत्रिजातयोः क्षारात् पलार्द्धमपरेऽहनि॥

---

बीजैरित्यादि:। क्रिमिघ्नानि भेषजानीति।—सुरसादिगणप्रभृतीनि। शैवाथान्तु विकाराणामिति।—नासार्बुदनासार्श.प्रभृतीनाम्। यथाबलमिति।—यत् यत् स्व यथाबलमिति वीप्सायामव्ययीभाव.॥ १८॥

रक्तकरवीरेत्यादी।—जाती—मालती, तस्या अपि पुष्पम्; अश्वनमल्लिका।—आफरमल्लिका। समन्त्विति।—संहितानिर्देशोऽसिद्धविधेरनित्यत्वात्। एतैः समन्तिति।—एतैः कल्करूपै. सह पक्वमित्यर्थ। पाकार्थन्तु जलं चतुर्गुणमिति शेषम्॥२०॥

गृहधूमेत्यादी।—क्षार,—यवक्षार, नक्ताह्व:,—करञ्जबीजं, शिखरिबीजम्—अपामार्गबीजतण्डुल.। अत्रापि जलं चतुर्गुणं देयम्॥ २१॥

चित्रकेत्यादी।—दीप्यकं—यमानी, लवणं—सैन्धवम्, अर्कम्—अर्कक्षीरम्॥२२॥

चित्रकहरीतक्यां चित्रकस्य पञ्चाशत् पलानि, जलस्य शरावाः पञ्चाशत्, द्राव्यस्तु सार्द्धद्वादशशरावाः; एव चित्रकस्य क्वाथस्य फलशतं भवति। आमलकीस्वरसस्यापि

प्रस्थार्द्धं मधुनो दत्त्वा यथाग्न्यद्यादतन्द्रितः ।
सदनेऽग्नेः क्षयं कासं पीनसं दुस्तरं क्रिमीन् ।
गुल्मोदावर्त्तदुर्नाम-श्वासान् हन्ति रसायनम् ॥ २१ ॥

इति नासारोग-चिकित्सा ।

---

## अथ नेत्ररोग-चिकित्सा ।

लङ्घनालेपनस्वेद-शिराव्यधविरेचनैः ।
उपाचरेदभिष्यन्दानञ्जनाश्च्योतनादिभिः ॥ १ ॥
श्रीवासाऽतिविषालोध्रैश्चूर्णितैरल्पसैन्धवैः ।
अव्यक्तेऽक्षिगदे कार्य्यं पोतस्थैर्गुण्ठनं बहिः ॥ २ ॥

---

पलमत्र स्वरसाभावे ज्ञेयमेव स्वरसविधिः। एवं गुडूच्याः शिखितदशमूलस्य च क्वाथविधिः। व्याघ्रीविजातयोर्मिलित्वा पलद्वादशकम्। प्रस्थार्द्धमिति—धारादित्यनेनैव सम्बध्यते। अपरेऽहनीति—परेण सम्बध्यते ॥ २१ ॥

इति नासारोग चिकित्सा विवृतिः ।

---

चरकसंवादादेव नेत्ररोगचिकित्सामाह—तत्राभिष्यन्दस्य निखिलनेत्ररोगमूलत्वेन प्राधान्यात् प्रथमतोऽभिष्यन्दप्रतिकारमाह, लङ्घनेत्यादि। लङ्घनमत्र लघ्वन्नमुपवासो वा; उक्तं हि—"मागीपाद्यामयी भुक्तं विरात्रमगुरु स्थितम्। उपवासस्त्र्यहं वा स्यात्—" इति। किन्तु उपवासो वातजादन्यत्र विधेयः, वाग्भटसंवादात्। स्वेदोऽपि पित्तजं विना नयनोपान्ते मृदुर्बोध्यः। यदुक्तं—"हृदयं न्यधो दृष्टि स्वेदयेत् मृदु वा न वा" इति। शिराव्यधो रक्तदुष्टौ सत्यां शिराव्यधनम्। विरेचनं—शिरसः कायस्य च। तत्र शिरोविरेचनन्तु नवे, कायविरेचनञ्च जीर्णे ज्ञेयम्। आदिशब्देन तर्पणपुटपाकक्वाथादिपरिग्रहः ॥ १ ॥

श्रीवासेत्यादौ।—श्रीवासः,—देवदारु। अल्पसैन्धवैरिति।—एकभागापेक्षया चतु·

शिखरिजमूलं ताम्रभाजने स्तोकसैन्धवोम्मिश्रम् ।
मस्तुनिघृष्टं भरणाद्धरति नवं लोचनोत्कोपम् ॥ ८ ॥
सैन्धवदारुहरिद्रा-गैरिकपथ्यारसाञ्जनैः पिष्टैः ।
दत्तो बहिः प्रलेपो भवत्यशेषाक्षिरोगहरः ॥
तथा शावरकं लोध्रं घृतभृष्टं बिडालकः ।
कार्य्यो हरीतकी तद्वद्घृतभृष्टं बिडालकः ॥
शालाक्येऽरुणोर्बहिर्लेपो बिडालक उदाहृतः ॥ ९ ॥
गिरिमृच्चन्दननागर-खटिकासंयोजितो बहिर्लेपः ।
कुरुते वचया मिश्रो लोचनमगदं न सन्देहः ॥ १० ॥
भूम्यामलकी घृष्टा ससैन्धवरुट्टवारियोजिता ताम्रे ।
जाता घनत्वमक्ष्णोर्जयति बहिर्लेपतः पीड़ाम् ॥ ११ ॥
आश्च्योतनं मारुतजे क्वाथो बिल्वादिभिर्हितः ।
कोष्णः सैरण्डबृहती-तर्कारीमधुशिग्रुभिः ॥ १२ ॥

---

शिखरिजेत्यादौ ।—शिखरि—अपामार्गः । स्तोकसैन्धवं—रक्तिद्वयं रक्तित्रयं वा सैन्धवमित्यर्थः । भरणादिति—पूरणात् ॥ ८ ॥

सैन्धवेत्यादि ।—एतैः स्तोकसैन्धवसहितैः समभागपिष्टैः सुषमपक्ष्मोपरि निमीलित-चक्षुषि लेपो देयः; एवं वक्ष्यमाणबिडालकद्वयेऽपि ज्ञेयमित्याहुः । शावरकं लोध्रमिति—श्वेतलोध्रम् । बिडालकशब्दार्थमाह—शालाक्य इत्यादि ।—शालाक्ये—शालाक्यपन्थे, सुश्रुत इति यावत् ॥ ९ ॥

गिरिमृदित्यादौ ।—चंद्रः,—भागः । एतैः समभागपिष्टैश्चक्षुःसमीपे लेपः कार्य्य इत्याहुः ॥ १० ॥

भूम्यामलकीत्यादौ ।—रुट्टवारि—काञ्जिकम् ॥ ११ ॥

आश्च्योतनमित्यादि ।—आश्च्योतनम्—अक्षिसेकः । बिल्वादि—महत् पञ्चमूलम् । तर्कारी—जयन्ती । मधुशिग्रु—रक्तशोभाञ्जनम् । बिल्वादिभिरित्यस्य सैरण्डेत्यादि-विशेषणम्; तेन एक एवायं योगः; यदाह जतूकर्णः,—"महत्पञ्चमूलबृहतीशिग्रु-तर्कारीसिद्धोक्वाथः" इति; किन्तु तन्त्रान्तरे केवलबिल्वादिक्वाथेनाप्ययं योगो दृश्यते; यथा—"पूरणं सैन्धवयुक्तं तथा बिल्वादिनाम्भसा" इति । किन्तु योग-

एरण्डपल्लवे मूले त्वचि चाजं पयः शृतम् ।
कण्टकार्य्याश्च मूलेषु सुखोष्णं सेचने हितम् ॥ १३ ॥
सम्यक्कृतेऽचिरादेव कार्य्यमञ्जनादिकमिष्यते ।
प्रशस्तवर्त्मता चाक्ष्णोः संरम्भाश्रुप्रशान्तता ।
मन्दवेदनता कण्डूः पक्वाक्षिगदलक्षणम् ॥
अञ्जनादिविधिश्चात्र निखिलेनाभिधास्यते ।
बृहत्यैरण्डमूलत्वक् शिग्रोर्मूलं ससैन्धवम् ।
अजाक्षीरेण पिष्टं स्याद्वर्त्तिर्वाताक्षिरोगनुत् ॥ १४ ॥
हरिद्रे मधुकं द्राक्षां देवदारु च पेषयेत् ॥
आजेन पयसा श्रेष्ठमभिष्यन्दे तदञ्जनम् ॥ १५ ॥

---

ह्ययनो सैरखोति ह्रस्वादिविशेषणम्, न तु विल्वादिविशेषणम्; एकदोषत्वप्रसङ्गात् ॥ १२ ॥

एरण्डेत्यादि ।—सुश्रुतस्य ।—एरण्डपल्लवादिकण्टकार्य्या मूलान्त एव एकार्थ योग, त्रिविधवाक्यात् । यथा—"कण्टकारीशिफैरण्ड मूलत्वक्पयसाधितम् । क्षीरमाजं हितं सेके चक्षुःस्यन्दाभिमन्थयोः ॥" इति । चाजं पयोऽत्र क्षीरपरिभाषयैव साध्यम् । अन्ये त्वाहुः,—एतद्योगानन्तरं सुश्रुते—"शीतवीर्य्यफलस्यांश-त्रिफलाभिः शृतं पयः । हितमङ्गीवदं सेके" इति पठ्यते; एतद्वचनमनु सर्वमाक्षीतर्पणसाधने परिभाषाख्यानीयम्; तेनात्रापि षडङ्गिकं क्षीरं साध्यमिति। किन्त्वत्र विशिष्टानुक्त्या क्षीरपरिभाषयैव साध्यमिति युक्तिमुत्पश्यामः । व्यवहारोऽपि क्षीरसाधनपरिभाषयैवेति ॥ १३ ॥

अञ्जनादिविधानस्य समयमाह, सम्यक्क इत्यादि ।—पक्वाक्षिरोगलक्षणमाह, प्रशस्तेत्यादि ।—प्रशस्तवर्त्मता—दोषाणामनभिभूतवर्त्मता; संरम्भ,—शोथः । एतच्च लक्षणं प्रायस्त्र्यहादुपरि ज्ञेयम्, यदाह चरकः,—"त्र्यहात्परमता कार्य्यं सम्यक् चाञ्जनं प्रकाशम्" इति । अञ्जनादिविधिश्च कथं ज्ञातव्य इत्यपेक्षया आह, अञ्जनादिविधिरित्यादि ।—अत्र इति—चाक्षुषीयमाद्यधिकारे ॥ १४ ॥

हरिद्रे इत्यादि ।—सुश्रुतस्य ।—अत्र द्राक्षास्थाने पद्मेति केचित् पठन्ति ॥ १५ ॥

गैरिकं सैन्धवं कृष्णां तगरञ्च यथोत्तरम् ।
पिष्टं द्विरंशतोऽद्भिर्वा गुडिकाञ्जनमिष्यते ॥ १६ ॥
प्रपौण्डरीकयष्ट्याह्व-निशामलकपद्मकैः ।
शीतैर्मधुसमायुक्तैः सेकः पित्ताक्षिरोगनुत् ॥ १७ ॥
द्राक्षामधुकमञ्जिष्ठा-जीवनीयैः शृतं पयः ।
प्रातराश्च्योतनं पथ्यं शोथशूलाक्षिरोगिणाम् ॥ १८ ॥

निम्बस्य पत्रैः परिलिप्य लोध्रम्
स्वेदाग्निना चूर्णमथापि वाल्कम् ।
आश्च्योतनं मानुषदुग्धमिश्रम्
पित्तास्रवातापहमग्र्यमुक्तम् ॥ १९ ॥

कफजे लङ्घनं स्वेदो नस्यं तिक्तान्नभोजनम् ।
तीक्ष्णैः प्रधमनं कुर्य्यात् तीक्ष्णैश्चैवोपनाहनम् ॥ २० ॥
फणिज्झकास्फोतकपित्थबिल्व-पत्तूरपीलूसुरसार्जकभङ्गैः ।
स्वेदं विदध्यादथवा प्रलेपं बर्हिष्ठशुण्ठीसुरदारुकुष्ठैः ॥ २१ ॥

---

गैरिकमित्यादि ।—सुश्रुतस ।—तत्र तगरस्थाने नागरमिति नियतः पठति । यथोत्तरं द्विरंशत इति ।—यथोत्तरं भागतो द्विगुणमित्यर्थः । तेन गैरिकमाषा १, सैन्धवमाषा २, पिप्पलीमाषा ४, तगरमाषा ८ । अद्भिर्वेति ।—वाशब्दाच्छागीक्षीरमपि बोध्यम् ॥ १६ ॥

प्रपौण्डरीकेत्यादौ ।—शीतैरिति—प्रपौण्डरीकादीनां कषायैः शीतलैरित्यर्थः । समायुक्तैरित्यत्र सितायुक्तैरिति केचित् पठन्ति । सितायुक्तैरिति पाठे—मधुवत् सिता प्रक्षेप्येत्यर्थः ॥ १७ ॥

द्राक्षेत्यादौ ।—जीवनीयशब्देन जीवनीयाष्टवर्गं गृह्णन्ति ॥ १८ ॥

*निम्बस्येत्यादि ।*—निम्बपत्रं पिष्ट्वा तत्पिण्डमध्ये लोध्रकल्कं तच्चूर्णं वा प्रक्षिप्य पत्रेण वेष्टयित्वा अङ्गारैरनुस्विद्य नारीक्षीरेण संमिश्र्य वस्त्रेण गालयित्वा चक्षुषि सेको विधेय इति ॥ १९ ॥

कफजे इत्यादौ ।—प्रधमनं—चूर्णनस्यम् ॥ २० ॥

फणिज्झकेत्यादि ।—सुश्रुतस ।—फणिज्झकः,—पर्णासभेदः, निर्गुण्डीत्यन्ये ।

शुण्ठीनिम्बदलैः पिण्डः सुखोष्णैः स्वल्पसैन्धवैः ।
धार्य्यश्चक्षुषि संयोगाच्छोथकण्डूव्यथापहः ॥ २२ ॥
वल्कलं पारिजातस्य तैलं काञ्जिकसैन्धवम् ।
कफोद्भूताक्षिशूलघ्नं तरुघ्नं कुलिशं यथा ॥ २३ ॥
ससैन्धवं लोध्रमथाज्यभृष्टं सौवीरपिष्टं सितवस्त्रबद्धम् ।
आश्च्योतनं तन्नयनस्य कुर्यात् कण्डूञ्च दाहञ्च रुजाञ्च हन्यात् ॥ २४ ॥
स्निग्धैरुष्णैश्च वातोत्थः पित्तजो मृदुशीतलैः ।
तीक्ष्णरूक्षोष्णविशदैः प्रशाम्यन्ति कफात्मकाः ।
तीक्ष्णोष्णमृदुशीतानां व्यत्यासात् सान्निपातिकः ॥ २५ ॥

---

आस्फोता—चाकरमल्लिका, आन्दसलाडुम्बलम् । मयूर,—आखिरबाबाः । पीलुः,—श्वेतरापथिकातरु, अत एव निर्देशात् पीलुमन्थी दीर्घाकाराशीऽपि ज्ञेयः । सुरसाञ्जी-वपि पर्यायभेदौ । एषां भक्तैः पक्वैर्म्मंसलसमनैरक्षारतावितैश्चचुर्मुर्द्दुर्लेहः कार्य्य । वर्त्तिः—पालकम् । यथैव तत्कालमदर्शनात् वर्म्मस्थाने चर्व्वं, इति केचित् पठन्ति । तन्त्रान्तरे यथा—"कपित्थसुरसास्फोता-पीलुमयूरकपिष्टा । कपित्थभावितस्य चादने, खेद, स्यन्दाभिमन्थयो, ॥" वर्त्तिका—वर्त्तं ॥ २१ ॥

शुण्ठीत्यादी ।—निम्बपत्रापेक्षया शुण्ठी स्वल्पा देया, सैन्धवमपि चतुर्थक रक्तिकमिति वदन्ति । एषां पिण्डः वद्धुम एव चक्षुषीकपरि दूरबर्त्ते दत्वा देय पृथुपदेयः । संयोगादिति—सम्यक्क्रियात ॥ २२ ॥

वल्कलमित्यादि ।—पारिजात,—पारिभद्र. । पारिभद्रवल्कलस्वरसस्य माषक-मेकं, तैलस्य माषकद्वयं, सैन्धवस्य रक्तिद्वयं मयं वा, काञ्जिकस्तु निकुञ्चमात्रम् । निकुञ्चस्तु चाङ्गुष्ठाङ्गुलिचतुष्टयपरिमित । एतत् सर्वं ताम्रपात्रे कृत्वा चपदर्केण तावद्दर्षणीयं यावद् घनं भवति, तदनु चक्षुषञ्जनं देयमिति वृद्धा व्यवहरन्ति ॥ २३ ॥

ससैन्धवमित्यादि ।—सैन्धवस्य रक्तिद्वयं, लोध्रस्य माषकचतुष्टयं, काञ्जिकेन पिष्टा गव्यघृतेन भृष्टा निर्मलसूक्ष्मवस्त्रेण बद्धा अङ्गुष्ठोदरेण सम्पीड्य चक्षुषि प्रदद्या देय ॥ २४ ॥

सर्व्वेषाञ्च वातजादीनां चिकित्सामाह, स्निग्धैरित्यादि ।—विशदैरिति ।—पिच्छिलै. । तीक्ष्णोष्णमृदुशीतलानां व्यत्यासेन परस्परविपर्य्ययप्रयोगेण, तेन

तिरीटत्रिफलायष्टी-शर्कराभद्रमुस्तकैः।
पिष्टैः शीताम्बुना सेको रक्ताभिष्यन्दनाशनः ॥ २६ ॥
कशेरुमधुकानाञ्च चूर्णमम्बरसंयुतम्।
न्यस्तमप्स्वन्तरीक्षासु हितमाश्च्योतनं भवेत् ॥ २७ ॥
दार्वीपटोलमधुकं सनिम्बं पद्मकोत्पलम्।
प्रपौण्डरीकञ्चैतानि पचेत् तोये चतुर्गुणे।
विपाच्य पादशेषन्तु तत् पुनः कुडवं पचेत् ॥
शीतीभूते तत्र मधु दद्यात् पादांशिकं ततः।
रसक्रियैषा दाहाश्रु-रागरक्तरुजापहा ॥ २८ ॥
तिक्तस्य सर्पिषः पानं बहुशश्च विरेचनम्।
अक्ष्णोरपि समन्ताच्च पातनन्तु जलौकसः।

---

तीक्ष्णमुपयुज्य तद्विपरीतस्य मृदुन उपयोगः; एवं मृदुद्रव्यमुपयुज्य तद्विपरीतस्य तीक्ष्णस्योपयोगः; एवमुष्णशीतयोरपि व्यत्यासो ज्ञेयः। किंवा परस्परविरुद्धानां भावानां संमिश्रत्वेन उपयोगो व्यत्यासोपयोगः। तीक्ष्णोष्णमृदुशीतलानामित्युपलक्षणम्; तेन स्निग्धरूक्षादीनामपि ग्रहणं बोध्यम् ॥ २५ ॥

तिरीटेत्यादि।—तिरीटं—पट्टिकालोध्रम्। एषां प्रत्येकं माषकमितं द्रव्यं वा गृहीत्वा श्लक्ष्णं पिष्ट्वा शीतलजलपलैकेन संमिश्र्य परिषेकः कार्यः ॥ २६ ॥

कशेर्वित्यादि।—मधुकस्य।—कशेरुयष्टिमधुनोः प्रत्येकं माषकचतुष्टयं गृहीत्वा सूक्ष्मवस्त्रेण पोट्टलीं श्लथं बद्ध्वा आकाशोदके पलैके निक्षिप्य तेन जलेन सेकः; आकाशोदकाभावे हंसोदकेन ॥ २७ ॥

दार्व्यादौ।—पटोलनिम्बयोः पत्रं, पद्मकं—पद्मकाष्ठम्, उत्पलं—नीलोत्पलम्। एषां मिलित्वा कुडवचतुष्पलो ग्राह्यः। पाकार्थञ्च जलस्य द्वात्रिंशत् पलानि;—"तावत्तु कुडवं यावत् तोयमष्टगुणं भवेत्" इति वचनात्; ततः कुडवोऽष्टपलः स्थाप्यः; तद्वस्त्रपूतं कृत्वा पुनः पक्तव्यमाघनीभावात्। ततः शीते मधु पलद्वयं प्रक्षेप्य, ततोऽञ्जनं कार्यमिति ॥ २८ ॥

पित्ताभिष्यन्दशमनो विधिश्चाप्युपपादितः ॥ २९ ॥
शिग्रुपल्लवनिर्यासः सुघृष्टस्ताम्रसम्पुटे।
घृतेन धूपितो हन्ति शोथघर्षाश्रुवेदनाः ॥ ३० ॥
पिष्टैर्निम्बस्य पत्रैरतिविमलतरैर्जातिसिन्धूत्थमिश्रा
अन्तर्गर्भं दधाना पटुतरगुड़िका पिष्टलोध्रेण भ्रष्टा।
तूलैः सौवीरसार्द्रैरतिशयमृदुभिर्वेष्टिता सा समन्तात्
चक्षुःशोथप्रशान्तिं चिरमुपरि दृशोर्भ्राम्यमाणा करोति॥ ३१ ॥

बिल्वाञ्जनम्—

बिल्वपत्ररसः पूतः सैन्धवाज्येन चान्वितः।
शुल्वे वराटिका घृष्टो धूपितो गोमयाग्निना॥
पयसालोड़ितश्चाक्ष्णोः पूरणाच्छोथशूलनुत्।
अभिष्यन्देऽधिमन्थे च स्रावे रक्ते च शस्यते॥ ३२ ॥
सलवणकटुतैलं काञ्जिकं कांस्यपात्रे
घनितमुपलघृष्टं धूपितं गोमयाग्नौ।

---

तिलवेति।—तिल—सर्पिर्वस्त्रमावपटोलादिघृतम्। विरेचनश्च वक्ष्यमाणत्रफलादिना॥ २९ ॥

शिग्रुपल्लवेत्यादौ।—निर्यास,—स्वरसः, घृतेन सह ताम्रपात्रे घृष्ट इत्यन्वयः। धूपित इति।—करीषाग्निना। अन्ये तु—करीषाग्नौ घृत दत्त्वा तेन धूमेन धूपित इति व्याचक्षते। घर्ष,—करकरिकाख्यवेदनाविशेष.॥ ३० ॥

पिष्टैरित्यादि।—जातिसिन्धूत्थं—सारसैन्धव, जातिमांतीकलिकेत्यन्ये। अन्तर्गर्भं दधानेति।—पिष्टनिम्बपत्रपिण्डाभ्यन्तरे लोध्रकल्कपिण्ड निधिप्य कृता गुडिकेत्यर्थ.। भ्रष्टा इति।—खर्परे भ्रमाद्भ्रष्टेत्यर्थः। तदनु सौवीरेण—काञ्जिकेन, सार्द्रैरिति—स्वंयदार्द्रैस्तूलकैर्वेष्टिता चक्षुषोरुपरि भ्राम्यमाणेत्यर्थ.॥ ३१ ॥

बिल्वपत्रेत्यादौ।—शुल्वे इति—ताम्रपात्रे। पयसेति—नारीस्तन्येन। वस्त्रपूतबिल्वपत्ररसस्य माषकचतुष्टयं, सैन्धवस्य रत्तिद्वयं, घृतस्य बिन्दुचतुष्टयम्। एतत् सर्वं ताम्रपात्रे कृत्वा कपर्दकेन तावद्घर्षणीयं यावद्घन भवति। तदनु सुशोषितताम्रपात्रे गोमयाग्निना धूपयित्वा नारीक्षीरेण सम्लोड्य चक्षुःपूरणम्॥ ३२ ॥

सलवणेत्यादौ।—सैन्धवस्य रत्तिद्वयं, कटुतैलस्य बिन्दुचतुष्टयं, काञ्जिकस्य

सपवनकफकोपं छागदुग्धावसिक्तम्
जयति नयनशूलं सावशोथं सरागम् ॥ ३३ ॥
तरुस्थविहीमलक-रसः सर्वाक्षिरोगनुत् ॥
पुराणं सर्वथा सर्पिः सर्वनेत्रामयापहम् ॥ ३४ ॥
अयमेव विधिः सर्वो मन्यादिष्वपि शस्यते ।
अशान्तौ सर्वथा मन्थे भ्रुवोरुपरि दाहयेत् ॥ ३५ ॥
जलौकःपातनं शस्तं नेत्रपाके विरेचनम् ।
शिराव्यधं वा कुर्वीत सेकालेपांश्च शुक्रवत् ॥ ३६ ॥

वङ्गगुग्गुलुः,—

विभीतकाशिवाधात्री-पटोलारिष्टवासकैः ।
क्वाथो गुग्गुलुना पेयः शोथशूलाक्षिपाकहा ॥
पिल्लञ्च सव्रणं शुक्रं रागादींश्चापि नाशयेत् ।
एतैश्चापि घृतं पक्वं रोगांस्तांश्च व्यपोहति ॥ ३७ ॥

---

नाशकचतुष्टयम्। उपलः,—प्रस्तरखण्डेन घृष्टं, किंवा उपलशब्देनात्र चक्षुष्यत्वात् रत्नाञ्जनादिग्रिहैव ग्राह्या। वृद्धास्तु वराटिकयैव व्यवहरन्ति ॥ ३३ ॥

तरुस्थेत्यादि।—तरुस्थस्यैवामलकीफलस्य सूच्यादिभिर्विद्धस्य यो रसो निर्गच्छतीत्यर्थः। पुराणसर्पिरिदंमत्रपंक्तिव, तदभावे सम्वत्सरातीतमपि पुराणं ग्राह्य-मित्याह। उक्तं हि—"अत्याभिष्यन्दि मधुरं यच्च संवत्सरोषितम्। अत्रतृक्लेदच दीपाख्यो पुराणं तत् प्रकीर्तितम् ॥" इति। सर्वथेति—पानभक्ष्याञ्जनैरित्यर्थः ॥ ३४ ॥

अयमेव विधिरित्यादि।—वाग्भटस्य।—अयम्—अभिष्यन्दोक्तः। आदिशब्दात् अन्यतो वातादयः ॥ ३५ ॥

नेत्रपाकचिकित्सामाह, जलौक इत्यादि।—स्पष्टम् ॥ ३६ ॥

विभीतकेत्यादौ।—पिल्लं—पक्ष्मांढिका, किंवा—"प्रचालिते यथा दृष्टे चामस्रोते पुनःपुनः। अपरिक्लिन्नवर्त्मानं तं पिल्लमिति निर्दिशेत् ॥" इत्युक्तलक्षणः। अत्र घृतपाकपक्षे तु विभीतकादीनां क्वाथो गुग्गुलोः कल्क इति। विभीतकादिचूर्णसमं गुग्गुलुं गृहीत्वा एतेन पिष्ट्वा वटिकां कुर्य्यादित्युपदिशन्ति वृद्धाः ॥ ३७ ॥

वासकादिः,—

अटरूषाभयानिम्ब-धात्रीमुस्ताचकूलकैः।
रक्तस्रावं कफं हन्ति चक्षुष्यं वासकादिकम् ॥ ३८ ॥

वासाघनं निम्बपटोलपत्रं तिक्ताऽमृताचन्दनवत्सकत्वक्।
कलिङ्गदार्वीदहनश्च शुण्ठी-भूनिम्बधात्र्यावभयाविभीतम् ॥
श्यामा यवक्वाथमथाष्टभागं पिबेदिमं पूर्वदिने कषायम्।
तैमिर्य्यकण्डूपटलार्बुदञ्च शुक्लं जयेत् सव्रणमव्रणञ्च ॥
काचञ्च पिल्लञ्च महारुजञ्च नक्ताभ्यरोगक्षयथुं सशूलम्।
वासादिरेष प्रथितप्रभावो निहन्ति सर्वान् नयनामयांश्च ॥ ३९ ॥

पथ्यादिः,—

पथ्यास्तिस्रो विभीतक्यः षड् धात्र्यो द्वादशैव तु।
प्रस्थार्द्धे सलिले क्वाथमष्टभागावशेषितम् ॥
पीत्वाऽभिष्यन्दमास्रावं रागञ्च तिमिरं जयेत्।
संरम्भरागशूलाश्रु-नाशनं दृक्प्रसादनम् ॥ ४० ॥
नेत्रे त्वभिहते कुर्य्याच्छीतमाश्चोतनादिकम् ॥
दृष्टिप्रसादजननं विधिमाशु कुर्य्यात्
स्निग्धैर्हिमैश्च मधुरैश्च तथा प्रयोगैः।
स्वेदाग्निधूमभयशोकरुजाभितापै-
रभ्याहतामपि तथैव भिषक् चिकित्सेत् ॥ ४१ ॥

---

अटरूषेत्यादि।—अटरूषक—वासकम्। अक्ष—विभीतकं, कूलकं—पटोलपत्रम्; एतैः कृतेन क्वाथेन चक्षुःसेचनम्; तथा गुग्गुलुं प्रक्षिप्य विरेचनमप्युपदिशन्ति वृद्धाः ॥ ३८। ३९ ॥

पथ्या इत्यादौ।—प्रस्थार्द्ध इति।—द्रवद्वैगुण्यात् शरावद्वये। पीत्वेति—सायमित्याहुः ॥ ४० ॥

आगन्तुनेत्ररोगचिकित्सामाह, नेत्र इत्यादि।—आदिशब्दादस्य लेपादीनां ग्रहणम्। दृष्टीत्यादि।—वृत्तम्।—दृष्टिप्रसादजननं—नयनावरकदोषनाशनम्। कैर्दृष्टिप्रसादनं कार्य्यम्?—इत्याह, स्निग्धैरित्यादि।—स्वेदादिकृता रुजा एव अभितापो

आगन्तुदोषं प्रसमीक्ष्य कार्य्यं वस्त्रौषणा स्वेदितमादितस्तु।
आश्च्योतनं स्त्रीपयसा च सद्यो यच्चापि पित्तक्षतजापहं स्यात् ॥
सूर्य्योपरागानलविद्युदादि-विलोकनेनोपहतेक्षणस्य।
सन्तर्पणं स्निग्धहिमादि कार्य्यं सायं निषेव्यास्त्रिफलाप्रयोगाः॥४२॥

निशाव्दत्रिफलादार्वी-सितामधुकसंयुतम्।
अभिघाताक्षिशूलघ्नं नारीक्षीरेण पूरणम्।
तलाटाङ्कुरजस्तद्वत् स्वरसो नेत्रपूरणम् ॥ ४३ ॥
आजं घृतं क्षीरपात्रं मधुकञ्चोत्पलानि च।
जीवकर्षभकौ चापि पिष्ट्वा सर्पिर्विपाचयेत्।
सर्वनेत्राभिघातेषु सर्पिरेतत् प्रशस्यते ॥ ४४ ॥
सैन्धवं दारु शुण्ठी च मातुलुङ्गरसो घृतम्।
स्तन्योदकाभ्यां कर्त्तव्यं शुष्कपाके तदञ्जनम् ॥ ४५ ॥

---

रोगी रोगनाशकत्वादुच्यते। अथाहतामित्यनेनार्द्धं दृष्टिमिति शिवः। तथैवेत्य-नन्तरोक्तस्निग्धहिमादिविधिना ॥ ४१ ॥

आगन्त्वित्यादि।—आगन्तुदोष—धूल्याद्यभिघातम्। वस्त्रौष्मा च वस्त्रपुटो ग्राह्यः। "यच्चापि पित्तक्षतजापहं स्यात्" इति पित्ताभिष्यन्दे रक्ताभिष्यन्दे च यदुक्तं तदपि हितम्। त्रिफलाप्रयोगा इति।—त्रिफलाकाथेन चक्षुःसेकादयः ॥ ४२ ॥

निशेत्यादि।—एषां चूर्णं नारीक्षीरे प्रक्षिप्य पूरणम्। तद्वदिति।—अभिघाताक्षि-शूलघ्न इत्यर्थः ॥ ४३ ॥

आजमित्यादि।—आजं घृतमिह प्रस्थमानम्। क्षीरपात्रमिति।—पात्रचाढ़कं, द्रवद्वैगुण्यात् षोडश शरावाः। क्षीरञ्चेह प्रस्थमेव, निर्विशेषत्वात्। अन्ये तु—आज-घृतसाहचर्य्यात् क्षीरमप्याजमाहुः। सर्पिषोर्द्विरुच्चारणमिह नस्ये तर्पणे च हितत्व-प्रतिपादनार्थमिति वदन्ति। शिवदासस्तु—आजघृतस्य कल्कत्वमेवाह, तेन तन्मते द्वितीयसर्पिःपदस्य गव्यघृतमेवार्थ इति ॥ ४४ ॥

शुष्काक्षिपाकरोगचिकित्सामाह, सैन्धवमित्यादि।—सुगुतस्य।—स्तन्योदकाभ्या-मिति—उपलक्षणे सहार्थे वा तृतीया। सैन्धवदारुशुण्ठीनां मिलित्वा पादिकः कल्कः कार्यः। पादिकत्वञ्च मिलितमातुलुङ्गरसादिद्रवचतुष्टयमपेक्ष्य। सैन्धवं माषकद्वयं; देवदारुशुण्ठ्योश्च प्रत्येकं माषकचतुष्टयं, मातुलुङ्गरसादीनां चतुर्णां प्रत्येकं

वाताभिष्यन्दवच्चान्यद्वाते मारुतपर्य्यये ।
पूर्व्वभक्तं हितं सर्पिः क्षीरञ्चाप्यथ भोजने ॥ ४६ ॥
वृचादन्यां कपित्थे च पञ्चमूले महत्यपि ।
सक्षीरं कर्कटरसे सिद्धञ्चापि पिबेद्घृतम् ॥ ४७ ॥
अभिष्यन्दमधीमन्थं रक्तोत्थमथवार्जुनम् ।
शिरोत्पातं शिराहर्षमन्यांश्चाप्यभिजान् गदान् ॥
स्निग्धस्याज्येन कौम्भेन शिराव्यधैः शमं नयेत् ।
अम्लाध्युषितशान्त्यर्थं कुर्य्याल्लेपान् सुशीतलान् ॥
तैन्दुकं त्रैफलं सर्पिर्जीर्णं वा केवलं हितम् ।
शिराव्यधं विना कार्य्यः पित्तस्यन्दहरो विधिः ॥
सर्पिःक्षौद्राञ्जनञ्च स्याच्छिरोत्पातस्य भेषजम् ।
तद्वत् सैन्धवकासीसं स्तन्यपिष्टञ्च पूजितम् ॥

---

द्वादश मावकाः । सर्व्वमेकीकृत्य मद्यग्निना पक्तव्यं यावत् घनीभवति ; ततोऽञ्जनं कार्य्यम् । रसक्रियेयम् । अन्ये तु—ताम्रोदकार्द्धमिति पठित्वा सौवीरजलयोर्मिलितयोः समुदयार्द्धमानम् । सैन्धवदारुव्योषमातुलुङ्गरसघृतानां समो भागः ; सैन्धवदारुव्योषादीनां कल्कम् । मातुलुङ्गरसादिद्रवचतुष्टयेनाश्च्योतनं कार्य्यमिति व्याचक्षते ॥ ४५ ॥

अन्यतो वातादिचिकित्सामाह, वातेत्यादि ।—पूर्व्वभक्तमिति—भक्तात् पूर्व्वमित्यर्थः । अन्यतो वाते वातपर्य्यये च क्षीरपानम्, घनत्वात्, पित्तरक्तारब्धत्वात् ॥ ४६ ॥

वृचादन्यामित्यादि ।—वृचादनी—वन्दा । वृचादन्यादिभिः कल्कः, क्षीरं स्नेहसमम्, कर्कटरसस्तु त्रिगुणः ; एवं घृतं साध्यमिति श्लोकार्थः । गयदासस्तु वृचादन्यादीनां पञ्चमूलान्तानां मिलित्वा त्रिगुणः क्वाथ, क्षीरकर्कटरसयोस्तु प्रत्येकं स्नेहसमत्वमित्याह । अन्ये तु—विभिन्नविभक्तिकत्वात् वृचादन्यादीनां प्रत्येकं स्नेहसमः क्वाथः ; एवं क्षीरकर्कटरसावपि, इति पञ्चगुणः पाक इत्याहुः ॥ ४७ ॥

अभिष्यन्दमित्यादौ ।—अन्यानिति—प्रकारान् । कौम्भं—सर्पिर्दशवर्षस्थितम् । अम्लाध्युषितेत्यादौ ।—तैन्दुकं—सर्पिर्वातव्याधौ सुश्रुतेनोक्तम् । त्रैफलं—त्रिफलाक्वाथकल्काभ्यां सिद्धम् । केवलमिति—असंस्कृतम् । अम्लाध्युषिते शिराव्यधवर्ज्जनं व्याधि-

सैन्धवत्रिफलाकृष्णा-कटुकाशङ्खनाभयः ।
सताम्ररजसो वर्त्तिः पिष्टशुक्रविनाशिनी ॥ ५७ ॥
चन्दनं सैन्धवं पथ्या पलाशतरुशोणितम् ।
क्रमवृद्धमिदं चूर्णं शुक्रार्मादिविलेखनम् ॥ ५८ ॥

दन्तवर्त्तिः,—

दन्तैर्हस्तिवराहोष्ट्र-गवाश्वाजखरोद्भवैः ।
सशङ्खमौक्तिकाम्भोधि-फेनैर्मरिचपादिकैः ।
क्षतशुक्रमपि व्याधिं दन्तवर्त्तिर्निवर्त्तयेत् ॥ ५९ ॥
शङ्खस्य भागाश्चत्वारस्ततोऽर्द्धेन मनःशिला ।
मनःशिलार्द्धं मरिचं मरिचार्द्धेन सैन्धवम् ॥
एतच्चूर्णाञ्जनं श्रेष्ठं शुक्रयोस्तिमिरेषु च ।
पिच्चटे मधुना योज्यमर्बुदे मस्तुना तथा ॥ ६० ॥
ताप्यं मधूकसारो वा बीजमक्षस्य सैन्धवम् ।
मधुनाऽञ्जनयोगाः स्युश्चत्वारः शुक्रशान्तये ॥ ६१ ॥

---

मद्गुम इत्यादौ ।—मद्गुमः,—सलाकम् । नक्ताह्वबीजवर्त्तिरिति ।—करञ्जबीजस्य चूर्णं कृत्वा पलाशकुसुमस्वरसेन वर्त्तिः कार्य्या ॥ ५६ ॥

सैन्धवेत्यादौ ।—कटुका—कटुरोहिणी ; ताम्ररजस्तु मारितताम्रचूर्णम् । पिष्टशुक्रविनाशिनीति ।—पिष्टाख्यनेत्ररोगः,—"बिन्दुभिः पिष्टधवलैरुत्सन्नैः पिष्टकं वदेत्" इत्युक्तलक्षणः ॥ ५७ ॥

चन्दनमित्यादौ ।— पलाशतरुशोणितं—किंशुकवृक्षवेष्टकम् । रक्तचन्दनस्य माषकः, सैन्धवस्य द्वौ, पथ्यायास्त्रय इति वृद्धिक्रमः । एतच्चूर्णाञ्जनं मध्वाक्तशलाकया चक्षुषि देयम् ; एवं सर्वत्र चूर्णाञ्जने ॥ ५८ ॥

दन्तैरित्यादि ।—वाग्भटस्य । — मरिचपादिकैरिति । — समुदितचूर्णापेक्षया मरिचस्य चतुर्थो भागः । पेषणञ्चात्र जलेन, वाग्भटसंवादात् ॥ ५९ ॥

शङ्खेत्यादि ।—शङ्खः,—शङ्खनाभिः । नाभिशङ्ख मा ४, मनःशिला मा २, मरिच मा १, सैन्धव र ५ । चूर्णाञ्जनमिति ।—मध्वाक्तशलाकया संगृह्य शुक्रदेशं घर्षयेत् । ततः त्रिफलाक्वाथेन प्रक्षालनं कार्य्यमिति । शुक्रयोरिति—व्रणावणशुक्रयोः ॥ ६० ॥

वटक्षीरेण संयुक्तं श्लक्ष्णं कर्पूरजं रजः ।
क्षिप्रमञ्जनतो हन्ति शुक्रञ्चापि घनोन्नतम् ॥ ६२ ॥
त्रिफलामज्जमङ्गल्या मधुकं रक्तचन्दनम् ।
पूरणं मधुसंमिश्रं व्रणशुक्राजकाश्रुजित् ॥ ६३ ॥
तालस्य नारिकेलस्य तथैवारुष्करस्य च ।
करीरस्य च वंशानां कृत्वा क्षारं परिस्रुतम् ॥
करभास्थिकृतं चूर्णं क्षारेण परिभावितम् ।
सप्तकृत्वोऽष्टकृत्वो वा श्लक्ष्णं चूर्णन्तु कारयेत् ॥
एतच्छुक्रेष्वसाध्येषु सवर्णीकरणमुत्तमम् ।
यानि शुक्राणि साध्यानि तेषां परममञ्जनम् ॥ ६४ ॥

---

ताम्रमित्यादि ।—ताम्रं—स्वर्णमाक्षिकम् , अक्षस्य बीजं—विभीतकास्थिमज्जा ॥ ६१ । ६२ ॥

त्रिफलेत्यादौ ।—मङ्गल्या—गोरोचना , मधुकं—यष्टिमधु । एतैः समभागैर्मधुना पूरणं कार्यम् ॥ ६३ ॥

तालस्येत्यादि ।—तालस्य जटा ; नारिकेलस्य फलास्थि , अरुष्करः—भल्लातः, तस्य फलम् , वंशकरीरस्य तु पावरी। एतत् सर्वं तिलनालाग्निना दग्ध्वा भस्म ग्राह्यम् , तच्च भाव्यद्रव्यसमं गृहीत्वा षड्गुणोदके चतुर्गुणोदके वा निःक्वाथ्य सर्वत्रैव पादशेषं एकविंशतिवारान् स्रावयेत् । अन्ये तु—क्वाथमकृत्वा चतुर्गुणेन षड्गुणेन वा जलमात्रेण स्रावणमाहुः, वाग्भटसंवादात् । अपरे तु—भाव्यद्रव्यसमं भस्म चतुर्गुणेन षड्गुणेन वा अम्भसा निःक्वाथ्य यथोक्तमेव विस्रावणं वदन्ति । व्यवहारस्तु पूर्वेणैव । परिस्राव्य च गृहीतेन स्वच्छेन क्षारोदकेन सप्ताष्टौ वारान् करभास्थिचूर्णं भाव्यम् । करभः—उष्ट्रः । एवं च प्रतिभावनमेव चूर्णीकर्तव्यम् ; तच्चूर्णं भव्यात्मशलाकया सयत्नं शुक्रदेशे घर्षयेत् । ततश्च त्रिफलाक्वाथेनाक्षिप्रक्षालनमिति क्रियापरिपाटी । क्षारेणेति—क्षारोदकेन । एतच्छुक्रेष्वसाध्येष्विति ।—अनेन शुक्रस्यासाध्यस्य वैवर्ण्यनाशनमेव क्रियते, न पुनः शुक्रनाशनमिति दर्शयति । "यानि शुक्राणि साध्यानि" इत्यादि. पाठो युक्तः, न तु शुक्राण्यसाध्यानीति । तदुक्तं वाग्भटे—"नारिकेलास्थिभल्लाततालवंशकरीरजम् । भस्माद्भिः स्रावयेत् ताभिर्भावयेत् करभास्थिजम् ॥ चूर्णं शुक्रेष्वसाध्येषु तद् वैवर्ण्यप्रसादनम् । साध्येषु साधनायालमिद-

पटोलाद्यं घृतम्—

पटोलं कटुकां दार्वीं निम्बं वासां फलत्रिकम् ।
दुरालभां पर्पटकं त्रायन्तीञ्च पलोन्मिताम् ॥
प्रस्थमामलकानाञ्च क्वाथयेन्नल्वणेऽम्भसि ।
पादशेषे रसे तस्मिन् घृतप्रस्थं विपाचयेत् ॥
कल्कैर्भूनिम्बकुटज-मुस्तयष्ट्याह्वचन्दनैः ।
सपिप्पलीकैस्तत् सिद्धं चक्षुष्यं शुक्रयोर्हितम् ॥
घ्राणकर्णाक्षिवर्त्मत्वङ्मुखरोगव्रणापहम् ।
कामलाज्वरवीसर्प-गण्डमालाहरं परम् ॥ ६५ ॥

कृष्णाद्यं तैलम्—

कृष्णाविडङ्गमधुयष्टिकसिन्धुजन्म-
विश्वौषधैः पयसि सिद्धमिदं छगल्याः ।
तैलं नृणां तिमिरशुक्रशिरोऽक्षिशूल-
पाकात्ययान् जयति नस्यविधौ प्रयुक्तम् ॥ ६६ ॥
अजकां पार्श्वतो विद्ध्वा सूच्या विस्राव्य चोदकम् ।
व्रणं गोमयचूर्णेन पूरयेत् सर्पिषा सह ॥ ६७ ॥

---

मेव च प्रोक्तितम् ॥" इति । गिरलेन पुनरक्षाणीति पठित्वा पतत्र न कदाचिदपि साध्यशुक्रगोचरतया प्रयोक्तव्यमिति यद्व्याख्यातं तदपास्तम्; चरकवाग्भटवचनविरोधादेव ॥ ६४ ॥

पटोलमित्यादि ।—पटोलं—पटोलस्य फलम् । कुटजः,—इन्द्रयवः । तन्त्रान्तरे—"यष्टीकलिङ्गभूनिम्ब-पिप्पलीघनचन्दनैः । कल्कैर्मुख्य शिकैराज्य प्रस्थमात्रं प्रसाधितम् ॥" इत्युक्तत्वात् । अत एव वचनात् भूनिम्बादीनां पलमानता च बोध्या ॥ ६५ ॥

कृष्णेत्यादि ।—कृष्णा—पिप्पली । अक्षिशब्दस्य शूलपाकात्ययाभ्यां सम्बन्धः ॥६६॥

अजकामित्यादि ।—सुगमम् ।—गोमयचूर्णेनेति पाठो लेखकदोषात्; सुश्रुते वाग्भटे च तत्तदाकरपुस्तकेषु गोमांसचूर्णेनेत्येव हि पाठो दृश्यते, टीकाकारैश्च व्याख्यात इति ॥ ६७ ॥

सैन्धवं वाजिपादश्च गोरोचनसमन्वितम् ।
शैलुत्वग्रससंयुक्तं पूरणञ्चाजकापहम् ॥ ६८ ॥

शशक-घृतम्—

शशकस्य शिरःकल्के मेषाङ्ग्रिक्वथिते जले ।
घृतस्य कुड़वं पक्वं पूरणञ्चाजकापहम् ॥ ६९ ॥

द्वितीय शशकाद्य घृतम्—

शशकस्य कषायेण सर्पिषः कुड़वं पचेत् ।
यष्टीप्रपौण्डरीकस्य कल्केन पयसा समम् ॥
छगल्याः पूरणाच्छुक्र-क्षतपाकात्ययाजकाः ।
घ्नन्ति भूम्यक्षमूलञ्च दाहरागानशेषतः ॥ ७० ॥
त्रिफला घृतं मधु यवाः पादाभ्यङ्गः शतावरी मुद्गाः ।
चक्षुष्यः संक्षेपाद्वर्गः कथितो भिषग्भिरयम् ॥ ७१ ॥
लिह्यात् सदा वा त्रिफलां सुचूर्णिताम्
घृतप्रगाढ़ां तिमिरेऽथ पित्तजे ।

---

सैन्धवमित्यादौ ।—वाजिपादः,—अश्वखुरः, अश्वगन्धामूलमिति केचित्, व्यवहारस्तु पूर्ववदेव । शैलुः,—बहुवार ॥ ६८ ॥

शशकस्येत्यादौ ।—शशकमस्तकमात्र कल्कः, मेषाङ्ग्र्यादिद्रव्यस्य क्वाथः। एतत्क्वाथार्थञ्च जलस्य षोड़श शरावाः, क्वाथ्याश्चत्वारः शरावा इति। घृतस्य कुड़वोऽष्टौ पलानि ॥ ६९ ॥

*शशकस्य कषायेणेत्यादि ।*—मांसविनाशात् शशकशुष्कमेकम् । अत्रापि पूर्ववदेव क्वाथकरणं, पयसा समं तुल्यम्, अत्र पञ्चगुणः पाकः; अन्ये तु—चतुर्गुणमाहुः। एतन्मते—क्वाथार्थजलस्य द्वादश शरावाः, क्वाथ्यास्त्रय इति क्षयजेषु ॥ ७० ॥

*त्रिफलेत्यादौ ।*—त्रिफलेति पृथक्, साऽपि क्वाथचूर्णादिविषयोपयोज्या। घृतञ्च यदि सामान्यत एव चक्षुष्यं तथापि पुराणमतिशयेन बोध्यम्; अत एव सुश्रुते—"घृतं पुराणं त्रिफलां शतावरीं पटोलमुद्गामलकान् यवानपि। निषेव्यमाणस्य जनस्य यत्नतो भयं सुघोरात् तिमिरान्न विद्यते ॥" इति ॥ ७१ ॥

समीरजे तैलयुतां कफात्मके
मधुप्रगाढ़ां विदधीत युक्तितः॥
कल्कः क्वाथोऽथवा चूर्णं त्रिफलाया निषेवितम्।
मधुना हविषा वापि समस्ततिमिरान्तकृत्॥
यस्त्रैफलं चूर्णमपथ्यवर्जी सायं समश्नाति हविर्मधुभ्याम्।
स मुच्यते नेत्रगतैर्विकारैर्भृत्यैर्यथा क्षीणधनो मनुष्यः॥
सघृतं वा वराक्वाथं शीलयेत् तिमिरामयी।
जाता रोगा विनश्यन्ति न भवन्ति कदाचन॥
त्रिफलायाः कषायेण प्रातर्नयनधावनात्॥
जलगण्डूषैः प्रातर्बहुशोऽम्भोभिः प्रपूर्य मुखरन्ध्रम्।
निर्दयमुच्चन्ति क्षपयति तिमिराणि ना सद्यः॥ ७२॥
भुक्त्वा पाणितलं घृष्ट्वा चक्षुषोर्यत् प्रदीयते।
अचिरेणैव तद्वारि तिमिराणि व्यपोहति॥ ७३॥

सुखावती वर्त्तिः—

कतकस्य फलं शङ्खं त्रूषणं सैन्धवं सिता।
फेनो रसाञ्जनं क्षौद्रं विडङ्गानि मनःशिला॥
कुक्कुटाण्डकपालानि वर्त्तिरेषा व्यपोहति।
तिमिरं पटलं काचमर्म शुक्रं तथैव च।
कण्डूक्लेदार्बुदं हन्ति मलञ्चाशु सुखावती॥ ७४॥

---

त्रिफलादित्यादि।—मधुप्रगाढ़ां।—युक्तित इति—मात्रया। अत्र यस्त्रैफलं चूर्णमित्यादेरनन्तरं "सघृतं वा वराक्वाथं शीलयेत् तिमिरामयी" इति पाठो न युक्तः, "कल्कः क्वाथोऽथवा चूर्णम्" इत्यादिनैवोक्तार्थत्वात्। जाता इत्यादौ।—धावनादिति—प्रक्षालनात्। निर्दयमुच्चन्निति—अवगाढ़ं क्षिपन्; ना इति पुरुषः॥ ७२॥

भुक्त्वेत्यादौ।—पाणितलमित्यनन्तरमाचानवारिपरिप्लुतमिति शेषः॥ ७३॥

कतकस्येत्यादि।—कतकस्य फलं—जलप्रसादनफलम्; शङ्खं—शङ्खनाभिः;

चन्द्रोदया वर्त्तिः,—

हरीतकी वचा कुष्ठं पिप्पली मरिचानि च ।
विभीतकस्य मज्जा च शङ्खनाभिर्मनःशिला ॥
सर्वमेतत् समं कृत्वा छागीक्षीरेण पेषयेत् ।
नाशयेत् तिमिरं कण्डूं पटलान्यर्बुदानि च ॥
अधिकानि च मांसानि येन रात्रौ न दृश्यते ।
अपि द्विवार्षिकं पुष्पं मासेनैकेन साधयेत् ॥
वर्त्तिश्चन्द्रोदया नाम नृणां दृष्टिप्रसादनी ॥ ७५ ॥
हरीतकी हरिद्रा च पिप्पल्यो लवणानि च ।
कण्डूतिमिरजिद्वर्त्तिर्न क्वचित् प्रतिहन्यते ॥ ७६ ॥

कुमारिका वर्त्तिः,—

अशीतिस्तिलपुष्पाणि षष्टिः पिप्पलितण्डुलाः ।
जातीकुसुमपञ्चाशन्मरिचानि च षोड़श ।
एषा कुमारिका वर्त्तिर्गतं चक्षुर्निवर्त्तयेत् ॥ ७७ ॥

त्रिफलाद्या वर्त्तिः,—

त्रिफला कुक्कुटाण्डत्वक् कासीसमयसो रजः ।
नीलोत्पलं विड़ङ्गानि फेनश्च सरितां पतेः ॥

---

सिता—शर्करा ; फेनः,—समुद्रफेन । चोद्रमधामनार्थं, पेषणञ्च जलेन। इयञ्च वर्त्तिं पित्ताश्रिते तिमिरे शस्ता ॥ ७४ ॥

चन्द्रोदया वर्त्तिन्तु वातजतिमिरे प्रशस्ता, जल जलेन चाञ्जनमिति श्रीकण्ठः । उत्सर्गेऽनिलजे भावपुष्पलाय मधुनापि व्यवहरन्ति वृद्धाः ॥ ७५ ॥

हरीतक्यादौ ।—लवणशब्दः सैन्धववचन, चक्षुष्यत्वात्, तत्र प्रथमभागापेक्षया चतुर्थांशमित्याहुः ; इयमपि कफे हिता । न क्वचित् प्रतिहन्यत इति ।—पित्तजेऽपि न शार्ध्यत इत्यर्थः ॥ ७६ ॥

"एषा कुमारिका वर्त्तिः" इत्यत्र "एषा कुसुमिका वर्त्तिः" इति क्वचित् पठ्यते ॥७७॥

त्रिफलादौ ।—कासीसं—धातुकासीसम्, अयसो लौहस्येति रजः ।

आजेन पयसा पिष्ट्वा भावयेत् ताम्रभाजने ।
सप्तरात्रं स्थितं भूयः पिष्ट्वा क्षीरेण वर्त्तयेत् ॥
एषा दृष्टिप्रदा वर्त्तिरन्धस्याभिन्नचक्षुषः ॥ ७८ ॥

चन्दनाद्या वर्त्तिः,—

चन्दनत्रिफलापूग-पलाशतरुशोणितैः ।
जलपिष्टैरियं वर्त्तिरशेषतिमिरापहा ॥ ७९ ॥

सौगतमञ्जनम्,—

निशाद्वयाभयामांसी-कुष्ठकृष्णा विचूर्णिताः ।
सर्वनेत्रामयान् हन्यादेतत् सौगतमञ्जनम् ॥ ८० ॥

व्योषाद्या वर्त्तिः,—

व्योषोत्पलाभयाकुष्ठ-तार्क्ष्यैर्वर्त्तिः क्षता हरेत् ।
अर्बुदं पटलं काचं तिमिरार्माश्रुनिस्रुतिम् ॥ ८१ ॥

मूषणाद्या वर्त्तिः,—

चूषणं त्रिफला वक्रं सैन्धवालमनःशिलाः ।
क्लेदोपदेहकण्डूघ्नी वर्त्तिः शस्ता वाफापहा ॥ ८२ ॥

नयनसुखा वर्त्तिः,—

एकगुणा मागधिका द्विगुणा च हरीतकी सलिलपिष्टा ।
वर्त्तिरियं नयनसुखा तिमिरार्मपटलकाचाश्रुहरी ॥ ८३ ॥

---

भावयेदिति—स्थापयेत्, लिप्तयेदिति वा। क्षीरेणेति।—आजेनैवेत्याहुः। वर्त्तयेदिति—वर्त्तिं कुर्य्यात्। अभिन्नचक्षुष इति—अनष्टतारकस्य ॥ ७८ ॥

चन्दनेत्यादौ।—पूगं—गुवाकफलम्; पलाशतरुशोणितं—किंशुकवेष्टकं, पलाशपुष्परसश्च इत्यन्ये ॥ ७९ ॥

निशेत्यादौ।—सुगतो बुद्धस्तन्निर्मितत्वात् सौगतम् ॥ ८० ॥

व्योषेत्यादौ।—तार्क्ष्यं—रसाञ्जनम् ॥ ८१ ॥

मूषणेत्यादौ।—वक्रं—तगरपादुका; आलं—हरितालम् ॥ ८२ ॥

एकगुणेत्यादौ।—अत्र अर्मतिमिरपटलाश्रुकाचहरीति पठनीयम्, अन्यथा छन्दोभङ्गः स्यात् ॥ ८३ ॥

चन्द्रप्रभा वर्त्तिः,—

अञ्जनं श्वेतमरिचं पिप्पली मधुयष्टिका।
विभीतकस्य मध्यन्तु शङ्खनाभिर्मनःशिला॥
एतानि समभागानि अजाक्षीरेण पेषयेत्।
छायाशुष्कां कृतां वर्त्तिं नेत्रेषु च प्रयोजयेत्॥
अर्बुदं पटलं काचं तिमिरं रक्तराजिकाम्।
अधिमांसं मलञ्चैव यश्च रात्रौ न पश्यति॥
वर्त्तिश्चन्द्रप्रभा नाम जातान्ध्यमपि शोधयेत्॥ ८४॥

श्रीनागार्जुनी वर्त्तिः,—

त्रिफलाव्योषसिन्धूत्थ-यष्टीतुत्थरसाञ्जनम्।
प्रपौण्डरीकं जन्तुघ्नं लोध्रं ताम्रं चतुर्दश॥
द्रव्याण्येतानि सञ्चूर्ण्य वर्त्तिः कार्य्या नभोऽम्बुना।
नागार्जुनेन लिखिता स्तम्भे पाटलिपुत्रके॥
नाशिनी तिमिराणाञ्च पटलानां तथैव च।
सद्यः प्रकोपं स्तन्येन स्त्रिया विजयते ध्रुवम्॥
किंशुकस्वरसेनाथ पित्तपुष्पकरक्तताः।
अञ्जनात्क्षौद्रतोयेन चासन्नतिमिरं जयेत्॥
चिरमाच्छादिते नेत्रे वस्तमूत्रेण संयुता।
उन्मीलयत्यक्षकृच्छ्रेण प्रसादञ्चाधिगच्छति॥ ८५॥

---

अञ्जनमित्यादि।—अञ्जनं—रसाञ्जनम्; श्वेतमरिचं—शोभाञ्जनबीजम्, एवं सर्वत्र॥ ८४॥

त्रिफलेत्यादौ।—जन्तुघ्नं—विडङ्गम्; ताम्रञ्च मारितं ग्राह्यम्। चतुर्दशेति सङ्ख्याकथनेन अत्र वर्णचतुर्दशानीति पाठान्तरमपि सूचितं, वाग्भटदर्शनात्। स्तम्भे—शिलास्तम्भे। किंशुकस्वरसेनेति—किंशुकपुष्पस्वरसेन॥ ८५॥

पिप्पल्याद्या वर्त्तिः,—

पिप्पलीं सतगरोत्पलपत्रां वर्त्तयेत् समधुकां सहरिद्राम् ।
एतया सततमञ्जयितव्यं यः सुपर्णसममिच्छति चक्षुः ॥ ८६ ॥

कौकिला वर्त्तिका,—

व्योषायश्चूर्णसिन्धूत्थ-त्रिफलाञ्जनसंयुता ।
वर्त्तिका जलपिष्टेयं कौकिला तिमिरापहा ॥ ८७ ॥

त्रीणि कटूनि करञ्जफलानि द्वे रजनी सहसैन्धवकञ्च ।
बिल्वतरोर्वरुणस्य च मूलं वारिचरं दशमं प्रवदन्ति ॥
हन्ति तमस्तिमिरं पटलञ्च पिचिटशुक्रमथार्जुनकञ्च ।
अञ्जनकं जनरञ्जनकञ्च दृक् च न नश्यति वर्षशतञ्च ॥ ८८ ॥

नीलोत्पलं विडङ्गानि पिप्पली रक्तचन्दनम् ।
अञ्जनं सैन्धवञ्चैव सद्यस्तिमिरनाशनम् ॥ ८९ ॥
पत्रगैरिककर्पूर-यष्टीनीलोत्पलाञ्जनम् ।
नागकेशरसंयुक्तमशेषतिमिरापहम् ॥ ९० ॥
शङ्खस्य चतुरो भागास्तदर्द्धेन मनःशिला ।
मनःशिलार्द्धं मरिचं मरिचार्द्धेन पिप्पली ॥

---

पिप्पलीमित्यादौ ।—उत्पलपत्रम्—उत्पलपुष्पस्य पत्रम् । वर्त्तयेदिति—वर्त्तिं कुर्यात् ॥ ८६ ॥

व्योषेत्यादौ ।—अञ्जनं—सौवीराञ्जनम् । कोकिलवत् कृष्णवर्णत्वात् कौकिलेति वर्त्तेः संज्ञा ॥ ८७ ॥

त्रीणीत्यादौ ।—"द्वे रजनी" इति स्त्रीलिङ्गनिर्देशात् स्त्रीलिङ्गे ह्रस्वेकारान्तोऽपि रजनीशब्दोऽस्तीति ज्ञेयम् । वारिचरः,—शङ्खनाभिः, वारिधर इति पाठे—वारिधरः,—मुस्तकम् । हन्ति तमस्तिमिरमिति ।—अन्धकारत्वसाधर्म्यात् तमःशब्दं तिमिरं हन्तीति । अञ्जनकमिति—संज्ञायां स्वार्थे कः । जनरञ्जनकं—जनानुरागकारीत्यर्थः । दोधकाख्यच्छन्दः ॥ ८८ ॥

नीलोत्पलमित्यादौ ।—अञ्जनं—रसाञ्जनम्, एवं वक्ष्यमाणेऽपि ॥ ८९ ॥

पत्रेत्यादौ ।—पत्रं—तेजपत्रम्; गैरिकं—स्वर्णगैरिकम् ॥ ९० ॥

वारिणा तिमिरं हन्ति अर्बुदं हन्ति मस्तुना।
पिचिटं मधुना हन्ति स्त्रीक्षीरेण तदुत्तमम् ॥ ८१ ॥
हरिद्रा निम्बपत्राणि पिप्पल्यो मरिचानि च।
भद्रमुस्तं विडङ्गानि सप्तमं विश्वभेषजम् ॥
गोमूत्रेण गुडी कार्य्या छागमूत्रेण चाञ्जनम्।
ज्वरांश्च निखिलान् हन्ति भूतावेशं तथैव च ॥
वारिणा तिमिरं हन्ति मधुना पटलं तथा।
नक्तान्ध्यं भृङ्गराजेन नारीक्षीरेण पुष्पकम् ॥
शिशिरेण परिस्रावमर्बुदं पिचिटं तथा ॥ ८२ ॥

संघृष्योपरतानलक्तकरसेनाम्लव्य गण्डूपदान्
साचारञ्जितनूलवर्त्तिनिहितान् यष्टीमधून्मिश्रितान्।
प्रज्वाल्योत्तमसर्पिषाऽनलशिखासन्तापजं कज्जलम्
दूरासन्ननिशान्ध्यसर्वतिमिरप्रध्वंसहस्तोदितम् ॥
भूमौ निष्ठष्ट्याऽङ्गुल्या अञ्जनं शमनं तयोः।
तिमिरकाचार्मंहरं धूमिकायाश्च नाशनम् ॥ ८३ ॥

---

मस्त्वित्यादौ।—चतुरी भागा इति—कान्दसत्वात्। एवैर्जलपिष्टैः वर्त्तिः कार्य्या। स्त्रीक्षीरेण तदुत्तममिति—तत्कृष्टमञ्जनमित्यर्थः ॥ ८१ ॥

हरिद्रेत्यादौ।—भद्रमुस्तः,—कान्तक्रामक.। भृङ्गराजेनेति—भृङ्गराजस्वरसेन। शिशिरेणेति।—चन्द्रस्नायजलेन। अर्बुदं—शुक्लरोगविशेषम्; प्रसादादेव हन्ति ज्वरांश्च निखिलान् हन्ति इतिवत्। निश्चलस्तु अर्बुदमिति पठति ॥ ८२ ॥

संघृष्येत्यादौ।—उपरतानिति—मृतान्, चाक्ष्यालक्तकरसेन मर्दयित्वा इत्यर्थः। साचारञ्जितं तूलम्—अलक्तकम्। उत्तमसर्पिषा—गव्यघृतेन। मृतगण्डूपदान् अलक्तकरसं दत्त्वा आतपे शोषयेत्, तदनु चूर्णीकर्त्तव्यं, तदनु तत् गण्डूपदचूर्णं यष्टिमधुचूर्णेन सह अलक्तकपत्रमध्ये कृत्वा सूत्रेण संवेष्ट्य वर्त्तिः कार्य्या; तया वर्त्त्या गव्यघृतमिश्रितया दीपं प्रज्वाल्य तद्दीपशिखोपरि निर्मलकांस्यादिपात्रं धृत्वा कज्जलपातनं कर्त्तव्यम्; तेन कज्जलेन चक्षुषोरञ्जनं कर्त्तव्यमिति क्रियामार्गः। आन्ध्यशब्दो दूरादिभिः प्रत्येकं सम्बध्यते। तयोरिति।—दूरान्धासन्नान्ध्ययोर्निशान्ध्यदिवान्ध्ययोरिति वा। धूमिका—धूमाकारावलोकनम् ॥ ८३ ॥

त्रिफलाभृङ्गमहौषधमध्वाज्यच्छागपयसि गोमूत्रे ।
नागं सप्तनिषिक्तं करोति गरुडोपमं चक्षुः ॥ ९४ ॥

त्रिफलसलिलयोगे भृङ्गराजद्रवे च
हविषि च विषकल्के क्षीर आजे मधूके ।
प्रतिदिनमथ तप्तं सप्तधा सीसमेकम्
प्रणिहितमथ पश्चात् कारयेत् तच्छलाकाम् ॥
सवितुरुदयकाले साञ्जना व्यञ्जना वा
करकरिकसमेतानर्मपैच्छिल्यरोगान् ।
असितसितसमुत्थान् सन्धिवर्त्माभिजातान्
हरति नयनरोगान् सेव्यमाना शलाका ॥ ९५ ॥

चिञ्चापत्ररसं निधाय विमले चौडुम्बरे भाजने
मूलं तत्र निघृष्टसैन्धवयुतं गौञ्जं विशोष्यातपे ।
तच्चूर्णं विमलाञ्जनेन सहितं नेत्राञ्जने शस्यते
काचार्मार्जुनपिच्चिटे सतिमिरे स्रावञ्च निवारयेत् ॥ ९६ ॥

---

त्रिफलेत्यादि ।—त्रिफलायाः क्वाथः ; भृङ्गराजस्य स्वरसः ; महौषधं—शुण्ठी, तस्याः क्वाथः ; नागं—सीसकम् । एतत्प्रयोगावर्त्ती त्रिफलाक्वाथादिष्वेकैकस्मिन् यत् सीसकं सप्तधा निर्वाप्य तेन सीसकेन शलाका कर्त्तव्या ; तया तिमिराञ्जनघटितया लिप्तया वा मसृणादिघृष्टया चाञ्जनं कार्य्यमिति परिपाटी भाविप्रयोगदर्शनात् ॥ ९४ ॥

त्रिफलेत्यादौ ।—हविषि च विषकल्के इति ।—विषे मारकद्रव्ये कल्करूपे यत्र तादृशि हविषि । अत एव चन्द्रटे "हविषि च विषमिश्रे" इत्युक्तम् । वाग्भटेऽपि "सविषाज्यमधूपयः" इत्युक्तम् । मधूके इति—मधुरे मधुनि ; अन्ये तु—मधुशब्देन यष्टिमधु वदन्ति । उक्तं हि वाग्भटे—"वराजलं भृङ्गजलं सविषाज्यमजापयः । यष्टीरसश्च यत् सीसं सप्तकृत्वः पृथक् पृथक् ॥" इति । साञ्जना—तिमिराञ्जनेन सहिता, व्यञ्जना—तद्रहिता । करकरिका—वालुकाभिपूर्णनेत्रवेदनावत् वेदना ॥ ९५ ॥

चिञ्चेत्यादौ ।—औडुम्बरे भाजने—ताम्रादिपात्रे । गौञ्जं मूलं—काकचिञ्चिका-मूलम् । विमलाञ्जनं—सौवीराञ्जनम् ॥ ९६ ॥

चित्रापष्ठीयोगे सैन्धवममलं विचूर्ण्य तेनाक्षि ।
सममञ्जनेन तिमिरं गच्छति वर्षादसाध्यमपि ॥ ९७ ॥
दद्यादुशीरनिर्व्यूहे चूर्णितं कणसैन्धवम् ।
तत् स्रुते सघृते भूयः पचेत् क्षौद्रं क्षिपेद्घने ॥
शीते तस्मिन् हितमिदं सर्वजे तिमिरेऽञ्जनम् ॥ ९८ ॥
धात्रीरसाञ्जनक्षौद्र-सर्पिर्भिस्तु रसक्रिया ।
पित्तानिलाक्षिरोगघ्नी तैमिर्य्यपटलापहा ॥ ९९ ॥
शृङ्गवेरं भृङ्गराजं यष्टीतैलेन मिश्रितम् ।
नस्यमेतेन दातव्यं महापटलनाशनम् ॥ १०० ॥
लिङ्गनाशे कफोद्भूते यथावद्विधिपूर्वकम् ।
विद्ध्वा दैवकृते छिद्रे नेत्रं स्तन्येन पूरयेत् ॥

---

चित्रेत्यादि ।—चित्रापष्ठीयोग इति—चित्रानक्षत्रयुक्तषष्ठ्याम् ॥ ९७ ॥

दद्यादित्यादि ।—वाग्भटस्य ।—कणेति—पिप्पली, शब्दबलात् प्रशस्तम् । स्रुत इति—वस्त्रपरिस्रुते, एतच्चोशीरनिर्व्यूहविशेषणम् । उशीरमूलस्य क्वाथं, कणा-सैन्धवघृतानि मिलित्वा पादिकानि अष्टमांशानि वा दत्त्वा, पाकार्थं पुनः क्वाथ्यः । शीते चास्मिन् पादिकं मधु प्रक्षेप्यम् । वैद्यप्रकाशके त्वस्य विवरणं यथा—"उशी-रस्य पलद्वयं, जलस्य चत्वारः शरावाः, शेषमस्य शराव एकः ; पूते तस्मिन् प्रक्षेपार्थं कणासैन्धवयोः प्रत्येकमष्टमाषकं, घृतस्य च कर्षः, पुनःपाकेन घनीभूते शीते च मधुनः कर्षः एकः ॥ ९८ ॥

धात्रीत्यादि ।—धात्रीक्वाथे रसाञ्जनचूर्णं घृतञ्च प्रक्षिप्य पुनः पाकात् रसक्रिया साध्या । रसक्रियेति—घनीभूतक्वाथस्य संज्ञा । शीते च मधु प्रक्षेप्यम् । मानमेषां सर्वेषां पूर्ववदिति ॥ ९९ ॥

शृङ्गवेरमित्यादि ।—यष्टिमधुसाधितेन तैलेन मिश्रितं शृङ्गवेरभृङ्गराजचूर्णं नस्यं किंवा भृङ्गराजस्वरसे तैलमिश्रिते शृङ्गवेरयष्टिमधुचूर्णं प्रक्षिप्य नस्यं कार्य्यम् ॥ १०० ॥

लिङ्गनाश इत्यादि ।—लिङ्ग्यते ज्ञायतेऽनेनेति लिङ्गं दृष्टिः, तस्य नाशो लिङ्ग-

ततो दृष्टेषु रूपेषु शलाकामाहरेच्छनैः ।
नयनं सर्पिषाऽभ्यज्य वस्त्रपट्टेन वेष्टयेत् ॥
ततो गृहे निराबाधे शयितोत्तान एव च ।
उद्गारकासक्षवथु-ष्ठीवनोत्कम्पनानि च ॥
तत्कालं नाचरेदूर्ध्वं यन्त्रणा स्नेहपीतवत् ।
त्र्यहात् त्र्यहाद्धावयेत्तु कषायैरनिलापहैः ॥
वायोर्भयात् त्र्यहादूर्ध्वं स्वेदयेदक्षि पूर्ववत् ।
दशाहमेवं संयम्य हितं दृष्टिप्रसादनम् ।
पश्चात् कर्म च सेवेत लघ्वन्नञ्चापि मात्रया ॥
रागशोफोऽर्बुदं शोथो बुद्बुदं केकराक्षिता ।
अधिमन्थादयश्चान्ये रोगाः स्युर्दुष्टवेधजाः ॥
अहिताचारतो वापि यथास्वं तानुपाचरेत् ।
रुजायामक्षिरोगे वा भूयो योगान् निबोध मे ॥ १०१ ॥

---

भागः । कफोद्भूत इत्यनेन वातजः पित्तजश्च विद्धो न सिध्यतीति दर्शयति, यथा-वद्विधिपूर्वकमिति ।—विधिश्च विदेह सुश्रुताभ्युक्तः, तत्रानुसन्धेयः, स च विस्तारभयान्न लिखितः । दैवकृते छिद्रे इति ।—अपाङ्गभागवर्त्तिनः शुक्लभागस्य मध्ये यद् दैवकृतं छिद्रमस्ति, तस्मिन् । तदुक्तं डल्हणतरोगप्रतिषेधाध्याये सौश्रुते—"मतिमान् शुक्लभागौ द्वौ कृष्णान्मुक्त्वा त्वपाङ्गतः । उन्मील्य नयने सम्यक् सिराजालविवर्जिते ॥ नाधो नोर्ध्वं न पार्श्वाभ्यां छिद्रे दैवकृते ततः । शलाकया ताम्रमय्या व्यधयेद् यववक्त्रया ॥", इत्यादि ।—अस्यार्थः,—कृष्णात् कृष्णमण्डलात् प्रभृति द्वौ शुक्लभागौ मुक्त्वा त्यक्त्वा मध्ये दैवकृतं छिद्रं यदस्ति, तस्मिन् विध्येदिति । व्यधश्च तथा कर्त्तव्यो यथा एकैव परं लभ्यते । सम्यग्व्यधलिङ्गञ्च सुश्रुतेनोक्तं, यथा—"शब्दश्चाम्बुबिन्दुनिर्गमः सम्यक् भवेद्यदि व्यधने भवेत् । असम्यग्विद्धे तु शोणितागमः" इति । पट्टवस्त्रेण वेष्टयेदिति ।—सद्यःक्षतरोपण-क्षौमरक्तचन्दनत्रिफलाचूर्णं दत्त्वा वस्त्रेण वेष्टनम् ; अन्ये तु—घृतपूर्णपिण्डं दत्त्वा वस्त्रेण वेष्टयन्ति । निराबाध इति ।—धूमातपादिवर्जितस्थाने । शयितोत्तान एवेति ।—एतच्च चक्षुर्द्वययोर्व्यधे ज्ञेयम् ; एकतरस्य व्यधे तु विद्धात् चक्षुषोऽन्येन पार्श्वेन शयनं ज्ञेयम् । वाग्भटेऽप्येवमेवोक्तं लिङ्गनाशप्रतिषेधाध्याये—"घृताप्लुतं पिचुं दत्त्वा

कल्किताः सप्तला दूर्वा-यवगैरिकशारिवाः ।
सुखालेपाः प्रयोक्तव्या रुजारागोपशान्तये ॥ १०२ ॥
पयस्याशारिवापत्र-मञ्जिष्ठामधुकैरपि ।
अजाक्षीरान्वितैर्लेपः सुखोष्णः पथ्य उच्यते ॥ १०३ ॥
वातघ्नसिद्धे पयसि सिद्धं सर्पिश्चतुर्गुणे ।
काकोल्यादिप्रतीवापं प्रयुञ्ज्यात् सर्वकर्मसु ॥
शाम्यत्येवं न चेच्छूलं स्निग्धस्विन्नस्य मोक्षयेत् ।
ततः शिरां दहेच्चापि मतिमान् कीर्तितां यथा ॥
दृष्टेरतः प्रसादार्थमञ्जने शृणु मे शुभे ॥ १०४ ॥

---

वक्त्राणि धावयेत् ततः । पिण्डाक्तेन पार्श्वेन समुपानं वदीर्थथ ॥" इति । सहाहेत्यादौ ।—उत्क्राम्यते—वाम्यतमेव । तत्काळमिति—सद्यक्षम् । उक्तं हि वाग्भटे—"पक्वं कासमुत्सार...श्लाघ्ये कारयेत्" इति । ऊर्द्ध्वमिति—स्नानशयनात् परम् उद्गारादीनि सर्वाणि परिहरेदित्यर्थं । यथावा स्नेहपीतवदिति ।—स्नेहपीतस्येव आहाराचारादिनियमः । पूर्ववत् इति—स्नेहपानवत् । कियन्तं कालमयं विधिः कार्य्य ? इत्याह,—दोषाह्वसेवमित्यादि ।—सप्तमेति ।—एवमुपासनप्रयत्नादिना आत्मानं नियम्य पश्चात् हस्तिप्रसादनादि क्रियां कर्म ; प्रयोजनमपि सेवितेत्यर्थः । हस्तिप्रसादनम्—धूपनादि । लघुप्रायमिति ।—प्रकारान्तरेणाप्यलग्नेऽपि लघुप्रविधिं समुद्दिशेदिति । राग इत्यादि ।—सुश्रुतस्य ।—तोद,—व्यथा; तोदवत् पीडा वा ; अर्बुदम्—अर्बुदाकारशोथः ; बुद्बुदं—बुद्बुदाकारशोथः । कैकराक्षिता—वक्रदृष्टिता, टेरनेत्रत्वमिति यावत् । एकराक्षितेति पाठान्तरे—एकदेशाक्षी-हर्ष इत्यर्थः । यथास्वमिति ।—वातादिप्रत्यनीकादिभिः । क्षताक्षमिति ।—तोदादि-रूपपीडायाम् ॥ १०१ ॥

कल्किता इत्यादि ।—वाग्भटस्य ।—सुखालेपा इति ।—एतैः समभागैश्च समीपे प्रलेप इति । रागः,—रक्तिमौहित्यम् ॥ १०२ ॥

पयस्येत्यादि ।—वाग्भटस्य ।—पयस्या,—क्षीरकाकोली ;—पत्रं—तेजपत्रम् । वाग्भटे—"सुखोष्णः पथ्य उच्यते" इत्यत्र "सुखोष्णः प्रलेपन पर." इति पाठः ॥१०३॥

वातघ्नेत्यादि ।—सुश्रुतस्य ।—वातघ्न,—भद्रदार्वादिः, तेन क्षीरपाकपरिभाषया सिद्धे पयसि चतुर्गुणे । सर्वकर्मस्विति—नस्यपानादिषु । शाम्यतीत्यादि ।—सुश्रुतस्य ।—

मेषशृङ्गस्य पत्राणि शिरीषधवयोरपि ।
मालत्याश्चापि तुल्यानि मुक्तावैदूर्य्यमेव च ॥
अजाक्षीरेण सम्पिष्य ताम्रे सप्ताहमावपेत् ।
प्रणिधाय तु तद्वर्त्तिं योजयेदञ्जने भिषक् ॥ १०५ ॥
स्रोतोजं विद्रुमं फेनं सागरस्य मनःशिला ।
मरिचानि च तद्वर्त्तिं कारयेत् पूर्ववद्भिषक् ॥ १०६ ॥
रसाञ्जनं घृतं क्षौद्रं तालीशं स्वर्णगैरिकम् ।
गोशकृद्रससंयुक्तं पित्तोपहतदृष्टये ॥ १०७ ॥
नलिनोत्पलकिञ्जल्कं गोशकृद्रससंयुतम् ।
गुडिकाञ्जनमेतत् स्याद्दिनरात्र्यन्धयोर्हितम् ॥ १०८ ॥
नदीजशङ्खत्रिकटून्यथाञ्जनम्
मनःशिला द्वे च निशे गवां शकृत् ।
सचन्दनेयं गुडिकाथ चाञ्जने
प्रशस्यते रात्रिदिनेष्वपश्यताम् ॥ १०९ ॥

---

शिरामिति—ललाटस्थां शिरां मोचयेत् दद्याच्चापीत्यन्वयः । हरेरित्यादि ।—सुश्रुतस्य ।—घन इति—शिराव्यधदाहानन्तरम् ; व्यधदाहाभ्यां दोषशैथिल्य वा कलुषितायां दृष्टेः प्रसादनाय घनम् । घर्षने इति—घर्षणयम् ॥ १०४ ॥

मेषशृङ्गेत्यादि ।—मेषशृङ्गः—मेषशृङ्गी, पुष्पकोषकश्च इत्यन्ये । आवपेदिति—भावित्य स्थापयेत् ॥ १०५ ॥

स्रोतोजमित्यादि ।—सुश्रुतस्य ।—स्रोतोजं—रसाञ्जनम् । पूर्ववदिति—छागीक्षीरेण पिष्टा ताम्रपात्रे सप्ताहं स्थापयेदित्यर्थः ॥ १०६ ॥

रसाञ्जनमित्यादौ ।—गोशकृद्रसेन वर्त्तिः कार्य्या ॥ १०७ ॥

नलिनेत्यादि ।—नलिनं—पद्मम्, उत्पलं—नीलोत्पलम्, तयोः किञ्जल्कः । गोशकृद्रसेति—गोशकृद्रसेन गुडिकाः कार्य्या इत्याह ॥ १०८ ॥

नदीजेत्यादि ।—सुश्रुतस्य ।—नदीजं—सैन्धवम् ; शङ्खं—शङ्खनाभिः, शङ्खस्थाने शिम्बीति पाठे—शिम्बी—हरितमुद्गः, अञ्जनं—रसाञ्जनम् । गवां शकृत्—गुक्लायम् ; शकृदित्यपि पाठान्तरम् ॥ १०९ ॥

कणाच्छागयकृन्मध्ये पक्वा तद्रसपेषिता।
अचिराद्धन्ति नक्ताख्यं तद्वत् सक्षौद्रमूषणम् ॥ ११० ॥

पचेत्तु गौधं हि यकृत् प्रकल्पितम्
प्रपूरितं मागधिकाभिरग्निना।
निषेवितं तद् यकृदञ्जनेन च
निहन्ति नक्ताख्यमसंशयं खलु ॥ १११ ॥

दध्ना निघृष्टं मरिचं रात्र्यान्ध्याञ्जनमुत्तमम्।
ताम्बूलयुक्तं खद्योत-भक्षणञ्च तदर्थकृत् ॥ ११२ ॥

शफरीमत्स्यचारो नक्ताख्यमञ्जनतो विनिहन्ति।
तद्वद्रामठटङ्कणकर्णमलश्चैकशोऽञ्जनान्मधुना ॥ ११३ ॥

---

कणेत्यादि।—छागयकृत् विदार्य तन्मध्ये पिप्पलीं स्थापयित्वा उत्स्वेदयेत्। पक्वा—उत्स्विन्ना। तद्रसपेषितेति।—उत्स्वेदाम्बुना पिष्टा वर्त्तिः कार्य्येत्यर्थः। सक्षौद्रमूषणमिति।—ऊषणं—मरिचम्। तद्वत्—पूर्व्ववत् छागयकृत्पिण्डं विदार्य्य तन्मध्ये मरिचं स्थापयित्वा उत्स्वेदयेत्, ततः पाकान्ते उत्स्वेदनावशिष्टजलेन तन्मरिचं सपिष्य वर्त्तिः कार्य्येत्यर्थः ॥ ११० ॥

पचेदित्यादि।—पचेत्—उत्स्वेदयेत्। गौधं—गोधाभवं यकृत्; पिप्पलीपूरणार्थं प्रकल्पितमिति पठितम्। अग्निनेत्यत्र अम्बुनेति पाठान्तरे—अम्बुना स्वेदनं बोध्यम्। अत्र गौधायकृदर्द्धपाटितमित्यपि पाठः। निषेवितं तद् यकृदिति।—तथाभूतं यकृत् खादितमित्यर्थः। पिप्पली त्वञ्जनविधिनैव देयेति कश्चित्। अन्ये तु—उत्स्विन्न कणासहितं यकृत् भक्षणविधिना अञ्जनविधया च निहितं नक्ताख्यं हन्तीत्याहुः। अपरे तु—उत्स्विन्नकणासहितं यकृत् अञ्जनविधया निषेवितं सत्नक्ताख्यं हन्तीति व्याचक्षते। खलुशब्द एवार्थे, असंशयमेवेत्यर्थः ॥ १११ ॥

दध्नेत्यादि योग स्पष्टः ॥ ११२ ॥

शफरीत्यादि।—शफरीमत्स्यचारोऽर्थः दध्ना, मधुना सम्यगयमञ्जनं कार्य्यम् ॥ ११३ ॥

केशराजान्वितं सिद्धं मत्स्यखण्डं हन्ति भक्षितम् ।
नक्तान्ध्यं नियतं नृणां सप्ताहात् पथ्यसेविनाम् ॥ ११४ ॥

त्रिफला-घृतम्—

त्रिफलाक्वाथकल्काभ्यां सपयस्कं शृतं घृतम् ।
तिमिराण्यचिराद्धन्यात् पीतमेतन्निशामुखे ॥ ११५ ॥

महात्रिफलाद्यं घृतम्—

त्रिफलाया रसप्रस्थं प्रस्थं भृङ्गरसस्य च ।
वृषस्य च रसप्रस्थं शतावर्य्याश्च तत्समम् ॥
अजाक्षीरं गुडूच्याश्च आमलक्या रसं तथा ।
प्रस्थं प्रस्थं समाहृत्य सर्वैरेभिर्घृतं पचेत् ॥
कल्काः कणा सिता द्राक्षा त्रिफला नीलमुत्पलम् ।
मधुकं क्षीरकाकोली मधुपर्णी निदिग्धिका ॥
तत् साधुसिद्धं विज्ञाय शुभे भाण्डे निधापयेत् ।
ऊर्द्ध्वंपानमधःपानं मध्ये पानञ्च शस्यते ॥
यावन्तो नेत्ररोगास्तान् पानादेवापकर्षति ।
सरक्ते रक्तदुष्टे च रक्ते वातिस्रुतेऽपि च ॥
नक्तान्ध्ये तिमिरे काचे नीलिकापटलार्बुदे ॥
अभिष्यन्देऽधिमन्थे च पक्ष्मकोपे सुदारुणे ।
नेत्ररोगेषु सर्वेषु वातपित्तकफेषु च ॥
अदृष्टिं मन्ददृष्टिञ्च कफवातप्रदूषिताम् ।
स्रवतो वातपित्ताभ्यां सकण्डूासन्नदूरदृक् ॥

---

केशराजेत्यादि ।—रोहितमत्स्यादीनामेकं केशराजं दत्त्वा उद्धृत्यात् काञ्जिकेन पक्वा भक्ष्यम् । ॥ ११४ ॥

इतः परं घृताद्युच्यन्ते त्रिफलेत्यादौ ।—चतुर्गुणेन त्रिफलाक्वाथेन व्यवहरन्ति । सपयस्कमिति ।—क्षीरं स्नेहसमम् ॥ ११५ ॥

महात्रिफलाद्यघृते ।—वृषस्येति वासकस्य पत्ररसः प्रस्थः । मधुपर्णी—गुडूची । ऊर्द्ध्वपानादिविधिर्भोजनापेक्षया ज्ञेयः । वातपित्तकफेष्विति ।—वातपित्तकफोद्भूतेषु

गृध्रदृष्टिकरं सद्यो बलवर्णाग्निवर्द्धनम् ।
सर्वनेत्रामयं हन्यात् त्रिफलाद्यं महद् घृतम् ॥ ११६ ॥

त्रैफलं घृतम्—

त्रिफला त्र्यूषणं द्राक्षा मधुकं कटुरोहिणी ।
प्रपौण्डरीकं सूक्ष्मैला विडङ्गं नागकेशरम् ॥
नीलोत्पलं शारिवे द्वे चन्दनं रजनीद्वयम् ।
कार्षिकैः पयसा तुल्यं त्रिगुणं त्रिफलारसम् ॥
घृतप्रस्थं पचेदेतत् सर्वनेत्ररुजापहम् ।
तिमिरं दोषमास्रावं कामलाकाचमर्बुदम् ॥
वीसर्पं प्रदरं कण्डूं रक्तं श्वयथुमेव च ।
खालित्यं पलितञ्चैव केशानां पतनं तथा ।
विषमज्वरमर्माणि शुक्रञ्चाशु व्यपोहति ॥
अन्ये च बहवो रोगा नेत्रजा ये च वर्त्मजाः ।
तान् सर्वान् नाशयत्याशु भास्करस्तिमिरं यथा ॥
न चैवास्मात् परं किञ्चिद्दृष्टिभिः काश्यपादिभिः ।
दृष्टिप्रसादनं दृष्टं यथा स्यात् त्रैफलं घृतम् ॥ ११७ ॥
फलत्रिकाभीरुकषायसिद्धम्
कल्केन यष्टीमधुकस्य युक्तम् ।

---

सर्वेषु नेत्ररोगेषु इत्यर्थः ; तथा कफवातप्रदुष्टात् जातामदृष्टिं मन्ददृष्टिं चापकर्षतीत्यर्थः ; तथा वातपित्ताभ्यां स्रवतश्चक्षुषः पथ्यमिति शेषः । तथा सकफ्लासन्नदृष्टश्च यः तस्यापि गृध्रतुल्यदृष्टिकारकमिति सोपस्कारं व्याख्येयम् । पुनः सर्वनेत्रामयं हन्यादिति कथनं सर्वनेत्रामयहरत्वस्यावश्यकत्वोपदर्शनार्थमिति ज्ञेयम् ॥११६॥

त्रिफलेत्यादि ।—त्रिगुणं त्रिफलारसमिति घृतप्रस्थविशेषणम् ; विषमज्वरमर्माणीति—विषमज्वरं तथा मर्माणीति विशेषः ॥ ११७ ॥

फलत्रिकेत्यादौ ।—अभीरु,—शतमूली । तत्र फलत्रिकस्य क्वाथः, शतमूल्यास्तु

सर्पिः समं क्षौद्रचतुर्थभागम्
हन्यात् त्रिदोषं तिमिरं प्रवृद्धम्॥ ११८॥

भृङ्गराजाद्यं तैलम्—

भृङ्गराजरसप्रस्थे यष्टीमधुपलेन च।
तैलस्य कुडवं पक्वं सद्यो दृष्टिं प्रसादयेत्।
नस्याद्वलीपलितघ्नं मासेनैतन्न संशयः॥ ११९॥

गवां शकृत्क्वाथविपक्वमुत्तमम्
हितञ्च तैलं तिमिरेषु नस्ततः।
घृतं हितं केवलमेव पैत्तिके
तथाणुतैलं पवनासृगुत्थयोः॥ १२०॥

दृष्टिप्रदं तैलं घृतञ्च—

जीवकर्षभकौ मेदे द्राक्षांशुमती निदिग्धिका बृहती।
मधुकं बला विडङ्गं मञ्जिष्ठा शर्करा रास्ना॥
नीलोत्पलं श्वदंष्ट्रा प्रपौण्डरीकं पुनर्नवा लवणम्।
पिप्पल्यः सर्वेषां भागैरक्षिकैः पिष्टैः॥

---

स्वरस इत्यर्थः। समनिति—सर्पिरित्यर्थः। समं हि मेदिनीकारकोषे—"समं साधुसमानेषु समं स्यादभिधेयवत्" इति। अन्ये तु—समभिति सहार्थे, यथोक्तकषायादिना सह सिद्धमित्यर्थः प्राहुः॥ ११८॥

गवामित्यादि।—सुश्रुतस्य।—गवां शकृत्क्वाथविपक्वमिति।—गोमयतः क्वाथोऽष्टगुणाम्बुना कार्यः; "सदोषचतुर्गुणं देयम्" इति परिभाषा व्यवहारबाधिता। घृतं हितं केवलमिति।—केवलमित्यसंस्कृतम्। नस्तत इति इहापि सम्बध्यते। अणुतैलञ्च सुश्रुते वातव्याध्युक्तम्। क्वचित् सुश्रुतपुस्तके "घृतं हितं केवलमेव पैत्तिके" इत्यस्यानन्तरम् "धन्वाविकं यन्मधुरैर्विपाचितं तैलं शिरोवस्तौ मधुरे च यद्धितम्" इति पाठो दृश्यते, स च पाठस्तथाविधाकारपुस्तकेषु न दृश्यते, टीकाकृद्भिश्च न व्याख्यातः, तथा संग्रहकृद्भिश्च प्रामाणिकैर्लिखित इति कृत्वा धन्वार्थं इति ज्ञेयम्॥ ११९। १२०॥

जीवकेत्यादौ।—अंशुमती—शालपर्णी। भागैरक्षिकैरिति।—अक्षः कर्षस्तत्प्रमा-

तैलं यदि वा सर्पिर्दत्त्वा क्षीरं चतुर्गुणं पक्वम्।
आत्रेयनिर्मितमिदं तैलं नृपवल्लभं सिद्धम्॥
तिमिरं पटलं काचं नक्तान्ध्यमर्बुदं तथाऽऽस्यञ्च।
श्वेतञ्च लिङ्गनाशं नाशयति च नीलिकां व्यङ्गम्॥
मुखनासादौर्गन्ध्यं पलितञ्चाकालजं हनुस्तम्भम्।
कासं श्वासं शोषं हिक्कां स्तम्भं तथाऽऽलस्यं नेत्रे॥
मुखजैश्चार्द्धभेदं रोगं वाङ्ग्रहञ्च शिरःस्तम्भम्।
रोगानयोर्द्ध्वजत्रोः सर्वानचिरेण नाशयति॥
पक्तव्यं कुडवं तैलं नस्यार्थं नृपवल्लभे।
चत्वार्यौः शाणिकैः कल्कैरन्ये भृङ्गादितैलवत्॥ १२१॥

अभिजितं तैलम्—

तैलस्य पचेत् कुडवं मधुकस्य पलेन कल्कपिष्टेन।
आमलकरसप्रस्थं क्षीरप्रस्थेन संयुक्तम्॥
ज्ञात्वाऽभिजितं नाम्ना तैलं तिमिरं हन्त्याशुनिपीतम्।
विमलां कुरुते दृष्टिं नष्टामप्यानयेच्च तथा॥ १२२॥
अर्मं तु छेदनीयं स्यात् तनुमात्रं भवेद्यदा।
बडिशविद्धमुत्क्षिप्य त्रिभागञ्चाव वर्जयेत्॥ १२३॥

---

चतुर्थो भागः, माषकचतुष्टयम्; तेन शाणिकैरित्यर्थः। तैल सर्वैर्मिलित्वा द्वादशमाषकाधिकं पलं भवति; अनेन तैलकुडवः साध्यः; नस्यार्थे हि तैलकुडवः पक्तव्य इति सम्प्रदायः। कुडवश्चाष्टौ पलानि। न च "कल्कस्तु स्नेहपादिकः" इत्यनेन विरोधः, कल्कपलेनापि तैलकुडवपाकदर्शनात्; तथा पूर्वोक्तमधुकाद्यतैले तथा वक्ष्यमाणेऽभिजितनाम्नि तैले च। किंवा चत्वारिंशकैरिति—कार्षिकैः; अस्मिन् पक्षे कल्कस्य बहुत्वात् तैलप्रस्थः साध्यः। व्यवहारस्तु पूर्वेणैव। यदि वा सर्पिरिति।—पैत्तिके तिमिरे सर्पिः पक्तव्यम्। दृष्टिरोगेष्विति—दृष्टिमण्डलरोगेषु॥ १२१। १२२॥

अर्मं त्वित्यादि।—अर्मं नाम इति ख्यातोऽक्षिरोगविशेषः। अर्मं तु छेदनीय-

पिप्पलीत्रिफलाद्राक्षा-लौहचूर्णं ससैन्धवम्।
भृङ्गराजरसे पिष्टं गुड़िकाञ्जनमिष्यते॥
अर्मं सतिमिरं काचं कण्डूं शुक्रं तदर्जुनम्।
अजकां नेत्ररोगांश्च हन्यान्निरवशेषतः॥ १२४॥

पुष्पाख्यतार्क्ष्यजसितोदधिफेनशङ्ख-
सिन्धूत्थगैरिकशिलामरिचैः समांशैः।
पिष्टैश्च माक्षिकरसेन रसक्रियेयम्
हन्त्यर्मकाचतिमिरार्जुनवर्त्मरोगान्॥ १२५॥

कौम्भस्य सर्पिषः पानैर्विरेकालेपसेचनैः।
स्वादुशीतैः प्रशमयेच्छुक्तिकामञ्जनैस्ततः॥ १२६॥
प्रवालमुक्तावैदूर्य-शङ्खस्फटिकचन्दनम्।
सुवर्णरजतं क्षौद्रमञ्जनं शुक्तिकापहम्॥ १२७॥
शङ्खः क्षौद्रेण संयुक्तः कतकः सैन्धवेन वा।
सितयार्णवफेनो वा पृथगञ्जनमर्जुने॥ १२८॥

---

मिति—मण्डलाग्रेणेति शेषः। समुन्नम्येति—सूच्यग्रेणेति शेषः। सूच्यग्रेण समुन्नम्य उत्तोल्य अनन्तरं वडिशेन विद्धा मण्डलाग्रेण छिन्द्यादित्यर्थः। त्रिभागमिति—तृतीयभागं कनीनिका वर्जयेदित्यर्थः। उक्तं हि—"त्यजन् कनीनिकां छिन्द्याच्चतुर्भागावशेषितम्" इति॥ १२३॥

पिप्पल्यादौ।—भृङ्गराजरसेनैव पेषणमञ्जनस्येत्याहुः। गुड़िकाञ्जनं—वर्त्तिरित्यर्थः। अजका—पिड़िकाभेदः॥ १२४॥

पुष्पाख्येत्यादि।—पुष्पाख्य—पुष्पकासीसम्, तार्क्ष्यजं—रसाञ्जनम्; सिता—शर्करा; शङ्खः,—शङ्खनाभि.; गैरिकशिला—गैरिकमेवेति श्रीकण्ठः। माक्षिकरसेनेति—मधुरूपद्रवेण। रसक्रियेयमिति।—एतत् सर्वं चूर्णं प्रचुरतरमधुना समालोड्य वंशनलिकायां स्थाप्यम्, एतत् रसक्रियाविधाने वदन्ति। अत एव "पिष्टं क्षौद्रेण चालोड्य" इत्यादि वचनमपि पठन्ति॥ १२५॥

कौम्भस्येत्यादि।—कौम्भं सर्पिर्दशवर्षस्थितं घृतम्॥ १२६॥

प्रवालेत्यादि।—क्षौद्रेण पेषणमञ्जनस्य॥ १२७। १२८॥

पैत्तं विधिमशेषेण कुर्य्यादर्जुनशान्तये।
वैदेही सितमरिचं सैन्धवं नागरं समम्॥
मातुलुङ्गरसैः पिष्टमञ्जनं पिष्टकापहम्॥ १२८॥
भित्त्वोपनाहं कफजं पिप्पलीमधुसैन्धवैः।
विलिखेन्मण्डलाग्रेण प्रच्छयेद्वा समन्ततः॥ १३०॥

पथ्याक्षधात्रीफलमध्यबीजै-
स्त्रिद्व्येकभागैर्विदधीत वर्त्तिम्।
तयाञ्जयेदश्रुमतिप्रगाढ-
मक्ष्णोर्हरेत् कष्टमपि प्रकोपम्॥ १३१॥

स्रावेषु त्रिफलाक्वाथं यथादोषं प्रयोजयेत्।
क्षौद्रेणाज्येन पिप्पल्या मिश्रं विध्येच्छिरां तथा॥ १३२॥

---

पैत्तं विधिमिति—पित्ताभिष्यन्दोक्तविधिम्। यतं हि—"पित्ताभिष्यन्दशमनो विधिरर्जुनशान्तिकृत्" इति। वैदेहीत्यादौ।—वैदेही—पिप्पली, सितमरिचं—शोभाञ्जनबीजम्। इति शुक्रेषु॥ १२९॥

भित्त्वेत्यादि।—सम्पुटक।—भित्त्वेति—व्रीहिमुखेनेति शेषः। यद्यप्युपनाहः केवलं कफज एव, तथापि कफजमिति स्वरूपपदं ज्ञेयम्। पिप्पलीमधुसैन्धवैरित्येतत्तं प्रतिसारयेदिति शेषः। अत्र लेखनानन्तरं प्रतिसारणं ज्ञेयम्। यतं हि वाग्भटे—"उपनाहं भिषक् छित्वा भित्त्वा व्रीहिमुखेन तु। लेखयेत् मण्डलाग्रेण ततः प्रतिसारयेत्॥" इति। अन्ये तु—भेदनप्रतिसारणाभ्यामनयमो लेखनं प्रच्छानञ्चेत्याहुः॥ १३०॥

पथ्येत्यादौ।—अक्षमध्यबीजपदं पथ्यादिभिः प्रत्येकं सम्बध्यते। त्रिद्व्येकभागैरिति—पथ्याबीजादिषु यथाक्रमं योज्यम्; अत्र धात्रीबीज एकभागम्। मधुना अञ्जनमिति व्यवहरन्ति॥ १३१॥

स्रावेष्वित्यादौ।—प्रयोजयेदिति—भिषक्। यथादोषमिति।—क्षौद्रेण पित्तजे, आज्येन वाते पित्ते कफे च, पिप्पल्या तु कफे। एभिरञ्जनं शिराव्यध इति॥ १३२॥

त्रिफलामूत्रकासीस-सैन्धवैः सरसाञ्जनैः ।
रसक्रिया क्रिमिग्रन्थौ भिन्ने स्यात् प्रतिसारणम् ॥ १३३ ॥
स्विन्नां भित्त्वा विनिष्पीड्य भिन्नामञ्जननामिकाम् ।
शिलैलानतसिन्धूत्थैः सक्षौद्रैः प्रतिसारयेत् ॥
रसाञ्जनमधुभ्याञ्च भिन्नां वा शस्त्रकर्मवित् ।
प्रतिसार्य्याञ्जनैर्युञ्ज्यादुष्णैर्दीपशिखोद्भवैः ॥
स्वेदयेद् घृष्टयाऽङ्गुल्या हरेद्रक्तं जलौकसा ।
रोचनाक्षारतुल्यानि पिप्पल्यः क्षौद्रमेव च ।
प्रतिसारणमेकैकं भिन्ने गण इष्यते ॥ १३४ ॥
निमिषे नासया पेयं सर्पिस्तेन च पूरणम् ।
स्वेदयित्वा बिसग्रन्थिं छिद्राण्यस्य निराश्रयम् ।
पक्वं भित्त्वा तु शस्त्रेण सैन्धवेनावचूर्णयेत् ॥ १३५ ॥

---

त्रिफलेत्यादि ।—सुश्रुतस्य ।—त्रिफलाक्काथगोमूत्रे मिलित्वा पलचतुष्टये, कासीस-सैन्धवरसाञ्जनं मिलित्वा पलमात्रं प्रक्षिप्य, पुनःपाकेन घनतामापाद्य रसक्रिया विधेया ; किन्तु कासीसरसाञ्जनापेक्षया सैन्धवमल्पमात्रं व्यवहरन्ति वृद्धाः । मूत्रस्थाने शुल्बेति निश्चलः पठति । सम्प्रति—त्रिफलाक्काथस्यैव पलचतुष्टयं ग्राह्यम् । किन्तु सुश्रुते बहुपुस्तकेषु च मूत्रपाठ एव दृश्यते । भिन्ने स्यात् प्रतिसारणमिति ।—रसाञ्जनचूर्णमधुभ्यामेव प्रतिसारणं ज्ञेयम् । इति [illegible] ॥ १३३ ॥

प्रतिसार्य्याञ्जनैरिति ।—अञ्जनैः,—कज्जलैः । रोचनेत्यादि ।—सुश्रुतस्य ।—क्षारः,—यवक्षारः । रोचनादिषु प्रत्येकं क्षौद्रयोगः । प्रतिसारणमिह [illegible] दानं, न तु घर्षणम् ॥ १३४ ॥

निमिष इत्यादौ ।—सर्पिस्त्रिफलासिद्धमिति केचित् । अन्ये तु पटोलमित्याहुः । पूरणमिति ।—तेन सर्पिषा चक्षुःपूरणमित्यर्थः । स्वेदयित्वेत्यादौ ।—बिसग्रन्थिमिति—बिसग्रन्थ्याख्याक्षिरोगम् । निराश्रयमिति—आश्रयः कीटकः निरवशिष्ट यथा स्यात् तथा, भित्त्वेत्यर्थः । अन्योऽप्याश्रयी भवति, व्याधिरस्य पुनः सम्भवात् । यतो हि— "बिसग्रन्थिं तथा भिन्द्याद् यथा स्यान्नाश्रयः क्वचित् । पुनः प्रवर्त्तते यस्मादन्योऽप्याश्रयसाश्रये स्थिते ॥" इति ॥ १३५ ॥

वर्त्मावलेखं बहुशस्तद्वच्छोणितमोक्षणम् ।
पुनःपुनर्विरेकञ्च पिल्लरोगातुरो भजेत् ॥
पिल्ली स्निग्धो वमेत् पूर्वं शिराव्यधस्तुतेऽसृजि ।
शिलारसाञ्जनव्योष-गोपित्तैश्चक्षुरञ्जयेत् ॥ १३६ ॥
हरितालवचादारु-सुरसारसपेषितम् ।
अभयारसपिष्टं वा तगरं पिल्लनाशनम् ॥ १३७ ॥
भावितं वस्तमूत्रेण सस्नेहं देवदारु च ।
काकमाचीफलैकेन घृतयुक्तेन बुद्धिमान् ।
धूपयेत् पिल्लरोगार्त्तं पतन्ति क्रिमयोऽचिरात् ॥ १३८ ॥
रसाञ्जनं सर्जरसो जातीपुष्पं मनःशिला ।
समुद्रफेनो लवणं गैरिकं मरिचानि च ॥
एतत् समांशं मधुना पिष्टं प्रक्लिन्नवर्त्मनि ।
अञ्जनं क्लेदकण्डूघ्नं पक्ष्मणाञ्च प्ररोहणम् ॥ १३९ ॥
मस्तकास्थि सुभक्यास्तु तुषोदलवणान्वितम् ।
ताम्रपात्रेऽञ्जनं घृष्टं पिल्ले प्रक्लिन्नवर्त्मनि ॥ १४० ॥

---

वर्त्मेत्यादिना पिल्लरोगचिकित्सामाह, वर्त्मावलेखमिति ।—वर्त्मशयादीन्(?) टङ्कादिपत्रेण वर्त्मघर्षणम् । पिल्ललक्षणञ्च पूर्वमेवोक्तम् । वाग्भटेन तु कुकूणका-दीनामष्टादशानां पिल्लाख्या कृता । यथा—"एतेऽष्टादश पिल्लाख्या दीर्घकालानु-बन्धिनः" इति । पिल्लीत्यादौ ।—स्नेहोऽपि पीतः, वमनाङ्गत्वात् । शिरा शाखादौ । शिलेत्यादौ ।—गोपित्तसाम्यात् गोरोचनया सर्वत्र व्यवहारः ॥ १३६ ॥

हरितालेत्यादौ ।—सुरसारसपेषितमिति ।—सुरसा—पर्णासभेदः, तुलसीति लोके । प्रतिसारणमेतत् । अभयेत्यादौ ।—तगरं—तगरपादुका ॥ १३७ ॥

भावितमित्यादौ ।—स्नेहः,—घृतं, पक्ष्यत्वात् । एतदपि प्रतिसारणम् । काक-माचीत्यादौ ।—काकमाचीफलमेकमेव घृतलिप्तं धूपार्थम् । धूपनञ्च चतुर्वासरसाध्यात् कार्यम् । अन्ये तु—एकेन केवलेन भावनादिरहितेन धूपनमित्याहुः ॥ १३८ ॥

रसाञ्जनमित्यादौ ।—सर्जरस,—रालधूपः ; अत्र पेषणं मधुनैव ॥ १३९ ॥

मस्तकास्थीत्यादौ ।—सुभक्षी—शिशुमारः, तस्य मस्तकास्थि ; तुषोदकं—काञ्जि-कम् ॥ १४० ॥

ताम्रपात्रे गुहामूलं सिन्धूत्थमरिचान्वितम् ।
आरनालेन संघृष्टमञ्जनं पिल्लनाशनम् ॥ १४१ ॥
हरिद्रे त्रिफलां लोध्रं मधुकं रक्तचन्दनम् ।
भृङ्गराजरसे पिष्ट्वा घर्षयेल्लौहभाजने ॥
तथा ताम्रे च सप्ताहं कृत्वा वर्त्तिं रजोऽथवा ।
पिप्पिटौ धूमदर्शी च तिमिरोपहतेक्षणः ।
प्रतिनिश्यञ्जयेन्नित्यं सर्वनेत्रामयापहम् ॥ १४२ ॥

चूर्णाञ्जनम्—

मञ्जिष्ठामधुकोत्पलोदधिकफत्वक्सेव्यगोरोचना-
मांसीचन्दनशङ्खपत्रगिरिमृत्तालीशपुष्पाञ्जनैः ।
सर्वैरेव समांशमञ्जनमिदं शस्तं सदा चक्षुषोः
कण्डूक्लेदमलाश्रुशोणितरुजापिल्लार्मशुक्रापहम् ॥ १४३ ॥
तुत्थकस्य पलं श्वेत-मरिचानि च विंशतिः ।
त्रिंशता काञ्जिकपलैः पिष्ट्वा ताम्रे निधापयेत् ॥
पिल्लानपिल्लान् कुरुते बहुवर्षोत्थितानपि ।
तत्सेकेनोपदेहाश्रु-कण्डूशोथांश्च नाशयेत् ॥ १४४ ॥

---

ताम्रेत्यादौ ।—गुहा—पृश्निपर्णी, तस्या मूलं ताम्रपात्रे सप्ताहं घर्षयेदिति शेषम् । अन्ये तु—गुहास्थाने सुहेति पठित्वा सुहामूलमाहुः । तच्च प्रभावेण क्षीररहितं कृत्वा चक्षुर्विधौ प्रयोज्यमिति वदन्ति । व्यवहारस्तु पूर्वमेव ॥ १४१ ॥

हरिद्रेत्यादौ ।—तथा इति ।—अनेन ताम्रपात्रे सप्ताहं घर्षयेदिति योज्यम् । अन्ये तु—तथा ताम्रे चेति विकल्पार्थमेतद्वचनं, न समुच्चयार्थम् ; तेन लौहभाजने ताम्रभाजने वा घर्षयेदित्याहुः । रजोऽथवेति ।—एतेन चूर्णाञ्जनमप्युपदिशन्ति ॥ १४२ ॥

मञ्जिष्ठेत्यादौ ।—उदधिकफः—समुद्रफेनः, सेव्यम्—उशीरम् ; पत्रं—तमालपत्रं, तेजपत्रमित्यन्ये ; पुष्पं—पुष्पकासीसम् ; अञ्जनं—रसाञ्जनम् । तालीशपत्राञ्जनैरित्यपि पाठः । वर्त्तिरियं चूर्णाञ्जनं वा ॥ १४३ ॥

तुत्थकस्येत्यादि ।—वाग्भटस्य ।—श्वेतमरिचानि—शोभाञ्जनबीजानि । विंशतिरित्याकृतिमानात् । उपदेहः—पिचोटिका ॥ १४४ ॥

याप्यः पक्ष्मोपरोधश्च रोमोद्धरणलेखनैः।
वर्त्मन्युपचितं लेख्यं साध्यमुत्क्लिष्टशोणितम् ॥
प्रवृद्धान्तर्मुखं रोम सहिष्णोरुद्धरेच्छनैः।
सन्दंशेनोद्धरेत् दृष्यां पक्ष्मरोमाणि बुद्धिमान्।
रक्षन्नक्षि दहेत् पक्ष्म तप्तहेमशलाकया।
पक्ष्मरोगे पुनर्नैवं कदाचिद्रोमसम्भवः ॥ १४५ ॥

उत्सङ्गिनी बहुलकर्दमवर्त्मनी च
श्यावञ्च यच्च पठितन्त्विह बद्धवर्त्म।
क्लिष्टञ्च पोथकियुतन्त्विह वर्त्म यच्च
कुम्भीकिनी च सह शर्करयाऽवलेख्याः ॥
श्लेष्मोपनाहलगणौ च बिसञ्च भेद्या
ग्रन्थिश्च यः क्रिमिकृतोऽञ्जननामिका च ॥ १४६ ॥

घृतसैन्धवचूर्णेन व्यधानाहं पुनःपुनः।
विलिखेन्मण्डलाग्रेण प्रच्छयेद्वा समन्ततः ॥ १४७ ॥

---

याप्य इत्यादौ।—रोमोद्धरणलेखनैरित्यनन्तरं कर्मभिरिति शेषः। पक्ष्मोपरोधो रोमोद्धरणलेखनैः कर्मभिर्याप्यः यापनीयः। लेखनैरित्यत्र छेदनैरित्यपि पाठान्तरम्। वर्त्मन्युपचितमिति—पक्ष्मणीति शेषः। तेन प्रकारेणोद्धरेदित्याह—सन्दंशेनेत्यादि।—दृष्यां पक्ष्मरोमाणि इति।—दृष्यभिमुखप्रवृत्तरोमाण्युद्धरेत्, दृशा पक्ष्मरोमाणीत्यपि पाठान्तरम्। रक्षन्नित्यादौ।—पक्ष्मेति—अङ्कुरपक्ष्मस्थानम्। तन्त्रान्तरे—"पक्ष्मरोगे कृते लौहे दाहं तत्स्थानके शिराम्। तथा हेमसूच्या तु पुष्पाख्यभयापहम्।" इति ॥ १४५ ॥

इदानीं नेत्ररोगेषु मध्ये ये च लेख्या ये च भेद्यास्तानाह, उत्सङ्गिनीत्यादि।—सुश्रुतस्य।—बहुलकर्दमवर्त्मनी चेति।—बहुलवर्त्म कर्दमवर्त्म चेत्यर्थः। श्यावञ्चेति—श्याववर्त्म, तथा क्लिष्टञ्च—क्लिष्टवर्त्म। बिसमिति—बिसवर्त्म ॥ १४६ ॥

घृतेत्यादि।—घृतमिश्रसैन्धवचूर्णेन विलिखेत्—प्रतिसारयेत्। मण्डलाग्रेण तु प्रच्छयेदित्यर्थः ॥ १४७ ॥

पटोलामलककाथैराश्चोतनविधिर्हितः ।
फणिज्झकरसोनस्य रसैः पोथकिनाशनः ॥ १४८ ॥
भ्मानाह्वपिड़कां छित्वा तिर्य्यग्भित्त्वाग्निना दहेत् ।
भ्मर्श्मस्तथा वर्त्म नाम्ना शुष्कार्शोऽर्वुदमेव च ।
मण्डलाग्रेण तीक्ष्णेन मूले छिन्द्याद्भिषक् शनैः ॥ १४९ ॥
सिन्धूत्थपिप्पलीकुष्ठ-पर्णिनीत्रिफलारसैः ।
सुरामण्डेन वर्त्तिः स्यात् श्लेष्माभिष्यन्दनाशिनी ।
पोथकीवर्त्मोपरोध-क्रिमिग्रन्थिकुकूणके ॥ १५० ॥

इति नेत्ररोग-चिकित्सा ।

---

## अथ शिरोरोग-चिकित्सा ।

वातिके शिरसो रोगे स्नेहस्वेदान् सनावनान् ।
पानान्नसुपनाहांश्च कुर्य्याद्वातामयापहान् ॥ १ ॥

---

पोथकीचिकित्सामाह, पटोलेत्यादि ।—फणिज्झकः,—पर्णासः । रसैरित्यनन्तरं पिष्टैरिति शेषः । फणिज्झकपत्रं रसोनस्य रसैः पिष्टमाश्चोतनमित्यर्थः ॥ १४८ ॥

भ्मानाह्वपिड़कामित्यादौ ।—दहेदिति छेदः । भ्मर्श्मःप्रभृतीनान्तु छिन्द्यादित्यनेनान्वयः ॥ १४९ ॥

सिन्धूत्थेत्यादौ ।—पतत्र: पर्णिनी प्रत्यानो पविशेषादित्याहुः । सिन्धूत्यादीनां प्रत्येकं समं चूर्णं गृहीत्वा त्रिफलारसेन भावयित्वा सुरामण्डेन वर्त्तिः कार्य्येत्यर्थः ॥ १५० ॥

इति नेत्ररोग-चिकित्सा-विवृतिः ।

---

शिरःसंश्रितकर्णनासानयनगतरोगाणां चिकित्सितमुक्ता सम्प्रति तदाश्रयस्य शिरसो रोगाणां चिकित्सामाह, वातिक इत्यादि ।—स्वेदोऽत्र वातहरद्रव्यक्वाथ-

कुष्ठमेरण्डमूलञ्च लेपात् काञ्जिकपेषितम्।
शिरोऽर्त्तिं नाशयत्याशु पुष्पं वा मुचुकुन्दजम्॥ २॥
पञ्चमूलीशृतं क्षीरं नस्यं दद्याच्छिरोगदे।
आशिरो व्यायतं चर्म कृत्वाष्टाङ्गुलमुच्छ्रितम्॥
तेनावेष्ट्य शिरोऽधस्तान्माषकल्केन लेपयेत्।
निश्चलस्योपविष्टस्य तैलैरुष्णैः प्रपूरयेत्॥
धारयेदा रुजः शान्तेर्यामं यामार्द्धमेव वा।
शिरोवस्तिर्जयत्येषा शिरोरोगं मरुद्भवम्॥
हनुमन्याक्षिकर्णार्त्तिमर्दितं मस्तकम्पनम्।
तैलेनापूर्य्य मूर्द्धानं पञ्चमात्राशतानि च॥
तिष्ठेत् श्लेष्मणि पित्तेऽष्टौ दश वाते शिरोगदी।
एष एव विधिः कार्य्यस्तथा कर्णाक्षिपूरणे॥ ३॥
पैत्ते घृतं पयः सेकाः शीता लेपाः सनावनाः।
जीवनीयानि सर्पींषि पानान्यत्रापि पित्तनुत्॥

---

रस्नादिभिः। उपनाहः,—स्वेदविशेषः। अन्ये तु—उपनाहं—शिरोवस्तिभिदमाहुः, येन मस्तिष्क उच्यते। तन्नान्तरे हि,—मस्तिक्य—उपनाहः, शिरोवस्तिविशेषलेपाः। यथा—"मस्तिकोऽष्टाङ्गुलं पट्टं बद्धा तु द्वादशाङ्गुलम्" इति॥ १॥

मुचुकुन्द, चेङ्गाछि इति विख्यात ; (किन्तु) पश्चिमे स्वनामख्यात एव॥ २॥

पञ्चमूली वातपैत्तिके स्वल्पा, वातकफे तु महती। आशिरोव्यायतमिति।—यावता चर्मणा आयतेन शिरोवेष्टनं भवति तावन्मात्रं चर्म गृह्णीयादित्यर्थः। तैलैरिति—यथाविधिसाधितैः। पूरयेदित्यङ्गुलोपरीत्येव। उष्णमिति तन्त्रान्तरदर्शनात्। आ रुजः शान्तेः धारयेदिति वाते, यामं पैत्तिके, यामार्द्धं कफे। वक्ष्यमाणपञ्चमात्राशतानीत्यादि वचनं, भिन्नकर्त्तृकत्वान्मतभेदादविरुद्ध बोध्यम्। मात्रा च निमेषोन्मेषादिः। उक्तं हि—"निमेषोन्मेषणे पुंसां च्छोटनं वापि जानुनः। अपरस्य लघोर्वापि-मात्रासूचारणं भवेत्॥" इति। व्यवहारस्तु छोटिकयेति। कफजे तु शिरोवस्तिप्रयोगादिभिरर्जिते कफे वातस्य चानुबन्धे सति ज्ञेयः, केवलकफे तस्यानौचित्यात्। विधिरिति—मात्राख्यः॥ ३॥

पित्तात्मके शिरोरोगे स्निग्धं सम्यग्विरेचयेत्।
मृद्वीकात्रिफलेक्षूणां रसैः क्षीरैर्घृतैरपि ॥ ४ ॥
शतधौतघृताभ्यङ्गः शीतवातादिसेवनम्।
शीतस्पर्शाश्च संसेव्याः सदा दाहार्त्तिशान्तये ॥ ५ ॥
चन्दनोशीरयष्ट्याह्व-बलाव्याघ्रनखोत्पलैः।
क्षीरपिष्टैः प्रदेहः स्यात् शृतैर्वा परिषेचनम् ॥ ६ ॥
मृणालबिसशालूक-चन्दनोत्पलकेशरैः।
स्निग्धशीतैः शिरो दिह्यात् तद्वदामलकोत्पलैः ॥ ७ ॥
यष्ट्याह्वचन्दनानन्ता-क्षीरसिद्धं घृतं हितम्।
नावनं शर्कराद्राक्षा-मधुकैर्वापि पित्तजे ॥ ८ ॥
त्वक्पत्रशर्करापिष्टा नावनं तण्डुलाम्बुना।
क्षीरसर्पिर्हितं नस्यं रसा वा जाङ्गलाः शुभाः ॥

---

पैत्त इत्यादौ।—क्षीरा इति—ग्रैकश्चेषयोर्विशेषणम्। जीवनीयानि सर्पींषीति।—जीवनीयदशककषायकल्कसाधितानि इत्यर्थः। मृद्वीकेत्यादि—मृद्वीकाक्वाथेक्षुरसौ, तिवृच्चूर्णप्रक्षेपाद्विरेचनकारकौ ज्ञेयौ; त्रिफलाक्वाथस्तु स्वत एवेत्याहुः। क्षीरघृते चापि त्रिवृदादिसिद्धे एव विरेचके ॥ ४ ॥

शतधौतघृताभ्यङ्ग इति।—शतधौतेन घृतेन शिरसोऽभ्यङ्गो ज्ञेयः। उक्तं हि—"सर्पिषः शतधौतस्य शिरसि धारणं हितम्" इति। शीतस्पर्शा इत्यादि।—शीतस्पर्शाः कुमुदोत्पलपद्मादयः ॥ ५ ॥

चन्दनेत्यादौ।—व्याघ्रनखः,—नखीभेदः। शृतैरिति—चन्दनादिक्वाथैः; अन्ये तु—चन्दनादिशृतैः क्षीरैरित्याहुः ॥ ६ ॥

मृणालेत्यादौ।—बिस—बालमृणालम्; उत्पलस्य केशरं किञ्जल्कः। स्निग्धशीतैरिति।—स्निग्धत्वं घृतयोगात्। तद्वदित्यनेन घृतयोगात् स्निग्धत्वमतिदिशन्ति ॥७॥

यष्ट्याह्वेत्यादौ।—अनन्ता—अनन्तमूलम्; एषां कल्केन चतुर्गुणक्षीरेण घृतं पक्तव्यम्; एवं शर्करा-द्राक्षा-यष्टिमधुकल्केन चतुर्गुणक्षीरेण घृतान्तरं पक्तव्यमित्यर्थः ॥ ८ ॥

रक्तजे पित्तवत् सर्वं भोजनालेपसेचनम् ।
शीतोष्णयोश्च व्यत्यासो विशेषो रक्तमोक्षणम् ॥ ८ ॥
कफजे लङ्घनं स्वेदो रूक्षोष्णैः पाचनात्मकैः ।
तीक्ष्णावपीडा धूमाश्च तीक्ष्णोष्णकवडा हिताः ॥
स्वच्छञ्च पाययेत् सर्पिः पुराणं स्वेदयेत् ततः ।
मधूकसारेण शिरः स्निग्धञ्चास्य विरेचयेत् ॥ १० ॥
कृष्णाब्दशुण्ठीमधुक-शताह्वोत्पलपाकलैः ।
जलपिष्टैः शिरोलेपः सद्यः शूलनिवारणः ॥ ११ ॥
देवदारु नतं कुष्ठं नलदं विश्वभेषजम् ।
लेपः काञ्जिकसम्पिष्टस्तैलयुक्तः शिरोऽर्त्तिनुत् ॥
सन्निपातभवे कार्य्या दोषत्रयहरी क्रिया ।
सर्पिःपानं विशेषेण पुराणस्त्वादिशन्ति हि ॥ १२ ॥
त्रिकटुकपुष्कररजनी-जीवकतुरङ्गगन्धानाम् ।
क्वाथः शिरोऽर्त्तिजालं नासापीतो निवारयति ॥ १३ ॥

---

लवणमित्यादि ।—स्नेहपानं—तैलपानम् । क्षीरसर्पिरित्यादि ।—सुश्रुतस्य ।—क्षीरोत्थं सर्पिः क्षीरसर्पिः । शङ्खा इति—शङ्खस्थाः । "नासायाः शङ्खाः" इत्यत्र "नासायाश्च शङ्खाः" इति पाठान्तरं तन्त्रान्तरे, तथाविधाकारस्य सुश्रुतादिपुस्तकेष्वदर्शनात् उपेक्षणीयमिति । शीतोष्णयोश्च व्यत्यास इति ।—शीतां क्रियां कृत्वा उष्णां, उष्णां च कृत्वा शीतामित्यर्थः । रक्तजेऽप्येतदुष्णक्रियाविधानं यद्यपि हेतुप्रत्यनीकं न भवति, तथापि व्याधिप्रभावात् व्याधिप्रत्यनीकत्वमस्य बोध्यम् ॥ ८ ॥

कफज इत्यादौ ।—पाचनात्मकैरिति—आमकफपाचनस्वभावैर्भेषजैर्दशमूलादिभिः । पाययेत् सर्पिः पुराणमिति ।—पुराणस्य सर्पिषः कायमकर्षसंस्कारात् कफहरत्वं बोध्यम्; किंवा कफजे पुराणं वातानुबन्धे विधेयम् । मधूकसारेण—मधूककाष्ठसारचूर्णेन उष्णोदकेनालोडितेन अवपीडः कार्यः ॥ १० ॥

कृष्णेत्यादौ ।—पाकलं—कुष्ठम् ॥ ११ ॥

देवदार्वित्यादौ ।—नलदं—मांसी । सर्पिः पानं पुराणमिति ।—पीयते इति पानं, कर्मणि ल्युट्, तदेव पुराणमिति विशेषणं गम्यते ॥ १२ ॥

नागरककल्कमिश्रं चीरं नस्येन योजितं पुंसाम् ।
नानादोषोद्भूतां शिरोरुजां हन्ति तीव्रतराम् ॥ १४ ॥

नतोत्पलं चन्दनकुष्ठयुक्तम्
शिरोरुजायां सघृतः प्रदेहः ।
प्रपौण्डरीकं सुरदारु कुष्ठम्
यष्ट्याह्वमेला कमलोत्पले च ॥
शिरोरुजायां सघृतः प्रदेहो
लौहैरकापद्मकचोरकैश्च ॥ १५ ॥

शताह्वाद्यं तैलम्—

शताह्वैरण्डमूलोग्रा-वचाव्याघ्रीफलैः शृतम् ।
तैलं नस्यं मरुत्श्लेष्म-तिमिरोर्ध्वगदापहम् ॥ १६ ॥

जीवकाद्यं तैलम्—

जीवकर्षभकौ द्राक्षा-सितायष्टीबलोत्पलैः ।
तैलं नस्यं पयःपक्वं वातपित्तशिरोगदे ॥ १७ ॥

---

त्रिकटुकेत्यादौ ।—जीवक;—पीतसालः । शिरोऽर्त्तिमाशुमिति ।—नानादोषजं शिरोरोगम् । द्रव्याणां तीक्ष्णवीर्य्यत्वात् पित्तजं विहाय योज्योऽयं योग इत्येके ॥१३॥

नागरेत्यादौ ।—गव्यदुग्धं—पलैकं, शुण्ठीचूर्णं—माषकत्रयं प्रक्षिप्य नासया पेयमिति वृद्धाः ॥ १४ ॥

नतेत्यादौ ।—नतं—तगरपादुका, तदभावे शियालोटोपरः । प्रपौण्डरीकमित्यादौ ।—लौहम्—अगुरु ; एरका—होगला ; चोरकं—चोरपुष्पी । प्रपौण्डरीकादियोरेकान्त एको योगः । नियतस्तु उत्पलान्त एको योगः, लौहेत्यादापर इत्याहुः ; तत्र, वाक्यिप्रदेहापेक्षया प्रदेहाधिक्यप्रसङ्गात् ॥ १५ ॥

शताह्वेत्यादौ ।—उग्रा—वचा ; नतं—तगरपादुका ; व्याघ्री—कण्टकारी, तस्याः फलम् । पक्वमिति—मदनफलमित्यन्ये ॥ १६ ॥

जीवकाद्यतैले ।—पयःपक्वमिति—चतुर्गुणदुग्धे सिद्धम् ॥ १७ ॥

बृहज्जीवकाद्यं तैलम्—

जीवकर्षभकौ द्राक्षा मधूकं मधुकं बला ।
नीलोत्पलं चन्दनञ्च विदारी शर्करा तथा ॥
तैलप्रस्थं पचेदेभिः शनैः पयसि षड्गुणे ।
जाङ्गलस्य तु मांसस्य तुलार्द्धस्य रसेन तु ॥
सिद्धमेतद्भवेन्नस्यं तैलमर्द्धावभेदकम् ।
बाधिर्यं कर्णशूलञ्च तिमिरं गलशुण्डिकाम् ॥
वातिकं पैत्तिकञ्चैव शीर्षरोगं नियच्छति ।
दन्तचालं शिरःशूलमर्दितञ्चापकर्षति ॥ १८ ॥

षड्बिन्दु-तैलम्—

एरण्डमूलं तगरं शताह्वा
जीवन्तिरास्ना सहसैन्धवञ्च ।
भृङ्गं विडङ्गं मधुयष्टिका च ।
विश्वौषधं कृष्णतिलस्य तैलम् ॥
आजं पयस्तैलविमिश्रितञ्च
चतुर्गुणे भृङ्गरसे विपक्वम् ।
षड्बिन्दवो नासिकया विधेयाः
शीघ्रं निहन्युः शिरसो विकारान् ॥
च्युतांश्च केशान् पलितांश्च दन्तान्
दुर्बद्धमूलांश्च दृढीकरोति ।
सुपर्णदृष्टिप्रतिमञ्च चक्षु-
र्बाह्वोर्बलञ्चाप्यधिकं ददाति ॥ १९ ॥

---

बृहज्जीवकाद्यतैले ।—मधूकं—मधूकस्य पुष्पं फलं वा । जाङ्गलमांसं—हरिणादि-मांसम् ; तस्य तुलार्द्धस्य रसेनेति—"तुलाद्रव्ये जलद्रोणः" इति वचनात् तुलार्द्धे मांसेऽर्द्धद्रोणजलं दत्त्वा पादशेषो रसः ग्रहणयोग्यो भवति । "षड्गुणं देयम्" इति परिभाषया क्वाथविधिरित्यर्थः । व्यवहारस्य पूर्वव्याख्यया ॥ १८ ॥

क्षयजे क्षयमासाद्य कर्त्तव्यो बृंहणो विधिः।
पाने नस्ये च सर्पिः स्याद्वातघ्नैर्मधुरैः शृतम्॥ २०॥
क्रिमिजे व्योषनक्ताह्व-शिग्रुवीजैश्च नावनम्।
अजामूत्रयुतं नस्यं क्रिमिजे क्रिमिजित् परम्॥ २१॥

अपामार्गतैलम्—

अपामार्गफलव्योष-निशाचवकरामठैः।
सविडङ्गैः शृतं मूत्रे तैलं नस्यं क्रिमिं जयेत्॥ २२॥
नावनं सगुडं विश्वं पिप्पली वा ससैन्धवा।
भुजस्तम्भादिरोगेषु सर्वेषूर्द्ध्वगदेषु च॥ २३॥

---

षड्बिन्दुतैले।—तगरं—पिण्डतगरमूलम्; त्वचं—गुडत्वक्। अजाक्षीरन्तु तैलसममिति; किन्तु सामान्यतस्तिलतैलगोक्षीरेणापि योगोऽयं, तन्त्रान्तरसंवादात्॥ १९॥

क्षयजे क्षयमासाद्येति।—क्षय रक्तादेः क्षयेण शिरोरोगो जातस्तत्र क्षयं बुद्धा तत्प्रशमनीयो बृंहणो विधिः कार्य्य इत्यर्थः। वातघ्नैर्मधुरैः शृतमिति।—वातघ्नो—भद्रदार्व्वादिः, मधुरः,—काकोल्यादिः। तत्र वातघ्नस्य क्वाथः, मधुरगणस्य तु कल्कः। यदाह विदेहः,—"सिद्धं वातहरक्वाथे कल्के मधुरके घृतम्। पाने नस्ये विधातव्यं शिरोरोगे क्षयोद्भवे॥" इति॥ २०॥

क्रिमिज इत्यादौ।—नक्ताह्वशिग्रुवीजैरिति।—नक्ताह्वः,—करञ्जः, वीजपदमुभयत्रापि सम्बध्यते। अजामूत्रयुतमित्यादि।—क्रिमिजे शिरोरोगे यन्नस्यमुक्तं तदजामूत्रयुक्तं क्रिमिजित् स्यादित्यर्थः। उक्तं हि—"मूत्रपित्ताः समुद्दिष्टाः क्रियाः क्रिमिषु योजयेत्" इति। किंवा क्रिमिजित्—विडङ्गम्, अजामूत्रयुक्तं नस्यं परम् उत्कृष्टं स्यादित्यर्थः॥ २१॥

अपामार्गफलमिति षष्ठीसमासः। चवकः,—हाचिया, "चौकसाय" इति लोके। रामठं—हिङ्गु। मूत्रं—गोमूत्रं, तच्च चतुर्गुणम्॥ २२॥

नावनमित्यादौ।—गुडमाषकाष्टौ, शुण्ठीचूर्णं—माषकत्रयम्, उष्णोदकपर्ण्णैकेन गालयित्वा वस्त्रपूतं कृत्वा नस्यं कार्य्यम्। अयं योगो वातानुबन्धे। तथा पिप्पलीचूर्णं—माषकत्रयम्, सैन्धवलवणम्—एकमाषकम्, उष्णोदकं—कर्षैकम्; पूर्ववन्नस्यं कफानुबन्धे॥ २३॥

सूर्य्यावर्त्ते विधातव्यं नस्यकर्म्मादि भेषजम्।
पाययेत् सगुड़ं सर्पिर्घृतपूरांश्च भक्षयेत्॥ २४॥
सूर्य्यावर्त्ते शिरावेधो नावनं क्षीरसर्पिषा।
हितः क्षीरघृताभ्यासस्ताभ्याञ्चैव विरेचनम्॥ २५॥
क्षीरपिष्टैस्तिलैः स्वेदो जीवनीयैश्च शस्यते॥ २६॥
सशर्करं कुङ्कुममाज्यभृष्टं नस्यं विधेयं पवनासृगुत्थे।
भ्रूशङ्खकर्णाक्षिशिरोऽर्द्धमूले दिनाभिवृद्धिप्रभवे च रोगे॥ २७॥
छतमालपल्लवरसे खरमञ्जरिकल्कसिद्धनवनीतम्।
नस्येन जयति नियतं सूर्य्यावर्त्तं सुदुर्वारम्॥ २८॥
दशमूलीकषायस्तु सर्पिःसैन्धवसंयुतः।
नस्येनार्द्धावभेदघ्नः सूर्य्यावर्त्तशिरोऽर्त्तिनुत्॥

---

सूर्य्यावर्त्त इत्यादि।—सुश्रुतस्य।—नस्यकर्म्मादीति।—हेतुभूतदोषविपरीतं नस्य-परिषेकशिरोवस्त्यादिकम्। पाययेदित्यादि।—वातप्रवृद्धे इत्यपरेऽपि गुड़मापक्वा-ज्ये प्रक्षिप्य पाययेदिति। घृतपूरः,—भक्ष्यविशेषः। यथा—"मर्दिता समिता क्षीर-नारिकेल घृतादिभिः। पचनाद्य घृते पक्वा घृतपूरोऽयमुच्यते॥" इति॥ २४॥

सूर्य्यावर्त्त इत्यादि।—सूर्य्यावर्त्ते यथोक्तक्रियाभिः पुनरप्रशमे शिराव्यधः कार्य्य इत्याह। क्षीरसर्पिषेति—क्षीरोत्थसर्पिषा। क्षीरघृताभ्यास इति—क्षीरघृतयो-रभ्यासः। ताभ्यामिति।—क्षीरघृताभ्यां विरेचकद्रव्यसहिताभ्यां विरेचनम्; किंवा विरेचनमिह शिरोविरेचनम्। अत्रापि शिरोविरेचनान्यथानुपपत्त्या शिरोविरेचन-द्रव्ययुक्ते क्षीरघृते बोध्ये॥ २५॥

जीवनीयैश्च क्षीरपिष्टैरित्यन्वयः॥ २६॥

सशर्करमित्यादि।—सशर्करं कुङ्कुमं घृते भृष्टं घृतेनैव पिष्टं समालोड्य च नस्यं विधेयम्। अस्य पर्वो—घृत तो ४, शर्करा मा ४, कुङ्कुम मा ४, पाकोऽयावी किञ्चित् तप्तीकृत्य नस्यं देयम्। दिनाभिवृद्धिप्रभवो रोगः सूर्य्यावर्त्त इत्यर्थः॥ २७॥

छतमालेत्यादी।—छतमालः,—सोनालु, तस्य पल्लवरसः प्रस्थ एकः; खर-मञ्जरी—अपामार्गः, अस्य बीजस्य पलद्वयं कल्कः; नवनीतस्याष्टौ पलानीत्याहुः॥२८॥

दशमूलीत्यादि।—दशमूलीक्वाथः पर्व १, मचेपघृतं मा ७, सैन्धवं मा १, मात्रया

शिरीषमूलकफलैरवपीड़ञ्च योजयेत्।
अवपीड़ो हितो वा स्याद्वचापिप्पलिभिः स्मृतः ॥२९॥
जाङ्गलानि च मांसानि कारयेदुपनाहनम्।
तेनास्य शाम्यति व्याधिः सूर्य्यावर्त्तः सुदारुणः ॥
एष एव विधिः कृत्स्नः कार्य्यश्चार्द्धावभेदके।
शारिवोत्पलकुष्ठानि मधुकञ्चाम्लपेषितम्।
सर्पिस्तैलयुतो लेपः सूर्य्यावर्त्तार्द्धभेदयोः ॥ ३० ॥
पिबेत् सशर्करं क्षीरं नीरं वा नारिकेलजम्।
सुशीतं वापि पानीयं सर्पिर्वा नस्ततस्तयोः ॥ ३१ ॥
अनन्तवाते कर्त्तव्यः सूर्य्यावर्त्तहितो विधिः।
शिराव्यधश्च कर्त्तव्योऽनन्तवातप्रशान्तये ॥
आहारश्च विधातव्यो वातपित्तविनाशनः।
मधुमस्तक-संयाव-घृतपूरैश्च यः क्रमः ॥

---

पेयम्। शिरीषेत्यादि।—शिरीषवल्कलमूलकबीजयोः प्रत्येकं मा ४, पिष्टा वस्त्रेण निष्पीड्य नस्यं विधेयम्; एवं वचापिप्पलीभिरिति। एतच्चावपीडद्वयमतितीक्ष्णत्वात्. यद्यपि सूर्य्यावर्त्ते वातपित्तोत्तरे न युज्यते, तथापि व्याधिप्रत्यनीकत्वात् श्लेष्मिकप्रशमनार्थं वा ज्ञेयमिदम्। अन्ये तु—सूर्य्यावर्त्तविपर्य्यये योगद्वयमित्याहुः। सूर्य्यावर्त्तविपर्य्ययश्च—प्रत्यूषे सायञ्च महान्, मध्ये तु मन्द इति ॥ २९ ॥

जाङ्गलानीति।—अत्र वृद्धवैद्योपदेशात् वातघ्नद्रव्यैर्मांसमुत्स्विद्य सैन्धवं तैलञ्च दत्त्वा उपनाहः कार्य्यः। अम्लपेषितमिति—काञ्जिकपेषितम् ॥ ३० ॥

पिबेदित्यादि।—योगचतुष्टयं सशर्करमित्यनुवर्त्तयितुं युज्यत इति निश्चयः। तयोरिति—सूर्य्यावर्त्तार्द्धभेदकयोः ॥ ३१ ॥

अनन्तवातेत्यादि।—सुश्रुतस्य।—मधुमस्तकेति—मधुमस्तकादयो भक्ष्यविशेषाः सूदशास्त्रेऽनुसन्धेयाः। मधुमस्तः,—पोलिकाकारो मधुगर्भः सितावेष्टितो भक्ष्यविशेष इति बकुल.; मधुन जातमिति चक्रः। संयावो यथा—"समितामम्बुदुग्धेन मर्द्दयित्वा सुशोभनाम्। पचेद्घृतोत्तरे खण्डे चिपेद्वाण्डे नवे ततः॥ संयावोऽसौ सिताचूर्णैः खण्डेलामरिचार्द्रकैः॥" इति। घृतपूरः,—भक्ष्यविशेषः, घृतपूरेति लोके। यथा—

सूर्य्यावर्त्ते हितं यत् तच्छङ्खके स्वेदवर्जितम्।
क्षीरसर्पिः प्रशंसन्ति नस्तःपानञ्च शङ्खके॥
शतावरीं कृष्णतिलान् मधुकं नीलमुत्पलम्।
दूर्वां पुनर्नवाञ्चापि लेपं साध्ववचारयेत्॥
शीततोयावसेकांश्च क्षीरसेकांश्च शीतलान्।
कसेरुक्षीरिवृक्षाणां शङ्खकस्य प्रलेपनम्॥
क्रौञ्चकादम्बहंसानां शराय्याः कच्छपस्य च।
रसैः संहंहितस्याथ तस्य शङ्खकसन्धिजाः।
ऊर्द्धे स्थिताः शिराः प्राज्ञो भिन्द्यादेव न ताडयेत्॥ ३२॥
शिरःकम्पेऽमृतारास्ना-बलास्नेहसुगन्धिभिः।
स्नेहस्वेदादि सततं शिरोवस्तिश्च शस्यते॥ ३३॥

यष्ट्याद्यं घृतम्—

यष्टीमधुबलारास्ना-दशमूलाम्बुसाधितम्।
मधुरैश्च घृतं सिद्धमूर्द्धजत्रुगदापहम्॥ ३४॥

---

"नर्दितः शमितापित्तः क्षीरेणैव विशोधितः। नवगात्र घृते पक्षी घृतपूरीष-सुसम्:॥" इति। अथ इत्याहारक्रम'।—क्षीरोत्थं सर्पिः क्षीरसर्पिः; नस्त पानं—नासिकया पानं, किंवा नस्यं पानञ्च। तथाच सुश्रुते—क्षीरसर्पिः प्रशंसन्ति नस्ये पाने च शङ्खके" इति। क्षीरिवृक्षेति—क्षीरिवृक्षा वटादयः। संहंहितस्येति—मांसमांसोपचयस्य। सन्धिजाः शिरा भिन्द्यादित्यत्र सूच्येति शेषः। न ताडयेदिति—कुठारिकयेति शेषः, सन्धिभङ्गभयादिति भाव'॥ ३२॥

शिरःकम्प इत्यादौ।—स्नेहः,—घृतादिः, सुगन्धि',—अगुर्वादिः। सुगन्धिरित्यनन्तर लेप इति शेष'। शिरोवस्तिविधि पूर्वमुक्त एव॥ ३३॥

यष्टिमध्वित्यादि।—मधुरै,—काकोल्यादिभि कल्कैरित्यर्थः। घृत—प्रस्थैकाम्; क्वाथार्थे यष्ट्यादिदशमूलान्तानां मिलित्वा चतुःपलिपलं, जलद्रोणैक, शेषं शरावषोडश, कल्कार्थं—काकोली यष्टिमधु काकनासिका मेदा जीवक ऋषभक पुण्डरीकाकाष्ठ द्राक्षा ऋद्धि वृद्धि वंशरोचना मुगानी माषाणी क्षीरकाकोली पद्मकाष्ठ गुडूची प्रत्येक क २ प्रक्षेप्यम्॥ ३४॥

मयूराद्यं घृतम्—

दशमूलबलारास्ना-मधुकैस्त्रिपलैः सह।
मयूरं पक्षपित्तान्त्र-शकृत्पादास्यवर्जितम्॥
जले पक्त्वा घृतप्रस्थं तस्मिन् क्षीरसमं पचेत्।
मधुरैः कार्षिकैः कल्कैः शिरोरोगार्दितापहम्॥
कर्णनासाक्षिजिह्वास्य-गलरोगविनाशनम्।
मयूराद्यमिदं ख्यातमूर्द्ध्वजत्रुगदापहम्॥
आखुभिः कुक्कुटैर्हंसैः शशैश्चापि हि बुद्धिमान्।
कल्केनानेन विपचेत् सर्पिरूर्द्ध्वगदापहम्॥
दशमूलादिना तुल्यो मयूर इह दृश्यते।
अन्ये त्वाकृतिमानेन मयूरग्रहणं विदुः॥ २५॥

प्रपौण्डरीकाद्यं तैलम्—

प्रपौण्डरीकमधुक-पिप्पलीचन्दनोत्पलैः।
सिद्धं धात्रीरसे तैलं नस्येनाभ्यञ्जनेन वा।
सर्वानूर्द्ध्वगदान् हन्ति पलितानि च शीलितम्॥ २६॥

---

दशमूलेत्यादि।—दशमूलस्य प्रत्येकं पलत्रयम्, एवं बलादीनां त्रयाणामपि; तेन मिलित्वा जनचत्वारिंशत्पलानि भवन्ति। तथा मयूरमांसमपि—पक्षपादादिरहितम् जनचत्वारिंशत्पलं ग्राह्यम्। एवं मिलित्वा यावत् क्वाथ्यं भवति, तत्र "क्वाथ्याच्चतुर्गुणं वारि" इत्यादि परिभाषया जलादिव्यवस्था; एतदेवाह "दशमूल्यादिना तुल्यो मयूरः" इत्यादि। अन्ये तु—दशमूलादिभिः प्रत्येकं त्रिपलमानैः सह तरुणमयूरमुण्डकमेकं पक्षादिवर्जितं जलद्रोण एव पचेत्; जलद्रोणोऽत्र पादशेषः, स च पचनीयघृतापेक्षया चतुर्गुणो भवतीत्याहुः। एतदेवाह—"अन्ये त्वाकृतिमानेन मयूरग्रहणं विदुः" इति; व्यवहारस्त्वनेनैव। मधुरैरिति—जीवनीयदशकैः; जीवनीयानि च मधुरत्वमधुरविपाकत्वप्रकर्षान्मधुरशब्देनोच्यन्ते। एतन्मायूरघृतं तथा वक्ष्यमाणञ्च, मयूरस्थाने मूषिकादीन् दत्त्वापि कार्य्यमित्याहुः। आखुना मयूरापेक्षया अल्पगुणेनापि तथैकेन स्नेहसाधनं कर्त्तव्यमित्याहुः॥ २५॥

प्रपौण्डरीकेत्यादि।—वाग्भटस्य।—चन्दनोत्पलैरित्यत्र कल्कैरिति शेषः। धात्रीरसश्चात्र तैलापेक्षया चतुर्गुणः॥ २६॥

महामायूराद्यं घृतम्—

शतं मयूरमांसस्य दशमूलबलातुलाम्।
द्रोणेऽम्भसः पचेत् खुत्वा तस्मिन् पादस्थिते ततः॥
निषिच्य पयसो द्रोणं पचेत् तत्र घृताढ़कम्।
प्रपौण्डरीकवर्गोक्तैर्जीवनीयैश्च भेषजैः॥
मेधाबुद्धिस्मृतिकरमूर्द्ध्वजत्रुगदापहम्।
मायूरमेतन्निर्दिष्टं सर्वानिलहरं परम्॥
मन्याकर्णशिरोनेत्र-रुजापस्मारनाशनम्।
विषवातामयश्वास-विषमज्वरकासनुत्॥ १७॥

इति शिरोरोग-चिकित्सा।

---

## अथासृग्दर-चिकित्सा।

दध्ना सौवर्चलाजाजी-मधुकं नीलमुत्पलम्।
पिबेत् क्षौद्रयुतं नारी वातासृग्दरपीड़िता॥ १॥

---

शतमित्यादि।—दशमूलबलामूलयोर्मिलिता तुला। द्रोण इति पदमावृत्य उभयत्रापि योज्यं, तेन मयूरमांसशतपले एको जलद्रोणः, दशमूलबलातुलायामपर इति द्रोणद्वयमम्भसः। पयसो दुग्धस्य द्रोणं निषिच्य दत्त्वा पचेदिति। एतेन चतुर्गुणः पाकः। प्रपौण्डरीकवर्गीयैरिति।—प्रपौण्डरीकमधुकपिप्पलीचन्दनोत्पलैरित्यर्थः। जीवनीयैरिति—जीवनीयदशकैः। तत्रोऽत्र यष्टिमधुकस्य भागद्वयं ग्राह्यम्॥ १७॥

इति शिरोरोग चिकित्सा विवृतिः।

---

स्त्रीपुंसां साधारणव्याधीनां तथा पुरुषनियतानामुपदंशादीनां चिकित्सितां, सम्प्रति स्त्रीनियतानां प्रदरादीनां चिकित्सितमभिधातुमुपक्रमते, दध्नेत्यादि।—

पिवेदैणेयकं रक्तं शर्करामधुसंयुतम्।
वासकस्वरसं पैत्ते गुडूच्या रसमेव वा ॥ २ ॥
रोहीतकान्मूलकल्कं पाण्डरेऽसृग्दरे पिवेत्।
जलेनामलकाद्बीज-कल्कं वा ससितामधु।
धातक्याश्चाक्षमात्रं वा आमलक्या मधुद्रवम् ॥
काकजानुकमूलं वा मूलं कार्पासमेव वा।
पाण्डुप्रदरशान्त्यर्थं पिवेत् तण्डुलवारिणा ॥ ३ ॥
अशोकवल्कलक्वाथ-शृतं दुग्धं सुशीतलम्।
यथावलं पिवेत् प्रातस्तीव्रासृग्दरनाशनम् ॥ ४ ॥

दार्वीरसाञ्जनवृषाब्दकिराततिक्त-
भल्लातकैरवकृतो मधुना कषायः।
पीतो जयत्यतिबलं प्रदरं सशूलम्
पीतासितारुणविलोहितनीलशुक्लम् ॥ ५ ॥

---

द्रवः कर्षद्वयं; सौवर्चलस्य माषकमेकम्; अजाज्यादीनां प्रत्येकं माषकत्रयम्; मधुनस्तु माषकचतुष्टयमित्याहुः ॥ १ ॥

अतिवहुलुतशोणितानां चिकित्सामाह, पिवेदित्यादि।—एणस्येदम् ऐणेयं, स्वार्थे कः। एणस्य रक्तं कुशमूलशीतेन मर्दयित्वा पेयं, तेन स्वादुता न स्यादित्याहुः। शर्करामधुसंयुतमिति पदं वासकस्वरस-गुडूचीस्वरसयोरपि योज्यं, हारीतसंवादात् ॥ २ ॥

रोहीतकादित्यत्रापि ससितामध्विति योज्यम्। धातक्या इत्यादि।—धातक्याः कल्कमक्षमात्रं मधुद्रवं, तथामलक्या वा कल्कमक्षमात्रं मधुद्रवं पिवेत्। मधुद्रवो यत्र कल्के तत् मधुद्रवम्। काकजानुकः,—काकजङ्घा ॥ ३ ॥

अशोकेत्यादौ।—षडङ्गपरिभाषयाऽशृतमशोकवल्कलक्वाथं गृहीत्वा तेन चतुर्गुणेन क्षीरं साध्यमित्यर्थः। वृद्धास्तु क्वाथमकृत्वैव क्षीरसाधनपरिभाषया व्यवहरन्ति ॥ ४ ॥

दार्व्यादौ।—वृषः,—वासकः; तिक्तं—शुष्कतिक्तप्रलाटु; कैरवं—कुमुदम्। "भल्लातकासहत्वे तु रक्तचन्दनमिष्यते" अनेन व्यवहरन्ति ॥ ५ ॥

रसाञ्जनं तण्डुलीयस्य मूलं क्षौद्रान्वितं तण्डुलतोयपीतम्।
असृग्दरं सर्वभवं निहन्ति श्वासञ्च भार्गी सह नागरेण ॥

कुशमूलं समुद्धृत्य पेषयेत् तण्डुलाम्बुना।
एतत् पीत्वा त्र्यहाचारो प्रदरात् परिमुच्यते ॥
क्षौद्रयुक्तं फलरसं काष्ठोडुम्बरजं पिबेत्।
असृग्दरविनाशाय सशर्करपयोऽन्नभुक् ॥ ६ ॥

प्रदरं हन्ति बलाया मूलं दुग्धेन मधुयुतं पीतम्।
कुशवाट्यालकमूलं तण्डुलसलिलेन हरति रक्ताख्यम्।
शमयति मदिरापानं तदुभयमपि रक्तसंश्रयश्वेताख्यौ ॥ ७ ॥

गुडेन बदरीचूर्णं मोचमामं तथा पयः।
पीता लाक्षा च सघृता पृथक् प्रदरनाशनाः ॥ ८ ॥
रक्तपित्तविधानेन प्रदरांश्चाप्युपाचरेत्।
असृग्दरे विशेषेण कुटजाष्टकमाचरेत् ॥ ९ ॥

पुष्यानुग चूर्णम्—

पाठाजम्ब्वाम्रयोर्मध्यं शिलाभेदरसाञ्जनम्।
अम्बष्ठकीमोचरस-समङ्गापद्मकेशरान् ॥

---

रसाञ्जनमित्यादौ।—तण्डुलीयस्य मूलं, लोहिततण्डुलीयस्य मूलं गृह्यते। भेषजद्वयमिदं प्रत्येकं मिलितञ्च बोध्यं, लिङ्गसारकारीयमवादात्। सर्वभवमिति—वाताद्येकदोषभवं सर्वं, न तु सान्निपातिकं, तस्यासाध्यत्वात्। उक्तं हि—"सक्षौद्रसर्पिर्हरितालवर्णं मज्जप्रकाशं कुणपं विदोषम्। तच्चाप्यसाध्यं प्रवदन्ति तज्ज्ञा न तत्र कुर्वीत भिषक् चिकित्साम् ॥" इति। "श्वासञ्च भार्गी सह नागरेण" इति तु शोकानुरोधाल्लिखितम् ॥ ६ ॥

रक्ताख्यमिति—रक्तप्रदरम्।—मदिरापानमिति—मदिरया पीयते कर्मणि ल्युट्, तेन मदिरापीतमित्यर्थः। तदुभयमिति—कुशवाट्यालकयोर्मूलम् ॥ ७ ॥

गुडेनेत्यादि।—योगचतुष्टयम्। गुडेन बदरीचूर्णमिति—वातकफे। मोचम्—आममोचम्, अपक्वकदलीफलचूर्णञ्च सर्वं एकः; एतच्च कफपित्ते। तथा पय इति।—केवलं क्षीरं वातपित्ते ॥ ८ ॥

रक्तपित्तविधानेनेति—यथोक्तरक्तपित्तविधानेन ॥ ९ ॥

वाह्लीकातिविषामुस्तं विल्वं लोध्रं सगैरिकम् ।
त्रिफलां मरिचं शुण्ठीं मृद्वीकां रक्तचन्दनम् ॥
कट्वङ्गवत्सकानन्ताधातकीमधुकार्जुनम् ।
पुष्येणोद्धृत्य तुल्यानि सूक्ष्मचूर्णानि कारयेत् ॥
तानि क्षौद्रेण संयुज्य पाययेत् तण्डुलाम्बुना ।
असृग्दरातिसारेषु रक्तं यच्चोपवेश्यते ॥
दोषागन्तुकृता ये च बालानां तांश्च नाशयेत् ।
योनिदोषं रजोदोषं श्वेतं नीलं सपीतकम् ॥
स्त्रीणां श्यावारुणं यच्च तत् प्रसह्य निवर्त्तयेत् ।
चूर्णं पुष्यानुगं नाम हितमात्रेयपूजितम् ।
अम्बष्ठा दक्षिणे ख्याता गृह्णन्त्यन्ये तु लक्ष्मणाम् ॥ १० ॥

मुद्गाद्यं घृतम्—

मुद्गमाषस्य निर्यूहे रास्नाचित्रकनागरैः ।
सिद्धं सपिप्पलीविल्वैः सर्पिः श्रेष्ठमसृग्दरे ॥ ११ ॥

शीतकल्याणकं घृतम्—

कुमुदं पद्मकोशीरं गोधूमो रक्तशालयः ।
मुद्गपर्णी पयस्या च काश्मरी मधुयष्टिका ॥
बलातिबलयोर्मूलमुत्पलं तालमस्तकम् ।
विदारी शतमूली च शालपर्णी सजीवका ॥

---

पुष्यानुगचूर्णे।—जम्ब्वाम्रयोर्मध्यं—जम्ब्वाम्रयोरस्थि। वाग्भटेऽपि जम्ब्वाम्रयोरस्थि युतम्। शिलाभेदः,—पाषाणभेदी, अम्बष्ठकी—दक्षिणापथे ख्याता, तदभावे पाठामेव द्विगुणां गृह्णन्ति; लक्ष्मणामित्यन्ये। पद्मकेशरं—पद्मकिञ्जल्कः। वाह्लीकं—कुङ्कुमम्; विल्वं—विल्वशलाटु। केचित् मृद्वीकाम् इति स्थाने मार्द्वीकं पठन्ति, तत्र मार्द्वीकं—देवदारुवाचकम् इति। पुष्येणेति—पुष्यनक्षत्रेण ॥ १० ॥

मुद्गेत्यादौ।—मुद्गमाषाभ्यां निर्यूहः क्वाथः। रास्नादिपञ्चकस्य कल्कः। विल्वं—विल्वशलाटुकम् ॥ ११ ॥

फलं वपुषवीजानि प्रत्यग्रं कदलीफलम्।
एषामर्द्धपलान् भागान् गव्यं क्षीरं चतुर्गुणम्॥
पानीयं द्विगुणं दत्त्वा घृतप्रस्थं विपाचयेत्।
प्रदरे रक्तगुल्मे च रक्तपित्ते हलीमके॥
बहुरूपश्च यत् पित्तं कामलावातशोणिते।
अरोचके ज्वरे जीर्णे पाण्डुरोगे मदे भ्रमे॥
तरुणी चाल्पपुष्पा च या च गर्भं न विन्दति।
अहन्यहनि च स्त्रीणां भवति प्रीतिवर्द्धनम्।
शीतकल्याणकं नाम परमुक्तं रसायनम्॥ १२॥

बृहच्छतावरीघृतम्—

शतावरीरसप्रस्थं क्षोदयित्वावपीड़येत्।
घृतप्रस्थसमायुक्तं क्षीरं द्विगुणितं भिषक्॥
अत्र कल्कानिमान् दद्यात् स्थूलोदुम्बरसम्मितान्।
जीवनीयानि यान्यष्टौ यष्टीचन्दनपद्मकैः॥
श्वदंष्ट्रा चात्मगुप्ता च बला नागबला तथा।
शालपर्णी पृश्निपर्णी विदारी शारिवाद्वयम्॥
शर्करा च समा देया काश्मर्य्याश्च फलानि च।
सम्यक् सिद्धन्तु विज्ञाय तद्घृतञ्चावतारयेत्॥
रक्तपित्तविकारेषु वातपित्तक्षतेषु च।
वातरक्तं क्षयं श्वासं हिक्कां कासञ्च दुस्तरम्॥

---

कुमुदमित्यादि।—कुमुदं—कह्लारपुष्पम्; पद्मकं—पद्मकाष्ठम्; रक्तमरिष्ट-कुसुमम्; पयस्या—क्षीरकाकोली, काश्मरी—गाम्भारी, तस्याः फलं, मूलमित्यर्थः, अतिबला—पीतबलतण्डुला; जीवकं—जीवनीयगणमध्ये पठितं सविद्रव्यम्। फलं—त्रिफला। वपुषवीजं—त्रापुषबीजम्। प्रत्यग्रमिन्दभिनवम्, अपक्वमित्यर्थः॥ १२॥

बृहच्छतावरीघृते।—शतावरीं क्षोदयित्वा रसप्रस्थमवपीड़येत्—अवपीड्य गृह्णीयात्

अङ्गदाहं शिरोदाहं रक्तपित्तसमुद्भवम् ।
असृग्दरं सर्वभवं मूत्रकृच्छ्रं सुदारुणम् ।
एतान् रोगान् शमयति भास्करस्तिमिरं यथा ॥ १२ ॥

इत्यसृग्दर-चिकित्सा ।

---

## अथ योनिव्यापच्चिकित्सा ।

योनिव्यापत्सु भूयिष्ठं शस्यते कर्म वातजित् ।
वस्त्यभ्यङ्गपरीषेक-प्रलेपाः पिचुधारणम् ॥ १ ॥
वचोपकुञ्चिकाजाजी-कृष्णावृषकसैन्धवम् ।
अजमोदां यवक्षारं चित्रकं शर्करान्वितम् ॥
पिष्ट्वा प्रसन्नयालोड्य खादेत् तद्घृतभर्जितम् ।
योनिपार्श्वार्त्तिहृद्रोग-गुल्मार्शोविनिवृत्तये ॥ २ ॥
गुडूचीत्रिफलादन्ती-क्वाथेन परिषेचनम् ।

---

इत्यर्थः । स्थूलोदुम्बरसम्मितान् इति प्रत्येकं कर्षसम्मितानित्यर्थः । जीवनीयानि यान्यष्टाविति—अष्टवर्ग इत्यर्थः, तानि च,—जीवकर्षभकौ मेदामहामेदाकाकोली-क्षीरकाकोली-ऋद्धिवृद्धय इति । असृग्दरं सर्वभवमिति—पूर्ववत् व्याख्येयम् ॥ १२ ॥

इत्यसृग्दर-चिकित्सा-विवृतिः ।

---

प्रदरोऽपि योनिव्यापद्विशेष इति योनिव्यापत्सामान्यादनन्तरं योनिव्यापच्चिकित्सितमुच्यते, योनिव्यापत्स्वित्यादि ।—कर्म वातजिदिति—वस्तिरुत्तरवस्तिश्च ॥१॥

वचेत्यादि ।—वाग्भटस्य ।—उपकुञ्चिका—कृष्णजीरकम्, वृषकः,—वासकमूलम्, प्रसन्ना—मदिराया उपरिस्थः फेनभागः; एभ्यो वचादिभ्यः समभागपिष्टेभ्यः तो २, प्रसन्ना पल २, आलोड्य घृतकर्षेण सन्ताप्य पेयम् ॥ २ ॥

नतवार्त्ताकिनीकुष्ठसैन्धवामरदारुभिः ।
तैलात् प्रसाधिताद्धार्य्यः पिचुर्योनौ रुजापहः ॥
पित्तलानान्तु योनीनां सेकाभ्यङ्गपिचुक्रियाः ।
शीताः पित्तहराः कार्य्याः स्नेहनार्थं घृतानि च ॥ ३ ॥
योन्यां बलासदुष्टायां सर्वं रूक्षोष्णमौषधम् ।
पिप्पल्या मरिचैर्माषैः शताह्वाकुष्ठसैन्धवैः ।
वर्त्तिस्तुल्या प्रदेशिन्या धार्य्या योनिविशोधनी ॥ ४ ॥
हिंस्राकल्कन्तु वातार्त्ता कोष्णमभ्यज्य धारयेत् ।
पञ्चवल्कस्य पित्तार्त्ता श्यामादीनां कफोत्तरा ॥ ५ ॥
मूषिकमांससंयुक्तं तैलमातपभावितम् ।
अभ्यङ्गाद्धन्ति योन्यर्शः स्वेदस्तन्मांससैन्धवैः ॥ ६ ॥
गोपित्ते मत्स्यपित्ते वा क्षौमं त्रिःसप्तभावितम् ।
मधुना किण्वचूर्णं वा दद्यादचरणापहम् ।
स्रोतसां शोधनं कण्डूक्लेदशोथहरञ्च तत् ॥ ७ ॥

---

नतेत्यादि ।—वाग्भटस्य ।—वार्त्ताकिनी—कण्टकारी, शीतवार्त्ताकुरित्यन्ये । अमरदारु—देवदारु । एभिर्नतादिभिः कल्कैः तैलं साध्यम्; तत्रच चतुर्गुणमिति । पिचुरिति—भेषजसाधितस्नेहप्लुतः पिचुः ॥ २ ॥

योन्यामित्यादौ ।—माषैरिति—माषकलायैः । तुल्येति—परिणाहेन दैर्घ्येण च । वर्त्तिरिति—वस्त्रेण, वस्त्रं विना वा ॥ ४ ॥

हिंस्रेत्यादि ।—हिंस्रा—कालाकडामूलम् । पञ्चवल्कस्य वटोडुम्बराश्वत्थप्लक्षवेतसस्य । श्यामादीनामिति—रोगभिषग्जितीये श्यामात्रिवृन्मधुरसेत्यादिना उक्तानाम् ॥ ५ ॥

मूषिकेत्यादि ।—मूषिकायाः मांसं तैलात् पादिकं, तच्च द्रवद्वैगुण्येन कार्य्यः । आतपभावितमिति—सप्ताहम्; तन्मांसं—मूषिकमांसं, सैन्धवचूर्णावचूर्णितमेरण्डादिपत्रे कृत्वा योनिं स्वेदयेत् ॥ ६ ॥

गोपित्त इत्यादौ ।—क्षौमं—सूक्ष्मशणवल्कम् । किण्वं—सुराबीजम् । मधुना किण्वचूर्णमिति—तृतीयो योगः । अचरणा नाम योनिव्यापत् ॥ ७ ॥

यामिन्यां पूतियोन्याञ्च कर्त्तव्यः स्वेदनो विधिः ।
क्रमः कार्य्यस्ततः स्नेह-पिचुभिस्तर्पणं भवेत् ॥ ८ ॥
शल्लकीजिङ्गिनीजम्बू-धवत्वक्पञ्चवल्कलैः ।
कषायैः साधितः स्नेहः पिचुः स्याद्विप्लुतापहः ॥ ९ ॥
कर्णिन्यां वर्त्तिका कुष्ठ-पिप्पल्यर्काग्रसैन्धवैः ।
बस्तमूत्रकृता धार्य्या सर्वञ्च श्लेष्मनुद्धितम् ॥
त्रैवृतं स्नेहनं स्वेद उदावर्त्तानिलार्त्तिषु ।
तदेव च महायोन्यां स्रस्तायाञ्च विधीयते ॥ १० ॥

आखोर्मांसं सपदि बहुधा खण्डखण्डीकृतं यत्
तैले पाच्यं द्रवति नियतं यावदेतन्न सम्यक् ।
तत्तैलाक्तं वसनमनिशं योनिभागे दधाना
हन्ति व्रीडाकरभगफलं नात्र सन्देहबुद्धिः ॥ ११ ॥

शतपुष्पातैललेपाद्बदरीदलजात् तथा ।
पेटिकामूललेपाच्च योनिर्भिन्ना प्रशाम्यति ॥ १२ ॥

---

यामिन्यामित्यादौ ।—पूतियोनिशब्देन उपप्लुता परिप्लुता चोच्यते ॥ ८ ॥

शल्लकीत्यादि ।—शल्लकीजिङ्गिन्यौ—स्वनामख्याते । त्वक्शब्दः शल्लक्यादिभिः प्रत्येकं सम्बध्यते । अत्र कषायचतुर्गुणः । चक्रस्य एवायं स्नेहः । पिचुरिति—एतत्तैलाप्लुतः पिचुः ॥ ९ ॥

कर्णिन्यामित्यादौ ।—कुष्ठादिभिर्वर्त्तिः धार्य्या इति शेषः । अर्काग्रम्—अर्क-पल्लवः । त्रैवृतं स्नेहनमिति—सर्पिस्तैलवसात्मकस्नेहः । उदावर्त्ता—उदावर्त्ताख्या योनिव्यापत् । अनिलार्त्तिः,—वातिकी योनिव्यापदित्यर्थः । तदेवेति—त्रैवृतं स्नेहनम् । विधीयत इति ।—अनुवासनोत्तरबस्तिविषयेत्यर्थः, चरकसंवादात् ॥ १० ॥

आखोरित्यादौ ।—सपदीति—सद्यस्कमांसग्रहणार्थम् । एतन्मांसं यावदिति—खरत्वभावात् न द्रवति द्रवतां न गच्छति तावदेव पाचनीयमित्यर्थः । भगफलं—कन्दरोगम् ॥ ११ ॥

शतपुष्पेत्यादि ।—योगद्वयम् । तैलपिष्टशतपुष्पया लेप इत्यर्थः । पेटिका—झापीटुपरीति ख्याता । भिन्नेति—विदीर्णा ॥ १२ ॥

सुवर्चीमूललेपेन प्रविष्टान्तर्बहिर्भवेत् ।
योनिर्मूषवसाभ्यङ्गाद्बहिःस्रुता प्रविशेदपि ॥ १३ ॥
लोध्रतुम्बीफलालेपो योनिदार्ढ्यं करोति च ।
वेतसमूलनिःक्वाथ-चालनेन तथैव च ।
मूषिका-वादुलिवसा-म्रक्षणं योनिदार्ढ्यदम् ॥ १४ ॥
वचा नीलोत्पलं कुष्ठं मरिचानि तथैव च ।
अश्वगन्धा हरिद्रा च गाढीकरणमुत्तमम् ॥ १५ ॥
मदफलमधुकर्पूर-पूरितं भवति कामिनीजनस्य ।
चिरगलितयौवनस्य वराङ्गमतिगाढसुकुमारम् ॥ १६ ॥
पद्मपञ्चकचूर्णाढ्य-मालतीकुसुमैर्धृतम् ।
रविपक्वमन्यथा वा योनिगन्धविनाशनम् ॥ १७ ॥
इक्ष्वाकुबीजदन्ती-चपलागुडमदनकिण्वयवक्षारैः ।
सस्नुकक्षीरैर्वर्तिर्योनिगता कुसुमसञ्जननी ॥ १८ ॥

---

सुवर्चीत्यादि ।—सुवर्चीमूललेपेन—कारवेल्लमूललेपेनेत्यर्थः । प्रविष्टेति—अन्तःप्रविष्टा, अन्तर्मुक्ता योनिर्बहिर्भवतीत्यर्थः । योनिरित्यादौ ।—मूष,—मूषिकः, तस्य वसा—मांसस्नेहः । निःसृतेति—बहिर्निःसृता । इयमेव प्रसंसिनीत्युच्यते ॥ १३ ॥

लोध्रेत्यादौ ।—तुम्बी—अलाबु, तस्याः फलम् । तथैव चेति—दार्ढ्यकृदित्यर्थः । मूषिकेत्यादौ ।—वादुली—बादुर इति ख्याती दिवान्धः पक्षी ॥ १४ ॥

वचेत्यादि ।—वचादि हरिद्रान्त एको योगः । वचादिहरिद्रान्तैर्लेपोऽथचूर्णं वा ॥ १५ ॥

मदेत्यादि ।—मदः,—कस्तूरी, फलं—जातीफलं, किंवा मदफलं—मदनफलमेव । एतैर्मधुना पिष्टैर्योनिप्रपूरणम् ॥ १६ ॥

पद्मपञ्चकेत्यादि ।—पद्मानाम् आम्रजम्बूकपित्थबीजपूरकबिल्वानां पञ्चवाः । एषां कल्कः । रविपक्वमिति—द्रवं विनैव, अन्यथा वा इति—अग्निपक्वम्, अस्मिन् पक्षे जलं चतुर्गुणम् ॥ १७ ॥

इदानीमार्तवनाशे सति आर्तवोत्पादनविधिमाह, इक्ष्वाकुबीजेत्यादि ।—इक्ष्वाकु,

सकाञ्जिकं जवापुष्पं भृष्टं ज्योतिष्मतीदलम् ।
दूर्वायाः पिष्टकं प्राश्य वनिता त्वार्त्तवं लभेत् ॥ १९ ॥
धात्र्यञ्जनाभयाचूर्णं तोयपीतं रजो हरेत् ।
शैलुच्छदमिश्रपिष्टं भद्रयवश्च तदर्थकृत् ॥ २० ॥
पुष्योद्धृतं लक्ष्मणायाश्चक्राङ्कायास्तु कन्यया ।
पिष्टं मूलं दुग्धघृतमसौ पीतं तु पुत्रदम् ॥ २१ ॥
क्वाथेन हयगन्धायाः साधितं सघृतं पयः ।
ऋतुस्नाताऽबला पीत्वा धत्ते गर्भं न संशयः ॥ २२ ॥
पिप्पल्यः शृङ्गवेरञ्च मरिचं केशरं तथा ।
घृतेन सह पातव्यं वन्ध्याऽपि लभते सुतम् ॥ २३ ॥

---

—तिलाऽम्लाद्युः ; चपला—पिप्पली । यवो य्र मा ८, सुधीपीर मा ८, षप्री पश्चा वर्त्तिः कार्य्या । कुसुमं—रक्तम्, तज्जननी—कुसुमसञ्जननी ॥ १८ ॥

सकाञ्जिकमित्यादि ।—जवापुष्पम्—ओड्रपुष्पम् । ज्योतिष्मतीदलमपि भृष्टं पीष्यम् । दूर्वायाः पिष्टकमिति ।—दूर्वातण्डुलाभ्यां कृतं पिष्टकम् । योगत्रयमेतत् ॥ १९ ॥

इदानीमार्त्तवहरयोगानाह, धात्रीत्यादि ।—अञ्जनं—रसाञ्जनं, धात्र्यादीनां मिलितचूर्णानां तोयकेन पीष्यम् । शैलुच्छदेति—शैलुर्बहुवारः, तस्य छदः पत्रं, शैलुपत्रतण्डुलचूर्णाभ्यां कृतं पिष्टकमित्यर्थः ॥ २० ॥

इदानीमार्त्तवे पुत्रप्रदयोगानाह, पुष्येत्यादि ।—चक्राङ्काया इति लक्ष्मणाया विशेषणम् ; तत्पत्रस्य चक्राङ्कितत्वात् । दुग्धघृतपीतमिति—दुग्धेन घृतेन वा ऋतुस्नानानन्तरं दिनत्रयं पिबेत् ; अथवा नासापुटेन बिन्दुचतुष्टयं पिबेदित्यर्थः । अन्ये तु—लक्ष्मणाया मूलं मा १, दुग्ध तो २ ; घृत तो १, ऋतुस्नानानन्तरं दिनत्रयं पिबेदित्याहुः ॥ २१ ॥

क्वाथेनेत्यादि ।—क्वाथेन यथा क्षीरसाधनं तत् प्रागेवोक्तं, घृतञ्च प्रक्षेप्यम् । हयगन्धा—अश्वगन्धा, तस्या मूलम् ; षडङ्गपरिभाषया जलाधिकं दत्त्वा अर्द्धशृतं क्षीराच्चतुर्गुणं दत्त्वा पश्चाद् घृतं प्रक्षिप्य पिबेत् । अथवा अश्वगन्धा मूल मा ८, जल पल ४, शेष पल १, घृत मा ८, इत्याद्य क्षीरसाधनपरिभाषया व्यवहरन्ति ॥ २२ ॥

पिप्पल्य इत्यादौ ।—शृङ्गवेरं—शुण्ठी ॥ २३ ॥

स्वर्णस्य रूप्यकस्य च चूर्णं ताम्रस्य चाज्यसंमिश्रे।
पीते शुद्धे स्त्रीले भेषजयोगाद्दधेद्गर्भः॥ २४॥
कृत्वा शुचौ स्नानं विलङ्घ्य दिवसान्तरे ततः प्रातः।
स्नात्वा द्विजाय दत्त्वा भक्त्या सम्पूज्य लोकनाथेशम्॥
श्वेतबलाङ्घ्रिकयष्टिं कर्षं कर्षं फलन्तु शर्करायाः।
पिष्टैकवर्णजीवद्वत्साया गोस्तु दुग्धेन॥
समधिकघृतेन पीतं मात्र दिने देयमशनमन्यच्च।
क्षुधिते सदुग्धमन्नं दद्यादा पुरुषसन्निधेस्तस्याः॥
समदिवसे शुभयोगे दक्षिणपार्श्वावलम्बिनी धीरा।
त्यक्तस्त्र्यन्तरसङ्ग-प्रहृष्टमनसोऽतिहृद्यधातोश्च।
पुरुषस्य सङ्गमावाप्नुते पुत्रं ततो नियतम्॥ २५॥
गोष्ठजातवटस्य प्रागुत्तरशाखजे शुभे।
शुङ्गे माषौ तथा गौरसर्षपौ दधियोजितौ॥

---

स्वर्णस्येत्यादौ।—चाज्यसंमिश्र इति सर्वत्र योज्यम्। मारितसुवर्णचूर्णस्य माषैक, गव्यघृतस्य कर्षद्वयम् चालोड्य पेयम्। एवं रजतताम्रयोरपि। तद्भेषजयोगात् शुद्धे पीते इति योज्यम्। केचित्तु—सुवर्णादित्रयं एकत्रकर्षं ततो घृतेन घृष्टा योनिमध्ये लिम्पेदिति। तन्नानुपदिशन्ति। उक्तं हि,—"हेम रूप्यं वरं ताम्रमिश्रकावर्त सर्पिषा। छद्मानर्घ्यपथैरयोनिं शोधनार्थे पिबेदपि॥" इति॥ २४॥

कृत्वेत्यादौ।—विलङ्घ्येति—यस्मिन् दिने ऋतुस्नानं तस्मिन् दिने उपोष्येत्यर्थः। श्वेतबलाया अङ्घ्रि मूलम्। समधिकघृतेनेति।—दुग्धापेक्षया घृतमात्रोऽधिको देय इत्यर्थः। यस्मिन् दिने भेषजमिदमुपयुज्यते तस्मिन्नेव दिनेऽपरमन्नं नोपयोज्यम्। दिनान्तरे तु—क्षुधायां सत्यां क्षीरसहितमन्नं दद्यात्। समदिवस इति—युग्म-दिने॥ २५॥

गोष्ठेत्यादि।—गोष्ठः,—पर्वत, उपवन वेति केचित्। माषाविति।—माष-कलायौ द्वौ, चरके धान्यमाषाभ्यामभियुक्तम्। तथा गौरसर्षपौ द्वाविति।—दधियोजिता-विति—दधि प्रक्षिप्ताविरार्थः। कुलापन्नगर्भाया इति यावत् स्त्रीत्वं पुंस्त्वं वा गर्भस्य न व्यक्तीभूतमस्ति तावदेव इदं कर्म कुर्यात्। व्यक्ताभिव्यक्तिस्तु तृतीये मासे भवतीति

पुष्यापोतौ द्रुतापन्न-गर्भायाः पुत्रकारकौ ।
कानकान् राजतान् वापि लौहान् पुरुषकानणून् ॥
ध्मातान्निवर्णान् पयसो दध्नो वाप्युदकस्य वा ।
क्षिप्त्वाञ्जलौ पिबेत् पुष्ये गर्भे पुत्रत्वकारकान् ॥ २६ ॥

फलघृतं प्रथमम्—

मञ्जिष्ठा मधुकं कुष्ठं त्रिफला शर्करा बला ।
मेदा पयस्या काकोली मूलञ्चैवाश्वगन्धजम् ॥
अजमोदा हरिद्रे द्वे हिङ्गुकं कटुरोहिणी ।
उत्पलं कुमुदं द्राक्षा-काकोल्यौ चन्दनद्वयम् ॥
एतेषां कार्षिकैर्भागैर्घृतप्रस्थं विपाचयेत् ।
शतावरीरसं क्षीरं घृताद्देयं चतुर्गुणम् ॥
सर्पिरेतन्नरः पीत्वा नित्यं स्त्रीषु वृषायते ।
पुत्रान् जनयते नारी मेधाढ्यान् प्रियदर्शनान् ॥
या चैवाऽस्थिरगर्भा स्याद् या वा जनयते मृतम् ।
अल्पायुषं वा जनयेद् या च कन्यां प्रसूयते ॥
योनिदोषे रजोदोषे परिस्रावे च शस्यते ।
प्रजावर्धनमायुष्यं सर्वग्रहनिवारणम् ॥
नाम्ना फलघृतं ह्येतदश्विभ्यां परिकीर्त्तितम् ।
अनुक्तं लक्षणामूलं क्षिपन्त्यत्र चिकित्सकाः ॥

---

मासद्वयं यावत् पुंसवनकर्म कुर्य्यादिति भावः । इदं कर्म लिङ्गपरावृत्तिकारकं भवतीति ज्ञापनार्थं द्रुतापन्नगर्भाया इत्युक्तम् । पुरुषकानणूनिति—अणुपरिमाणान् पुरुषाकृतीन् । अञ्जलाविश्यस्य पयस इत्यादिभिः सम्बन्धः । एतच्च दुग्धादि निःशेषं पेयं, चरकसंवादात् ॥ २६ ॥

मञ्जिष्ठेत्यादौ ।—पयस्या—क्षीरविदारी । द्राक्षाकाकोल्याविति द्वन्द्वः, काकोली

जीवद्वत्सैकवर्णाया घृतमत्र प्रशस्यते।
आरण्यगोमयेनापि वह्निज्वाला प्रदीयते॥ २७॥

फलघृतं द्वितीयम्—

सहचरे द्वे त्रिफलां गुडूचीं सपुनर्नवाम्।
शुकनासां हरिद्रे द्वे रास्नां मेदां शतावरीम्॥
कल्कीकृत्य घृतप्रस्थं पचेत् क्षीरं चतुर्गुणम्।
तत्सिद्धं प्रपिबेन्नारी योनिशूलनिपीड़िता॥
पिण्डिता चलिता या च निःसृता विवृता च या।
पित्तयोनिश्च विस्रस्ता षण्डयोनिश्च या स्मृता॥
प्रपद्यन्ते तु ताः स्थानं गर्भं गृह्णन्ति चासकृत्।
एतत् फलघृतं नाम योनिदोषहरं परम्॥ २८॥

नीलोत्पलाद्यं घृतम्—

नीलोत्पलोशीरमधूकयष्टि-
द्राक्षाविदारीकुशपद्ममूलैः।
स्याज्जीवनीयैश्च घृतं विपक्वम्
शतावरीकारसदुग्धमिश्रम्॥
तच्छर्करापादयुतं प्रशस्त-
मसृग्दरे मारुतरक्तपित्ते।
क्षीणे बले रेतसि सम्प्रदुष्टे
कृच्छ्रे च पित्तप्रभवे च गुल्मे॥ २९॥

---

अत्र क्षीरकाकोली, काकोलीलघुपाठत्वात्। शतावरीरसक्षीरयोः प्रत्येकं चातुर्गुण्यम्। अत्र शुद्धवैद्यीपदेशं संयक्त्वा लिखति,—पञ्चकमित्यादि॥ २७॥

सहचरे द्वे इत्यादि।—सहचरे द्वे इति—सितपीतभेदेन झिण्टीद्वयम्। शुकनासा—श्योनाकपटकः। पिण्डितेत्यत्र योनिरिति शेषः॥ २८॥

नीलोत्पलमित्यादौ।—मधूकस्य पुष्पं फलं वा। कुशपद्ममूलं—कुशपद्ममूलम्। जीवनीयैरिति—जीवनीयदशकैः। शतावरीरसस्य अयः प्रस्था, दुग्धस्य चैकः प्रस्थः।

बृहच्छतावरीघृतम्—

शतावरीमूलतुलायतस्रः सम्प्रपीड़येत् ।
रसेन क्षीरतुल्येन पचेत् तेन घृताढ़कम् ॥
जीवनीयैः शतावर्य्या मृद्वीकाभिः परूषकैः ।
पिष्टैः पियालैश्चाद्ध्यैर्द्विर्यष्टिमधुकैर्भिषक् ॥
सिद्धशीते च मधुनः पिप्पल्याश्च पलाष्टकम् ।
दत्त्वा दशपलञ्चात्र सितायास्तद्विमिश्रितम् ॥
ब्राह्मणान् प्राशयेत् पूर्वं लिह्यात् पाणितलं ततः ।
योन्यसृक्शुक्रदोषघ्नं हृद्यं पुंसवनञ्च तत् ॥
क्षतक्षयं रक्तपित्तं कासं श्वासं हलीमकम् ।
कामलां वातरक्तञ्च वीसर्पं हृच्छिरोग्रहम् ।
उन्मादादीनपस्मारान् वातपित्तात्मकान् जयेत् ॥ ३० ॥
दग्ध्वा शङ्खं क्षिपेद्रम्भा-स्वरसे तत्तु पेषितम् ।
तुल्यालं लेपतो हन्ति रोम गुह्यादिसम्भवम् ॥
रक्ताञ्जनापुच्छचूर्णं युक्तं तैलन्तु सार्षपम् ।
सप्ताहं व्युषितं हन्ति मूलाद्रोमाण्यसंशयम् ॥
कुसुम्भतैलाभ्यङ्गो वा रोम्णामुत्पाटितेऽन्तकृत् ॥ ३१ ॥

---

अन्ये तु—शतावरीरसस्य चत्वारः प्रस्था इत्याहुः । इतरस्त्वापेक्षया शर्करायाः पादी-ऽष्टी पलानि ॥ २९ ॥

शतावरीमूलेत्यादि ।—चरकस्य ।—जीवनीयैरिति—जीवनीयदशकैः, न पुनरष्ट-वर्गैः, चरकोक्तत्वात् । द्विर्यष्टिमधुकैरिति—एकश्च मधुकभागो जीवनीयगणपठितः, अपरोऽपि मधुकस्यैको भागो देय इति द्वितीययष्टिमधुकैः; किंवा स्थलजल-भेदान्मधुकद्वययुक्तैः । वाग्भटे तु—द्विर्यष्टिमधुकैरित्यत्र द्विपलामधुकैरिति पठ्यते ॥३०॥

योगौ लोमशातुल्येन गैरसाद्रविनं स्त्रादिव्यतो लोमशातनमाह, दग्ध्वेत्यादि ।—रम्भास्वरसे—कदलीकाण्डस्वरसे । तुल्यालमिति—समहरितालम् । रक्ताञ्जनेति—रक्ताञ्जना—लोहितवर्णाञ्जननामिका, चारजिला इति लोके । तत्पुच्छं रौद्रे शोषयित्वा चूर्णं कुर्य्यात् । तत्र सार्षपतैलेऽनुरूपे प्रक्षिप्य सप्ताहं स्थाप्यमित्यर्थः । कुसुम्भे-

बिन्दुरेकः पतेद् यत्र तत्र रोमापुनर्भवः।
मदनादिव्रणे देयमश्विभ्यामेव निर्मितम्॥
अर्शसां कुष्ठरोगाणां पामादद्रुविचर्चिनाम्।
क्षारतैलमिदं श्रेष्ठं सर्वक्लेदहरं परम्॥ २४॥

इति योनिव्यापच्चिकित्सा।

---

## अथ स्त्रीरोग-चिकित्सा।

मधुकं शाकबीजञ्च पयस्या सुरदारु च।
अश्मन्तकः कृष्णतिलास्ताम्रवल्ली शतावरी॥
हृत्पादनी पयस्या च तथैवोत्पलशारिवा।
अनन्ता शारिवा रास्ना पद्मा मधुकमेव च॥
बृहतीद्वयकाश्मर्य्य-क्षीरिशुङ्गास्त्वचो विसम्।
पृथक्पर्णी बला शिग्रुः श्वदंष्ट्रा मधुयष्टिका॥
शृङ्गाटकं विसं द्राक्षा कशेरु मधुकं सिता।

---

परिस्राव्य क्षारोदकस्य षोडश शरावा ग्राह्याः। कटुतैलस्य शरावचतुष्टयम्। क्षाराष्टभागमिति।—तैलापेक्षयाऽष्टमो भागः क्षारस्य कल्कत्वेन प्रदेय इत्यर्थः; तेन क्षारस्य पलचतुष्टयं कल्क इत्यर्थः। अन्ये तु—क्षारोदकं तैलापेक्षयाऽष्टगुणमित्याहुः। मदनादिव्रण मधुपर्णादौ॥ २४॥

इति योनिव्यापच्चिकित्सा-विवृतिः।

---

गर्भाशयस्त्रीरोगचिकित्साऽभिधानार्थं स्त्रीरोगचिकित्सामाह, मधुकमित्यादि।—मधुकम्।—शाकः,—शकशाकः, तस्य बीजम्; पयस्या—क्षीरकाकोली; अश्मन्तकः,—अश्मोटकः, आप्टुया वा। ताम्रवल्ली—मञ्जिष्ठा; हृत्पादनी—वन्दाकः। तथैवोत्पलशारिवेत्यत्र "लता चोत्पलशारिवे" इति पाठः सुश्रुते वाग्भटे च; तट्टीकाकृतोऽपि लता दूर्वा प्रियङ्गुर्वेति व्याख्यानयन्ति। उत्पलशारिवा—अनन्तमूलम्। अनन्ता,—अनन्त-

मासेषु सप्त योगाः स्युरर्द्धश्लोकास्तु सप्तसु।
यथाक्रमं प्रयोक्तव्या गर्भस्रावे पयोयुताः ॥ १ ॥
कपित्थबृहतीबिल्व-पटोलेक्षुनिदिग्धिकाः।
मूलानि क्षीरसिद्धानि दापयेद्भिषगष्टमे ॥ २ ॥
नवमे मधुकानन्ता-पयस्याशारिवाः पिबेत्।
पयस्तु दशमे शुण्ठ्या शृतशीतं प्रशस्यते ॥
सक्षीरा वा हिता शुण्ठी मधुकं देवदारु च।
एवमाप्यायते गर्भस्तीव्रा रुक् चोपशाम्यति ॥ ३ ॥
कुशकाशोरुबूकाणां मूलैर्गोक्षुरकस्य च।
शृतं दुग्धं सितायुक्तं गर्भिण्याः शूलनुत् परम् ॥
कशेरुशृङ्गाटकजीवनीय-पद्मोत्पलैरण्डशतावरीभिः।
सिद्धं पयः शर्करया विमिश्रं संस्थापयेद्गर्भमुदीर्णशूलम् ॥ ४ ॥

---

मूलम्, शारिवा—श्यामालता; पद्मा—ब्रह्मयष्टिः; काश्मर्य्य—गाम्भारीफलम्, क्षीरिणी—वटादीनां पञ्चानां त्वचेति। बिल्व—चव्यकम्। एते च सप्त योगाः कल्कविधौ उपयोज्याः। अपरे तु—क्षीरसाधनपरिभाषयेत्याहुः ॥ १ ॥

कपित्थेत्यादि।—सुश्रुतस्य।—कपित्थादीनां सर्वेषां मूलम्। निश्चलस्तु कपित्थस्य फलं, पटोलस्य फलं पत्रं वा, अन्येषाञ्च मूलमित्याह, किन्तु सुश्रुत-वाग्भटटीकाकृद्भिर्न व्याख्यातोऽयमर्थः ॥ २ ॥

नवम इत्यादौ।—क्षीरसिद्धानीति पदं सिंहावलोकनन्यायेनात्रापि सम्बध्यते, तदनेन व्याख्यातोऽयमर्थः। अन्ये तु मधुकानन्तेति योगं क्वाथेन किंवा मधुकादीनां कल्कं क्षीरेण पिबेदित्याहुः। पयस्त्वित्यादि।—सुश्रुतस्य।—डल्हणस्तु "क्षीरं शुण्ठीपयस्याभ्यां सिद्धं स्याद्दशमे हितम्" इति पठति, व्याचष्टे च—दशमे मासि शुण्ठ्या क्षीरविदार्य्या वा क्षीरपाककल्पनया सिद्धं क्षीरं दशमे हितमिति। वाग्भटेऽप्युक्तं— "योजयेद्दशमे मासि क्षीरं सिद्धं पयस्यया। अथवा यष्टिमधुक नागराऽमरदारुभिः ॥" इति।—एतद्वचनसवादादेव सक्षीरा वा हिता शुण्ठीत्यादावपि शुण्ठीमधुकदेवदारुभिः सिद्धं क्षीरं दशमे मासि प्रशस्तमित्यर्थो ज्ञेयः ॥ ३ ॥

कुशेत्यादि।—चाष्टम्। कशेर्वित्यादौ।—जीवनीयं,—जीवनीयदशकम्। शर्करया विमिश्रमिति—शर्करा प्रक्षेप्या ॥ ४ ॥

कशेरुशृङ्गाटकपद्मकोत्पलं समुद्गयष्टीमधुकं सशर्करम् ।
सशूलगर्भस्रुतिपीडिताङ्गना पयोविमिश्रं पयसान्नभुक् पिबेत् ॥५॥

गर्भे शुष्के तु वातेन बालानाञ्चापि शुष्यताम् ।
सितामधुककाश्मर्य्यैर्हितमुत्थापने पयः ।
गर्भशोषे त्वामगर्भाः प्रसहाय सदा हिताः ॥ ६ ॥
पाठालाङ्गलिसिंहास्य-मयूरकजटैः पृथक् ।
नाभिवस्तिभगालेपात् सुखं नारी प्रसूयते ॥
परूषकस्थिरामूल-लेपस्तद्वत् पृथक् पृथक् ।
वासामूले ध्रुवं तद्वत् कटिबद्धे सूते द्रुतम् ॥
पाठायास्तु शिफां योनौ या नारी सम्प्रधारयेत् ।
उरःप्रसवकाले तु सा सुखेन प्रसूयते ॥
तुषाम्बुपरिपिष्टेन मूलेन परिलेपयेत् ।
लाङ्गल्याश्चरणौ सूते क्षिप्रमेतेन गर्भिणी ॥
घटरूपकमूलेन नाभिवस्तिभगालेपः ।
गृहाम्बुना गेहधूम-पानं गर्भापकर्षणम् ॥ ७ ॥

---

कशेर्वित्यादौ ।—पद्मकं—पद्मकेशरमित्याहुः । उत्पलं—नीलोत्पलम् । समुद्गयष्टीमधुकमिति ।—मुद्गः,—मुद्गपर्णी । समुद्गयष्टीमधुकमित्यत्र समुद्गपर्णीमधुकमित्यपि पाठान्तरम् ॥ ५ ॥

गर्भे शुष्के तु वातेनेत्यादि ।—पूर्वं वातव्याधावेव पठितमिति नेह पठनीयम् । आमगर्भा इति—हंसकूर्मादीनामण्डानि, प्रसहाः,—कुक्कुटादयः ॥ ६ ॥

पाठेत्यादौ ।—श्रीकण्ठो लाङ्गलीस्थाने सुरसां पठति, व्याचष्टे च—सुरसा—निर्गुण्डी । सिंहास्यः,—वासकः ; मयूरकः,—अपामार्गः । एषां जटा—मूलं, ह्रस्वत्वं छान्दसत्वात् । श्रीकण्ठस्तु "मयूरकजटैः" इत्यत्र "मयूरकुटजैः" इति पठति, व्याचष्टे च—"कुटजः,—सनामख्यातस्तरुः" इति । परूषकेत्यादौ ।—स्थिरा—शालपर्णी । परूषकस्थिरयोर्मूलम् ; गृहाम्बु—काञ्जिकं, गेहधूमः,—गृहधूमः ॥ ७ ॥

मातुलुङ्गस्य मूलानि मधुकं मधुसंयुतम्।
घृतेन सह पातव्यं सुखं नारी प्रसूयते ॥ ८ ॥
पुटदग्धसर्पकञ्चुक-मसृणमसीकुसुमसाराञ्जिताक्षी।
झटिति विशल्या जायेत गर्भवती मूढगर्भाऽपि ॥
मद्याम्बुना हिङ्गुसिन्धु-पानं गर्भापकर्षणम् ॥ ९ ॥
"इहामृतञ्च सोमश्च चित्रभानुश्च भाविनि!।
उच्चैःश्रवाश्च तुरगो मन्दिरे निवसन्तु ते ॥
इदममृतमपां समुद्धृतं वै तव लघुगर्भमिमं विमुञ्चतु स्त्रि!।
तदनलपवनार्कवासवास्ते सह लवणाम्बुधरैर्दिशन्तु शान्तिम् ॥
मुक्ताः पाशा विपाशाश्च मुक्ताः सूर्य्येण रश्मयः।
मुक्तः सर्वभयाद्गर्भ एह्येहि मारिच स्वाहा ॥"
जलं च्यवनमन्त्रेण सप्तवाराभिमन्त्रितम्।
पीत्वा प्रसूयते नारी दृष्ट्वा चोभयविंशकम् ॥
तथोभयपञ्चदश-दर्शनं सुखसूतिकृत्।
वसुगुणाब्धेरकबाणनवषट्सप्तयुगैः क्रमात्।
सर्वे पञ्चदश हित्तु विंशकं नवकोष्ठके ॥

---

मातुलुङ्गस्येत्यादौ।—मधुकं—यष्टिमधु, एतदुभयमपि मधुसंयुतं घृतेन सह पातव्यमित्यर्थः ॥ ८ ॥

पुटेत्यादि।—पुटपाकविधया दग्धा या सर्पनिर्मोकमसी, तया मसृणया अञ्जिताक्षी सती विगतगर्भशल्या भवेदित्यर्थः। मद्याम्बुनेत्यादौ।—सिन्धुः,—सैन्धवम् ॥ ९ ॥

इहेत्यादि श्लोकत्रयोऽयं मन्त्रश्च सुश्रुतस्य।—अयमेव गर्भच्यवनमन्त्रः। जलं च्यवनमन्त्रेण सप्तवाराभिमन्त्रितं पीत्वेति वङ्गवैद्यव्यवहारः संग्रहकारैर्लिख्यते, न तु सुश्रुतेन, सुश्रुते तु च्यवनमन्त्रेण गर्भिणीं स्नापयेदित्युक्तम्। उभयपञ्चदशकमुभयविंशक-ञ्चाह, वस्वित्यादि।—वसवोऽष्टौ, गुणास्त्रयः, अब्धयश्चत्वारः, बाणाः पञ्च, युग द्वयम्। एतदङ्केगुणात्पुनरुभयविंशकं भवति। एते यदा नव कोष्ठान् कृत्वा तदभ्यन्तरे

नारीऋतुऋतुवसुभिः सह पञ्चदिगष्टादशभिरेव च।
अर्कभुवनाब्धिसहितैरुभयविंशकमिदमाश्चर्यम् ॥ १० ॥

कटुतुम्ब्यहिनिर्मोक-कृतवेधनसर्षपैः।
कटुतैलान्वितो धूमो योनेः पातयतेऽमराम् ॥
कचवेष्टितयाङ्गुल्या घृष्टे कण्ठे सुखं पतत्यमरा ॥
"एरण्डस्य वने काको गङ्गातीरमुपागतः।
इतः पिबति पानीयं विशल्या गर्भिणी भवेत् ॥"
अनेन सप्तधाऽभिमन्त्र्य जलं देयं विशल्यकम् ॥
मूलेन लाङ्गलिक्याः वै संलिप्ते पाणिपादके।
अमरापातनं मद्यैः पिप्पल्यादिरजः पिबेत् ॥
शालिमूलाक्षमात्रं वा मूत्रेणाम्लेन वान्वितम्।
उपकुञ्चीं पिप्पलीञ्च मदिरां लाभतः पिबेत्।
सौवर्चलेन संयुक्तां योनिशूलनिवारणीम् ॥ ११ ॥
सूताया हृच्छिरोबस्ति-शूलं मक्कल्लसंज्ञितम्।
यवक्षारं पिबेत् तत्र सर्पिषोष्णोदकेन वा।
पिप्पल्यादिगणक्वाथं पिबेद्वा लवणान्वितम् ॥ १२ ॥
पारावतशकृत् पीतं शालितण्डुलवारिणा।
गर्भपातान्तरोत्थे तु रक्तस्रावनिवारणम् ॥ १३ ॥

---

लिख्याः। वृन्दे तु उभयविंशकमप्युक्तम्। एतद्द्वयं शरावमध्ये लिखित्वा सम्पूज्य दर्शयितव्यम् ॥ १० ॥

कटुतुम्ब्यादि।—कटुतुम्बी—तिक्तालाबुफलम्; कृतवेधनं—घोषकभेदः, तस्य फलम्, सर्षपः,—श्वेतसर्षपः। एतैर्धूपं कृत्वा योनिमुखे दद्यात्। उक्तं हि सुश्रुते—"योनिमुखं धूपयेत्" इति। अमरापातनमित्यादौ।—पिप्पल्यादिरज इति।—सुश्रुतस्य पिप्पल्यादिगणचूर्णम्। अम्लेन—काञ्जिकेन, मद्येनेत्यन्ये। उपकुञ्चीं—कृष्णजीरकम्। पिप्पलीमित्यनन्तरं प्रपिबेदिति शेषः ॥ ११ ॥

सूताया इत्यादि।—सुश्रुतेऽप्युक्तं—"प्रसूतायाश्च सहसा रूक्षशरीराया योनिशूलं रक्तं संरुध्य वायुः करोति, स मक्कल्लसंज्ञितः" इति ॥ १२। १३ ॥

जलपिष्टवरुणपत्रैः सघृतैरुद्वर्त्तमालेपौ तु ।
किक्किशरोगं हरतो गोमयघर्षादथो विहितौ ॥ १४ ॥

ह्रीबेरारलुरक्तचन्दनबलाधन्याकवत्सादनी-
मुस्तोशीरयवासपर्पटविषाक्वाथं पिबेद्गुर्विणी ।
नानादोषयुताऽतिसारकगदे रक्तस्रुतौ वा ज्वरे
योगोऽयं मुनिभिः पुरा निगदितः सूत्यामये शस्यते ॥ १५ ॥

अमृतानागरसहचर-भद्रोत्कटपञ्चमूलजलदजलम् ।
मधुसंयुक्तं निवारयति सज्वरं सूतिकातङ्कम् ॥ १६ ॥
सहचरपुष्करवेतसमूलं विकङ्कतदारुकुलत्थसमम् ।
जलमल्लसैन्धवहिङ्गुयुतं सद्योज्वरसूतिकारोगहरम् ॥
दशमूलीकृतः क्वाथः सद्यः सूतिरुजापहः ॥ १७ ॥

पञ्चकाञ्जिकम्—

पिप्पली पिप्पलीमूलं चव्यं शुण्ठी यमानिका ।
जीरके द्वे हरिद्रे द्वे विड्सौवर्चलं तथा ॥
एतैरेवौषधैः पिष्टैरारनालं विपाचितम् ।
आमवातहरं वृष्यं कफघ्नं वह्निदीपनम् ॥

---

जलपिष्टेत्यादौ ।—किक्किशरोगः—गर्भोत्पीडनेन वक्षआदिदेशे भवात् चर्मविदरणम् । अथो अनन्तरं गोमयघर्षणानन्तरं विहितावित्यर्थः ॥ १४ । १५ ॥

अमृतेत्यादौ ।—भद्रोत्कटः,—गादालेप इति चाक्षायां ख्याततरः । अन्ये तु—भद्र—भद्रमुस्तकम्, उत्कटः,—"एकड़" इति ख्यातस्य मूलमित्याहुः । पञ्चमूलं—स्वल्पपञ्चमूलम् ; जलदं—मुस्तकम् ; जलं—क्वाथः ॥ १६ ॥

सहचरेत्यादौ ।—विकङ्कतः,—"बैंचि" इति लोके, तस्य मूलम् । कुलत्थः समो यत्र तत् तथा कुलत्थसमम् । जलं—क्वाथः । दशमूलीत्यादि ।—वामपार्श्वादिपीड़ायां पुनर्धान्यशुण्ठीयुक्तस्य धान्यपञ्चकयुक्तस्य वा दशमूलस्य क्वाथमुपदिशन्ति वृद्धाः ॥ १७ ॥

पञ्चकाञ्जिके—पिप्पल्यादिद्रव्यस्य मिलित्वा कर्षमर्धं, काञ्जिकस्य शरावं एकं,

काञ्जिकं वज्रकं नाम स्त्रीणामग्निविवर्द्धनम्।
मक्कल्लशूलशमनं परं क्षीराभिवर्द्धनम्।
क्षीरपाकविधानेन काञ्जिकस्यापि साधनम् ॥ १८ ॥

पञ्चजीरकगुडः,—

जीरकं हवुषा धान्यं शताह्वा वदराणि च।
यमानी वरटको हिङ्गुपत्रिका कासमर्दकम् ॥
पिप्पली पिप्पलीमूलमजमोदाऽथ वाप्यिका।
चित्रकश्च पलांशानि तथाऽन्यच्च चतुःपलम् ॥
कशेरुकं नागरञ्च कुष्ठं दीप्यकमेव च।
गुड़स्य च शतं दद्यादष्टतमस्थं तथैव च ॥
क्षीरद्विप्रस्थसंयुक्तं शनैर्मृद्वग्निना पचेत्।
पञ्चजीरक इत्येष सूतिकानां प्रशस्यते ॥
गर्भार्थिनीनां नारीणां बृंहणीये समाप्नुते।
विंशतिं व्यापदो योनेः कासं श्वासं ज्वरं क्षयम् ॥
हलीमकं पाण्डुरोगं दौर्गन्ध्यं मूत्रकृच्छ्रताम्।
हन्ति पीनोन्नतकुचाः पद्मपत्रायतेक्षणाः।
उपयोगात् स्त्रियो नित्यमलक्ष्मीमलवर्जिताः ॥ १९ ॥

---

पानीयमप्यम्लम्, एवमेव प्रायशो व्यवहरन्ति वृद्धाः, सकल्ककाञ्जिकपानमुपदिशन्ति च। चक्रस्त्वाह—"क्षीरपाकविधानेन काञ्जिकस्यापि साधनम्" इति ॥ १८ ॥

पञ्चजीरकगुडे।—जीरकं—शुक्लमुख्यकृष्णजीरकं गुर्जरप्रसिद्धम्; वरटकः—राजिका; हिङ्गुपत्रिका—वंशपत्रिका, अजमोदा—वनयमानी, अन्ये परिमाणैकत्वात् यमान्या एव भागद्वयम्। वाप्यिका—क्षुद्रराजिका। तथाऽन्यच्च चतुःपलमिति।—वक्ष्यमाणकशेरुकादिचतुष्टयं प्रत्येकं चतुःपलमित्यर्थः। दीप्यकं—स्थूलजीरकम्। आदौ गुडघृतं क्षीरेण पक्त्वा सिद्धे सति जीरकादिचूर्णप्रक्षेपः। पञ्चपलजीरकयोगात् पञ्चजीरक इति संज्ञा। समाप्नुते लभते गर्भं इति शेषः; कुक्षिगतमाकृतयोगात् क्षीणमात्र इत्यर्थः ॥ १९ ॥

वनकार्पासिकेक्षूणां मूलं सौवीरकेण वा ।
विदारिकन्दं सुरया पिबेद्वा स्तन्यवर्द्धनम् ॥
दुग्धेन शालितण्डुल-चूर्णपानं विवर्द्धयेत् ।
स्तन्यं समाहृतः चीरसेविन्यास्तु न संशयः ॥ २० ॥
हरिद्रादिं वचादिं वा पिबेत् स्तन्यस्य शुद्धये ।
तत्र वातात्मके स्तन्ये दशमूलीजलं पिबेत् ।
पित्तदुष्टेऽमृताभीरुपटोलं निम्बचन्दनम् ॥
धात्री कुमारस्य पिबेत् क्वाथयित्वा सशारिवम् ।
कफे वा त्रिफलां मुस्तं भूनिम्बं कटुरोहिणीम् ॥
भार्गीदारुवचापाठाः पिबेत् सातिविषाः स्मृताः ।
धात्रीस्तन्यविशुद्धयर्थं मुद्गयूषरसाशिनी ॥ २१ ॥
कुक्कुरमेसुकमूलं चर्वितमास्ये विधारितं जयति ।
सपदि हात् स्तनकीलं स्तन्यसुश्रैकाम्लतः कुरुते ॥
शोथं स्तनोत्थितमवेक्ष्य भिषग्विदध्याद्
यद्विद्रधावभिहितन्त्विह भेषजं तत् ।
आमे विदह्यति तथैव गते च पाकम्
तस्याः स्तनौ सततमेव च निर्दुहीत ॥

---

सम्प्रति स्तन्यवर्द्धनयोगानाह, वनकार्पासिकेत्यादि ।—सौवीरकेण—काञ्जिकेन । विदारीकन्द—भूमिकुष्माण्डम् ॥ २० ॥

हरिद्रादिमित्यादि ।—हरिद्रादि-वचादिगणौ सौश्रुतौ ।—यथा—"हरिद्रादारुहरिद्राकलसीकुटजबीजानि मधुकञ्च" इति । कलसी—पृश्निपर्णी । "वचामुस्तातिविषाऽभयाभद्रदारूणि नागकेशरञ्च" इति । भद्रदारु—देवदारु । अभीरु,—शतावरी ; शारिवा—अनन्तमूलम् । सशारिवमित्यत्र सशर्करमिति पाठान्तरम् । अमृतादिशारिवान्तस्य क्वाथः ॥ २१ ॥

विशालामूललेपस्तु हन्ति पीडां स्तनोत्थिताम् ।
निशाकनकफलाभ्यां लेपश्चापि स्तनार्त्तिहा ॥ २२ ॥
मूषिकवसया शूकरगजमहिषमांसचूर्णसंयुतया ।
अभ्यङ्गमर्दनाभ्यां सुकठिनपीनस्तनौ भवतः ॥ २३ ॥
महिषीभवनवनीतं व्याधिबलोषा तथैव नागबला ।
पिष्ट्वा मर्दनयोगात् पीनौ कठिनौ स्तनौ कुरुते ॥ २४ ॥

श्रीपर्णीतैलम्—

श्रीपर्णीरसकल्काभ्यां सिद्धं तैलं तिलोद्भवम् ।
तूलकेनैव तत् तैलं स्तनस्योपरि धारयेत् ।
पतितावुत्थितौ स्त्रीणां भवेयातां पयोधरौ ॥ २५ ॥

कासीसाद्यं तैलम्—

कासीसतुरगगन्धाशावरगजपिप्पलीविपक्वेन ।
तैलेन यान्ति वृद्धिं स्तनकर्णवराङ्गलिङ्गानि ॥ २६ ॥
प्रथमर्त्तौ तण्डुलाम्भो नस्यं कुर्यात् स्तनौ स्थिरौ ॥ २७ ॥
गोमहिषीघृतसहितं तैलं श्यामाक्षताञ्जलिवचाभिः ।
सकटुका निशाभिः सिद्धं नस्यं स्तनोत्थापनं परम् ॥ ॥२८॥

---

स्तनविद्रधिचिकित्सामाह, कुष्ठ इत्यादि ।—कुष्ठ इमिशुकाः,—क्षीरचतञ्जुला । स्तनकील—स्तनविद्रधिम् । निशेत्यादौ ।—कनकफलं—धुस्तूरफलम् ॥ २२ ॥

स्तनपीनचिकित्सामाह ।—मूषिकवसाया शूकरादिमांसचूर्णं प्रक्षिप्य स्तनयोरभ्यङ्ग-मर्दनम् आयुष्पोक्तवे ॥ २३ ॥

महिषीत्यादौ ।—व्याधिः,—कुष्ठम् ; बला—बला ॥ २४ ॥

श्रीपर्णी—गाम्भारी, तस्यास्त्वची, रसः,—स्वरसः । स्तनस्योपरि—कुचाग्रे ॥२५॥

कासीसेत्यादौ ।—कासीसं—धातुकासीसम् ; शावरं—लोध्रम्, एषां कल्कः । जलं चतुर्गुणम् । कर्णः,—कर्णपाली ; वराङ्ग—योनिम् ॥ २६ ॥

प्रथमर्त्तौ—आयुष्पोक्तवे ॥ २७ ॥

गोमहिषीत्यादौ ।—गोमहिषीघृतयोर्मिलिता एको भागः, अपरश्च तैलस्य । श्यामा—प्रियङ्गुः ; क्षताञ्जलिः,—हंसपादी, चतुर्विकारीति ख्याता, लाजालुया

सुतनूकरोति मध्यं पीतं मथितेन माधवीमूलम् ।
स्याच्छिथिलाऽपि च गाढ़ा सुरगोपाज्याभ्यञ्जतो योनिः ॥
धववह्नस्थितबन्धनरज्ज्वा सन्ताड़नाद्धि दयितेन ।
नश्यत्यबलाक्षेपः पत्यौ सहजः कृतोऽथवा योगैः ॥
दत्त्वैव दुग्धभक्तं विप्रायोत्पाट्य सितबलामूलम् ।
पुष्ये कन्यापिष्टं दत्तमनिच्छाहरं भक्ष्ये ॥ २९ ॥

इति स्त्रीरोग-चिकित्सा ।

## अथ बालरोगचिकित्सा ।

कुष्ठं वचाऽभया ब्राह्मी कनकं क्षौद्रसर्पिषा ।
वर्णायुःकान्तिजननं लेहं बालस्य दापयेत् ॥ १ ॥

---

वृश्चिके, सर्म्मांवनीति कुत्रचित् । कटुका—कटुरोहिणी, पश्चो बल्कः । शर्करा चतुर्गुणम् ॥ २८ ॥

सुतनूकरोतीत्यादौ ।—मध्यं—स्त्रिया मध्यदेशः । मथितेन—घोलेन, माधवीमूलं—माधवीलतामूलम् । सुरगोप इति—इन्द्रगोपाख्यः कीटः, "सिन्दुरियापोका" इति लोके, चाज्यं—घृतम्, तमर्दीत्यन्वयात् । धववह्नेत्यादि ।—धव,—वृक्ष, तद्वह्नाय स्थिता या बन्धनरज्जुस्तया । दयितेन—भर्त्रा । विमाय दुग्धभक्तं दत्त्वेति पूर्वेण योज्यम् । भक्ष्ये—भक्षणादौ ॥ २९ ॥

इति स्त्रीरोग-चिकित्सा विवृतिः ।

---

दुष्टस्तन्यपानादिना बालानां रोगसम्भवादनन्तरं बालरोगाधिकारः । तत्र बालरोगाधिकारे वक्ष्ये प्रथमतः बालस्य सुखकरमाह, कुष्ठमित्यादि ।—कनकं—मारितजारितसुवर्णचूर्णम् । तत्र सुवर्णमारणविधिर्यथा—कण्टकवेधयोग्यसुवर्णपत्रं जम्बीररसेन स्नापयित्वा श्लोकाक्षप्रमितगुड़पायसमात्रेण लिप्त्वा गोरक्षकर्कटीमूलपिष्टमध्ये च दत्त्वा शरावसम्पुटे निधाय प्रक्षिप्य च गोमयाग्नौ

स्तन्याभावे पयश्छागं गव्यं वा तद्गुणं पिबेत् ॥

तर्क्कधो-गुड़िकां तप्तां निर्वाप्य कटुतैलके ।

तत् तैलं पानतो हन्ति बालानामुल्बमुद्धतम् ॥ २ ॥

घोषाशिवावचारजनीकल्कं स्तन्येन पीतमथ पयसा ।

उल्बं निःशेषं कुरुते पटुतां बालस्य चात्यन्तम् ॥ ३ ॥

मृत्पिण्डेनाग्नितप्तेन क्षीरसिक्तेन सोष्मणा ।

स्वेदयेदुत्थितां नाभिं शोथस्तेनोपशाम्यति ॥ ४ ॥

नाभिपाके निशालोध्र-प्रियङ्गु-मधुकैः शृतम् ।

तैलमभ्यञ्जने शस्तमेभिर्वाप्यवचूर्णनम् ॥ ५ ॥

सोमग्रहणे विधिवत् केकिशिखामूलमुद्धृतं बद्धम् ।

जघनेऽथ कन्धरायां क्षपयत्यहितुण्डिकां नियतम् ॥ ६ ॥

सप्तदलपुष्पमरिचं पिष्टं गोरोचनासहितम् ।

पीतं तद्वत् तण्डुलभक्षकृतो दग्धपिष्टकाभावः ॥ ७ ॥

---

धात्र्यश्च त्र्यं वा प्रघृष्टेन्; ततश्चूर्णयित्वा दृढघनवस्त्रेण चालयेदिति। लौहोऽयं जातदिने तदुपरि च प्रचरति। तन्त्रान्तरे च—"वर्णादिकरलेहान्तरस्य संवत्सरं यावदुपयोगः" इत्युक्तः, यथा,—"मध्वनन्ताहिमपूर्वं समं कृत्वा निधापयेत्। घृतेन पाययेन्मात्रां तस्य संवत्सरं शिशुम् ॥" इति ॥ १ ॥

तद्गुणमिति—संस्काराल्लघुत्वम्। तर्क्क च इति—तर्कुः, "टाकुया" इति ख्याता, तस्या अधोगुड़िका लाटुलीति ख्याता। उल्बं—बालकस्य कण्ठगतश्लेष्माणम् ॥ २ ॥

घोषेत्यादौ।—शिवा—हरीतकी; वचा—वचा। स्तन्येन पयसेति—नारीक्षीर-येत्यर्थः ॥ ३ । ४ ॥

नाभीत्यादौ।—मधुकं—यष्टिमधुकम् ॥ ५ ॥

सोमग्रहण इत्यादौ।—विधिवत् उद्धृतमित्यन्वयः। विधिश्च मुक्तकच्छशिखेन पुंसा उद्धरणम्। केकिशिखा—मयूरशिखा। उद्धृता बद्धेति पाठे—चामूलमुद्धृत्येति योज्यम्। अत्र भिक्षुप्रार्थितकपर्दककुहरे पारदं पूरयित्वा सिक्थकेन संरुध्य कुमारी धत्ते इत्युपदिशन्ति वृद्धाः ॥ ६ ॥

सप्तदलेत्यादि।—सप्तदलः,—सप्तच्छदः, तस्य पुष्पम्। पीतमित्यत्र जलेनेति

जम्बूकनासा वायसजिह्वा नाभिर्वराहसम्भूता ।
कांस्यं रसोऽथ गरलं प्रावृड्भेकस्य वामजङ्घास्थि ॥
इत्येकशोऽथ मिलितं विधृतं ग्रीवादिकटिदेशे ।
अहितुण्डिकाप्रशमनमभ्यङ्गो नातिपथ्यविधिः ॥ ८ ॥
अनामके घुर्घुरिका-पुच्छामरिचरोचनाः ।
नवनीतञ्च संमिश्र्य खादेत् तद्रोगनाशनम् ॥ ९ ॥
तैलाक्तशिरस्तालुनि सद्यस्त्वार्कस्नुहीभवं क्षीरम् ।
दत्त्वा रजनीचूर्णं दत्ते नश्येदनामकाभिख्यः ॥ १० ॥
लेहयेच्च घना बालं नवनीतेन लेपितम् ।
स्फुटकपालजरसोद्घर्षणञ्च हि तद्धितम् ॥ ११ ॥
तैलस्य भागमेकं मूत्रस्य द्वौ च निम्बीदलरसस्य ।
गव्यं पयश्चतुर्गुणमेवं दत्त्वा पचेत् तैलम् ।

---

प्रिय. । तदहिति—अहितुण्डिका चपयतीति प्रिय । तथ्कुर्भित्यादि योगान्तरम् । भल्लातकतिलयुतान् पिष्टा पशोवावेश्य कुम्भेन वहा चन्द्रादैर्दग्धा भक्षणीय-मित्यर्थः ॥ ७ ॥

जम्बूकेत्यादि ।—जम्बूक,—शृगालः, तस्य नासा ; वायस,—काक', तस्य जिह्वा ; रसः,—पारदः, गरलं—विषम् । प्रावृड्भेक',—वर्षाकालसम्भवभेक, स च पीतच्छविः सोनाबेङ् इति ख्यातः, तस्य वामपदास्थि । एतत् सर्वं प्रत्येकं मिलितं वा ग्रीवायां कट्यां वा धारणीयम् । नातिपथ्यविधिरिति—व्याधिप्रशमनादेवायम् ॥ ८ ॥

अनामक इति—निर्नामरोग इति ख्यातः, केचित्तु पुच्छारोग "पुच्छिया" इत्याहुः । घुर्घुरिका—कीटविशेषः, तस्य पुच्छा—पुच्छमात्र इत्यर्थः ॥ ९ ॥

तैलाक्तेत्यादौ ।—तैलाभ्यक्तशिरस्तालुनि सद्यस्त्वार्कस्नुहीक्षीरं दत्त्वा तदुपरि हरिद्राचूर्णं दद्यादित्यर्थः ॥ १० ॥

लेहयेदित्यादौ ।—नवनीतालक्तं शिशु कृत्वा घना कुक्कुरैः लेहयेत्, ततः स्फुटखर्परसैनोद्घर्षयेत् ॥ ११ ॥

तैलाभ्यङ्गः सततं रोगमनामकाख्यमपहरति ॥ १२ ॥

आर्कं तूलकमाविकरोमाण्यादाय केशराजस्य ।
स्वरसेनाक्ते वस्त्रे कृत्वा वर्त्तिञ्च तैलाक्ताम् ॥
तज्जातकज्जलाञ्चितलोचनयुगलोऽप्यलङ्कृतो बालः ।
कष्टमनामकरोगं क्षपयति भूतादिकञ्चापि ॥ १३ ॥

चालनिकातलसंस्थितपोतं संस्नाप्य गव्यमूत्रेण ।
चौकोदग्रासिकायां रजकक्षारोदकस्नानम् ॥
दासक्रयणयावणवटिका रसेन्द्रपूरिता धृता कण्ठे ।
नलिनीदले च शयनं सुकष्टमनामकाख्यरोगघ्नम् ॥ १४ ॥

भैषज्यं पूर्वमुद्दिष्टं नराणां यज्ज्वरादिषु ।
कार्य्यं तदेव बालानां मात्रा तस्य कनीयसी ॥ १५ ॥

प्रथमे मासि जातस्य शिशोर्भेषजरक्तिका ।
अवलेह्या तु कर्त्तव्या मधुक्षीरसिताघृतैः ॥
एकैकां वर्द्धयेत् तावद्यावत् संवत्सरो भवेत् ।
तदूर्द्धं माषवृद्धिः स्याद्यावद्यावत्षोड़शाब्दकाः ॥ १६ ॥

---

तैलसेत्यादी ।—शिम्बीदलं—शिम्बीपत्रम् ॥ १२ ॥

आर्कमित्यादि ।—अर्कस्य तूलकम्, आविकरोमाणि मेषरोमाणि चेति भागत्रयं केशराजस्वरसरञ्जितवस्त्रेणावेष्ट्य तैलाक्तवर्त्तिकां कृत्वा ज्वालयेत् । हस्तिखोपरि पूर्ण धृत्वा पातितकज्जलेन चक्षुषोरञ्जनं कार्य्यम् ॥ १३ ॥

चालनिकेत्यादि ।—चौकोदग्रासिकायां चालनिकातलसंस्थितबालकं चालनिकारन्ध्रपतितगोमूत्रेण स्नापयित्वा रजकक्षारजलेन स्नापयेत् । दासेत्यादौ,—यावण,—पाषण्डविशेषः, भिक्षुवेशधारी योगीति लोके, तस्य वटिका वराटिका, कपर्दिकेति यावत्, दासेन दासद्वारा क्रयणं यस्याः सा तथा, ततः कर्मधारयः । रसेन्द्रेण—पारदेन पूरिता सा कण्ठे धृतेत्यर्थः । नलिनीदलं—पद्मिनीपत्रम् ॥१४॥१५॥

मात्रा तस्य कनीयसीति यदुक्तम्, अतस्तामेव मात्रां प्रतिपादयितुं परिभाषा-

हरिद्रादिः,—

हरिद्राद्वययष्ट्याह्व-सिंहीशक्रयवैः कृतः।
शिशोर्ज्वरातिसारघ्नः कषायः स्तन्यदोषजित्॥ १७॥

घनचातुर्भद्रिका,—

घनकृष्णारुणाशृङ्गी-चूर्णं क्षौद्रेण संयुतम्।
शिशोर्ज्वरातिसारघ्नं कासश्वासवमीहरम्॥ १८॥

धातक्यादिः,—

धातकीबिल्वधन्याक-लोध्रेन्द्रयवबालकैः।
लेहः क्षौद्रेण बालानां ज्वरातीसारवान्तिजित्॥ १९॥
रजनीदारुसरल-श्रेयसीबृहतीद्वयम्।
पृश्निपर्णी शताह्वा च लीढं माक्षिकसर्पिषा॥
ग्रहणीदीपनं हन्ति मारुतार्त्तिं सकामलाम्।
ज्वरातीसारपाण्डुघ्नं बालानां सर्वरोगनुत्॥ २०॥

---

माह, प्रथम इत्यादि।—कल्कितं।—मध्वादिविकल्पो दोषप्रकृत्यादिभेदात्। एकैकामिति।—मासि मासि एकैका रक्तिका कृत्वा वर्द्धयेदित्यर्थः। तदूर्द्ध्वमिति—वर्षादूर्द्ध्वं वर्षे वर्षे माषेण माषेण वर्द्धमानयेदिति। एतत्परिभाषामेषो यथा—"प्रतिमास प्रयोक्तव्यं वर्द्धयेत्ता भिषग्वरः। मानमेतत् प्रयोक्तव्यं सर्वमाषविधावपि॥ षोडशाब्दादपेदूर्द्ध्वं यावद्वा सप्ततिरिति। एष एव विभागोऽत्र तदूर्द्ध्वं बालवत् क्रिया॥" इति॥ १६॥

हरिद्रेत्यादौ।—सिंही—पृश्निपर्णी। अत्र हरिद्रादिकषायार्थे श्लोकेन निबद्ध, तत्र च कतकीति पठित्वा, निश्चलस्तु सिंही—वासक इत्याह। यस्तु क्षीरपो बालः कषाय पातुमसमर्थस्तस्य धात्रीं पाययेत्। सुश्रुतेन कषायोक्तद्रव्यकल्केन क्षिप्रयोः स्तनयोः पानमपि दर्शितम्, यथा—"येषां वदाम्यं ये योगा भवन्त्यन्तोऽमद्दरा। तेषु तत्कल्कसलिप्तौ कुमारं पाययेत् स्तनौ" इति॥ १७॥

घनेत्यादि।—घन—मुस्तकम्, अरुणा—अतिविषा॥ १८। १९॥

रजनीत्यादि।—वाग्भटस्य।—श्रेयसी—गजपिप्पली। बालानां सर्वरोगनुदित्यत्र बालानां सर्वरोगनुदित्यपि पाठो वाग्भटे चन्द्रटेऽपि दृश्यते॥ २०॥

मिश्रीकृष्णाञ्जनं लाजा-शृङ्गीमरिचमाक्षिकैः।
लेहः शिशोर्विधातव्यश्छर्दिकासज्वरापहः॥ २१॥

मङ्गादिः,—

शृङ्गीं समुस्तामतिविषां विचूर्ण्य लेहं विदध्यान्मधुना शिशूनाम्।
कासज्वरच्छर्दिभिरर्दितानां समाक्षिकामप्यतिविषां तथैकाम्॥२२॥

पीतं पीतं वमेद्यस्तु स्तन्यं तं मधुसर्पिषा।
द्विवार्त्ताकीफलरसं पञ्चकोलञ्च लेहयेत्॥
आम्रास्थिलाजसिन्धूत्थैर्लेहः क्षौद्रेण छर्दिनुत्॥ २३॥

पिप्पलीमरिचानान्तु चूर्णं समधुशर्करम्।
रसेन मातुलुङ्गस्य हिक्काच्छर्दिनिवारणम्॥ २४॥

पेटीपाठामूलाम्लास्थ्याः सहकारवल्कलतः कल्कः।
इत्येकशश्च पिण्डो विधृतो ह्यनाभिमध्यतालुकादौ॥
छर्द्यतिसारजवेगं प्रबलं धत्ते तदेव च नियमेन॥ २५॥

बिल्वञ्च पुष्पाणि च धातकीनां जलं सलोध्रं गजपिप्पली च।
क्वाथावलेहौ मधुना विमिश्रौ बालेषु योज्यावतिसारितेषु॥२६॥

---

मिश्रीत्यादि।—मिश्री—मधुरिका; कृष्णा—पिप्पली, अञ्जनं—रसाञ्जनम्; शृङ्गी—कर्कटशृङ्गी॥ २१। २२॥

पीतमित्यादि।—वाग्भटस्य। द्विवार्त्ताकी—बृहतीद्वयम्। फलरसमिति—वार्त्ताकीफलरसम्; पञ्चकोलञ्चेत्येको योग इति श्रीकण्ठः। निश्चलस्तु अयन्दौ विकल्पे, अतो योगद्वयम्, यदुक्तमायुर्वेदसारे—"पीत्वा यो वमति स्तन्यं भक्षं तं मधुसर्पिषा। कोलीफलरसं यद्वा पञ्चकोलं प्रलेहयेत्॥" इति। अयञ्च व्यवस्थितो विकल्पः, तेन पित्तोत्तरे कफे बृहतीद्वयफलरसम्; कफोत्तरे वातश्लेष्मणि च पञ्चकोलचूर्णमित्याह॥२३॥

पिप्पलीत्यादौ।—रसेन मातुलुङ्गस्यैव लिह्यादिति शेषः॥ २४॥

पेटीत्यादि।—पेटी—पेटारीति ख्याता, झाँपीटुपरीति लोके, तस्याः मूलम्। चकारान्मिलित्वा, प्रत्येकश्च योगः॥ २५॥

बिल्वमित्यादौ।—जलं—बालकम्। क्वाथावलेहाविति।—क्वाथो वा अवलेहो वेत्यर्थः। अवलेहपक्षे—सर्वं सचूर्णं अनुरूपमधुना लेह्यम्॥ २६॥

समङ्गाधातकीलोध्र-शारिवाभिः शृतं जलम्।
दुर्द्धरेऽपि शिशोर्देयमतीसारे समाक्षिकम्॥
नागरातिविषामुस्तं बालकेन्द्रयवैः शृतम्।
कुमारं पाययेत् प्रातः सर्वातीसारनाशनम्॥
समङ्गा धातकी पद्मं वयःस्था कच्छुरा तथा।
पिष्टैरेतैर्यवागूः स्यादतीसारविनाशिनी॥ २७॥
बिल्वचूतकषायेण लाजाश्चैव सशर्कराः।
आलोड्य पाययेद्बालं छर्द्यतीसारनाशिनीः॥ २८॥
कल्कः प्रियङ्गुकोलास्थि-मध्यमुस्तरसाञ्जनैः।
क्षौद्रलीढः कुमारस्य छर्दितृष्णाऽतिसारनुत्॥
मोचरसः समङ्गा च धातकी पद्मकेशरम्।
पिष्टैरेतैर्यवागूः स्याद्रक्तातिसारनाशिनी॥ २९॥
लेहस्तैलसिताक्षौद्र-तिलयष्ट्याह्वकल्कितः।
बालस्य रुन्ध्यान्नियतं रक्तस्रावप्रवाहिकाम्॥ ३०॥
लाजा सयष्टिमधुकं शर्कराक्षौद्रमेव च।
तण्डुलोदकसंयुक्तं क्षिप्रं हन्ति प्रवाहिकाम्॥ ३१॥

---

समङ्गेत्यादि।—समङ्गा—वराहक्रान्ता। पद्मं—पद्मकेशरम्; वयःस्था—गुडूची; कच्छुरा—शूकशिम्बीमूलम्। कल्कसाध्या इयम्॥ २७॥

बिल्वेत्यादौ।—कषायः,—चर्व्वितः। अत एव निर्देशात् चाकशब्दः क्षीलिङ्गेऽप्यस्तीति। योगोऽयं छर्द्यतिसारनाशनो बोध्य इति शेषः॥ २८॥

कल्क इत्यादौ।—कोलास्थिमध्यं—बदरास्थिमज्जा; मोचं—शाल्मलीवेष्टकः॥२९॥

लेह इत्यादौ।—रक्तस्रावप्रवाहिकामिति—प्रवाहिकायामेव यत्र रक्तस्रुतिस्तत्रायं योगः, न तु केवलरक्तस्रावे; तैलतिलयोरुष्णवीर्य्यत्वेन समानर्हत्वात्॥ ३०॥

लाजा इत्यादौ।—संयुक्तमित्यनन्तरं पीतमिति शेषः। लाजादिचूर्णं यथायोग्यं गृहीत्वा तण्डुलोदकेन पेयम्॥ ३१॥

अङ्कोठमूलमथवा तण्डुलसलिलेन वटजमूलं वा ।
पीतं हन्त्यतिसारं ग्रहणीरोगञ्च दुर्वारम् ॥ ३२ ॥
सितजीरसर्जचूर्णं विल्वदलोत्थाम्बुमिश्रितं पीतम् ।
हन्त्यामरक्तशूलं गुड़सहितः श्वेतसर्जो वा ॥
मरिचमहौषधकुटजं द्विगुणीकृतमुत्तरोत्तरं क्रमशः ।
गुड़तक्रयुक्तमेतद् ग्रहणीरोगं निहन्त्याशु ॥ ३३ ॥

विल्वशक्राम्बुमोचाब्द-सिद्धमाजं पयः शिशोः ।
समं सरक्तां ग्रहणीं पीतं हन्यात् त्रिरावतः ।
तद्वदजाक्षीरसमो जम्बूत्वगुद्भवो रसः ॥ ३४ ॥
गुदपाके तु बालानां पित्तघ्नीं कारयेत् क्रियाम् ।
रसाञ्जनं विशेषेण पानालेपनयोर्हितम् ॥ ३५ ॥
कणोषणसिताक्षौद्र-सूक्ष्मैलासैन्धवैः कृतः ।
मूत्रग्रहे प्रयोक्तव्यः शिशूनां लेह उत्तमः ॥ ३६ ॥
घृतेन सिन्धुविश्वैला-हिङ्गुभार्गीरजो लिहन् ।
आनाहं वातिकं शूलं जयेत् तोयेन वा शिशुः ॥ ३७ ॥
हरीतकीवचाकुष्ठ-कल्कं माक्षिकसंयुतम् ।
पीत्वा कुमारः स्तन्येन मुच्यते तालुपातनात् ॥ ३८ ॥

---

अङ्कोठेत्यादि ।—अङ्कोठः,—आङ्कोड इति ख्याततरुः । शीतवर्णोऽपि तण्डुलोदकं लभ्यते । वटजमूलं—वटजातमूलं, मूलाकारं कक्षप्रभावं 'व' इति ख्यातम् ; अत एवोक्तं वटजमूलमिति, न तु वटमूलम् ॥ ३२ ॥

सितेत्यादौ ।—विल्वदलोत्थाम्बु—विल्वपत्रस्वरसः । गुडेन मधुरीकृतं तक्रं गुडतक्रम् ॥ [illegible] ॥

विल्वेत्यादौ ।—शक्रम्—इन्द्रयवम् ; अम्बु—बालकम् ; मोचः,—शाल्मलीवेष्टक. । सिद्धमिति—क्षीरपरिभाषयापाकः ॥ ३४—३६ ॥

घृतेनेत्यादौ ।—सिन्धु—सैन्धवम् । एषां चूर्णं घृतेन लिह्यात् । तोयेन वेत्यत्रान्तरं पिबेदिति शेषः । तेन तोयेन कोष्णजलेन वा पिबेदित्यर्थः ॥ ३७ ॥

मुखपाके तु बालानां साम्रसारमयोरजः ।
गैरिकं चौद्रसंयुक्तं भेषजं सरसाञ्जनम् ॥
अश्वत्थत्वग्दलचौद्रैर्मुखपाके प्रलेपनम् ।
दार्वीयष्ट्यभयाजाती-पत्रचौद्रैस्तथाऽपरम् ॥ ३९ ॥
सह जम्बीररसेन सुन्दलरसघर्षणं सद्यः ।
क्षतमुपहन्ति हि पाकं मुखजं बालस्य चाश्वेव ॥ ४० ॥
लावतित्तिरिवल्लूर-रजः पुष्परसान्वितम् ।
द्रुतं करोति बालानां दन्तकेसरवन्मुखम् ॥ ४१ ॥
दन्तोद्भेदोत्थरोगेषु न बालमतियन्त्रयेत् ।
स्वयमप्युपशाम्यन्ति जातदन्तस्य ते गदाः ॥ ४२ ॥
पञ्चमूलीकषायेण सघृतेन पयः शृतम् ।
सशृङ्गवेरं सगुडं शीतं हिक्कार्दितः पिबेत् ॥

---

हरीतकीत्यादि ।—वाग्भटस्य ।—तालुपातनं—तालुपदेशस्य निम्नता । तालुकण्टकादित्यपि पाठः ॥ ३८ ॥

मुखपाक इत्यादौ ।—आम्रसारः,—आम्रसदृशपत्रः खनामख्यातो राढायामिति केचित् ; अन्ये तु—आम्रसारः,—आम्रफलास्थिमज्जेत्याहुः । आम्रसारादि-रसाञ्जनान्त एक एव प्रलेपः । अश्वत्थस्य त्वक् पत्रञ्च । अपरमित्यत्र प्रलेपनमित्यन्वयः ॥ ३९ ॥

सहेत्यादौ ।—जम्बीरः,—पर्णासभेदः । सुन्दलं—सुन्दरम्, तस्य स्वरसः पुटपाकविधिनैव ग्राह्योऽनु भवति ॥ ४० ॥

लावेत्यादि ।—वाग्भटस्य । लावतित्तिर्योर्वल्लूरं—शुष्कमांसम्, पुष्परसः,—मधु । एतन्मांसचूर्णं मधुना लेह्यमिति केचित् । अन्ये तु—मधुनैतच्चूर्णेन दन्तपालिं प्रतिसारयेदित्याहुः । किन्त्वयं योगो वाग्भटे प्रतिसारणप्रकरणे पठितः । दन्तकेसरमिति—दन्ता एव केसरं सुकुमारत्वात् ॥ ४१ ॥

दन्तोद्भेदेत्यादि ।—वाग्भटस्य । दन्तोद्भेदः,—दन्तोद्गमः ; उक्तं हि—"दन्तोद्भेदश्च रोगाणां सर्वेषामपि कारणम् । विशेषाज्ज्वरविड्भेद-कासच्छर्दिशिरोरुजाम् ॥" इत्यादि । न बालमतियन्त्रयेदिति—आहाराचारनियमेनेत्यर्थः ॥ ४२ ॥

सुवर्ण-गैरिकस्यापि चूर्णानि मधुना सह।
लीढ्वा सुखमवाप्नोति चिप्रं हिक्कार्दितः शिशुः॥ ४३॥
चित्रकं शृङ्गवेरञ्च तथा दन्ती गवाच्यपि।
चूर्णं कृत्वा तु सर्वेषां सुखोष्णेनाम्बुना पिबेत्।
श्वासं कासमथो हिक्कां कुमाराणां प्रणाशयेत्॥ ४४॥
द्राचायासाभयाकृष्णा-चूर्णं सचौद्रसर्पिषा।
लीढं श्वासं निहन्त्याशु कासञ्च तमकं तथा॥ ४५॥
पुष्कराऽतिविषाशृङ्गी-मागधीधन्वयासकम्।
चूर्णितं मधुना लीढं शिशूनां पञ्चकासनुत्॥ ४६॥
दाड़िमस्य च बीजानि जीरकं नागकेशरम्।
चूर्णितं शर्कराचौद्र-लीढं तृष्णानिवारणम्॥ ४७॥
मायूरपच्चभस्मव्युषितजलं तेन भावितं पेयम्।
तृष्णाघ्नं वटकाष्ठजभस्मजलं वक्त्रशोषजिद्वृतं वक्ते॥
पिष्टैश्छागेन पयसा दार्वीमुस्तकगैरिकैः।
बहिरालेपनं शस्तं शिशोर्नेत्रामयापहम्॥ ४८॥

---

पञ्चमूलीत्यादि।—पञ्चमूली—महती, वातकफप्रधानहिक्काहरत्वात्। अत्र क्वाथ्यार्थं पादिकं घृतम् अष्टमांशं वा; दुग्धाच्चतुर्गुणः क्वाथः। एतत् सर्वमेकीकृत्य पक्वा क्वाथं शोषयित्वा सघृतं दुग्धं स्थाप्यम्; तत्र शुण्ठीचूर्णं गुडश्चानुरूपं प्रक्षिप्य यथार्थं पिबेदित्याहुः। अन्ये तु—घृतस्यापि पानकाले प्रक्षेप्यत्वमिति वदन्ति। सुवर्णगैरिकस्य—अत्यन्तलोहितगैरिकस्य॥ ४३॥

चित्रकमित्यादौ।—गवाक्षी—गोरक्षकर्कटी। सविषम्भे वातकफेऽयं योगः॥४४।
द्राक्षेत्यादि।—कफपित्ते। यासः,—दुरालभा। तमकं—श्वासमित्यर्थः॥४५। ४६।
दाड़िमस्येत्यादौ।—चूर्णितमित्यत्र कृष्णा चेति पाठान्तरम्॥ ४७॥
मायूरेत्यादौ।— मयूरपक्षभस्मस्नावितजलेन व्युषितेन भावितवटकाष्ठभस्मस्नावितजलं पेयमित्यर्थः। मयूरपक्षभस्म पलं १, जलं पलं ६, एतदष्टधा वस्त्रे

मनःशिला शङ्खनाभिः पिप्पल्योऽथ रसाञ्जनम् ।
वर्त्तिः चौद्रेण संयुक्ता बाले सर्वाक्षिरोगनुत् ॥ ४९ ॥
मातुः स्तन्यकटुस्नेह-काञ्जिकैर्भाविते जयेत् ।
स्वेदाद्दीपशिखोत्तप्ते नेत्रामयमलक्तकः ॥ ५० ॥
शुण्ठीभृङ्गनिशाकल्कः पुटपाकः ससैन्धवः ।
कुकूणकेऽक्षिरोगेषु भद्रमाश्च्योतनं हितम् ॥ ५१ ॥
क्रिमिघ्नालशिलादार्वी-लाक्षाकाञ्चनगैरिकैः ।
चूर्णाञ्जनं कुकूणे स्यात्क्लिन्नवर्त्मनि पोथकीषु च ॥
सुदर्शनामूलचूर्णादञ्जनं स्यात् कुकूणके ।
गृहधूमनिशाकुष्ठ-राजिकेन्द्रयवैः शिशोः ।
लेपस्तक्रेण हन्त्याशु सिध्मपामाविचर्चिकाः ॥ ५२ ॥

---

परिस्राव्य धृतशीतजले मूर्च्छिते महाग्नेन घटकारकस्य प्रविश्य बहुधा परिस्राव्य यथार्हं पिबेत् ॥ ४८ ॥

मन शिलेत्यादौ ।—चौद्रेण संयुक्ता—मधुघृष्टेत्यर्थः ॥ ४९ ॥

मातुःस्तन्येत्यादौ ।—कटुस्नेह.,—कटुतैलम् । एवैर्मातुःस्तन्यादिभिः प्रत्येकशः सप्ताह भावितोऽलक्तकरस. अनन्तर दीपशिखातप्त. सन् स्वेदविधिना नेत्रामयं जयेदित्यर्थः ॥ ५० ॥

शुण्ठीत्यादौ ।—भृङ्ग.,—भृङ्गराजः । शुण्ठ्यादीनां पिष्टानां प्रत्येकं माषकत्रयम् , सैन्धव रक्तिपञ्चकम् । एतत् सर्वं पुटपाकविधिना पक्त्वा तत उद्धृत्य वस्त्रे पोट्टलीं बद्धा चक्षुषि आश्च्योतनं कार्य्यम् । कुकूणक इति पाठे—कुकूणक.,—कुथाभि.,, तस्मिन् पुटपाक इत्यन्वयः । उक्तं हि वाग्भटे—"शङ्खमेव शिशोः धत्ते कल्कितं वटपत्रवे । बद्धा गोशकृता लिप्तं कुकूले: स्वेदयेत् ततः ॥ रसेन लिम्पेत् तालास्य नेत्रे च परिषेचयेत् ॥" इति ॥ ५१ ॥

क्रिमिघ्नेत्यादौ ।—आल—हरितालम् ; शिला—मन शिला ; काञ्चनगैरिक—स्वर्णगैरिकम् ।, चूर्णाञ्जनमिति ।—मधुमिश्रितशलाकया चूर्णाञ्जन कार्य्यम् । सुदर्शनेति ।—सुदर्शना—मिश्रीति ख्याता मौयपर्णेति च ख्याता ॥ ५२ ॥

अश्वगन्धाघृतम्—

पादकल्केऽश्वगन्धायाः क्षीरे दशगुणे पचेत् ।
घृतं पेयं कुमाराणां पुष्टिकृद्बलवर्द्धनम् ॥ ५३ ॥

चाङ्गेरीघृतम्—

चाङ्गेरीस्वरसे सर्पिश्छागक्षीरसमे पचेत् ।
कपित्थव्योषसिन्धूत्थ-समङ्गोत्पलवालकैः ॥
सबिल्वधातकीमोचैः सिद्धं सर्वातिसारनुत् ।
ग्रहणीं दुस्तरां हन्ति बालानान्तु विशेषतः ॥ ५४ ॥

कुमारकल्याणकं घृतम्—

शङ्खपुष्पी वचा ब्राह्मी कुष्ठं त्रिफलया सह ।
द्राक्षा सशर्करा शुण्ठी जीवन्ती जीवकं बला ॥
शटी दुरालभा बिल्वं दाड़िमं सुरसः स्थिरा ।
मुस्तं पुष्करमूलञ्च सूक्ष्मैला गजपिप्पली ॥
एषां कर्षसमैर्भागैर्घृतप्रस्थं विपाचयेत् ।
कषाये कण्टकार्य्याश्च क्षीरे तस्मिंश्चतुर्गुणे ॥
एतत् कुमारकल्याणं घृतरत्नं सुखप्रदम् ।
बलवर्णकरं धन्यमग्निपुष्टिविवर्द्धनम् ॥
छायासर्वग्रहालक्ष्मी-क्रिमिदन्तगदापहम् ।
सर्वबालामयहरं दन्तोद्भेदे विशेषतः ॥ ५५ ॥

---

पादकल्क इत्यादौ ।—पेयं कुमाराणामिति—कुमारैः पेयमित्यर्थः । "कृत्यानां कर्त्तरि वा" इति षष्ठी ॥ ५३ ॥

चाङ्गेरीत्यादौ ।—अजाक्षीरचाङ्गेरीस्वरसौ प्रत्येकं घृताद्द्विगुणौ, पाकसाधनत्वेन चतुर्गुणद्रवस्योत्सर्गसिद्धत्वात् ॥ ५४ ॥

शङ्खपुष्पीत्यादौ ।—जीवकं—जीवनीयवर्गमध्ये पठितद्रव्यम् । सुरसः,—पर्णासः । कण्टकारीकषायः क्षीरञ्च प्रत्येकं घृताच्चतुर्गुणम् । भूतादिकृतं मुखादिवैवर्ण्यं—छाया ॥ ५५ ॥

अष्टमङ्गलघृतम्—

वचा कुष्ठं तथा ब्राह्मी सिद्धार्थकमथापि च।
शारिवा सैन्धवञ्चापि पिप्पली घृतमष्टमम्॥
मेध्यं घृतमिदं सिद्धं पातव्यञ्च दिने दिने।
दृढस्मृतिः क्षिप्रमेधाः कुमारो बुद्धिमान् भवेत्॥
न पिशाचा न रक्षांसि न भूता न च मातरः।
प्रभवन्ति कुमाराणां पिबतामष्टमङ्गलम्॥ ५६॥

लाक्षादितैलम्—

लाक्षारससमं सिद्धं तैलं मस्तु चतुर्गुणम्।
रास्नाचन्दनकुष्ठाब्द-वाजिगन्धानिशायुतैः॥
शताह्वादारुयष्ट्याह्व-मूर्वातिक्ताहरेणुभिः।
बालानां ज्वररक्षोघ्नमभ्यङ्गाद्बलवर्णकृत्॥ ५७॥
सहामुण्डितिकोदीच्य-क्वाथस्नानं ग्रहापहम्।
ससर्जदामयकुष्ठ-चन्दनैश्चानुलेपनम्॥ ५८॥
सर्पत्वक् लशुनं मूर्वा-सर्षपारिष्टपल्लवाः।
वैडालविड्जालोम मेषशृङ्गी वचा मधु।
धूपः शिशोर्ज्वरघ्नोऽयमशेषग्रहनाशनः॥ ५९॥
बलिमाङ्गलेष्टकर्माणि कार्याणि ग्रहशान्तये।
मन्त्रयायं प्रयोक्तव्यस्तत्रादौ सार्वकामिकः॥

---

वचेत्यादि।—वचादीनां कल्कः, जलं चतुर्गुणमिति॥ ५६॥

लाक्षातैले—कुष्ठाब्दचन्दनैरित्येव पाठो बाग्भटपुस्तकेषु दृश्यते, न तु कुष्ठाब्द-चन्दनैरिति। तिक्ता—कटुरोहिणी, न तु यवतिक्ता;—"समूर्वारोहिणीरास्ना-शताह्वामधुकैः समैः" इति सिद्धसारदर्शनात्॥ ५७॥

सहेत्यादि।—सहा—माषपर्णी। क्वाथोऽत्रार्द्रेयः॥ ५८॥

सर्पेत्यादि।—सर्पत्वक्—निर्मोकः; अरिष्टः,—निम्बः; सर्षपः,—श्वेतसर्षपः; मेषशृङ्ग्याः पत्रम्। मेषशृङ्गमिति पाठे—मेषस्य—गड्डरस्य शृङ्गम्॥ ५९॥

बलीत्यादौ।—तत्रादावित्यत्र अत्रादाविति पाठान्तरे—कुमारस्य रक्षकर्मादि-

ओँ नमो भगवते गरुडाय त्र्यम्बकाय सद्यस्त्वस्तुतः स्वाहा। ओँ कं पं टं शं वैनतेयाय नमः। ओँ ह्रीँ ह्रं क्षः ॥ ६० ॥

बालदेहप्रमाणेन पुष्पमालान्तु सर्वतः।
प्रगृह्य सुष्कुिकाभक्तं बलिर्देयस्तु शान्तिकः॥

"ओँ कारी सुवर्णपक्षीश ! बालकं रक्ष रक्ष स्वाहा" इति गरुड़बलिः ॥ ६१ ॥

ओँ नारायणाय नमः। प्रथमे दिवसे मासि वर्षे वा गृह्णाति नन्दा नाम मातृका। तया गृहीतमात्रेण प्रथमं भवति ज्वरः। अशुभं शब्दं मुञ्चति, आत्कारञ्च करोति, स्तन्यं न गृह्णाति।

---

सूत्रमन्त्र इत्यर्थः। ओँ इत्यादिस्वाहान्त एको मन्त्रः। ओँ इत्यादिवैनतेयान्तो द्वितीयः। एवं ओँ इत्यादि "क्ष" इत्यन्तस्तृतीयः। किंवा मिलित्वा एक एव बलिदानमन्त्रः ॥ ६० ॥

बालदेहेत्यादौ।—पुष्पमाला—स्रक्। सर्वत इति—सर्वासु दिक्षु। सुष्कुिकाभक्तं—शरावस्थीपरिस्थभक्तं चतुष्पार्श्वस्थभक्तं वा। सुष्कुिकाः,—स्वल्पशरावाः। अत्र मांसमत्स्यव्यञ्जनधूपदीपदानमप्युपदिशन्ति वृद्धाः। अयं गरुडबलिः सन्ध्यायां दिनत्रयं दीयते दृष्टे इति। बालकरक्षामन्त्रमाह, ओँ कारीत्यादिस्वाहान्तः मन्त्रः ॥ ६१ ॥

इदानीं प्रसिद्धफलं रावणकृतकुमारतन्त्रमाह, ओँ नारायणाय नम इत्यादि।—प्रथमे दिवसे इत्यादि।—ननु प्रथमे मासि वर्षे वेत्यादि कथम्?—यतो वक्ष्यमाण-द्वितीयतृतीयदिवसादिना प्रथममासस्य बाधितत्वात्; एवं प्रथमवर्षस्यापि द्वितीय-तृतीयमासादिद्वादशमासान्तेन परिभूतत्वादिति। अत्रोच्यते,—द्वादशदिनात् पर-तोऽन्यैव प्रथममासस्यावकाशः, एवं वर्षस्यापि। तथा हि, यदि कुमारो माघे जातस्तदा माघादिगणनया पौषमासि द्वादशमासाः भवन्ति। तत्र प्रथमद्वितीयादि-मासविधिरेव; ततः परं द्वादशमासि वर्षवृद्धिदिनं यावत् प्रथमसंवत्सरविधिर्विधेय इति युक्तिमुत्पश्यामः। मासेनाम गणना, न तु चन्द्रादित्यगत्या दिनविभागं कृत्वा मासादिगणना कार्या; इह द्वादशमासवर्षयोर्विषयत्वाभावप्रसङ्गात्। किंवा आदित्यगत्या दिनगणनयाऽपि जन्मदिन एव प्रथमवर्षविधिचरितार्थत्वमिति।

बलिं तस्य प्रवक्ष्यामि येन सम्पद्यते शुभम्।

नद्युभयतटमृत्तिकां गृहीत्वा पुत्तलिकां कृत्वा, शुक्लौदनः, शुक्लपुष्पं, शुक्लसप्तध्वजाः, सप्त प्रदीपाः, सप्त स्वस्तिकाः, सप्त वटकाः, सप्त शष्कुलिकाः, सप्त जम्बुड़िका, सप्त मुस्तकाः, गन्धं, पुष्पं, ताम्बूलं मत्स्यं, मांसं, सुराप्रभक्तञ्च—पूर्वस्यां दिशि चतुष्पथे मध्याह्ने बलिर्दातव्यः। ततः अश्वत्थपत्रं जलकुम्भे निक्षिप्य शान्त्युदकेन स्नापयेत्; रसोनसिद्धार्थकमेषशृङ्गनिम्बपत्रशिवनिर्माल्यैर्बालकं धूपयेत्। "ओँ नमो रावणाय, अमुकस्य व्याधिं हन हन मुञ्च मुञ्च ह्रीँ फट् स्वाहा" एवं दिनत्रयं बलिं दत्त्वा चतुर्थे दिवसे ब्राह्मणं भोजयेत्। ततः सम्पद्यते शुभम्॥ ६२॥

द्वितीये दिवसे मासे वर्षे वा गृह्णाति सुनन्दा नाम मातृका। तया गृहीतमात्रेण प्रथमं भवति ज्वरः। चक्षुः उन्मीलयति, गात्रमुद्वेजयति, न शेते, क्रन्दति, स्तन्यं न गृह्णाति, चाल्कारश्च भवति।

बलिं तस्य प्रवक्ष्यामि येन सम्पद्यते शुभम्।

तण्डुलहस्तपृष्ठैकं गृहीत्वा दधिगुड़घृतञ्च मिश्रितं शरा-

---

नन्दादिनामकीर्त्तनञ्च तदुद्देशेन बलिदानार्थम्; यथा—अमुकस्य व्याधिं हन हन मुञ्च मुञ्च स्वाहा, नन्दायै नम इति बलिदानम्। अश्वत्थमन्दलनलदलवाद्यं युक्तं —विरीति। चाल्कारः—छर्दिः। स्वस्तिका—वेदिका। जम्बुड़िका—उत्पलिष्टमाषाः। अश्वत्थपत्रं जलकुम्भे प्रक्षिप्य गायत्रीं पठित्वा तेनैव शान्त्युदकं कर्त्तव्यम्; किंवा बलिदानमन्त्रेणैव सप्तधा आवर्त्य तेनैव कार्य्यमित्याहुरेके। मेषस्य गड्डरस्य शृङ्गम्। यत्र धूपो नोक्तस्तत्राप्ययमेव धूपो विधेयः। तथा यत्र शान्त्युदकं नोक्तं तत्र इदमेव शान्त्युदकमुपदिशन्ति। ओँ नम इत्यादि।—अक्षी मुख, शैवविशि-षाप्ते प्रतिमाद्वयं वाच्याः. कुमारस्य नामोच्चारणपूर्वकं पठनीयाः; यथा—अमुकस्य व्याधिं हन हन मुञ्च मुञ्च इति॥ ६२॥

द्वितीय इत्यादौ। उन्मीलयति—उपरि अक्षमुन्नमयति। तण्डुलहस्तपृष्ठैक-

वैकं, गन्धताम्बूलं, पीतपुष्पं, पीतसप्तध्वजाः, चत्वारः प्रदीपाः, दश स्वस्तिकाः, मत्स्यमांससुराग्रभक्ततिलचूर्णानि—पश्चिमायां दिशि चतुष्पथे बलिर्दातव्यः दिनानि त्रीणि सन्ध्यायां, ततः शान्त्युदकेन स्नापयेत्। शिवनिर्माल्य-सिद्धार्थ-मार्जाररोमो-शीर-बालक-घृतैः धूपं दद्यात्। "ओँ नमो रावणाय, अमुकस्य व्याधिं हन हन मुञ्च मुञ्च ह्रीँ फट् स्वाहा"। चतुर्थे दिवसे ब्राह्मणं भोजयेत्। ततः सम्पद्यते शुभम् ॥ ६३ ॥

तृतीये दिवसे मासे वर्षे वा गृह्णाति पूतना नाम मातृका। तया गृहीतमात्रेण प्रथमं भवति ज्वरः। गात्रमुद्वेजयति, स्तन्यं न गृह्णाति, मुष्टिं बध्नाति, क्रन्दति, ऊर्द्ध्वं निरीक्षते।

बलिं तस्य प्रवक्ष्यामि येन सम्पद्यते शुभम्।

नद्युभयतटमृत्तिकां गृहीत्वा पुत्तलिकां कृत्वा गन्ध-ताम्बूलं, रक्तपुष्पं, रक्तचन्दनं, रक्तसप्तध्वजाः, सप्त प्रदीपाः, सप्त स्वस्तिकाः, पञ्चिमांससुराग्रभक्तञ्च—दक्षिणस्यां दिशि अपराह्णे चतुष्पथे बलिर्दातव्यः। शिवनिर्माल्यगुग्गुलुसर्षपनिम्बपत्रमेष-शृङ्गैर्दिनत्रयं धूपयेत्। "ओँ नमो रावणाय, अमुकस्य व्याधिं हन हन मुञ्च मुञ्च त्रासय त्रासय स्वाहा"। एवं दिनत्रयं कार्य्यम्। चतुर्थे दिवसे ब्राह्मणान् भोजयेत्। ततः सम्पद्यते शुभम् ॥ ६४ ॥

चतुर्थे दिवसे मासे वर्षे वा गृह्णाति मुखमुण्डिका नाम

---

मिति।—एकवारपरिमितहस्तपृष्ठे तण्डुलान् गृहीत्वेत्यर्थः। ध्वजाः,—पताकाः। अग्रभक्तमिति।—ओदनपूर्णस्थालीमध्यात् यत् प्रथममाकृष्यते भक्तं तदग्रभक्तम्। शान्त्युदकेनेति।—शान्त्युदकमिदं कुशेन कार्य्यम्; एवं सर्व्वत्र विशेषोक्तिं विना; अत्र मन्त्रे ह्रीँ फट् इति विशेषः ॥ ६३ ॥

तृतीय इत्यादौ।—अग्रभक्तमिति—ओदनपूर्णस्थालीमध्यात् यत् प्रथममाकृष्यते तत् अग्रभक्तम् ॥ ६४ ॥

मातृका। तया गृहीतमात्रेण प्रथमं भवति ज्वरः। ग्रीवां नमयति, चक्षुरुन्मीलयति, स्तन्यं न गृह्णाति, रोदिति, स्वपिति, मुष्टिं बध्नाति।

बलिं तस्य प्रवक्ष्यामि येन सम्पद्यते शुभम्।

नद्युभयतटमृत्तिकां गृहीत्वा पुत्तलिकां कृत्वा उत्पल-पुष्पं, गन्धं, ताम्बूलं, दश ध्वजाः, दीपाश्चत्वारः, त्रयोदश स्वस्तिकाः, मत्स्यमांससुरापभक्षच,—उत्तरस्यां दिशि अपराह्णे बलिर्देयश्चतुष्पथे। "ओँ नमो रावणाय, अमुकस्य व्याधिं हन हन मुञ्च मुञ्च स्वाहा"। चतुर्थे दिवसे ब्राह्मणान् भोजयेत्। ततः सम्पद्यते शुभम् ॥ ६५ ॥

पञ्चमे दिवसे मासे वर्षे वा गृह्णाति कटपूतना नाम मातृका। तया गृहीतमात्रेण प्रथमं भवति ज्वरः। गात्र-मुद्वेजयति, स्तन्यं न गृह्णाति, मुष्टिञ्च बध्नाति।

बलिं तस्य प्रवक्ष्यामि येन सम्पद्यते शुभम्।

कुम्भकारचक्रस्य मृत्तिकां गृहीत्वा पुत्तलिकां विधाय गन्धताम्बूलं, शुक्लपुष्पं, शुक्लौदनं, पञ्च ध्वजाः, पञ्च प्रदीपाः, पञ्च वटकाः, ऐशान्यां दिशि बलिर्दातव्यः ; शान्त्युदकेन स्नाप-येत् ; शिवनिर्माल्य-सर्पनिर्मोक-गुग्गुलु-निम्बपत्र-बालक-घृतै-र्धूपं दद्यात्। "ओँ नमो रावणाय, अमुकस्य व्याधिं चूर्णय चूर्णय हन हन स्वाहा"। चतुर्थे दिवसे ब्राह्मणान् भोजयेत्। ततः सम्पद्यते शुभम् ॥ ६६ ॥

षष्ठे दिवसे मासे वर्षे वा यदि गृह्णाति शकुनिका नाम मातृका। तया गृहीतमात्रेण प्रथमं भवति ज्वरः। गात्रभेदं

---

चतुर्थ इत्यादौ।—दश ध्वजा इति—ध्वजाः, विशेषाभावात् ॥ ६५ ॥

पञ्चम इत्यादौ।—कुम्भकारचक्रमृत्तिका—कुम्भकारचक्रसंलग्नमृत्तिका ॥ ६६ ॥

दर्शयति, मुष्टिं बध्नाति दिवारात्रावुत्थानं भवति, ऊर्द्ध्वं निरीक्षते।

बलिं तस्य प्रवक्ष्यामि येन सम्पद्यते शुभम्।

पिष्टकेन पुत्तलिकां कृत्वा शुक्लौदनं, शुक्लपुष्पं, पीतपुष्पं, रक्तपुष्पं, गन्धताम्बूलानि, दश दीपाः, दश पीतध्वजाः, दश स्वस्तिकाः, दश वटकाः, चीरजम्बुड़िकाः, मत्स्यमांससुराः,—आग्नेय्यां दिशि निष्क्रान्ते मध्याह्ने बलिर्दातव्यः; ततः शान्त्युदकेन स्नापयेत्; शिवनिर्माल्यरसोनगुग्गुलुसर्पनिर्मोकनिम्बपत्रघृतैर्धूपं दद्यात्। "ओँ नमो रावणाय, अमुकस्य व्याधिं चूर्णय चूर्णय हन हन स्वाहा"। चतुर्थे दिवसे ब्राह्मणान् भोजयेत्। ततः सम्पद्यते शुभम् ॥ ६७ ॥

सप्तमे दिवसे मासे वर्षे वा यदा गृह्णाति शुष्करेवती नाम मातृका। तया गृहीतमात्रेण प्रथमं भवति ज्वरः। गात्रमुद्वेजयति, मुष्टिं बध्नाति, रोदिति।

बलिं तस्य प्रवक्ष्यामि येन सम्पद्यते शुभम्।

रक्तपुष्पं, शुक्लपुष्पं, गन्धताम्बूलं, रक्तौदनं, छत्राः, त्रयोदश स्वस्तिकाः, त्रयोदश शष्कुलिकाः, जम्बुड़िका, मत्स्यमांससुराः, त्रयोदश ध्वजाः, पञ्च प्रदीपाः,—पश्चिमायां दिशि ग्रामनिष्कासेऽपराह्णे वृक्षमाश्रित्य बलिर्दातव्यः; ततः शान्त्युदकेन स्नापयेत्; गुग्गुलुमेषशृङ्गीसर्षपोशीरवालकघृतैर्धूपं दद्यात्। "ओँ नमो रावणाय, रौप्यतेजसे अमुकस्य व्याधिं हन हन मुञ्च मुञ्च स्वाहा"। चतुर्थे दिवसे ब्राह्मणान् भोजयेत्। ततः सम्पद्यते शुभम् ॥ ६८ ॥

---

षष्ठ इत्यादौ।—चीरजम्बुड़िकाः,—क्षीरमिश्रिताः शिम्बमाषाः ॥ ६७ ॥

सप्तम इत्यादौ—रक्तौदनं—रक्तशाल्यादिभक्तम्, अलक्तकादिरञ्जितभक्तं वा। छत्रा—तिक्ततण्डुलनिर्मितवस्तुः। ग्रामनिष्कासे—ग्रामप्रान्ते ॥ ६८ ॥

अष्टमे दिवसे मासे वर्षे वा यदि गृह्णाति अर्थ्यका नाम मातृका। तया गृहीतमात्रेण प्रथमं भवति ज्वरः। गृध्रगन्धः, पूतिगन्धश्च जायते, आहारं न गृह्णाति, गात्रमुद्वेजयति।

बलिं तस्य प्रवक्ष्यामि यतः सम्पद्यते शुभम्।

रक्तपीतध्वजाः, चन्दनं, पीतपुष्पं, शष्कुल्यः, पर्पटिकाः, मत्स्यमांससुराः, जम्बुड़िकाः,—प्रत्यूषे बलिं दद्यात् प्रान्तरे। "ओँ नमो रावणाय त्रैलोक्यविद्रावणाय चतुर्दिशमोक्षणाय, अमुकस्य व्याधिं हन हन मुञ्च मुञ्च दह दह ओँ ह्रीँ फट् स्वाहा"। चतुर्थे दिवसे ब्राह्मणान् भोजयेत्। ततः सम्पद्यते शुभम् ॥ ६८ ॥

नवमे दिवसे मासे वर्षे वा यदि गृह्णाति सूतिका नाम मातृका। तया गृहीतमात्रेण प्रथमं भवति ज्वरः। नित्यं छर्दयति, गात्रभेदं दर्शयति, मुष्टिं बध्नाति, निद्राऽतितरा स्यात्।

बलिं तस्य प्रवक्ष्यामि येन सम्पद्यते शुभम्।

नद्युभयतटमृत्तिकां गृहीत्वा पुत्तलिकां निर्माय शुक्लवस्त्रेण वेष्टयेत्। शुक्लपुष्पं, शुक्लौदनं, गन्धताम्बूलं, शुक्लत्रयोदशध्वजाः, त्रयोदश प्रदीपाः, त्रयोदश स्वस्तिकाः, त्रयोदश पुत्तलिकाः, मत्स्यमांससुराः,—उत्तरदिग्विभागे ग्रामनिष्क्रामे बलिं दापयेत्; शान्त्युदकेन स्नापयेत्; गुग्गुलुनिम्बपत्रगोधूमगोशृङ्गश्वेतसर्षपघृतैर्धूपं दद्यात्। "ओँ नमो रावणाय चतुर्भुजाय, अमुकस्य व्याधिं हन हन मुञ्च मुञ्च स्वाहा"। चतुर्थे दिवसे ब्राह्मणान् भोजयेत्। ततः सम्पद्यते शुभम् ॥ ७० ॥

दशमे दिवसे मासे वर्षे वा यदि गृह्णाति निर्ऋता नाम मातृका। तया गृहीतमात्रेण प्रथमं भवति ज्वरः। गात्र-

मुद्वेजयति, आत्कारं करोति, रोदिति, वध्नाति मूत्रं, पुरीषञ्च भवति।

बलिं तस्य प्रवक्ष्यामि येन सम्पद्यते शुभम्।

पारावारमृत्तिकां गृहीत्वा, पुत्तलिकां निर्माय, गन्ध-ताम्बूलं, रक्तपुष्पं, रक्तचन्दनं, पञ्चवर्णपञ्चध्वजाः, पञ्च प्रदीपाः, पञ्च स्वस्तिकाः, पञ्च पुत्तलिकाः, मत्स्यमांससुराः,—वायव्यां दिशि बलिं दद्यात्; काकविष्ठा-गोमांस-गोशृङ्ग-रसोन-मार्जार-रोम-निम्बपत्र-घृतैर्धूपयेत्। "ओँ नमो रावणाय चूर्णितहस्ताय अमुकस्य व्याधिं हन हन मुञ्च मुञ्च स्वाहा"। चतुर्थे दिवसे ब्राह्मणान् भोजयेत्। ततः सम्पद्यते शुभम्॥ ७१॥

एकादशे दिवसे मासे वर्षे वा यदि गृह्णाति पिलिपिच्छिका नाम मातृका; तया गृहीतमात्रेण प्रथमं भवति ज्वरः। आहारं न गृह्णाति, ऊर्द्ध्वदृष्टिर्भवति, गात्रभङ्ग आत्कारश्च भवति।

बलिं तस्य प्रवक्ष्यामि येन सम्पद्यते शुभम्।

पिष्टकेन पुत्तलिकां कृत्वा रक्तचन्दनरक्ताञ्च तस्या मुखं दुग्धेन सिञ्चेत्। पीतपुष्पं, गन्धताम्बूलं, सप्त पीतध्वजाः, सप्त प्रदीपाः, अष्टौ वटकाः, अष्टौ शष्कुलिकाः, अष्टौ पूपिकाः, मत्स्यमांससुराः,—पूर्वस्यां दिशि बलिर्दातव्यः; शान्त्युदकेन स्नापयेत्; शिवनिर्माल्यगुग्गुलुगोशृङ्गसर्पनिर्मोकघृतैर्धूपयेत्। "ओँ नमो रावणाय, अमुकस्य व्याधिं मुञ्च मुञ्च स्वाहा"। चतुर्थे दिवसे विप्रान् भोजयेत्। तेन सम्पद्यते शुभम्॥ ७२॥

द्वादशे दिवसे मासे वर्षे वा यदि गृह्णाति कालुका नाम मातृका; तया गृहीतमात्रेण प्रथमं भवति ज्वरः। विहस्य वादयति, अङ्गुल्या तर्जयति, गृह्णाति, क्रामति, निःश्वसिति, मुहुर्मुहुश्छर्दयति, आहारं न करोति।

बलिं तस्य प्रवक्ष्यामि येन सम्पद्यते शुभम्।

चौरेण पुत्तलिकां कृत्वा शुक्लकुसुमं, गन्धताम्बूलं, शुक्लसप्तध्वजाः, सप्त शष्कुलिकाः, सप्त प्रदीपाः,—करम्भकेण सर्वकर्मबलिं दद्यात्। शान्त्युदकेन स्नापयेत्। श्वेतसर्षपगुग्गुलुशिवनिर्माल्यघृतैर्धूपयेत्। "ओँ नमो रावणाय, अमुकस्य व्याधिं मुञ्च मुञ्च हन हन स्वाहा"। चतुर्थे दिवसे विप्रान् भोजयेत्। तेन सम्पद्यते शुभम् ॥ ७३ ॥

इति रावणकृतं कुमारतन्त्रं समाप्तम् ॥

इति बालरोग-चिकित्सा ॥

## अथ विष-चिकित्सा।

अरिष्टाबन्धनं मन्त्रप्रयोगश्च विषापहः।
दंशनं दंशकस्याहेः फलस्य मृदुनोऽपि वा ॥ १ ॥

---

अष्टमनवमदशमैकादशाः स्पष्टाः। कादरी—कादयतीति—सन्तापयति, रोदितीति पाठान्तरम्। चौरेणेति—शाकात् पिष्टीभूतेन चौरेणेत्यर्थः। करम्भकेण दधिमिश्रितभक्तेन ॥ ७३ ॥

इति बालरोग चिकित्सा-विवृतिः।

इदानीमातुरहितचिकित्सापारिशेष्यात् विषचिकित्सामाह, अरिष्टेत्यादि।—अरिष्टाबन्धनं—धमनीबन्धः, स च दंशदेशाद्दूर्ध्वं चतुरङ्गुले। यदाह वाग्भटः,—"दंशस्योपरि बध्नीयादरिष्टां चतुरङ्गुले। क्षौमादिभिर्वल्कलैर्वा सिद्धमन्त्रेण मन्त्रितम् ॥" इति। दंशकस्याहेरिति।—दंशकर्तुः सर्पस्य दंशनं दन्तपंक्तिद्वयेनाभिपीडनम्; एवं मृदुफलस्यापि। एतच्च सुकुमारद्रव्योपलक्षणं, तेन रक्तामलकाण्डादयोऽपि बोध्यम्। तत्र सर्वत्र विषसङ्क्रमश्च भवतीति भावः। यदुक्तं ग्रन्थे—"धत्ते दष्टविषो न भोगिनमसौ प्राप्नोति दष्टो यदा, रक्ताम्लकमथालकौभसफलं दन्तैर्दशंस्त्याद्यत्। गच्छेन् तत्क्षणमेव तस्य गरलं तद्दष्टवस्त्वन्तरं, दंशे भीरुतया नयेच्च बहुधा सम्मर्दं हलेन वा ॥" इति ॥ १ ॥

मूलं तण्डुलवारिणा पिबति यः प्रत्यङ्गिरासम्भवम्
निष्पिष्टं शुचिभद्रयोगदिवसे तस्याहिभीतिः कुतः ।
दर्पादेव फणी यदा दशति तं मोहान्वितो मूलपम्
स्थाने तत्र स एव याति नियतं वक्त्रं यमस्याचिरात् ॥ २ ॥

मसूरं निम्बपत्राभ्यां खादेन्मेषगते रवौ ।
अब्दमेकं न भीतिः स्याद्विषात् तस्य न संशयः ॥
धवलपुनर्नवजटया तण्डुलजलपीतया च पुष्यर्क्षे ।
अपहरति विषधरविषोपद्रवमावत्सरं पुंसाम् ॥ ३ ॥

गृहधूमो हरिद्रे द्वे समूलं तण्डुलीयकम् ।
अपि वासुकिना दष्टः पिबेद्दधिघृताप्लुतम् ॥
कुलिकामूलनस्येन कालदष्टोऽपि जीवति ॥ ४ ॥
श्लेष्मणः कर्णगूथस्य वामानामिकया हृतः ।
लेपो हन्याद्विषं घोरं स्वमूत्रसेचनं तथा ॥ ५ ॥

---

मूलमित्यादौ ।—प्रत्यङ्गिरा—कण्टकीशिरीषः । शुचिराषाढस्तस्य भद्रयोगदिवसे शुभयोगनक्षत्रादियुक्तदिने, पुष्यानक्षत्रादियुक्तदिने इत्यन्ये ॥ २ ॥

मसूरमित्यादि ।—मसूरगुडकमित्यं, निम्बस्य द्वे पत्रे, तृतीया सहार्थे । मेषगते रवौ वैशाखे । धवलेत्यादि—स्पष्टम् ॥ ३ ॥

गृहधूम इत्यादौ ।—तण्डुलीयकमिति—केवलतण्डुलीयकमूलमपि पीथ्यम् । तदुक्तं बिन्दुसारे—"तण्डुलीयकमूलन्तु पीतं तण्डुलवारिणा । तक्षकेणापि संदष्टं निर्विषं कुरुते नरम् ॥" इति । कुलिकेत्यादि ।—कुलिकः,—काकाण्डभेदः, स्वल्पफलः कुडकराणि इति ख्यातः । उपदेशात् तण्डुलोदकेन नस्यं कार्यम् । केचित् पानं वदन्ति ॥ ४ ॥

श्लेष्मण इत्यादि ।—योगद्वयम् । श्लेष्मण इति—मुखस्थितश्लेष्मण इत्येकः, कर्णगूथस्येति द्वितीयः । वामानामिकया हृत इति ।—कनिष्ठाङ्गुलीसमीपे या अङ्गुली, सा अनामिकेत्युच्यते । वामहस्तस्य अनामिकाङ्गुल्या हृत इत्यर्थः । स्वमूत्रसेचनं दंशदेशे स्वीयमूत्रसेकः । उक्तं हि—"सर्पदष्टप्रदेशे तु स्वयमेव विचक्षणः । मूत्रयेत् तत्-क्षणादेव निर्विषत्वमवाप्नुयात् ॥" इति । अयं तृतीयो योगः ॥ ५ ॥

शिरीषपुष्पस्वरसे भावितं मरिचं सितम्।
सप्ताहं सर्पदष्टानां नस्यपानाञ्जने हितम्॥ ६॥
द्विपलं नतकुष्ठाभ्यां घृतक्षौद्रं चतुःपलम्।
अपि तक्षकदष्टानां पानमेतत् सुखावहम्॥ ७॥
वन्ध्यकर्कोटजं मूलं छागमूत्रेण भावितम्।
नस्यं काञ्जिकसंयुक्तं विषोपहतचेतसः॥ ८॥

विडङ्गविशल्या मधुकं हरिद्रे
मञ्जिष्ठवर्गो लवणञ्च सर्वम्।
कटुत्रिकञ्चैव विचूर्णितानि
शृङ्गे निदध्यान्मधुसंयुतानि॥
एषोऽगदो हन्त्युपयुज्यमानः
पानाञ्जनाभ्यञ्जननस्ययोगैः।
अवार्य्यवीर्य्यो विषवेगहन्ता
महागदो नाम महाप्रभावः॥

---

शिरीषेत्यादि।—वाग्भटस्य।—मरिचं सितमिति—श्वेतमरिचम्। अयमेव पाठश्चक्रटीकायां दृश्यते। अत्र श्वेतसर्षपमिति पाठान्तरमयुक्तम्॥ ६॥

द्विपलमित्यादि।—वाग्भटस्य।—चतुष्पलोऽयं मात्रा सर्पदष्टविषये विशेषविहितत्वात् न दोषावहेति॥ ७॥

वन्ध्येत्यादि।—वन्ध्या,—फलरहिता कर्कोटिका॥ ८॥

विडङ्गेत्यादि।—सुश्रुतस्य।—विशल्या—दन्ती, काण्डपाटला वा; विशालेति पाठे—गोरक्षकर्कटी। मञ्जिष्ठावर्गः,—मञ्जिष्ठासहितोऽयमेव विडङ्गादिवर्गः इत्यर्थः। अन्ये तु—मञ्जिष्ठावर्गं पृथगेव पठन्ति; तच्च टीकाकारैर्न व्याख्यातम्। वङ्गसेनस्तु—"विडङ्गविशल्या मधुकं हरिद्रे, रक्ता नरेन्द्रो लवणश्च वर्गः" इति पठति, व्याचष्टे च—विशल्या—दन्ती, काण्डपाटला वा; रक्ता—मञ्जिष्ठा; नरेन्द्रः,—आरग्वधः; लवणवर्गः,—लवणपञ्चकमिति। शृङ्गे इति—गोशृङ्गे, निदध्यादिति—पक्षमेकं स्थापयेत्। एतच्च गोशृङ्गे पक्षैकं स्थापनं सौश्रुतस्यागदस्य योगे यथा दर्शनात्। यथा—"शृङ्गे

लेप इव भेकगरलं शिरोषबीजैः स्नुहीपयःसिक्तैः ।
हरति गरलं त्र्यहमर्पिताङ्कोठजटा कुष्ठसम्मिलिता ॥
मरिचमहौषधवालकनागाह्वैर्मक्षिकाविषे लेपः ।
लालाविषमपनयतो मूले मिलिते घटोलनीलिकयोः ॥
सोमवल्कोऽश्वकर्णश्च गोजिह्वा हंसपाद्यपि ।
रजन्यौ गैरिकं लेपो नखदन्तविषापहः ॥
वचाहिङ्गुविडङ्गानि सैन्धवं गजपिप्पली ।
पाठा-प्रतिविषा-व्योषं काश्यपेन विनिर्मितम् ॥
दशाङ्गमगदं पीत्वा सर्वकीटविषं जयेत् ।
कीटदष्टक्रियाः सर्वाः समानाः स्युर्जलौकसाम् ॥ २१ ॥

मृतसञ्जीवनोऽगदः,—

पृक्काश्वस्थौणेय-काचीशैलेयरोचनातगरम् ।
ध्यामककुङ्कुममांसी-सुरसाग्रैलालकुष्ठघ्नम् ॥
बृहतीशिरीषपुष्प-श्रीवेष्टकपद्मचारटीविशालाः ।
सुरदारुपद्मकेशर-शावरकमनःशिलाकौन्त्यः ॥
जात्यर्कपुष्पसर्षप-रजनीद्वयहिङ्गुपिप्पलीलाक्षाः ।
जलमुद्गपर्णीचन्दनमधुकमदनसिन्धुवाराश्च ॥

---

भेकविषचिकित्सामाह, लेप इत्यादि ।—अर्पिता—भक्षिता । क्वाथविधया कल्कविधया वा योज्यमेतत् । मरिचेत्यादौ ।—नागाह्वं—नागकेशरम् । लालाविषमिति—लालैव विषं लालाविषम् । नीलिका—रञ्जनद्रव्यविशेषः । सोमवल्कः,—कट्फलम् ; अश्वकर्णः,—शालभेदः, गर्दभाण्डी वा । गोजिह्वा—दार्वीशाकः, हंसपादी—हंसपादाकृतिः स्वनामख्याता । कीटविषचिकित्सामाह, वचेत्यादि ।—दशाङ्गस्य । पीत्वेति ।—क्वाथविधया कल्कविधया वा योज्यम् । अतिदेशेन जलौकाविषचिकित्सामाह, कीटदष्टेत्यादि ॥ २१ ॥

स्पृक्केत्यादौ ।—स्थौणेयं—ग्रन्थिपर्णम्, काची—सौराष्ट्रमृत्तिका, ध्यामकं—गन्धतृणम् ; सुरसाग्रं—निर्गुण्डीमञ्जरी, आलं—हरितालं, कुष्ठघ्नम्—एडगजः, श्रीवेष्टकः,—नवनीतखोटी, पद्मचारटी—कुष्माण्डलता । पद्मस्य केशरं किञ्जल्कः, शावरकः,—लोध्रः ; कौन्ती—रेणुका । जात्यर्कपुष्पमिति—जात्यर्कयोः पुष्पम् ; जलं—

सम्पाकलोध्रमयूरक-गन्धफलीनाकुलीविडङ्गाय।
पुष्येणोद्धृत्य समं पिष्ट्वा गुड़िका विधेयाः स्युः ॥
जन्तुविषघ्नो जयकृद् विषमृतसञ्जीवनो ज्वरनिहन्ता।
प्रेयविलेपनधारणधूमग्रहणैर्गृहस्थश्च ॥
भूतविजयस्वलक्ष्मी-कार्मणमन्त्राम्नयग्न्यरीन् हन्यात्।
दुःस्वप्नस्त्रीदोषानकालमरणाम्बुचौरभयम् ॥
धनधान्यकार्य्यसिद्धि-श्रीपुष्ट्यायुर्विवर्द्धनो धन्यः।
मृतसञ्जीवन एष प्रागमृताद् ब्रह्मणाभिहितः ॥ २२ ॥

इति विष-चिकित्सा।

---

## अथ रसायनाधिकारः।

यज्जराव्याधिविध्वंसि भेषजं तद्रसायनम् ॥ १ ॥

---

बालकम्, निर्गुण्ड्याकारः शुक्लपुष्प सिन्धुवारः। सम्पाक,—आरग्वधः, तस्य फलं ग्राह्यम्। लोध्र—लोहितलोध्रम्, मयूर,—अपामार्गः, गन्धफली—प्रियङ्गुः, नाकुली—रास्ना। पुष्ये—पुष्यनक्षत्रयुक्ताकाले। अजय,—विजय, कार्मण—परद्रोहोपाय', मन्त्र,—अभिचारमन्त्र। अशनि,—वज्रम्। स्त्रीदोषाः,—सौभाग्यार्थ-प्रसवादिदोषा. ॥ २२ ॥

इति विष चिकित्सा-विवृति.।

---

भेषजं तावद्विविधम्—आतुरहितं सुस्थहितञ्च। सुस्थहितमपि द्विविधं, रसायनवाजीकरणभेदात्। अत्रातुरहितं तावदुक्तमेव, सम्प्रति सुस्थहितं वाच्यम्; तत्रापि वाजीकरणापेक्षया रसायनस्य सर्वजनायुरादिजनकतया महाफलतया च प्रथमतो रसायनमाह, यदित्यादि।—जराव्याधिविध्वंसि—जराव्याध्योरनुत्पत्तिकरम्। *एतेन निमित्तमात्रकार्ये इति जरादिनाशकत्वं रसायनत्वमिति लक्षणं* सूचितम्। अत्र रसशब्देन रसकार्यत्वात् समानादीव धातवो गृह्यन्ते, अत्रादिविशेषविधानात् कथारम्भनियमादिषु नाधिकाराः। ननु कश्चीन रसायनाधिकारी, यस्मादि

पूर्वे वयसि मध्ये वा शुद्धकायः समाचरेत् ॥ २ ॥
अविशुद्धशरीरस्य युक्तो रसायनो विधिः ।
न भाति वाससि क्लिष्टे रङ्गयोग इवार्पितः ॥ ३ ॥
गुडेन मधुना शुण्ठ्या कृष्णया लवणेन वा ।
द्वे द्वे खादन् सदा पथ्ये जीवेद्वर्षशतं सुखी ॥
सिन्धूत्थशर्कराशुण्ठी-कणामधुगुडैः क्रमात् ।
वर्षादिष्वभया सेव्या रसायनगुणैषिणा ॥ ४ ॥
त्रैफलेनायसीं पात्रीं कल्केनालेपयेन्नवाम् ।
तमहोरात्रिकं लेपं पिबेत् क्षौद्रोदकाप्लुतम् ॥

---

च, पूर्वे वयसीत्यादि।—तथा चान्यत्राप्युक्तं—"जरापक्वशरीरस्य व्यर्थमेव रसायनम्" इति। तत् कथं जराप्रशमनाय रसायनस्य ? नैवं, जराशब्देनात्र अकालपलितं खालित्यञ्च भाविपलितमुच्यते, अतो नोक्तो दोषः। यत्तु च्यवनप्रभृतयो सुवृद्धोऽभूत् पुनर्युवेति, अनेन वृद्धस्यापि रसायनप्रयोगात् जराप्रशमनमुक्तम्; तत् तपःप्रभावेणानुगृहीतरसायनस्य फलं, न रसायनमात्रस्येति। सुदान्तस्त्वाह—"रसायनञ्च स्वस्थातुरविषयम्। जरा च व्याधिश्च तन्निर्व्वंसितुं शीलं यस्य तद्रसायनम्। जरा हि मृदुत्वेन न पूर्व्वापरविरोधः अकालजराहरत्वाद्रसायनस्य। यत् तु च्यवनप्रभृतयो सुवृद्धोऽभूत् पुनर्युवेति तत् तपःप्रभावानुगृहीतत्वेनाचिन्त्यसामर्थ्यात्। भेषजपदेन ध्यानमन्त्रादिकं व्यवच्छिनत्ति। ज्वरेति ज्वरातिसारादिभेषजं वाजीकरणं व्यवच्छिनत्ति। व्याधीति कपालरञ्जनकृष्णीकरणादिकञ्च व्यवच्छिनत्तीति" ॥ १ ॥

पूर्वं इत्यादि।—पूर्वं इति—यौवनप्रवेश एव। मध्य इति—यौवनमध्ये। वार्द्धके तु रसायनाविषयो भेषजवीर्य्यासहत्वात् जरापक्वशरीरत्वाच्च। शुद्धकाय इति—वमनविरेचनाभ्यां शुद्धशरीरः ॥ २ ॥

अविशुद्धे तथा फलं नास्तीति मत्वाह, अविशुद्धशरीरस्येत्यादि।—सुश्रुतस्य।—युक्त इति—प्रयुक्तः। क्लिष्ट इति—मलिने ॥ ३ ॥

प्रथमतः हरीतकीरसायनमाह, सिन्धूत्थेत्यादि।—वर्षासु हरीतकी मा ६, सैन्धव मा २ मिलनीया। शरदि हरीतकी मा ५, शर्करा मा ४ खाद्यम्; शीतलजल पेयम्। हेमन्ते हरीतकी मा ७, शुण्ठी मा २, तप्तजलं पेयम्। शिशिरे हरीतकी मा ३, पिप्पली मा २, तप्तजलं पेयमिति ॥ ४ ॥

प्रभूतस्नेहमशनं जीर्णे तस्मिन् प्रयोजयेत्।
अजरोऽरुक् समाभ्यासाज्जीवेच्चापि समाः शतम् ॥ ५ ॥
पञ्चाष्टौ सप्त दश वा पिप्पलीः क्षौद्रसर्पिषा।
रसायनगुणान्वेषी समामेकां प्रयोजयेत् ॥ ६ ॥
तिस्रस्तिस्रस्तु पूर्वाह्णे भुक्त्वाग्रे भोजनस्य च।
पिप्पल्यः किंशुकक्षार-भाविता घृतभर्जिताः ॥
प्रयोज्या मधुसम्मिश्रा रसायनगुणैषिणा।
जेतुं कासं क्षयं शोषं श्वासं हिक्कां गलामयम् ॥
अर्शांसि ग्रहणीदोषं पाण्डुतां विषमज्वरम्।
वैस्वर्यं पीनसं शोथं गुल्मं वातबलासकम् ॥ ७ ॥
जरणान्तेऽभयामेकां प्राग्भुक्ताद्वे बिभीतके।
भुक्त्वा तु मधुसर्पिर्भ्यां चत्वार्यामलकानि च ॥
प्रयोजयेत् समामेकां त्रिफलाया रसायनम्।
जीवेद्वर्षशतं पूर्णमजरोऽव्याधिरेव च ॥ ८ ॥

---

त्रैफलेनेत्यादौ।—यावती पलमिति—काथादिष्वौषधीम्, यावत्परिमाणेन त्रिफलास्वरसेऽपि सूच्यते। कल्केनेति—कल्कमिश्रेण। वर्षविधौ नित्यं क्रियत इत्याह्-ढ्यः। केचित् सहकल्पावेव एतदपि पठन्ति ॥ ५ ॥

पञ्चाष्टावित्यादि।—समेति वृद्धि। सम्बध्यते तत्समिथाप्रवृत्तपिप्पलीनामुपयोगं सूचयतीति यत्र। यद्यपि जीवेद् इत्यादि नानुपदृष्टोत पिप्पली यादृ मधव-मिति, तथापि इह द्रव्यान्तरसंयुक्तानां पिप्पलीनामभ्यासो न विहितः, किंवा पिप्पल्यभ्यासव्यतिरेकेण कल्पमपवादवाधात् निषेधो ज्ञेयः। रसायनगुणा-क्षीणवृषत्वबलत्वादयः ॥ ६ ॥

तिस्र इत्यादौ।—किंशुकः,—पलाशः। क्षारमिति—क्षारोदकम्; भाविता इति—

सप्ताहम् ॥ ७ ॥

जरणान्त इति—पाकः। प्राग्भुक्तादिति—भोजनादौ।—मधुसर्पिर्भ्यामित्यभया-दिभिस्त्रिभिरेव सम्बध्यते ॥ ८ ॥

मण्डूकपर्ण्याः स्वरसः प्रयोज्यः
क्षीरेण यष्टीमधुकस्य चूर्णम्।
रसो गुडूच्यास्तु समूलपुष्प्याः
कल्कः प्रयोज्यः खलु शङ्खपुष्प्याः॥
आयुःप्रदान्यामयनाशनानि
बलाग्निवर्णस्वरवर्द्धनानि।
मेध्यानि चैतानि रसायनानि
मेध्या विशेषेण तु शङ्खपुष्पी॥ ८॥

पीताश्वगन्धा पयसार्द्धमासं घृतेन तैलेन सुखाम्बुना वा।
कृशस्य पुष्टिं वपुषो विधत्ते बालस्य शस्यस्य यथाऽम्बुवृष्टिः॥
धात्रीतिलान् भृङ्गरजोविमिश्रान् ये भक्षयेयुर्मनुजाः क्रमेण।
ते कृष्णकेशा विमलेन्द्रियाश्च निर्व्याधयो वर्षशतं भवेयुः॥

वृद्धदारकमूलानि श्लक्ष्णचूर्णानि कारयेत्।
शतावर्य्या रसेनैव सप्तरात्राणि भावयेत्॥
अक्षमात्रन्तु तच्चूर्णं सर्पिषा सह योजयेत्।
मासमात्रोपयोगेन मतिमान् जायते नरः।
मेधावी स्मृतिमांश्चैव वलीपलितवर्जितः॥ १०॥
हस्तिकर्णरजः खादेत् प्रातरुत्थाय सर्पिषा।
यथेष्टाहारचेष्टोऽपि सहस्रायुर्भवेन्नरः।

---

मण्डूकपर्ण्या इत्यादिना शङ्खपुष्प्या इत्यन्तेन चतुरो योगानाह। समूलपुष्प्या इति—गुडूच्याः शङ्खपुष्प्या वा विशेषणम्॥ ८॥

पीतेत्यादि।—चाक्रटस।—अश्वगन्धायाश्चूर्णं पयसा पित्ते, घृतेन वातपित्ते, तैलेन वाते, सुखोदकेन वातकफे इत्याहुः। धात्रीत्यादौ।—तिलाश्च कृष्णाः, प्रशस्तत्वात्। भृङ्गरज इति निर्देशात् सान्तो भृङ्गरजःशब्दोऽपि भृङ्गराजवचनोऽस्तीत्युन्नीयते। क्रमेणेति—रसायनक्रमेण॥ १०॥

मेधावी बलवान् कामी स्त्रीशतानि व्रजत्यसौ।
मधुना त्वश्ववेगः स्याद् बलितः स्त्रीसहस्रगः।
मन्त्रश्चायं प्रयोक्तव्यो भिषजा चाभिमन्त्रणे॥

"ओं नमो महाविनायकाय अमृतं रक्ष रक्ष, मम फलसिद्धिं देहि रुद्रवचनेन स्वाहा"।

धात्रीचूर्णस्य कंसं स्वरसपरिगतं क्षौद्रसर्पिःसमांशम्
कृष्णामानीसिताष्टप्रसृतयुतमिदं स्थापितं भस्मराशौ।
वर्षान्ते तत् समश्नन् भवति विपलितो रूपवर्णप्रभावै-
र्निर्व्याधिर्बुद्धिमेधास्मृतिबलवचनस्थैर्यसत्त्वैरुपेतः॥ ११॥

गुडूच्यपामार्गविडङ्गशङ्खिनी-
वचाभयाशुण्ठिशतावरी समा।
घृतेन लीढा प्रकरोति मानवम्
त्रिभिर्दिनैः श्लोकसहस्रधारिणम्॥ १२॥

सारस्वत(ब्राह्मी)घृतम्—

समूलपत्रामादाय ब्राह्मीं प्रक्षाल्य वारिणा।
उदूखले क्षोदयित्वा रसं वस्त्रेण गालयेत्॥
रसे चतुर्गुणे तस्मिन् घृतप्रस्थं विपाचयेत्।
औषधानि तु पेष्याणि तानीमानि प्रदापयेत्॥

---

हस्तिकर्णेति।—हस्तिकर्णः,—हस्तिकर्णपलाशमूलम्। ओं नम इत्यादिमन्त्रो हस्तिकर्णाद्युदितोक्तोऽभिमन्त्रणाय। धात्रीत्यादौ।—कंसं चतुःषष्टिपलानि। स्वरसपरिगतमिति।—आमलकफलस्वरसेन भावितम्; भावना च एकविंशतिवारम्। क्षौद्रसर्पिःसमांशमिति।—धात्रीचूर्णापेक्षया प्रत्येकं समभागमित्यर्थः; तेन मधुघृतयोः प्रत्येकं चतुःषष्टिपलानि; मागध्यष्टौ पलानि; सितायाः शर्करायाः अष्टौ प्रसृतानि षोडश पलानीत्यर्थः। स्थापितं भस्मराशाविति—भाण्डस्येति शेषः। वर्षान्ते इति—प्रावृट्कालान्ते, शरदीत्यर्थः॥ ११॥

गुडूच्यादौ।—शङ्खिनी—शङ्खपुष्पी। क्वचित् वचास्थाने घृतेति पठ्यते, किन्तु वाग्भटे वचैव पठिता॥ १२॥

हरिद्रा मालती कुष्ठं त्रिवृता सहरीतकी ।
एतेषां पलिकान् भागान् शेषाणि कार्षिकाणि तु ॥
पिप्पल्योऽथ विडङ्गानि सैन्धवं शर्करा वचा ।
सर्वमेतत् समालोड्य शनैर्मृद्वग्निना पचेत् ॥
एतत्प्राशितमात्रेण वाग्विशुद्धिश्च जायते ।
सप्तरात्रप्रयोगेण किन्नरैः सह गीयते ॥
अर्द्धमासप्रयोगेण सोमराजीवपुर्भवेत् ।
मासमात्रप्रयोगेण श्रुतमात्रन्तु धारयेत् ॥
हन्त्यष्टादश कुष्ठानि अर्शांसि विविधानि च ।
पञ्च गुल्मान् प्रमेहांश्च कासं पञ्चविधं जयेत् ॥
बन्ध्यानाञ्चैव नारीणां नराणामल्परेतसाम् ।
घृतं सारस्वतं नाम बलवर्णाग्निवर्धनम् ॥ १३ ॥
कासश्वासातिसारज्वरपिडककटीकुष्ठकोठप्रकारान्
मूत्राघातोदरार्शःश्वयथुगलशिरःकर्णशूलाक्षिरोगान् ।
ये चान्ये वातपित्तक्षतजकफकृता व्याधयः सन्ति जन्तो-
स्तांस्तानभ्यासयोगादपनयति पयः पीतमन्ते निशायाः ॥
व्यङ्गवलीपलितघ्नं पीनसवैस्वर्यकासशोथघ्नम् ।
रजनीक्षयेऽम्बु नस्यं रसायनं दृष्टिजननञ्च ॥ १४ ॥

---

ब्राह्मीघृतं व्यक्तम् ॥ १३ ॥

कासेत्यादौ ।—पिडकः,—पिडका । यथा: क्रौञ्चलीलिवत् कटीशब्देन कटीगता गृध्रस्यादय उच्यन्ते । पय इति—दुग्धं, पानीयं वा ; सुश्रुते प्रातः क्षीरपानस्य जलपानस्यापि दर्शितत्वात् । यथा—"क्षीरोदकं पयः क्षौद्रं सर्पिरित्येकशो द्विशः । त्रिशः समस्तमथवा प्राक्पीतं स्थापयेद्वयः ॥" । प्रागिति—प्रातः । अत्र चतुर्गुणजलशृतगव्यदुग्धस्य धारोष्णस्य वा एकद्वित्रिकर्षपलादि षोडशपलं यावदित्यर्थः । व्यङ्गेत्यादौ ।—अम्बुनस्यमिति ।—अत्र नासिकया जलपानमष्टमाषकादारभ्य षट्पलं यावदित्याह । चक्रपाण्यत्र—"प्रसृतत्रयन्तु पातव्यं नासया नाधिकं मतम्" इति ॥ १४ ॥

साध्यसाधनपरिमाणम्—

नागार्जुनो मुनीन्द्रः शशास यल्लोहशास्त्रमतिगहनम् ।
तस्यार्थस्य स्मृतये वयमेतद्विशदाक्षरं ब्रूमः ॥
मेने मुनिः स्वतन्त्रे यः पाकं न पलपञ्चकादर्वाक् ।
सुबहुप्रयोगदोषादूर्द्ध्वं पलत्रयोदशकात् ।
तत्रायसि पचनीये पञ्चपलादौ त्रयोदशपलान्ते ॥
लौहात् त्रिगुणा त्रिफला ग्राह्या षड्भिः पलैरधिका ।

---

यद्यपि सर्वरसायनश्रेष्ठत्वात् प्रथममेवामृतसारलौहाभिधानमुचितं तथापि सूचीकटाहन्यायेन रसायनान्तराण्यभिधाय बहुप्रपञ्चतया समनन्तरममृतसारलौहमाह, नागार्जुन इत्यादि ।—तत्र मारणादिविधेरप्रशस्तत्वेन प्रथमं तदभिधानमनुचितम्; तथा दुरवगमेयत्वेन साध्यसाधनपरिमाणविधेरेव गरीयस्त्वम्, अतः प्रथमं साध्यसाधनपरिमाणविधिर्वक्तव्यः । तत्र क्रियमाणलौह. पक्तव्य इत्याह, मेने मुनिरित्यादि ।—पञ्चपलादर्वागित्यत्र संस्कारसाध्यकालव्यापकतया बहुगुणत्वं न स्यादित्येव हेतुरूह्यः । ननु "पलादर्वाङ् न पक्तव्यं, कर्षमपि पलाष्टकात्" इति योगरत्नाकरेऽभिहितं, तत्कथं पलपञ्चकादर्वागित्याद्यभिहितम्? इत्यत आह, स्वतन्त्र इति ।—स्वतन्त्रे स्वीयशास्त्र एव, नान्यत्र, तेनाप्युक्तो न्यूनमानमपि आचारवतां न विरोधमावहतीति भाव. । अत एवाग्रे स्वयमपि पञ्चपलादिग्रहणनियमभङ्गं वक्ष्यति, एतेन यथा यथा मानस्यापकर्षस्तथा तथा वीर्यस्यापकर्षः, यथा यथा च परिमाणोत्कर्षस्तथा तथा च वीर्योत्कर्षः इति भावः । लौहसंस्कारकषायसाधनार्थं क्वाथपरिमाणमाह, तत्रायसीत्यादि ।—पचनीयेऽयसीति ।—पञ्चपलादित्रयोदशपलान्तलौहे यावत्परिमाणं लौहं पुटनाय पक्तुं शक्यं तावत्परिमितलौहापेक्षया मिलिता त्रिगुणा त्रिफला ग्राह्याः । शिवा पचनीय इति पाकार्हे, तेन पाक्षिकमारणादीनां ग्रहणं, न तु फलत्रिकक्वाथा-दीनाम् । षड्भिः पलैरधिकेति ।—एतेन लौहापेक्षया त्रिगुणोक्तस्य गृहीता या त्रिफला सा त्रिफला षट्पलैरधिका ग्राह्या; तेन पञ्चपले लौहे साध्ये लौहापेक्षया त्रैगुण्येन त्रिफलायाः पञ्चदश पलानि ध्रुवषट्पलेन सह मिलित्वा एकविंशति-पलानि भवन्ति । एवं षट्पललौहे साध्ये लौहापेक्षया त्रैगुण्येन त्रिफलाया अष्टा-दशपलानि ध्रुवषट्पलेन सह चतुर्विंशतिपलानि भवन्ति । एवं सप्तपलादिष्वपि बोध्यम् । ननु लौहस्य तावन्मारणस्थालीपाकपुटपाकनिष्पत्तिपाकाः सन्ति, तत्र कुत्र कियत् त्रिफलापरिमाणं कर्त्तव्यम्? इत्यतो विभज्य त्रिफलापरि-

मारणपुटनस्थालीपाकास्त्रिफलैकभागसम्पाद्याः ॥
त्रिफलाभागद्वितयं ग्रहणीयं लौहपाकार्थम् ॥ १५ ॥
सर्वत्रायः पुटनाद्यर्थैकांशे शरावसंख्यातम् ।
प्रतिपलमेव त्रिगुणं पाथः क्वाथार्थमादेयम् ॥ १६ ॥
सप्तपलादौ भागे पञ्चदशान्तेऽम्भसां शरावेष ।
वृद्ध्यैकादशकान्तैरधिकं तद्वारि कर्त्तव्यम् ॥

---

न्याय दर्शयति, मारणपुटनेत्यादि ।—लौहमपेक्ष्य क्वचित्रिगुणत्रिफलाद्रव्यं मुष्टयद्‌पलसहितमेव त्रिभागं कृत्वा तत्र भागद्वयं प्रधानमिष्पत्तिपाकार्थमवस्थाप्यम्; अपरैकभागेन लौहमारणस्थालीपाकपुटनानि कर्त्तव्यानीत्यर्थः ॥ १५ ॥

तदिह लौहमारणपुटनस्थालीपाकार्थगृहीतैकभागत्रिफलाक्वाथार्थं कियज्जलं देयमित्याह, सर्वत्रेत्यादि ।—आदिशब्दान्मारणस्थालीपाकौ ग्राह्यौ । सर्वत्रेति ।—पञ्चपलादित्रयोदशपलान्तनिखिलमाने । पुटनाद्यर्थैकांश इति ।—पुटनमारणस्थालीपाकार्थगृहीतत्रिफलैकभागे प्रतिपलं शरावैरेव त्रिगुणं वारि देयमित्यर्थः । तत्र पञ्चपललौहे पुटनादिकर्मयथार्थस्थापितत्रिफलैकभागः सप्तपलो भवति, तत्र जलमेकविंशतिशरावा इत्यर्थः । एवं षट्पलादिलौहेऽपि त्रिफलैकभागा अष्टौ पलादयः, तथा जलञ्चापि चतुर्विंशतिशरावादय उन्नेयाः ॥ १६ ॥

किन्तु त्रिगुणताया अधिकमपि जलं देयं, तदर्थमाह सप्तपलादावित्यादि ।—अस्यार्थः,—पञ्चमीयपञ्चपललौहादारभ्य त्रयोदशपलान्तलौहापेक्षया त्रैगुण्येन मुष्टयद्‌पलाधिकतया फलत्रयस्यैकविंशतिपलरूपं चतुर्विंशतिपलरूपं मानं वा; तस्य तृतीयभागैः पुटनादिकर्मयथार्थस्थापितैः सप्तपलाष्टपलादिक्रमगणनया लौहत्रयोदशपलान्तेन त्रिफलायाः पञ्चदश पलानि भवन्ति; तेषां क्वाथ प्रतिशरावसंख्याया यत् त्रिगुणं वारि देयं तत् त्रिफलासप्तपलादारभ्य त्रिफला पञ्चदशपलपर्यन्तं क्रमेण जलशरावत्रयमारभ्य एकादशपर्यन्तजलशरावैरधिकं विधेयमित्यर्थः । तेन सप्तपले त्रिफलाद्रव्ये जलशरावत्रयमधिकम्, अष्टपले च शरावचतुष्टयम्; एवं क्रमेण त्रयोदशपलान्तं ज्ञेयम् । एतद्वचनं स्पष्टीकरणार्थं पत्रिकां लिख्यते । लौहपल ५, मारणादिकर्मयथार्थस्थापितत्रिफलैकभाग · पल ७, पाथः श २१, अधिक श ३, मिलिता श २४ । एवं षट्पललौहमारणादिकर्मयथार्थस्थापितत्रिफलैकभाग पल ८, पाथः श २४, अधिक श ४, मिलिता श २८ ।

तत्र चतुर्थो भागः शेषो निपुणैः प्रयत्नतो ग्राह्यः।
अयसः पाकार्थत्वात् स च सर्वस्मात् प्रधानतमः॥
पाकार्थमश्मसारे पञ्चपलादौ त्रयोदशपलान्ते।
दुग्धशरावद्वितयं पादैरेकादिकैरधिकम्॥ १८॥
पञ्चपलादिर्मात्रा तदभावे तदनुसारतो ग्राह्यम्।
चतुरादिकमेकान्तं शक्त्यावधिकं त्रयोदशकात्॥ १९॥

---

षोडशपलात् अष्टादशपलादर्वाक् त्रिंशत्पलान्ता भवन्ति। तत्र त्रिफलायाः प्रतिपलम् एकशरावं जलं दातव्यम्; किन्तु सर्वत्रैव शरावद्वयमधिकं मुख्यत्वेन देयम्; तेन त्रिफलायाश्चतुर्दशपले षोडश वारिशरावाः क्वाथार्थं देयाः; षोडशपले अष्टादशजलशरावा इत्यादिक्रमेण बोद्धव्याः। स च क्वाथः कियदवशिष्टः स्थाप्यः?—इत्याह, तत्रेत्यादि।—प्रयत्नतो ग्राह्य इत्यत्र हेतुमाह, अयस इत्यादि।—चतुर्थावशिष्टक्वाथस्य निखिलकर्मप्रधाननिष्पत्तिपाकार्थत्वादित्यर्थः। स चेति—निष्पत्तिपाकः। सर्वस्मादिति—मारणपुटनादेः। प्रधाननिष्पत्तिपाकार्थं हि लौहे यथा त्रिफलाक्वाथो दीयते तथा दुग्धमपि; तत्र दुग्धं पञ्चपलादित्रयोदशपलान्तलौहेषु कुत्र कियन्मानं देयम्? इत्याह, पाकार्थमित्यादि।—अत्र एकाद्यादिर्येषां पादानां शरावचतुर्थांशानां ते पादत्रयचत्वादयः एकादिकाः पादाः, तैरधिकं दुग्धशरावद्वयं पुटनान्तमौषधितोऽश्मसारे लौहचूर्णे पञ्चपलादि-त्रयोदशपलान्ते पक्तव्ये यथाक्रमं पक्तव्यमित्यर्थः। तेन पञ्चपललौहे पक्तव्ये सति सपाददुग्धशरावद्वयम्। षट्पले तु—पादद्वयाधिकं दुग्धशरावद्वयम्; सप्तपले—पादत्रयाधिकं दुग्धशरावद्वयमित्यादिक्रमेण त्रयोदशपलपर्यन्तमुन्नेयमिति॥ १८॥

अथ लौहस्य पञ्चपलादिमात्राकरणे यदि शक्तिर्नास्ति, तदा पञ्चपलादर्वागपि एकपलादिचतुःपलपर्यन्तं लौहपाकः कर्तव्यः, तथा यथाशक्तिसम्भवे त्रयोदशपलादुपर्य्यपि चतुर्दशपलादिलौहस्य पाकः कर्त्तव्य इत्यर्थमाह, पञ्चपलादिरित्यादि। चतुरादिकमेकान्तमिति—चतुष्पलान्तम्। अनेन एकैकपलादिचतुःपलान्ते लौहे तथा त्रयोदशपलादूर्द्ध्वञ्च चतुर्दशपलादौ लौहे मारणादिकर्म्मसमर्थम्, तथा प्रधाननिष्पत्तिपाकार्थञ्च कीदृशं क्वाथत्रिफलाया मानद्वयम्?—एतत्क्वाथार्थं जलदानं वा कीदृशम्?—स्थाप्यः शेषो वा कीदृशः?—प्रधाननिष्पत्तिपाकार्थं दुग्धदानं वा कीदृशम्?—तदर्थमाह, तदनुसारतो ग्राह्यमिति।—पञ्चपलादिलौहमारणायुक्त-

क्वाथादिमानानुसारेण इत्यर्थः। इदानीं तदनुसारेण द्रव्यस्य विवरणाय पत्री लिख्यते,—तत्रैकपले लौहे मारणादिकर्मनिर्वाहार्थं मुस्तषट्पलसहितत्रिफलायास्तृतीयभागः पलद्वयं भवति; प्रतिपलञ्च जलशरावत्रयवृद्धिकृता, ततस्तदनुसारात् प्रतिपलञ्च जलशरावत्रैगुण्यात् क्वाथार्थमपि नव जलशरावा भवन्ति। तथा सप्तपलादौ भाग इत्यनेन त्रिफलासप्ताष्टपलादिभागेषु च क्रमात् त्रिचतुरादिजलशरावद्धिकृता, अतस्तदनुसारात् पञ्चपलादर्वागपि क्रमेण पादद्वयं ह्रासयेत्। तेनैकपललौहस्य मारणादिकर्मनिर्वाहार्थे यदुक्तत्रिफलायास्तृतीयभागे अपरोऽपि जलशराव एको मुस्तकेन देयो भवति, अतः पूर्वोक्तनवजलशरावैर्मिलित्वा दश शरावा इति स्थितम्। तथा द्विपललौहे—कर्मनिर्वाहार्थं मुस्तषट्पलसहितत्रिफलायास्तृतीयो भागः पलचतुष्टयी भवति। प्रतिपलञ्च जलशरावत्रैगुण्यात् द्वादश जलशरावाः, तथा सप्तपलादौ भाग इति वचनानुसारेणापरोऽपि पादद्वयाधिकजलशराव एको मुस्तकेन देयो भवति; अतो मिलित्वा सार्द्धत्रयोदश जलशरावा भवन्ति। एवं त्रिपललौहे—कर्मनिर्वाहार्थं मुस्तषट्पलसहितत्रिफलायास्तृतीयभागे पञ्च पलानि भवन्ति; प्रतिपलञ्च जलशरावत्रैगुण्यात् पञ्चदशजलशरावाः, सप्तपलादौ भाग इति वचनानुसारादपरमपि जलशरावद्वयमधिकं मुस्तकेन देयम्; तेन मिलित्वा सप्तदशजलशरावाः। चतुःपललौहेऽपि कर्मनिर्वाहार्थं मुस्तषट्पलसहितत्रिफलायास्तृतीयभागे पलषट्कं भवति, प्रतिपलञ्च जलशरावत्रैगुण्यादष्टादश जलशरावाः, सप्तपलादौ भाग इत्यनुसारादपरमपि पादद्वयाधिकजलशरावद्वयमधिकं मुस्तकेन देयं भवति; तेन मिलित्वा जलस्य सार्द्धविंशतिशरावा भवन्ति। पञ्चपलादिलौहे च यत् क्वाथादिमानं तत् पूर्वमेव लिखितम्। त्रयोदशलौहपलादुपरि चतुर्दशपलादौ भागैकादशकालोहेत्याद्यनुसारात् पूर्वः पूर्वापेक्षया शरावैकेन जलस्य वृद्धिः कर्त्तव्या; क्वाथशाटमांशः शेषः, एवं सर्वत्रैव। प्रधानविपत्तिपाकार्थमपि एकपललौहे च त्रिफलाया भागद्वयी षट्पलानि; "प्रतिपलमष्टगुणं स्यात्" इत्युक्तेः त्रिफलायाः क्वाथार्थं जलस्य षट् शरावाः, ते च द्वाभ्यां शरावाभ्यामधिकाः कर्त्तव्याः, इति मिलित्वा अष्टौ जलशरावाः, चतुर्थभागावशेषादस्य स्थाप्यं शरावद्वयम्। पञ्चपललौहस्य प्रधानपाके तु—अपाददुग्धशरावद्वयी-शेष एकपले तु लौहे क्रमात् पादह्रासेन अपाददुग्धशराव एको भवति। प्रधानपाकार्थं घृतमपि द्विगुणं त्रिगुणं चतुर्गुणं लौहापेक्षया, यथाप्रकृतिदोषभेदेन; तेन वातप्रकृतौ—एव लौहाच्चतुर्गुणम्, पित्तप्रकृतौ—त्रिगुणम्; श्लेष्मप्रकृतौ—द्विगुणमिति; एवं द्विपले लौहे। द्विपललौहस्य प्रधानपाके—त्रिफलाया भागद्वयेऽष्टौ पलानि; "प्रतिपलमष्टगुणं स्यात्" इत्युक्तेः जलस्याष्टौ शरावाः, ते च द्वाभ्यां

त्रिफलात्रिकटुकचित्रककान्तक्रामकविडङ्गचूर्णानि ।
जातीफलस्य जाती-कोषैलाकक्कोललवङ्गानाम् ।
सितकृष्णजीरकयोरपि चूर्णान्ययसा समानि स्युः ॥ २० ॥
त्रिफलात्रिकटुविडङ्गा नियतान्ये ते यथाप्रकृति बोध्याः ॥
कालायसदोषहृतेर्जातीफलादेर्लवङ्गकान्तस्य ।
क्षेपः प्रास्यनुरूपः सर्वस्योनस्य चैकाद्यैः ॥

---

शरावाभ्यामधिकाः कर्तव्या, इति मिलित्वा दश जलशरावाः; चतुर्थभागावशेषात् क्वाथ्यं सार्धशरावद्वयम्; पञ्चपललौहस्य प्रधानपाके तु—सपाददुग्धशरावद्वयीमेव त्रिपले तु क्रमात् पादह्रासेन दुग्धञ्च सार्धशरावैकं भवति, घृतञ्च प्रकृत्याद्यपेक्षया पूर्ववदेव देयम्। त्रिपललौहस्य प्रधानपाके तु—त्रिफलाया दश पलानि; "प्रतिपलमम्बुसमं स्यात्" इत्युक्तेव जलस्य दश शरावाः, ते च द्वाभ्यां शरावाभ्यामधिकाः कर्तव्या इति मिलित्वा द्वादश जलशरावाः; चतुर्थभागावशेषात् क्वाथ्यं शरावत्रयम्; पूर्वोक्तरीत्या दुग्धञ्च पादोनशरावद्वयम्; घृतञ्च प्रकृत्याद्यपेक्षया पूर्ववदेव देयम्। चतुःपललौहस्य प्रधानपाके तु—त्रिफलाया द्वादश पलानि, "प्रतिपलमम्बुसमं स्यात्" इत्युक्तेव जलस्य द्वादश शरावाः, ते च द्वाभ्यां शरावाभ्यामधिकाः कर्तव्या इति मिलित्वा चतुर्दश जलशरावाः; चतुर्थभागावशेषात् क्वाथ्यन्तु सार्धशरावत्रयम्; दुग्धञ्च शरावद्वयं, घृतञ्च पूर्ववदिति। त्रयोदशपलादुपरि चतुर्दशपलादिलौहस्य प्रधानपाके—क्वाथितत्रिफलाया भागद्वये पूर्ववदेव जलं देयम्; क्वाथ्यञ्च चतुर्थभागम्; पूर्वपूर्वापेक्षया दुग्धस्य एकैकशरावपादवृद्धिः कर्तव्यैव; घृतमपि प्रकृत्याद्यपेक्षया द्विगुणत्रिगुणादिकमेवेति। तदनुसारत इति पन्थी विहितः ॥ १९ ॥

पञ्चावतारितमात्रे लौहे प्रक्षेपार्थं चूर्णमाह, त्रिफलेत्यादि।—कान्तक्रामकं—काधिकामुककम्। सितकृष्णेति द्वयं जीरकविशेषणम्। अयसा समानीति—यावल्लौहचूर्णं, तावदेव मिलित्वा त्रिफलादिचूर्णमित्यर्थः ॥ २० ॥

इदानीमेतेषु त्रिफलादिषु मध्ये यदवश्यं प्रक्षेप्यं तदाह, त्रिफलेत्यादि।—कालायसदोषहृत इति छेदः। अन्य इति—जातीफलादयः। उक्तत्रिफलादिनियतत्वे हेतुमाह, कालायसदोषहृतेरित्यादि।—कालायसः,—अयःपात्रादिलौह एव; कान्तलौहस्य प्रशस्तत्वेन बोध्यते। यदुक्तं पातञ्जले—"कान्तलौहाः गिरीशाते रसायनविधौ मताः" इति। गिरीशा इति।—पतितदानवशिरसि जाता इत्यर्थः। उक्तं हि पातञ्जले—"कफपित्तानिलमाया दैत्यस्य महीतले। पतिता दानवाश्च

धर्मात् सिध्यति सर्वं श्रेयस्तद्धर्मसिद्धये किमपि।
शक्त्यनुरूपं दद्याद्द्विजाय सन्तोषिणे गुणिने॥
सन्तोष्य कर्मकारं प्रसादपूगादिदानसम्मानैः।
आदौ तदश्मसारं निर्मलमेकान्ततः कुर्यात्॥ २५॥

---

दन्तुरिते, छिन्न इति यावत्; एतेनातितापान्मृत्तिका न गलति; नतभूभागे—मध्यनिम्नभूभागे। शिवमित्युपलक्षणम्। तदुक्तं योगरत्नसमुच्चये—"अर्चयित्वा विधानेन हेरम्बं गुरुभास्करौ। लोकपालान् ग्रहांश्चैव चेन्द्रपालानथौषधम्॥ आदित्यदेवतायेष्टा धन्वन्तरिं पतञ्जलिम्। दद्याद्बलिञ्च सर्वेभ्यो नानाभक्ष्योपचारतः॥" इति। वह्निमिति—वन्यदिव्यानल, तदभावे दारुद्वयघट्टनजमग्निम्। यदाह पतञ्जलिः,—"दिव्य दावं समादाय लौहकर्म समाचरेत्। यदि दिव्यानलाभावस्ततो घर्षणसम्भवम्॥ आरोप्य कर्मशालायामग्निं यत्नेन पूजयेत्॥" इति॥ २४॥

यद्यपि दृष्टादृष्टरूपेण कारणचक्रेण कार्यं सिध्यति, तथापि दृष्टमप्यदृष्टवशादेव उपतिष्ठते। इत्यदृष्टस्यैव बलीयस्त्वं मन्यमान आह, धर्मादित्यादि।—श्रेय इत्यभिमतप्रगल्भफलम्। किमपीति।—धान्यहिरण्याच्छादनाद्यन्यतमं यथाशक्ति दद्यादित्यर्थः। मारणार्थं लौहसंस्कारमेव प्रथममाह, आदावित्यादि।—अश्मसारं—लौहम्; निर्मलमिति—शोधनविधिना कार्यम्। तत्र शोधनविधिर्यथा,—प्रथमं लौहं शिलादिना निर्मलीकृत्य पत्तलं कार्यं, तदनु शाङ्गेरीमातुलुङ्गाम्लवेतसैर्मर्दयित्वा सप्तवारं प्रत्येकेन आतपे संशोष्य ततः काञ्जिकादौ दिनत्रयं त्र्यहं वा स्थाप्यम्; एवमम्लभावनां विधाय तदनु गोमूत्रपिष्टत्रिफलाकल्केनालिप्य आतपे शोषणीयम्; ततश्च मनःशिलामल्लीकमत्सिकाकुठारिकामूलशाङ्गेरीगन्धदूर्वासैन्धवैश्च जलपिष्टैः क्रमेण प्रलिप्य आतपे शोषणीयम्। तदुक्तम्—"पत्तलं निर्मलं कृत्वा लौहमम्लीकृतं पुनः। मूत्रपिष्टत्रिफलया वारिपिष्टमनोह्वया॥ भावितं भावयेत् तद्वत् मल्लीकस्य मृदा मनाक्। परशुच्छिन्ना शाङ्गेरी गन्धदूर्वा ससैन्धवा॥ एभिर्लिप्तं यथाप्राप्ति शोष्य सूर्यातपे क्रमात्॥" गन्धदूर्वा—श्वेतदूर्वेति नाममञ्जरी। तदेवं भावनां विधाय तदनु भस्त्रया वह्नौ ध्मापयित्वा नातितप्तं कृत्वा लौहापेक्षया द्विगुणेषु गव्यदुग्धकाञ्जिकगोमूत्रत्रिफलाक्वाथेषु वारत्रयं कृत्वा निर्वापणीयम्। उक्तं हि—"क्षीरारनालगोमूत्रत्रिफलाक्वाथवारिणि। प्रतिद्रव्यं निषिञ्चेच्च त्रिधा त्रिधा विधानतः॥" इति। निषेकमात्रा च—"लौहपलं मनाक्तप्तं द्विगुणे तद्रसे क्षिपेत्। निषेक एव

स्थालीपाकविधिः,—

अथ कृत्वाऽयोभाण्डे दत्त्वा त्रिफलाम्बु शेषमन्यद्वा ।
प्रथमं स्थालीपाकं दद्याद्वा तत्क्षयात् तदनु ॥
गजकर्णपत्रमूलशतावरीभृङ्गकेशराजरसैः ।
प्राग्वत् स्थालीपाकं कुर्यात् प्रत्येकमेकं वा ॥ ११ ॥

इति स्थालीपाकविधिः ।

---

क्वाथेनैव सप्तधा सूर्य्यातपे संशोष्येत्यर्थः । तदर्थे चक्रपाणिः यथा—"अयोघनेन तत् पिष्टं शिलया दृढयाऽथवा । अयोमयसमं पिष्टं कृत्वा मुद्गसमं पुनः ॥ त्रिफलावारिणा धौतं विशुष्कं चूर्णितं पुनः ॥" इत्यादि । योगरत्नाकरेऽप्युक्तं—"हतचोदूखले क्षोदे मुषलेनापि ताड्या । सचूर्णं त्रिफलाऽम्भोभिः सप्तधा सूर्य्यपाचितम् ॥ शस्तः पुटविधौ योग्यो विज्ञेयो भिषजां वरैः ॥" इत्यादि । अत्र लौहप्रक्षालनार्थं भानुपाकार्थञ्च त्रिफलाक्वाथविधिर्यथा उक्तं योगरत्नाकरे—"शुद्ध्यर्थं त्रिफला लौहात् कर्त्तव्या द्विगुणा सदा । चतुर्गुणं जलात् तोयमष्टभागावशेषितम् ॥ एष एव विधिर्नित्य क्षालनेऽपि च शस्यते ॥" इति । तथा—"भानुपाकार्थमिच्छन्ति त्रिफलामयसा समाम् । सलिलं द्विगुणं तत्र चतुर्भागावशेषितम् ॥" इति ॥ १० ॥

इति मारणविधिः ।

स्थालीपाकमाह, अथेत्यादि ।—अयोभाण्डे—लौहपात्रिकायाम् । शेषं त्रिफलाम्बु ।—त्रिफलैकभागकृतक्वाथस्य भानुलौहनिर्वापणावशिष्टम् । अथ यदि क्वाथमपि तद्विनष्टं स्यात् तदा का गतिः ?—इत्याह, अन्यद्वेति ।—तत्प्रक्रिययैव क्वाथान्तरं कार्य्यमिति भावः । प्रथमं स्थालीपाकं दद्यादिति ।—प्रथमं स्थाल्यां लौहचूर्णं त्रिफलाक्वाथेनालोड्य वह्निना पाकं विधाय त्रिफलाक्वाथक्षयः कर्त्तव्यः । इत्येव स्थालीपाकविधानक्रमः । वा तत्क्षयादिति—त्रिफलाक्वाथशोषपर्य्यन्तम् । तदन्विति ।—प्रथमं त्रिफलाक्वाथेन स्थालीपाकं विधाय अनन्तरं हस्तिकर्णपलाशादीनां व्यस्तानां समस्तानां वा स्वरसैरपि पूर्ववत् स्थालीपाकः कार्य्य इत्याह, गजकर्णेत्यादि ।—गजकर्णपत्रोऽत्र हस्तिकर्णपलाशः । राजशब्दो भृङ्गकेशाभ्यां सम्बध्यते । प्राग्वदित्यनेनैव यावती त्रिफलाक्वाथस्य स्थालीपाके मात्रा द्रवचयाऽस्य पाकस्तथा गजकर्णादि-स्वरसादीनामपीत्यर्थः ; किन्तु अत्र व्याध्यनुरूपस्थालीपाकीयद्रव्याणामन्यतरं यदि

पुटपाकविधिः,—

हस्तप्रमाणवदनं श्वभ्रं हस्तैकखातसममध्यम् ।
कृत्वा कटाहसदृशं तत्र करीषं तुषञ्च काष्ठञ्च ॥
अन्तर्घनतरमवशुषिरं परिपूर्य्य दहनमायोज्यम् ।
पश्चादयसश्चूर्णं श्लक्ष्णं पङ्कोपमं कुर्य्यात् ॥
त्रिफलाऽम्बुभृङ्गकेशरशतावरीकन्दमाणसहजरसैः ॥
भल्लातककरिकर्णच्छदमूलपुनर्नवास्वरसैः ॥
पिष्ट्वाऽथ लोहपात्रे मार्द्दे वा लोहमार्द्दपात्राभ्याम् ।
तुल्याभ्यां घृष्टेनाच्छाद्यान्ते रन्ध्रमालिप्य ॥

---

स्वरसप्राप्तिर्नास्ति तत्र स्थालीपाकार्थं त्रिफलाक्वाथानुसारेणैव क्वाथमष्टादिकं दत्त्वा क्वाथं विधाय स्थालीपाको विधेय इत्यधिगन्तव्यम् ॥ २१ ॥

इति स्थालीपाकविधिः ।

पुटपाकविधिमाह, हस्तप्रमाणेत्यादि ।—श्वभ्रं—खातम् । हस्तैकखातसममध्यमिति—हस्तैकप्रमाणं खात खननं यस्य, सर्वतो हस्तैकमात्रपरिमाणमित्यर्थः ; समोऽनुन्नतो मध्योऽभ्यन्तरभूभागो यस्य तत् सममध्यम् । कटाहसदृशमित्यनेनैव वर्त्तुलाकारत्वमुक्तं, तेन चतुष्कोणं न कार्य्यमित्यर्थः । तत्र श्वभ्रे अन्तरिति मध्ये, घनतरं बहुलं, निविडतरमिति यावत् । अवशुषिरं परिपूर्य्येति ।—करीषादिभिः अवकाशाभावं परिपूर्य्येत्यर्थः । कैर्द्रवैः पङ्कोपमं कुर्य्यात् ?—इत्याह, त्रिफलेत्यादि ।—त्रिफलाम्बु—त्रिफलाक्वाथः ; भृङ्गकेशरी—भृङ्गराजकेशराजौ ; कन्दः,—शूरणः । एषां भृङ्गादीनां सहजरस,—स्वरसः । भल्लातकस्य पुनः क्वाथ एव, स च भल्लातकप्रकरणे द्रष्टव्य बोध्यः । अयश्चूर्णं त्रिफलाक्वाथादिभिः पङ्कोपमं कृत्वा किं कर्त्तव्यम् ?—तदाह,—पिष्ट्वेत्यादि ।—मार्द्दे इति—मृत्तिकामयपात्रे ; एतच्च सम्पात्रं सर्वथा लोहपात्राभावे हि बोध्यम् ; किन्तु दर्व्विकरादायां समसहसो सम्पुटे लोहं कृत्वा वस्त्रमृत्तिकाभिरालिप्य पुटपाको दीयते इति व्यवहारः ; अयञ्च पन्थाः साधीयान् भवति, यतो लोहसम्पुटपक्षेऽयसलोहघटितसम्पुटमात्रस्यापि पुटपाकौषधसंसर्गजीर्णतया तदीयरजसोऽनुप्रवेशो दुर्निवार इति । घृष्टेनाच्छाद्येति ।—यस्य पात्राभ्यन्तरे पङ्कोपमं लोहचूर्णमस्ति तत्तुल्यमपरतुल्यपात्रस्य कटोभागेन पिधायेत्यर्थः ।

तत्पुटपात्रं तत्र श्वभ्रज्वलने निधाय भूयोभिः।
काष्ठकरीषतुषैस्तत् सन्ध्याद्यहर्निशं दहेत् प्राज्ञः॥ ३२॥
एवं नवभिरमीभिर्भेषजराजैः पचेत्तु पुटपाकम्।
प्रत्येकमेकमेभिर्मिलितैर्वा त्रिचतुरान् वारान्॥

---

अन्ये रन्ध्रमाश्रित्येति।—पिहितमृद्वस्त्रादिभिरिति शेषः। भूयोभिरिति—प्रचुरैः। इदञ्च काष्ठादिकं पुटपाकोपदर्शनार्थम्, अतो न पौनरुक्त्यम्। भूयोभिरित्यनेन गर्त्तपूरणं कृत्वा तदुपर्य्यपि करीषसमुच्चयः कार्य्य इति दर्शयति। अहर्निशमित्यनेन दिवसे रात्रौ वा पुटो देय इति दर्शयति। अन्ये तु—पुटपाकस्याष्टप्रहरव्यापनार्थमहर्निशमिति वचनमाहुः, तन्न; पुटपाकस्य चतुःप्रहरसम्पाद्यत्वात्। यतो हि भवन्ती—"चतुर्भिः प्रहरैर्ज्ञेयः पुटपाकविधौ बुधैः"; तथा योगरत्नाकरसमुच्चयेऽपि—"चतुर्भिः प्रहरैरेव पुटपाकः प्रकीर्त्तितः। पुटपाकवशादूर्द्ध्वं सिद्धो भवति भस्मसात्॥ अधस्तादपकृष्टन्तु मन्दो भवति वीर्य्यतः। कुण्डस्थो भस्मनाच्छन्न आकर्ष्टव्यः सुशीतलः॥ अन्याकृष्टस्य तस्य गुणहानिः प्रजायते"॥ इति। तत्र संक्षेपात् पुटपाकपरिपाटी लिख्यते। त्रिफलाक्वाथादिभिः पक्वीयसं लौहं विधाय सम्पुटाहृतिलौहपात्रस्थं कृत्वा वस्त्रादिभिरवगुण्ठ्य पिहितमृत्सन्धिकया पात्रयोरवकाशमाश्रित्य आयामपरिणाहाभ्यां हस्तमात्रपरिमितसमतलभूगर्त्ते करीषकाष्ठतुषैः अरण्यगोमयमात्रेण वा खातसार्द्धं प्रपूर्य्य तत्र लौहसम्पुटं निधाय वह्निं नियोज्य तदुपरि अपरकरीषादिभिः अरण्यगोमयमात्रेण वा गर्त्तं परिपूरयेत्; एवं चतुर्भिः प्रहरैरेकः पुटो देयः, शीतीभूतमाकर्ष्टव्यम्॥ ३२॥

इदानीमुक्तैस्त्रिफलादिभिः पुनर्नवान्तरसान्तैः प्रत्येकं मिलितैर्वा पुटो देयः, इत्याह, एवमित्यादि।—नवभिरिति।—इह त्रिफलायास्तु एकत्वेनैव ग्रहणम्; तेन न संख्यातिरेकः। योगरत्नाकरे तु—पुटद्रव्याणां गण पठितः, तद्यथा,—"त्रिफला-गिरिकर्णिका-काशकाशककुठारच्छिन्ना-करिकर्णपलाशमूलशतमूलीमार्कवभृङ्गराज-काकमाची शालिपर्णीतालमूलीवर्षाभूमाषपर्णीक्षुरकास्थिसंहार दाडिमीक्षुरककर्ष-गोजिह्वा-गिरिसल्लकाः प्रायुक्ताः। त्रिफलेत्यनेन त्रिफलादिगणमिच्छन्ति केचित्; तद्यथा —"त्रिफलाग्निसादाश्मोषिकटुतालमूलिकाः। तण्डुलीय अघोर-मदनक-चित्रकाः॥ भृङ्गकेशविडङ्गौ च भद्रमुस्तककोषकम्। दाडिमस्य च पत्राणि शतमूली पुनर्नवा॥ कुठारच्छिन्ना कन्दली भेकपर्णिका। हस्तिकर्णपलाशश्च कुलिशः केशराजकः॥ माषः खण्डितवर्णश्च गोजिह्वा चीहमारकः। गिरि-

प्रतिपुटनं तत् पिंष्यात् स्थालीपाकं विधाय तथैव तत्।
तादृशि दृषदि न पिंष्याद् विगलद्रजसा तु युज्यते यत ॥
तदयश्चूर्णं पिष्टं दृष्टं घनसूक्ष्मवाससि श्लक्ष्णम्।
यदि रजसा सदृशं स्यात् केतक्यास्तर्हि तद्भद्रम् ॥

---

सन्तानकः प्रोक्तस्त्रिफलादिरयं मया ॥ सामान्यपुटपाकार्थमेतानिच्छन्ति सूरयः ॥" इति। दोषभेदे तु गणविशेषा विस्तारभयान्न लिखिताः। ते च लौहप्रदीपे प्रथमपरिच्छेदस्यान्तेऽनुसन्धेया इति। किञ्च, यस्मिन् यस्मिन् व्याधौ ये ये योगा अभिहितास्तस्मिन् तस्मिन् व्याधौ तत्तत्क्वाथैरपि पुटो देयः। उक्तं हि—"ये ये यत्र गदे योगास्तेषां तेषाञ्च वारिणा। विधिना कथितेनैव पुटो रोगेषु सम्मतः ॥" इति। विधिनेति।—साध्यसाधनपरिमाणोक्तपुटपाकार्थत्रिफलाक्वाथविधिना ; अथवा यत्र त्रिफलाव्यतिरिक्तक्वाथ्यद्रव्याणामाढ्यन्यूनमानानि सन्ति, देयजलस्याप्यशीतजल-मानञ्च नोक्तम्, तत्र योगरत्नाकरोक्तक्वाथस्यैवानुवर्त्तव्या। यदुक्तं क्वाथविधौ तत्रैव—"द्रव्याणि यानि वस्तूनि योक्तव्यानि पुटादिषु। तानि लौहसमान्येव जलं प्रागेव कीर्त्तितम् ॥ लभ्यते स्वरसो येषां तेषां क्वाथस्तु नेष्यते। त्रिफलाव्यतिरिक्तेन मतमेतत् मनस्विनः ॥" इति। जलं प्रागेव कीर्त्तितमिति।—मृदौ क्वाथार्थं चतुर्गुणं जलं देयं, स्थाप्यश्चतुर्थो भागः। मध्यद्रव्येऽष्टगुणं जलं देयं, स्थाप्यश्चाष्टमो भागः। कठोरद्रव्ये षोडशगुणं जलं देयं, स्थाप्यश्च षोडशो भाग इति। ननु पुटेन किमत्र क्रियते? उच्यते—दोषनाशगुणोदय इति।—यदुक्तं—"पुटाद्दोषविनाशः स्यात् पुटादेव गुणोदयः। म्रियते हि पुटाल्लौहं पुटोत्कर्षात् समाचरेत् ॥ यथा यथा प्रदीयन्ते पुटाः सुबहवो यदि। तथा तथाऽभिवर्द्धन्ते गुणा एव सहस्रशः ॥ तावल्लौहं पुटेद्धीरो यावच्चूर्णीकृतं जले। निःसरेत् लघुत्वेन समुत्तरति हंसवत् ॥ तावच्च चूर्णयेदेनं यावत् कज्जलसन्निभम्। करोति विकृतिं नैव नैव पीडां मनागपि ॥" इति। पुटानां कर्मभेदेन संख्याभेदो यथा—"शतादिषु सहस्रान्तः पुटो देयो रसायने। दशादिशतपर्यन्तो गदे पुटविधिर्मतः ॥ वाजिकर्मणि विज्ञेयः पुटः षष्ठशताधिकः। दशोत्तरशतान्तस्तु पुटः पुटविचक्षणैः ॥" यदा तु मुद्रितमात्रे लौहे पुटा देयास्तदा एतावद् भूय संख्या अपि पुटा दीयन्ते। यदा तु प्रतिपुटान्ते पेषणं वस्त्रपूतत्वञ्च तदा समाहारैव विशिष्टफलदा भवन्तीत्युपदिशन्ति वृद्धाः। प्रतिपुटनं पेषणमाह, प्रतीति।—एतेन पेषणवस्त्रमात्रवस्त्रपूतत्वाभ्यां भस्मीभूत-पुटार्द्धदत्तभेषजनिरासोऽपरदेयभेषजद्रव्यसंस्काराधानञ्चेति भावः ; कोमलशिलायां

पुटने स्थालीपाकेऽधिकृतपुरुषे स्वभाववशगधिगमात्।
कथितमपि हेयमौषधमुचितमुपादेयमन्यदपि ॥ ३३ ॥

इति पुटपाकविधिः।

पाकविधिः,—

अभ्यस्तकर्मविधिभिर्बालकुमारीयबुद्धिभिरलङ्घ्यम्।
लोहस्य पाकमधुना नागार्जुनमिष्टमभिदध्मः ॥ ३४ ॥
लोहारकूटताम्रकटाहे दृढमृन्मये प्रणम्य शिवम्।
तदयः पचेदचपलः काष्ठेन्धनेन वह्निना मृदुना ॥

---

पेषणं न कार्यमित्याह, ताम्रमीत्यादि।—एतेन निर्मलद्रव्यादि पेषणं कार्यमिति भावः। पिष्टं च वस्त्रपूतं कार्यमित्याह, तदय इत्यादि।—घनं निबिडं, सूक्ष्मश्च यद्वासः, तत्र घृष्टं पूतमित्यर्थः। इदानीमातुरस्य प्रकृत्यादिकं निरूप्य शास्त्रोक्तेषु यदनुचितं तस्यापकर्षः कार्यः; अनुक्तस्याप्युचितस्यावापः कार्यमित्याह, पुटन इत्यादि। अधिकृतेति।—अधिकृतपुरुषचिकित्सात्वेन प्राकृत इत्यर्थः ॥ ३३ ॥

इति पुटपाकविधिः।

इदानीं लौहस्य प्रधानभिषग्विपाकमाह, अभ्यस्तेत्यादि।—अभ्यस्तकर्मविधिभिः,—दृष्टकृतलौहपाकैः। बालकुमारवदतीव तीक्ष्णा सूक्ष्मा च, तेन बालकुमारमिव तीक्ष्णा सूक्ष्मा च बुद्धिर्येषां, दुरूहत्वार्थस्य लौहसूक्ष्मबुद्धिग्राह्यत्वात् तैरप्यलङ्घ्यं ज्ञातुमशक्यम्। नागार्जुनमिष्टमिति—नागार्जुनेन कथितम्। लौहपाकारम्भेऽपि मङ्गलं कार्यम्। उक्तं हि पातञ्जले—"मातृकां पूजयेत् सर्वां नायिकाश्च विनायकम्। अथवा स्वस्त्ययनं कुर्यात् सदा हितमनाः सुधीः॥ यच एव मर्देय विघ्नशमनी क्रियाम्॥" इति ॥ ३४ ॥

लौहपाकार्थं पात्रमाह, लोहेत्यादि।—आरकूटं—पित्तलम्। काष्ठेन्धनेनेति।—काष्ठपदं कण्टकादिव्युदासार्थम्। वह्निनेत्यग्निना। उक्तं हि—"मृदुनाग्नि-

निक्षिप्य त्रिफलाजलमुदितं यत् तद्घृतञ्च दुग्धञ्च।
सञ्चाल्य लौहमय्या दर्व्या लग्नं समुत्पाट्य ॥ ३५ ॥
मृदुमध्यमखरभावैः पाकस्त्रिविधोऽत्र वक्ष्यते पुंसाम्।
पित्तसमीरणश्लेष्मप्रकृतीनां मध्यमस्तु समः।
अभ्यक्तदर्वि लौहं सुखदुःखस्खलनयोगि मृदु मध्यम्।
उज्झितदर्वि खरं परिभाषन्ते केचिदाचार्याः ॥
अन्ये विहीनदर्वीप्रलेपमाखूत्कराकृतिं ब्रुवते।
मृदु मध्यमहेचूर्णं सिकतापुञ्जोपमन्तु खरम् ॥ ३६ ॥

---

घृताग्नेन पलाद्यमवधानत" इति। क्वथितत्रिफलाभाजनस्थघृतदुग्धादिप्रक्षेपार्थमाह, निक्षिप्येत्यादि।—उदितमित्युक्तपरिमाणम्। घृतादिदानक्रमस्य भीमराजोक्तः, यथा—"घृतेन लौहमाक्षीद्य क्षीरेण समनन्तरम्। ततः क्वाथेन संयोज्य मन्देऽग्नौ शनकैः पचेत्॥ ततः सञ्चालयेल्लौहं लौहदर्व्यातिदीर्घया॥" इति॥ ३५॥

इदानीं पित्तवातकफप्रकृतिषु क्रमात् पाकत्रयमाह, मृदित्यादि।—मध्यमपाकी वातप्रकृतौ हित एव, किन्तु प्रकृत्यन्तरेऽपि योज्य इत्याह, मध्यमस्तु सम इति।—सर्वप्रकृतिहितत्वेन सर्वास्वेव प्रकृतिषु उचित इत्यर्थः। अत्रोक्तोऽप्याह— "दार्वीनाश्लिष्यते यत्तु स्वैर स्खलति वा न वा। मृदुपाकं विजानीयात् पित्ते तु विहितं सदा॥ सिकतापुञ्जोपमं यत्तु मूषिकोत्करसन्निभम्। तदयः खरपाकं स्यात श्लेष्मण्येव प्रकीर्त्तितम्॥ एकैकगुणयोगत्वात् तमिच्छन्ति तद्विदः। सर्वप्रकृतिसेव्यत्वान्मध्यमं बहुपूजितम्॥" इति। एकीयमते मृदुमध्यखरपाकानां क्रमाल्लक्षणमाह, अभ्यक्तेत्यादि।—अभ्यक्ता—घनपङ्कवत् संश्लिष्टा दर्वी येन ईदृशं लौहं, मृदिति—मृदुपाकं ब्रुवते। अभ्यक्तदर्वीत्यपि पाठः। तथा सुखदुःखस्खलनयोगीति— कदाचित् दर्वीं त्यजति, कदाचित् न त्यजति इत्यर्थः; एतादृशं यल्लौहं तन्मध्यमिति मध्यमपाकं ब्रुवते। तथा उज्झितदर्वीति यल्लौहं कदाचिदपि दर्वीं न भजति, तत् खरपाकं ब्रुवते इति। तथा अन्यतममतमाह, अन्ये इत्यादि।—विशेषेण हीनमपगतो दर्वीप्रलेपो येन ईदृशं, यदा आखूत्कराकृति इन्दुरघर्षितस्थानोद्भूत

त्रिविधोऽपि पाक ईदृक् सर्वेषां गुणकृदेव न तु विफलः ।
प्रकृतिविशेषे सूक्ष्मौ गुणदोषौ जनयतीत्यल्पम् ॥
विज्ञाय पाकमेवं द्रागवतार्य्य चितौ चणान् कियतः ।
विश्राम्य तत्र लौहे त्रिफलादेः प्रक्षिपेच्चूर्णम् ॥ ३७ ॥
यदि कर्पूरप्राप्तिर्भवति ततो विगलिते तदुष्णत्वे ।
चूर्णीकृतमनुरूपं क्षिपेन्न वा न यदि तल्लाभः ॥

---

यल्लौहं तन्मृदिति मृदुपाकं ब्रुवते ; तथा अर्द्धचूर्णलौहं मध्यमिति मध्यपाकं ब्रुवते । अर्द्धचूर्णमिति—अर्द्धं चूर्णम् अपरमर्द्धञ्च आमूलकाराकारमित्यर्थः । तथा सिकतापुञ्जोपमं—वालुकाराशिसदृशं यल्लौहं चक्षुषा गृह्यते न तु स्पर्शेन, तत् खरपाकं ब्रुवते । पातञ्जली तु—स्पर्शादिनापि पाकज्ञानमुक्तं—"तावल्लौहं पचेद्वैद्यो यावल्लौह पीडितम् । समुद्रं जायते व्यक्तं न निःसरति सन्धिभिः ॥ अङ्गुलिभ्यां निघृष्टन्तु यदा चूर्णत्वमागतम् । तदा सिद्धं विजानीयाल्लौहं लौहविशारदः ॥ वर्णितो वर्णितो वर्णिस्वरूपत्वं व्रजेदिति । ताभ्यामेव व्रजेद्धृष्टं सिद्धं विद्याद्‌चिकित्सकः ॥ मन्दमाहुस्तथा लौहमसम्यक्पाकलक्षणम् । अतिपाकेन तज्ज्ञेयं खरमुज्झितलक्षणम् ॥" इति । जीवनाथ्योऽप्याह—"अञ्जनाभं घनं स्निग्धं श्लक्ष्णमूक्ष्ममयोहरेत् । अक्लिन्नमभ्रसि चिरं सम्यक् पाकस्य लक्षणम् ॥" इति ॥ ३६ ॥

त्रिविधोऽप्ययं पाको न विफल इत्याह, त्रिविध इत्यादि ।—लौहपाकानन्तरं त्रिफलादिचूर्णप्रक्षेपार्थमाह, विज्ञायेत्यादि ।—द्राक्—शीघ्रम् ; चितौ,—भूतले ; कियतः क्षणान् विश्राम्येत्यनेन सर्वथा तापनिवृत्तिर्न प्रतिपद्यते ; किन्तर्हि, मनाक् तप्तत्वम् ; यदाह पतञ्जलिः,—'अवतार्य्य मनाक् तप्त' इति । इतिकर्त्तव्यता त्विह यौगरत्नाकरसमुच्चयोक्तानुसर्त्तव्या । यदुक्तं तत्रैव—"अवतार्य्य ततो दर्व्या परिघट्य पुनःपुनः । यदा पाणिसहो भूतो निक्षिपेदौषधं तदा ॥ लौहलौहेन दर्व्यैव परिघट्य निरन्तरम् ॥" इति ॥ ३७ ॥

लाभे सति सौगन्ध्यार्थं कान्तकामकीयदोषहरणार्थञ्च कर्पूरप्रक्षेपमाह, यदीत्यादि ।—विगलित इति—अपगते । अनुरूपमित्यनेन यावदनुत्कटगन्धस्वादोपलम्भो भवति तावन्मानमित्यर्थः । "न वा न यदि तल्लाभ" इति ।—यदि कर्पूरलाभो न

पक्वं तदश्मसारं सुचिरघृतस्थित्यभाविरूक्षत्वे।
गोदोहनादिभाण्डे लौहभाण्डाभावे सति स्थाप्यम् ॥ ३८ ॥
यदि तु परिप्लुतिहेतोर्घृतमीचेताधिकं ततोऽन्यस्मिन्।
भाण्डे निधाय रक्षेद्भाव्युपयोगो ह्यनेन महान् ॥
अयसि विरूक्षीभूते लेह्यस्त्रिफलाघृतेन सम्पाद्यः।
एतत् ततो गुणोत्तरमित्यमुना लेहनीयं तत्।
अत्यन्तकफप्रकृतेर्भक्षणमयसोऽमुनैव शंसन्ति।
केवलमपोदमशितं जनयत्ययसो गुणान् नियतः ॥ ३९ ॥

---

स्यात् तदा न वा विरेदित्यन्वयः। पक्वलौहं दिनान्तरे धारयमिति शुष्कं पेष्टव्यम्। उक्तं हि योगरत्नाकरे—"विशाल्य रजनीमेवं पेष्टव्यः शीतलीकृतः। त्रिधा त्रिफलातोये सद्यो शिलापुत्रेण ताडयेत् ॥" इति। अथ सिद्धस्य लौहस्य स्थापनार्थं पात्रमाह, पक्वमित्यादि।—सुचिरकालं घृतस्थित्या अभाविरूक्षत्वं यस्य तस्मिन्, बहुदिनं व्याप्य घृतभावितं यत् पात्रं, तस्मिन्नित्यर्थः। गोदोहनादिभाण्डे—दधिदुग्धादिभावितं पात्रम्; लौहभाण्डाभावे इति—कान्तादिलौहपात्राभावे; तदुक्तं—कान्तादिलौहभाण्डे तु तद्वत् ताम्रमयी शुभे। चिराभ्यभाविते भाण्डे लौहताम्राद्यसम्भवे ॥" इति ॥ ३८ ॥

इदानीमयःपाकार्थं दत्तं घृतमधिकं यद्युपलभ्यते, तदा तदालय भाविलौहरूक्षत्वनिवृत्त्यर्थं पात्रान्तरे स्थाप्यमित्याह, यदि त्वित्यादि।—घृतस्याधिक्यमेव कथं ज्ञातव्यम्?—इत्याह, परिप्लुतिहेतोरिति।—परिप्लुतिः—पात्रादुच्छलितत्वम्। ईदृशेन—उपलक्षयेत्। किमर्थं तद्घृतं रक्षणीयम्?—इत्याह, भाव्युपयोग इत्यादि।—हि यतोऽनेन लौहपाकोच्छलितघृतेन महान् उपयोगो भवन् भविष्यन् भावि वर्तते, तत् च रूक्षीभूतलौहस्य लेहनादिरूपम्। उक्तं हि—"अयेदयदि कथितौ प्रमादधिकं हविः। पृथक्पात्रेऽपि तत् स्थाप्य लेहनार्थं विचक्षणैः ॥ अथवा सर्वं लौहे यथाप्रुषुपयोज्यते। तदनेनैव कर्त्तव्यमिति केचिद्व्यवस्थिताः ॥" इति। यदि पुनर्लौहपाकोच्छलितं घृतं न लभ्यते, तदा त्रिफलाक्वाथकल्काभ्यामन्यद्घृतं पक्त्वा रूक्षितलौहस्य लेहनं कार्यमित्याह, अयसीत्यादि, किन्तु तत्त्रिफलाघृतात् लौहपाकोच्छलितं घृतमेवोत्कृष्टगुणमित्याह, एतदित्यादि।—एतदिति—लौहपाकोच्छलितं घृतम्। ततः इति—त्रिफलाघृतात्; गुणोत्तरम्—उत्कृष्टगुणमिति। अमुना घृतेन तदयः लेहनीयमिति।

अथवा वक्तव्यविधिसंस्कृतकृष्णाभ्रकचूर्णमादाय ।
लौहचतुर्थार्द्धसमद्विवित्रिचतुःपञ्चगुणभागम् ॥
प्रक्षिप्यायः प्राग्वत् पचेदुभाभ्यां भवेद्रजो यावत् ॥
तावन्मानानुसृतिः स्यात् त्रिफलादिद्रव्यपरिमाणम् ।

---

तस्यैव घृतस्य प्रयोजनान्तरमाह, अथानेनेत्यादि ।—अमुनैवेति—लौहपाकोच्छलितघृतेनेत्यर्थः । लौहोच्छलितघृतस्योत्कृष्टगुणत्वमप्याह, केवलमित्यादि ।—केवलं लौहपाकोच्छलितघृतम् । जनयत्ययसो गुणान् कियत इति ।—लौहसम्बन्धेन लौहगुणाधिधानादिति भाव. ॥ २८ ॥

इदानीं पित्तदुष्टिं प्रति अत्रैव लौहचतुर्थार्द्धसमादिमानतोऽभ्रकप्रवेशेन लौहाभ्रकं पक्तुं विधिमाह, अथवेत्यादि ।—वक्तव्यविधिनेति ।—अत्रानन्तरमेव कृष्णाभ्रकमभेकवपुरित्यादिना ग्रन्थेन योऽभ्रकसंस्कारस्य विधिरभिधेय वक्तव्यत्वेन विधिना संस्कृतमभ्रकचूर्णं नियन्त्रीकृतमादाय अयो लौहचूर्णञ्च प्रक्षिप्य पचेदिति । कियन्मानम् अभ्रकचूर्णं ग्राह्यम् ?—इति जिज्ञासायामभ्रस्यैव भागक्रममाह, लौहचतुर्थेत्यादि ।—लौहचूर्णमपेक्ष्य नियन्त्रीकृताभ्रकचूर्णस्य चतुर्थो भागः पादिक इत्यर्थः । तथा पक्तनीयैकपलादिमयोदशपलान्तलौहचूर्णस्य भागद्वयम्, अभ्रकचूर्णस्य पुनरेको भागः, तेन लौहस्य भागद्वयम्, अभ्रस्य तदर्द्धमेको भाग इति अभ्रस्यार्द्धभागत्वम् । तथा एको भागो लौहस्य, अपर एको भागोऽभ्रस्येति लौहसमत्वमभ्रकस्येति । एवमेको भागो लौहस्य, भागद्वयन्तु अभ्रकस्येति द्विगुणत्वमभ्रकस्य । एवमेको भागो लौहस्य, अभ्रस्य भागत्रयमिति अभ्रस्य त्रिगुणत्वम् । तथा लौहस्य एको भागः, भागचतुष्टयन्तु अभ्रकस्येति चतुर्गुणत्वमभ्रकस्य ; तथा एको भागो लौहस्य, पञ्चभागन्तु अभ्रस्येति पञ्चगुणत्वमभ्रकस्य ज्ञेयम् । एवं क्रमेण लौहाभ्रकाभ्यां मिलित्वा एकपलादित्रयोदशपलान्तमानव्यवस्थया तत्पाकः कार्य्य इत्याह,—प्राग्वदित्यादि । एवञ्च सति अभ्रकप्रवेशेन प्रधाननिष्पत्तिपाकार्थं त्रिफलाक्वाथदुग्धघृतप्रक्षेप्यचूर्णपरिमाणं कीदृशम् ?—इति निर्णयार्थमाह, उभाभ्या भवेदित्यादि ।—अयमर्थः,—उभाभ्यां लौहाभ्रकाभ्यां मिलित्वा यावद्रजो भवेत्, तावदेव लौहमानं परिकल्प्य तन्मानानुसारेण त्रिफलादिमानं कल्पनीयम् । पूर्वं केवललौहपाके त्रिफलादीनां यावन्मानमुक्तम् इदानीं मिलितलौहाभ्रकपाकेऽपि तावदेवेत्यर्थः । अत एव लौहरसाधकयोगमपेक्ष्य योगरत्नाकरेऽप्यभिहितं—"यावल्लौहरजस्तस्मात् भवेदर्द्धेन पारदः ।" तदर्द्धेन घनं

मण्डूकपर्णिकायाः पूर्वरसेनैव मोदनं कुर्य्यात्।
स्थालीपाकं पुटनञ्चाद्यैरपि भृङ्गराजाद्यैः॥ ४१॥
ताड़ादिपत्रमध्ये कृत्वा पिण्डं निधाय भस्त्राग्नौ।
तावद्दहेत् यावन्नीलोऽग्निर्दृश्यते सुचिरम्॥
निर्वापयेच्च दुग्धेन दुग्धं प्रक्षाल्य वारिणा तदनु।
पिष्ट्वा घृष्ट्वा वस्त्रे चूर्णं निश्चन्द्रकं कुर्य्यात्॥ ४२॥

इति अभ्रकविधिः।

---

शुद्धोऽस्य च तद्विरहात्। पिण्डानन्तरं यत् कर्त्तव्यं तदाह,—मण्डूकपर्णिकाया इत्यादि। पूर्वरसेनेति।—यत्रैव मण्डूकपर्णीरसे दिनत्रयं स्थापितमासीत् तेनैव रसेन विमद्य मोदनमिति मोदकाकारं कुर्य्यात्; मोदयतीति मोदन इति मोदनशब्दोऽपि मोदकार्थे द्रष्टव्यः। कश्चित्तु मोदकमिति पाठः। स च तत्तदाकारपुस्तकेषु न दृश्यते। मोदकाकारञ्च कृत्वा दिनैकं स्थापयित्वा पश्चात्कुर्य्यादित्युपदेशो बोद्धव्यः। अयमभ्रकशोधनप्रकारः चक्रपाण्याचार्य्यमतानुसारेण निबद्धः। तत्र मण्डूकपर्णीरसेन पुनर्मोदककरणं यद्यपि नास्ति, तथापि केनापि चट्टमतंवा प्रतिसंस्कारोपदेशादिदं लिखितमिति बोध्यम्। तदनु चास्य अभ्रकस्य चूर्णीकृतस्य स्थालीपाकपुटपाकौ कर्त्तव्यौ, तदर्थं द्रव्याण्याह, स्थालीपाकमित्यादि।—आद्यैर्भृङ्गराजाद्यैरिति, लौहपुटनविधौ पूर्वोक्तैः भृङ्गराजकेशराजशतावरीकन्दमाण्यादिरसैरित्यर्थः। आद्यैरित्यत्र अन्यैरित्यपि पाठः। किन्तु पूर्वपाठ एव टीकाकारसम्मतः॥ ४१॥

एवं पुटादिशोधितस्याभ्रकस्य वह्नौ धापनं कार्य्यम्; ततस्तद्विधिमाह, ताड़ादिपत्रेत्यादि।—ताड़ा—स्वनामख्याता, आदिशब्दात् केतुकादिपत्रं बोध्यम्। किन्त्विदानीं ताड़ादिपत्रपिहितस्याभ्रस्य धापनं व्यवहरन्ति। पिण्डीकरणञ्चास्य भृङ्गराजादिद्रवालोड़नादधिगन्तव्यम्। दुग्धं प्रक्षाल्येति।—दुग्धनिर्वापितोत्थापिताभ्रकसंलग्नं यद्दुग्धम्। यद्यपीदानीं ताड़ादिपत्रपिहितस्य धापनमभ्रकस्य न व्यवहरन्ति, किन्तु पुटैरेवास्य निश्चन्द्रकत्वं क्रियते, तथाप्यस्मात् बहुधा कृतत्वात् वा सम्यक् निश्चन्द्रकत्वमनेनास्य भवतीत्यवधारितम्। यतोऽभ्रकस्य निश्चन्द्रीकरणमेव यथोक्तगुणकरणे प्रयोजकमिति, तत्र येन केनापि भेषजेन भवतु। अपरापरेऽप्यभ्रकमारणप्रकारा नानाचार्य्योक्ताः सन्ति, ते च योगरत्नाकरसमुच्चयादधिगन्तव्याः। तत्रैकं प्रसिद्धमतं यथा—"धान्याभ्रकचोदकैः पिष्टमभ्रं सप्त संस्थितम्। कन्द-

लौहभक्षणविधिः,—

नानाविधरुक्शान्त्यै पुष्ट्यै कान्त्यै शिवं समभ्यर्च्य ।
सुविशुद्धेऽहनि पुण्ये तदमृतमादाय लौहाख्यम् ॥
दशरक्तित्रयपरिमाणं शक्तिवयोभेदमाकलय्य पुनः ।
द्व्यधिकं तदधिकतरमियदेव न माषमोदकवत् ॥ ४३ ॥
सममसृणामलपात्रे लौहे लोहेन मर्दयेच्च पुनः ।
दत्त्वा मध्वनुरूपं तदनु घृतं योजयेदधिकम् ।
यन्त्रं गृह्णाति यथा मध्वघृतयुक्तेन पङ्कमविशिंषत् ॥ ४४ ॥

---

मालास्थिमहाराष्ट्रककर्पूरसैरेय ॥ मद्वदारकपित्थेन कालमारिषजेन च। उशीर-
ह्रीबेरधवशालाकिमराजकैः ॥ पेषयेन्मापनं कुर्यात् पुटपाकमनेकधा। याव-
निश्चन्द्रकत्वं स्यात् ततो मीनरवेण च ॥ कालमारिषजेनापि स्वरसेनापि प्रदा-
पयेत्। यावदम्भस्तलमायाति हरिद्रेव विद्यायसः ॥" अत्र उशीरः,—वेतपुनर्नवा ;
लवणा—सुनामच्याला, मीना—रक्ता, व्याघ्रनख्यम्। त्रिफलयैव प्रकारः इहवैद्यैः
प्रायः क्रियते ॥ ४२ ॥

लौहभक्षणविधिः।

इदानीं निष्पन्नस्य लौहस्य भक्षणविधिमाह, नानेत्यादि।—नानाविधव्याधयः
पुराणज्वरातीसारपाण्डुशोषकामलाराजयक्ष्मादयः। अमृतमिति—अमृतमिवामृतम्।
तच कियन्मात्रमुपयोज्यम् ?—तदाह, दशेत्यादि।—रक्तिका—रतिः, तेन रक्ति-
मात्रमात्रकमित्यर्थः। अत्र दशरक्तिपरिमाणारम्भः उत्तममध्यमाधमपुरुषापेक्षया-
ऽभिहितः, तेन मध्यमाधमपुरुषशक्तिवयोऽपेक्षया इदं दशरक्तिपरिमाणं यथाक्रमं
मध्यमाधमयोरधिकतरं भवतीति। वयोवलाद्यपेक्षया उत्तमपरिमाणादन्या-
दन्यतरपरिमाणेनाप्यारम्भः। यद्येवं कर्तव्ये न पुनर्दशरक्तिपरिमाणं पुरुषमिति इयता
तावत्परिमाणमेव कर्तव्यमिति माषमोदकपर्यन्तं न कार्यं इत्यर्थः। तेन
"आरम्भो वर्द्धनचापि पञ्चदिवसमनुमता" तथा पञ्चगुञ्जमनन्तरारब्धिका; प्रतिदिने,
तथा—"रक्तिमेकामुपक्रम्य यावत् सुवर्णपरिमिता:" इत्यादि यत् तन्त्रान्तरीयं, तत्
सर्वमनेन संगृहीतं ज्ञेयम् ॥ ४३ ॥

लौहमर्दनार्थं पात्रमाह, सममित्यादि।—उत्तानमायतमधस्तात् तत् पात्रं
भाजनाकारं कर्तव्यम्। लोहेनेति—लौहदण्डेन। मधु तदुचितं दत्त्वा। अधिक-

मण्डूकपर्णिकायाः पूर्वरसेनैव मोदनं कुर्यात्।
स्थालीपाकं पुटनञ्चाद्यैरपि भृङ्गराजाद्यैः॥ ४१॥
ताडादिपत्रमध्ये कृत्वा पिण्डं निधाय भस्त्राग्नौ।
तावद्दहेच्च यावन्नीलोऽग्निर्दृश्यते सुचिरम्॥
निर्वापयेच्च दुग्धेन दुग्धं प्रक्षाल्य वारिणा तदनु।
पिष्ट्वा घृष्ट्वा वस्त्रे चूर्णं निश्चन्द्रकं कुर्यात्॥ ४२॥

इति अभ्रकविधिः।

---

अभ्रमोदकस्य तन्निरूहात्। पिण्डानन्तरं यत् कर्तव्यं तदाह,—मण्डूकपर्णिकाया इत्यादि। पूर्वरसेनेति।—पूर्वेण मण्डूकपर्णीरसे दिनत्रयं स्थापितमपि तेनैव रसेन विमर्द्य मोदनमिति मोदकाकारं कुर्यात्; मोदयतीति मोदन इति मोदनशब्दोऽपि मोदक-वाची द्रष्टव्यः। क्वचित्तु मोदकमिति पाठः। स च तत्तदाकारपुस्तकेषु न दृश्यते। मोदकाकारञ्च कृत्वा दिनैकं स्थापयित्वा पश्चात्पुट्यादित्युपदेशो बोद्धव्यः। अथ-मभ्रकमोदनप्रकारः चक्रपाण्याचार्यमतानुसारेण निरूढः। तत्र मण्डूकपर्णीरसेन पुनर्मोदककरणं यद्यपि नास्ति, तथापि केनापि प्रयुक्तमेवा प्रतिसंस्कृतोपदेशादिदं लिखितमिति बोध्यम्। तदनु चास्य अभ्रकस्य चूर्णीकृतस्य स्थालीपाकपुटपाकौ कर्तव्यौ, तदर्थं इत्याह, स्थालीपाकमित्यादि।—भावैर्भृङ्गराजाद्यैरिति, धौत-पुटनविधौ पूर्वोक्तैः भृङ्गराजकेशराजशतावरीकन्दमाषादिरसैरित्यर्थः। भावैरित्यत्र बन्धैरित्यपि पाठः। किन्तु पूर्वपाठ एव टीकाकारसम्मतः॥ ४१॥

एवं पुटादिशोधितस्याभ्रकस्य वह्नौ धापनं कार्यम्; ततस्तद्विधिमाह, ताडादि-पत्रेत्यादि।—ताडा—तमालपत्रा, आदिशब्दात् केतुकादिपत्रं बोध्यम्। किन्त्वि-दानीं ताडादिपत्रपिहितस्याभ्रस्य धापनं व्यवहरन्ति। पिण्डीकरणञ्चास्य भृङ्ग-राजादिद्रवालोडनादधिगन्तव्यम्। दुग्धं प्रक्षाल्येति।—दुग्धनिर्वापितत्वापादिताभ्रक-संलग्नं यद्दुग्धम्। यद्यपीदानीं ताडादिपत्रपिहितस्य धापनमभ्रकस्य न व्यव-हरन्ति, किन्तु पुटैरेवास्य निश्चन्द्रकत्वं क्रियते, तथाप्यधात् बहुधा कृतत्वात् वा सम्यक् निश्चन्द्रकत्वमनेनास्य भवतीत्यवधारितम्। यतोऽभ्रकस्य निश्चन्द्रीकरणमेव यथोक्तगुणकरणे प्रयोजकमिति, तत्र येन केनापि भेषजेन भवतु। अपरापरेऽप्यभ्रक-मारणप्रकारा नानाचार्योक्ताः सन्ति, ते च ग्रन्थगौरवभयादधिगन्तव्याः। तत्रैकं प्रसिद्धमतं यथा—"धान्याभ्रमोदकैः पिष्टमभ्रकं तत्र संस्थितम्। कन्द-

लौहभक्षणविधिः,—

नानाविधरुक्शान्त्यै पुष्ट्यै कान्त्यै शिवं समभ्यर्च्य।
सुविशुद्धेऽहनि पुण्ये तदमृतमादाय लौहाख्यम्॥
दशरक्तिपरिमाणं शक्तिवयोर्भेदमाकलय्य पुनः।
इयदधिकं तदधिकतरमियदेव न माढमोदकवत्॥ ४३॥
सममसृणामलपात्रे लौहे लौहेन मर्दयेच्च पुनः।
दत्त्वा मध्वनुरूपं तदनु घृतं योजयेदधिकम्।
बन्धं गृह्णाति यथा मध्वाज्ययोगेन पङ्कमविमिश्रितम्॥ ४४॥

---

मात्रास्थिसंहारच्छदकर्णस्वेरस्य। भृङ्गराजरसपिष्टेन त्वालमारिषजेन च। त्रयोर-ष्टतौल्यलघुकेशराजके॥ पिष्टं भावनं कुर्यात् पुटपाकमनेकधा। याव-च्छिवाद्रकत्वं स्यात् ततो मोचरसेन च॥ त्वालमारिषजेनापि स्थालीपाकं प्रदा-पयेत्। यावद्भस्मत्वमायाति प्रहितैव विभावयेत्॥" अत्र त्रयोरः,—श्वेतपुनर्नवा; लघ्वा—लक्ष्मणा, मौचा—रम्भा, मलमन्यत्। जिलयसेव प्रकारः इत्यैवं प्रायः क्रियते॥ ४२॥

इत्ययस्कारविधिः।

इदानीं निष्पन्नस्य लौहस्य भक्षणविधिमाह, नानेत्यादि।—नानाविधव्याधयः पुराणज्वरातीसारग्रहणीरक्तपित्तराजयक्ष्मप्रभृतयः। अमृतमिति—अमृतमिवामृतम्। तच्च क्रियमाणमुपयोज्यम्।—तदाह, दशेत्यादि।—रक्तिका—रत्ति, तेन चरम-मात्रान्मात्रकमित्यर्थः। अयञ्च दशरक्तिपरिमाणारम्भः उत्तमपुरुषशक्तिवयोऽपेक्षया-ऽभिहितः, तेन मध्यमाधमपुरुषशक्तिवयोऽपेक्षया इह दशरक्तिपरिमाणं यथाक्रमं मध्यमाधमयोरधिकतरञ्च भवतीति। बलीयस्त्वापेक्षया उक्तपरिमाणादल्प-द्रव्यतरपरिमाणेनाप्यारम्भः। वर्द्धने कर्त्तव्ये न पुनर्दशरक्तिपरिमाणं युक्तमिति ज्ञात्वा तावत्परिमाणमेव कर्त्तव्यमिति माढमोदकवन्नियमो न कार्य्य इत्यर्थः। तेन "आरभ्य वर्द्धनञ्चापि पञ्चदिवसाद्गुञ्जया" तथा पञ्चसप्तनवेतरारक्तिकाः प्रथमदिने; तथा—"रक्तिमेकामुपक्रम्य यावत् स्युर्नवरक्तिकाः" इत्यादि यत् तन्त्रान्तरेषूक्तं, तत् सर्वमनेन सङ्गृहीतं ज्ञेयम्॥ ४३॥

लौहमर्दनार्थं पात्रमाह, समेत्यादि।—उत्तानवामकरतलस्थापनार्थं तत् पात्रं भाजनाकारं करणीयम्। लौहेनेति—लौहदण्डेन। मधु तदुचितं दत्त्वा। अधिक-

इदमिह दृष्टोपकरणमेतददृष्टन्तु मन्त्रेण।
स्वाहान्तेन विमर्दो भवति फडन्तेन लोहवलरक्षा।
सनमस्कारेण बलिर्भक्षणमयसो हुमन्तेन॥

"ओँ अमृतोद्भवाय स्वाहा"। "ओँ अमृते हुं फट्"। "ओँ नमश्चण्डवज्रपाणये महायक्षसेनाधिपतये सुरगुरुविद्यामहाबलाय स्वाहा"। "ओँ अमृते हुं"॥ ४५॥

जग्ध्वा तदमृतसारं नीरं वा क्षीरमेवानुपिबेत्।
कान्तक्रामकममलं सञ्चर्व्य रसं पिबेद्दिने न तु तत्।
आचम्य च ताम्बूलं लाभे घनसारसहितमुपयोज्यम्॥४६॥

---

मिति।—मध्यपेक्षाया किञ्चिदधिकं घृतं निधेयम्। मर्दनविश्रामे वचनमाह,—अभ्रमित्यादि। अविरिञ्चिदिति।—सततं मधु अश्वयत्नेन एकत्वेनाविरिञ्चत् विश्रेषमकुर्वन् अत एव पट्ट—पट्टमिवेत्यर्थः॥ ४४॥

दृष्टादृष्टाभ्यां हि कार्य्यसिद्धिरिती दृष्टमुक्ता मन्त्रजन्यादृष्टार्थमाह, इदमित्यादि।—तत्र प्रथमं लोहमर्दनमन्त्रमाह, ओँ अमृतोद्भवायेत्यादि।—अयं स्वाहान्तो मर्दनमन्त्रः। लोहरक्षणमन्त्रमाह,—ओँ अमृते हुं फट् इति। बलिदानमन्त्रमाह, ओँ नम इत्यादि।—भक्षणमन्त्रमाह,—ओँ अमृते हुमिति॥ ४५॥

लौहभिषजपाकार्थमनुपानमाह, जग्ध्वेत्यादि।—नीरञ्चामलं आकाशगुणबहुभूयिष्ठभूभागाश्रयम्; क्षीरञ्च गव्यं सर्व्वत्र; तत्रञ्च—"सर्व्वत्र गव्यमेवेति मतमाह पतञ्जलि" इति। अनुपानञ्च लौहापेक्षया चतुःषष्टिगुणं षष्टिगुणं वा कार्य्यम्। तदुक्तं योगरत्नाकरे—"अनुपानं चतुःषष्टिगुणं प्राहुः सदा बुधाः" इति; तथा अन्यत्रोक्तम्—"अनुपानं प्रयोक्तव्यं लौहात् षष्टिगुणं पयः" इति। अनुपानं कृत्वा लौहदोषनिरासाय निश्चयः कान्तक्रामकस्य स्वरससमानं पेयमित्याह, कान्तक्रामकमित्यादि।—अनुपानादनन्तरं यद्विधेयं तदाह, आचम्येत्यादि।—आचमनञ्च शतशीतजलेन उष्णोदकेन वा। यदुक्तं—"कृत्वाऽनुपानमाचम्य शतशीतजलेन वा। यद्वा उष्णोदकेनैव—" इत्यादि॥ ४६॥

इदमिह दृष्टोपकरणमेतददृष्टन्तु मन्त्रेण।
स्वाहान्तेन विमर्दो भवति फडन्तेन लौहवलरक्षा।
सनमस्कारेण बलिर्भक्षणमयसो हुमन्तेन॥

"ओँ अमृतोद्भवाय स्वाहा"। "ओँ अमृते हुं फट्"। "ओँ नमश्चण्डवज्रपाणये महायक्षसेनाधिपतये सुरगुरुविद्यामहाबलाय स्वाहा"। "ओँ अमृते हुं"॥ ४५॥

जग्ध्वा तदमृतसारं नीरं वा क्षीरमेवानुपिबेत्।
कान्तक्रामकममलं सद्यश्च रसं पिबेद्दिने न तु तत्।
आचम्य च ताम्बूलं लाभे घनसारसहितमुपयोज्यम्॥४६॥

---

मिति।—मध्वपेक्षया किञ्चिदधिकं घृतं मिश्रणीयम्। मर्दनविधये लक्षणमाह,—मध्वमित्यादि। अविश्लिषदिति।—स्वतन्त्र मधु अप्रयोगेण एकत्वेनाविश्लिषत् विश्लेषमकुर्वत् घृत एव पङ्क—पङ्कमिवेत्यर्थः॥ ४४॥

दृष्टादृष्टाभ्यां हि कार्य्यसिद्धिरतो दृष्टमुक्त्वा मन्त्ररूपादृष्टार्थमाह, इदमित्यादि।—तत्र प्रथमं लौहमर्दनमन्त्रमाह, ओँ अमृतोद्भवायेत्यादि।—अयं स्वाहान्तो मर्दनमन्त्रः। लौहरक्षणमन्त्रमाह,—ओँ अमृते हुं फट् इति। बलिदानमन्त्रमाह, ओँ नम इत्यादि।—भक्षणमन्त्रमाह,—ओँ अमृते हुमिति॥ ४५॥

लौहभेषजपाकार्थमनुपानमाह, जग्ध्वेत्यादि।—नीरञ्चामलं आकाशगुणमयभूयिष्ठभूभागाश्रयम्; क्षीरञ्च गव्यं सर्वत्र; उक्तञ्च—"सर्वत्र गव्यमेवेति मतमाह पतञ्जलि" इति। अनुपानञ्च लौहापेक्षया चतुःषष्टिगुणं षष्टिगुणं वा कार्य्यम्। तदुक्तं योगरत्नाकरे—"अनुपानं चतुःषष्टिगुणं प्राहुः सदा बुधाः" इति; तथा चान्यत्रोक्तम्—"अनुपानं प्रयोक्तव्यं लौहात् षष्टिगुणं पयः" इति। अनुपानं कृत्वा लौहदोषनिरासाय निस्तुषः कान्तक्रामकस्य स्वरसमात्रं पेयमित्याह, कान्तक्रामकमित्यादि।—अनुपानादनन्तरं यद्विधेयं तदाह, आचम्येत्यादि।—आचमनञ्च शृतशीतजलेन हंसोदकेन वा। यदुक्तं—"कृत्वाऽनुपानमाचम्य शृतशीतजलेन वा। यद्वा हंसोदकेनैव—" इत्यादि॥ ४६॥

नात्युपविष्टो नाप्यतिभाषो नातिस्थितस्तिष्ठेत् ।
अत्यन्तवातशीतातपयानस्नानवेगरोधादीन् ॥
जह्याच्च दिवानिद्रामहितस्याकालभुक्तञ्च ।
वातकृतः पित्तकृतः सर्वान् कट्वम्लतिक्तकषायान् ।
तत्क्षणविनाशहेतून् मैथुनकोपश्रमान् दूरे ॥ ४७ ॥
अशितं तदयः पयात् पततु न वा पाटवं छडु प्रथताम् ।
आर्त्तिर्भवतु न वान्त्रे कूजति भोक्तव्यमव्याजकम् ॥ ४८ ॥
प्रथमं पीत्वा दुग्धं शाल्यन्नं विशदसिद्धमक्षिप्रम् ।
घृतसंप्लुतमश्नीयान्मांसैर्वैष्करमैः प्रायः ॥
उत्तममनूपरभूचरविष्किरमांसं तथाजमैणादिकम् ।

---

अनुपानादिकं कृत्वा यथा स्थातव्यं तदाह, नात्युपविष्ट इत्यादि ।—नातिस्थित इति ।—ऊर्द्धीभूतः दण्डायमानः सन् अति न तिष्ठेत्—चिरं न तिष्ठेदित्यर्थः । अपरं परिवर्जनीयमाह, अत्यन्तेत्यादि ।—अत्यन्तेति—वातादिभिः सम्बध्यते ; यानम्—अश्वादियानम् ; आदिशब्दादीर्ष्याचिन्ताविषमाहाराध्यशनादीनां ग्रहणम् । अकालभुक्तम्—अजीर्णादौ भोजनम् । वर्जनीयरसानाह, वातकृत इत्यादि ।—वातकृत इत्यादिकं हेतुगर्भमेव विशेषणम्, किन्तु वातकृत. पित्तकृत इत्यनेन कट्वम्लतिक्तकषायाः पिप्पल्यामलकगुडूचीहरीतक्यादयो वातपित्ते न कुर्वन्ति, तेषामुपयोगो न विरुध्यत इति दर्शयति । विशेषेण वर्जनीयविहारमाह, तत्क्षणेत्यादि ।—अत्रापि जह्यादिति पूर्वोक्तं सम्बध्यते ॥ ४७ ॥

प्रातरुपयुक्तं लौहचूर्णं यतः कस्यामवस्थायां भोक्तव्यम् ?—इत्याह—अशितमित्यादि । अशितं तदयः पयादिति ।—गुदेन पततु प्रवर्त्ततां, न वा, तथा आर्त्तिरिति बुभुक्षा पीडा भवतु वा न वा, तथापि पाटवम् आलस्यादिराहित्यं छडु भवतु, तथा लौहसम्भावितदेहे सत्यपि वायोः सञ्चरणेनान्त्र कूजनञ्च छडु भवतु ; तदैव अव्याजं निःशङ्कं भोक्तव्यम्, छडु इत्यङ्गीकारविज्ञाने । एतेन पाटवमन्त्रकूजनमेतदुभयमेव भोजनं प्रति प्रयोजकमित्यर्थः ॥ ४८ ॥

इदानीं भोजनं येन विधिना कर्त्तव्यं तदाह, प्रथममित्यादि ।—विशदं—पृथक् ; अक्षिप्रमिति—नात्यौष्ण्यसन्तप्तम् । दुग्धमिति ।—शीतस्पर्शकायाः कृष्णाया वा प्रशस्तगव्याया ग्राह्यम् । वैष्करमैरिति—लावतित्तिरादिविष्किरसमूहैः । प्रायःशब्दादाजैणादिकं बोद्धव्यम् । एतदेवाह, उत्तममित्यादि ।—अनूपभूचराः,—जाङ्गलदेशचराः

तेष्वष्टमाषकेषु प्रातर्माषकत्रयमश्नीयात्।
सायञ्च तावदह्नो मध्ये माषद्वयं शेषम्॥ ५३॥

इति भक्षणविधिः।

एवं तदमृतमश्नन् कान्तिं लभते चिरस्थिरं देहम्।
सप्ताहत्रयमात्रात् सर्वरुजो हन्ति किं बहुना॥
आर्य्याभिरिह नवत्या सप्तविधिना यथावदाख्यातम्।
भ्रमतिविपर्य्ययसंशयशून्यमनुष्ठानसुश्रीतम्॥
मुनिरचितशास्त्रपारं गत्वा सारं ततः समुद्धृत्य।
निबबन्ध बान्धवानामुपकृतये कोऽपि षट्कर्मा॥ ५४॥

अमृतसारं लौहं समाप्तम्।

---

रिकेत्यादि।—इदानीं पथ्यदिनाधिकसप्तसप्ताहैरष्टमाषकप्रमाणे सञ्जाते सति वत्सराभ्यन्तर एव केन प्रकारेण तल्लौहमुपयोज्यम्? इत्याह, तेष्वित्यादि।—अष्टमाषकेषु मध्ये माषकत्रयं प्रातः। तावदिति—माषकत्रयं सायाह्ने; अह्नो मध्ये—भोजनसमये, शेषं माषकद्वयम्। अन्यत्राप्युक्तं—"प्रातर्माषत्रयं कार्य्यं मध्याह्ने माषकद्वयम्। माषत्रयं दिनाशेषे माषकाष्टकभक्षणम्॥" इति। इदानीन्तु रत्तिकाद्वयमारभ्य रोगिणं प्रति रत्तिकाद्वयवृद्ध्यैव दिवसाष्टपञ्चसप्तादिभिः किञ्चिदधिकमाषकत्रयं यावत् वृद्धिः, ततो दिवसाष्टादिभिः रत्तिकाद्वयेनैव ह्रास इति प्रायो व्यवहरन्ति वृद्धाः। उत्तरक्रिया चात्र द्विगुणा कार्य्या; यदुक्तं वातव्याधौ—"इति मुख्यक्रियायाः स्याद्द्विगुणा चोत्तरक्रिया"। उत्तरक्रियाऽत्र "नात्युपविष्टो नात्युत्तिष्ठन् नातिस्थितस्तिष्ठेत्" इत्यादिना उक्तैव॥ ५३॥

इति भक्षणविधिः।

इदानीमस्य लौहस्य फलमाह—एवमित्यादि। उपसंहरति आर्य्याभिरित्यादिना। सप्तविधयश्च—साध्यसाधनपरिमाणविधिः, लौहमारणविधिः, स्थालीपाकविधिः, पुटनविधिः, प्रधाननिष्पत्तिपाकविधिरथकविधिर्भक्षणविधिश्चेति। एषामनुष्ठानं नवत्या आर्य्याभिः कोऽपि षट्कर्मा भ्रमतिविपर्य्ययसंशयशून्यं यथा स्यात् तथा निबबन्धेत्यर्थः। कोऽपीत्यनिर्दिष्टनामधेयः पुरुषः उत्कृष्टरूपः; षट्कर्मा—श्रोत्रियः; उक्तं हि—"याजनं यजनं दानं विप्रस्यैव परिग्रहः। अध्यापनमध्ययनं श्रोत्रियः षड्भिरेव च॥" इति। भ्रमतिः,—सर्व्वथाऽज्ञानं, ज्ञानाज्ञानराहित्यं, तर्किंस्तद्बुद्धिभ्रमः; स च द्विधा—एककोटिकोऽनेककोटिकश्च; तत्राद्यो विपर्य्ययः, द्वितीयस्तु संशय इति।

यत्र तत्वोद्भवं लौहं निःशेषं मारितं यदि ।
त्रिफलाव्योषसंयुक्तं भक्षयेद्वलिनाशनम् ॥
सामान्याद्द्विगुणश्चौड़ं कलिङ्गोऽष्टगुणस्ततः ।
तस्माच्छतगुणं भद्रं भद्राद्वज्रं सहस्रधा ॥
वज्रात् षष्टिगुणः पाण्डिर्निरविर्दशभिर्गुणैः ।
ततः कोटिसहस्रं वा चयस्कान्तं महागुणम् ॥ ५५ ॥

---

अनुष्ठीयत इत्यनुष्ठानं, ग्रन्थसन्दर्भ एव । यथावदाख्यातमित्यत्र पूर्वाचार्य्यैरिति शेषः । उदीतमिति—गुरुपरम्परया उपदेशपूर्वकं कथितमित्यर्थः । मुनिरचितेत्यत्र मुनिः,—नागार्जुनः । मानवानामिति—मनुष्याणाम् । एवो चतुर्विंशत्लोकात्मकोपकरणंमुक्तं तथा च वक्ष्यत, एतेनास्य निबन्धस्य चमत्विविपर्य्ययसमर्थनिरासः सद्येति गुणत्रयमुक्तम् ॥ ५४ ॥

अमृतसारलौहं समाप्तम् ।

इदानीं नागार्जुनीक्त दाशरथायनलौहमाह, यत्र तत्वेत्यादि—यत्र तत्वोद्भवमिति । —चौड़कलिङ्गादियत्किञ्चिद्देशभवं वज्रपाण्ड्यादिकमेव निःशेषं सर्वथैव मृतम् । निःशेषमित्यत्र निरुत्थमिति पाठे—टङ्कणक्षारादियोगेनापि वह्नौ आपनारोपितं पुनर्लौहभावं नापद्यत इत्यर्थः । त्रिफलेत्यादि ।—व्योषं—त्रिकटुकम् ; त्रिफला-त्रिकटुचूर्णञ्च मिलित्वा लौहसमं बोध्यम् । संयुक्तं—सम्यक् युक्तं, तेन मधुघृताभ्यां लौहपात्रे लौहदण्डेन विमर्द्य भक्षणीयम् । रक्तिकादिक्रमेणेति वदन्ति वृद्धाः ; अन्ये त्वादौ माषकमेकमुपयोज्यमित्याहुः । इडो मध्ये वा चापि वक्षमर्पेत्य यथाशक्ति कुर्वन् सार्द्धसंवत्सरात् वलीं नाशयेदिति दाशरथायनटीकायामुक्तम् । लौहानां गुणमाह, सामान्यादित्यादि ।—दरदर्भक्तिपर्य्यन्तदेशदर्शितपोतरादिकमुद्भवं लौहं सामान्यम्, द्विगुणमिति—सामान्यलौहात् द्विगुणगुणकारकम् । चौड़मिति—चौड़देशोद्भवम्, भद्रमिति—भद्रदेशोद्भवम् । एषाञ्च भेदोऽस्तम्बोलटीकायामनुसन्धेयम्, इह तु विस्तरभयान्न लिखितम् ॥ ५५ ॥

प्रथमताम्रयोगः ।

रसतस्ताम्रं द्विगुणं ताम्रात् कृष्णाभ्रकं द्विगुणम् ।
पृथगेवैषां शुद्धिस्ताम्रशुद्धिस्ततो द्विविधा ॥
पर्पटीकृतस्य गन्धकयोगाद्वा मारणं तथा लवणैः ।
आम्ले क्वाथितताम्रे निर्गुण्डीकल्ककाञ्जिकमग्ने ॥
यत् पतति गैरिकाभं तत्पिष्टमर्द्धगन्धकं तदनु ।
पुटपाकेन विशुद्धं शुद्धं स्यादभ्रकन्तु पुनः ॥
हिलमोचिमूलपिण्डे क्षिप्तं तदनु मार्दसम्पुटे लिप्ते ।
तीक्ष्णं दग्धं पिष्टमम्लाम्भसा साधु चन्द्रिकाविरहितम् ॥
रेचितताम्रेण रसः खल्वशिलायां घृष्टः पिण्डिका कार्य्या ।
उत्स्वेद्य गृहसलिलेन निर्गुण्डीकल्कोऽसकृच्छुद्धौ ।

---

सम्प्रति ताम्रयोगमाह, रसत इत्यादि।—रसत इति।—शोधितात् पारदात् ताम्रं वक्ष्यमाणक्रमेण मारितचूर्णीकृतं द्विगुणं ग्राह्यम्; कृष्णाभ्रञ्च वक्ष्यमाणरीत्या मारितं चूर्णीकृतं ताम्राद्द्विगुणं ग्राह्यम्। कृष्णेति—अभ्रकविशेषणात् भेकवपुषो निरासः। एषां रसादीनां पृथगेव शुद्धिः कार्य्येति शेषः। तत इति।—तेषु मध्ये ताम्रशुद्धिं द्विधा आह, किं तत्प्रकारद्वयम्?—इत्याह, पर्पटीकृतस्येत्यादि।—मारणमिति छेदः। एतच्च तनुपत्रीकृतम्। ताम्रमित्यादि।—अनन्तरमेव वक्ष्यमाणताम्रयोगमभिधास्यमानं सूचितवान्। द्वितीयां शुद्धिमाह, तथा लवणैरित्यादि।—लवणैः सैन्धवादिभिः पञ्चभिरेव। आम्ल इति—क्षिप्ते। निर्गुण्डी—सिन्दुवारः, तदीयमूलमवसत्कल्कयुक्तकाञ्जिकमग्न इत्यर्थः; अत्र द्रुतरूपं यत् ताम्रं पतति तद्गैरिकवर्णोज्ज्वलमित्यर्थः। ताम्रादर्द्धं गन्धकं दत्त्वा तावदेकीकृत्य पेष्टव्यं, ततः स्थाल्यामारोप्य तुषमृत्तिकया लिप्त्वा लोहवत् पुटो देयः। इति ताम्रशुद्धिः। अभ्रकशुद्धिमाह, अभ्रकन्त्वित्यादि।—प्रथमतोऽभ्रकम् अम्लाम्भसा काञ्जिकेन पिष्ट्वा, तदनु हिलमोचिकापिण्डे कृत्वा एकमृत्पात्रे निधाय अपरेण पिधाय (तदनु मृत्तिकापात्रसम्पुटमध्ये छिद्रं कृत्वा तुषमृत्तिकया प्रलिप्य) तीक्ष्णमिति बहुलं यथा स्यात् तथा दग्धं पुटितं सत् चन्द्रिकारहितं भवति, तदनु पुटादाकृष्य शिलायां पिष्ट्वा चूर्णीकृत्य सत् ग्राह्यमित्यर्थः। अथ जारितताम्रचूर्णमिलितस्य रसस्य शुद्धिप्रकारमाह, रेचितेत्यादि।—रेचित-

एतत् सिद्धं चितयं चूर्णिततताम्रादिकैः पृथग्युक्तम् ॥
पिप्पलीविड़ङ्गमरिचैः ग्राह्यं द्विविमाषिकं भक्ष्यम्।
शूलाम्लपित्तश्वयथुग्रहणीयक्ष्मादिकुक्षिरोगेषु।
रसायनं महदेतत् परिहारो नियमतो नात्र ॥ ५६ ॥

द्वितीयताम्रयोगः,—

तनुपत्रीकृतं ताम्रं नैपालं गन्धकं समम्।
दत्त्वा चोर्द्धमधो मध्ये स्थालिकामध्यसंस्थितम् ॥
कृत्वा स्वल्पशरावेण स्थालिमध्ये पिधाय च।
शर्कराभस्मलेपेन लिप्त्वा सन्धिं तदूर्द्धतः ॥

---

तावेण मारिततावेण सह रसं खल्लमिकायां मेलयित्वा पुत्रा पिण्डिका कार्या; अन्योऽन्यविमर्दनेन एकीभाव कर्त्तव्य इत्यर्थः। तदनु निर्गुण्डी-कल्कमिश्रिते स्वच्छखिले काञ्जिके सा पिण्डिका चयकृदिनेकवारमुत् स्वेद्य, पश्चाविति शङ्कार्थम्। उत्स्वेदनप्रकारश्चाथ,—सूतनियामकभार्ग्यादिगणाम्य-तमद्रवे रसपिण्डितं मिलितरसताम्रचूर्णं दोलापाकेन निर्गुण्डीकल्कमिश्रितकाञ्जि-केनाधो ज्वालया ताप्यमानेन उत्स्वेदनीयमसकृदित्यर्थः। सूतनियामकश्च भार्ग्यादिगणो योगरत्नाकरे यथा—"भार्गी मत्स्याक्षी कुठारच्छिन्ना ब्राह्मी मूषिक-पर्णिका पुनर्नवा अपराजिता चक्राङ्कपुष्पी भेकाह्वा वदनी मयूरशिखा चेति। भार्ग्यादिरिह विख्यातो गणः सूतनियामकः॥" इति। अग्नितापेनापि रस कथमपि च लिप्तं न ददातीत्यर्थः। सूतनियामकौषधमध्यग रस सकाञ्जिकदोलायन्त्रे पचेत्। तदनु त्रितयमिदं रसाभ्रताम्रचूर्णं पिप्पल्यादिमध्यस्थ प्रत्येकं ताम्रचूर्णादर्द्ध-मानं मर्दयित्वा संयोजनीयम्; तत एकीकृत्य अग्निबलाद्यपेक्षया द्विमाषकादिक-मुपयोज्यम्। आदिशब्देन अर्श प्रभृतय.। कुक्षिरोगेष्विति—अग्निमान्द्यादिष्वपी-त्यर्थं ॥ ५६ ॥

ताम्रयोगान्तरमाह, तनुपत्रीकृतमित्यादि।—नैपालमिति—नेपालदेशीयं ताम्रम्। तनुपत्रीकृतमिति।—पत्तल यथा स्यात् तथा पत्रीकृतम्; पत्रता च कण्टकवेध्यावस्थो-पादानेन लभ्यत इति। तानि च तनूनि ताम्रपत्राणि अनेकानि कृत्वा जम्बीराम्ल-रसेन सम्मर्द्य प्रक्षाल्य संशोष्य च, तदनु ताम्रसममेव शोधितगन्धकं सचूर्ण्यं, तदन-न्तर स्थालिकायां कियदपि गन्धकचूर्णं दत्त्वा तदुपरि कियदपि तत् ताम्रपत्र निवेश्य

बालुकापूरितस्थाल्यां पिहितायां पुनस्तथा।
सुलिप्तायाञ्च यामैकमधोज्वालां प्रदापयेत्॥
तत आकृष्टताम्रस्य मृतस्य त्विह योजना।
अथ कर्षं गन्धकस्य वह्निस्थलौहपात्रगम्॥
शिलापुत्रेण सम्मर्द्य द्रुतं घृष्टं पुनःपुनः।
दत्वा देयं मृतं ताम्रं कर्षमानं ततः पुनः॥
रसोऽम्लमथितः शुद्धस्तावन्मात्रः प्रदीयते।
ततस्तथैव संमर्द्य पुनराज्यं प्रदापयेत्॥
अष्टबिन्दुकमात्रञ्च मर्दयेन्मूर्च्छितं तथा।
सर्वं स्यात् तत आकृष्य शिलापुत्रादिसङ्गतम्॥
संहृत्यालम्बुषरस-प्रस्रुतेन विलोडितम्।
पुनस्तथैव वह्निस्थ-लौहपात्रे विमर्दयेत्॥

---

पुनस्तदुपरि गन्धकचूर्णं देयमित्येवंक्रमेण सर्वाणि तानि ताम्रपत्राणि गन्धकचूर्णसहितानि उपर्यधोभावेन निवेश्य, ततोऽन्यशरावेण स्थाल्यन्तरनिवेशयोग्येन तत् ताम्रञ्च पिधाय, तच्छरावप्रान्तञ्च शर्करामृद्भिः सकर्पटेन लिप्त्वा तस्य शरावस्योपरिभागं बालुकापूर्णं तत् स्थालीपात्रं कृत्वा शरावेण तस्याः स्थाल्याः मुखं पिधाय तथैव सकर्पटेन लिप्त्वा प्रहरमेकमविच्छेदेनाधो ज्वालां प्रदापयेत्। इति ताम्रमारणम्। ततस्तत् मृतताम्रं स्थाल्याः समाकृष्य चूर्णयित्वा शोधितगन्धकादिभिः सह योजनीयमित्याह,—तत इत्यादि। कथं योजना कर्त्तव्येत्याह, अथेत्यादि।—अथ ताम्रमारणानन्तरं शोधितगन्धकस्यापरचूर्णं कर्षमेकं ज्वलदङ्गारस्थलौहपात्रे कृत्वा शिलापुत्रेण सम्मर्द्य पौनःपुन्येन घृष्टा द्रवीभूते तस्मिन् तत् मृतताम्रचूर्णं कर्षमानं देयं, दत्त्वा तथैव शिलापुत्रेण घर्षणीयम्। तत पुनरिति।—ततोऽनन्तरं अपि तत्पात्रस्थ एव अस्मिन् रसः पारदोऽपि तावन्मानः कर्षमान एव देयः। पुनस्तेनैव मर्दनीयः, किन्तु स्निग्धो रसः अम्लमथितः सन् शुद्धः, चाङ्गेरीजम्बीराद्यम्लरसमथनाच्च शुद्धः। तदनु अष्टबिन्दुपरिमितं घृतं दत्त्वा पुनर्मर्दयेत् शिलापुत्रेणैव। तथा तेन प्रकारेण सर्वं गन्धकताम्रादिकं संमूर्च्छितमेकीभूतं स्यात्। ततस्ताम्रलौहपात्रात् निःशेषमाकृष्य तथा शिलापुत्रादिसङ्गतं शिलापुत्रादिघर्षितं

यावद्द्रवक्षयं पश्चादाकृष्य सम्यपेषितम् ।
अलम्बुषरसेनैव गुडकं सम्प्रकल्पयेत् ॥
तत्पिण्डं वस्त्रविस्तीर्णे पिण्डे त्रिकटुजे पुनः ।
वसनान्तरिते दत्त्वा पोट्टलीं कारयेद्बुधः ॥
ततस्तां पोट्टलीमाज्य-मग्नां कृत्वा विधारिताम् ।
सूत्रेण दण्डसंलग्नां पाचयेत् कुशलो भिषक् ॥
यदा निष्फेनता चाज्ये गुटिका च दृढा भवेत् ।
तदा पक्वं तमाकृष्य पञ्चगुञ्जातुलाधृतम् ॥
त्रिकटुत्रिफलाचूर्णं तुल्यं प्रातः प्रयोजयेत् ।
तक्रं स्यादनुपानन्तु चाम्लपित्तोद्भवे पुनः ॥
त्रिफलैव समा देया कोष्णं वारि पिबेदनु ।
सप्तमे दिवसे रक्ति-वृद्धिस्तावत्तु माषकम् ॥

---

गुडकमपि भवं संहृत्य वर्त्तुलीकृत्य पञ्चदिनमलम्बुषरसेन विलोड्य रसक्षयपर्य्यन्तं पुनर्यन्त्रिस्थालीखपात्रे मर्द्दयेत्, ततः चालम्ब्य अलम्बुषरसेनैव मिलायां पिष्ट्वा गुडिकां कारयेत् । तदनन्तरं किं विधेयम् ?—इत्याह, तत् पिण्डमित्यादि ।—ततः कतिपयाङ्गुलवस्त्रखण्डे पिण्डानुरूपं त्रिकटुकं दत्त्वा विस्तार्य तदुपरि अपरवितानि निर्मलवस्त्रखण्डे तं तालीवच्छगुडकं निधाय ततो दृढां पोट्टलिकां बद्ध्वा, घृतपूर्णमार्त्तिकस्थालीपात्रे सूत्रेण दण्डसंलग्नतया दोलापाकविधिना तां पोट्टलीं तत्रारोप्य घृतनिमग्नां कृत्वा पचेत् । पाकज्ञानार्थमाह, यदेत्यादि ।—गुटिका च दृढा भवेदिति ।—गुटिका—पोट्टलिका, तस्या दृढता च दण्डिकतया ज्ञेया । त्रिकटुत्रिफलाचूर्णयोस्तु मिलित्वैव पञ्चगुञ्जेति तत्तुल्यं, प्रातरित्यर्थः । अनुपानमाह, तक्रं स्यादित्यादि ।—अम्लपित्ते तु त्रिकटुचूर्णं परित्यज्य त्रिफलैव तत्तुल्या देया, तथा तक्रञ्च परित्यज्य उष्णजलमेवानुपेयमित्याह, अम्लपित्तोद्भव इत्यादि ।—त्रिफलैव *समा देया इति* ।—त्रिफलैव तत्तुल्या देयेत्यर्थः ; तथा कोष्णजलम् अनुपिबेदिति । वृद्धिक्रममाह, सप्तमे इत्यादि ।—सप्तम इत्यत्र वीप्सा ज्ञेया, तेन सप्तमे सप्तमे दिवसे रक्तिकापरिमाणेन वृद्धिः कार्य्या, माषकमानं यावदयं प्रयोगः कार्य्यः । तेन माषकादूर्द्ध्व

बालुकापूरितस्थाल्यां पिहितायां पुनस्तथा।
सुलिप्तायाञ्च यामैकमधोज्वालां प्रदापयेत्॥
तत आकृष्टताम्रस्य मृतस्य त्विह योजना।
अथ कर्षं गन्धकस्य वह्निस्थलौहपात्रगम्॥
शिलापुत्रेण सम्मर्द्य द्रुतं घृष्टं पुनःपुनः।
कृत्वा देयं मृतं ताम्रं कर्षमानं ततः पुनः॥
रसोऽम्लमर्दितः शुद्धस्तावन्मात्रः प्रदीयते।
ततस्तथैव संमर्द्य पुनराज्यं प्रदापयेत्॥
अष्टबिन्दुकमात्रञ्च मर्दयेन्मूर्च्छितं तथा।
सर्वं स्यात् तत आकृष्य शिलापुत्रादिसङ्गतम्॥
संहृत्याम्लपुरस-प्रसृतेन विलोड़ितम्।
पुनस्तथैव वह्निस्थ-लौहपात्रे विमर्दयेत्॥

---

पुनस्तदुपरि गन्धकचूर्णं देयमित्येवंक्रमेण सर्वाणि तानि ताम्रपत्राणि गन्धकचूर्णसहितानि उपर्य्यधोभावेन निवेश्य, ततोऽन्यशरावेण स्थाल्यन्तर्निवेशयोग्येन तत् ताम्रपुञ्जं पिधाय, तच्छरावप्रान्तञ्च शर्कराखटिकाप्रलेपेन लिप्त्वा तस्य शरावस्योपरिभागे वालुकापूर्णं तत् स्थालीपात्रं कृत्वा शरावेण तस्याः स्थाल्याः मुखं पिधाय तथैव प्रलेपेन लिप्त्वा प्रहरमेकमविच्छेदेनाधो ज्वालां प्रदापयेत्। इति ताम्रमारणम्। ततस्तत् मृतताम्रं स्थाल्याः समाकृष्य चूर्णयित्वा शोधितगन्धकादिभिः सह योजनीयमित्याह,—तत इत्यादि। तत्र योजना कर्त्तव्येत्याह, अथेत्यादि।—अथ ताम्रमारणानन्तरं शोधितगन्धकस्यापरचूर्णं कर्षमेकं ज्वलदङ्गारस्थलौहपात्रे कृत्वा शिलापुत्रेण सम्मर्द्य पौनःपुन्येन घृष्ट्वा द्रवीभूते तस्मिन् तत् मृतताम्रचूर्णं कर्षमानं देयं, दत्त्वा तथैव शिलापुत्रेण घर्षणीयम्। तत पुनरिति।—ततोऽनन्तरं अग्नितापद्रुत एव अस्मिन् रसः पारदोऽपि तावन्मानः कर्षमान एव देयः। पुनस्तेनैव मर्दनीयः, किन्तु शिष्टो रसः अम्लमर्दितः सन् शुद्धः, चाङ्गेरीजम्बीराद्यम्लरसमर्दनाच्च शुद्धः। तदनु अष्टबिन्दुपरिमितं घृतं दत्त्वा पुनर्मर्दयेत् शिलापुत्रेणैव। तथा तेन प्रकारेण सर्वं गन्धकताम्रादिकं संमूर्च्छितमेकीभूतं स्यात्। ततस्तस्माल्लौहपात्रात् निःशेषमाकृष्य तथा शिलापुत्रादिसङ्गतं शिलापुत्रादिघर्षितं

यावद्द्रवक्षयं पश्चादाकृष्य सम्प्रपेषितम्।
अम्लम्बुपरसेनैव गुडकं सम्प्रकल्पयेत्॥
तत्पिण्डं वस्त्रविस्तीर्णे पिण्डे त्रिकटुजे पुनः।
वसनान्तरिते दत्त्वा पोट्टलीं कारयेद्बुधः॥
ततस्तां पोट्टलीमाज्य-मग्नां कृत्वा विधारिताम्।
सूत्रेण दण्डसंलग्नां पाचयेत् कुशलो भिषक्॥
यदा निष्फेनता चाज्ये गुटिका च दृढा भवेत्।
तदा पक्वं समाकृष्य पञ्चगुञ्जातुलाधृतम्॥
त्रिकटुत्रिफलाचूर्णं तुल्यं प्रातः प्रयोजयेत्।
तक्रं स्यादनुपानन्तु अम्लपित्तोच्छ्रये पुनः॥
त्रिफलैव समा देया कोष्णं वारि पिबेदनु।
सप्तमे दिवसे रक्ति-वृद्धिस्तावत्तु माषकम्॥

---

गुडकमपि मर्तं संद्राय वर्तुलीकृत्य पलदशैनाम्लम्बुपरसेन विलोड्य रसचयपर्य्यन्तं पुनर्वह्निस्थलौहपात्रे मर्दयेत्, तत आलभ्य अम्लम्बुपरसेनैव मिश्रायां पिष्टा गुडिकां कल्पयेत्। तदनन्तरं किं विधेयम्?—इत्याह, तत् पिण्डमित्यादि।—ततः कतिपयाङ्गुलवस्त्रखण्डे पिण्डानुरूपं त्रिकटुकं दत्त्वा विस्तार्य तदुपरि अपरवितताति निर्मलवस्त्रखण्डे तं ताम्रौषधगुडकं निधाय ततो दृढां पोट्टलिकां बद्ध्वा, घृतपूर्णमार्त्तिकस्थालीपात्रे सूत्रेण दण्डसंलग्नतया दोलापाकविधिना तां पोट्टलीं तन्मध्ये घृतनिमग्नां कृत्वा पचेत्। पाकमानार्थमाह, यदेत्यादि।—गुटिका च दृढा भवेदिति।—पुटिका—पोट्टलिका, तस्या दृढता च दण्डिकया ताड्य ज्ञेया। त्रिकटुत्रिफलाचूर्णयोरेव मिलितैव पञ्चगुञ्जेति तावत्तुल्यं, प्रातरित्यर्थमपरे। अनुपानमाह, तक्रं स्यादित्यादि।—अम्लपित्ते॥ त्रिकटुचूर्णं परित्यज्य त्रिफलैव तावत्तुल्या देया, तथा तक्रञ्च परित्यज्य उष्णजलमेवानुपेयमित्याह, अम्लपित्तोच्छ्रये इत्यादि।—त्रिफलैव समा देया इति।—त्रिफलैव तावत्तुल्या देयेत्यर्थः; तथा कोष्णजलम् अनुपिबेदिति। वृद्धिक्रममाह, सप्तमे इत्यादि।—सप्तम इत्यत्र वीप्सा ज्ञेया, तेन सप्तमे सप्तमे दिवसे रक्तिकाप्रमाणेन वृद्धिः कार्य्या, माषकमानं यावदयं प्रयोगः कार्य्यः। तेन माषकादूर्द्ध्व

यावत् प्रयोगस्तथैवापकर्षः पुनर्भवेत् ।
योगोऽयं ग्रहणीयक्ष्म-पित्तशूलाम्लपित्तहा ॥
रसायनञ्चैतदिष्टं गुदकीलादिनाशनम् ।
न चात्र परिहारोऽस्ति विहाराहारकर्मणि ॥ ५७ ॥

इति ताम्रयोगः ।

शिलाजतुप्रयोगः,—

हेमाद्याः सूर्य्यसन्तप्ताः स्रवन्ति गिरिधातवः ।
जत्वाभं मृदुमृत्स्नाच्छं यन्मलं तच्छिलाजतु ॥
अनम्लञ्चाकषायञ्च कटुपाकि शिलाजतु ।
नात्युष्णशीतं धातुभ्यश्चतुर्भ्यस्तस्य सम्भवः ॥
हैम्नोऽथ रजतात् ताम्राद्वरं कृष्णायसादपि ॥

वृद्धिर्न कर्त्तव्येत्यर्थः । येनैव क्रमेण वृद्धिः कार्य्या तेनैव क्रमेण ह्रासोऽपीत्याह,—तथैवापकर्षः पुनर्भवेदिति । केचित्तु वृद्धवैद्याः स्तिफलाव्यतिरेकेण विविरक्तिकमिदमौषधं मधुना समालोड्य ददति ; तेनैव महान् विशेषो दृश्यते । गुदकीलादिनाशनमित्यादिशब्दात् पाण्डुरोगादयः ॥ ५७ ॥

इति ताम्रयोगः ।

इदानीं चरकोक्तशिलाजतुरसायनमाह, हेमाद्या इत्यादि ।—गिरिगता धातवो गिरिधातवः, हेमाद्या इति तद्विशेषणम् । आद्यशब्दात् लौहरूप्यताम्रत्रपुसीसगैरिकाञ्जन,शिलादीनामपि ग्रहणम् । अत एवोक्तं हारीते-—"सुवर्णरूप्यत्रपुसीसताम्रलौहादिकञ्चापि मनःशिला च" इत्यादि । हेमादिशब्देनेह हेमादि सम्भवस्थानभूताः शिला उच्यन्ते । यतोऽसाधात् सुवर्णादिभ्य एव शिलाजतु भवति । शिलाजतुसामान्यलक्षणमाह, जत्वाभमित्यादि ।—मृत्स्न—मसृणम्, अच्छं—स्वच्छम् । अनम्लमित्यादि विशिष्टप्रतिषेधस्य शेषाद्यनुज्ञाफलकं, तस्मादरसचतुष्टयस्यात्र विधिः । धातुभ्यश्चतुर्भ्य इति ।—रसायनाधिकारात्, तेन सुवर्णरूप्यत्रपुसीसेत्यादिना हारीतेन यदेव विविधधातुसम्भवत्वमुक्तं तेन समं न विरोधः । नात्युष्णशीतमिति ।—शीतोष्णयोर्बलवत्त्वं निषिध्यते,तेन किञ्चिदुष्णं किञ्चिच्छीतलं वा शिलाजतु भवतीत्यर्थः । ते के चत्वारो धातवः ?—इत्याह हैम इत्यादि । क्रमेण हेमादि-

मधुरश्च सतिक्तश्च जवापुष्पनिभश्च यत्।
विपाके कटु तिक्तश्च तत् सुवर्णस्य निःस्रवम्॥
राजतं कटुकं श्वेतं स्वादु शीतं विपच्यते॥
ताम्राद्बर्हिणकण्ठाभं तीक्ष्णोष्णं पच्यते कटु॥
यत्तु गुग्गुलुसङ्काशं तिक्तकं लवणान्वितम्।
विपाके कटु शीतञ्च सर्वश्रेष्ठं तदायसम्॥
गोमूत्रगन्धः सर्वेषां सर्वकर्मसु यौगिकः॥
रसायनप्रयोगेषु पश्चिमन्तु विशिष्यते।
यथाक्रमं वातपित्ते श्लेष्मपित्ते कफे त्रिषु॥
विशेषेण प्रशस्यन्ते मला हेमादिधातुजाः॥ ५८॥

---

सम्भवानां चतुर्णां लक्षणमाह, मधुरमित्यादि।—चकारात् स्निग्धत्वादिकं बोद्धव्यम्। यदाह हारीतः,—"स्निग्धं घनं काञ्चनगैरिकाभं सतिक्तशीतं मधुरं सुवर्णात्" इति। अत्र शिलाजतुसामान्यगुणकथने अम्लकषायव्यतिरिक्तरसचतुष्टयमुक्तं, तथा कटुपाकीत्यप्युक्तं, तेन विशेषगुणकथने पुनर्यो रसोऽभिधीयते स उत्कर्षवानिति ज्ञेयः, सामान्यगुणोक्तरसोऽनुक्तोऽपि लभ्यत एव। यत्तु रौप्यभवे कटुपाकविरुद्धो मधुरपाक उक्तः, स उत्सर्गापवादन्यायेन समर्थनीयः। अन्ये तु—स्वादु विपच्यत इति, अस्य मधुरविदग्धं पच्यते इत्यर्थं, तेन कटु पच्यते इत्याहुः; अत एव हारीते विदाहित्वमस्य यदुक्तं तदप्युपपद्यते, यथा—"रौप्याकरोत्थन्तु सपाण्डुवर्णं सक्षारकं तत् कटुकं विदाहि" इति युक्तिमुपवर्णयन्ति। अत्र वीर्ये ताम्रभवस्योष्णमुक्तं, तथाऽऽयससामान्ये शीतमुक्तं, तेन नात्युष्णशीतवीर्यतयोः सामान्यगुणोक्तयोरवकाशो नास्तीति केचिदाहुः, तन्न युक्तम्; यतो नात्युष्णशीतपदेन नात्युष्णशीतत्वं विधीयते, किन्तु शीतोष्णवीर्ययोरत्यन्तभावो निषिध्यते, तेन किञ्चिच्छिलाजतु शीतम् उष्णञ्च किञ्चिच्छिलाजतु भवतीति प्रागेव व्याख्यातम्। ताम्रभवशिलाजतुगुणकथने तिक्तोष्णमित्यत्र तीक्ष्णोष्णमिति केचित् पठन्ति, तन्मते—ताम्रजे यद्यपि रसो नोक्तस्तथापि सामान्योक्तमधुररसस्यैव सानुभवरसभावेन ज्ञेयमित्यर्थमाहुः। पश्चिमम् इत्यायसम्। यथाक्रममिति।—वातपित्ते सौवर्णं, श्लेष्मपित्ते रौप्यजं, कफे ताम्रजं, त्रिदोषजे लौहजमित्यर्थः॥ ५८॥

लौहकिट्टायते वह्नौ विधूमं दह्यतेऽम्भसि ।
तृणाद्यग्रे कृतं श्रेष्ठमधो गलति तन्तुवत् ॥
मलिनं यद्भवेत् तच्च चालयेत् केवलाम्भसा ।
लौहपात्रेषु विधिना ऊर्द्ध्वीभूतञ्च संहरेत् ॥
वातपित्तकफघ्नैस्तु निर्य्यूहैस्तत् सुभावितम् ।
वीर्य्योत्कर्षं परं याति सर्वैरेकैकशोऽपि वा ॥
प्रक्षिप्योद्धृतमावाप्नं पुनस्तत् प्रक्षिपेद्रसे ।
कोष्णे सप्ताहमेतेन विधिना तस्य भावना ॥

---

श्रेष्ठशिलाजतुनो लक्षणमाह, लौहकिट्टायत इत्यादि।—यत् शिलाजतु वह्नौ विगतधूमं सत् संदह्यते, लौहमलवच्च भवति तच्छ्रेष्ठम्। परीक्षान्तरमाह, अम्भसीत्यादि।—अम्भसि कृतं जले क्षिप्तं सत् यदि प्रथमतः तृणाग्रे—प्लवते, ततः तन्तुवत् गलति—अधस्तात् तन्तुवद्गच्छति, तत् शिलाजतु श्रेष्ठमित्यर्थः। शिलाजतुशोधनमाह, मलिनमित्यादि।—अम्भसा उष्णोदकेन। लौहपात्रेषु—भाजनाकारलौहपात्रेषु; विधिनेति।—हारीतोक्तशिलाजतुशोधनविधिना। ऊर्द्ध्वीभूतं—सरवदूर्द्ध्वमुत्थितं यत् तत्, संहरेत्—संगृह्णीयात्, काचादिनिर्मलपात्रे स्थापयेदित्यर्थः। तत्रायं शोधनविधिः,—प्रथमं केवलं शिलाजतु जले धौतं कृत्वा तदनु कीटादिदुष्टौषधिदोषविनाशाय अगुरुगुग्गुलुमरीचनिम्बपत्रयवगुडूचीकृतैर्धूपयित्वा, तदनु घृष्टं चूर्णीकृत्य, तदनु भाजनाकारलौहपात्रे कृत्वा दशमूलकषायं त्रिफलाक्वाथं वा केवलोष्णोदकं वा प्रक्षिप्य विमर्द्य लौहमुषलिकया तरलीकृत्य प्रचण्डातपे स्थापनीयम्। तत्र च प्रचण्डातपावस्थानेन सरवदूर्द्ध्वं यदुत्तिष्ठति तत् पुनर्गृहीत्वा काचादिनिर्मलपात्रे स्थाप्यम्; एवमेतत् शिलाजतु भावनायां योग्यम्; उक्तं हि हारीते—"तदाहरयित्वा क्रमशो विभज्य देशे शुभे मङ्गलसिद्धियुक्ते। तिथौ च पुण्ये सुदिने च शुक्ले नक्षत्रयोगेन शिवेन चापि॥ लौहाढकीनिम्बगुडूचीसर्पिर्यवैर्धूपवत् परिधूपयेच्च। सत्त्वाभिकाकीटपतङ्गदग्धदुष्टौषधीदोषविनाशनं तत्॥" इति। इदानीं परकीयभावनाविधिमाह, वातपित्तेत्यादि।—निर्य्यूहः,—क्वाथः। सुभावितमिति—सप्ताहम्। सर्वैरिति—वातघ्नादिक्वाथैः। भावनातः किं स्यात्? इत्याह—वीर्य्योत्कर्षमित्यादि। प्रक्षिप्येत्यादि।—रसे वातघ्नादिक्वाथे कोष्णे शिलाजतु प्रक्षिप्य यथादावाप्नं तपने शुष्कं सत् पुनरपि तद्रसे प्रक्षिपेत्। आप्नं—शुष्कं, "शुष्के वानमुभे त्रिषु" इत्य-

तुल्यं गिरिजेन जले चतुर्गुणे भावनीयधं क्काथ्यम्।
ततः क्काथे पादांशे पूतोष्णे प्रक्षिपेद्गिरिजम्।
तत् समरसतां यातं संशुष्कं प्रक्षिपेद्रसे भूयः॥
पूर्वोक्तेन विधानेन लौहैश्चूर्णीकृतैः सह।
तत् पीतं पयसा दद्याद्दीर्घमायुः सुखान्वितम्।
जराव्याधिप्रशमनं देहदार्ढ्यकरं परम्॥
मेधास्मृतिकरं धन्यं क्षीराशी तत् प्रयोजयेत्।
प्रयोगः सप्तसप्ताहास्त्रयश्चैकश्च सप्तकः॥
निर्दिष्टस्त्रिविधस्तस्य परो मध्योऽवरस्तथा।
मात्रा पलन्त्वर्द्धपलं स्यात् कर्षन्तु कनीयसी॥
शिलाजतुप्रयोगेषु विदाहीनि गुरूणि च।
वर्जयेत् सर्वकालञ्च कुलत्थान् परिवर्जयेत्॥

---

म०। इदानीं भावनाद्रव्यमानादिकमाह, तुल्यमित्यादि।—सम्यक्करसं।—गिरिजेन शिलाजतुना तुल्यं भावनीयं द्रव्यमूत्रादिद्रव्यं क्काथ्यम्। तत् समरसतां यातमिति।—तच्छिलाजतुक्काथेन सह समरसतामिति आभीक्ष्ण्येन एकीभूय यत् शुष्करसतां गतमित्यर्थः। एवं शुद्धं भावितञ्च शिलाजतु लौहचूर्णेन सार्द्धमेकीकृत्य दुग्धेन पातव्यमित्याह, पूर्वोक्तेनेत्यादि।—चरकस्य।—पूर्वोक्तेनेति चरक एव भावयेदिति रसायनपादे पूर्वोक्तो विधिः। अत्र भावनार्थं शिलाजतुलौहचूर्णयोः समत्वं कथिताह, तत्र; शिलाजतुनोऽधिकृतत्वात् प्राधान्यात् तदपेक्षयैव पादिकस्य लौहचूर्णस्य मान्यत्वात्; क्षारीतेऽप्येवमेवोक्तम्। सप्तभिरूर्ध्वमनुर्दमासैरित्यादि। क्षीराशी—क्षीरपानमात्राभोजनकारी। इदानीमेतत्प्रयोगस्य कालभेदेन त्रैविध्यमाह, प्रयोग इत्यादि।—सप्तसप्ताहाः,—एकोनपञ्चाशद्दिनानि सप्तसप्ताहप्रयोग इत्यर्थः; एवं त्रयश्चैकश्च सप्तक इति बोध्यम्। प्रत्येकार्थे त्रिविधां मात्रामाह, मात्रेत्यादि।—अस्मिन् प्रयोगे वर्ज्यमाह, शिलाजतुप्रयोगेष्वित्यादि।—विदाहीनि—वंशकरीरमरिचराजिकादीनि। शिलाजतुप्रयोगे गुरुद्रव्यनिषेधेऽपि गुरुक्षीरादिप्रयोगाभिधानम् तत्पथ्यत्वादत्रापि न विरुद्धमिति। कैश्चित्तु कुलत्थानिति—कुलत्थादीन्, तेन काकमाची-कपोतयोरपि ग्रहणम्। यतो हि वाग्भटे—"कुलत्थं काकमाचीञ्च कपोतञ्च सदा त्यजेत्" इत्याहुः। सर्वकालमिति—यावदायु

पयांसि शुक्लानि रसाः सयूषा-
स्तोयं समूत्रं विविधाः कषायाः ।
आलोड़नार्थे गिरिजस्य शस्ता-
स्ते ते प्रयोज्याः प्रसमीक्ष्य कार्य्यम् ॥
चरकोक्तशिलाजतुविधानं सोपस्कारमेतत् ॥ ५८ ॥

शिवागुड़िका—

काले तु रवितापाढ्ये क्वाथयसजं शिलाजतुप्रवरम् ।
त्रिफलारससंयुक्तं त्र्यहञ्च शुष्कं पुनः शुष्कम् ॥
दशमूलस्य गुडूच्या रसे बलायास्तथा पटोलस्य ।
मधुकरसैर्गोमूत्रे त्र्यहं त्र्यहं भावयेत् क्रमशः ॥
एकाहं क्षीरेण तु तत् पुनर्भावयेच्छुष्कम् ।
सप्ताहं भाव्यं स्यात् क्वाथेनैषां यथालाभम् ॥

---

यतन्हिता गुणांस्तिष्ठन्ति । केचित्तु—यावज्जीवनं कुलत्थवर्जनमाहुः । कुलत्थस्य सर्वकालवर्जने उपपत्तिश्चरकेणैव उक्ता, यथा—"ते ह्यत्यन्तविरुद्धत्वादश्मनो भेदनाः परम् । लोके दृष्टास्ततस्तेषां प्रयोगः प्रतिषिध्यते ॥" इति । यैर्द्रव्यैरालोड्य शिलाजतु पेयं तान्याह, पयांसीत्यादि ।—चरकस्य ।—सोपस्कारमिति ।—चरके शिलाजतु परीक्षादिकं प्रोक्तम्, अत्र पुनः "लोहकिट्टायते" इत्यादिना तदप्युक्तमिति सोपस्कारत्वम् ॥ ५८ ॥

चरकोक्तशिलाजतुविधिमभिधाय शैवलन्तोक्तप्रसिद्धशिलाजतुप्रयोगं शिवगुडिकामाह, काल इत्यादि ।—रवितापाढ्ये इति विशेषणाद् ग्रीष्म इति यावत् ; अन्ये तु शरदमित्याहुः । शिलाजतुनोऽत्र षोडशपलमात्रा, यदाह च "पलानि दश षट् च" इति ; तेन तत्प्रमाणम् मिलितत्रिफलाद्रव्यं गृहीत्वा क्वाथयित्वा त्र्यहं भावना, कर्त्तव्येत्याह, त्रिफलेत्यादि ।—त्रिफलारससंयुक्तं सच्छुष्कं पुनस्त्रिफलारससंयुक्तं तच्छुष्कम्, एवं त्र्यहं भावयेदित्यर्थः । अत्र "तुल्यं गिरिजेन जले" इत्यादि पूर्वोक्तवचनानुसारेण त्रिफलाक्वाथं कृत्वा त्र्यहं भावना कार्य्येत्यर्थः । एवं दशमूलक्वाथादिभिर्गोमूत्रान्तैरपि त्र्यहं त्र्यहं क्रमेण भावयेदित्याह—दशमूलस्येत्यादि । क्षीरेण पुनरेकाहमिति—क्षीरेण एकाहमेव भावयेदित्यर्थः । वक्ष्यमाणकाकोल्यादिक्वाथेन पुनः सप्ताहं भावना कर्त्तव्येत्याह,—सप्ताहं भाव्यं स्यादिति ।

काकोल्यौ द्वे मेदे विदारीयुग्मं शतावरी द्राक्षा।
ऋद्धियुगर्षभवीरामुण्डितिका जीवकोंऽशुमत्यौ च॥
रास्नापुष्करचित्रकदन्तीभकणार्कलिङ्गचव्याब्दाः।
कटुका शृङ्गीपाठे तानि पलांशिकानि कार्याणि॥
जलद्रोणे साधितानां रसेन पदांशिकेन भाव्यानि।
गिरिजस्यैवं भावितशुद्धस्य पलानि दश षट् च॥
द्विपलञ्च विश्वमागधिकाकटुकर्कटाख्यमरिचानाम्।
चूर्णं पलञ्च विदार्यास्तालीशपलानि चत्वारि॥
षोडश सितापलानि चत्वारि घृतस्य माक्षिकस्याष्टौ॥

---

दशानामिति।—वक्ष्यमाणकाकोल्यादीनाम्। यथालाभमिति वचनात् इन्द्रयवकटु-रोहिण्यादिव्यतिरेकेणापि। विदारीयुग्ममिति—विदारी क्षीरविदार्यौ। क्षीर-विदार्याश्च लक्षणं—"क्षीरशुक्ला दीर्घकन्दा चातिमधुरा क्षीरविदारी" इति भद-न्तकिम्बीलगन्धतैलव्याख्यायां गदाधरेणोक्तम्; सा हि सुगन्धा दुर्गन्धा च। ऋद्धियुगं—ऋद्धिर्वृद्धी। वीरा—माषोति त्रिविक्रमः, अन्यत्रमतमिति रत्नप्रभा। जीवक इति।—जीवकमुखजीवके, अंशुमत्यौ—शालपर्णीपृश्निपर्ण्यौ; इभकणा—गज-पिप्पली; कटुकी—कटुरोहिणी; एतान्यष्टाविंशतिद्रव्याणि लिखितानि। वाग्भटे तु रसायनतन्त्रपठितब्रह्मरसायनपाठे—ऋद्धिऋषभकादिषड्द्रव्याणि पठ्यन्ते; तद्-यथा—"ऋद्धिऋषभकौ मुण्डिरीन्द्रयवौ कटुरोहिणी कर्कटशृङ्गी च" इति। तदेव-मुभयाचार्यप्रामाण्यादुभयथैव प्रयोगप्रकृतिरभ्युपेया। अतः पिप्पल्यादिवत् सर्वत्रविवक्षाया यथालाभवचनादेतानि षोडशद्रव्याणि न रक्षणीयमिति केचित्। एवामष्टाविंशतिद्रव्याणां प्रत्येकं पलिकानां क्वाथनार्थं द्रोणजलद्रोणसाधितमेकक्वाथ-द्रोणमध्यात् समभागविभक्ते सप्तदिनानि भावना सप्त कर्तव्याः; किन्तु सप्तदिने क्वाथव्याप्तता भवति। ततश्चैषामष्टाविंशतिद्रव्याणां प्रत्येकं पलिकानां सप्तदिन-विभागेन पलचतुष्टयं लिखित्वा ग्राह्यं, तेन प्रतिदिनं पलचतुष्टयविभागेन काकोल्यादीनां प्रत्येकं माषा ८, रक्तिका २ ग्राह्यम्, एवं जलद्रोणस्यापि सप्त-दिनविभागेन दैनिकजलशराव ८, पल १, माषा ८, रति १, जल पादावशिष्टतया ग्राह्य शरा ९, पल २, कर्ष १, माषा २; अस्मिन् क्वाथे पूतोष्णे प्रतिदिनं त्रिफला-चूर्णभावना, एवं सप्ताहं कर्तव्यम्। दश षट् चेति।—षोडशेत्यर्थः। यद्यपि निर्देशस्य

तिलतैलस्य द्विपलं चूर्णाद्द्विपलानि पञ्चानाम् ।
त्वक्क्षीरीपत्रलवङ्गनागैलानां मिश्रयित्वा तु ।
गिरिजस्य षोड़शपलैर्गुड़िकाः कार्य्यास्ततोऽक्षसमाः ।
ताः शुष्का नवकुम्भे जातीपुष्पाधिवासिते स्थाप्याः ॥
तासामेका काले भक्ष्या पेयाऽपि वा सततम् ॥
क्षीररसदाड़िमरसाः सुरासवं मधु च शिशिरतोयानि ।
आलोड़नानि तासामनुपाने वा प्रशस्यन्ते ॥
जीर्णे लघ्वन्नपयोजाङ्गलरसनिर्य्यूहयूषभोजी स्यात् ।
सप्ताहं यावदतःपरं भवेत् सर्वं सामान्यम् ॥
भुक्ताऽपि भक्षितेयं यदृच्छया नावहेद्भयं किञ्चित् ।
निरुपद्रवा प्रयुक्ता सुकुमारनरैः कामिभिश्चैव ॥
संवत्सरप्रयुक्ता हन्त्येषा वातशोणितं प्रबलम् ।
बहुवार्षिकमपि गाढ़ं यक्ष्माणमथाढ्यवातञ्च ॥
ज्वरयोनिशुक्रदोषप्लीहार्शःपाण्डुग्रहणीरोगान् ।
व्रध्नवमिगुल्मपीनसहिक्काकासारुचिश्वासान् ॥
जठरं श्वित्रं कुष्ठं पाण्डुं क्लैव्यं मदं क्षयशोषम् ।

---

समप्रधानत्वात् त्र्यूषणादीनां मरिचान्तानां मिलितैव पलद्वयं युज्यते, तथापि वाग्भटमतानुरोधात् प्रत्येकमेव द्विपलं ग्राह्यम्। पञ्चानामिति।—त्वक्क्षीर्य्याद्येलान्तानां प्रत्येकमर्द्धपलं वाग्भटदर्शनादेव। त्वक्क्षीरी—वंशलोचना। गिरिजस्य षोड़श-पलैर्मिश्रयित्वेति योज्यम्। इह सर्वत्रैव शिलाजतुप्रयोगेषु कर्त्तव्येषु प्रथमं शोधनं विधाय तिलकघृतं द्व्यहं त्र्यहं वापि यवागूपयमानार्थं दातव्यं, यथा स्निग्धो भवति; तदुक्तं तत्त्वप्रदीपे—"संशुद्धकायो विमलेन्द्रियश्च प्रशस्तनक्षत्रमुहूर्त्तयोगी। पिबेद्-घृतं तिलकषायसिद्धं द्व्यहं त्र्यहं वापि यवागूरूपम्॥" इति; "यथा हि सर्वं कषाया-न्ताऽयं मध्ये न हन्याद्बहुधाप्रयुक्तम्। पित्ताधिकस्यापि शिलाजमेव देहे न हन्यात् बलवर्णदायि" ॥ इति च। अक्षसमा—अक्षतुल्यमात्रा, एतत्तदनुसारेण मध्यमाधमपुरुषापेक्षया मात्रोह्या। यदृच्छया इच्छानियमेन; तेन कदाचित् भुक्ताऽपि भक्षिता सती विकारं न जनयेदित्यर्थः। आढ्यवात—ऊरुस्तम्भः। मदनहेतुमक्लैब्यद्वयपरिहारार्थं प्रार्थ्यं क्लैब्यमित्युभयपदोपादानं बोध्यम्। यद्यपि

उन्मादापस्मारौ वदनाक्षिशिरोगदान् सर्वान् ॥
आनाहमतीसारं सासृग्दरं कामलाप्रमेहांश्च ।
यक्ष्मार्बुदानि विद्रधिभगन्दरं रक्तपित्तञ्च ॥
प्रतिकार्श्यमतिस्थौल्यं स्वेदमथ श्लीपदञ्च विनिहन्ति ।
दंष्ट्राविषं समौलं गराणि च बहुप्रकाराणि ॥
मन्त्रौषधिप्रयोगान् विप्रयुक्तान् भौतिकांस्तथा भावान् ।
पापालक्ष्मीं चेयं शमयेद्गुड़िका शिवा नाम्ना ॥
बल्या वृष्या धन्या कान्तियशःश्रीप्रजाकरी चेयम् ।
दद्यान्नृपवल्लभतां जयं विवादे सुखस्था च ॥
श्रीमान् प्रकृष्टमेधाः स्मृतिबुद्धिबलान्वितोऽतुलशरीरः ।
पुष्टोजोऽतिविमलेन्द्रियतेजोबलसम्पदुपेतः ॥
वलीपलितरोगरहितो जीवेच्छरदां शतद्वयं पुरुषः ।
संवत्सरप्रयोगाद्द्वाभ्यां शतानि चत्वारि ।
सर्वामयजित् कथितं मुनिगणभक्ष्यं रसायनरहस्यम् ॥
समुद्रभूतामृतमन्थनोत्थः स्वेदः शिलाभ्योऽमृतवद्गिरेः प्राक् ।
यो मन्दरस्यात्मभुवा हिताय न्यस्तः स शैलेषु शिलाजरूपी ॥
शिवागुड़िकेति रसायनमुक्तं गिरीशेन गणपतये ।
शिववदनविनिर्गता यस्मात्तस्माच्छिवा गुड़िका ॥६०॥

इति शैवासहाशीका शिवागुड़िकेयम्।

इति शिलाजतुविधानम्।

---

...गदीपोन्मत्तस्य जलैक्यमसाध्यत्वेनोक्तं, तथापि प्रयोगमाहात्म्यात्सूचनार्थमिद मुक्तम्। गराणि—संयोगविषाणि, भौतिकान् भावानिति।—भूतजाताः पीडाः। संवत्सरप्रयोगादिति पूर्वेण सम्बध्यते। द्वाभ्यामिति—संवत्सराभ्यामित्यर्थः। शिलाजतुन. (?) मागुत्पत्तिमाह, समुद्रभूतेत्यादि।—अमृतमन्थनोत्थ इति।—अमृतमन्थनसमयज.। हितायेत्यादि।—हिमायेत्यत्र जगतामिति शेषः॥ ६०॥

इति शिवागुड़िका।

इति शिलाजतुविधानम्।

अमृतभल्लातकी—

सुपक्वभल्लातफलानि सम्यग्द्विधा विदार्य्याढकसम्मितानि।
विपाच्य तोयेन चतुर्गुणेन चतुर्थशेषे व्यपनीय तानि॥
पुनः पचेत् क्षीरचतुर्गुणेन
घृतांशयुक्तेन घनं यथा स्यात्।
सितोपलापोड़शभिः पलैस्तु
विमिश्य संस्थाप्य दिनानि सप्त॥
ततः प्रयोज्याग्निबलेन मात्राम्
जयेद्गुदोत्थानखिलान् विकारान्।
कचान् सुनीलान् घनकुञ्चिताग्रान्
सुपर्णदृष्टिं सुकुमारताञ्च॥

---

अमृतभल्लातकीमाह, सुपक्वेत्यादि।—भल्लातकस्येव हारीतोक्तामृतभल्लातकी-घृतोक्तरीत्या व्याख्या ; यथा—"भल्लातकानां पवनोद्धुतानां तथाक्षुतानामिह आढकं स्यात्। तमिष्टकाचूर्णकणैर्विघृष्य प्रक्षाल्य नीरैर्विधिवत् प्रभाते॥ ततः पुन-प्रविदलीकृतञ्च ततः पचेदप्सु चतुर्गुणासु। पादावशिष्टं परिपूतमेतं क्षीरेण तुल्येन पुनः पचेत्तु॥ तत्पादशिष्टं पुनरेव शीतं घृतेन तुल्येन पचेत् सुशीतम्। तदर्द्धया शर्करयावकीर्णं ततः क्षौद्रेणाभ्यधितं विधाय॥ भाण्डे विशुद्धे त्वथ धान्य-राशौ संस्थापयेत् सप्त दिनानि चैव। तस्मात्प्रयोगात् परिजातवीर्यम्—" इत्यादि। अत्र भल्लातकानां चतुःषष्टिपलानि, तदपेक्षया चतुर्गुणं जलं यद्यप्यर्थं द्रव्यद्वैगुण्यात् चतुःषष्टिशरावपरिमितं यद्यपि भवति, तथापि वक्ष्यमाणतन्त्रान्तरीय-वाक्यैकवाक्यतानुरोधात् आढके पलविधया विधाय पलोद्वेखागतत्वेन द्वैगुण्यं विधेयं, तथा क्वचित् पलोद्वेखविधानेऽपि तन्त्रान्तरीयवाक्यैकवाक्यताऽनुरोधात् पलो-द्वेखागते द्रवेऽपि कुडवादिविषयायां द्वैगुण्यं भवति। तथापि चरके अमृतप्राश-चिकित्सिते—"मधुकाष्टपलं द्राक्षाप्रस्थक्वाथ." इत्यादिना यः प्रयोग उक्तः, स जतूकर्णे द्राक्षाप्रस्थः मधुकार्द्धप्रस्थक्वाथ इत्यादि रूपेण पठितः, तेन जतूकर्णे मधुकस्यार्द्धप्रस्थो-द्वेखपाठात् क्वाथद्वैगुण्यमेव जलं भवति, तत्प्रत्ययात् चरकेऽपि मधुकाष्टपलोक्तौ अविहि-तेऽपि क्वाथे कुडवद्वयविषयया क्वाथद्वैगुण्यमेव जलं दीयते। तद्वदत्रापि आढके

जवं हयानाञ्च बलं द्विपानां स्वरं मयूरस्य हुताशदीप्तिम्।
स्त्रीवल्लभत्वं लभते प्रजाश्च नीरोगमब्दद्विशतानि चायुः॥
न चान्नपाने परिहार्य्यमस्ति न चातपे चाध्वनि मैथुने च।
प्रयोगकाले सकलामयानां राजा ह्ययं सर्वरसायनानाम्॥

भल्लातकस्य संशुद्धिः प्रागिष्टचूर्णगुण्डनात्।
घृताच्चतुर्गुणं क्षीरं घृतस्य प्रस्थ इष्यते॥ ६१॥

इति अमृतभल्लातकी।

इति रसायनाधिकारः।

---

पलमितत्वा विधाय द्वैगुण्यं न कार्य्यम्। तदेव तन्त्रान्तरीयवाक्ये यथा—"भल्ला-तकाढकं चूर्णं जलाढकद्वये पचेत्। पादशेषे रसे तस्मिन् दुग्धप्रस्थसमन्विते॥ क्षीराढकं ततो दत्त्वा सितायाः प्रस्थमेव च। तावच्च साधयेद्धीमान् यावल्लेहत्वमागतम्॥ वयःस्थापनं श्रेष्ठं दीपनं कुष्ठनाशनम्। वातपित्तापहं प्रोक्तं वाजीकरणमुत्तमम्॥ अग्निदृष्टिकरश्चैव बलकृत् पुष्टिवर्द्धनम्॥" इति। केचित्तु "क्षीराढकं ततो दत्त्वा" इत्यत्र क्षीरप्रस्थद्वयमिति पठित्वा चास्य पयोभस्य योगान्तरत्वं मन्यमाना, सुपक्वभल्लातकेत्यादि चक्रसंग्रहीतयोगे जलस्य द्वैगुण्यमिच्छन्ति; किन्तु परमेश्वररक्षितादिसंग्रहे क्षीराढकमित्येव पाठो दृश्यते, एकवाक्यता च तदैव सम्पद्यते। द्रवद्वैगुण्यव्यवहारपाठद्वैगुण्येन दृश्यते, तेनाद्यमेव पाठः साधीयान्। हारीतमतन्तु मतान्तरमेवेति व्याख्य, एतच्च परिभाषे इतिकर्तव्यतायाञ्च मतद्वैतान्तरम्। घृताद्यमिति—घृतप्रस्थम्। चतुर्भागावशिष्टं क्वाथमपेक्ष्य घृतस्यार्द्धांशता; एकेन क्वाथेन घृतस्यार्द्धांशं पचेदिति बोध्यम्। क्षीरस्य चातुर्गुण्यं घृतापेक्षया, अत एव वक्ष्यति—"घृताच्चतुर्गुणं क्षीरम्" इत्यादि। क्षीरचतुर्गुणेनेति।—चतुर्गुणेन क्षीरेणेत्यर्थः। पूर्वनिपात अव्यनियमात्। ततश्च युक्तेनेति न पाठः, सम्बन्धाभावात्। ततश्च घृतं पक्त्वा पूत्वा च शर्कराप्रक्षेप इत्यर्थः; किन्तु केचिदपि पच्यते, तदा क्वाथशर्करादिकमेकीकृत्य सर्वं पक्तव्यम्॥ ६१॥

इत्यमृतभल्लातकी।

इति रसायनाधिकारः।

---

# अथ वृष्याधिकारः।

पिप्पलीलवणोपेतौ वस्ताण्डौ क्षीरसर्पिषा।
साधितौ भक्षयेद् यस्तु स गच्छेत् प्रमदाशतम् ॥ १ ॥
वस्ताण्डसिद्धे पयसि भावितानसकृत् तिलान्।
यः खादेत् स नरो गच्छेत् स्त्रीणां शतमपूर्ववत् ॥ २ ॥
चूर्णं विदार्याः सुकृतं स्वरसेनैव भावितम्।
सर्पिः क्षौद्रयुतं लीढ्वा शतं गच्छेद्वराङ्गनाः ॥
एवमामलकं चूर्णं स्वरसेनैव भावितम्।

---

स्वस्थस्यौजस्करसामान्याद्रसायनानन्तरं वाजीकरणमुच्यते। वाजीकरणशब्दार्थस्तु चरकेणोक्तो यथा—"येन नारीषु सामर्थ्यं वाजिवल्लभते नरः। व्रजेच्चाभ्यधिकं येन वाजीकरणमेव तत् ॥" इति। व्रजेच्चाभ्यधिकमिति—पुनःपुनर्गच्छेत्। अव्यक्त इति पाठे—नारीषु पुरुष येन अव्यक्त इत्यर्थः। शब्दसिद्धिस्तु पृषोदरादित्वात्। अन्ये तु—वाजः शुक्रं सोऽस्यास्तीति वाजी, अवाजो वाजी क्रियते येन तद्वाजीकरण-मित्याहुः, किंवा वाजः,—मैथुनम्; उक्तं हि हारीते—"वाजी नाम प्रकाशत्वात् तच्च मैथुनसञ्ज्ञितम्। वाजीकरणसंज्ञाभिः पुंस्त्वमेव प्रचक्षते ॥" तच्च त्रिधा; यदुक्तं चरके—"शुक्रस्रुतिकरं किञ्चित् किञ्चिच्छुक्रविवर्द्धनम्। स्रुतिवृद्धिकरं किञ्चित् त्रिविधं वृष्यमुच्यते ॥" यथा—कामिनीस्पर्शादिकं स्रुतिकरं, क्षीरादि वृद्धि-करं, माषादि स्रुतिवृद्धिकरमिति। वृष्ययोगानाह, पिप्पलीत्यादि।—सुश्रुतस्य।—तत्र पिप्पलीलवणयोः संस्कारत्वादल्पमानता। वस्ताण्डौ—छागाण्डकोषौ। क्षीर-सर्पिषा—क्षीरोत्थसर्पिषा, न तु क्षीरस्य घृतस्य चैकत्वभावः, क्षीरपक्वलवणस्य संयोग-विरुद्धत्वात्। प्रमदाशतमिति—वनिताबहुत्वोपलक्षणम्। भक्षणप्रकारो यथा—छागाण्डद्वयं गर्त्ते दत्त्वा उत्क्षिप्य क्षीरोत्थघृतेन भर्जयित्वा अनुरूपसैन्धवपिप्पली-चूर्णाभ्यां सत्कार्यं सम्प्रयोज्यम् ॥ १ ॥

वस्ताण्डसिद्धे इत्यादि।—क्षीरपरिभाषया वस्ताण्डेन क्षीरसाधनं, तेन भावि-तान्। यद्यपि चक्राधिकमांसेत्यादिना वस्तमांसस्य क्षीरेण सह विरोधो दर्शितस्तथापि तत्सामान्यवचनम्, इदं पुनरपवादरूपं विशिष्टवस्ताण्डविषयतया न विरोधमावहति। असकृदिति—बहुधा; अपूर्ववदिति—अकृतपूर्वस्त्रीसङ्गमम् ॥ २ ॥

चूर्णमित्यादि।—सुश्रुतस्य।—स्वरसोऽपि विदार्या एव। एवमित्यादि।—अत्र स्वरसभावितस्याप्युक्तत्वात् एवमित्यतिदेशस्य वैयर्थ्यं स्यात्, तेन विदारीचूर्ण-

शर्करामधुसर्पिर्भिर्युक्तं लीढ्वा पयः पिबेत्।
एतेनाशीतिवर्षोऽपि युवेव परिहृष्यति ॥ ३ ॥
विदारीकन्दकल्कन्तु घृतेन पयसा नरः।
उडुम्बरसमं खादन् वृद्धोऽपि तरुणायते ॥ ४ ॥
स्वयंगुप्तेक्षुरकयोर्बीजचूर्णं सशर्करम्।
धारोष्णेन नरः पीत्वा पयसा न क्षयं व्रजेत् ॥
उच्चटाचूर्णमप्येवं क्षीरेणोत्तममुच्यते।
शतावर्य्युच्चटाचूर्णं पेयमेवं सुखार्थिना ॥
कर्षं मधुकचूर्णस्य घृतक्षौद्रसमन्वितम्।
पयोऽनुपानं यो लिह्यान्नित्यवेगः स ना भवेत् ॥ ५ ॥
गोक्षुरकः क्षुरकः शतमूलीवानरिनागबलाऽतिबलाय।
चूर्णमिदं पयसा निशि पेयं यस्य गृहे प्रमदाशतमस्ति ॥
घृतभ्रष्टो दुग्धमाष-पायसो वृष्य उत्तमः ॥ ६ ॥

---

वम् चौद्रघृताभ्यामामलकचूर्णस्य तत्स्वरसभावितस्य प्रयोग इति कश्चित्; तेन चामलकचूर्णस्य द्विधा प्रयोगः; एकः घृतक्षौद्राभ्याम्, अन्यश्च शर्करामधुघृतपयोऽनुपानेनेति। अन्ये तु—एवमित्यतिदिशः शुक्रलत्वविधानार्थमित्याहुः ॥ १ ॥

विदारीत्यादि।—सुश्रुतस्य।—अत्र घृतेनेत्यत्र घृतेनेति पाठे—केवलं जलप्रतिनिधर्थः। खादन्नित्यत्र पीत्वेति च; तथैव सुश्रुतदर्शनात् ॥ ४ ॥

स्वयंगुप्तेत्यादि।—सुश्रुतस्य।—उच्चटेत्याद्यपि तस्यैव। सुखार्थिनेत्यत्र बलार्थिनेति सुश्रुते पठ्यते। एवमित्यनेन पयसेति बोध्यते। कर्षमित्यादि।—चरकस्य।—मधुक—यष्टिमधु। नित्यवेग इति—नित्यशक्तवेगाभिभूतः ॥ ५ ॥

गोक्षुरक इत्यादौ।—क्षुरकः,—कोकिलाक्ष; वानरी—शूकशिम्बी। शतमूली च वानरी चेति समाहारद्वन्द्वः; अत एकवचनान्तः पाठ एव साधु। एवां क्षुरकगोक्षुरवानरीणां फलबीजं ग्राह्यम्। यदुक्तमष्टाङ्गहृदये—"बीजकक्षुरकगोक्षुरकपिकच्छुफलवरीकुम्भीबलाचूर्णमसतेन। पयसा रात्रिसमये—" इत्यादि।—अत्र कुम्भी—गौरसतण्डुला। घृतेत्यादौ।—माषपायसो—माषविदलैर्दुग्धेन कृतः पायसः, स च घृतभ्रष्टो घृतेन सन्तलितः ॥ ६ ॥

दध्नः सरं शरच्चन्द्र-सन्निभं दोषवर्जितम्।
शर्कराचौद्रमरिचैः तुगाचौर्य्या च बुद्धिमान्॥
युक्त्या युक्तं ससूक्ष्मैलं नवे कुम्भे शुचौ पटे।
मार्जिते प्रक्षिपेच्छीते घृताढ्यं षष्टिकौदनम्॥
तदद्यादुपरिष्टाच्च रसालां मात्रया पिबेत्।
वर्णस्वरबलोपेतः पुमांस्तेन वृषायते॥ ७॥
चार्द्राणि मत्स्यमांसानि शफरीश्चाज्यभर्जिताम्।
तप्ते सर्पिषि यः खादेत् स गच्छेत् स्त्रीषु न क्षयम्॥ ८॥

नारसिंहचूर्णम्—

शतावरीरजःप्रस्थं प्रस्थं गोक्षुरकस्य च।
वाराह्या विंशतिपलं गुडूच्याः पञ्चविंशतिः॥

दध्न इत्यादि।—चरकस्य।—दोषवर्जितमिति—मलिनत्वादिदोषवर्जितम्। युक्त्या युक्तमिति।—यथाऽतिमाधुर्य्यं न स्यात्, कटुत्वचाधिक्यं न भवति, तथा शर्करामरिचादि योज्यमित्यर्थः। मार्जितमिति पाठे—पटे घृष्टम्। तमिति—षष्टिकौदनम्। निश्चलस्तु—"मार्जिते प्रक्षिपेच्छीते घृताढ्यं षष्टिकौदनम्" इति पठति, व्याचष्टे च,—तस्मिन् मार्जिते पूते दधि इत्यर्थात्, ततोऽथ शीते शीतवीर्य्यं षष्टिकभक्तं प्रक्षिपेत्, ततोऽद्यादिति। उपरिष्टादिति—भुक्तेत्यर्थः। रसालालक्षणं यथा—"सचतुःर्जातकनागरी समुकार्द्धकनागरम्। रसाला स्यात् शिखरिणी सुघृष्टं ससरं दधि॥" इति। अन्यत्र यथा—"अर्द्धाढकं सुचिरपर्य्युषितस्य दध्नः खण्डस्य षोडश पलानि शशिप्रभस्य। सर्पिःपलं मधुपलं मरिचार्द्धकर्षं शुण्ठ्याः पलार्द्धमपि चार्द्धपलं चतुर्णाम्॥ श्लक्ष्णे पटे ललनया मृदुपाणिघृष्टा कर्पूरगन्धसुरभिर्नवभाण्डसंस्था। एषा वृकोदरकृता सुरसा रसाला यास्वादिता भगवता मधुसूदनेन॥" ॥ ७॥

चार्द्राणीत्यादि।—चरकस्य।—चार्द्राणि—सद्यस्कानीत्यर्थः। मत्स्योऽत्र प्रधान कल्पनया रोहितः॥ ८॥

शतावरीत्यादि।—चन्द्राटस्य।—वाराह्या इति—वराहकन्दस्य। तल्लक्षणं यथा—"ताम्बूलसदृशैः पत्रैर्युक्तस्त्रिभिः समलङ्कृतम्। सर्जार्जुननिभैः पुष्पैः शोभते च

भल्लातकानां द्वात्रिंशच्चित्रकस्य दशैव तु।
तिलानां शोधितानाञ्च प्रस्थं दद्यात् सुचूर्णितम् ॥
चूर्णस्य पलान्यष्टौ शर्करायाश्च सप्ततिः।
माक्षिकं शर्करार्द्धेन माक्षिकार्द्धेन वै घृतम् ॥
शतावरीसमं देयं विदारीकन्दजं रजः।
एतदेकीकृतं चूर्णं स्निग्धे भाण्डे निधापयेत् ॥
पलार्द्धमुपयुञ्जीत यथेष्टञ्चापि भोजनम्।
मासैकमुपयोगेन जरां हन्ति रुजामपि ॥
वलीपलितखालित्य-मेहपाण्ड्वाद्यपीनसान्।
हन्त्यष्टादशकुष्ठानि तथाष्टावुदराणि च ॥
भगन्दरं मूत्रकृच्छ्रं गृध्रसीं सहलीमकम्।
क्षयञ्चैव महाश्वासान् पञ्च कासान् सुदारुणान् ॥
अशीतिं वातजान् रोगांश्चत्वारिंशच्च पैत्तिकान्।
विंशतिं श्लैष्मिकांश्चैव संसृष्टान् सान्निपातिकान्।
सर्वानर्शोगदान् हन्ति वृक्षमिन्द्राशनिर्यथा ॥
स काञ्चनाभो मृगराजविक्रमस्तुरङ्गमञ्चाप्यनुयाति वेगतः।
स्त्रीणां शतं गच्छति सोऽतिरेकं प्रकृष्टदृष्टिश्च यथा विहङ्गः ॥

---

सुगन्धिभिः ॥ वराहकर्णविवर्णेन पिच्छिलेन सुवर्चसा। कन्देन कटुतिक्तेन मौली-म्यक्तसुगन्धिना ॥ जायते सा गिरौ रम्ये विन्ध्ये श्रीपर्वते तथा ॥" अन्ये तु—"वराहमूर्द्धवत् कन्दो वाराहीकन्दसंज्ञितः। विषजा तदलाभे च चर्मकारालुको मतः ॥" इत्युक्तम्, किन्तु वाराहीकन्दापेक्षया चर्मकारालुकस्यातिहीनगुणत्वेन नास्य तत्प्रतिनिधित्वं युक्तम्। गुडूच्याः पञ्चविंशतिरित्यपपाठः। तन्त्रान्तरे—"भल्लातक-प्रस्थयुग्मं तत् सप्तपलीनं गुडूच्याश्च" इत्युक्तत्वात्, अतः प्रस्थयुग्ममेव सप्तपलीनं सत् पञ्चविंशतिपलानि भवन्ति। चूर्णस्य मिलिता पलान्यष्टौ। विदारी—भूमि-कुष्माण्डः। पलार्द्धमिति—पूर्वयुगाभिप्रायेण, इदानीमष्टमाषकेण व्यवहारः। माध्य

युवान् सञ्जनयेद्वीरान् नरसिंहनिभांस्तथा ।
नारसिंहमिदं चूर्णं सर्वरोगहरं नृणाम् ॥
वाराहीकन्दसंज्ञस्तु चर्मकारालुको मतः ।
पश्चिमे घृष्टिशब्दाख्यो वराहलोमवानिव ॥ ८ ॥

गोधूमाद्यं घृतम्—

पलं शतञ्च गोधूमात् निःक्वाथ्य सलिलाढके ।
पूते पादावशेषे च द्रव्याणीमानि दापयेत् ॥
मुञ्जातफलगोधूमं माषद्राक्षापरूषकम् ।
काकोली क्षीरकाकोली जीवन्ती सशतावरी ॥
अश्वगन्धा सखर्जूरं मधुकं त्र्यूषणं सिता ।
भल्लातमात्मगुप्ता च समभागानि कारयेत् ॥
घृतप्रस्थं पचेदेवं क्षीरं दत्त्वा चतुर्गुणम् ।
मृद्वग्निना च संसिद्धे द्रव्याण्येतानि निक्षिपेत् ॥
त्वगेलापिप्पलीधान्य-कर्पूरं नागकेशरम् ।
यथालाभं विनिक्षिप्य सिताक्षौद्रपलाष्टकम् ॥

---

इति ।—वात्स्यमारुतः ; यथा भीमो भीमसेनः । वाराहीकन्दस्य दुर्लभतया चर्मकारालुकमेव गौडीयैर्वाराहीकन्दसंज्ञया गृह्यते । वस्तुतस्तु वराहकन्दकाच्चर्मकारालुकं द्रव्यान्तरमेव तल्लक्षणाभावात् ॥ ८ ॥

गोधूमादित्यादि ।—गोधूमो यवक्षारी ग्राह्यः, चतुष्कत्वात् । अत्र सलिलाढके पादावशेष इति योज्यम् ; अतो गोधूमशतपले जलद्रोणो देय इति चक्रः । बकुलस्तु निःक्वाथ्येत्यनेनैव सम्बध्यते, तथैव निर्दिष्टत्वात् पादावशेषश्च प्रस्थ इति व्याचष्टे ; किन्तु चक्रपक्ष एव प्रचरति । मुञ्जातफलम्—श्रीतरापर्यायिकम् ; तदभावे ताल-मस्तकं वर्त्यति । तारावल्याम्—मुञ्जातकं—तालमस्तकमित्येवास्ति । परूषकं—परूषस्य फलम् ; खर्जूरं—पिण्डखर्जूरम् ; मधुकं—यष्टिमधु ; अन्ये तु—मधूकमिति पठित्वा मधूकस्य फलमाहुः । सिता—शर्करा । आत्मगुप्ताया मूलमिति निश्चलः, फलमित्यन्ये । संसिद्ध इत्यनन्तरं पूते चेति शेषः । त्वगादीनाञ्च मानं कल्कतुल्यं

दग्धेक्षुदण्डेनालोड्य विधिवद्विनियोजयेत् ।
शाल्योदनेन भुञ्जीत पिबेन्मांसरसेन वा ॥
केवलस्य पिबेदस्य पलमात्रां प्रमाणतः ।
न तस्य लिङ्गशैथिल्यं न च शुक्रक्षयो भवेत् ॥
वातहरं परं बल्यं शुक्रसञ्जननं परम् ।
शमनं मूत्रकृच्छ्रस्य प्रशानाश्चापि शस्यते ॥
पलद्वयं तदश्नीयादहरहरतन्द्रितः ।
भजते स्त्रीशतञ्चापि पीत्वा चानुपिबेत् पयः ॥
अश्विभ्यां निर्मितञ्चैतद्गोधूमाद्यं रसायनम् ।
जलद्रोणे तु गोधूम-क्वाथे तच्छेषमाढ़कम् ॥
मुञ्जातकस्य स्थाने तु तद्गुणं तालमस्तकम् ।
कल्कद्रव्यसमं मानं त्वगादेः साहचर्य्यतः ॥ १० ॥

शतावरीघृतम्—

घृतं शतावरीगर्भं क्षीरे दशगुणे पचेत् ।
शर्करापिप्पलीक्षौद्र-युक्तं तद्वृष्यमुत्तमम् ॥ ११ ॥

खण्डकूष्माण्डकम्—

कूष्माण्डकात् पलशतं सुस्विन्नं निष्कुलीकृतम् ।
प्रस्थं घृतस्य तैलस्य तस्मिंस्तप्ते प्रदापयेत् ॥

---

शस्यते । तत, शीतीभूते शर्करामधुनीर्मिलिलाऽष्टौ पलानि । पूर्वं "पलमात्रां पिबेत्" इति यदुक्तं तत् प्रथमतः, अनन्तरं सात्म्यीभावे सति पलद्वयम् ; न पुनरितोऽधिकमिति ॥ १० ॥

घृतमित्यादि ।—चरकस्य ।—सिद्धे "प्रक्षेपः पादिकः काथ्यात् स्नेहे कल्कसमो मत" इत्युक्ते शर्करापिप्पलीक्षौद्राणां कल्कसमत्वं ज्ञेयम् ॥ ११ ॥

कूष्माण्डकादित्यादि ।—घृततैलयोर्मिलित्वा प्रस्थम् । अत्र खण्डकूष्माण्डवत् त्वग्बीजादिवर्जितसुखिन्नमासितपिष्टकूष्माण्डभर्जनं कार्य्यं यावन्मधुनिभः पाको

त्वक्पत्रधान्यकव्योष-जीरकैलाद्वयानलम् ।
ग्रन्थिकं चव्यमातङ्ग-पिप्पलीविश्वभेषजम् ॥
शृङ्गाटकं कशेरुञ्च प्रलम्बं तालमस्तकम् ।
चूर्णीकृतं पलांशञ्च गुड़स्य च तुलां पचेत् ॥
शीतीभूते पलान्यष्टौ मधुनः सम्प्रदापयेत् ।
कर्षार्धमत्तानिलहरं मन्दाग्नीनाञ्च शस्यते ॥
कृशानां बृंहणं श्रेष्ठं वाजीकरणमुत्तमम् ।
प्रमदासु प्रसक्तानां ये च स्युः क्षीणरेतसः ॥
क्षयेण च गृहीतानां परमेतद्भिषग्जितम् ।
कासं श्वासं ज्वरं हिक्कां हन्ति च्छर्दिमरोचकम् ॥
गुड़कुष्माण्डकं ख्यातमश्विभ्यां समुदाहृतम् ।
खण्डकुष्माण्डवत् पाकं स्विन्नकुष्माण्डकाद्रवः ॥ १२ ॥
यत्किञ्चिन्मधुरं स्निग्धं जीवनं बृंहणं गुरु ।
हर्षणं मनसश्चैव सर्वं तद्वृष्यमुच्यते ॥ १३ ॥
भल्लातकबृहतीफलदाड़िमफलवल्कसाधितं कुरुते ।
लिङ्गं मर्दनविधिना कटुतैलं वाजिलिङ्गाभम् ॥

---

भवति । ततो द्रवार्थमेव गालितकुष्माण्डद्रवमेव प्रस्थचतुष्टयं गृहीत्वा तेन द्रवेण पुराणगुड़पलशतमेकीकृत्य पूत्वा कुष्माण्डं पचेत् । ततोऽवतारिते कोष्णे त्वक्पत्रादिचूर्णप्रक्षेपः । जीरकैलाद्वयेति—जीरकद्वयमेलाद्वयञ्चेति । मातङ्गपिप्पली—गजपिप्पली । प्रलम्बं—तालाङ्कुरं, तालत्वक् इत्यन्ये ; चाद्य एव पक्षो युक्तः, पथ्यत्वात् । मन्दाग्नीनामल्पमात्रयेति शेषः । "प्रमदासु प्रसक्तानां वाजीकरणमुत्तमम्" इत्यन्वयः । तथा ये क्षीणरेतसस्तेषामुत्तममेतद्भिषग्जितमिति योज्यम् । पाक-मित्याह्वकम् ; खण्डकुष्माण्डकञ्च रक्तपित्तोक्तम् । गुड़कुष्माण्डके द्रव इति पाठे—द्रवश्च स्विन्नकुष्माण्डकस्यैव ज्ञेयः ॥ १२ ॥

अनुक्तवाजीकरणसंग्रहार्थमाह, यत्किञ्चिदित्यादि ॥ १३ ॥

इदानीं लिङ्गमुचलादपत्यस्य तद्वृद्धियोगानाह, भल्लातकेत्यादि ।—अयं योगो

कनकरसमम्रक्षणवर्त्तित-हयगन्धामूलमनपर्य्युषितम्।
माहिषमिह नवनीतं गतबीजे च तत्फलमध्ये॥
गोमयगाढ़ोद्वर्त्तितपूर्वं पयादनेन संलिप्तम्।
भवति हयलिङ्गसदृशं लिङ्गं कठिनाङ्गनादयितम्॥ १४॥

अश्वगन्धातैलम्—

अश्वगन्धावरीकुष्ठं मांसीसिंहीफलान्वितम्।
चतुर्गुणेन दुग्धेन तिलतैलं विपाचयेत्।
स्तनलिङ्गकर्णपालि-वर्द्धनं म्रक्षणादिदम्॥ १५॥
मेदसा क्षौद्रयुक्तेन वराहस्य प्रलेपितम्।
सम्यक् स्निग्धं रतान्तेऽपि स्तब्धतां न विमुञ्चति॥ १६॥
बीजं हृष्टकारञ्जस्य क्षतमन्तः सपारदम्।
हेम्ना सुवेष्टितं न्यस्तं वदने बीजधृङ्गतम्॥ १७॥
आजमूत्रोचीरं गव्यघृतं चरणयुगललेपोक्तम्।
स्तम्भयति पुरुषबीजं योगोऽयं यामिनीं सकलाम्॥ १८॥
भल्लातकबृहतीफल-नलिनीदलसिन्धुजन्मजलशूकैः।
माहिषनवनीतेन तु करम्बितैः सप्तदिनमुषितैः॥
मूले हयगन्धाया पूर्वं महिषीमलमथितमथ लिङ्गम्।
लिप्तं भवति लघुकृतं रासभलिङ्गं ध्रुवं पुंसाम्॥ १९॥

---

भल्लातकासहाय न देयं। जलशाय चतुर्गुणं बोध्यम्। कनकेत्यादि।—कनक—धुस्तूरं, तस्य पत्ररसः। तत्फलमिति—धुस्तूरमेव। गोमयेन सद्यस्केन लिङ्गे गाढमुद्वर्त्तनं कृत्वा तदोऽन्येन लेपः इति। कठिनाङ्गना इति।—कठिनाङ्गनाः प्रायेण द्राविडलाटमालवदेशजाः, तासु प्रायशो बहुतरसुरतैर्नैव तुष्यन्तीति कठिनत्वम्॥ १४॥

अश्वगन्धातैले।— सिंहीफलं — बृहतीफलम्। कर्णपालि,— कर्णपालिका॥ १५—१८॥

भल्लातकेत्यादौ।—करम्बिताः,—मिश्रितास्तैः। अनन्तरं हयगन्धाया मूले विवरं कृत्वा सप्तदिनमुषितैर्भल्लातकादिभिर्लिप्तं लिङ्गमित्यन्वयः। कीदृशं लिङ्गम्?—

नीलोत्पलसितपङ्कज-केशरमधुकशर्करावलिप्तेन ।
सुरते सुचिरं रमते दृढलिङ्गो भवति नाभिविवरेण ॥ २० ॥
सिद्धं कुसुम्भतैलं भूमिलताचूर्णमिश्रितं कुरुते ।
चरणाभ्यङ्गेन रते वीर्यस्तम्भाद्दृढं लिङ्गम् ॥ २१ ॥
सप्ताहं छागसलिल-संस्थं वै करभवारुणीमूलम् ।
गाढोद्वर्त्तनविधिना लिङ्गस्तम्भं रते कुरुते ॥ २२ ॥
गोरेकोन्नतशृङ्ग-त्वग्भवचूर्णेन धूपितं वस्त्रम् ।
परिधाय भजन् ललनां नैकाण्डो भवति हर्षार्त्तः ॥ २३ ॥
समतिलगोक्षुरचूर्णं छागीक्षीरेण साधितं हि समधु ।
भुक्तं क्षपयति षाण्डं यज्जनितं कुप्रयोगेण ॥ २४ ॥

---

महिषीमलेन मथितं पूर्वं मर्दितम् ; पत्तनादौ महिषीमलेन लिङ्गं सम्मर्द्य पश्चात् भल्लातकादिभिर्लिप्तं लिङ्गं लघुमत्तमर्दनलिङ्गं भवतीति ॥ १९ ॥

इदानीं वाजीकरणप्रसङ्गात् वीर्यस्तम्भनमाह, नीलोत्पलेत्यादि ।—नीलोत्पलश्वेतपद्मयोः केशरम् । एभिः सर्वैः पिष्टैर्नाभिं लिप्त्वा चिरकालं कामुको रमत इत्यर्थः । नाभिविवरेण इति पाठे—नाभिविवरेण—नाभिकान्तच्छिद्रेण ॥ २० ॥

सिद्धमित्यादौ ।—भूमिलता—किञ्चुलुकः, तया मिश्रितं कुसुम्भबीजस्य तैलं, सिद्धमिति—पक्वमित्यर्थः ॥ २१ ॥

सप्ताहमित्यादि ।—छागसलिलं—छागमूत्रम् ; करभवारुणी—उष्ट्रकण्टकः इति हरमेखलानिर्घण्टुः, गङ्गापालङ्केति केचित् ॥ २२ ॥

इदानीं कुप्रयोगकृतध्वजभङ्गचिकित्सामाह, गोरित्यादि ।—यस्या धेनोरेकं शृङ्गमुन्नतं भवति तत्त्वक्चूर्णेन धूपितं वस्त्रं पिधायेत्यर्थः । यः पुरुषो नियमेन एकस्त्रीगामी स्त्र्यन्तरगमने तु ध्वजोत्थानं न भवति स एकाण्ड उच्यते । यदुक्तं तत्त्वकल्पिकायां,—"यस्य हि काचिल्ललनां प्रति नो भवतीह हर्षलेशोऽपि । एकाण्ड इति कथितोऽसौ योगैः प्रायः कृतः स्त्रीभिः ॥" इति ॥ २२ ॥

समेत्यादि ।—अत्र निस्तुषतिलगोक्षुरबीजचूर्णं छागदुग्धे स्थालिकां साधयित्वा शीते च मधु दत्त्वा भक्षयेत् । षाण्ड्यं—लिङ्गानुत्थानम् ॥ २४ ॥

योगजवराङ्गबद्धं मथितेन चालितं हरति ।
उन्मुखगोशृङ्गोद्भव-लेपो योगजध्वजभङ्गहारी ॥ २५ ॥
कुष्ठैलवालुकैला-मुस्तकधन्याकमधुकृतः कवलः ।
अपहरति पूतिगन्धं रसोनमदिरादिजं गन्धम् ॥ २६ ॥
क्षौद्रेण बीजपूरत्वग्लीढ़ाधोवातगन्धनुत् ॥ २७ ॥

इति हृद्याधिकारः ।

---

## अथ स्नेहाधिकारः ।

सर्पिस्तैलं वसा मज्जा स्नेहेषु प्रवरं मतम् ।
तत्रापि चोत्तमं सर्पिः संस्कारस्यानुवर्त्तनात् ॥ १ ॥

---

कुप्रयोगेण लिङ्गानुत्थाने तत्प्रतिचिकित्सामाह, योगजेत्यादि ।—मथितेन—घोलेन । उन्मुखेत्यादि ।—ऊर्द्ध्वं मुखं यस्येति गोः शृङ्गं, न तु बलीवर्दस्य । ऊर्द्ध्वमुखगोशृङ्गेण लेपनं लिङ्गस्य ॥ २५ ॥

कुष्ठेत्यादौ ।—मधु—यष्टिमधु । यदुक्तं सौवर्णव्यवहाराख्यकामशास्त्रे—"कुष्ठेलवालुकैलामुस्तकधन्याकयष्टिमधुकवलः । हरति मुखपूतिगन्धं रसोनमदिरादिगन्धञ्च ॥" दम्पत्योरन्यतरस्य मुखपूतिगन्धेन सम्भोगभङ्गप्रसङ्गे, स्वादितरसगन्धापनयनद्वारा चास्य योगस्य हृद्याङ्गत्वं ज्ञेयम्, एवं वक्ष्यमाणयोगेऽपि बोध्यम् ॥ २६ ॥

क्षौद्रेणेत्यादौ ।—बीजपूर,—नीम्बुर इति ख्यात । अयच लेह मयनसमये बोध्य । अधोवात,—गुदवायु । बीजपूरत्वग्लेहस्तु अधोवातनिरोधं जनयति । यदुक्तं तत्रैव—"यो लेढि मदनकाले मधुमिश्रं बीजपूरदलचूर्णम् । स क्रीडाकरवातप्रसरावरोधात् सुखं स्वपिति ॥" इति ॥ २७ ॥

इति हृद्याधिकारः ।

---

रसायनवाजीकरणे पञ्चकर्मविशुद्धस्यैव कर्त्तव्ये, अत पञ्चकर्माणि वाच्यानि । पञ्चकर्मणाञ्च स्वेदपूर्वकत्वात्, पुन. स्वेदस्य स्नेहपूर्वकत्वात् प्रथमं स्नेहविधिमाह, सर्पिरित्यादि ।—वाग्भटस्य ।—एतत् सर्पिरादिचतुष्टयं स्नेहेषु स्नेहकारकद्रव्येषु

केवलं पैत्तिके सर्पिर्वातिके लवणान्वितम्।
देयं बहुकफे चापि व्योषक्षारसमायुतम्॥
तथा धीस्मृतिमेधाग्नि-काङ्क्षिणां शस्यते घृतम्॥ २॥
ग्रन्थिनाडीक्रिमिश्लेष्म-मेदोमारुतरोगिषु।
तैलं लाघवदार्ढ्यार्थं क्रूरकोष्ठेषु देहिषु॥ ३॥
वातातपाध्वभारस्त्री-व्यायामक्षीणधातुषु।
रूक्षक्लेशसहात्यग्नि-वाताहृतपथेषु च।

---

दधिक्षीरादिषु मध्ये प्रवरं श्रेष्ठं, स्नेहनप्रकर्षादित्यर्थः। तथापीति।—तेष्वपि सर्पिरादिषु मध्ये सर्पिरुत्तमं श्रेष्ठम्। संस्कारो गुणान्तरारोपणमिति तस्यानुवर्त्तनमनुविधानम्। तैलादयो हि द्रव्यान्तरसंस्कृताः सन्तः स्वगुणं विहायैव संस्कारकद्रव्यगुणान् वहन्ति। सर्पिस्तु स्वगुणान् संस्कारकद्रव्यगुणांश्च वहति; यत उक्तं—"नान्यः स्नेहस्तथा कश्चित् संस्कारमनुवर्त्तते। यथा सर्पिरतः सर्पिः सर्वस्नेहोत्तमं मतम्॥" इति। अत्र संस्कारकद्रव्यतिक्तादिगुणाधानेऽपि सर्पिर्न स्वगुणान् स्नेहशैत्यादीन् जहाति, किन्तु स्वगुणांस्तद्गुणांश्च वहति। यतोऽनुबन्धेन यथाशक्तिना स्वगुणवर्त्तनस्य महान् संस्कारकगुणवर्त्तनमुच्यते।—"स्नेहाद्वातं शमयति पित्तं माधुर्यशैत्यतः। घृतं तुल्यगुणं दोषं संस्कारात्तु जयेत् कफम्॥" न च वाच्यं कटुतिक्तादिसंस्कारात् उष्णवीर्यं सर्पिर्भवति, ततश्च सर्पिषः स्नेहशैत्ये तद्विरुद्धे कथमत्र तिष्ठत इति; यतः सर्पिःसम्बन्धितिक्तावयवानुगतं हि उष्णत्वं, सर्पिर्गते च स्नेहशैत्ये इति भिन्नाश्रयत्वान्न विरोधः। इदमेव च सर्पिषः संस्कारानुवर्त्तनं यत् स्वगुणविरुद्धस्यापि गुणानुपघातेन धारणमित्यादि व्याख्यान्तरमस्मदीयचरकतत्त्वप्रदीपिकायामेवानुसन्धेयम्। केचित्तु संस्कारः स्वीयगुणः शीतत्वादिः, अनुशब्दः सहार्थे, तेन विरुद्धवीर्याणामौषधानां संयोगेऽपि संस्कारोऽनुवर्त्तते; तैलादीनान्तु दाहज्वरे चन्दनादितैलोपदेशात् तैलस्योष्णत्वं शीतवीर्यचन्दनादिद्रव्ययोगान्निवर्त्तते, नैतद्रूपं घृतस्येत्याहुः॥ १॥

घृतविषयमाह, केवलमित्यादि।—केवलं—द्रव्यान्तरसंयोगरहितम्॥ २॥

तैलविषयमाह, ग्रन्थीत्यादि।—वाग्भटस्य॥ ३॥

वसामज्जविषयमाह, वातातपेत्यादि।—वाग्भटस्य।—ईहाविति छेदः। वाता-

श्रेष्मो वसा तु सन्ध्यस्थि-मर्मकोष्ठरुजासु च ॥
तथा दग्धाहतभ्रष्ट-योनिकर्णशिरोरुजि ॥ ४ ॥
तैलं प्रावृषि वर्षान्ते सर्पिरन्यौ तु माधवे।
साधारण-ऋतौ स्नेहं पिबेत् कार्य्यवशात्तु तत् ॥ ५ ॥
वातपित्ताधिको रात्रावुष्णे चापि पिबेन्नरः।
श्लेष्माधिको दिवा शीते पिबेच्चामलभास्करे ॥ ६ ॥

---

दिभिः क्षीणा मारुतो येषां ते तथा। क्लेशसहः,—क्लेशक्षम', क्लेशसह इत्यत्र क्लेशक्षय इति पाठो लिखकदोषात्। वातातपयोरिति—वातातपसहेत्र च। श्रेष्मेति—वसामज्ज्ञानौ। वसायास्तत्त्वदपि विषयान्तरमाह, वसा त्वित्यादि।—रुजा-शब्दः सन्ध्यादिभिः सम्बध्यते। आहत',—प्रक्षेप। भ्रष्टयोनि:,—स्वस्थानात् प्रच्युतयोनि' ॥ ४ ॥

इदानीं स्नेहानामुपयोगकालमाह, तैलमित्यादि।—वाभटश्च। साधारण-ऋतौ स्नेहं पिबेदित्युक्तं.। साधारणञ्च प्रावट्‌शरद्वसन्ताख्यं शोधनमधिकृत्योक्त-मृतुत्रयम्। यदाह दृढबल,—"वस्तुवमनशोधा हि योजयन्तीति नागमा.। तद-न्तरे प्रावृडाद्या ज्ञेयाः साधारणाख्यकः ॥ प्रावृट्शुक्रनभौ ज्ञेयौ शरदूर्जसहौ पुनः। तपस्यश्च मधुश्चैव वसन्तः शोधनं प्रति ॥" इति। अत्र साधारणा इत्यनुक्तौ अपीत-वर्षां इत्यर्थः। शुक्रनभाविल्पापाढश्रावणौ प्रावडित्युक्तम्; अत एव निर्देशात् शुक्र-शब्द आषाढवचनोऽपि ज्ञेयः। किंवा शुचिर्नभाविति पाठः। ऊर्जसहौ—कार्त्तिक-मार्गशीर्षौ, तपस्यः,—फाल्गुन, मधुश्चैत्र इति। वर्षान्त इति—शरदि। अन्यौ—वसामज्ज्ञानौ। माधव इति—वैशाखे। यद्यपि वैशाखो न साधारण-ऋतुमध्ये पठित, किन्तु फाल्गुनचैत्ररूपो वसन्त एव, तथापि प्रभूतकफतया स्नेहपानविषयत्वेनाव नीतः; वैशाखस्तु बलचयधातुचयकारक इति। अत्र वर्ध्वौ धातुकारकः वसा-मज्जप्रयोगौ युक्त एवेत्यर्थ। अन्यावित्यपि पाठ'। कुतः पुनरुक्तसमय एव स्नेहं पिबेदित्यत आह, कार्य्यवशात् तु तदिति।—संशोधनरूपप्रयोजनवशात्। संशो-धनं हि साधारण-ऋतौ उत्सर्गतो विधीयते; तेन तदङ्गविशेषस्नेहपानमपि तत्रैवेत्यर्थ ॥ ५ ॥

इदानीमात्ययिकातङ्कप्रतीतिभात्युष्णशीतेऽपि यथा स्नेहपानं विधेयं तथा दोष-विशेषे च यथा स्नेहपान तदाह, वातपित्ताधिकः इत्यादि।—वातश्च पित्तश्च

स्वेदसंशोध्यमद्यस्त्री-व्यायामासक्तचिन्तकाः ।
वृद्धाबालाऽबलक्षामा रूक्षाः क्षीणास्ररेतसः ॥
वातार्तस्यन्दतिमिर-दारुणप्रतिबोधिनः ।
स्नेह्या न त्वतिमन्दाग्नि-तीक्ष्णाग्निस्थूलदुर्बलाः ॥
ऊरुस्तम्भातिसाराम-गलरोगगरोदरैः ।
मूर्च्छाच्छर्द्यरुचिश्लेष्म-तृष्णामद्यैश्च पीडिताः ।
आमप्रसूता युक्ते च नस्ये वस्तौ विरेचने ॥ ७ ॥

---

वातपित्तं, तदधिकं यत्र स वातपित्ताधिकः । रात्राविति—सायम् ; उष्णे—ग्रीष्मे ; श्लेष्माधिकपदपमित्यत्र शीतविकारवशामभ्यस्तशीतपूर्वीपलक्षणं, तेन वातश्लेष्माधिकः श्लेष्माधिकश्च गृह्यते ; अत एव सुश्रुतेऽप्युक्तं—"वातपित्ताधिको रात्रौ वातश्लेष्माधिको दिवा" इति । केवलवाताधिकस्य तथा पित्ताधिकस्य तथा श्लेष्माधिकस्य साधारणे च शरदादौ काले उत्सर्गसिद्ध एव । पानकालो वक्ष्यमाणो भवति । वक्ष्यति हि—"*पिबेत् संशमनं स्नेहमन्नकाले प्रकाङ्क्षितः*" इत्यादि ।—व्याख्यानमस्य मत्कृतचरकतत्त्वप्रदीपिकायामनुसन्धेयम् । अमलभास्कर इति ।—दुर्दिनस्युदासार्थं मध्याह्नग्रहणार्थं वा ॥ ६ ॥

इदानीं स्नेहानर्हानाह, स्वेद्येत्यादि ।—वाग्भटस्य ।—स्वेद्या इति छेदः । स्वेद्या इति—स्वेदार्हाः, एवं "संशोध्या इति"—वमनादिसंशोधनयोग्याः ; मद्या इति—मद्यादिव्यासक्ताः ; चिन्तकाः,—चिन्ताबहुलाः । अबला इत्यक्रमोऽपि यो बलरहितः । क्षाम इति—मांसोपचयहीनः । क्षीणे अस्ररेतसी रक्तशुक्रे येषां ते क्षीणास्ररेतसः ; वातार्ताः,—वातरोगिणः ; स्यन्द,—अभिष्यन्द, स च पुराणोऽभिप्रेतः । दारुण,—दुःसाध्यः, प्रतिबोध,—जागरणम्, अत्यन्तजागरणशील इत्यर्थः, अन्ये तु—कृच्छ्रोन्मीलनयुक्त इत्यर्थं । अस्नेह्यानाह, न त्वित्यादि ।—अतिशब्दो दुर्बलान्तेषु प्रत्येकं योज्यः । अत एवाल्पबला. स्नेह्या न त्वतिदुर्बला इति न पूर्वापरविरोधः । आमप्रसूता इति ।—अपरिणतगर्भस्रावयुक्ता इत्यर्थः । वाग्भटे त्वपप्रसूतेत्यत्र्यः पठति, व्याचष्टे च—स्रुतगर्भेति ; सुश्रुतेन—"अकाले च प्रसूता स्त्री" इत्युक्तम् । युक्त इति—तत्कालप्रयुक्ते ॥ ७ ॥

स्नेहसात्म्यः क्षयसहो दृढः काले च शीतले ।
अच्छमेव पिबेत् स्नेहमच्छपानं हि शोभनम् ॥ ८ ॥
पिबेत् संशमनं स्नेहमन्नकाले प्रकाङ्क्षितः ।
शुद्ध्यर्थं पुनराहारे नैशे जीर्णे पिबेन्नरः ।
अहोरात्रमहः कृत्स्नं दिनार्द्धञ्च प्रतीक्षते ॥
उत्तमा मध्यमा ह्रस्वा स्नेहमात्रा जरां प्रति ॥
उत्तमस्य पलं मात्रा त्रिभिश्चाक्षैश्च मध्यमे ।
जघन्यस्य पलार्द्धेन स्नेहक्वाथौषधेषु च ॥ ९ ॥

---

अच्छस्नेहपानविषयमाह, स्नेहेत्यादि ।—सुगुणस्य ।—दृढ इति—बलवान् ; काले च शीतल इति ;—यद्यपि पूर्वोक्तसाधारणकाल एव स्नेहविषयस्तथाप्यात्ययिकविकारवशात् यदि शीतले काले स्नेहोपयोगः कर्त्तव्यः स्यात्, तदाऽच्छमेव पिबेदित्यर्थः । अन्ये तु "दृढ" इति पदं दूरीकृत्य काले चाप्यविशीतले इति पठन्ति । अच्छमित्यादिनाऽस्य सम्बन्धः ॥ ८ ॥

सम्प्रति संशमनस्नेहस्य संशोधनार्थस्नेहस्य च पानकालमाह, पिबेदित्यादि ।—संशमनमिति—"न शोधयति यद्दोषान्" तथा संशोधनमिति—"संशोधयति यद्दोषान्" इत्याद्युक्तलक्षणम् । अन्नकाले—हितप्रहरादिविषये, तत्र बुभुक्षा जायते चेत् स्यादिति तदर्थं प्रकाङ्क्षितः इति विशेषणम् । शुद्ध्यर्थन्तु स्नेहं विरेचनादिकम्, नैशे—निशान्तरजाते चाहारे जीर्णे सति प्रातरेव पिबेदित्यर्थः । अयमत्राभिसन्धिः,—संशमनार्थः स्नेहो यदि जरणान्ते प्रातरेव क्रियते, तदा कोष्ठोपलेपकदोषस्याभावात् तेन दोषेण सह स तु स्नेहो दोषोत्क्लेशं कुर्य्यात्, न तु दोषसंशमनम्, अत एव संशमनोऽन्नकालेऽभिहितः । संशोधनार्थस्तु स्नेहो दोषोत्क्लेशकर एवापेक्षित इति दोषशेषाभावादेव प्रातःकाले तत्पानं युक्तमिति । एतच्च कालकथनमुत्सर्गतः, तेन वातपित्ताधिकौ रात्रावित्यपवादविषयव्यतिरिक्त एवास्य विषयो ज्ञेयः । स्नेहमात्रायास्त्रैविध्यमाह—अहोरात्रमित्यष्टप्रहरोपलक्षणम्, एवमहः कृत्स्नमिति—तत्प्रहरचतुष्टयम्, दिनार्द्धमिति—तत्प्रहरद्वयमुपलक्षयति ; अत एवोक्तं वाग्भटे—"द्वाभ्यां चतुर्भिरष्टाभिर्यामैर्जीर्य्यन्ति याः क्रमात्" इत्यादि । तेन प्रहरद्वयातीतेऽपि दिने मात्रा पीता यथोक्तप्रहरादिकालप्राप्ता दिनान्तरे रात्रौ वा जीर्य्यमाणा मन्तव्या, यदा पुनरहोरात्रपरिणामिनी

जलमुष्णं घृते पेयं यूषस्तैलेऽनु शस्यते ।
वसामज्ज्ञोस्तु मण्डः स्यात् सर्वेषूष्णमथाम्बु वा ॥
भल्लाते तौवरे स्नेहे शीतमेव जलं पिबेत् ।
स्नेहपीतस्तु तृष्णायां पिबेदुष्णोदकं नरः ।
एवञ्चानुप्रशाम्यन्त्यां स्नेहमुष्णाम्बुनोद्धरेत् ॥ १० ॥
मिथ्याचाराद्बहुत्वाद्वा यस्य स्नेहो न जीर्य्यति ।
विष्टभ्य वापि जीर्य्येत् तं वारिणोष्णेन वामयेत् ॥
ततः स्नेहं पुनर्दद्याल्लघुकोष्ठाय देहिने ।
जीर्णाजीर्णविशङ्कायां पिबेदुष्णोदकं नरः ।
तेनोद्गारो भवेच्छुद्धो रुचिश्चान्नं भवेत् प्रति ॥ ११ ॥
भोज्योऽन्नं मात्रया पास्यन् श्वः पिबन् पीतवानपि ।
द्रवोष्णमनभिष्यन्दि नातिस्निग्धमसङ्करम् ॥ १२ ॥

---

मात्रा क्रियते, तदनुसारात्री न कार्य्यः। अत एव चरके—"उत्तममात्रा स्नेहपान-विषयपुरुषमभिप्रेत्योक्ता ध्रुतविपाकसहा" इति। अन्यथा तु चरकपरिभाषया प्रायो न व्यवहरन्ति वृद्धाः। तेन उत्तमादिपुरुषाणां स्नेहमात्रां प्रति वृद्धव्यवहारसिद्धमतमाह—उत्तमस्नेहेत्यादि ॥ ८ ॥

अनुपानमाह, जलमित्यादि।—अन्विति—अनुपाने। "सर्वेषूष्णमथाम्बु वा" इति यदुक्तं तदपवादमाह, भल्लात इत्यादि।—भल्लाततुवरयोः स्नेह इति विग्रहः। तुवरः,—वृक्षविशेषः, तत्फलभवस्नेह इत्यर्थः, यतो हि सुश्रुते—"पर्णैस्तु केशराकारैः फलैः सर्षपसन्निभैः। वृक्षस्तुवरको नाम पश्चिमार्णवतीरजः॥" इति। पीतस्नेहे यदि तृष्णा स्यात् तदा तत्र प्रतीकारमाह, स्नेहपीत इत्यादि।—पीतस्नेह इत्यर्थः। उद्धरेदिति—वमेत् ॥ १० ॥

अविधिपीतस्नेहजव्यापदः प्रतिकारमाह, मिथ्याचारादित्यादि।—सुश्रुतस्य।—मिथ्याचारादिति—शीततोयादिसेवनाद् यथाविध्यनुपयोगाद्, बहुत्वादित्यतिमात्रत्वात्; विष्टभ्य मन्दादिरोध कृत्वा जीर्णाजीर्णयद्वा चाम्यस्नेहावशेषेण शेषा ॥ ११ ॥

इदानीं स्नेहमपेक्ष्य कामनयहितमाहारमाह, भोज्य इत्यादि।—वाग्भटस्य।—अन्न स्नेहमिति शेषः। श्व इत्यागामिदिने स्नेहं पास्यन्, तथा तस्मिन्नेव दिने

**त्र्यहावरं सप्तदिनं परन्तु स्निग्धो नरः स्वेदयितव्य इष्टः।**
**नातः परं स्नेहनमादिशन्ति सात्म्यीभवेत्सप्तदिनात् परन्तु॥**

---

स्नेहं पिबन्, तथा पीतवानपि च पुरुषः स मात्रया चान्नं भोज्यः भोजयितव्य इति। कीदृशमन्नं भोजयितव्यम्? इत्याह,—द्रवोष्णमित्यादि।—अनभिष्यन्दीति—न स्रोतोऽवरोधकम्। असङ्करमिति—न संयोगविरुद्धम्। नियमस्तु—प्राक्तन्नित्यत्र पाय्यमिति पठित्वा पाययितव्यं स्नेहमिति शेषः इत्याह; किन्तु चरके—"द्रवोष्णमनभिष्यन्दि भोज्यमन्नं प्रमाणतः। नातिस्निग्धं न सङ्कीर्णं श्वः स्नेहं पातुमिच्छता॥" इति। तथा वाग्भटपुस्तकेष्वपि बहुषु प्राक्स्निग्ध एव पाठः टीकाकृद्भिश्च व्याख्यात इति॥ १२॥

पञ्चकर्माङ्गस्नेहप्रयोगावधिकालमाह, त्र्यहावरमित्यादि।—त्र्यहमेव प्राक् व्याप्य क्रियमाणस्नेहनेनावरम् अधमं यथा स्यात् तथा स्निग्धो नरः स्वेदयितव्यो भवति। एतच्च मृदुकोष्ठविषयकम्, उक्तञ्च—मृदुकोष्ठस्त्रिरात्रेण स्निह्यतीति। तथा सप्तदिनं व्याप्य परं सप्तदिनरूपं वा अपरमुत्कृष्टं यथा स्यात् तथा स्निग्धो नरः स्वेदयितव्यः। एतच्च क्रूरकोष्ठविषयम्, उक्तञ्च—"स्निह्यति क्रूरकोष्ठस्तु सप्तरात्रेण मानवः" इति। मध्यकोष्ठं प्रति तु स्नेहनप्रकर्षकाष्ठा यद्यपि नोक्ता तथापि चतुरहादिना मध्यकोष्ठस्य स्नेहनं ज्ञेयम्। यदाह सुश्रुतः,—"पिबेत् त्र्यहं चतुरहं पञ्चाहं षडहं वा" इति। उक्तसप्तदिनरूपस्नेहनकालानतिक्रमं दर्शयितुमाह, नातः परमित्यादि।—अतः परमिति—सप्तदिनात् परम्, कुतो नोपदिश्यतीत्यत आह, सात्म्यीभवेदिति।—सुश्रुतेऽप्युक्तम्—"सप्तरात्रात् परं स्नेहः सात्म्यीभावाय कल्पते" इति। सप्तरात्रात् परञ्च क्रियमाणः स्नेहः सप्तरात्रप्रयोगेण सात्म्यीभूतत्वात् न स्नेहनमधिकं करोतीत्यर्थः। तेन त्र्यहव्यापकस्नेहप्रयोगेण सप्ताहोपयुक्तेन स्नेहनं न भूतं मात्रयाऽल्पत्वात्, सा मात्रा सप्तदिनात् परं न प्रयोक्तव्यैव, तस्याः स्नेहमात्रायाः सात्म्यीभूतत्वात्। या पुनरधिका मात्रा सात्म्यतां न गता, सा सप्ताहात् परमपि स्नेहनार्थं कर्त्तव्यैव। तदास्तु यदि सप्तरात्रेणापि पुरुषः स्निग्धो न भवति तदा किञ्चित् विश्रामं कृत्वा पुनरधिकमात्रया स्नेहं प्रयुञ्जते। ननु यदि क्रूरकोष्ठः सप्तरात्रेण स्निह्यतीति व्यवस्था सत् कथमिह नातः परं स्नेहनमादिशन्तीत्यनेन सप्तरात्रेणाप्यस्नेहनमुच्यते? इति ब्रूमः,—क्रूरकोष्ठः सप्तरात्रेणैव *स्निह्यति, परन्तु क्रूरकोष्ठतामपेक्ष्य कृतया स्नेहमात्रया स्निह्यति, यदा तु हीन-*मात्रा प्रयुज्यते तदा सप्तरात्रेणापि न स्निह्यतीति। यत् तु तन्त्रान्तरे—"सप्तविभक्तदरानापि स्नेहपानं विधीयते" इत्यनेन सप्तरात्रादूर्द्ध्वमपि स्नेहनं विहितं,

मृदुकोष्ठस्त्रिरात्रेण स्निह्यत्यच्छोपसेवया ॥
स्निह्यति क्रूरकोष्ठस्तु सप्तरात्रेण मानवः ॥ १३ ॥
स्निग्धद्रवोष्णधन्वोत्थ-रसभुक् स्नेहमाचरन् ।
स्निग्धस्त्र्यहं स्थितः कुर्य्याद्विरेकं वमनं पुनः ।
एकाहं दिनमन्यच्च कफमुत्क्लेश्य तत्करैः ॥ १४ ॥
वातानुलोम्यं दीप्ताग्निर्वर्चः स्निग्धमसंहतम् ।
स्नेहोद्वेगः क्लमः सम्यक् स्निग्धे रूक्षे विपर्ययः ॥

---

तदपि सात्म्यीभूतस्नेहमात्रापेक्षयैवाधिकमात्राभिप्रायेण ज्ञेयम्। अत एव सप्तरात्रादूर्द्ध्वं स्नेहप्रयोगस्य निषेधात्; सप्ताहादर्वाक् प्रयोगस्य चानिषेधात् सद्यःस्नेहप्रयोगे एकदिनेनापि स्नेहनमनुजानाति। यत्तु कश्चिन्मृदुकोष्ठं प्रति त्र्यहादूर्द्ध्वं न स्नेहनं कार्य्यं सात्म्यीभावादिति चार्थोऽत्र लभ्यत इति व्याख्यानयति, तन्न; यतः सात्म्यीभावः सप्तदिननिर्वर्त्तनतयैवाचार्य्यैरुक्तः। तेनाल्पमात्रप्रयुक्तेन स्नेहेन त्र्यहाद् यदि न स्निह्यति मृदुकोष्ठस्तदाऽधिकदिनान्यपि तत्र स्नेहः कर्त्तव्य एवेत्यर्थः। मृदुकोष्ठादिलक्षणमाह, मृदुकोष्ठेत्यादि।—यस्त्रिरात्रेण स्निह्यति स मृदुकोष्ठ इत्यादि व्याख्येयम्। मध्यकोष्ठलक्षणन्तु यद्यपि नोक्तं तथापि मध्यविधया चतुरहादिना यः स्निह्यति स मध्यकोष्ठ इति ज्ञेयः ॥ १३ ॥

इदानीं संशोधनस्नेहपाने कर्त्तव्ये यद्विधेयं तदाह, स्निग्ध इत्यादि।—वाग्भटस्य।—स्निग्धस्त्र्यहं स्थित इति।—स्निग्धो भूत्वा त्रिदिनं परित्यक्तस्नेहपानः सन् विरेकं कुर्य्यात् विरेचनौषधं पिबेदित्यर्थः। एकाहमित्यत्रापि स्थित इति योज्यम्; तेन स्निग्धो भूत्वा एकाहं स्थित इति परित्यक्तस्नेहपानः सन् दिनान्तरञ्च कफकरैर्माषानूपमांसादिभिः कफमुत्क्लेश्य प्रवृद्धमुखं कारयित्वा वमनं कुर्य्यादित्यर्थः। इदानीं स्नेहोपरमदिवसे एव यद्विधेयस्तदाह, स्निग्धद्रवोष्णेत्यादि।—स्नेहमाचरन्नित्यत्र स्वेदमाचरन्नित्यपि पाठः। स्नेहोपरमदिवसे स्नेहपाननिषेधस्योक्तत्वात् चरकेऽप्युक्तम्—"स्नेहात् प्रस्कन्दनो जन्तुस्त्रिरात्रोपरतः पिबेत्। स्नेहवद्द्रवमुष्णञ्च त्र्यहं भुक्त्वा रसौदनम्॥ एकाहोपरतस्तद्वद्भुक्त्वा प्रच्छर्दनं पिबेत्॥" इति ॥ १४ ॥

सम्यक्स्निग्धस्य तथा रूक्षस्य तथाऽतिस्निग्धस्य च लक्षणान्याह, वातानुलोम्यमित्यादि।—वाग्भटस्य।—असंहतमित्यकठिनम्। स्नेहोद्वेगः,—अनिच्छा, क्लमः,—

अतिस्निग्धे तु पाण्डुत्वं घ्राणवक्त्रगुदस्रवाः।
रूक्षस्य स्नेहनं कार्य्यमतिस्निग्धस्य रूक्षणम्॥
श्यामाककोरदूषान्न-तक्रपिण्याकशक्तुभिः॥ १५॥
बालवृद्धादिषु स्नेह-परिहारासहिष्णुषु।
योगानिमाननुद्वेगान् सद्यः स्नेहान् प्रयोजयेत्॥ १६॥
भृष्टे मांसरसे स्निग्धा यवागूः स्वल्पतण्डुला।
सक्षौद्रा सेव्यमाना तु सद्यः स्नेहनमुच्यते॥
सर्पिस्तैलवसामज्ज-तण्डुलप्रसृतैः शृता।
पाञ्चप्रसृतिकी पेया पेया स्नेहनमिच्छता॥
सर्पिष्मती बहुतिला तथैव स्वल्पतण्डुला।
सुखोष्णा सेव्यमाना तु सद्यः स्नेहनमुच्यते॥
शर्कराचूर्णसंसृष्टे दुग्धाद्र्रां कलसेऽथवा।
पाययेद्रूक्षमेतद्धि सद्यः स्नेहनमुच्यते॥ १७॥
ग्राम्यानूपौदकं मांसं गुड़ं दधि पयस्तिलान्।
कुष्ठी शोथी प्रमेही च स्नेहने न प्रयोजयेत्॥

---

स्यादिः। सुश्रुते—"स्नानि. सदनमहानाम्" इत्युक्तम्। रूक्षण—श्यामाकादिभि-रित्यन्वय॥ १५॥

इदानीं विषयाभिधानपूर्वकं सद्यःस्नेहनयोगानाह, बालेत्यादि।—वाग्भटस्य।—अनुद्वेगानित्यवैराग्यजनकानित्यर्थः॥ १६॥

भृष्ट इत्यादि।—सुश्रुतस्य।—भृष्ट इति—सम्भसिते, मांसरस इत्यनन्तर सिद्ध इति शेषः। स्वल्पतण्डुलेत्यत्र सुपक्वसितेति पाठान्तरम्। सर्पिरित्यादि।—प्रसृत—पलद्वयम्; पेयेति—पातव्या। सर्पिष्मतीत्यादि।—सुश्रुतस्य।—बहुतिलेत्यनेन निस्तुष-तिलाना मयी भागा, एकस्तण्डुलानामिति। इयञ्च सुखोष्णा योज्या, सुश्रुते तथै-वोक्तत्वात्, चक्रेण प्रतिसंस्कृत्य लिखितमेवत्। तत्र हि तथैवेत्यत्र यवागूरिति पठ्यते। शर्करेत्यादि।—सुश्रुतस्य।—रूक्षमिति पुरुषविशेषणम्॥ १७॥

येषु व्याधिषु स्नेहनार्थं यानि द्रव्याणि न प्रयोज्यानि तान्याह, ग्राम्येत्यादि।—

स्नेहैर्यथास्वं तान् सिद्धैः स्नेहयेदविकारिभिः।
पिप्पलीभिर्हरीतक्या सिद्धैस्त्रिफलया सह॥ १८॥
स्नेहमग्रे प्रयुञ्जीत ततः स्वेदनमन्तरम्।
स्नेहस्वेदोपपन्नस्य संशोधनमथान्तरम्॥ १९॥

इति स्नेहाधिकारः।

---

## अथ स्वेदाधिकारः।

वातश्लेष्मणि वाते वा कफे वा स्वेद इष्यते।
स्निग्धरूक्षस्तथा स्निग्धो रूक्षश्चाप्युपकल्पितः॥
व्याधौ शीते शरीरे च महान् स्वेदो महाबले।
दुर्बले दुर्बलः स्वेदो मध्यमे मध्यमो मतः॥

---

स्नेहन इति—स्नेहनिमित्तम्। तर्हि ते; के, कीदृशा? इत्याह, स्नेहैरित्यादि।—यथास्वमिति।—यो यत्र स्नेहो युज्यते सर्पिरादिः, सिद्धैरिति।—तत्तद्व्याधिहरत्वेन प्रसिद्धैः, सिद्धैरिति पद पिप्पल्यादिभिः प्रत्येकं योज्यम्, पिप्पल्यादिसिद्धाः स्नेहाः कुष्ठादिषु यथासङ्ख्यमिति केचित्, तन्न; वाग्भटे व्यतिक्रमेणाभिधानात्; यथा—"गुडानूपामिषक्षीरतिलमाषसुरादधि। कुष्ठशोथप्रमेहेषु स्नेहनार्थं न कल्पयेत्॥ त्रिफलापिप्पलीपथ्या-गुग्गुल्वादिविपाचितान्। स्नेहान् यथास्वमेतेषां योजयेदविकारिणे॥" इति॥ १८॥

स्नेहादिषु स्नेहस्य प्राधान्यमाह, स्नेहमित्यादि।—स्पष्टम्॥ १९॥

इति स्नेहाधिकार-विवृतिः।

---

"स्नेहमग्रे प्रयुञ्जीत ततः स्वेदमनन्तरम्" इत्युक्तेः स्नेहानन्तरं स्वेदमाह; तत्र दोषविशेषापेक्षया स्वेदस्य कल्पनाभेदमाह, वातेत्यादि।—अत्र यथासङ्ख्यमन्वयः। स्निग्धरूक्ष इति—स्निग्धरूक्षद्रव्यकृतत्वात्। रोगाद्यपेक्षयाऽपि स्वेदस्य कल्पनाभेदमाह, व्याधावित्यादि।—व्याधौ महाबले महाशीते शीतप्रकृतौ महाशीतले तथा शरीरे च बलवति महानिति मृदुमध्यस्वेदापेक्षया प्रचण्डतापत्वेन कालबाहुल्येन च एव दुर्बल

आमाशयगते वाते कफे पक्वाशयाश्रये।
रूक्षपूर्वो हितः स्वेदः स्नेहपूर्वस्तथैव च॥ १॥
वृषणौ हृदयं दृष्टी स्वेदयेन्मृदु वा न वा।
मध्यमं वङ्क्षणौ शेषमङ्गावयवमिष्टतः॥ २॥
न स्वेदयेदतिस्थूल-रूक्षदुर्बलमूर्च्छितान्।
स्तम्भनीयक्षतक्षीण-विषमद्यविकारिणः।
तिमिरोदरवीसर्प-कुष्ठशोषाढ्यरोगिणः॥
पीतदुग्धदधिस्नेह-मधून् कृतविरेचनान्।
भ्रष्टदग्धगुदग्लानि-क्रोधशोकभयार्दितान्॥

---

इति मध्यम इति च व्याख्येयम्। "वाते स्निग्धः कफे रूक्ष" इति यदुक्तं, तस्य देशविशेषापेक्षया व्यभिचारमाह, आमाशयेत्यादि।—वाग्भटस्य।—आमाशय इति कफस्थानोपलक्षणम्, पक्वादि यथासङ्ख्यमन्वय, तेन कफस्थानापेक्षया पूर्वं रूक्षस्वेदं कृत्वा पश्चाद्वातापेक्षः स्निग्धस्वेदः कार्यः। यदुक्तं—"स्थानं जयेद्धि पूर्वम्" इति। एवं पक्वाशयगते स्नेहपूर्व इति व्याख्येयम्॥ १॥

स्वेद्यदेशानाह, वृषणावित्यादि।—यदि वृषणे स्वेदः क्रियते, तदा तत्र शुक्राशयशुक्रवह-स्रोतस उपघातात् क्लैब्यं स्यात्, हृदयस्याप्योजःक्षयप्रसङ्गात्। दृष्ट्यां तर्पकश्लेष्मक्षयात् तिमिरमान्ध्यं वा भवेदिति। मृदु वा न वेति।—स्वेदैकसाध्ये वृषणादिगते व्याधौ मृदु स्वेदयेत्; स्वेदव्यतिरिक्तोपायान्तरसम्भवे तु न वेति बोध्यः। इष्टत इच्छातुरेच्छातो वेदितव्यम्। इष्टेति भावे क्तः॥ २॥

अस्वेद्यानाह, न स्वेदयेदित्यादि।—वाग्भटस्य।—अतिस्थूलरूक्षदुर्बलक्षीणानां स्वेदासहत्वात् प्राणोपरोधः, मूर्च्छितानां पित्तवृद्ध्या मूर्च्छैव भवति। स्तम्भनीयाः—रक्तातिसार-पीडितादयः; एषां स्वेदात् पित्तवृद्ध्या रोगवृद्धिः स्यात्। क्षतस्य स्वेदाद्रक्तातिप्रवृत्तिः; विषमद्यविकारिणामपि पित्तवृद्ध्या तयोरपि सदाह वेग., तिमिरे तर्पकश्लेष्मक्षय, उदरे मृत्युप्रादिनिदानत्वेन वृद्धिरेव; विसर्पकुष्ठयोः रक्तदुष्टिः, एवमाढ्यरोगे, आढ्यरोगो वातरक्तं, शोषे रसादिक्षयः। पीतदुग्धादौ—उत्क्लेशादय, कृतविरेके पित्तवृद्ध्या तदतियोगः, भ्रष्टगुदे गुदक्षयो, दग्धगुदः क्षाराग्न्या-

क्षुत्तृष्णाकामलापाण्डु-मेहिनः पित्तपीड़ितान्।
गर्भिणीं पुष्पितां सूतां मृदुर्वात्ययिके गदे ॥ ३ ॥
स्वेदो हितस्त्वनाग्नेयो वाते मेदःकफावृते।
निवातं गृहमायासो गुरुप्रावरणं भयम् ॥
उपनाहाहवक्रोध-भूरिपानक्षुधातपाः।
स्वेदयन्ति दशैतानि नरमग्निगुणादृते ॥ ४ ॥
शीतशूलव्युपरमे स्तम्भगौरवनिग्रहे।
सञ्जाते मार्दवे स्वेदे स्वेदनाद्विरतिर्मता ॥ ५ ॥

स्फोटोत्पत्तिः पित्तरक्तप्रकोपो
मूर्च्छा भ्रान्तिर्दाहतृष्णे क्लमश्च।
स्विन्नेऽत्यर्थं सन्धिपीड़ा विदाहः
कृत्याः शीतास्तत्र कुर्य्याद्विधिज्ञः ॥

---

दिभिः, गुदभ्रंशदाहयोः पित्तवृद्धा सरत्वेन क्रमेण तयोरेव वृद्धिः। क्षुधायां वह्निवृद्धा धातुपाकः, तृष्णायां पित्तवृद्धिः, कामलापाण्डुमेहेषु पित्तवृद्धा तद्वृद्धिः, गर्भिण्याः गर्भव्यापत्तिः, पुष्पितायां रजोऽतियोगः। सूतामचिरप्रसूतां, प्रसूतगर्भामिति यावत्; यस्यास्तु स्वेदात् रक्तातिप्रवृत्तिः स्यादिति भावः। सम्यक्प्रसूतायास्तु स्वेदविधानमग्रे वक्ष्यति। एषु च मेदस्यादिषु यदि स्वेदैकसाध्यः सन्न्यासादिर्भवति तदा महाप्रत्यवायभयादल्पप्रत्यवायमुपेत्यापि मृदुस्वेदो विधेय इत्याह—मृदुर्वात्ययिके गदे इति ॥ ३ ॥

अनाग्नेयस्वेदस्य विषयमाह, स्वेदो हित इत्यादि।—वाग्भटस्य।—अनग्निस्वेदानाह, निवातमित्यादि।—वाग्भटस्य।—उपनाहः,—वस्त्रो लेपः, स हि बहलत्वेन शरीरोष्मरोधं कृत्वा स्वेदयति। भूरिपानं मद्यस्य ॥ ४ ॥

स्वेदस्य सम्यग्योगलक्षणमाह, शीतेत्यादि।—स्वेदे—घर्मे; स्वेदनादिति—प्रस्वेददानात्। अत्र शीताद्युपरमस्य स्वेदस्य सम्यग्योगलक्षणत्वेन शीतादेरर्थतोऽनुपरमस्य स्वेदासम्यग्योगलक्षणत्वमुक्तं भवति। सुश्रुतेऽप्युक्तं—"स्वेदास्रावो व्याधिहानिर्लघुत्वं शीतार्थित्वं मार्दवञ्चातुरस्य। सम्यक्स्विन्ने लक्षणं प्राहुरेतत् मिथ्यास्विन्ने व्यत्ययेनैतदेव ॥" इति ॥ ५ ॥

स्वेदातियोगलक्षणं चिकित्सितञ्चाह, स्फोटेत्यादि।—सुश्रुतस्य।—स्वेदा यत्र

सर्वान् स्वेदान् निवाते तु जीर्णान्ने चावचारयेत् ॥ ६ ॥
येषां नस्यं विधातव्यं वस्तिश्चापि हि देहिनाम्।
शोधनीयास्तु ये केचित् पूर्वं स्वेद्यास्तु ते मताः ॥
पश्चात् स्वेद्या हृते शल्ये मूढगर्भाऽनुपद्रवाः।
सम्यक् प्रजाताः काले च पश्चात् स्वेद्या विजानता ॥
स्वेद्याः पश्चाच्च पूर्वञ्च भगन्दर्यर्शसस्तथा ॥ ७ ॥
तप्तैः सैकतपाणिकांस्यवसनैः स्वेदोऽथवाङ्गारकै-
र्लेपाद्यातहरैः सहाम्ललवणस्नेहैः सुखोष्णैर्भवेत्।
एवं तप्तपयोऽम्बुवातशमनक्वाथादिसेकादिभि-
स्तप्तैस्तोयनिषेचनोद्भवहृद्वाष्पैः शिलाद्यैः क्रमात् ॥

---

यथा च प्रयोज्यास्तानाह, सर्वानित्यादि।—सुश्रुतस्य।—जीर्णेऽन्न इत्युत्सर्गेणेव शिष्टव्या- जीर्णादौ यत् स्वेदविधानं निरूहे स्वेदनं कार्यमित्यादिनोक्तं तदपवादतया न दुष्यतीति ॥ ६ ॥

इदानीं ये च पूर्वं स्वेदविषयास्तथा पश्चाद् ये स्वेदविषयाः, ये च पश्चादपि स्वेदविषयास्तान् क्रमेणाह, येषामित्यादि।—सुश्रुतस्य।—शल्य इति—गर्भरूपशल्ये, अनुपद्रवा—गर्भस्रावाद्युपद्रवादिरहिता। सम्यक् प्रजाता—सम्यक्प्रसूता। पूर्वं पश्चाच्च स्वेद्या इति।—भगन्दरोऽर्शांसि च पूर्वं स्वेदसाध्योऽश्वावकया दारुणः, पश्चात् स्वेदस्तु दाहानन्तरसुखोदर्कोपशमनरूपो ज्ञेयः ॥ ७ ॥

सुश्रुते तापोष्मोपनाहद्रवभेदेन चतुर्विधस्वेद उक्तस्तानाह—तप्तैरित्यादिना बाष्पपूर्वा इत्यन्तेन, तत्र तप्तैरित्यादिना अङ्गारकैरित्यन्तेन तापस्वेदः। सिकतैव सैकतम्, सुश्रुतेऽप्युक्तं—"तत्र तापस्वेदो नाम यः पाणिकांस्यकन्दुकपालफाल- वालुकावस्त्रैः प्रयुज्यते शयानस्य चाङ्गतापो बहुशः खादिराङ्गारैः" इति। लेपेत्यादिना सुखोष्णैरित्यन्तेन उपनाहस्वेदः। लेपमाह वातहरैर्वराहादिमांसैर्भद्र- दार्वादिभिश्च काञ्जिकादियुक्तैः सुखोष्णैर्लेपात् यः स्वेद उक्तः स उपनाह इत्यर्थः। एवमित्यादिना स्वेदादिभिरित्यन्तेन द्रवस्वेदः, पय,—दुग्धम्। अम्ल—काञ्जिकम्। सुश्रुतेऽपि—"द्रवस्वेदस्तु वातहरद्रव्यक्वाथपूर्णे कोष्ठकटाहे द्रोण्यां वावगाह्य स्वेदयेत्। एवं पयोमांसरसयूषतैलधान्याम्लघृतवसामूत्रेष्ववगाहेत एतैरेव सुखोष्णैः कषायैः परिषिञ्चेत्" इति। तप्तैरित्यादिना शिलाद्यैरित्यन्तेन बाष्पस्वेदः। शिलाद्यैरित्याद्य-

तापोपनाहद्रववाष्पपूर्वाः स्वेदास्ततोऽन्त्यप्रथमौ कफे स्तः।
वायौ द्वितीयः पवने कफे च पित्तोपसृष्टे विहितस्तृतीयः॥ ८॥

इति स्वेदाधिकारः।

---

## अथ वमनाधिकारः।

स्निग्धस्विन्नं कफे सम्यक् संयोगे वा कफोल्वणे।
श्वो-वम्यमुत्क्लिष्टकफं मत्स्यमांसतिलादिभिः॥
यथाविकारं विहितां मधुसैन्धवसंयुताम्।
कोष्ठं विभज्य भैषज्य-मात्रां मन्त्राभिमन्त्रिताम्॥

---

शब्दात् कपालेष्टकालोहपिण्डादीनां ग्रहणम्; अत्रैव विशेषणं शौरीत्यादि। सुश्रुते तु—"वाष्पस्वेदस्तु कपालपाषाणेष्टकालोहपिण्डानग्निवर्णानद्भिरासिञ्चेत्" इत्याद्युक्तम्। एषां स्वेदानां विषयमाह, तत इत्यादि।—तत इति सप्तम्यन्तात् तसिः। तेषु स्वेदेषु मध्ये आद्यन्त-स्वेदौ तापस्वेद वाष्पस्वेदौ कफे स्तः। द्वितीय इत्युपनाहो वायौ, तृतीय इति द्रवस्वेदः पित्तोपसृष्टे वाते कफे च भवति। सुश्रुतेऽप्युक्त—"तत्र तापोष्मस्वेदौ विशेषतः श्लेष्मघ्नौ, उपनाहस्वेदो वातघ्नः, अन्यतरस्मिन् पित्तसंसृष्टे द्रवस्वेदः" इति। ननु पित्तोपसृष्टे कथं स्वेदो वातश्लेष्मणि वाते वैद्यनैव विरोधात्? उच्यते,—पित्तयुक्तेऽपि द्रवस्वेदविधानात् वातश्लेष्मणोरित्यादिवचनं प्रायिक ज्ञेयमिति॥ ८॥

इति स्वेदाधिकार-विवृतिः।

---

इदानीं स्नेहस्वेदानन्तरीयत्वात् पञ्चकर्माणि वक्ष्यामि। तत्र यद्यपि पञ्चकर्मसु बस्तेरेव प्राधान्यं, यदुक्तम्—"उपक्रमाणां सर्वेषां सायणौः", इति, तथापि

"ब्रह्मदक्षाश्विरुद्रेन्द्रभूचन्द्रार्कानिलानलाः।
ऋषयः सौषधिग्रामा भूतसङ्घाश्च पान्तु ते॥
रसायनमिवर्षीणां देवानाममृतं यथा।
सुधेवोत्तमनागानां भैषज्यमिदमस्तु ते॥"
पूर्वाह्णे पाययेत् पीतो जानुतुल्यासने स्थितः।
तन्मना जातहृल्लास-प्रसेकश्छर्दयेत् ततः।
अङ्गुलीभ्यामनायस्तो नालेन मृदुनाऽथवा॥ १॥
कणोन्द्रयवसिन्धूत्थ-वचाकल्कयुतं पिबेत्।
यष्टीकषायं सक्षौद्रं तेन साधु वमत्यलम्॥
क्वाथ्यद्रव्यस्य कुडवं श्रपयित्वा जलाढके।
चतुर्भागावशिष्टन्तु वमनेष्ववचारयेत्॥ २॥

---

पञ्चकर्मणामौत्सर्गिकक्रमेण वमनविरेचनपूर्विकैव वस्तिप्रवृत्तिर्भवतीति ज्ञात्वा वमनविरेचन एव प्रथममभिधातव्ये, तत्रापि वमनपूर्वकत्वात् विरेचनस्य विरेचनात् प्राक् वमनमाह, स्निग्धेत्यादि।—सम्यक्स्निग्धस्विन्न पुरुषं भैषज्यमात्रां "पूर्वाह्णे पाययेत्" इति वक्ष्यमाणेनान्वयः। वमनस्य विषयमाह, कफ इत्यादि।—कफे—केवलकफे, कफोल्वण इति—कफप्रधाने। श्लेष्मणमित्यादि।—श्वः इत्यागामिदिवसे। यदि पुरुषो श्वो वमनार्हो भवति, तदा तत्पूर्वदिवसे मत्स्यादिभिः कफ उत्क्लेशनीय इत्यर्थः। अनुत्क्लिष्टकफाय दीयमानं वमनं न दुःखमावहति; उक्तं हि—"कफे उत्क्लेशयति दुःखम" इति। मात्रामित्यत्रापायिपरिमाणम्। मधुसैन्धवसंयुतामिति।—अनेन सर्वस्मिन्नेव वमनयोगे मधुसैन्धवयोर्देयतां बोधयति। कोष्ठं विभज्येति।—कोष्ठाद्यपेक्षया मधुसैन्धवस्य स्तोकं बहु वा देयमित्यर्थः। मन्त्राऽभिमन्त्रितमित्युक्तम्, मन्त्रमाह, ब्रह्मेत्यादि।—वमनौषधपानानन्तरीयविधिमाह, पीत इत्यादि।—तन्मना इति—वान्तिमनाः। अङ्गुलीभ्यामित्यत्र परिकर्त्तितनखाभ्यां कण्ठमभिस्पृशन्निति शेषः। चरकेऽपि—सुपरिलिखितनखाभ्यां कण्ठमभिस्पृशन्नित्युक्तम्। अनायस्तेति—ऋजुः, मृदुना नालेनेत्युत्पलनालेन॥ १॥

वमनविधिमभिधाय वमनयोगानाह, कणेत्यादि।—अत्र कणादीनां मिलित्वा कर्षः। यष्टीकषाय—यष्टीमधुकषायम्। कषायश्च—"क्वाथ्यद्रव्यस्य कुडवं श्रपयित्वा जलाढके। चतुर्भागावशिष्टन्तु वमनेष्ववचारयेत्॥" इति परिभाषया कार्यः। नन्वत्र

तण्डुलजलनिष्पिष्टं यः पीत्वा तथा वमति पूर्वाह्णे।
फलिनीवल्कलमुष्णं हरति गरं सकफपित्तरुजम्।
क्षौद्रलीढं ताम्ररजो वमनं गरदोषनुत्॥ ३॥

पञ्चकषायः,—

कटुरूपं वचा निम्बं पटोलं फलिनीत्वचम्।
क्वाथयित्वा पिबेत् तोयं वान्तिकृन्मदनान्वितम्॥ ४॥
निम्बकषायोपेतं फलिनीगदमदनमधुकसिन्धूत्थम्।
मधुयुतमेतद्वमनं खलु कफपूर्णाशये शस्तम्॥ ५॥

---

चतुर्भागावशिष्टः कषायः प्रस्थमात्रो भवति; चरके तु—"पूर्वं शरावं पिबेत्" इत्युक्तम्, अतो विरोधः; नैवं, चरके तु—पूर्वं शरावमिति यदुक्तं तदेकशरावपानाभिप्रायेण; तेनेह प्रस्थमाने कषाये शरावमेकं पीत्वा शेषकषायभागो रक्षणीयोऽयोगे सति पुनःपानार्थमित्यभिप्रायः। एतच्च मात्राकथनं मन्दबुद्धेरनध्यवसायस्य व्यादिष्टेयं कथं क्रियते इति, वस्तुतस्तु कोष्ठाद्यपेक्षयैव मात्रा कल्पनीयेति सिद्धान्तः। अत एव "कोष्ठं विभज्य भेषज्यमात्राम्" इत्युक्तम्। सर्वत्रैव वमनयोगे सुखीकरणे मधुसैन्धवञ्च देयम्। न चोष्णे मधु विरुध्यत इति वाच्यं, वमनस्यापक्वस्यैव ऊर्ध्वगमनात्; जठराग्निपाके हि विरोधो भवति। इत्थैवमात्तु क्वाथे कदाचित् पाकसम्भावनया मधु न प्रक्षिपन्त्येव॥ २॥

तण्डुलसलिलेत्यादौ।—पानमपि तण्डुलजलेनैव। फलिनी—प्रियङ्गुः, तद्वल्कलं कर्षमानं, मधुसैन्धवे अपि कर्षमाने; एतच्च दिक्मात्रं, तेन कोष्ठाद्यपेक्षया न्यूनं बहु वा क्रियते। पानार्थं तण्डुलसलिलमपि शरावमात्रं,—"पूर्णं शरावम्" इत्युक्तेः। क्षौद्रेत्यादौ।— रसायनाधिकारोक्तताम्रयोगवत्मारितपुटितनेपालताम्रचूर्णं रक्तिपञ्चकं मधुना संमर्द्य लेह्यम्। अस्य ताम्रयोगस्य वमनकारकत्वं वमनौषधभावितत्वादेवेति ज्ञेयम्॥ ३॥

कटुकमित्यादावपि पूर्वोक्तपरिमाणयैव क्वाथः करणीयः। मदनफलन्तु कर्षमात्रं प्रक्षेप्यमित्याहुः॥ ४॥

निम्बकषायोपेतमित्यादौ।—गदः,—कुष्ठम्। फलिनीकुष्ठमधुकानां मिलित्वा कर्षः, मदनफलस्य च कर्षः, सैन्धवस्य माषकचतुष्टयं, मधुनोऽष्टौ माषका इति प्रक्षेपव्यवस्था इत्याहुः॥ ५॥

फलजीमूतकेक्ष्वाकु-कुटजाः कृतवेधनः ।
धामार्गवश्च संयोज्याः सर्वथा वमनेष्वमी ॥ ६ ॥
क्रमात् कफः पित्तमथाऽनिलश्च यस्यैति सम्यग्वमितः स इष्टः ।
हृत्पार्श्वमूर्द्धेन्द्रियमार्गशुद्धौ तनोर्लघुत्वेऽपि च लक्ष्यमाणे ॥ ७ ॥
दुश्छर्दिते स्फोटककोठकण्डू-हृत्खाविशुद्धिर्गुरुगात्रता च ।
तृण्मोहमूर्च्छाऽनिलकोपनिद्रा-बलादिहानिर्वमितेऽतिविद्यात् ॥ ८ ॥
ततः सायं प्रभाते वा क्षुद्वान् पेयादिकं भजेत् ॥ ९ ॥

---

वमनयोगेषु योगिकद्रव्याण्याह, फलमित्यादि ।—फलं—मदनफलम् , जीमूतकः,—देवदाली, घोषकभेदः ; इक्ष्वाकुः,—तिक्ततुम्बी , कृतवेधनः,—ज्योत्स्निका ; धामार्गवः,—पीतघोषः , एषां जीमूतादीनाञ्च फलम् । एते च दोषाद्यपेक्षया कल्क-क्वाथादिकल्पनया वमनयोगेषु योज्या इत्यर्थः ॥ ६ ॥

इदानीं वमनस्य सम्यग्योगलक्षणमाह, क्रमादित्यादि ।—क्रमादिति वचनेन यथोक्तक्रमलङ्घनेन कफाद्यागमनं न सम्यग्योगलक्षणमिति बोधयति । यतः कफात् पूर्वं यदा पित्तं गतं स्यात् तदा तत्पित्तवमनेऽपि सति न शुद्धिः । किन्तु यदैवामाशयाधोभागगतं पित्तं वमनमानयति तदैव शुद्धिः । तच्च पित्तागमनं कफागमनानन्तरमेव भवति । इयमेवात्यन्तिकी शुद्धिरव्यभिचारिणी । हृत्पार्श्वेत्यादिना वमनस्य नैसर्गिक-शुद्धिमाह, सम्यग्वमित इष्ट इत्यन्वयः ॥ ७ ॥

दुश्छर्दित इत्यादिना अयोगातियोगलक्षणमाह, हृत्खाविशुद्धिरिति । —हृदयस्य तथा खानामिन्द्रियाणां स्रोतसामशुद्धिरित्यर्थः । तृण्मोहेत्यादिना अति-योगलक्षणमाह । अतिवमिते इत्यन्वयः । आदिशब्देनैव वर्णस्वरादिग्रहणम् ; बलाति-हानिरित्यपि पाठः ॥ ८ ॥

एतदनन्तरं किं पथ्यं देयं न, वेति तत्राह, ततः इत्यादि ।—यस्य सम्यग्योगः क्षुधा च स्यात् तदा सायम्, अन्यथा तु प्रातः पेयादिकं भजेदित्यर्थः । भेले-ऽप्युक्तम्—"वमितं लङ्घयेत् सम्यक् शुद्धिलिङ्गान्यवेक्षयन् । तानि दृष्ट्वा तु पेयादिक्रमं कुर्य्यान्न लङ्घयेत् ॥" इति ॥ ९ ॥

पेयां विलेपीमकृतं कृतञ्च यूषं रसं त्रिर्द्विरथैकशश्च।
क्रमेण सेवेत विशुद्धकायः प्रधानमध्यावरशुद्धिशुद्धः॥ १०॥

---

तमेव पेयादिक्रममाह, पेयामित्यादि।—पेयादिलक्षणञ्च ज्वराधिकार एवोक्तं व्याख्यातञ्च। विलेपीशब्दो विलेपीवचनम्। अकृतो यूषः स्नेहाद्यसंस्कृतः, कृतस्तु स्नेहलवणादिसंस्कृतः; एवं रसेऽपि कृताकृतव्यवस्था। उक्तञ्च सूदशास्त्रे—"अस्नेहलवणं सर्वमकृतं कटुकैर्विना। विज्ञेयं लवणस्नेहकटुकैः संस्कृतं कृतम्॥" इति। अस्नेहलवणमितीषत्स्नेहलवणयुक्तम्। अत एवोपकल्पनीये तनुना तनुस्नेहलवणोपपन्नेन मुद्गयूषेणेत्युक्तम्। असंस्कृतमिति वचनाच्च स्वरसाधनं यावता भवति तावदेव लवणादिकं कृते देयमिति बोधयति। अकृतकृतयोर्मध्ये अकृतो लघुर्भवति, उक्तं हि—"अकृताख्यो लघुस्तत्र गुरुरिष्टो यतः स हि" इति। अकृतं कृतञ्चेति।—चकारोऽयमन्वाचयशिष्टः, तेन कृतस्यानैयत्यं बोधयति; ततश्चाकृतावेव यूषरसौ लाघवादग्निसन्धुक्षणार्थे देयौ, कृतौ पुनरवस्थाविशेषादिति। अत एवोपकल्पनीये तनुना तनुस्नेहलवणोपपन्नेनेत्यनेन चौदनस्यार्पितेत्यनेन च अकृतयोरेव यूषरसयोर्दानं साक्षादुक्तं, कृतौ पुनरवस्थाविशेष नियतत्वान्न साक्षादुक्तौ। त्रिरित्यन्नकालत्रयं, द्विरित्यन्नकालद्वयम्; एकश इत्येकान्नकालम्। एतच्च त्रिरित्यादि प्रत्येकं पेयादिभिः सम्बध्यते। तथा त्रिरित्यादि पदत्रयञ्च प्रधानशुद्ध्यादिपदेषु त्रिषु यथाक्रमं योज्यं, तेन प्रधानशुद्धिशुद्धे पेयादिक्रमः प्रत्येकं त्रिः कर्त्तव्यः, तेनान्नकालत्रये पेया, ततः परेऽन्नकालत्रये विलेपी, ततः परेऽन्नकालत्रये कृताकृतयूषयोरन्यतरेण संहितमन्नं, ततोऽपि च परेऽन्नकालत्रये कृताकृतरसयोरन्यतरेण संहितमन्नं देयमिति। द्वादशभिरन्नकालैर्वमनदिनसायाह्नात् प्रभृति सप्तरात्रेण पेयादिक्रमः समाप्यते। अन्नकालस्तु लक्षणसिद्धः सायं प्रातश्चेति। अयमेव च क्रम उपकल्पनीयेऽपि; ततः सायाह्ने लोहितशालितण्डुलानामित्यादिना यावद् द्वादशे चान्नकाले इत्यनेनोक्तः। एवं मध्यशुद्धिशुद्धे द्विः पेयादिक्रमः। अवरशुद्धिशुद्धे चैकैकशः पेयादिक्रमो व्याख्येयः। एवञ्च मध्यशुद्धिशुद्धेऽष्टान्नकालिकः, अवरशुद्धिशुद्धे तु चतुरन्नकालिकः क्रमो भवतीति। व्याख्यान्तरञ्च मत्कृतचरकतत्त्वप्रदीपिकायामनुसन्धेयम्। यद्यपि प्रधानशुद्ध्या निःशेषदोषहरणादौदर्य्यः पावको निरपवाद एव भवति, तथापि तत्र भूरिदोषनिर्हरणेन तात्कालिकाशयदौर्बल्यादग्निमान्द्यं मनागेव सम्भवतीति तेनात्र पेयादिक्रमश्चिरं क्रियत इति ज्ञेयम्॥ १०॥

जघन्यमध्यप्रवरे [redacted] वेगाश्चत्वार इष्टा वमने षडष्टौ।
दशैव ते द्विविगुणा विरेके प्रस्थस्तथा द्विविचतुर्गुणश्च ॥ ११ ॥
पित्तान्तमिष्टं वमनं विरेकादर्द्धं कफान्तञ्च विरेकमाहुः।
द्वित्रान् सविट्कानपनीय वेगान् मेयं विरेके वमने तु पीतम् ॥१२॥
वमने च विरेके च तथा शोणितमोक्षणे।
सार्द्धत्रयोदशपलं प्रस्थमाहुर्मनीषिणः ॥
अयोगे लङ्घनं कार्यं पुनर्वापि विशोधनम्।
अतियोगे घृताभ्यक्तमवगाह्य हिमे जले ॥

---

इदानीं प्रधानशुद्ध्यादिज्ञानार्थं लक्षणमाह, जघन्येत्यादि।—जघन्यमध्यप्रवरे वमन यथाक्रम चत्वारः षडष्टौ वेगा इष्टाः, तेन चतुर्भिर्वेगैर्यद्वमनं तज्जघन्य, यत्तु षड्भिस्तन्मध्यम, यत् त्वष्टाभिस्तत्प्रवरम्, तथा विरेकेऽपि जघन्ये दश वेगाः, मध्ये तु विरेचने द्विगुणा दश विंशतिरित्यर्थः। प्रवरे तु विरेचने त्रिगुणा दश त्रिंशदित्यर्थः। वेगसङ्ख्यादिभेदेन जघन्यादिभेदमभिधाय दोषमानभेदेनापि विरेचनस्य जघन्यमध्यप्रवरता क्रमेणाह, प्रस्थस्तथेति द्विविचतुर्गुणश्चेति। जघन्ये विरेके द्विगुण. प्रस्थः, मध्ये तु त्रिगुण, प्रवरे च चतुर्गुण इति ॥ ११ ॥

पित्तान्तमित्यादिना वमनविरेचनयोर्दोषप्रत्यक्षोपलक्षितामान्तिकीं शुद्धिं तथा वमनस्य तु दोषमानभेदोपलक्षितां मानिकीं शुद्धिमाह।—पित्तमवसानमन्ते यस्य तत् पित्तान्तम्, एव कफान्तमपि ज्ञेयम्। विरेकादर्द्धमिति।—अनेन वमनस्य दोषपलाद्योपलक्षितात्यन्तिकी शुद्धिरुक्ता। जघन्यमध्यप्रवरे विरेके प्रस्थस्तथेत्यादिना यद्दोषमानमुक्तं तदपेक्ष्य वमनेऽर्द्धमित्यर्थः। तेन वमने जघन्ये प्रस्थ एकः, मध्ये [redacted] सार्द्धप्रस्थः, प्रवरे तु द्वौ प्रस्थाविति। एतेन वैगिकी मानिकी चात्यन्तिकी चेति शुद्धित्रयमुक्तम्; लघ्वाद्यैरित्यादिना चाङ्गिकी शुद्धिः पूर्वमेवोक्ता। तेन चतुर्विधा शुद्धिश्चरकेऽप्युक्ता, प्रपञ्चस्तस्य वचनस्य चरकतत्त्वप्रदीपिकायामनुसन्धेय इति। वमने विरेचने च यथा दोषमानं कार्यं तदाह, द्वित्रानित्यादि।—द्वौ वा त्रयो वा परिमाणनैव द्वित्राः। द्वित्रानित्यव्यवस्थितपरिभाषया अवशमानस्य नियततां दर्शयति। वमने तु पीतमिति।—वमने तु पीतमौषधं वर्जयित्वा शेषो मेयः ॥१२॥

पूर्वन्तु विरेके प्रस्थ इत्युक्तम्, अतस्तत्स्वरूपमाह,—वमने चेत्यादि। क्रमेण

उपाचरेत् सिताघौद्रमिश्रैर्लेहैश्चिकित्सकः ।
वमनेऽतिप्रवृत्ते तु हृद्यं कार्य्यं विरेचनम् ॥ १३ ॥
न वामयेत्तैमिरिकं न गुल्मिनं न चापि पाण्डूदररोगपीड़ितम् ।
स्थूलक्षतक्षीणकृशातिवृद्धानर्शोऽर्दिताक्षेपकपीड़िताश्च ॥
रुक्षे प्रमेहे तरुणे च गर्भे गच्छत्यथोर्द्धं रुधिरे च तीव्रे ।
दुष्टे च कोष्ठे क्रिमिभिर्मनुष्यं न वामयेद्वर्चसि चातिबद्धे ॥
एतेऽप्यजीर्णव्यथिता वाम्या ये च विषातुराः ।
अत्युल्वणकफा ये च ते च स्युर्मधुकाम्बुना ॥ १४ ॥

इति वमनाधिकारः ।

## अथ विरेचनाधिकारः ।

स्निग्धस्विन्नाय वान्ताय दातव्यन्तु विरेचनम् ।
अन्यथा योजितं ह्येतद्ग्रहणीगदकृन्मतम् ॥ १ ॥

---

वमनयोगातियोगचिकित्सामाह, उपाचरेत् इत्यादि ।—सिताक्षौद्र—वमनं विरेचनञ्च । लेहैरिति—शकृल्लाक्षैः । अतिवान्ते च विरेचनं प्रतिमार्गहरणकफलात् ॥ १३ ॥
अवाम्यानाह,—न वामयेदित्यादि । अवाम्यलिङ्गोक्तानामप्यात्ययिकव्याधौ वमनमाह—एतेऽपीत्यादि ॥ १४ ॥

इति वमनाधिकार विवृतिः ।

वमनानन्तरमेव विरेचनस्य विधानाद्वमनमभिधाय विरेचनमाह, स्निग्धेत्यादि ।—स्निग्धस्विन्नायेति ।—वमनानन्तरमपि पुनः स्निग्धस्विन्नाय । तदुक्तं—"कर्म्मणां वमनादीनाम् अन्तरे त्वन्तरे पुनः । स्नेहस्वेदौ प्रयुञ्जीत सशोधनमनन्तरम् ॥" इति । अन्यथेति—वमनं विना । सुश्रुतेऽप्युक्तम्—"अवान्तस्य हि सम्यग्विरिक्तस्यापि सतोऽधः स्रस्तः श्लेष्मा ग्रहणीं छादयेत्" इति । अयञ्च विरेचनयोगः पूर्वोक्तमात्रकम्येन देयः । यतो हि वाग्भटे—"श्लेष्मकाले गते ज्ञात्वा कोष्ठं सम्यग्विरेचयेत्" इति ॥ १ ॥

पित्तेन मृदुकोष्ठः स्यात् क्रूरो वातकफाश्रयात् ।
मध्यमः समदोषत्वान्मात्रा योज्याऽनुरूपतः ॥ २ ॥
शर्कराक्षौद्रसंयुक्तं त्रिवृच्चूर्णावचूर्णितम् ।
रेचनं सुकुमाराणां त्वक्पत्रमरिचांशिकम् ॥
त्रिवृच्चूर्णं सितायुक्तं पिबेच्छ्रेष्ठं विरेचनम् ॥ ३ ॥
छित्त्वा द्विधेक्षुं परिलिप्य कल्कैस्त्रिभण्डिजातैः परिवेष्ट्य रज्ज्वा ।
पक्वान्तु सम्यक् पुटपाकयुक्त्या खादेत्तु तत् पित्तगदी सुशीतम् ॥४॥
पिप्पलीनागरक्षारं श्यामा त्रिवृतया सह ।
लेहयेन्मधुना सार्द्धं कफव्याधौ विरेचनम् ॥ ५ ॥
हरीतकीविडङ्गानि सैन्धवं नागरं त्रिवृत् ।
मरिचानि च तत् सर्वं गोमूत्रेण विरेचनम् ॥ ६ ॥

---

मात्राविषये कोष्ठक्रममाह, पित्तेनेत्यादि ।—मात्रा योज्यानुरूपत इति ।—मृदौ मृद्वी, क्रूरे तीक्ष्णा, मध्यमे मध्यमेत्यर्थः ॥ २ ॥

शर्करेत्यादि ।—सुश्रुतस्य ।—त्रिवृच्च श्रेष्ठत्वादरुणमूला ग्राह्या, एवमन्यत्रापि ; यदाह सुश्रुतः,—"अरुणाभं त्रिवृन्मूलं श्रेष्ठमाहुर्विरेचने" इति । अत्र शर्करा त्रिवृच्चूर्णसमा, त्रिवृच्चूर्णमपि क्षौद्राद्यपेक्षया मानम्, लेहत्वमात्रकारकं क्षौद्रम् । त्वक्पत्रमरिचांशिकमिति ।—त्रिवृच्चूर्णापेक्षया त्वक्पत्रादि मिलित्वा पादिकमित्यर्थः । त्वक्पत्रसुरभीकृतमिति पाठान्तरे—यावता सौरभ्यं स्यात् तावदेव त्वक्पत्रं देयमिति । त्रिवृच्चूर्णं मा ८, शर्करा मा ८, गुडत्वक्तेजपत्रमरिच म २ ७ । त्रिवृदित्यादि ।—चरकस्य ।—पूर्ववदत्रापि त्रिवृन्मानं ज्ञेयम् ॥ ३ ॥

छित्त्वेत्यादि ।— चरकस्य ।— त्रिभण्डी— त्रिवृताभेदः । पुटपाकयुक्त्येति ।— काश्मर्यादिपत्राच्छादन-कुशवेष्टन-मृदावलेपन निर्धूमाङ्गारप्रक्षेपणादिना ॥ ४ ॥

पिप्पलीत्यादि ।—क्षारः,—यवक्षारः, श्यामेति—श्याममूला त्रिवृत् ; त्रिवृदित्यरुणमूला । अत्र पिप्पलीनागरयोः कटुत्वमात्रकारिका मात्रा, तेन पिप्पलीचूर्णं माषा २, शुण्ठीचूर्णं माषा २, क्षारादित्रयस्य प्रत्येकं माषकचतुष्टय, ततो मिलिताः कर्षो लेह्यः, एवमन्यत्राप्यूह्यमित्याहुः ॥ ५ ॥

हरीतकीत्यादि ।—एषां चूर्णं गोमूत्रेण पेयमित्यर्थः । हरीतकी मा ४,

उपाचरेत् सिताक्षौद्रमिश्रैर्लेहैश्चिकित्सकः ।
वमनेऽतिप्रवृत्ते तु हृद्यं कार्य्यं विरेचनम् ॥ १३ ॥
न वामयेत्तैमिरिकं न गुल्मिनं न चापि पाण्डूदररोगपीड़ितम् ।
स्थूलक्षतक्षीणकृशातिवृद्धानर्शोऽर्दिताक्षेपकपीड़िताश्च ॥
रूक्षे प्रमेहे तरुणे च गर्भे गच्छत्यथोर्द्ध्वं रुधिरे च तीव्रे ।
दुष्टे च कोष्ठे क्रिमिभिर्मनुष्यं न वामयेद्वर्चसि चातिबद्धे ॥
एतेऽप्यजीर्णव्यथिता वाम्या ये च विषातुराः ।
अत्युल्वणकफा ये च ते च स्युर्मधुकाम्बुना ॥ १४ ॥

इति वमनाधिकारः ।

---

## अथ विरेचनाधिकारः ।

स्निग्धस्विन्नाय वान्ताय दातव्यन्तु विरेचनम् ।
अन्यथा योजितं ह्येतद्ग्रहणीगदकल्पितम् ॥ १ ॥

---

वमनयोगातियोगचिकित्सामाह, अयोग इत्यादि ।—विशोधनं—वमनं विरेचनञ्च ।
लेहैरिति—वक्ष्यमाणैः । अतिवान्तौ च विरेचनं प्रतिमार्गहरणरूपत्वात् ॥ १३ ॥
अवाम्यानाह,—न वामयेदित्यादि । अवाम्यत्वेनोक्तानामप्यात्ययिकव्याधौ वमनमाह—एतेऽपीत्यादि ॥ १४ ॥

इति वमनाधिकारविवृतिः ।

---

वमनानन्तरमेव विरेचनस्य विधानाद्वमनमभिधाय विरेचनमाह, स्निग्धेत्यादि ।—स्निग्धस्विन्नायेति ।—वमनानन्तरमपि पुनः स्निग्धस्विन्नाय । तदुक्तं—"कर्मणां वमनादीनाम् अन्तरे त्वन्तरे पुनः । स्नेहस्वेदौ प्रयुञ्जीत संशोधनमनन्तरम् ॥" इति । अन्यथेति—वमनं विना । सुश्रुतेऽप्युक्तम्—"अवान्तस्य हि सम्यग्विरिक्तस्यापि सतोऽधः स्रस्तः श्लेष्मा ग्रहणीं छादयेत्" इति । अयञ्च विरेचनयोगः पूर्वोक्तमतिक्रम्यैव देयः । अत्र हि वाग्भटे—"श्लेष्मकाले गते ज्ञात्वा कोष्ठं सम्यग्विरेचयेत्" इति ॥ १ ॥

पित्तेन मृदुकोष्ठः स्यात् क्रूरो वातकफाश्रयात्।
मध्यमः समदोषत्वान्मात्रा योज्याऽनुरूपतः॥ २॥
शर्कराक्षौद्रसंयुक्तं त्रिवृच्चूर्णावचूर्णितम्।
रेचनं सुकुमाराणां त्वक्पत्रमरिचांशिकम्॥
त्रिवृच्चूर्णं सितायुक्तं पिबेच्छ्रेष्ठं विरेचनम्॥ ३॥
छित्त्वा द्विधेक्षुं परिलिप्य कल्कैस्त्रिभण्डिजातैः परिवेष्ट्य रज्ज्वा।
पश्चात्तु सम्यक् पुटपाकयुक्त्या खादेत्तु तत् पित्तगदी सुशीतम्॥४॥
पिप्पलीनागरक्षारं श्यामा त्रिवृतया सह।
लेहयेन्मधुना सार्द्धं कफव्याधौ विरेचनम्॥ ५॥
हरीतकीविडङ्गानि सैन्धवं नागरं त्रिवृत्।
मरिचानि च तत् सर्वं गोमूत्रेण विरेचनम्॥ ६॥

---

मात्राविषयं कोष्ठकमाह, पित्तेनेत्यादि।—मात्रा योज्याऽनुरूपत इति।—मृद्वी मृद्वी, क्रूरे तीक्ष्णा, मध्यमे मध्यमेत्यर्थः॥ २॥

शर्करेत्यादि।—सुश्रुतस्य।—त्रिवृत् श्रेष्ठत्वादरुणमूला ग्राह्या, एवमन्यत्रापि। यदाह सुश्रुतः,—"अरुणाभं त्रिवृन्मूलं श्रेष्ठमाहुर्विरेचने" इति। अत्र शर्करा त्रिवृच्चूर्णसमा, त्रिवृच्चूर्णमपि कोष्ठाद्यपेक्षया ग्राह्यम्; लेहत्वमात्रकारकं क्षौद्रम्। त्वक्पत्रमरिचांशिकमिति।—त्रिवृच्चूर्णापेक्षया त्वक्पत्रादि मिलित्वा पादिकमित्यर्थः। त्वक्पत्रसुरभीकृतमिति पाठान्तरे—यावता सौरभ्यं स्यात् तावदेव त्वक्पत्रं देयमिति। त्रिवृच्चूर्णं मा ८, शर्करा मा ८, गुडत्वक्तेजपत्रमरिचं प्र १ ३। त्रिवृदित्यादि।—चरकस्य।—पूर्ववदेवात्रापि त्रिवृन्मानं ज्ञेयम्॥ ३॥

छित्त्वेत्यादि।—चरकस्य।—त्रिभण्डी— त्रिवृताभेदः। पुटपाकयुक्त्येति।—काश्मर्यादिपत्राच्छादन-कुशवेष्टन-मृदावलेपन-निर्धूमाङ्गारशोषणादिना॥ ४॥

पिप्पलीत्यादि।—क्षारः,—यवक्षारः, श्यामेति—श्याममूला त्रिवृत्। त्रिवृदित्यरुणमूला। अत्र पिप्पलीनागरयोः कटुत्वमात्रकारिका मात्रा, तेन पिप्पलीचूर्णं माषा २, शुण्ठीचूर्णं माषा २, क्षारादित्रयस्य प्रत्येकं माषकचतुष्टयं, ततो मिलित्वा कर्षो लेह्यः, एवमन्यत्राप्युक्तमित्याहुः॥ ५॥

हरीतकीत्यादि।—एषां चूर्णं गोमूत्रेण पेयमित्यर्थः। हरीतकी मा ४,

त्रिवृच्छ्याणवयसमा त्रिफला तत्समानि च ।
क्षारकृष्णाविड़ङ्गानि तच्चूर्णं मधुसर्पिषा ।
लिह्याद्गुड़ेन गुड़िकां कृत्वा वाप्युपयोजयेत् ॥
कफवातकृतान् गुल्मान् प्लीहोदरभगन्दरान् ।
हन्त्यन्यानपि चाप्येतन्निरपायं विरेचनम् ॥ ७ ॥

अभयाद्यो मोदकः,—

अभया पिप्पलीमूलं मरिचं नागरं तथा ।
त्वक्पत्रपिप्पलीमुस्त-विड़ङ्गामलकानि च ॥
कर्षः प्रत्येकमेषान्तु दन्त्याः कर्षत्रयं तथा ।
षट्कर्षाश्च सितायास्तु द्विपलं त्रिवृतो भवेत् ॥
सर्वं सुचूर्णितं कृत्वा मधुना मोदकं कृतम् ।
खादेत् प्रतिदिनञ्चैकं शीतञ्चानुपिवेज्जलम् ॥
तावद्विरिच्यते जन्तुर्यावदुष्णं न सेवते ॥
पाण्डुरोगं विषं कासं जङ्घापार्श्वरुजां तथा ।
पृष्ठार्त्तिमूत्रकृच्छ्रञ्च दुर्नाम सभगन्दरम् ॥
अश्मरीमेहकुष्ठञ्च दाहशोथोदराणि च ।
यक्ष्माणं चक्षुषो रोगं क्रमं वैद्येन जानता ।
योजितोऽयं निहन्त्याशु अभयाद्यो हि मोदकः ॥ ८ ॥
हरीतक्यास्तु कर्षार्द्धं तदर्द्धं त्रिवृतस्तथा ।
सिताम्बुना समं पिष्ट्वा घृते तु भर्जयेत् मनाक् ॥

---

विडङ्गादित्रयस्य प्र मा २, त्रिवृत् मा ५, मरिच मा १, एवं मिलित्वा कर्षमात्रं गोमूत्रपलेनालोड्य पेयमित्यर्थः ॥ ६ ॥

त्रिवृच्छ्याणवयेत्यादि।—त्रिवृताचूर्ण मा १२, त्रिफलाचूर्ण प्र मा ४, यवक्षारादीनाञ्च प्र मा ५, मिलितचूर्णात् कर्षमेकं गृहीत्वा घृतमधुभ्यां लेह्यम्। गुडिकापक्षे तु—पुराणगुड़ तो ८, एतत्त्रिवृतादिचूर्णेन समं विमर्द्य कर्षप्रमाणा गुडिका कार्या ; तन्मोदकमनुपेयम् ॥ ७ ॥

अभयेत्यादि योगद्वयं स्पष्टम् ॥ ८ । ९ ॥

तद्द्रव्यं शीतलं कृत्वा सिताकर्षेण योजयेत् ।
तावत् विरिच्यते जन्तुर्यावदुष्णं न सेवते ॥
एरण्डतैलं त्रिफला-क्वाथेन द्विगुणेन च ।
युक्तं पीत्वा पयोभिर्वा न चिरेण विरिच्यते ॥ ९ ॥

स्रोतोविशुद्धीन्द्रियसम्प्रसादौ
लघुत्वमूर्जोऽग्निरनामयत्वम् ।
प्राप्तिश्च विट्पित्तकफानिलानाम्
सम्यग्विरिक्तस्य भवेत् क्रमेण ॥ १० ॥
स्यात् श्लेष्मपित्तानिलसम्प्रकोपः
सादस्तथाग्नेर्गुरुता प्रतिश्या ।
तन्द्रा तथा छर्दिररोचकश्च
वातानुलोम्यं न च दुर्विरिक्ते ॥ ११ ॥
कफास्रपित्तक्षयजाऽनिलोत्थाः
सुप्त्यङ्गमर्दक्लमवेपनाद्याः ।
निद्राबलाभावतमःप्रवेशाः
सोन्मादहिक्काश्च विरेचितेऽति ॥

---

विरेकसम्यग्योगलक्षणमाह, स्रोतोविशुद्धीत्यादि ।—चरकस्य ।—ऊर्जोऽग्निरिति—बलवानग्निरित्यर्थः । अनामयत्वमिति ।—विरेचनजेतरव्याधिजनितविकाराभावः । क्रमेण विट्पित्तादीनां प्राप्तिः प्रवृत्तिरित्यर्थः । अत्रापि यथोक्तक्रमलङ्घनेन विट्-पित्तादिप्रवर्तने न सम्यग्विरिक्तलक्षणं भवतीति पूर्ववदेव ज्ञेयम् । अत्रापि पूर्वार्द्धेन विरेकस्य ऐन्द्रिकी शुद्धिः, द्वितीयार्द्धेन पुनरात्मिकी शुद्धिरिति ज्ञेयम् । स्यादित्यादिना अयोगजनितविरेकलक्षणमाह, न च वातानुलोम्यमित्यादि ।—वातविबन्ध इत्यर्थः । गुरुतेति—कोष्ठस्य गात्रस्य च ॥ १० । ११ ॥

कफेत्यादिना विरेचनातियोगलक्षणमाह ।—क्षयशब्दः कफादिभिः प्रत्येकं सम्बध्यते, अभावशब्दोऽपि निद्राबलाभ्यामिति । अतिविरेचित इत्यन्वयः । अत्रैव यदि भ्रमान्यादिकं स्यात् तदा तस्मिन् दिवसे लङ्घनमन्यथा तु सायं यवागूर्देयेत्याह,

मन्दाग्निमक्षीणमसंविरिक्तम्
न पाययेत् तद्दिवसे यवागूम्।
विपर्यये तद्दिवसे तु सायम्
पेयाक्रमो वान्तवदिष्यते तु॥
यथाणुरग्निस्तृणगोमयाद्यैः
सन्धुक्ष्यमाणो भवति क्रमेण।
महान् स्थिरः सर्वसहस्तथैव
शुद्धस्य पेयादिभिरन्तराग्निः॥ १२॥

कषायमधुरैः पित्ते विरेकः कटुकैः कफे।
स्निग्धोष्णलवणैर्वायावप्रवृत्ते च पाययेत्॥
उष्णाम्बु स्वेदयेच्चास्य पाणितापेन चोदरम्।
उत्थानेऽल्पे दिने तस्मिन् भुक्त्वान्येद्युः पुनः पिबेत्॥
अदृढस्नेहकोष्ठस्तु पिबेदूर्ध्वं दशाहतः॥
भूयोऽप्युपस्कृततनुः स्नेहस्वेदैर्विरेचनम्।
यौगिकं सम्यगालोच्य स्मरन् पूर्वमनुक्रमम्॥ १३॥
दुर्बलः शोधितः पूर्वमल्पदोषः कृशो नरः।
अपरिज्ञातकोष्ठस्तु पिबेन्मृद्वल्पमौषधम्॥

---

मन्दाग्निमित्यादि।—सुश्रुतस्य।—विपर्यये इति।—अग्निमान्द्याद्यभावे। पेयाक्रम इति।—"पेयां विलेपीमकृतम्" इत्यादिनोक्तः। उक्तपेयाक्रमस्य फलमाह, यथेत्यादि॥१२॥

इदानीं दोषभेदाद्विरेकमाह, कषायेत्यादि।—वाग्भटस्य। वायाविति छेदः। अप्रवृत्ते तु पुरीषादौ उष्णाम्बु पाययेदिति योज्यम्। अत्यन्ताल्पप्रवृत्ते दोषे अपरस्मिन्नहनि विरेकमाह, उत्थान इत्यादि।—उत्थानं—मलप्रवर्त्तनम्। पुनः पिबेदित्यत्र विरेचनमिति शेषः। यदि पुनरसम्यक्स्निग्धकोष्ठो भवति पुमान् तदा दशाहादूर्ध्वं विरेचनं पिबेदित्याह, अदृढस्नेहकोष्ठ इत्यादि।—अदृढस्नेहकोष्ठ इति—असम्यक्स्निग्धकोष्ठ इत्यर्थः। स्मरन् पूर्वमनुक्रममिति।—येन मात्राऽभियोगेन पूर्वमयोगोऽभूत् तत् स्मृत्वा परिहर्त्तव्यमिति भावः॥ १३॥

दुर्बलादिषु यादृग्विरेचनं प्रयोक्तव्यं तदाह, दुर्बल इत्यादि।—दुर्बलः,—अल्पशक्ति-

रूक्षबह्वनिलक्रूर-कोष्ठव्यायामसेविनाम्।
दीप्ताग्नीनाञ्च भैषज्यमविरेच्यैव जीर्यति॥
तेभ्यो वस्तिं पुरा दद्यात् ततः स्निग्धं विरेचनम्॥ १४॥
अस्निग्धे रेचनं स्निग्धं रूक्षं स्निग्धेऽतिशस्यते।
विरूक्ष्य स्नेहसात्म्यन्तु भूयः स्निग्धं विरेचयेत्॥ १५॥
पद्मकोशीरनागाह्व-चन्दनानि प्रयोजयेत्।
अतियोगे विरेकस्य पानालेपनसेचनैः।
सौवीरपिष्टाम्रवल्क-नाभिलेपोऽतिसारहा॥ १६॥
अविरेच्या बालवृद्ध-श्रान्तभीतनवज्वराः।
अल्पाग्न्यधोगपित्तास्र-क्षतपायुतिसारिणः॥

---

दीप्त, क्रमः,—चीर्णमात्र। अविरि—मदुवीर्यम्। अयमर्थः रूक्षादिवहकोष्ठादी यथा विरेचनं कार्यं तदाह, तेभ्य इत्यादि।—रूक्षादयः कोष्ठेन सार्धं सम्बध्यन्ते। अविरिच्यैवेति—विरिकमकृत्वा, अविरिचितैव इति केचित्। अन्ये तु—निरूहापेक्षा स्नेहवस्तेर्वातप्रशमकत्वेनानुवासनमत्र वस्तिशब्दार्थं व्याचक्षुः। अन्ये तूभयमपि व्याचक्षुः॥ १४॥

इदानीं यद्यस्मिन् प्रयोज्य तदाह, अस्निग्धेत्यादि।—अस्निग्ध इतीषत्स्निग्धे रूक्षम्। स्निग्धेऽतिशस्यत इति—अतिस्निग्धे रूक्ष विरेचनं प्रशस्त इत्यर्थः॥ १५॥

इदानीं विरेचनातियोगचिकित्सामाह, पद्मकेत्यादि।—ननु अयोगातियोगवत् विरेकमिथ्यायोगचिकित्सा कुतो नोक्ता? सत्यम्, दोषाणां हि सततो चतुर्विधैव गतिर्भवति, सम्यक्प्रवृत्तिरतिप्रवृत्तिरप्रवृत्तिरल्पप्रवृत्तिश्चेति। अथाल्पप्रवृत्तिरप्रवृत्तिश्चेति तु अयोगगृहीत एव। या अपि प्रातिलोम्येन प्रवृत्तिर्मिथ्यायोगेन ख्याता, सा अपि अयोगचितस्य दोषस्याप्रवर्त्तकत्वादयोगान्तर्भूतैव। अत एवोक्तं चरके—"अयोगः प्रातिलोम्येन न चाल्प वा प्रवर्त्तनम्" इति। अतो वमनविरेचनयोर्मिथ्यायोगं नेच्छन्तीति ज्ञात्वा मिथ्यायोगचिकित्सितस्यानुपादानं बोध्यम्॥ १६॥

निषिद्धविरेकानाह, अविरेच्या इति।—व्याख्यापितो निरूहः। अत्र निरूहानन्तरं विरेकनिषेध औत्सर्गिकः; तेन "तेभ्यो वस्तिं पुरा दद्यात्" इत्यर्थविधिना तदपवादो युज्यते एव। किंवा निरूहानन्तरं हि विरेकनिषेधः [illegible]न्तर एव

सशल्यास्थापितक्रूर-कोष्ठातिस्निग्धशोषिणः ।
गर्भिणी नवसूता च तृष्णार्त्तोऽजीर्णवानपि ॥ १७ ॥

इति विरेचनाधिकारः ।

---

## अथानुवासनाधिकारः ।

वातोल्बणेषु दोषेषु वाते वा वस्तिरिष्यते ।
यथोचितात् पादहीनं भोजयित्वाऽनुवासयेत् ॥ १ ॥

---

ज्ञेयः, सप्ताहादूर्द्ध्वन्तु विरेको विहित एवेति विधिनिषेधयोः कालभेदेन न विरोधः । उक्तं हि चरके,—"नरो विरिक्तस्तु निरूहदानं विवर्जयेत् सप्तदिनाव्यवस्थम् । शुद्धो निरूहेण विरेचनञ्च—" इति वदन्ति । अन्ये त्वेतद्विरोधभियैव "स्नेही वस्तिं पुरा दद्यात्" इत्यत्र वस्तिशब्दस्यानुवासनार्थमाहुरिति प्रागेवोक्तम् ॥१७॥

इति विरेचनाधिकार-विवृतिः ।

---

"विरेचनात् सप्तरात्रे गते जातबलाय वै । कृतान्नायानुवास्याय सम्यग्देयोऽनुवासनः" इत्यनेनानुवासनस्य विरेचनीयानन्तरीयत्वमुक्तम् ; अतो विरेचनाधिकारमनुवेष्ट्यवस्तिविचारः प्रक्रम्यते । अनुवासयन्नपि न दुष्यति अनुदिवसं वा दीयत इत्यनुवासनननिरुक्तिः सुश्रुतोक्ता ज्ञेया । अत्र सामान्यतो वस्तिविषयमाह, वातेत्यादि ।—वाग्भटस्य ।—यद्यपि सुश्रुते—"वस्तिर्वाते च पित्ते च कफे रक्ते च शस्यते" इत्यनेन पित्तकफरक्तानामपि वस्तिविषयत्वमुक्तं, तथापि "वस्तिर्वातहराणाम्" इति वचनात् प्राधान्येन वायोरेव वस्तिविषयत्वं, पित्तकफयोस्तु वातस्थानगतयोस्तथा स्वस्थानस्थितयोर्वातानुबन्धयोर्वा वस्तिविषयता । यदाह चरकः,—"पित्तं वा कफपित्तं वा पित्ताशयगतं हरेत् । संशयन् विस्रस्तान् वस्तिः पक्वाशयगतान् अयेत् ॥" इति । तथा—"एकोऽपकर्षत्यनिलं स्वमार्गात् पित्तं द्वितीयस्तु कफं तृतीयः ॥" रक्तमपि दुष्टं रक्तप्रसादनद्रव्यैर्दत्तवस्तिः प्रसादयति दोषहरत्वेनानुलोमयति । अत्र निरूहाङ्गस्यानुवासनस्य विधानं तावदाह, यथेत्यादि ।—उचितादभ्यस्तात् पादहीनं चतुर्भाग-

न चाभुक्तवते स्नेहः प्रणिधेयः कथञ्चन ।
सूक्ष्मत्वाच्छून्यकोष्ठस्य क्षिप्रमूर्द्ध्वमथोत्पतेत् ॥
षट्पली च भवेच्छ्रेष्ठा मध्यमा त्रिपली भवेत् ।
कनीयस्यध्यर्द्धपला त्रिधा मात्रानुवासने ॥
प्राग्देयमाद्ये द्विपलं पलार्द्धं वृद्धिर्द्वितीये पलमत्र वृद्धिः ।
कर्षद्वयं वा वसुमाषवृद्धिर्वस्तौ तृतीये क्रम एष उक्तः ॥

---

हीनम् । वस्तिर्हि द्विविधा, अनुवासननिरूहभेदात् । स्नेहवस्तिरनुवासनं, कषायवस्तिर्निरूहः । तत्र निरूहात्प्रागनुवासनस्य विधानम् ॥ १ ॥

अभुक्तवतेऽनुवासनवस्तिर्न देय इत्याह, न चेत्यादि ।—स्नेह इति—स्नेहवस्तिः । अत्रैव उपपत्तिमाह, सूक्ष्मत्वादित्यादि । विदग्धान्ने तु वस्तिर्न देयः ; उक्तं हि—"सदानुवासयेद्वैद्यो भोजयित्वाऽर्द्रपाणिकम् । ज्वरं विदग्धभुक्तस्य कुर्य्यात् स्नेहः प्रयोजितः ॥" इति । उत्तममध्यमाधमभेदापेक्षया त्रिविधामनुवासनमात्रामाह, षट्पलीत्यादि ।—अध्यर्द्धपलेति—सार्द्धपलमितामित्यर्थः । एतच्च षट्पलादिमात्राविधानं क्रमेणैव विधेयम् । न त्वेकदिन एवेत्याह, प्रागित्यादि ।—आद्ये षट्पलस्नेहे गुरुमात्रायामपि प्रथमं पलस्नेहस्य द्विपलं, ततो दिनैकं विश्राम्य पलार्द्धेन वृद्धिः ; एवं क्रमेण नवभिः स्नेहदानदिनैः षट्पलानि स्युः । अन्तरालदिवसाश्चाष्टावत्र मिलित्वा सप्तदश वासरा भवन्ति । द्वितीये मध्यमे त्रिपल इति यावत् । तत्र पलमादौ देयम्, तत एकैकदिनं विश्राम्य कर्षेण कर्षेण वृद्धिः । अत्रापि नवभिः स्नेहपानदिवसैः पलत्रयं पूर्य्यते । तृतीये कनीयसि सार्द्धपले चादौ कर्षद्वयं, तथैव एकैकदिनं विश्राम्य वसुपरिमितैरष्टाभिर्माषकैर्वृद्धिः कार्य्या । अत्रापि नवभिरेव स्नेहदानदिवसैः सार्द्धपलमात्रं पूर्य्यते । इयमेव हि कनीयसी मात्रा निरपाया सार्वलौकिकी सार्वकालिकी तद्व्यवहारसिद्धा च । उक्तं हि चरके—"घर्मव्यायामभाराध्वयानस्त्रीकर्षितेषु च । दुर्बले वातभग्ने च मात्रावस्तिः सदा हितः । ह्रस्वायाः स्नेहमात्राया मात्रावस्तिः समो भवेत् ॥" ह्रस्वाया स्नेहमात्राया योजितो वस्तिर्मात्रावस्तिरित्यर्थः । एतानि स्नेहदानदिनानि नवेत्युत्सर्गः ; तेन नवदिनादर्वागपि यदि स्नेहव्यापत् भवति, दिनत्रयेण चतुष्टयेन वा, तदा तावतैवानुवासनं समाप्यते अनुवासनान्तरञ्च न दीयते । न च स्नेहः केवलो

स तु सैन्धवचूर्णेन शताह्वेन च संयुतः ।
भवेत् सुखोष्णश्च तथा निरेति सहसा सुखम् ।
विरिक्तयानुवासयेत् सप्तरात्रात् परं तदा ॥ २ ॥

सुवर्णरूप्यत्रपुताम्ररीति-
कांस्यायसास्थिद्रुमवेणुदन्तैः ।
नलैर्विषाणैर्मणिभिश्च तैस्तैः
कार्य्याणि नेत्राणि सुकर्णिकानि ॥ ३ ॥

षड्द्वादशाष्टाङ्गुलसम्मितानि षड्विंशतिद्वादशवर्षजानाम् ।
स्युर्मुद्गकर्कन्धुसतीनवाहि-च्छिद्राणि वर्त्त्या पिहितानि चापि ॥

---

दैय', किम्बा केनाप्युपहित इत्याह, स त्वित्यादि ।—सुश्रुतस्य ।—चूर्णमानञ्च ग्रन्थेन लिखित यथा—"चूर्णमाषः पले स्नेहे सिन्धुजन्मशताह्वयोः" इति । चक्रस्तु भानुमत्यां सैन्धवशताह्वयोः प्रत्येकमङ्गुलीनयावसन्दग्धयाद्धं भागमित्याह । सहसेति ।—यद्यपि स्नेहस्य शीघ्रागमनं दोषायैव, यदुक्तं—"शीघ्रः शीघ्रं निःसेऽल्प. स्नेहोऽतिष्ठन् कार्य्यकृत्" इति, तथापि वक्ष्यमाणस्नेहनिर्गमनकालाधिककालनिरासार्थं सहसेत्युक्तम् । तेन सहसेत्यस्य यामत्रयाभ्यन्तरमेवेत्यर्थः । सुखमिति ।—पौनरर्थेना विरेचनानन्तरं क्रियन्निरहोभिरनुवास्य इत्याह,—विरिक्त इत्यादि ॥ २ ॥

इदानीं वस्तिनलिका यैर्द्रव्यैर्विधेया तान्याह, सुवर्णेत्यादि ।—चरकस्य । त्रपु—सीसकम् । रीति,—पित्तलम् ; अस्थि—हस्त्यादीनाम् ; दन्तञ्च हस्तिनः ; विषाणै,—महिषादिशृङ्गैः ; मणिभिः,—गोमेदकादिभिः । सुकर्णिकानीत्यत्र निकर्णिकानीति केचित् पठन्ति ; निकर्णिकस्यार्थो वक्ष्यति । नेत्रं—नलिका, वस्तिगतस्नेह-कषायादिद्रव्यनेतृत्वान्नेत्रमिति संज्ञा ॥ ३ ॥

इदानीं तन्नेत्रप्रमाणं वयोभेदाद्भिन्नमाह, षडित्यादि ।—तत्रैव षड्वर्षबालस्याङ्गुलेन षडङ्गुलं नेत्रं कार्य्यम्, एवं विंशतिवर्षस्य द्वादशाङ्गुलम् ; तथा द्वादशवर्षस्याष्टाङ्गुलमिति यथासङ्ख्यमन्वय. । ननु एकवर्षादारभ्य पञ्चवर्षं, तथा षड्वर्षादूर्द्ध्वमेकादशवर्षम्, तथा द्वादशवर्षादूर्द्ध्वं विंशतिवर्षं, ततोऽपि सप्ततिं यावत् कियत्मानं नेत्रं कार्य्यम् ?—अत्राहुः,—एकवर्षात् प्रभृति षड्वर्षं यावत् षडङ्गुलमेव नेत्रं, तथा सप्तवर्षादूर्द्ध्वमेकोनविंशतिवर्षं यावत् अष्टाङ्गुलं नेत्रम्, एवं विंशतिवर्षादूर्द्ध्वं

यथावयोऽङ्गुष्ठकनिष्ठकाभ्यां मूलाग्रयोः स्युः परिणाहवन्ति ।
ऋजूनि गोपुच्छसमाकृतीनि श्लक्ष्णानि च स्युर्गुडिकामुखानि ॥
स्यात् कर्णिकैकाग्रचतुर्थभागे मूलाश्रिते वस्तिनिबन्धने द्वे ।
जारद्गवो माहिषहारिणो वा स्याच्छौकरो वस्तिरजस्य वापि ॥

---

द्वादशाङ्गुलमेव नेत्रं कार्यं सप्ततिवर्षं यावदिति। अयञ्चार्थः व्युत्क्रमाभिधान-सामर्थ्यादेव लभ्यते; यतः षट्सङ्ख्या निर्देशाद्दशसङ्ख्यानिर्देशो युज्यते, ततो द्वादश षडेति, अतो व्युत्क्रमाभिधानबलादेव तदर्थस्योपलम्भ इति। अस्मादेव व्युत्क्रमाभिधानात् षड्वर्षादूर्ध्वमेकादशवर्षं यावत्, तथा द्वादशवर्षादूर्ध्वं विंशतिवर्षं यावत् नेत्रमानं प्रति विकल्पोऽप्यस्तीति निदर्शयति, तेन सप्तवर्षादौ प्रतिवर्षमेवाङ्गुलतृतीयभागवृद्ध्या द्वादशवर्षादष्टाङ्गुलं भवति; तथा द्वादशवर्षादूर्ध्वमपि प्रतिवर्षमर्धाङ्गुलवृद्ध्या विंशतिवर्षे द्वादशाङ्गुलं भवतीति ज्ञेयम्। वाग्भटेऽप्युक्तम्—"—वीक्ष्य वर्षान्तरेषु च। वयोबलशरीराणि प्रमाणमभिवर्धयेत्॥" इति। वर्षान्तरेष्विति।—षड्द्वादशादिवर्षान्तरालस्थितेषु सप्तमाष्टमादिवर्षेष्वित्यर्थः। सुश्रुते तु—संवत्सरिकादिरष्टवर्षाणां षडष्टदशाङ्गुलं नेत्रमानमुक्तं, पञ्चविंशतिवर्षादूर्ध्वं द्वादशाङ्गुलमित्यनेन, तथा वाग्भटेऽपि—"जन्मेऽब्दे पञ्चपूर्वेऽस्मिन् सप्तमेऽङ्गुलानि षट्। सप्तमे सप्त तान्यष्टौ द्वादशे षोडशे नव॥" इत्यनेन च यो नेत्रमानभेद उक्तः, सोऽप्यदूरान्तरत्वान्न विरोधमावहतीति। एतत्र नेत्राणामपरम्ं कीदृशं कार्यमित्याह, स्युर्गुडिकेत्यादि।—षड्द्वादशाष्टाङ्गुलानि यथासङ्ख्यं मुद्गकर्कन्धुसतीनवाहिच्छिद्राणि कार्याणि स्युः। कर्कन्धुशब्देनेह तदस्थि गृह्यते। उक्तं हि सुश्रुते—कोलास्थिमात्रच्छिद्रमिति। कर्कन्धुश्च शृगालकोलिः। इयद्दशाङ्गुलपक्षे तु कनिष्ठाप्रमाणार्थे तदद्वयं नार्हति। अन्ये तु—एवं विरोधं पश्यन्तो द्वादशाङ्गुलमानेऽपि कर्कन्धुशब्देन ग्राहयन्ति। सतीनः,—वर्तुलकलायः। वर्त्त्या पिहितानीति।—द्रव्यान्तरप्रवेशवस्तिद्रव्यनिर्गमनिरासार्थं वस्त्रादीनां वर्त्त्या पिहितमुखानि कार्याणि। यथावय इति।—यस्मिन् वयसि यन्नेत्रं विहितं तद्वयःस्थस्यैव अङ्गुष्ठकनिष्ठाभ्यां यथासङ्ख्यं मूले त्वग्रे च तुल्यपरिणाहं नेत्रं कर्तव्यमित्यर्थः। अङ्गुष्ठं—हस्ताङ्गुष्ठम्। ऋजूनीत्यादिना नेत्राकृतिमाह, गोपुच्छाकृतित्वमेषां मूलस्थौल्यादग्रे तनुत्वादिति। श्लक्ष्णानीत्यकर्कशानि; गुडिकामुखानीति—गुडिकाकारवर्तुलं मुखं येषाम्; तेन वर्तुलमुखतया अतीक्ष्णमुखानि कुण्ठमुखानीत्यर्थः। सकर्णिकानीति पूर्वमुक्तम्, अतः

दृढ़स्तनुर्नष्टशिरो विगन्धः कषायरक्तः सुमृदुः सुशुद्धः।
नृणां वयो वीक्ष्य यथानुरूपं नेत्रेषु योज्यस्तु सुबद्धसूत्रः॥ ४॥

निरूहमात्रा प्रथमे प्रकुञ्चो वत्सरे परम्।
प्रकुञ्चवृद्धिः प्रत्यब्दं यावत् षट् प्रसृतास्ततः॥
प्रसृतं वर्द्धयेदूर्द्ध्वं द्वादशाष्टादशस्य तु।
आ सप्ततेरिदं मानं दशैव प्रसृताः परम्॥ ५॥

---

कर्णिकाद्वयस्थानमाह, स्रोतसीत्यादि।—नेत्रस्रोतःप्रदेशे यश्चतुर्थो भागस्तत्र एका कर्णिका कर्त्तव्या, नेत्रस्यातिप्रवेशनिरासार्थमिति भावः। मूलाश्रिते वस्तिनिबन्धने द्वे इति।—नेत्रस्य मूले तु चर्मपुटकबन्धनार्थे कर्णिकाद्वयं कार्य्यमित्यर्थः। वस्त्यर्थं येषां मूत्रपुटकं ग्राह्यं तदाह, जारद्गव इत्यादि।—जारद्गव इति—वृद्धबलीवर्दः। वस्तिरिति—मूत्रपुटकं कोषावरकचर्मेति केचित्। नष्टशिर इति—समुद्धृतशिरास्नायुः। कषायरक्त इति।—त्रिफलादिकषायद्रव्यभावनया रञ्जितः, अत एव विगन्धः,—विगतपूतिगन्धः। वयो वीक्ष्य यथानुरूपमिति।—वयोभेदेन वत्सरादिरूपेण यथोक्तेन यथावस्तिर्यस्यानुरूप उचितप्रमाणो भवति स तस्य नेत्रे बन्धनीयः; सुबद्धसूत्र इति।—सुदृढबन्धनसूत्र इत्यर्थः॥ ४॥

यद्यपि "षट्पली तु भवेच्छ्रेष्ठा" इत्यादिना अनुवासनमात्रा उक्तैव, तथाप्यनुक्त-विशेषार्थं पुनरप्यनुवासनमात्रा वक्तव्या; सा च निरूहमात्रातिदेशेन वाच्या; अतो-ऽनुवासनाधिकार एव प्रथमं निरूहमात्रामाह, निरूहमात्रेत्यादि।—वाग्भटस्य।—प्रथमे वत्सरे निरूहमात्रा प्रकुञ्चः,—पलमित्यर्थः। परमिति।—वत्सरात् ऊर्द्ध्वं प्रत्यब्दं प्रकुञ्चेन पलेन वृद्धिः कार्य्येति यावत्। षट्प्रसृता—द्वादश पलानि भवन्ती-त्यर्थः। "प्रसृतन्तु पलद्वयम्" इति वचनात्। एतेन प्रत्यब्दं प्रकुञ्चवृद्ध्या द्वादशभिर्वर्षैः षट्प्रसृता भवन्तीत्यर्थः। द्वादशेति छेदः। तत इति।—द्वादशवर्षादूर्द्ध्वं प्रत्यब्दमेकैकं प्रसृतं कृत्वा वर्द्धयेत् यावद्द्वादश प्रसृता भवन्ति; एतेन द्वादशवर्षानन्तरं त्रयोदशवर्ष-मारभ्य अष्टादशवर्षपर्य्यन्तं प्रतिवर्षमेकैकप्रसृतवृद्ध्या द्वादशप्रसृतपूरणं भवति। अष्टादशस्येत्यष्टादशवर्षदेशीयस्य पुंसः; आ सप्ततेरिति—सप्ततिवर्षं यावत् इदं द्वादश-प्रसृतस्वरूपमेव मानं ज्ञेयमित्यर्थः। दशैव प्रसृताः परम् इति।—प्रत्यब्दं प्रसृतवृद्ध्या अष्टादशस्य—अष्टादशवर्षस्य द्वादश प्रसृता भवन्ति, ततः सप्ततिवर्षपर्य्यन्तं द्वादश प्रसृता एव, परं सप्ततिवर्षादूर्द्ध्वं दश प्रसृता एवेत्यर्थः। इदानीं पुनरर्द्धमात्रिकेण व्यवहारः, तेन महत्यपि पुंसि षट् प्रसृता एव दीयन्ते इति वृद्धवैद्या इति ज्ञेयम्॥ ५॥

यथायथं निरूहस्य पादो मात्रानुवासने ।
कृतचङ्क्रमणं मुक्तविण्मूत्रं शयने सुखे ॥
नात्युच्छ्रिते न चोच्छीर्षे संविष्टं वामपार्श्वतः ।
सङ्कोच्य दक्षिणं सक्थि प्रसार्य च ततोऽपरम् ॥
वस्तिं सव्ये करे कृत्वा दक्षिणेनावपीडयेत् ।
तथास्य नेत्रं प्रणयेत् स्निग्धे स्निग्धमुखं गुदे ॥
उच्छ्वास्य वस्तेर्वदनं बद्धा हस्तमकम्पयन् ।
पृष्ठवंशं प्रति ततो नातिद्रुतविलम्बितम् ॥

---

इदानीमुक्तनिरूहमात्रातिदेशेन स्नेहानुवासनमात्रामाह, यथायथमित्यादि ।—यस्मिन् वयसि यन्निरूहमानमुक्तं, तस्मिन् वयसि अनुवासनमानं तन्निरूहाच्चतुर्थांशमित्यर्थः । एतेन प्रथमवर्षीयस्य बालस्य यत्तु निरूहमानं पलमुक्तम् ; तस्य चतुर्थांश. कर्षोऽनुवासनमानमित्यर्थः । एवं द्विवर्षादिबालादौ च द्विकर्षादिकं बोध्यम् । ननु "षट्पलो तु भवेच्छ्रेष्ठा" इत्यादिना पूर्वं त्रिविधानुवासनमात्रोक्ता, अत्र पुनरन्यथैवेति विरोधः ? उच्यते,—अष्टादश वर्षं यावत् द्वादशप्रसृती निरूह उक्तः, तस्य चतुर्थोऽंशः षट्पल एव ; तथा द्वादशवर्षे प्रति षट्प्रसृता उक्ताः, एषां चतुर्थो भागस्त्रिपल एव ; तथा षड्वर्षस्य षट्पलमित्यस्य पाद. सार्द्धपलमिति, अत्रान्तरे एक विंश- वर्षादौ चतुर्दशवर्षादौ च ये मानभेदा. सन्ति, तेषामोक्तमानानुसारेणोहः कार्य्य इत्येकवाक्यतया न पूर्वापरवचनविरोधः । किञ्च षट्पलेत्यादि वाक्यमुत्तममध्यमाधमबला- बलशरीरभेदभिन्नमुद्दिश्य त्रिविधं मानमाश्रित्योक्तम्, तेन वयःकालादिवयोभेद- भिन्नमानाभिधानान्न न्यूनतादोष इति ज्ञेयम् । इदानीं किम्भूतस्य तदनुवासनं देयम् ? —इत्याह, कृतेत्यादि ।—बालकस्य ।—भ्रमण इति—व्यायामः । वामपार्श्वत इति ।— वामपार्श्वेन, संविष्टं—सुप्तम् । वामपार्श्वशयनप्रयोजनञ्च चरकेणोक्तं यथा—"वामा- श्रयोऽप्ययं ह्यामाशयो गुदश्च तत्पार्श्वस्थस्य सुखोपलब्धिः । लीयन्त एवं वलयश्च तस्मात् सव्यं शयानोऽर्हति वस्तिदानम् ॥" इति । सक्थीति—जङ्घा, अपरमिति—वामम् ; सव्य इति—वामे । वस्तिमिति—बद्धचर्मपुटादिवस्तिसंयुक्तं नेत्रमेव । दक्षिणेनेति— दक्षहस्तेन । उच्छ्वास्य वस्तेर्वदनं बद्धेति ।—वस्तेश्चर्मपुटकस्य मुखम्, उच्छ्वास्य उद्घाट्य, पश्चात् बद्धेत्यर्थः । वस्तिमुखोच्छ्वासनञ्च द्रवाभिघातजनितवातस्य निर्गमनार्थम् । "उच्छ्वास्य वस्तेर्वदने बद्धः" इति पाठः । पृष्ठवंशं प्रतीति—पृष्ठवंशं लक्षीकृत्य, तेन पृष्ठ-

नातिवेगं न वा मन्दं सकृदेव प्रपीड़येत्।
सावशेषं प्रकुर्वीत वायुः शेषे हि तिष्ठति॥
निरूहदानेऽपि विधिरयमेव समीरितः॥ ६॥
ततः प्रणिहिते स्नेहे उत्तानो वाक्शतं भवेत्।
प्रसारितैः सर्वगात्रैस्तथा वीर्यं प्रसर्पति॥
आकुञ्चयेच्छनैस्त्रिस्त्रिः सक्थिबाहू ततः परम्।
ताड़येत् तलयोरेनं त्रींस्त्रीन् वारान् शनैः शनैः॥
स्फिचोर्येनं ततः श्रोणिं शय्यां त्रिरुत्क्षिपेत्ततः।

---

वेगानुसारेण ऋजु यथा स्यात् तथा नेत्रं प्रणयेदित्यर्थः। चरकेऽपि ऋजु पृष्ठवंशमित्युक्तम्। सकृदित्येकवारमेव। वस्तिपुटकान्तर्गतद्रवभागस्तु न निःशेषी देय इत्याह, सावशेषमित्यादि।—"वायुः शेषे हि तिष्ठति" इति निःशेषदाने हि पुटकान्तर्गतो वायुर्गुदं प्रविश्य वस्तिमाध्मापयेदिति भावः। इदानीमनुवासनदानविधिं निरूहेऽप्यतिदिशति—निरूहदानेऽपीत्यादि॥ ६॥

दत्ते च स्नेहे यादृशेन स्थातव्यं, यच्च कर्त्तव्यं तदाह, तत इत्यादि।—प्रणिहिते।—वाक्—लघ्वक्षरं, तदुच्चारणं शतधा यावत्कालेन भवति तावत्कालमुत्तानो भूत्वा तिष्ठेदित्यर्थः। अन्ये तु—वाक्शतं—छोटिकाशतमित्याहुः। प्रसारितैः सर्वगात्रैः,—बाहुजङ्घादिभिरित्युपलक्षणे तृतीया। एवं सति किं स्यात्?—इत्याह,—तथेति। आकुञ्चयेदित्यादि।—सक्थिनी ऊरू, तथा बाहू च त्रिराकुञ्चयेदेव इति शेषः। आकुञ्चनमन्यथाऽनुपपद्यं च प्रसारणमपि लभ्यते; तेन पादाङ्गुष्ठद्वयं पादतलद्वयं वा विधृत्य ततः सङ्कोच्य शनैः प्रसारयेदित्यर्थः। उक्तं हि चरके—"ईषच्च पादाङ्गुलियुग्ममाञ्छेत्" इति। आञ्छेत्—प्रसारयेदित्यर्थः। तत्र तु प्रसारणमन्यथाऽनुपपत्त्याकुञ्चनं लभ्यत इत्येकवाक्यता च ज्ञेया। ततः परं बाहू च तदङ्गुष्ठद्वयञ्च विधृत्य ततः सङ्कोच्य प्रसारयेदिति। चरके तु बाहुसङ्कोचप्रसारणे नोक्ते इति विशेषः। ताडयेदित्यादि।—स्फिचोर्येनमिति छेदः। एनम्—आतुरम्। तलयोः,—पादतलकरतलयोः; तथा स्फिचोश्च त्रींस्त्रीन् वारान् शनैः शनैस्ताडयेदिति—मुष्टिना हन्यादिति। एतच्च ताडनम् अनुवासनस्नेहस्य शीघ्रनिःसरणं यथा न भूयादित्येतदर्थं क्रियते। यदाह दृढबलः,—"दत्त्वा स्फिचौ पाणितलेन हन्यात् स्नेहस्य शीघ्रागमरक्षणार्थम्" इति। ततः श्रोणीं शय्यां त्रिरुत्क्षिपेत्; तत इति।—शय्यानिबद्धमस्तरं प्रतीति शेषः;

एवं प्रणिहिते वस्तौ मन्दायासोऽथ मन्दवाक् ॥
आस्तीर्णे शयने काममासीताचारिके रतः ।
योज्यः शीघ्रं निवृत्तेऽन्यः स्नेहोऽतिष्ठन्न कार्यकृत् ॥ ७ ॥
सानिलः सपुरीषश्च स्नेहः प्रत्येति यस्य वै ।
विना पीडां त्रियामस्थः स सम्यगनुवासितः ॥ ८ ॥

---

तेन शय्यां प्रति श्रोणी त्रिरुत्क्षिपेदित्यर्थ इति श्रीकण्ठः। यत्तु—शय्यानिम्नमन्तरं तत्पार्ष्णिभ्यामिति शिवः; तेन तत्पार्ष्णिभ्याम् चतुरपार्ष्णिभ्यां शय्यां ताडयेदिति जेज्जटः। उक्तं हि—"दत्ते तूत्तानदेहस्य पाणिना ताडयेत् स्फिचौ। तत्पार्ष्णिभ्यां तथा शय्यां पादतश्च त्रिरुत्क्षिपेत् ॥" इति व्याख्याते।—श्रोणी त्रिरुत्क्षिपेदिति।—पादयोर्विधृत्य श्रोणी त्रिरुत्क्षिपेदित्यर्थः। एतदपि पार्ष्णिभ्यां शय्याताडनं श्रोण्युत्क्षेपणं स्नेहशीघ्रागमनरक्षणार्थमेव ज्ञेयम्। एतच्च शीघ्रागमनरक्षणार्थं कर्म यद्यपि पश्चादुक्तं, तथापि स्नेहशीघ्रागमनेन वस्तेर्निष्फलता स्यादिति ज्ञात्वा प्रथममेव कार्यम्। अत एव भानुमत्यां चक्रोऽप्याह, क्रियोपेतमिति, यद्यपि पश्चादुक्तं तथाप्यभिधानक्रमतन्त्रं ज्ञात्वा प्रथममेव ज्ञेयमिति। मन्दायास इति।—अल्पप्रयत्नव्यापारविक्षेपणादिशरीरचेष्टः। काममासीतेत्यनेन हस्तपादतलसंमर्दनाङ्गुलीस्फोटादिकमभिच्छता कार्यमिति सूच्यते; उक्तं हि—"स्नेहेन पाण्यङ्गुलिपिण्डिकाद्ये चास्य गात्राण्यथवा समर्चाः। ताम्बूलभक्षणात् तत्पश्चात् तत्र निद्रामुपासीत ज्ञातीप्सितः ॥" इति। आचारिके रत इति।—क्रोधादिवर्जनाद्याचारतत्परः। यदि तु स्नेहो बलमात्र प्रवातिमात्रत्वादिदोषेण निःसरति, तदा किं कार्यम् ?—इत्याह, योज्य इत्यादि।—वाग्भटस्य।—शीघ्रमिति—त्रियामादर्वाक्। अत्र द्वितीयस्नेहदानमल्पमात्रयैव विधेयम्, प्रथमस्नेहदानेनैव क्लेदावलेपसिद्धत्वात्। सुश्रुतेऽप्युक्तं—"तथाऽन्योऽल्पतरो देयः" इति, पूर्वदत्तस्नेहादल्पतर इति ॥ ७ ॥

सानिल इत्यादिना सौश्रुतानुवासनसम्यग्योगलक्षणमाह। "विना पीडां त्रियामस्थ." इत्यत्र "क्षपाचोषौ विना शीघ्रम्" इति पाठे—क्षपा—दाहः, चोषः—पिपासा, शीघ्रमिति—यामत्रयानन्तरमेवेत्यर्थः ॥ ८ ॥

क्राथार्द्धमात्रया प्रातर्धान्यशुण्ठीजलं पिबेत्।
पित्तोत्तरे कदुष्णाम्भस्तावन्मात्रं पिबेदनु॥
तेनास्य दीप्यते वह्निर्भक्ताकाङ्क्षा च जायते।
अहोरात्रादपि स्नेहः प्रत्यागच्छन् न दुष्यति।
कुर्य्याद्वस्तिगुणांश्चापि जीर्णस्त्वल्पगुणो भवेत्॥ ९॥

---

कोष्ठावलिप्तस्नेहपाकार्थमाह, क्राथार्द्धमात्रयेत्यादि।—यस्य पुरुषस्याग्न्याद्यपेक्षया यावान् संशमनक्राथः समर्हति, तस्यार्द्धं धान्यशुण्ठीजलं पिबेदित्यर्थः। एतच्च धान्यशुण्ठीजलं षडङ्गविधिना कर्त्तव्यमिति चक्रः; ततश्च धान्यस्य द्वादश माषकाः, शुण्ठ्याश्च षट् चत्वारो वेति मिलित्वा कर्षमानत्वं ज्ञेयम्। एतच्च धान्यशुण्ठीजलं न प्रत्यहं देयं, किन्त्वेकान्तरमिति। तदुक्तं—"एकान्तरोपयोगेन धान्यशुण्ठीजलं पिबेत्" इति। एकान्तरत्वं तावदेकान्तरमेवानुवासनदानम्; यस्मिन् दिवसे अनुवासनं न दीयते, तस्मिन्नेव दिने धान्यशुण्ठीजलं देयम्, अनुवासनदिने तु न देयम्। यदाह चरकः,—"भुक्तस्नेहं द्रवोष्णञ्च लघुपथ्योपसेवनम्। भुक्तवान् मात्रया भोज्यमनुवास्यस्त्र्यहात् त्र्यहात्॥ धान्यनागरसंसिद्धं तोयं दद्याद्विचक्षणः। व्युषिताय निशां कल्यमुष्णं वा केवलं जलम्॥" इति। व्युषितायेति—अनुवासनस्नेहं दत्त्वा निशां व्युषितायेत्यर्थः। एतेन यस्मिन् दिने अनुवासनस्नेहो न दीयते, तस्मिन्नेव दिने धान्यनागरसिद्धं जलं देयमिति बोधयतीति। कल्यमिति—प्रातः। पित्तोल्बणे तु दोषे—धान्यशुण्ठीजलं हित्वा कोष्णजलं देयमित्याह, पित्तोत्तर इत्यादि।—तावन्मात्रमिति—क्राथप्रमाणम्। त्रियाममध्ये स्नेहस्य सम्यगनुवासनलिङ्गत्वं यदुक्तं तदपवादमाह, अहोरात्रादित्यादि।—सुश्रुतस्य।—अहोरात्रादिति—वस्तिप्रणिधानदिनरात्राभिप्रायेण, तेन यामत्रयात् परतोऽपि याममेकमनागच्छन्नपि स्नेहो न दुष्यति—न व्यापदं करोतीत्यर्थः। वस्तिगुणानिति—स्नेहनबृंहणादीन्। जीर्णं इति—परिणतः। अल्पगुण इति।—वायुरग्निभ्यामभिभूय पार्ष्णिं नीत्वा न सम्यक् स्नेहनादिकं करोति; वीर्येण देहं भावयित्वा प्रत्यागच्छन्नेव स्नेहो यथोक्तगुणकारक इति भावः। पक्वाशयस्थस्यापि स्नेहस्य पाकोऽग्निमरुतोः सत्त्वाद्देहतेजसा च सम्भवत्येव। अत एवोक्तं चरके—"एवमाशु गतो स्नेहो यात्यम्बु सिकतास्विव। एभ्योऽन्येषां त्र्यहात् प्रायः स्नेहं पचति पावकः॥" इति॥ ९॥

यस्य नोपद्रवं कुर्य्यात् स्नेहवस्तिरनिःसृतः।
सर्वोऽल्पो वाहतो रौक्ष्यादुपेक्ष्यः संविजानता॥ १०॥
अनायान्तमहोरात्रात् स्नेहं सोपद्रवं हरेत्।
स्नेहवस्तावनायाते नान्यः स्नेहो विधीयते॥ ११॥
अशुद्धस्य मलोन्मिश्रः स्नेहो नैति यदा पुनः।
तदाङ्गसदनाध्मान-शूलाः श्वासश्च जायते॥
पक्वाशयगुरुत्वञ्च तत्र दद्यान्निरूहणम्।
तीक्ष्णं तीक्ष्णौषधैरेव सिद्धञ्चाप्यनुवासनम्॥
स्नेहवस्तिर्विधेयस्तु नाविशुद्धस्य देहिनः।
स्नेहवीर्य्यं तथा दत्ते स्नेहेनानुविसर्पति॥ १२॥

---

इदानीं यः स्नेहः सर्वथाऽनिःसृतः समुदायेनैकदेशेन वा यदि व्यापदं न करोति तदा तन्निवर्त्तनाय यत्नो न विधेय इत्याह, यस्येत्यादि।—इहवस्तस्य।—अनिःसृतोऽपि सम्भवद्व्याधिकमुपद्रवं न कुर्य्यादिति। अल्पो वाहत इति।—स्तोकमनिःसृतः स्तोकवाहत इत्यर्थः। आहतस्यापि सम्भाव्योपद्रवाकरणे हेतुमाह, रौक्ष्यादित्यादि।—शरीरस्यात्यन्तरूक्षतया तिष्ठन्नपि स्नेहो रूक्षशरीरे शोषणेन न व्यापदं करोतीत्यर्थः। अन्ये तु—"सर्वोऽल्पो वा धृतः" इति पठन्ति; रौक्ष्यात्—शरीरोद्भूतवायुना धृत' प्रतिबद्धः स्नेहोऽनिःसृतोऽपि व्यापदजनकत्वादुपेक्ष्य इत्याहुः। उपेक्ष्य इति।—न तत्र वाताद्याहतस्नेहप्रवर्त्तनी चिकित्सा कार्य्येत्यर्थः॥ १०॥

अनायान्तमित्यादि।—शुद्धस्य।—हरेदिति—तीक्ष्णवस्तिभिरिति शेषः; अत एवाह, स्नेहवस्तावित्यादि।—शुद्धस्य।—नान्यः स्नेहो विधीयते इति।—स्नेहातियोगभयात्। तीक्ष्णवस्तिस्तु दीयत एवेत्यर्थः॥ ११॥

सचिकित्सितां व्यापदमाह, अशुद्धस्येत्यादि।—अशुद्धस्येति।—वमनेन विरेचनेन वा। तीक्ष्णमित्यनुवासनविशेषणम्, अन्ये तु—निरूहणमित्यस्य विशेषणमित्याहुः। वमनविरेकाभ्यां शुद्धस्यैव स्नेहवस्तिर्देयो न पुनरविशुद्धस्येत्याह, स्नेहवस्तिरित्यादि। कुतो न विधेयः?—इत्याह, स्नेहवीर्य्यमित्यादि।—तथा दत्ते स्नेहे अविशुद्धदेहप्रयुक्ते स्नेहे सति स्नेहवीर्य्यं यथावन्नानुविसर्पति, देहमिति शेषः। स्नेहमित्यत्र देहमिति पाठे—तथा दत्ते इत्यत्र स्नेहवस्ताविति शेषो बोध्यः॥ १२॥

अभुक्तमपि वा तेन केवलेनाभिपीड़ितम्।
अहोरात्रस्य कालेषु सर्वेष्वेवानुवासयेत् ॥ १२ ॥
अन्वासयेत् तृतीयेऽह्नि पञ्चमे वा पुनश्च तम्।
यथा वा स्नेहपक्तिः स्यादतोऽप्युल्वणमारुतान् ॥
व्यायामनित्यान् दीप्ताग्नीन् रूक्षांश्च प्रतिवासरम्।
इति स्नेहैस्त्रिचतुरैः स्निग्धे स्रोतोविशुद्धये।
निरूहं शोधनं युञ्ज्यादस्निग्धे स्नेहनं तनोः ॥ १४ ॥

---

अभुक्तस्य स्नेहबस्तिर्न देय इति यदुक्तं तदपवादमाह, अभुक्तमपीत्यादि।—केवलेनेति—निराहारेण। अहोरात्रस्य कालेष्विति अहोरात्रैर्वा ये कालाः पूर्वाह्ण-पूर्वरात्रादयस्तेष्वित्यर्थः ॥ १२ ॥

एकमनुवासनं दत्त्वा कियता कालेनानुवासनं देयमित्याह, अन्वासयेदित्यादि।——वाग्भटस्य।—स्नेहपक्तिः स्यादिति स्नेहः। तमिति।—प्रथममनुवासितं तृतीये पञ्चमे वाऽहनि अनुवासयेत्; अत्र सति हतवाते त्र्यहेऽनुवासनं देयम्; मन्दाग्नौ हतकफपित्ते तु—पञ्चमदिनेऽनुवासनमिति व्यवस्था। यथा वा स्नेहपक्तिः स्यादित्यनेनान्यपेक्षया उक्तकालातिक्रमोऽपि कार्य्य इति बोधयति। उल्वणवातादीन् प्रति तु—प्रत्यहमेवानुवासनं देयमित्याह, अतोऽपीत्यादि।—अतोऽपीति—त्र्यहादिदेयानुवासनापेक्षयापीत्यर्थः। हारीतोऽप्याह—"हतानिलार्त्तं पवनस्य रूक्षं दिने दिने बस्तिमुदाहरन्ति" इति। सुश्रुतेऽप्युक्तं—"रूक्षस्य बहुवातस्य स्नेहबस्तिं दिने दिने। दद्याद्वैद्यस्ततोऽन्येषामग्न्यवरोधभयात् त्र्यहात्॥" इति। अनयैवोक्तरीत्या निरूहानन्तरमनुवासनकालोऽप्यूहनीयः। यदाह दृढबलः,—"त्र्यहे त्र्यहे वाऽप्यथ पञ्चमे वा दद्यान्निरूहादनुवासनञ्च" इति। एवं यस्मिन् दोषे यावन्त्यनुवासनानि देयानि तदपि चरकादावेवानुसर्त्तव्यानि। कियन्तः स्नेहबस्तयः प्रयोज्या इत्याह, इतीत्यादि।—वाग्भटस्य।—ननु त्रिचतुरैः स्नेहैरित्यनेन चतुःसङ्ख्यबस्तिदानं विधीयते, तथा च विरोधः, उक्तं हि चरके—"बस्तीनयुग्मान् कुशलो विदध्यात्" इति; युग्मबस्तिदानञ्च प्रमादादेवानोपकारीति महर्षिवचनादुन्नीयते; यथा युग्मेष्वहःसु पुत्रकामौ संवसेताम्" इति; अयुग्मदानोपपत्तिर्यावातिप्रसङ्गश्चोक्ता न कथिता आचार्य्येण; सत्यम्। अत्र त्रिचतुरैरित्यनेन युग्म-

विष्टब्धानिलविण्मूत्रः स्नेहो हीनेऽनुवासने।
दाहज्वरपिपासार्त्ति-करश्चात्यनुवासने ॥ १५ ॥
स्नेहवस्तिं निरूहं वा नैकमेवातिशीलयेत्।
स्नेहात् पित्तकफोत्क्लेशो निरूहात् पवनाद्भयम् ॥ १६ ॥
अनास्थाप्या येऽभिधेया नानुवास्याश्च ते मताः।
विशेषतस्त्वमी पाण्डु-कामलामेहपीनसाः ॥
निरन्नप्लीहविड्भेदि-गुरुकोष्ठकफोदराः।

---

वस्तिदानमुक्तं तन्निरूहानन्तरं संशोधनार्थक्रियमाणानुवासनविषयम्, अयुग्मवस्तिदानन्तु स्वतन्त्रक्रियमाणानुवासनविषयम्; अतो भिन्नविषयतया न विरोधः। किंवा चरके—अयुग्मानित्यस्य सामर्थ्यानित्यर्थः; तेन बलाद्यपेक्षयानुवासनं देयं तदयुग्मकं निरूहानन्तरं कर्त्तव्यम्; तेन नवसु एकादशसु वानुवासनेषु दत्तेषु यदि वायुर्न शाम्यति, तदा तस्य मार्गावरणनिरासार्थं निरूहं दत्त्वा पुनर्यथोक्तसंख्ययानुवासनं देयमित्यर्थः। स्निग्ध इत्यत्र देहे इति शेषः, एवमग्निश्च इत्यत्रापि। शोधनमिति निरूहविशेषणम्, संशोधनमित्यनुवासनम् ॥ १४ ॥

अनुवासनायोगातियोगलक्षणमाह, विष्टब्धेत्यादि।—सुश्रुतस्य।—विष्टब्धान्यनिलविण्मूत्राणि यस्मात् स्नेहात् स तथा अनिलादिस्तम्भकर इत्यर्थः ॥ १५ ॥

निरूहानुवासनयोः परस्पराव्यवधानेन दाने दोषमाह, स्नेहवस्तिमित्यादि।—चरकस्य।—एकमेवेति—परस्परानन्तरितम्। उत्क्लेशः,—पित्तकफोत्क्लेशः, केचित्तु स्नेहात् पित्तकफोत्क्लेश इत्येवं पठन्ति। "निरूहात् पवनाद्भयम्" इति निरन्तरनिरूहेण शरीरस्य शोषणातिशयात् पवनाद्भयं स्यादिति भावः। अनुवासनार्थञ्च तैलं पक्वमेव ग्राह्यं, नापक्वम्। यदाह दृढबलः,—"न चामं प्रणयेत् स्नेहं यदभिष्यन्दयेद्गुदम्" इति। अनुवासनार्थञ्च तैलं यद्यप्यस्मिन् प्रकरणे नोक्तं, तथापि वातव्याध्युक्तमेव नारायणतैलादिकमिहाप्यनुसरणीयम् ॥ १६ ॥

येषामनुवासनं न देयं तानाह, अनास्थाप्या इत्यादि।—आस्थापनं—निरूहः, अनास्थाप्या—अनिरूह्या इत्यर्थः। अतिदेशेनाननुवासनीयानभिधाय विशेषतो ये नानुवासनीयास्तान् शब्देनाह, विशेषत इत्यादि।—वाग्भटस्य।—क्षतक्षारोऽप्यनास्थाप्यत्वेन वक्तव्यः; यतश्च "अनास्थाप्या येऽभिधेया नानुवास्याश्च ते मताः" इत्युक्तं।

अभिष्यन्दभृशस्थूल-क्रिमिकोष्ठाढ्यमारुताः ।
पीते विषे गरेऽपच्यां श्लीपदी गलगण्डवान् ॥ १७ ॥
अनास्थाप्यास्त्वतिस्निग्धः क्षतोरस्को भृशं कृशः ।
आमातिसारी वमिमान् संशुद्धो दत्तनावनः ॥
श्वासकासप्रमेहार्शो-हिक्काध्मानाल्पवर्च्चसः ।
शूलपायुः कृताहारो बद्धच्छिद्रदकोदरी ॥
कुष्ठी च मधुमेही च मासान् सप्त च गर्भिणी ॥ १८ ॥
न चैकान्तेन निर्दिष्टेऽप्यर्थाभिनिविशेद्बुधः ।
भवेत् कदाचित् कार्य्यापि विरुद्धापि मता क्रिया ॥
छर्द्दिहृद्रोगगुल्मार्त्ते वमनं स्वे चिकित्सिते ।
अवस्थां प्राप्य निर्दिष्टं कुष्ठिनां वस्तिकर्म च ॥ १९ ॥'

इत्यनुवासनाधिकारः ।

---

कृताहारस्यानुवास्यत्वं स्यादतस्तन्निरासार्थमत्र निषेध उक्तः। आढ्यमारुत—ऊरुस्तम्भः। एवञ्च पाण्ड्वादीनामनुवासनेन ये दोषास्ते चरके पञ्चकर्मीयसिद्धावनुसन्धेयाः, इह तु विस्तरभयान्नोक्ताः ॥ १७ ॥

अनास्थाप्यानाह, अनास्थाप्या इत्यादि ।—वाग्भटस्य ।—अनास्थाप्यातिस्निग्धादीनामास्थापनदोषाश्चरकेऽनुसन्धेयाः। "मासान् सप्त च गर्भिणी" इत्यत्यन्तसंयोगे द्वितीया। तेनैकमासात् प्रभृति सप्तमासपर्य्यन्तं वस्तिनिषेध इति ॥ १८ ॥

इदानीं वमनविरेचनवस्त्यधिकारे वमनाद्यविधेयत्वेन तथा वमनादिविषयत्वेन प्रतिपादितेषु वमनादिनिर्णयपरिनिषद्धे निषेधमाह, न चैकान्तेनेत्यादि ।—इदमप्यस्य ।—निर्दिष्टेऽप्यर्थे एकान्तेन नाभिनिविशेत यथोक्त एवार्थः कार्य्य इति निर्बन्धं न कुर्य्यादित्यर्थः। अथ किमर्थं यथोक्तार्थस्यैवावधारणं न क्रियते?—इत्याह, भवेदित्यादि ।—यतो विरुद्धत्वेन शास्त्राभिमतापि क्रिया कदाचिदवस्थावशेन कार्य्या भवेत्। चरकेऽप्युक्तम्—"उत्पद्यते हि सावस्था देशकालबलं प्रति। यस्यां कार्य्यमकार्य्यं स्यात् कर्म कार्य्यञ्च वर्जितम् ॥" इति। इदानीं "निषिद्धमप्यवस्थावशेन क्रियते" इत्युदाहरणमुपन्यस्य दर्शयति, छर्द्दिहृद्रोगेत्यादि ।—वाग्भटस्य ।—अवस्यादीनामपि छर्द्यादीनां वमनं स्वे चिकित्सिते छर्द्यादिचिकित्साध्याये अवस्थां प्राप्य निर्दिष्टमित्यर्थः। अवस्थां प्राप्य निर्दिष्टमित्यनेनावस्थाविशेष एव निषिद्ध-

# अथ निरूहाधिकारः ।

अनुवास्य स्निग्धतनुं तृतीयेऽह्नि निरूहयेत् ॥ १ ॥
मध्याह्ने किञ्चिदावृत्ते प्रयुक्ते बलिमङ्गले ।
अभ्यक्तस्वेदितोत्सृष्ट-मलं नातिबुभुक्षितम् ॥
मधुस्नेहनकल्काख्य-कषायावापतः क्रमात् ।
त्रीणि षड् द्वे दश त्रीणि पलान्यनिलरोगिषु ॥

---

विधानम् ; सामान्यतस्तन्निषेध इति । उत्सर्गापवादतया निषेधनिर्दिष्टकरणयोरविरोध इति दर्शयति, एवमन्यत्रापि निषेधविधौ वमनादिविधानमवस्थाविशेषपरतया समाधेयम् ॥ १९ ॥

इत्यनुवासनाधिकार-विवृतिः ।

---

अनुवासनेन स्निग्धस्य निरूहविधानादनुवासनाधिकारमनु निरूहाधिकारमाह, अनुवास्येत्यादि ।—तृतीयेऽह्नीत्यादि ।—अनुवासनदिनमारभ्य तृतीयदिन इत्यर्थः । तृतीयेऽह्नीति प्रायिकं ज्ञेयं, पञ्चमे तद्विधानात् ; यदाह वाग्भटः,—"पञ्चमेऽथ तृतीये वा दिवसे साधके शुभे" । निरूहनिरुक्तिश्च सुश्रुते यथा—"दोषनिर्हरणाच्छरीर-रोगहरणाद्वा निरूहः" इति । शरीररोहणम् अथ स्थापनेन शरीरपुनर्नवीकरणम्, अत एवास्थापनमपि निरूहस्य नामान्तरं वयःस्थापनादायुःस्थापनाद्वेति ॥ १ ॥

निरूहदानसमयमाह, मध्याह्न इत्यादि ।—वाग्भटस्य ।—किञ्चिदावृत्त इति—अभ्यवसिते । अभ्यक्तस्वेदितोत्सृष्टमलमिति ।—अभ्यक्तेत्यनेन अभ्यङ्गविधयापि स्नेह प्रयोग कर्त्तव्यतया अनुज्ञायते । स्वेदो यद्यपि पञ्चकर्मपूर्वकतया अनुक्तोऽपि गम्यत एव, यदुक्तम्—"अनुपस्थितदोषाणां स्नेहस्वेदोपपादनैः । पञ्चकर्माणि कुर्वीत—" इति, तथाप्यभ्यङ्गक्रियमाणस्नेहसहचरितत्वेऽपि स्वेदविधानार्थं स्वेदितेत्युक्तम् । उत्सृष्टमलमिति ।—त्यक्तमूत्रपुरीषम् । नातिबुभुक्षितमिति ।—अतिबुभुक्षितस्य हि निरूहोऽतियोगायोर्द्ध्वगमनाय च स्यादिति भावः । निरूहोऽपि पश्चाह्ने भवति । अतो मध्वादिद्रव्यपञ्चकस्य दोषभेदेन मानभेदार्थं परिभाषामाह, मध्वित्यादि ।—स्नेहन—पक्वतैलम्, आमस्य निषिद्धत्वात् ; किंवा स्नेहशब्देनात्र मज्जानं वर्जयित्वा स्नेहत्रयस्य ग्रहणम्, यदुक्तं—"त्रिविधस्त्रिविधे स्नेही वस्त्यर्थे मज्जवर्जितः" इति । कल्क-

पित्ते चत्वारि चत्वारि द्वे द्विपञ्च चतुष्टयम्।
षट् त्रीणि द्वे दश त्रीणि कफे चापि निरूहणम्॥ २॥
दत्त्वादौ सैन्धवस्याक्षं मधुनः प्रसृतद्वयम्।
विनिर्मथ्य ततो दद्यात् स्नेहस्य प्रसृतद्वयम्॥
एकीभूते ततः स्नेहे कल्कस्य प्रसृतं क्षिपेत्।
सम्मूर्च्छिते कषायं तं पञ्चप्रसृतसम्मितम्॥
वितरेत् तु यथावापमन्ते द्विप्रसृतोन्मितम्।
वस्त्रपूतं तथोष्णाम्बु कुम्भीवाष्पेण तापितः।
एवं प्रकल्पितो वस्तिर्द्वादशप्रसृतो भवेत्॥ ३॥

---

शब्देन मदनफलशतपुष्पादीनां ग्रहणम्। आवापशब्देन तु—मधुस्नेहकल्कक्काथव्यतिरिक्तं गोमूत्रकाञ्जिकजम्बीररसमस्त्वादि-द्रव्यमुच्यते। घृतादौ पुनरावापशब्देन प्रक्षेपः, कल्को वाऽप्यभिधीयते इति। अनिलरोगिषु क्रमात् यथासंख्यं मधुनस्त्रीणि पलानि, स्नेहस्य षट्, कल्कस्य द्वे, कषायस्य दश, त्रीणि आवापस्येति; एवं मिलित्वा द्वादशप्रसृतो निरूहो भवति, प्रसृतन्तु पलद्वयमिति। एवं पित्ते श्लेष्मणि च व्याख्येयम्। द्विपञ्चेति—दश इत्यर्थः। इदन्तु यद्द्वादशप्रसृतमानं निरूहस्योक्तं, तदष्टादशवर्षमारभ्य सप्ततिवर्षपर्यन्तं बोध्यम्; तेन वयोभेदेन निरूहमात्राभेदश्चरकादावनुसरणीयः। एतेन यत्र द्वादशप्रसृतापेक्षया हीनमात्रो निरूहः कर्त्तव्यो भवति, तत्र मधुस्नेहादीनामुक्तमात्रानुसारेण मात्रा कल्पनीया। द्वादशप्रसृताधिकमात्रा च न कर्त्तव्येव, उक्तं हि चरके—"द्वादशाः परं स्युः" इति, चशब्दोऽवधारणे, द्वादशैव प्रसृताः स्युरित्यर्थः। एतच्च चरकवचनं परमतप्रक्षेपणार्थं ज्ञेयम्; तेन सुश्रुते—"द्वादशप्रसृतं किञ्चित् विंशत्यसमथापरे" इत्यनेन यदेकीयमतमुपन्यस्तं तत् प्रतिक्षिपति, द्वादशप्रसृताधिकमानस्य महात्ययत्वादिति। हारीतेऽप्युक्तम्—"षडाटकं परमतप्रमाणम्" इति॥ २॥

निरूहे द्रव्यसंयोजनाक्रममाह, दत्त्वेत्यादि।—सुश्रुतस्य।—प्रथमं शिलादिखरमर्षणभाजने यथोक्तमानं मधु सैन्धवचूर्णञ्च व्यापयित्वा चिरं घर्षणं कार्य्यं यावदेकीभवति, तदनु स्नेहप्रसृतद्वयमपि मधुना सार्द्धं मथ्नीयात् यावदेकीभवति, एकीभूते च स्नेहे कल्कस्य प्रसृतं कषायस्य च पञ्च प्रसृतानि दत्त्वा चालोडयेत्, तदनु प्रसृतद्वयमात्रं वितरेद् दद्यादित्यर्थः। अयञ्च निरूहद्रव्यसंयोजनक्रमः "पित्ते चत्वारि

न धावत्यौषधं पायुं न तिष्ठत्यवलिप्य च ।
न करोति च सीमन्तं स निरूहः सुयोजितः ॥ ४ ॥
पूर्वोक्तेन विधानेन गुदवस्तिं निधापयेत् ।
त्रिंशन्मात्रास्थितो वस्तिस्ततस्तूत्कटुको भवेत् ॥
जानुमण्डलमावेष्ट्य दत्तं दक्षिणपाणिना ।
स्पृष्टमेवम्च्छटामन्दमात्रं तिष्ठेद्वेगवान् ॥
द्वितीयं वा तृतीयं वा चतुर्थं वा यथार्थतः ।
सम्यङ्निरूहलिङ्गे तु प्राप्ते वस्तिं निवारयेत् ॥ ५ ॥

---

चत्वारि" इत्याद्युक्तमानमवादात् पित्तोक्तनिरूहमानमधिकृत्य यदप्युक्तमर्धादि 'एकदोषोक्तो विधिरन्यत्राप्युपतिष्ठते' इति न्यायात् कफवातोक्तनिरूहेऽपि ज्ञेयः। द्वादशप्रसृत इति।—यद्यपि स्नेहपाकमधिकमपि भवति तथाप्यन्यस्नेहादिविशेषयोर्निर्देशात् द्वादश प्रसृत इति ॥ ३ ॥

इदानीं सम्यग्योजितस्य निरूहस्य लक्षणमाह, न धावतीत्यादि।—औषधं—मिलितमधुलवणस्नेहकल्कक्वाथरूपं निरूहौषधं, पायुं न धावति—अतुलतया प्रवाहितप्राय इव न करोतीत्यर्थः। तथाऽतिघनतया पायुमवलिप्य यदौषधं न तिष्ठति, एवं यदौषधं सीमन्तं रेखादिरेखां न करोति न दर्शयति। सुयोजित इति—सम्यग्योजितः ॥ ४ ॥

औषधसंयोजनानन्तरं यद्विधेयं तदाह, पूर्वोक्तेनेत्यादि।—पूर्वोक्तेनेति—अनुवासनोक्तेन। वस्तिमिति—निरूहम्। स च वस्तिः कियन्तं कालं गुदे स्थाप्य इत्याह, त्रिंशन्मात्रेत्यादि।—मात्रास्वरूपञ्चाभिधीयतेऽत्र, यथा—"यावत् पर्येति हस्ताग्रं दक्षिणं जानुमण्डलम्। निमेषोन्मेषकालो वा सा मात्रा परिकीर्तिता ॥" इति। उत्कटुकः,—उत्कटोति लोके। एतच्च त्रिंशन्मात्रोपस्थापनं उत्कटुकोऽपि वेगमनागतं प्रति बोध्यम्। अवेगवन्तं प्रत्युत्कटुकं प्रति यद्विधेयं तदाह, जानुमण्डलेत्यादि।—स्पृष्टमेव इति—चालनरहितः। दत्तं छटात्रयमित्यन्वयः, छटा तुड़ीति लोके। कियत्यः छटा देया इत्याह, द्वितीयमित्यादि।—वस्तिं दद्यादिति शेषः। चतुर्थं वा यथार्थतः इति।—निरूहसाध्यप्रयोजनानुरोधात् चतुर्थमपि पुटकं दद्यादित्यर्थः। ननु इदमलीन चतुर्थवस्तिदानं न मन्यते; यथा—"स्निग्धोष्ण एकः पवने समांसौ द्वौ स्वादुशीतौ पयसा च पित्ते। त्रयः समूत्राः कटुकोष्णतीक्ष्णाः कफे निरूहा न परं विधेयाः ॥"

प्रसृष्टविण्मूत्रसमीरणत्वम्
रुच्यग्निवृद्ध्याशयलाघवानि ।
रोगोपशान्तिः प्रकृतिस्थता च
बलञ्च तत् स्यात् सुनिरूढलिङ्गम् ॥
अयोगश्चातियोगश्च निरूहस्य विरिक्तवत् ॥ ६ ॥
स्निग्धोष्ण एकः पवने समांसो
द्वौ स्वादुशीतौ पयसा च पित्ते ।
त्रयः समूत्राः कटुकोष्णरूक्षाः
कफे निरूहा न परं विधेयाः ॥

---

तथा वाग्भटेऽप्युक्तम्—"त्रिभ्यः परं बस्तिमतो नेच्छन्त्यन्ये चिकित्सकाः । न हि दोषश्चतुर्थोऽस्ति पुनर्दीयेत यं प्रति ॥" इति ; नैवम्, निषेधेऽपि बहुपुटकविषयतया प्रायिकम्, चतुर्थपुटकदानन्तु क्वचित् क्रूरकोष्ठे बलीयसि दोषे च पुरुष इति भिन्नविषयतया न विरोधः । अत एव यथोक्त इत्युक्तम् । बस्तिनिवारणविधिमाह,—सम्यगित्यादि ॥ ५ ॥

तदेव सम्यग्लिङ्गमाह, प्रसृष्टेत्यादि ।—हृष्टबलस्य ।—प्रसृष्टं—सम्यक्प्रवृत्तम् । आशयलाघवानीत्यत्र आमयलाघवानीति पाठे—रोगोपशान्तिरित्यनन्तरं 'वा'—शब्दो ज्ञेयः । तेन निरूहसाध्यानां विकाराणां लाघवमुपशान्तिर्वा भवतीत्यर्थः । रोगोपशान्तिरिति वचनं रोगिविषयत्वम् ; प्रकृतिस्थतेति तु स्वस्थविषयम् ; तेनात्र पौनरुक्त्यं नाशङ्कनीयम् । अनुवासनयोगातियोगवदयोगं निरूहेऽप्यतिदिशति—अयोग इत्यादि ॥ ६ ॥

इदानीं दोषभेदेन बस्तिपुटकसंख्यां नियमयन्नाह, स्निग्धोष्ण इत्यादि ।—एक इत्येकपुटकः । समांस इति—मांसरससहितः ; उक्तं हि वाग्भटे—"बस्तिरेकोऽनिले स्निग्धः स्वाद्वम्लोष्णो रसान्वितः" इति । वाते स्निग्धोष्णतया मांसरससहिततया एक एव निरूहपुटको देयो न त्वधिकः । समांस इत्यत्र निरूह इति केचित् पठन्ति, निरूहोऽत्र पुटकाभिधायी । पयसा चेत्युपलक्षणे तृतीया, पयसा युक्तावित्यर्थः । कटूष्णोष्णत्वञ्च कट्वादिद्रव्ययोगादेव ज्ञेयम् । न परं विधेया इति ।—अनेन सुश्रुतोऽत्र चतुर्थनिरूहदानमनर्थप्ररोहादिकं निषेधयति । वाग्भटेऽप्युक्तम्—"त्रिभ्यः परं बस्तिमतो नेच्छन्त्यन्ये चिकित्सकाः । न हि दोषश्चतुर्थोऽस्ति पुनर्दीयेत यं प्रति ॥"

एकोऽपकर्षत्यनिलं स्वमार्गात्
पित्तं द्वितीयस्तु कफं तृतीयः ॥ ७ ॥
अनायान्तं मुहूर्त्तान्तं निरूहं शोधनैर्हरेत् ।
निरूहैरेव मतिमान् क्षारमूत्राम्लसंयुतैः ॥
विगुणानिलविष्टब्धं चिरं तिष्ठन्निरूहणम् ।
शूलारतिज्वराटोपान् मरणं वा प्रयच्छति ॥ ८ ॥
न तु भुक्तवते देयमास्थापनमिति स्थितिः ।
आमं तद्धि हरेद्भुक्तं छर्दिं दोषांश्च कोपयेत् ॥ ९ ॥

---

इति। अस्यैव दोषभेदेनोक्तस्य बस्तिपुटकसंख्याभेदस्य फलमाह, एकोऽपकर्षती-त्यादि।—स्वमार्गादिति—स्वस्थानात्, एतच्चानिलादि सर्वत्रैव योज्यम्। अनिलस्य हि पक्वाशयः स्थानम्, तस्य प्रत्यासन्नत्वादेकपुटकोऽप्यनिलमपकर्षति, द्वितीयादि-पुटकदानं तत्र निष्फलमिति भावः। एवं पित्ते तृतीयपुटकदानं, कफे चतुर्थ-पुटकदानं न कार्य्यं, फलाभावात्। पक्वाशयापेक्षया पित्ताशयस्य व्यवहितत्वात् द्वितीयः पुटकः पित्तं स्वाशयादपकर्षति, तृतीयोऽपि कफाशयस्य व्यवहितत्वात् तृतीयः पुटकः कफमपकर्षतीति। स्वमार्गादिति।—अनेन यदि दोषाः स्वस्थानस्था भवन्ति, तदैवायं नियम इति बोधयति, तेन यदि पित्तकफौ पक्वाशयस्थौ भवतः, तदा प्रथम-पुटकोऽपि तत्स्थानगतपित्तकफप्रशमनं करोति, तथा द्वितीयतृतीयावपि पित्तकफ-स्थानगतवायुप्रशमनं कुरुत इति ज्ञेयम्। पित्तकफयोस्तु यद्यपि मुख्यं चिकित्सितं बस्तिदानं न भवति, तथापि वातावरणे वातानुबन्धे वा पित्तकफे चैतद्बस्तिदानं ज्ञेयम्। तदुक्तं सुश्रुते—"बस्तिर्वाते च पित्ते च कफे रक्ते च शस्यते" इति। बस्तेस्तु प्राधान्यतो बस्तिगतदोषहरत्वमेवौत्सर्गिकम्, तेन पित्तादिस्थानेऽपि विधीयबस्ति-विधानसामर्थ्यात् पित्तादिस्थानगतदोषहरत्वमप्यपवादरूपतया न विरुध्यते ॥ ७ ॥

यद्युक्तलक्षणान्निरूहो न प्रवर्त्तते, तदा किं कर्त्तव्यम्?—तदाह, अनायान्त-मित्यादि।—सुगमम्।—मुहूर्त्तः,— नाडिका। शोधनैरिति — शोधनद्रव्यकृतैः। निरूहस्य चिरस्थानगतदोषहरत्वमप्यपवादरूपतया न विरुध्यते ॥ ८ ॥

भुक्तवतो निरूहदाननिषेधमाह, न त्वित्यादि।— स्थितिरित्यायुर्वेदनिश्चयः। हरेदित्यधो हरेत्, छर्दिमित्यूर्द्ध्वं जनयेदिति शेषः ॥ ९ ॥

आवस्थिकः क्रमश्चापि मत्वा कार्यो निरूहणे ॥ १० ॥
अतिप्रपीड़ितो वस्तिरतिक्रम्याशयं ततः।
वातेरितो नासिकाभ्यां मुखतो वा प्रपद्यते ॥
छर्दिहृल्लासमूर्च्छादीन् प्रकुर्य्याद्दाहमेव च।
तत्र चूर्णं गलापीड़ं कुर्य्याच्चाप्यवधूननम् ॥
शिरःकायविरेकौ च तीक्ष्णौ सेकांश्च शीतलान् ॥ ११ ॥
सुनिरूढमथोष्णाम्बु-स्नातं भुक्तरसौदनम्।
यथोक्तेन विधानेन योजयेत् स्नेहवस्तिना ॥ १२ ॥

---

अवस्थावशेन यथोक्तक्रमस्य व्यभिचारं दर्शयन्नाह, आवस्थिक इत्यादि।—तन्त्रैव। मत्वेति—अवस्थां बुद्ध्वा, निरूहणे आवस्थिक इत्यवस्थोचितः क्रमः कार्य्यः, तेनावस्थाविशेषे निषिद्धनिरूहेऽपि प्रतिकारं चिन्तयित्वा निरूहो देय एवेत्यर्थः। यथा भुक्तवतो निषिद्धोऽपि निरूहोऽल्पदोषस्वेदमात्रो वैतरणवस्तिरूपो दीयते, तथा उदरादिषु; निषिद्धनिरूहाऽवस्थायां किमिति निरूह एव क्रियते, चिकित्सान्तरमेव कथं न क्रियते इति न वाच्यम्; वस्तिगतदोषे हि मलाहृतौ वस्तिरेव प्रधानं चिकित्सितं मलापहरणेन दोषान् जयति, न तत्र चिकित्सान्तरं प्रभवति, अतस्तस्यामवस्थायामनर्हनिरूहाणामपि दोषमलहरो निरूहो देय एवेति ॥ १० ॥

वस्तेरतिप्रपीडनेन दोषमाह, अतिप्रपीडित इत्यादि।—सुश्रुतस्य।—आशयमिति—पक्वाशयादिकम्। नासिकाभ्यामिति—नासापुटाभ्याम्। आदिशब्दाद्दाहादयः। अत्र यत् प्रतिविधेयं तदाह, तत्रेत्यादि।—गलापीडमिति—गलपीडनम्; एतच्च तथा कार्य्यं यथा न म्रियते। उक्तं हि—"गलापीडयेच्चैनं कण्ठं श्वासान्न म्रियते यथा" इति। अवधूननमित्यत्र केशेष्वाक्षेपणमिति शेषः। उक्तं हि—"केशेष्वालम्ब्य वा क्षिप्रं धूनयात्" इति। एतच्च वस्तिव्यापच्चिकित्सितं संक्षेपत उक्तम्; विस्तरस्तु चरकादावनुसन्धेय इति ॥ ११ ॥

निरूहसम्यग्योगानन्तरं यद्विधेयं तदाह, सुनिरूढमित्यादि।—सुश्रुतस्य।—उष्णाम्बुस्नानमिति शिरो विहाय ज्ञेयम्; शिरसि तु—शीतलजलेनेति वृद्धा व्यवहरन्ति। अत्र केचित् षडङ्गविधिना नागरसाधितमुष्णोदकं पानार्थमुपदिशन्ति। यदुक्तं—"ततः प्रत्यागते वस्तौ चाम्बुष्णं नागरैः शृतम्। पाययेत् क्लममोक्षाय स्नापयेदुष्णवारिणा ॥" इति। स्नेहवस्तिनेति।—स्नेहवस्तिदानन्तु हृद्वस्तिमोक्षे यथा—"प्रत्या-

तदहस्तस्य पवनाद्भयं बलवदिष्यते ।
रसौदनस्तेन शस्तस्तदहश्चानुवासनम् ॥ १३ ॥

अर्द्धमात्रिकः;—

दशमूलीकषायेण शताह्वाक्षं प्रयोजयेत् ।
सैन्धवाक्षञ्च मधुनो द्विपलं द्विपलं तथा ॥

---

गते क्षीणमलाभिषिक्तः शाल्यन्नमद्यात् तनुना रसेन । जीर्णे तु सायं लघु चाल्पमात्रं भुक्तानुवास्यः परिहर्त्तव्यार्थम् ॥ निरूहपादांशसमेन तैलेनाम्लानि लघ्वौषधसाधितेन ॥" इति । निरूहपादांशसमेनेति—निरूहपादप्रमाणेन, चतुर्विंशतिपले षट्पलेन स्नेहेनेत्यर्थः । इयञ्चोत्तममात्रानुवासनस्य, यत्राह ।—"उत्तमा षट्पली मात्रा मध्यमा त्रिपली भवेत् । कनीयस्यर्द्धपला त्रिधा मात्रानुवासने ॥" इति । एषा च षट्पली मात्रा प्रकृतापि प्रसेव बोध्या । यच्चे त्वाहुः,—निरूहदानदिने यः स्नेहवस्तिर्दीयते सोऽल्पमात्र एव, न तु षट्पलः, निरूहव्याकुलितानिलत्वात्; अत एवाह भोजः,—"सम्यङ् निरूढं तैलाक्तं मध्यमेनैव सेचितम् । योजयेद्दशमांशेन तनूष्णं स्नेहबस्तिना ॥" इति । अत तनूष्णमिति—तद्दिनीयलक्षणम्; तेन सायं दीयते स्नेहवस्तिः । तस्मादत्र सार्द्धपलरूपा अवरमात्रा स्नेहस्य ज्ञेया । न चैव चरकविरोधः; चतुर्विंशतिपलस्य निरूहस्य पादः षट्पलं, तस्यांशश्चतुर्थो भागः सार्द्धैकपलं तत्सम तैलमिति हि तदर्थः । इदानीं सार्द्धकर्षेण स्नेहेनानुवासनं कुर्वन्ति निरूहस्य मन्दाग्नित्वात् ॥ १२ ॥

कुतो मांसरसः पं न्यसिय तथोपदिश्यत इत्यत आह, तदहरित्यादि ।—निरूहतमलदोषस्य रूक्षत्वेन वातात् भीतिरिति भावः ॥ १३ ॥

इदानीं निरूहयोगा वाच्याः । तत्र प्रथमं प्रसिद्धत्वादर्द्धमात्रिकवस्तिमाह, दशमूलीत्यादि ।—चक्रटीका ।—तन्त्रान्तरस्थ उक्तार्थसिद्धचतुर्विंशतिपलनिरूहापेक्षया मात्रार्द्धमस्येति कृत्वा द्वादशपलोऽयं निरूहो ज्ञेयः अर्द्धमात्रिक इत्युच्यते । अत एव मधुस्नेहनकाथेत्यादिपरिभाषया यद्द्रव्यमानमुक्तं, तदर्द्धमानमेवात्र ज्ञेयम् । तेन द्वादशभिः पलैरेकः पुटकः, एवं त्रयः पुटका देयाः । अत्र पुटकत्रयार्थं दशमूलस्य प्रत्येकं कर्षत्रयम्, अत सार्द्धसप्तपलानि; तत्र काथपरिभाषया जलस्यापि सार्द्धसप्तशरावाः, एभिः षष्टिः पलानि भवन्ति, एषां चतुर्थांशशेषात् पञ्चदश-, पलानि दशमूलकषायस्य भवन्ति । तत्रैकपुटकार्थं पञ्चपलानि ग्राह्याणि; अपर पुटकयोर्द्वयोरपि दशपलं विभज्य देयम् । शताह्वा—शतपुष्पा, तस्या अक्षं—कर्षः ।

स्नेहं गुडं मांसरसं पयश्च अम्लानि मूत्रं मधुसैन्धवे च।
एतान्यनुक्तानि च दापयेच्च निरूहयोगे मदनात् फलञ्च॥
लवणं कार्षिकं दद्यात् फलमेकन्तु मादनम्॥ १५॥
वाते गुडः सिता पित्ते कफे सिद्धार्थकादयः॥ १६॥

क्षारवस्ति,—

सैन्धवाक्षं समादाय शताह्वाक्षं तथैव च।
गोमूत्रस्य पलान्यष्टावम्लिकायाः पलद्वयम्॥
गुडस्य द्वे पले चैव सर्वमालोड्य यत्नतः।
वस्त्रपूतं सुखोष्णञ्च वस्तिं दद्याद्विचक्षणः॥

---

मांसरस-काञ्जिक-गोमूत्र प्र क १, मा ५; एतत् सर्वं पूर्वोक्तसर्वोक्तपरिपाट्या मेलयित्वा चर्मे कृत्वा वामपादेन कदुष्णीकृत्य याम्यम्; मदन मधुकुम्भ ना १, मा ५, दधिव्यालोड्य चर्मपुटके प्रक्षेप्यमिति। एतदेव विधाने द्वितीये तृतीयेऽपि ज्ञेयम्। इत्यर्थभाविकाः॥ १४॥

इदानीं सर्वेष्वेव निरूहेषु चानुक्तान्यपि यानि द्रव्याणि अवश्यप्रक्षेप्याणि, तानि दापयितुं हारीतवचनमुपन्यस्यति, स्नेहं गुडमित्यादि।—सुश्रुतस्त्वेतदधिकमप्याह—"क्षीराम्लान्यम्लानि मूत्राणि स्नेहाः क्वाथा रसास्तथा। लवणानि फलं क्षौद्रं शताह्वा सर्षपं वचा॥ एला त्रिकटुकं रास्ना सरलं देवदारु च। रजनी मधुकं हिङ्गु कुष्ठं संशोधनानि च॥ निरूहेषु यथालाभमेष वर्गो विधीयते॥" इति। सैन्धवमदनफलयोर्मिलितनियतमानमाह, लवणमित्यादि।—फलमेकमित्याकृतिमानात्॥ १५॥

दोषभेदेन गुडादीनां प्रक्षेप्यत्वमाह, वात इत्यादि।—आदिशब्दात् सुश्रुतोक्तवचात्रिकटुकादीनां ग्रहणम्। अत्रार्थे चरकोक्त एरण्डवस्तिसंहितफलो बोध्यः। सोऽप्यर्धमात्रिकोक्तकल्पनानुसारेणार्धमात्रिकश्चैव बुद्धैः प्रयुज्यते। स चात्र विस्तरभयान्न लिखित इति तत्रैवानुसन्धेयः॥ १६॥

क्षारवस्तिमाह, सैन्धवाक्षमित्यादि।—वस्तिरयमेतावन्मात्र एव दीयते; इयञ्च मात्रा एकपुटकस्य। चिञ्चिकाया इति—आम्लितिन्तिडीफलस्य। निरूहयोगे मदनात् फलञ्चेत्युक्तत्वात्, एव मदनफलमप्यत्र बुद्धैर्दीयते। अत एव चन्द्रटोऽप्याह,—"गोमूत्रस्य पलान्यष्टौ द्वे गुडाम्लिकयोः पले। कर्षञ्च शतपुष्पायास्तथार्धं सैन्धवस्य च॥ मदनस्य फलञ्चैकं खजेन सुविलोडितम्। वस्त्रपूतं सुखोष्णञ्च वस्तिं

पिच्छिलबस्तिः,—

बदर्यैरावतीशेलु-शाल्मलीधन्वनाङ्कुराः ।
क्षीरसिद्धाः सुसिद्धाः स्युः सास्राः पिच्छिलसंज्ञिताः ॥
वाराहमाहिषौरभ्र-वैडालैणेयकौक्कुटम् ।
सद्यस्कमसृगाजं वा देयं पिच्छिलबस्तिषु ॥ १९ ॥
चरकादौ समुद्दिष्टा बस्तयो ये सहस्रशः ।
व्यवहारो न तैः प्रायो निबद्धा नात्र तेन ते ॥ २० ॥
बस्तिर्वयःस्थापयिता सुखायु-
र्बलाग्निमेधास्वरवर्णकृच्च ।
सर्वार्थकारी शिशुवृद्धयूनाम्
निरत्ययः सर्वगदापहश्च ॥ २१ ॥

इति निरूहाधिकारः ।

---

पिच्छिलबस्तिमाह, बदर्यैत्यादि ।—सुश्रुतस्य ।—ऐरावती—नागबला ; शेलुः,—बहुवारः, धन्वन,—धामनिरिति प्रसिद्धस्तरुः । एषामङ्कुराः,—अभिनवपल्लवाः । अत्र दुग्धस्यैको भागः, त्रयो भागा जलस्येत्याहुः । सास्राः,—सरक्ताः । रक्तञ्च येषां पशूनां तानाह, वराहेत्यादि ।—एतच्च शोणितं बस्तिलेव बस्तौ देयं, "सद्यस्कैर्मृदितैर्बस्ति." इति चरकवचनात् । अस्य च बस्तिर्यथोक्तद्रव्यमात्रेणैव कार्यः । मात्रा चास्यास्थापनादिक-बस्तिवत्, मधुतैलिकबस्तिवदित्याहुः । इति पिच्छिलबस्तिः ॥ १९ ॥

इदानीं चरकाद्युक्तानामन्येषां बस्तीनामनभिधाने उपपत्तिमाह, चरकादावित्यादि । —प्राय इति वचनात् तेऽप्यवस्थायां प्रयोज्या इति सूचयति ॥ २० ॥

बस्तिसामान्यगुणमाह, बस्तिरित्यादि ।—सर्वगदापह इति—मिलितसर्वदोषापहः, किंवा त्रैदोषिकव्याधिहर इति चरकव्याख्या, अन्यथाव्याख्याने तु—"श्लेष्मपित्तानिला-कर्षी" इत्यनेन, तथा "सर्वान् विकारान् प्रमथेत्" इत्यनेन च न तत्र पौनरुक्त्यं स्यात् । इदमप्यत्र सुश्रुतवचनं बोध्य—"नरस्तोत्तमसत्त्वस्य बोद्धव्यं बस्तिं प्रयोजयेत् । मध्यं

निशाहर्भुक्तवान्ताहः-स्वप्नाध्वश्रमरेतसाम्।
शिरोऽभ्यञ्जनगण्डूष-प्रस्रावाञ्जनवर्चसाम्।
दन्तकाष्ठस्य हास्यस्य योज्योऽन्तेऽसौ द्विबिन्दुकः ॥ ३ ॥
शोधनः स्तम्भनश्च स्यादवपीडो द्विधा मतः।
वपीड्य दीयते यस्मादवपीडस्ततस्तु सः ॥ ४ ॥
स्नेहार्थं शून्यशिरसां ग्रीवास्कन्धोरसां तथा।
बलार्थं दीयते स्नेहो नस्तःशब्दोऽत्र वर्त्तते ॥ ५ ॥

---

ऽङ्गुलीं दद्यात्; एतेन स्नेहमग्राङ्गुलौ धारयेत् स्नेहः पतति सैव प्रतिमर्शमात्रा। सर्वदेति—सर्वेष्वेव ऋतुषु। न च नावनादिवद्दीक्षितवर्ज्यं कर्त्तव्यमित्याह, न चोच्छिद्रेदित्यादि।—अरोगाणामित्यनेन सुस्थविषयत्वमस्योक्तम्। दार्ढ्यकृदिति—दन्तशिरःकपालादिदार्ढ्यकृत् ॥ २ ॥

सर्वदैवसात्म्यमाह, निशेत्यादि।—वाग्भटस्य। असौ प्रतिमर्शः बिन्दुद्वयपरिमितो निशादीनामन्ते समाप्तौ वैद्येन योज्यः। निशान्त इति—प्रातः, अह्नोऽन्त इति—सायम्। सुश्रुतेऽपि कल्योत्थित इत्यनेन प्रातःकाल उक्तः। अध्वेति—पथश्रमः। श्रमशब्देनाध्वातिरिक्तो व्यायाम उच्यते। सुश्रुतेऽपि व्यायामाध्वपरिश्रान्तेनेत्युक्तम्। रेतःशब्देन रेतःसर्गोपलक्षितव्यायाम उच्यते। प्रस्राव इति—मूत्रोत्सर्गः, वर्चः—पुरीषोत्सर्गः। एषु पञ्चदशसु कालेषु प्रतिमर्शदानप्रयोजनं वाग्भटेनैवोक्तमनुसर्त्तव्यं, तद्यथा—"निशाहर्भुक्तवान्ताहः-स्वप्नाध्वश्रमरेतसाम्। शिरोऽभ्यञ्जनगण्डूष प्रस्रावाञ्जनवर्चसाम्॥ दन्तकाष्ठस्य हास्यस्य योज्योऽन्तेऽसौ द्विबिन्दुकः। पञ्चसु स्रोतसां शुद्धिः क्लमनाशस्त्रिषु क्रमात्॥ दृग्बलं पञ्चसु ततो दन्तदार्ढ्यं मरुच्छमः॥" इति। निशाहर्भुक्तवान्ताहःस्वप्नेषु पञ्चसु प्रतिमर्शदानात् स्रोतसां शुद्धिर्भवति। त्रिष्विति अध्वश्रमरेतःसु क्लमनाशः स्यात्। शिरोऽभ्यञ्जनादिषु पञ्चस्वपि तु प्रतिमर्शदानात् दृग्बलं स्यात्; ततोऽनन्तरं दन्तकाष्ठस्य हास्यस्य चान्ते योजितः प्रतिमर्शः क्रमात् दन्तदार्ढ्यं मरुतो वायोः प्रशमनं करोतीत्यर्थः ॥ ३ ॥

अवपीडमाह, शोधन इत्यादि।—चरकस्य।—अत्र स्तम्भनमित्यवपीडस्य कर्मोक्तमिति, तत्पुनरिह स्तम्भन एवान्तर्भवति। छन्दोऽनुरोधात् अवपीड्येत्यत्र वपीड्येति कथितम् ॥ ४ ॥

नस्यमाह, स्नेहार्थमित्यादि।—ग्रीवास्कन्धोरसां बलार्थमित्यन्वयः। नस्तःशब्दो नस्य-

नस्यस्य स्नैहिकस्याथ देयास्त्वष्टौ तु बिन्दवः।
प्रत्येकशो नस्तकयोर्नृणामिति विनिश्चयः॥
शुक्तिश्च पाणिशुक्तिश्च मात्रास्तिस्रः प्रकीर्त्तिताः॥
द्वात्रिंशद्बिन्दवश्चात्र शुक्तिरित्यभिधीयते।
द्वे शुक्ती पाणिशुक्तिश्च देयात्र कुशलैर्नरैः॥ ६॥

---

पर्य्यायः, नासाभ्यां दीयत इति नस्यम्; नासाशब्दात् शरीरावयवत्वाद् यदिति यत्-प्रत्ययेन नसादेशे रूपम्; अत एवाह सुश्रुतः,—"औषधमौषधपक्वो वा स्नेहो नासिकाभ्यां दीयत इति नस्यम्।" अनया च निरुक्त्या यद्यपि सामान्यवचन एवायं नस्यशब्दस्तथापि नस्य-शब्दोऽत्र वर्त्तेत इत्यभिधानात् विशेषहस्तितामपि नस्यशब्दस्य बोधयति। एतेन यथा निदानशब्दो निदानपञ्चके तथा निदानविशेषे च वर्त्तते, तथाऽयं नस्यशब्दोऽपि नस्य-शिरोविरेचन-प्रतिमर्शाऽवपीड़-प्रधमनेषु तथा नस्यविशेषे च स्नेहार्थे शून्यशिरसामित्यादिनोक्ते वर्त्तते। सुश्रुतेनापि "यतो नस्यशब्दः पञ्चधा निपातितः" इत्यादिनायमर्थ उक्तः। एतेन नासालीनस्य दोषोपशमनार्थे यद्दीयते तन्नस्यमिति नस्यादिपञ्चकसामान्यलक्षणम्; तथा प्रतिमर्शभिन्नत्वे सति स्नेहनार्थे यद्दीयते तन्नस्यमिति तु नस्यविशेषलक्षणं बोध्यमित्याहुः॥ ५॥

स्नैहिकनस्यार्थे स्नेहस्य प्रमाणमाह, नस्यस्येत्यादि।—स्नेहाक्तप्रदेशिनीपर्व-द्वयात् यावान् स्नेहः स्रवति तावान् स्नेहो बिन्दुरित्युच्यते। उक्तं हि वाग्भटे—"प्रदेशिन्यङ्गुलीपर्व-द्वयान्निःसृतात्। यावत् पतत्यसौ बिन्दुः" इति। नस्तकयोरिति—नासापुटयोः। एषा प्रथमा मात्रा। द्वितीयां तृतीयाञ्च मात्रामाह, शुक्तिश्च पाणिशुक्तिश्चेति।—शुक्तिर्द्वितीया, पाणिशुक्तिस्तृतीयेत्यर्थः। एताश्च तिस्रो मात्रा यथाबलं प्रयोज्याः। सुश्रुतेऽप्युक्तं—"नस्याः प्रमाणमष्टौ बिन्दवः, प्रदेशिनीपर्वद्वयनिःसृता प्रथमा मात्रा, द्वितीया तु शुक्तिस्तृतीया पाणिशुक्तिरित्येतास्तिस्रो मात्रा यथाबलं प्रयोज्याः।" इति। शुक्ति-पाणिशुक्तिशब्दयोरर्थमाह, द्वात्रिंशद्बिन्दव इति। द्वे शुक्तीति—चतुःषष्टिबिन्दव इत्यर्थः। इदञ्च शुक्तिपाणिशुक्त्याख्यमात्राद्वयं मिलित्वैव नासापुटाभ्यां प्रयोज्य, न तु प्रथममात्रावत् प्रत्येकम् इत्याहुः। एतञ्च स्नेहनस्यं न गिलेत् किन्तु ष्ठीवेदेव। उक्तं हि सुश्रुते—"स्नेहनस्यं न चोपगिलेत् कथञ्चिदपि" इति॥ ६॥

तैलं कफे च वाते च केवले पवने वसाम् ।
दद्यात्त्रयः सदा पित्ते सर्पिर्मज्जा समारुते ॥ ७ ॥
ध्मापनं रेचनश्चूर्णो युञ्ज्यात् तं मुखवायुना ।
षडङ्गुलद्विमुखया नाड्या भेषजगर्भया ॥
स हि भूरितरं दोषं चूर्णत्वादपकर्षति ॥ ८ ॥
शिरोविरेचनद्रव्यैः स्नेहैर्वा तैः प्रसाधितैः ।
शिरोविरेचनं दद्याद् रोगेषु तेषु बुद्धिमान् ॥
गौरवे शिरसः शूले जाड्ये स्यन्दे गलामये ।
शोथगण्डक्रिमिग्रन्थि-कुष्ठापस्मारपीनसे ॥ ९ ॥
स्निग्धस्विन्नोत्तमाङ्गस्य प्राक्कृतावश्यकस्य च ।
निवातशयनस्थस्य जत्रूर्ध्वं स्वेदयेत् पुनः ॥

---

इदानीं यस्मिन् दोषे यः स्नेहः प्रयोज्यस्तमाह, तैलमित्यादि ।—चकारात् वातकफसंसर्गे च तैलं देयमित्यर्थः । केवल इति—निरावरणे वाते ; मज्जा तु समारुतपित्ते ॥ ७ ॥

प्रधमनमाह, ध्मापनमित्यादि ।—वाग्भटस्य ।—रेचन इति—शिरोविरेचनद्रव्यकृतः, किंवा रेचनशीलोऽतिविशेषण इत्यर्थः । स इति—चूर्णः । चूर्णत्वादिति—सूक्ष्मत्वेनानुसारित्वादित्यभिसन्धिः । एतच्च प्रधमनं चूर्णं प्रयुज्यते यदा शिरोर्दिष्यपि बहुवैद्यव्यवहारसिद्धो विधिर्बोध्यः ॥ ८ ॥

शिरोविरेचनमाह, शिरोविरेचनेत्यादि ।—शिरोविरेचनद्रव्यैरिति ।—अपामार्गबीजादिभिस्तैः कल्कीकृतैर्द्रव्यमिश्रितैरेतत्साधितैः स्नेहैर्वा इत्यर्थः । अस्य च मात्रार्थं विदेहो यथा—"चत्वारो बिन्दवः षड् वा तथाऽष्टौ वा यथाबलम् । शिरोविरेचने योज्या ऊर्द्धजत्रुविकारिणाम् ॥" इति । जाड्यं—शैत्यादिकम् ; स्यन्दोऽभिष्यन्दरोगः । पीनस इति—पुराणपीनसे ॥ ९ ॥

येन विधिना नस्यशिरोविरेचनं कर्त्तव्यं तदाह, स्निग्धेत्यादि ।—वाग्भटस्य ।—प्राक्कृतावश्यकस्य चेति ।—प्राक् पूर्वं कृतमावश्यकम् अवश्यकरणीयं मलमूत्रविसर्गमुखधावनादिकं येन तस्य । जत्रूर्ध्वमिति—ग्रीवामूर्द्धादिकम् ; स्वेदयेत् पुनरित्यनेन स्नानार्थमिद्वपञ्चकर्मोक्तमूलस्वेदापेक्षया भिन्न एव नस्याव्यवहितपूर्वकाले पुनः स्वेदः

अथोत्तानोर्द्धदेहस्य पाणिपादे प्रसारिते ।
किञ्चिदुन्नतपादस्य किञ्चिन्मूर्द्धनि नामिते ।
नासापुटं पिधायैकं पर्य्यायेण निषेचयेत् ॥
उष्णाम्बुतप्तं भैषज्यं प्रनाड्या पिचुना तथा ।
दत्ते पादतलस्कन्ध-हस्तकर्णादि मर्दयेत् ॥
शनैरुच्छिङ्घ्य निष्ठीवेत् पार्श्वयोरुभयोस्ततः ॥
आ भेषजक्षयादेवं द्विस्त्रिर्वा नस्यमाचरेत् ॥ १० ॥
स्नेहं विरेचनस्यान्ते दद्याद्दोषाद्यपेक्षया ।
त्र्यहात् त्र्यहाच्च सप्ताहं स्नेहकर्म समाचरेत् ॥
एकाहान्तरितं कुर्य्याद्रेचनं शिरसस्तथा ॥ ११ ॥

---

कर्त्तव्य इति बोधयति। किञ्चिदुन्नतपादस्येति—चरकेऽपि पादोन्नतस्येत्युक्तम्। पर्य्यायेणेति—क्रमेण, न त्वेकदा। उष्णाम्बुतप्तमिति—उष्णाम्बुयोगादुष्णाम्बुवाष्पेण वा तप्तम्। प्रनाड्येति—नलनलिकया; पिचुनेति—तूलकेन। आदिग्रहणात् ग्रीवाललाटादीनां ग्रहणम्। पार्श्वयोरिति—वामदक्षिणनासापुटयोः; आ भेषजक्षयादिति छिद.; भेषजनिःसरणपर्य्यन्तं शनैरुच्छिङ्घ्य निष्ठीवेदित्यर्थः। एकमुक्तपरिपाट्या वारद्वयं त्रयं वा दोषापेक्षया अधिकमपि नस्यं कुर्य्यादित्यर्थः। नस्ये क्रियमाणे यदि नस्यस्य सम्यक्प्रयोगेण मूर्च्छा स्यात् तदा शिरः परित्यज्य शीततोयेन सेचनं कार्य्यम्। अत एवैतदनन्तरं वाग्भटे यथा—"मूर्च्छायां शीततोयेन सिञ्चेत् परिहरन् शिरः" इति ॥ १० ॥

शिरोविरेचनस्यानन्तरीयं विधिमाह, स्नेहमित्यादि।—वाग्भटस्य।—स्नेहमिति—स्नेहनस्यम्। स्नेहनस्यं विरेचननस्यस्य कियन्तं कालं कया परिपाट्या कुर्य्यादित्याह—त्र्यहात् त्र्यहादित्यादि।—एकैकदिनमन्तरीकृत्य सप्ताहमन्तरितदिनानि वर्जयित्वा स्नेहनस्यं, शिरसो विरेचनन्तु एकाहान्तरितं कुर्य्यात्। तेन यस्मिन् यस्मिन् दिने स्नेहनस्यं न दीयते तस्मिन् तस्मिन्नेव दिने विरेचनं नस्यं देयमित्यर्थः। एतेनैकस्मिन् दिने स्नेहनम्, अपरस्मिन् दिने शिरोविरेचनमेव। अपरत्वापरत्वेति शिरोविरेचनान्तरितं भवति। एकाहान्तरितः शिरोविरेकः कार्य्य इत्युपलक्षणेन द्व्यन्तरमपि ज्ञेयम्; तथा सप्ताहमित्युपलक्षणं, तेन त्र्यहादिकमपि दोषाद्यपेक्षया ज्ञेयम्। उक्तं हि—"एकान्तरं द्व्यन्तरं वा नस्यं दद्याद्विचक्षणः। सप्ताहन्तु

सम्यक्स्निग्धे सुखोच्छ्वास-स्वप्नबोधाक्षिपाटवम् ॥ १२ ॥
रूक्षेऽक्षिस्तब्धता शोषो नासास्ये मूर्धशून्यता ।
स्निग्धेऽतिकण्डूगुरुता प्रसेकारुचिपीनसाः ॥ १३ ॥
सुविरिक्तेऽक्षिलघुता वक्त्रस्वरविशुद्धयः ।
दुर्विरिक्ते गदोद्रेकः क्षामताऽतिविरेचिते ॥ १४ ॥
तोयमद्यगरस्नेह-पीतानां पातुमिच्छताम् ।
भुक्तभक्तशिरःस्नात-स्नातुकामस्रुतासृजाम् ॥
नवपीनसवेगार्त-सूतिकाश्वासकासिनाम् ।
शुद्धानां दत्तबस्तीनां तथानार्तवदुर्दिने ॥
अन्यत्रात्ययिके व्याधौ नैषां नस्यं प्रयोजयेत् ॥ १५ ॥

---

परं दैर्घं विघाताय पुनःपुनः ॥ अर्धं दद्यादथवा समस्तं वा युग्मितम् । परं नखाग्रमूर्धन्तु नखाग्रात् शाखाग्रतो प्रशेत् ॥" इति ॥ ११ ॥

सम्यक्स्निग्धलक्षणमाह, सम्यगित्यादि ।—वाग्भटस्य ।—सुखशब्दः उच्छ्वासादिना प्रत्येकं सम्बध्यते । अक्षीतीन्द्रियोपलक्षणम् ; अक्षपाटवमिति वा पाठः ; तन्त्रान्तरे प्रसादश्चेन्द्रियाणामित्युक्तम् ॥ १२ ॥

असम्यक्स्निग्धलक्षणमाह, रूक्ष इत्यादि ।—वाग्भटस्य ।—रूक्षे इत्यसम्यक्स्निग्धे । अतिस्निग्धलक्षणमाह, स्निग्ध इत्यादि ।—वाग्भटस्य ।—अतिस्निग्ध इत्यन्वयः । प्रसेक इति—कफप्रसेकः ॥ १३ ॥

रेचिकनस्यस्य सम्यग्योगादीनभिधाय रेचननस्यस्यापि तानाह सुविरिक्त इत्यादि ।—वाग्भटस्य ।—क्षामता—स्वल्पद्रवधातुता ॥ १४ ॥

येषां नस्यं न विधेयं तानाह, तोयेत्यादि ।—वाग्भटस्य ।—तोयादिकं पीतं यैस्ते तथेति आहिताग्न्यादित्वात् परनिपातः । अनार्तवदुर्दिने—हेमन्तशिशिरयोर्मेघव्याप्तेऽह्नि । अन्यत्रात्ययिके व्याधाविति ।—आत्ययिके तु व्याधौ नस्यैकसाध्ये निषिद्धनस्यानामपि नस्यं विधेयमेवेत्यर्थः । नैषां नस्यं प्रयोजयेदिति—श्लोकपादश्चक्रेण प्रतिमर्शकाले दत्तः ॥ १५ ॥

न नस्यमूनसप्ताब्दे नातीताशीतिवत्सरे ।
न चोनद्वादशे धूमः कवलो नोनपञ्चमे ॥
न शुद्धिरूनदशमे न चातिक्रान्तसप्ततौ ।
आजन्ममरणं शस्तः प्रतिमर्षस्तु बस्तिवत् ॥ १६ ॥

इति नस्याधिकारः ।

---

## अथ धूमपानाधिकारः ।

प्रायोगिकः स्नैहिकश्च धूमो वैरेचनस्तथा ।
कासहृद्वामनश्च धूमः पञ्चविधो मतः ॥ १ ॥

---

इदानीं यस्मिन् वयसि नस्यं न विधेयं तदाह, न नस्यमित्यादि ।—वाग्भटस्य ।—ऊनसप्ताब्द इति ।—एकवर्षमारभ्य षड्वर्षपर्य्यन्तम् इति । प्रतिमर्षव्यतिरिक्तं नस्यं न प्रयोज्यं, सप्तमवर्षात् प्रभृति तु विधेयमेवेत्यर्थः । उक्तं हि तन्त्रान्तरेण—"सप्तवर्षमुपादाय नस्यकर्म चतुर्विधम्" इति । अतीताशीतिवत्सर इति ।—एकाशीत्यादौ । निषेध्यप्रस्तावात् निषेध्यधूमकवलादीनप्याह, न चोनद्वादश इत्यादि ।—ऊनद्वादश इति ।—एकवर्षमारभ्य एकादशवर्षपर्य्यन्ते ; एवं वक्ष्यमाणेऽपि ज्ञेयम् । शुद्धिरिति—वमनविरेचने । प्रतिमर्षस्तथा बस्तिरिति सर्वकालमेव विधेय इत्याह, आजन्मेत्यादि ॥ १६ ॥

इति नस्याधिकार-विवृतिः ।

---

नस्यवन्नाप्रयोज्यत्वसाधर्म्यात् पञ्चसंख्यासामान्याच्च नस्यानन्तरविधेयत्वाच्च नस्यानन्तरं धूमविधिमाह, प्रायोगिक इत्यादि ।—प्रायोगिक इति—नित्यपेयधूमस्य संज्ञा । प्रयोगः,—सतताभ्यासः, तद्विषयको धूमः प्रायोगिकः । स्नेहाय प्रभवतीति स्नैहिकः । दोषविरेचनाद्वैरेचनिकः । कासं हरतीति कासहरः । वामयतीति वामनः । यद्यपि चरके प्रायोगिकस्नैहिकवैरेचनिकभेदात् त्रिविध एव धूम उक्तस्तथापि प्रायोगिके कासहरं, वैरेचनिके च वामनीयमन्तर्भाव्य चरकसुश्रुतयोर्विरोधः परिहरणीयः ॥ १ ॥

ऋजु त्रिकोषफलितं कोलास्थ्यग्रप्रमाणितम् ।
वस्तिनेत्रसमद्रव्यं धूमनेत्रं प्रशस्यते ॥
सार्द्धस्त्र्यंशयुतः पूर्णो हस्तः प्रायोगिकादिषु ।
नेत्रे कासहरे त्र्यंशहीनः शेषे दशाङ्गुलः ॥ २ ॥
औषधैर्वर्त्तिकां कृत्वा शरीगर्भां विशोषिताम् ।
विगर्भामग्निसंप्लुष्टां कृत्वा धूमं पिबेन्नरः ॥

---

धूमपानार्थं नलिकाविधानमाह, ऋज्वित्यादि ।—चरकस्य ।—त्रिकोषफलितमिति ।—त्रिभिः पर्वभिर्भिन्नैः समन्वितं त्रिभिः त्रिकोषफलितमृजु, तेन ऋजुम् नेत्रे स्थानत्रयी भङ्गः कार्यः, स च नलिकावयवेन घटनीय इत्याहुः । कोलास्थ्यग्रप्रमाणितमिति ।—यस्य नेत्रस्याग्र कोलास्थिप्रवेशयोग्य कार्य्यमित्यर्थः । मूलमासाङ्गुष्ठप्रवेशयोग्यम् । यदाह वाग्भटः—"मूलाग्रेऽङ्गुष्ठकोलास्थि-प्रवेशं धूमनेत्रकम्" इति । वस्तिनेत्रसमद्रव्यमिति ।—वस्तिनेत्रेण सम तुल्यं यद्द्रव्यं सुवर्णरूप्यताम्रादिकं यस्य । यदीक्षनलिकादिकृतधूमपानमनुपद्रवकरमेवेति, यथा—"दूराद्विनिर्गतः पर्वच्छिन्नो नाडीतनूकृतः । नेन्द्रियं बाधते धूमो मात्राकालनिषेवितः ॥" इति । धूमभेदेन नेत्रमानभेदमाह, सार्द्ध इत्यादि ।—हस्तोऽत्र चतुर्विंशत्यङ्गुलपरिमितः, तेन प्रायोगिके धूमे सार्द्धो हस्त षट्त्रिंशदङ्गुलं नेत्रमित्यर्थः । त्र्यंशयुत इति ।—चतुर्विंशत्यङ्गुलस्य तृतीयोऽंशोऽष्टाङ्गुलं, तेन युक्तो हस्त इत्यर्थः ; एतेन स्नैहिके द्वात्रिंशदङ्गुलं नेत्रमित्यर्थः । वैरेचने तु—पूर्णो हस्तश्चतुर्विंशत्यङ्गुलमित्यर्थः । कासहरे धूमे त्र्यंशहीनो हस्तः षोडशाङ्गुलमित्यर्थः । शेष इति—वामने ॥ २ ॥

इदानीं धूमपानार्थं नलिकामभिधाय धूमपाने यथा विधेयं तदाह, औषधैरित्यादि ।—औषधैरिति—गन्धैरकुष्ठतगरैरित्यादिना वक्ष्यमाणैरौषधैर्वर्त्तिकां कृत्वा धूमं पिबेत् । वर्त्तिकाकरणप्रकारमाह, शरीगर्भामित्यादि ।—शरी—शरपुष्पस्य नलिका, सा गर्भे अभ्यन्तरे यस्याः ताम् , एतेन पिष्टैरौषधैः शरीं प्रलिप्य वर्त्तिः कार्य्येत्यर्थः । विशोषितामिति—तां वर्त्तिं विशोष्य ततः शरीमाकृष्य विगर्भां कुर्य्यादित्यर्थः । अग्निसंप्लुष्टामिति—तां विगर्भां वर्त्तिं नेत्रान्ते समारोप्य अग्निसंप्लुष्टां कृत्वा धूमं पिबेदित्यर्थः । एषा वर्त्तिरष्टाङ्गुला यववन्मध्यस्थूला परिणाहेनाङ्गुष्ठसम्मिता कर्त्तव्या । यदाह चरकः,—"पिष्टा लिम्पेच्छरेषीकां तां वर्त्तिं यवसन्निभाम् । अङ्गुष्ठ-

वक्त्रेणैव वमेद्धूमं नस्तो वक्त्रेण वा पिबन् ।
उरःकण्ठगते दोषे वक्त्रेण धूममापिबेत् ॥
नासया तु पिबेद्दोषे शिरोघ्राणाक्षिसंश्रये ॥ ३ ॥
गन्धैरकुष्ठतगरैर्वर्त्तिः प्रायोगिके मता ।
स्नैहिके तु मधूच्छिष्ट-स्नेहगुग्गुलुसर्जकैः ॥
शिरोविरेचनद्रव्यैर्वर्त्तिर्वैरेचने मता ।
कासघ्नैरेव कासघ्नी वामनैर्वामनी मता ॥ ४ ॥
योज्या न पित्तरक्तार्त्ति-विरिक्तोदरमेहिषु ।
तिमिरोर्द्ध्वानिलाध्मान-रोहिणीदत्तवस्तिषु ।
मत्स्यमद्यदधिक्षीर-क्षौद्रस्नेहविषाशिषु ।
शिरस्यभिहते पाण्डुरोगे जागरिते निशि ॥ ५ ॥

---

सन्निभतो कुर्य्यादष्टाङ्गुलसमो भिषक् ॥" इति । धूमं पीत्वा धूमं कथं वमेदित्याह, वक्त्रेणेत्यादि ।—नस्त इति नासिकया, सार्वविभक्तिकस्तसिः । एवकारेण नासिका निषिध्यते, वक्त्रेणैव धूमं वमेत्, न तु नासयेत्यर्थः । अत्र हेतुश्चरकेणोक्तो यथा— "प्रतिलोम गतो ह्याशु धूमो हिंस्याद्धि चक्षुषी" इति । वक्त्रधूमपान नासाधूमपानयोर्विषयमाह, उर इत्यादि ॥ ३ ॥

चौषधैर्वर्त्तिका कर्त्तव्या, अतो वर्त्त्यर्थमौषधान्याह, गन्धैरित्यादि ।— गन्धैरित्यगुर्वादिसुगन्धिद्रव्यैः । अकुष्ठतगरैरिति—कुष्ठतगरवर्जितैः । कुष्ठतगरयोरतितीक्ष्णत्वेन मस्तुलुङ्गस्रावकत्वात् । उक्तञ्च भालुकौ— "अतकुष्ठे स्रावयतो धूमवर्त्तिप्रयोजिते । मस्तुलुङ्गं विशेषेण तस्मात् तौ नैव योजयेत् ॥" इति । मधूच्छिष्ट—सिक्थकम् ; स्नेहोऽत्र घृतं वसा च, "वसाघृतमधूच्छिष्टैः" इति वचनात् । शिरोविरेचनैर्द्रव्यैरिति—श्वेताज्योतिष्मत्यादिभिश्चरकोक्तैः । कासघ्नैरिति—बृहतीकण्टकारीत्रिकटुकासमर्दादिभिः सुश्रुतोक्तैः । वामनैरिति —स्नायुचर्मखुरशृङ्गादिभिः सुश्रुतोक्तैः ॥ ४ ॥

येषु धूमो न विधेयस्तानाह, योज्या इत्यादि ।—वाग्भटस्य ।—दत्तवस्तिष्विति —कृतनिरूहेषु । विरिक्तास्थापितजागरितेत्यादि सुश्रुतदर्शनात् ॥ ५ ॥

रक्तपित्तान्ध्यबाधिर्य्य-तृष्णामूर्च्छामदमोहकृत्।
धूमोऽकालेऽतिपीतो वा तत्र शीतो विधिर्हितः।
एतद्धूमविधानन्तु लेशतः सम्प्रकाशितम् ॥ ६ ॥

इति धूमपानाधिकारः।

---

## अथ कवलगण्डूषाधिकारः।

स्निग्धोष्णैः स्नैहिको वाते स्वादुशीतैः प्रसादनः।
पित्ते कट्वम्ललवणै रूक्षैः संशोधनः कफे ॥
कषायस्वादुतिक्तैश्च कवलो रोपणो व्रणे ॥ १ ॥
सुखं सञ्चार्य्यते या तु सा मात्रा कवले हिता।
असञ्चार्य्या तु या मात्रा गण्डूषे सा प्रकीर्त्तिता ॥
तावच्च धारणीयोऽयं यावद्दोषप्रवर्त्तनम्।
पुनश्चान्योऽपि दातव्यस्तथा क्षौद्रघृतादिभिः ॥ २ ॥

---

अकालातिपीतधूमयोर्दोषमाह, रक्तपित्तेत्यादि।—अत्र पीतो इति छेदः। धूमपानविधिश्चरकसुश्रुतादावतिप्रपञ्चितः, इह तु ग्रन्थविस्तरभयात् संक्षेपेणैवोक्त इत्याह, एतदित्यादि ॥ ६ ॥

इति धूमपानाधिकार विवृतिः।

---

ऊर्द्ध्वजत्रुगतदोषहरत्वसामान्यात् धूमाधिकारानन्तरं कवलगण्डूषाधिकारः प्रारभ्यते। तत्र कवलश्चतुर्विधो भवति यदाह सुश्रुतः,—"चतुर्धा कवलः स्नेही प्रसादी शोधि-रोपणौ" इति, अतस्तेषां चतुर्णां स्वरूपं विषयञ्चाह, स्निग्धोष्णैरित्यादि।—सुश्रुतश्च। —यद्यपि तन्त्रान्तरे वैरेचनसंशमनाभ्यां सह षड्विधत्वमेवोक्तं तथाप्यत्र संशोधने वैरेचनस्य प्रसादने च, संशमनस्यान्तर्भावान्न विरोधः। वाग्भटे तु—कवलगण्डूषयोरभेदमभ्युपेत्य चतुर्विधत्वमुक्तं, यथा—"चतुष्प्रकारो गण्डूषः स्निग्धः शमनशोधनौ। रोपणश्च त्रयस्तत्र त्रिषु योज्यानिलादिषु। पञ्चमो व्रणः—" इति ॥ १ ॥

मात्राभेदेन कवलगण्डूषयोर्भेदमाह, सुखमित्यादि।—सुश्रुतस्तु।—असौ कवलः

व्याधेरपचयस्तुष्टिर्वैशद्यं वक्त्रलाघवम्।
इन्द्रियाणां प्रसादश्च कवले शुद्धिलक्षणम्॥ ३॥
दाहतृष्णाप्रशमनान् हन्ति मधुगण्डूषधारणम्।
धान्याम्लमास्यवैरस्य-मलदौर्गन्ध्यनाशनम्॥
तदेवालवणं शीतं मुखशोषहरं परम्।
आशु क्षाराम्बुगण्डूषो भिनत्ति श्लेष्मणश्चयम्।
सुखे हितं वातहरं तैलगण्डूषधारणम्॥ ४॥

इति कवलगण्डूषाधिकारः।

---

## अथाश्च्योतनाञ्जन-तर्पण-पुटपाकाधिकारः।

*सर्वेषामक्षिरोगाणामादावाश्च्योतनं हितम्।
रुक्तोदकण्डूघर्षाश्रु-दाहरागनिबर्हणम्॥

---

कियन्तं कालं मुखे धारणीयः?—इत्याह, तावदित्यादि।—अत्र क्षौद्रं कफे कफपित्ते च, घृतं वाते वातपित्ते च। आदिशब्देन दुग्धादिकम्। यदाह सुश्रुतः,—"एवं स्नेहपयःक्षौद्ररसमूत्राम्लसंयुताः। कषायोष्णोदकाभ्याञ्च कवला दोषतो हिताः॥" इति॥ २॥

कवलस्य सम्यग्योगलक्षणमाह, व्याधेरित्यादि।—सुश्रुतस्य।—अयोगातियोगलक्षणमितोऽनन्तरं यथा—"हीने जाड्यकफोत्क्लेशावरसज्ञानमेव च। अतियोगान्मुखे पाकः शोषतृष्णारुचिक्लमाः॥" इति। एतच्च सम्यग्योगातियोगलक्षणं शोधनकवलस्येति भानुमतीप्रभृतयः। अन्ये तु—सम्यग्योगलक्षणविपर्ययेणैव असम्यग्योगलक्षणं सुधीभिरूह्यमित्यभिप्रायेण अयोगातियोगलक्षणं नोक्तमिति॥३॥

दाहेत्यादि श्लोकं वाग्भटस्य।—आशु—शीघ्रम्। क्षाराम्बु—यवक्षारजलम्। तैलमिति—तिलतैलम्॥ ४॥

इति कवलगण्डूषाधिकार-विवृतिः।

---

पूर्वोक्तक्रमेणैवाश्च्योतनाधिकारमाह, सर्वेषामित्यादि। घर्षः,—करकरिका।

अथाञ्जनं शुद्धतनोर्नेत्रमात्राश्रिते मले।
पक्वलिङ्गेऽल्पशोथार्त्ति-कण्डूपैच्छिल्यलक्षिते ॥
मन्दघर्षाश्रुरागेऽक्ष्णि प्रयोज्यं घनदूषिके ॥ ३ ॥
लेखनं रोपणं दृष्टि-प्रसादनमिति त्रिधा।
अञ्जनं लेखनं तत्र कषायाम्लपटूषणैः।
रोपणं तिक्तकैर्द्रव्यैः स्वादुशीतैः प्रसादनम् ॥ ४ ॥
दशाङ्गुला तनुर्मध्ये शलाका मुकुलानना ॥ ५ ॥
प्रशस्ता लेखने ताम्री रोपणे काललोहजा।
अङ्गुली च सुवर्णोत्था रूप्यजा च प्रसादने।
पिण्डो रसक्रिया चूर्णं त्रिधैवाञ्जनकल्पना।
गुरौ मध्ये लघौ दोषे तां क्रमेण प्रयोजयेत् ॥
अथानुन्मीलयन् दृष्टिमन्तः सञ्चारयेच्छनैः।
अञ्जिते वर्त्मनी किञ्चिच्चालयेच्चैवमञ्जनम् ॥
अपेतौषधसंरम्भं निर्वृतं नयनं यदा।

---

आमशोफानन्तरमञ्जनमाह, अथेत्यादि।—अथेत्यानन्तर्ये। शुद्धतनोरिति—कायशिरोविरेकाभ्याम्। नेत्रमात्राश्रिते मले इति।—नेत्र एव स्थिते दोष इत्यर्थः। एतेन प्रदेशान्तरस्थदोषादञ्जनमनुपादेयमित्युक्तम्। सुश्रुतेऽप्युक्तं—"नेत्र एव स्थिते दोषे प्राप्तमञ्जनमाचरेत्" इति; तथा पक्वलिङ्गे पक्वाभिधीयमानलक्षणे सत्येवाञ्जनं प्रयोज्यम्। तदेव पक्वलक्षणं कथं ज्ञातव्यम्?—इत्यत आह, अल्पशोथेत्यादि।—अल्पशब्दस्य शोथादिभिः प्रत्येकमन्वयः; एवं मन्दशब्दस्यापि घर्षादिभिरिति। लक्षिते इति—ज्ञाते। दूषिका—नेत्रपिञ्चोडिका ॥ ३ ॥

अञ्जनस्य त्रैविध्यमाह, लेखनमित्यादि।—वाग्भटस्य। अञ्जनमिति च्छेदः। एषां स्वरूपमाह, लेखनं तत्रेत्यादि।—तत्रेति—त्रिषु लेखनादिषु मध्ये, पटु लवणं, ऊषणं कटु, पिप्पल्यादिकषायादिभिर्द्रव्यैर्यदञ्जनं तल्लेखनमित्यर्थः ॥ ४ ॥

अञ्जनदानार्थं शलाकामाह, दशाङ्गुलेत्यादि।—वाग्भटस्य।—तत्रैव मुकुलानना कुन्दजातीमल्लिकामुकुलमुखी ॥ ५ ॥

अञ्जनभेदेन शलाकाभेदमाह, प्रशस्तेत्यादि।—काललोहः,—पाण्ड्वादिः। प्रशा-

कण्ड्वाजाड्येऽञ्जनं तीक्ष्णं धूमं वा योजयेत् पुनः।
तीक्ष्णाञ्जनाभितप्ते तु चूर्णं प्रत्यञ्जनं हितम्॥ ८॥
नाञ्जयेद्भीतवमित-विरिक्ताशितवेगिते।
क्रुद्धज्वरिततान्ताक्षि-शिरोरुक्शोकजागरे॥

---

तदा सुखेन तीक्ष्णाञ्जनं देयम्। रात्रौ तु प्रसादनम्; चक्षुष्यत्वाद्दीपकत्वाच्चेति चन्द्रिका। रात्रावप्यतिशीते तीक्ष्णाञ्जनं न कार्य्यम्; यदाह वाग्भटः,—"न रात्रावपि शीतेऽपि नेत्रे तीक्ष्णाञ्जनं हितम्। दोषमस्रावयत् स्तम्भकण्ड्वाजाड्यादिकारि तत्॥" इति। ननु दिवा कथमञ्जनम्? यतः,—"दिवा तु न प्रयोक्तव्यं नेत्रयोस्तीक्ष्णमञ्जनम्। विरेकदुर्बलं चक्षुरादित्यं प्राप्य सीदति॥" इत्युच्यते; स्वस्थाभिप्रायादिदं वाक्यम्; किंवा अत्युद्रिक्तकफापेक्षया दिवाञ्जनविधानं बोध्यम्; यदाह वाग्भटः,—"अत्युद्रिक्ते बलासे तु लेखनीयेऽथवा गदे। काममह्न्यपि नात्युष्णे तीक्ष्णमक्ष्णि प्रयोजयेत्॥" इति। लेखनीये गदे इति—लेखनीयशुक्लार्मादौ। ननु विरेकदुर्बलं चक्षुरादित्यं प्राप्य सीदतीति वचनमनुपपन्नं, यतो नेत्रस्य तैजसत्वादादित्यं प्राप्य तेजोऽभिवृद्धिरेव युक्ता सामान्यं वृद्धिकारणमिति सिद्धान्तः? नैवम्; कालस्तीक्ष्णादञ्जनस्य च तीक्ष्णत्वादतियोगेन ह्युपघातः स्यादिति; अत एवाह वाग्भटः,—"अश्मनो जन्म लोहस्य तत एव च तीक्ष्णता। उपघातोऽपि तेनैव तथा नेत्रस्य तेजसः॥" इति। अस्यार्थः,—यथा लोहस्य जन्म अश्मनस्तथा तीक्ष्णताऽपि अश्मनः शाणप्रस्तरात्, तथा उपघातः कुण्ठत्वादिरपि अश्मन एव। एवं नेत्रस्य जन्म तैजसस्तथा तीक्ष्णताऽपि अनुपहतात् स्निग्धरूपात् तेजसः, तथा उपघातोऽपि अतितीक्ष्णसौरादितेजस इति दृष्टत्वात् ज्ञायते॥ ७॥

अञ्जने दत्तेऽपि यदि कण्ड्वाजाड्यादिकं तिष्ठति, तदा पुनरपि तीक्ष्णमञ्जनं धूमं वा योजयेदित्याह, कण्ड्वाद्य इत्यादि।—वाग्भटस्य।—यदि पुनस्तीक्ष्णाञ्जनविधानेन दाहः स्यात्, तदा दृष्टिप्रसादनमञ्जनं कार्य्यमित्याह, तीक्ष्णाञ्जनेत्यादि।—अस्यैव अभितप्त इति सदाहे। प्रत्यञ्जनमिति—तीक्ष्णाञ्जनप्रत्यनीकमञ्जनं मृदुशीतलमञ्जनमित्यर्थः॥ ८॥

अञ्जनं येषु न विधेयं तानाह, "नाञ्जयेत्" इत्यादि "पिपासिते" इत्यन्तम्।—वाग्भटस्य।—वमित—सद्योभुक्तवति। वेगित इति—दोषवेगोदये। सुश्रुतेऽप्युक्तम्—"दोषवेगोदयेऽप्युक्तो कुर्य्यात् तांस्तानुपद्रवान्" इति ज्वरित इति—नवज्वरितः।

शतानि सप्त चाष्टौ च दश मन्येऽनिले दश ।
पित्ते षट् स्वस्थवृत्ते च बलासे पञ्च धारयेत् ॥
स्रुत्वापाङ्गे ततो द्वारं स्नेहं पात्रे तु गालयेत् ।
पिबेच्च धूमं नेक्षेत व्योम रूपञ्च भास्वरम् ॥
इत्थं प्रतिदिनं वाते पित्ते त्वेकान्तरं कफे ।
स्वस्थे च द्व्यन्तरं दद्यादा तृप्तेरिति योजयेत् ॥
प्रकाशक्षमता स्वास्थ्यं विशदं लघु लोचनम् ।
तृप्ते विपर्य्ययोऽतृप्तेऽतितृप्ते श्लेष्मजा रुजः ॥ ११ ॥
पुटपाकं प्रयुञ्जीत पूर्वोक्तेष्वेव लक्ष्मसु ।
स वाते स्नेहनः श्लेष्म-सहिते लेखनो हितः ।
दृग्दौर्बल्येऽनिले पित्ते रक्ते स्वस्थे प्रसादनः ॥ १२ ॥

---

मौषि शतानि । पक्ष्ममण्डलमते तु—पञ्च शतानि । कृष्णमण्डलमते तु—सप्त शतानि । दृष्टिमण्डले—चाष्टौ । मन्ये इति—अधिमन्थे—दश, इत्यादिक्रमेण धारयेत् । धारणानन्तरञ्च यत् कार्य्यं तदाह, स्रुत्वेत्यादि ।—द्वारमिति—आश्रयाक्षि छिद्रं कृत्वा । व्योमेति—आकाशं नेक्षेत । भास्वरं रूपमग्न्यादि । अयञ्च क्रमो यस्मिन् दीर्घे यावद्दिनं कार्य्यस्तदाह, इत्थमित्यादि ।—अयञ्च दिनक्रमः चक्षुस्तृप्तिपर्य्यन्तं योज्य इत्याह, आ तृप्तेरित्यादि ।—योजयेदिति उक्तदिनक्रमं चक्षुस्तृप्तिपर्य्यन्तं योजयेदित्यर्थः । सम्यक्तृप्तस्य चक्षुषः किं लक्षणम् ?—इत्याह प्रकाशेत्यादि ।—प्रकाशक्षमता—भास्वरादिप्रभादर्शनक्षमत्वम् । स्वास्थ्यमवेदनत्वम् । तर्पणहीनातियोगलक्षणमाह—विपर्य्यय इत्यादि ।—विपर्य्ययः,—प्रकाशाक्षमतादिवैपरीत्यम् । अतितृप्ते तु श्लेष्मजा रुजः कण्डूपैच्छिल्यादयः ॥ ११ ॥

पुटपाकमाह, पुटपाकमित्यादि ।—वाग्भटस्य भवेदित्यन्तम् । पूर्वोक्तेष्विति—तर्पणोक्तेषु रोगेष्वित्यर्थः । स्नेहनादिभेदेन त्रिविधस्य पुटपाकस्य पृथक् पृथक् विषयमाह, स वात इत्यादि ।—स इति पुटपाकः, स्नेहनः,—वाते हितः । श्लेष्मसहिते तु वाते लेखनः पुटपाको हित इति । दृग्दौर्बल्यादौ तु प्रसादनः पुटपाको हित इत्यर्थः । इदञ्च पुटपाकत्रयं यैर्द्रव्यैर्विधेयं तद्वाग्भटेनोक्तम्, इह तु ग्रन्थविस्तारभयशङ्कया न लिखितम् ; किन्तूपयुक्तमिति कृत्वा मया लिख्यते । यथा—"भूशयप्रसहानूप-मेदो-

बिल्वमात्रं पृथक् पिण्डं मांसभेषजकल्कयोः ।
उरुबूकवटाम्भोज-पत्रैः स्निग्धादिषु क्रमात् ॥
वेष्टयित्वा मृदा लिप्तं धवधन्वनगोमयैः ।
पचेत् प्रदीप्तैरग्न्याभं पक्वं निष्पीड्य तद्रसम् ।
नेत्रे तर्पणवद् युञ्ज्याच्छतं द्वे त्रीणि धारयेत् ॥
लेखनस्नेहनान्त्येषु कोष्णौ पूर्वौ हिमोऽपरः ।
धूमपोऽन्ते तयोरेव योगास्तत्र च तृप्तिवत् ॥ १२ ॥

---

मज्जवसामिषैः । लेखनं मधुना पिष्टैर्जीवनीयैश्च कल्पयेत् ॥ जाङ्गलविषयजन्मांस-मुक्तायमामलसैन्धवैः । शीतीजलकफेनालेर्मेन सम्प्रकल्पितैः ॥ आनूपविषयजन्मांस-वसाज्यमज्जदधामिषैः । मधुरैः सघृतैः स्तन्यक्षीरपिष्टैः प्रसादनम् ॥" इति ॥ ११ ॥

पुटपाकद्रव्यस्य कल्पनामाह, बिल्वेत्यादि ।—मांसयुक्तं — मृगपक्ष्यादिमांसयुक्तं, भेषजञ्चानन्तरोक्तलेखनीयादिकं, तयोः कल्कयोः पिण्डम् । पृथग्बिल्वमात्रमिति—पलमात्रम् । एरण्डादिपत्रैः क्रमेण स्निग्धादिषु स्नेहादिपुटपाकेषु वेष्टयित्वा अनन्तरं मृदा लिप्तं प्रदीप्तैर्धवधन्वनगोमयैः पचेत् । क्रमादिति—धवधन्वनगोमयैरित्यत्रापि योजयन्ति केचित् । तेन स्नेहनपुटपाके एरण्डपत्रेण वेष्टनं, धवकाष्ठाङ्गारैश्च पाकः, लेखने वटपत्रेण वेष्टनं, धन्वनकाष्ठाङ्गारैश्च पाकः; प्रसादने तु पद्मिनीपत्रैर्वेष्टनं, गोमयाग्निना च पाक इति । अग्न्याभमिति—अग्निवर्णम्, एतच्च सम्यक्पाकज्ञानार्थमुक्तम् । तर्पणवद् युञ्ज्यादिति—अनेन निवातं तर्पणोक्त-विधिमात्रमतिदिशति । एतद्रसस्य कियन्तं कालं नेत्रे धारयेत् ?—इत्याह,—शतं द्वे त्रीणि धारयेत् इति । लेखनस्नेहनान्त्येष्विति ।—एतच्च यथाक्रमं योज्यम्, तेन लेखनपुटपाके शतमिति—मात्राशतं धारयेत् । स्नेहने तु द्वे मात्राशते; अन्त्य इति—प्रसादने त्रीणि मात्राशतानि धारयेदित्यर्थः । पूर्वौ लेखनस्नेहनाख्यौ कोष्णौ योज्यौ; अपर इति—प्रसादनो हिमः शीतलो योज्यः । धूमपोऽन्ते तयोरेवेति ।—तयोरिति—पूर्वयोः लेखनस्नेहनयोरेव अन्ते धूमपः स्यात्, न तु प्रसादनान्ते इत्येवमर्थः । योगास्तत्र च तृप्तिवदिति ।—तत्र तेषु लेखनादिपुटपाकेषु, योगा इति—सम्यग्-योगातियोगायोगलक्षणानि, तृप्तिवदिति—तर्पणवदित्यर्थः ॥ १२ ॥

तर्पणं पुटपाकश्च नस्यानर्हे न योजयेत् ।
यावन्त्यहानि युञ्जीत द्विगुणो हितभाग्भवेत् ॥ १४ ॥

इत्याश्चोतनाञ्जन-तर्पण-पुटपाकाधिकारः ॥

---

## अथ शिराव्यधाधिकारः ।

अथ स्निग्धतनुः स्निग्ध-रसान्नप्रतिभोजितः ।
प्रत्यादित्यमुखं स्विन्नो जानूच्चासनसंस्थितः ॥
मृदुपट्टात्तकेशान्तो जानुस्थापितकूर्परः ।
अङ्गुष्ठगर्भमुष्टिभ्यां मन्ये गाढं निपीड़येत् ॥
दन्तप्रपीड़नोत्कास-गण्डाध्मानानि चाचरेत् ।
पृष्ठतो यन्त्रयेच्चैनं वस्त्रमावेष्टयेन्नरः ॥

---

तर्पणपुटपाकौ येषां न कार्यौ तानाह, तर्पणमित्यादि ।—नस्यानर्हे इति ।—निषिद्धनस्यपुरुषे । इदानीं तर्पणपुटपाकविधानानन्तरं यावन्ति दिनानि हितसेवापरेण भूत्वा स्थातव्य तदाह, यावन्तीत्यादि ।—यावन्ति दिनानि व्याप्य तर्पणपुटपाकविधिः कृतः, तद्द्विगुणानि दिनानि हितसेवी भूत्वा तिष्ठेदित्यर्थः ॥ १४ ॥

इत्याश्चोतनाञ्जनतर्पण पुटपाकाधिकार-विवृतिः ।

---

पूर्वन्तु भैमरीये "स्निग्धस्याज्येन कोष्णेन शिरावेधैः प्रशमं नयेत्" इत्युक्तम्, अत आश्चोतनादिवत् शिराव्यधस्यापि भैमरीयहरत्वादनन्तरं शिराव्यधविधिर्वाच्यः । तत्र प्राधान्यात् प्रथमं शिरोगतशिराव्यधे कर्त्तव्ये शिरोत्थापनप्रकारमाह, अथेत्यादि ।—वाग्भटस्य ।—आदित्याभिमुखं यथा कृत्वा, जानूच्चासनसंस्थित इति ।—उपविष्ट इत्यर्थः । मृदुना पट्टेनात्तौ गृहीतौ बद्ध इति यावत्, केशान्तौ यस्य स तथा । जानुनि स्थापित कूर्परः कफोणिद्वयं येन स तथा । अङ्गुष्ठः हस्ताङ्गुष्ठद्वयं गर्भे अभ्यन्तरे ययोः । एताद्दृग्भ्याम् । मुष्टिभ्यां—वामदक्षिणमुष्टिभ्यां, मन्ये—ग्रीवाधमन्यौ प्रपीडयेत्; तथा दन्तसम्पीड़नादीनामन्यतममाचरेत्, आर्त्तं इति शेषः । दन्तैर्दन्तानां

कन्धरायां परिक्षिप्य न्यस्यान्तर्वामतर्जनीम् ।
एवमुत्थाप्य विधिना शिरां विध्येच्छिरोगताम् ॥ १ ॥
विध्येद्धस्तशिरां बाहावनाकुञ्चितकूर्परे ।
बद्ध्वा सुखोपविष्टस्य मुष्टिमङ्गुष्ठगर्भिणीम् ।
ऊर्द्ध्वं वेध्यप्रदेशाच्च पट्टिकां चतुरङ्गुले ॥ २ ॥
पादे तु सुस्थितेऽधस्तात् जानुसन्धेर्निपीडिते ।
गाढं कराभ्यामागुल्फं चरणे तस्य चोपरि ॥
द्वितीये कुञ्चिते किञ्चिदारूढे हस्तवत् ततः ।
बद्ध्वा विध्येच्छिरामित्यमनुक्तेष्वपि कल्पयेत् ।
तेषु तेषु प्रदेशेषु तत्तद्यन्त्रमुपायवित् ॥
ततो व्रीहिमुखं वेध्य-प्रदेशे न्यस्य पीडयेत् ।
अङ्गुष्ठतर्जनीभ्यान्तु तलप्रच्छादितं भिषक् ॥ ३ ॥

---

प्रपीडनं दन्तप्रपीडनम् ; छायाया छाय एव ; मुखापूर्णं—वायुना मुखपूरणं, सुश्रुतेऽप्युक्तं—"कर्मकुर्वन् वायुना मुखं पूरयेत्" इति। तथा नरः,—परिचारकजनः, पृष्ठतः इति—पृष्ठदेशे स्थित्वा एनमातुरं धारयेत्। किं कुर्वन् धारयेत् ?—इत्याह—वस्त्रं कन्धरायां ग्रीवायां परिक्षिप्य तस्य मध्ये स्वकीयवामतर्जनीं न्यस्य धारयेत् अन्यमाविद्ध्यन् पीडयन् पीडयेदित्यर्थः ॥ १ ॥

विध्येदित्यादि ।—वाग्भटस्य ।—अनाकुञ्चित, कूर्परे कफोणिदेशे। किं कृत्वा विध्येत् ?—इत्याह,—सुखोपविष्टस्यातुरस्य अङ्गुष्ठगर्भिणीं मुष्टिं बद्ध्वा कर्षयित्वा। पुनः किं कृत्वा ?—वेध्यप्रदेशादुपरि चतुरङ्गुले वस्त्रपट्टिकां शिरावधनार्थं पट्टिकां वस्त्रादिपट्टीं बद्ध्वा ॥ २ ॥

पादगतशिराव्यधप्रकारमाह, पादे त्वित्यादि ।—वाग्भटस्य ।—सुस्थित इति ।—अनेन विषमपादन्यासं निरस्यति। किंविशिष्टे पादे ?—जानुसन्धेरधस्तात् वेदना कराभ्यामागुल्फं गुल्फपर्यन्तं गाढं निपीडिते इत्यर्थः। द्वितीये तु चरणे तस्य सुस्थितपादस्योपरि आरूढे सति। किंविशिष्टे द्वितीये चरणे ?—किञ्चित् कुञ्चिते। हस्तवत् ततो बद्ध्वेति।—यथा हस्ते बन्धादिकं यथा शिरां विध्येत् तथा अत्रापि इत्यर्थः। एवमुक्तरीत्या अनुक्तप्रदेशविषयमपि यन्त्रं मनुजाः कल्पयेदित्याह,

वामहस्तेन विन्यस्य कुठारीमितरेण तु ।
ताड़येन्मध्यमाङ्गुल्याङ्गुष्ठविष्टब्धमुक्तया ॥ ४ ॥
मांसले निक्षिपेद्देशे व्रीह्यास्यं व्रीहिमात्रकम् ।
यवार्द्धमस्थ्नामुपरि शिरां विध्यन् कुठारिकाम् ॥ ५ ॥
असम्यगस्रे स्रवति वेल्लव्योषनिशानतैः ।
सागारधूमलवण-तैलैर्दिह्याच्छिरामुखम् ॥
सम्यक् प्रवृत्ते कोष्णेन तैलेन लवणेन च ॥
अशुद्धौ बलिनोऽप्यस्रं न प्रस्थात् स्रावयेत् परम् ।
अतिस्रुतौ हि मृत्युः स्याद्दारुणा वाऽनिलामयाः ॥
तत्राभ्यङ्गरसक्षीर-रक्तपानानि भेषजम् ॥ ६ ॥
स्रुते रक्ते शनैर्यन्त्रमपनीय हिमाम्बुना ।
प्रक्षाल्य तैलप्रोताक्तं बन्धनीयं शिरामुखम् ॥

---

इत्यमित्यादि ।—व्रीहिमुखादिशस्त्रेण यथा शिराव्यधो विधेयस्तदाह, तत इत्यादि ।—न्यस्तारोप्य अङ्गुष्ठतर्जनीभ्यां पीडयेदित्यन्वयः। तत्प्रच्छादितमिति—पीडन-क्रियाविशेषणम्, एतेन रक्तधारा नोर्द्धमुत्तिष्ठति इत्यभिसन्धिः ॥ ३ ॥

कुठारिकाया वेधनप्रकारमाह वामहस्तेनेत्यादि ।—इतरेण—दक्षिणहस्तेन ताडयेत् । कय ताडयेत् ?—इत्याह, मध्यमाङ्गुल्येति । अङ्गुष्ठविष्टब्धमुक्तयेति ।—आदौ हस्ताङ्गुष्ठेनाविष्टभ्य मुक्तयेदित्यर्थः ॥ ४ ॥

इदानीमुक्तशस्त्रद्वय यस्मिन् प्रदेशे प्रयोज्यं, तत् आह, मांसल इत्यादि ।—मांसले प्रदेशे शिरां विध्यन् इति योज्यम्। व्रीह्यास्यमिति—व्रीहिमुखं शस्त्रम् ; व्रीहिमात्रक निक्षिपेत् प्रवेशयेत्। अस्थ्नामुपरि शिरां विध्यन् कुठारिकां यवार्द्धमात्रां निक्षिपेदित्यर्थः ॥ ५ ॥

अयोगे चिकित्सामाह, असम्यगित्यादि ।—वेल्लः,—विडङ्गः । अशुद्धावित्यादि ।—अशुद्धाविति—असम्यक्शुद्धौ । प्रस्थादिति ।—प्रस्थोऽत्र अर्द्धत्रयोदशपलम् । परमिति—ऊर्द्धम् । अत्रैव हेतुमाह, अतिस्रुतावित्यादि ।—तत्रेति—रक्तातिस्रुतौ । रसः,—मांसरस. । प्रक्षाल्येति—शिरामुखमित्यन्वयः । तैलप्रोताक्तमिति—तैलप्रोतः सुतैलः पिचुः, तेन आक्तमभ्यक्तम् ; उक्तं हि मध्यवाग्भटे—"सुतैलश्च प्रोतं

अशुद्धं स्रावयेद्भूयः सायमह्न्यपरेऽपि वा ।
रक्ते त्वतिष्ठति क्षिप्रं स्तम्भनीमाचरेत् क्रियाम् ॥
लोध्रप्रियङ्गुपत्तङ्ग-माषयष्ट्याह्वगैरिकैः ।
मृत्कपालाञ्जनक्षौम-मसीक्षीरित्वगङ्कुरैः ॥
विचूर्णयेद् व्रणमुखं पद्मकादि हिमं पिबेत् ।
तामेव वा सिरां विध्येद्व्यधात् तस्मादनन्तरम् ।
सिरामुखं वा त्वरितं दहेत् तप्तशलाकया ॥ ७ ॥
सशेषमप्यसृग्धार्यं न चातिस्रुतिमाचरेत् ।
हरेच्छृङ्गादिभिः शेषं प्रसादमथवा नयेत् ॥
मर्महीने यथासन्ने देशेऽन्यां व्यधयेच्छिराम् ॥ ८ ॥
न तूनषोडशातीत-सप्तत्यब्दस्रुतास्रजाम् ।
अस्निग्धास्वेदितात्यर्थ-स्वेदितानिलरोगिणाम् ॥

---

सिरामुखे दत्त्वा बध्नीयात्" इति। अशुद्धमिति—अशुद्धम्; सायमिति—तस्मिन्नेव दिने, अपरेऽह्नीति—द्वितीयदिने। स्तम्भनीं क्रियामिति—वक्ष्यमाणाम्। तामेव स्तम्भनीं क्रियामाह, लोध्रेत्यादि।—पत्तङ्गं—रक्तचन्दनम्, अञ्जनं—रसाञ्जनम्; क्षौममसी—दग्धक्षौमभस्म; क्षीरिणः,—वटोदुम्बरादयः, तेषां त्वक् अङ्कुराश्च। पद्मकादि—पद्मकादिगणः। हिममिति—शीतकषायं पिबेत्। तामिति—पूर्वविद्धाम्। व्यधात् तस्मादनन्तरमिति—पूर्वव्यधसमीपोर्ध्वमार्गे। सिरामुखमिति—विद्धसिरायाः व्रणमुखम् ॥ ६ । ७॥

दुष्टमपि रक्तं न निःशेषं स्रावयेदित्याह, सशेषमपीत्यादि।—सशेषमिति—दुष्टशोणितशेषम्। प्रसादमथवा नयेदिति—प्रसादनलेपनादिना। सिरा हि दृष्टा एव वेध्याः, न त्वदृष्टाः। उक्तं हि—"अप्रकाशायां सिरायां न विध्येत्" इति। अथ यत्र प्रदेशे तु वेध्यसिरा न दृश्यते, कथं तत्र सिराव्यधः कार्यः?—इत्याह, मर्महीन इत्यादि।—वाग्भटस्य।—तत्र वेध्यसिराणामदर्शने इति शेषः। अत एवोक्तम् पूर्वं वाग्भटे—"यथाकालमदर्शनः" इत्युक्तम्। यथासन्ने देशे इति।—यत्र देशे वेध्यसिरा न दृश्यते, तत् तत्समीपप्रदेशे वा अन्याः सिरा दृश्यन्ते, ता एव वेध्या इत्यर्थः। मर्महीन इति—मर्मवर्जिते ॥ ८ ॥

गर्भिणी-सूतिकाऽजीर्ण-पित्ताश्मश्वासकासिनाम् ।
अतिसारोदरच्छर्दि-पाण्डुसर्वाङ्गशोफिनाम् ।
स्नेहपीते प्रयुक्तेषु तथा पञ्चसु कर्मसु ॥
नायन्त्रितां शिरां विध्येन्न तिर्य्यङ्नाप्यनुत्थिताम् ।
नातिशीतोष्णवाताभ्रेष्वन्यत्रात्ययिकाद्गदात् ॥ ९ ॥
नात्युष्णशीतं लघु दीपनीयं रक्तेऽपनीते हितमन्नपानम् ।
तदा शरीरं ह्यनवस्थितासृग्वह्निर्विशेषेण च रक्षणीयः ।
नरो हिताहारविहारसेवी मासं भवेदा बललाभतो वा ॥ १० ॥
प्रसन्नवर्णेन्द्रियमिन्द्रियार्थानिच्छन्तमव्याहतपक्तिवेगम् ।
सुखान्वितं पुष्टिबलोपपन्नं विशुद्धरक्तं पुरुषं वदन्ति ॥ ११ ॥

इति शिराव्यधाधिकारः ॥

---

## अथ स्वस्थाधिकारः ।

दिनाचारविधिः,—

ब्राह्मे मुहूर्त्ते उत्तिष्ठेत् स्वस्थो रक्षार्थमायुषः ।
शरीरचिन्तां निर्वर्त्य कृतशौचविधिस्ततः ॥

---

येषां शिराव्यधो न कार्य्यस्तानाह, न त्वित्यादि ।—वाग्भटस्य ।—अन्यत्रात्ययिकाद्गदादिति—आत्ययिके तु व्याधौ एष्वपि कालेषु शिरा व्यद्धव्येत्यर्थः ॥ ९ ॥

रक्तस्रावानन्तरं यद्विधेयं तदाह, नात्युष्णेत्यादि ।—अनवस्थितासृगिति—प्रचुररक्तम् ॥ १० ॥

इदानीं शोणितादर्शनेऽपि विशुद्धरक्तज्ञानार्थं लक्षणमाह, प्रसन्नेत्यादि ।—वेगः पुरीषादीनाम् ॥ ११ ॥

इति शिराव्यधाधिकार विवृतिः ।

---

इदानीमातुरहितचिकित्सामभिधाय सुस्थवृत्तमाह, ब्राह्म इत्यादि ।—ब्राह्मो मुहूर्त्तः,—रात्रेः पश्चिमयामस्य शेषनाडिकाद्वयम् । शरीरचिन्ता—मूत्रपुरीषोत्सर्गादि·

अर्कन्यग्रोधखदिर-करञ्जककुभादिकम् ।
प्रातर्भुक्त्वा च मृद्वग्रं कषायकटुतिक्तकम् ।
भक्षयेद्दन्तपवनं दन्तमांसान्यबाधयन् ॥
नाद्यादजीर्णवमथु-श्वासकासज्वरार्दिती ।
तृष्णास्यपाकहृन्नेत्र-शिरःकर्णामयी च तत् ॥
सौवीरमञ्जनं नित्यं हितमक्ष्णोः प्रयोजयेत् ।
पञ्चरात्रेऽष्टरात्रे वा स्रावणार्थं रसाञ्जनम् ॥
ततो नावनगण्डूष-धूमताम्बूलभाग्भवेत् ॥ १ ॥
ताम्बूलं क्षतपित्तास्र-रूक्षोत्कुपितचक्षुषाम् ।
विषमूर्च्छामदार्त्तानामपथ्यञ्चापि शोषिणाम् ॥
अभ्यङ्गमाचरेन्नित्यं स जराश्रमवातहा ।
शिरःश्रवणपादेषु तं विशेषेण शीलयेत् ॥
वर्ज्योऽभ्यङ्गः कफग्रस्त-कृतसंशुद्ध्यजीर्णिभिः ॥ २ ॥
शरीरचेष्टा या चेष्टा स्थैर्यार्था बलवर्द्धिनी ।
देहव्यायामसंख्याता मात्रया तां समाचरेत् ॥ ३ ॥

---

कषायम् । तत इति ।—सौवीरविधेरनन्तरं, दन्तपवनं भक्षयेदिति ।—दन्ताः पूयन्ते पवि- त्रीक्रियन्ते अनेनेति दन्तपवनं—दन्तकाष्ठम् । भुक्त्वा चेति—भोजनानन्तरमपीत्यर्थः । दन्तकाष्ठं चैवं विधेयं नाद्यात्, नाद्यादित्यादि ।—नाद्यादित्यत्र दन्तपवनमित्यन्वयः । सुवीरा नाम नदी, तद्भवमञ्जनं सौवीराञ्जनम् । तदुक्तं यथा—"सौवीरसिन्धुदेशोत्थं ... सौवीराञ्जनमित्याहुः । सौवीराञ्जनमित्याहि चायुर्वेदार्थचिन्तकाः ॥" इति । नित्यं—प्रत्य- हम् । अत्र पञ्चरात्राष्टरात्रयोः ... नियमदर्शनार्थम् ; तेन ... चक्षुषोर्बले ... रसाञ्जनमिति भवति । रसाञ्जनमिति—"दार्वी क्वाथसमुद्भवम्" इत्यर्थः । "पञ्चरात्रेऽष्टरात्रे वा" इत्यत्र चरकपाठे—"सप्तरात्रेऽष्टरात्रे वा" इति वाग्भटे दृश्यते ॥ १ ॥

निषिद्धताम्बूलानाह, ताम्बूलमित्यादि ।—तन्निगदव्याख्यम् ॥ २ ॥

शरीरेत्यादौ ।—देहव्यायाम शरीरव्यायामं ... निरस्यति । संख्याता इति—संज्ञिता, या च चेष्टा—चलितता, एतेन भावप्रधाना ... कार्यकारणम्

वातपित्तामयी बालो वृद्धोऽजीर्णी च तं त्यजेत्।
उद्वर्त्तनं ततः कार्य्यं ततः स्नानं समाचरेत्॥
उष्णाम्बुनाऽधःकायस्य परिषेको बलावहः।
तेनैव चोत्तमाङ्गस्य बलहृत् केशचक्षुषोः॥ ४॥
स्नानमर्दितनेत्रास्य-कर्णरोगातिसारिषु।
आध्मानपीनसाजीर्ण-भुक्तवत्सु च गर्हितम्॥ ५॥
नीचरोमनखश्मश्रु-निर्मलाङ्घ्रिमलायनः।
स्नानशीलः सुसुरभिः सुवेषो निर्मलाम्बरः॥
धारयेत् सततं रत्न-सिद्धमन्त्रमहौषधीः।
सातपत्रपदत्राणो विचरेद् युगमात्रदृक्॥
निशि चात्ययिके कार्य्ये दण्डी मौली सहायवान्।
जीर्णे हितं मितञ्चाद्यान्न वेगानीरयेद्बलात्॥
न वेगितोऽन्यकार्य्यः स्यान्नाजित्वा साध्यमामयम्।
दशधा पापकर्माणि कायवाङ्मानसैस्त्यजेत्॥

---

क्रियमाणा चेष्टा निरस्यति। मात्रया तां समाचरेदिति—मात्रा चार्द्धशक्तिः। यदाह वाग्भटः,—"अर्द्धशक्त्या निषेव्यस्तु बलिभिः स्निग्धभोजिभिः" इति। अर्द्धशक्तिलक्षणं यथा—"कक्षे ललाटे नासायां स्कन्धे गात्रसन्धिषु। स्वेदः सञ्जायते यत्र बलार्द्धं तं विनिर्दिशेत्॥" इति॥ ३॥

निषिद्धव्यायाममाह, वातेत्यादि।—तेनैवेति—उष्णाम्बुना, उत्तमाङ्गस्य मस्तकस्य सेकः केशचक्षुषोर्बलं हरतीति बलहृत्॥ ४॥

निषिद्धस्नानमाह, स्नानमित्यादि॥ ५॥

नीचेत्यादि।—अङ्घ्री—पादौ, मलायनानि—गुदोपस्थादीनि, तानि निर्मलानि यस्य। निर्मलाम्बर इत्यत्र—अनुल्बणोज्ज्वल इति वाग्भटे पठ्यते; अनुल्बणोऽनुद्धत इत्यर्थः। युगं—हस्तचतुष्टयम्। आत्ययिके हस्तग्रहणसंज्ञे। वेगानिति—मूत्रपुरीष-वेगान्, ईरयेदिति—उदीरयेत्। वेगित इति—सञ्जातमूत्रपुरीषादिवेगः। दशधा पापकर्माणीति।—तद्यथा—"अदत्तानामुपादानं हिंसा चैवाविधानतः। परदारोपसेवा च कायिकं त्रिविधं स्मृतम्॥ पारुष्यमनृतञ्चैव पैशुन्यञ्चापि सर्वशः।

काले हितं मितं ब्रूयादविसंवादि पेशलम्।
आत्मवत् सततं पश्येदपि कीटपिपीलिकम्॥
आत्मनः प्रतिकूलानि परेषां न समाचरेत्॥
नक्तन्दिनानि मे यान्ति कथम्भूतस्य सम्प्रति।
दुःखभाङ् न भवत्येवं नित्यं सन्निहितस्मृतिः॥ ६॥

इति दिनाचारविधि।

ऋतुचर्य्या—

मासैर्द्विसंख्यैर्माघाद्यैः क्रमात् षडृतवः स्मृताः।
शिशिरश्च वसन्तश्च ग्रीष्म-वर्षा-शरद्धिमाः॥

---

असम्बद्धप्रलापश्च वाङ्मयं स्याच्चतुर्विधम्॥ परद्रव्येष्वभिध्यानं मनसाऽनिष्टचिन्तनम्। वितथाऽभिनिवेशश्च मानसं त्रिविधं स्मृतम्॥" इति। अविसंवादीति।—न पूर्वापरविरुद्धं, पेशलं—मधुरं, काले इति—यथोचितसमये। आत्मवत् इत्यादि।—परेषां न समाचरेदिति—परेषां प्रतिकूलानि अनिष्टानि न समाचरेत्। कुतो न आचरेत्?—इत्याह, आत्मन इत्यादि।—आत्मनः प्रत्यक्षतामेव आत्मसम्बन्धादित्यर्थः, किंवा आत्मनो यानि प्रतिकूलानि अनिष्टानि तानि परेषामपि नाचरेदिति। नक्तमित्यादि।—कथम्भूतस्य कीदृशस्य मम पापं कुर्वतः पुण्यं कुर्वतो वा इत्थं परिचरतो वा सम्प्रति नक्तं दिनानि यान्ति एवं नित्यं सन्निहितस्मृतिर्यः पुरुषो भवति, स दुःखभाक् न स्यात्, यस्मादेवं सर्वदा स्मरन् पुरुषो दुःखहेतुतया दुष्कृतं त्यजति, सुखहेतुतया च सुकृतमन्विच्छति इत्यर्थः॥ ६॥

इति दिनाचारविधि विवृतिः।

पारिशेष्यादृतुचर्य्यामपि सुव्यक्तितमाह, मासैरित्यादि।—षडृतव इति—शिशिर-वसन्त ग्रीष्म वर्षा शरद्धेमन्ता इत्यर्थः। यद्यपि शिशिरादि ऋतुषट्कमुत्तरायणकत्वेन प्रशस्तत्वादेव बोद्धव्यं, तथापि बलवृद्धिप्रकर्षत्वेन प्राधान्यात् प्रथमं हेमन्तविधिमाह,

बलिनः शीतसंरोधाद्धेमन्ते प्रबलोऽनलः।
सेवेतातो हिमे स्निग्ध-स्वाद्वम्ललवणान् रसान्॥
गोधूमपिष्टमाषेक्षु-क्षीरोत्थविकृतीः सुराः।
नवमन्नं वसां तैलं शौचकार्य्ये सुखोदकम्।
युक्त्यार्ककिरणान् स्वेदं पादत्राणञ्च सर्वदा॥ ७॥
प्रावाराजिनकौषेय-प्रवेणीकौचवास्तृतम्।
उष्णस्वभावैर्लघुभिः प्रावृतः शयनं भजेत्॥
अङ्गारतापसन्तप्त-गर्भभूवेश्मनि प्रियाम्।
पीवरोरुस्तनश्रोणीमालिङ्ग्यागुरुचर्चिताम्॥ ८॥

---

बलिन इत्यादि।—बलिन इत्यनेन प्राणिबलस्याग्निबलहेतुत्वं दर्शयति। यथा हि मालकाव्ये—"अभ्यासतादभिप्रायात् प्रीतिः प्रीतेर्बलं बलात्। अग्निरेव धातूनां बलं नाप्नुयात् वृत्ताम्॥" इति। किंवा बलिन इति—उपचयवतः। शीतसंरोधादिति कुम्भकारपचनपङ्कलेपन्यायात्, शीतेन बहिरनिर्गच्छदन्तरीष्मणः रोधात्। रसानिति—औदकानूपमांसरसान्। कीदृशान्?—स्वाद्वम्ललवणद्रव्यसंस्कारात् स्वाद्वम्ललवणान्, उक्तं हि चरके—"तस्मात् तुषारसमये स्वाद्वम्ललवणान् रसान्। औदकानूपमांसानां मेध्यानामुपयोजयेत्॥" इति। मृगस्थाने मांस इति पाठो वाग्भटपुस्तके नास्ति, टीकायाञ्च न व्याख्यात इति॥ ७॥

प्रावारेत्यादि।—वाग्भटस्य।—प्रावारः,—गुरुप्रावरणं कम्बलादि। अन्ये तु प्रावारं कार्पासलोमबद्धुत्तरीयम्। अजिनं—सुखस्पर्शं लोमशं चर्म। कौषेयं—क्रिमिकोषोद्भवं वस्त्रम्। प्रवेणी—शीणी, अन्ये तु प्रवेणी—तृणीवाणाख्यो वस्त्रविशेष इत्याहुः। कौचवः,—राङ्कवादि वस्त्रभेद इति केचित्, अन्ये तु कार्पासवस्त्रमेवेत्याहुः, चरके तु कौचवस्थाने कुथकेति पठ्यते, कुथकन्तु—चित्रकम्बल। उष्णस्वभावैर्लघुभिरिति।—नेपालकम्बल-प्रचुरतूलकपट्टादि। किं कृत्वा शयनं भजेत्?—इत्याह, अङ्गारेत्यादि।—अङ्गारतापेन सन्तप्तं यत् गर्भगृहं गृहकोष्ठकं तथा भूगृहञ्च तत्र अपदमत वडभीव्यवच्छेदाय। चरकेऽप्युक्तं—"सेवेत भूगृहगोष्ठमुष्णगर्भगृहं तथा" इति॥ ८॥

अयमेव विधिः कार्यः शिशिरेऽपि विशेषतः ।
तदा हि शीतमधिकं रौक्ष्यञ्चादानकालजम् ॥ ८ ॥
कफश्चितो हि शिशिरे वसन्तेऽर्कांशुतापितः ।
हत्वाग्निं कुरुते रोगांस्ततस्तत्र प्रयोजयेत् ॥
तीक्ष्णं वमननस्यादि कवलग्रहमञ्जनम् ।
व्यायामोद्वर्तनं धूमं शौचकार्य्ये सुखोदकम् ॥
स्नातोऽनुलिप्तः कर्पूर-चन्दनागुरुकुङ्कुमैः ।
पुराणयवगोधूम-क्षौद्रजाङ्गलशूल्यभुक् ॥
प्रपिबेदासवारिष्ट-सीधुमाध्वीकमाधवान् ।
वसन्तेऽनुभवेत् स्त्रीणां काननानाञ्च यौवनम् ॥
गुर्वम्लस्निग्धमधुरं दिवास्वप्नञ्च वर्जयेत् ॥ १० ॥
मयूखैर्जगतः स्नेहं ग्रीष्मे पेपीयते रविः ।
स्वादु शीतं द्रवं स्निग्धमन्नपानं तदा हितम् ॥
शीतं सशर्करं मन्थं जाङ्गलान् मृगपक्षिणः ।
घृतं पयः सशाल्यन्नं भजन् ग्रीष्मे न सीदति ॥
मद्यमल्पं न वा पेयमथवा सुबहूदकम् ।
मध्याह्ने चन्दनार्द्राङ्गः स्वप्याद्धारागृहे निशि ॥

---

एतद्विधिं शिशिरेऽप्यतिदिशति, अयमेवेत्यादि ।—अत्रैव हेतुमाह, तदेत्यादि ॥८॥

वसन्तविधिमाह, कफ इत्यादि ।—शूल्यं—भटित्रं, शूलपाचितमित्यर्थः । आसवारिष्टे—सुरालक्षणस्थानम् , सीधु—गुडासवः । अन्ये तु—"अथाकराधिकद्रव्यखदिराद्यैः कृतस्तु यः । सोऽरिष्टः स्यादासवस्तु द्रव्याक्वाथमृते यः कृतः ॥" इति । माध्वीकं—मधूकपुष्पकृतं मद्यम् ; अन्ये तु मार्द्वीकमिति पठित्वा मृद्वीकारसोऽयं मद्यमिति व्याचष्टे ।—माधवं,—मधुकृत आसवः । अनुभवेदित्यनेन श्लेष्मक्षयार्थं स्त्रीके मैथुनमनुजानाति, वसन्तस्यादानमध्यत्वादिति भावः । गुर्वित्यादौ—अत्रस्थाने उभयेष्वपपाठः ॥ १० ॥

ग्रीष्मविधिमाह, मयूखैरित्यादि ।—मयूखैरिति—किरणैः, तेजः इति—स्नेहं,

निशाकरकराकीर्णे प्रवाते सौधमस्तके।
निवृत्तकामो व्यजनैः पाणिस्पर्शैः सचन्दनैः।
सेव्यमानो भजेतास्यां मुक्तामणिविभूषितः॥
लवणाम्लकटूष्णानि व्यायामञ्चात्र वर्जयेत्॥ ११॥
भूवाष्पान्मेघनिष्यन्दात् पाकादम्लाज्जलस्य च।
वर्षास्वग्निबले क्षीणे कुप्यन्ति पवनादयः॥
भजेत् साधारणं सर्वमूष्मणस्तेजनञ्च यत्।
आस्थापनं शुद्धतनुर्जीर्णं धान्यं हृतान् रसान्॥
जाङ्गलं पिशितं यूषान् मध्वरिष्टं चिरन्तनम्।
दिव्यं कौपं शृतञ्चाम्भो भोजनन्त्वतिदुर्दिने॥
व्यक्ताम्ललवणस्नेहं संशुष्कं क्षौद्रवल्लघु।
नदीजलोदमन्थाहःस्वप्नायासातपांस्त्यजेत्॥ १२॥

---

पेपीयते—भृशं पिबति। ग्रीष्मेऽम्लत्वादुष्णत्वाच्च मद्यं न पेयमित्युत्सर्गः। यद्यत्यन्ताभ्यासात् सात्म्यत्यागेन सात्म्यत्यागजाः रोगा भवन्ति, तत्र किं प्रतिविधेयमित्याह,—अल्पं वा सुबहूदकं वा पेयमिति। मध्याह्ने इत्यादि।—धारागृह इति शेषः। निशीति परेण सम्बध्यते। वर्जनीयमाह, लवणेत्यादि॥ ११॥

वर्षाविधिमाह, भूवाष्पादित्यादि।—भूवाष्पः प्रभावादेव दोषत्रयकोपकः। अन्ये तु पित्तस्य इत्याहुः। मेघनिष्यन्दः,—शैत्याद्वातकफजनकः; अम्लपाकता च स्वभावतः पित्तकरी। अग्निबले क्षीणे इत्यनेन अग्निमान्द्यमपि त्रिदोषकोपनमिति दर्शयति। अग्निमान्द्यं हि अपाकाम्लपाकाभ्यां कफपित्तकारि, धातुपोषकरसानुत्पादनाच्च धातुक्षयेण वातकारि। एतेन वर्षासु अग्निमान्द्येन वातादिकोपः; वातादिकोपेन च वह्निमान्द्यमिति दर्शितम्; उक्तं हि वाग्भटे—"भूबाष्पेणाम्लपाकेन मलिनेन च वारिणा। वह्निनैव च मन्देन तेष्वित्यन्योऽन्यदूषिषु॥" इति। पवनादय इति—पवनप्रधानाः। साधारणमिति—त्रिदोषप्रशमनमग्निसन्दीपनञ्च। आस्थापनं—निरूहम्, हृतान् रसानिति—संस्कृतान् मांसरसान्; मध्वरिष्टं—मधुकृतमरिष्टं, चिरन्तनं—पुरातनम्। दिव्यमिति—आकाशजलम्। भोजनमित्यादि परेण सम्बध्यते।

वर्षाशीतोचिताङ्गानां सहसैवार्करश्मिभिः ।
तप्तानामाचितं पित्तं प्रायः शरदि कुप्यति ॥
तज्जयाय घृतं तिक्तं विरेको रक्तमोक्षणम् ।
तिक्तं स्वादु कषायञ्च क्षुधितोऽन्नं भजेल्लघु ॥
इक्षवः शालयो मुद्गाः सरोऽम्भः क्वथितं पयः ।
शरद्येतानि पथ्यानि प्रदोषे चेन्दुरश्मयः ।
शारदानि च माल्यानि वासांसि विमलानि च ॥
तुषारक्षारसौहित्य-दधितैलवसातपान् ।
तीक्ष्णमद्यदिवास्वप्न-पुरोवातान् परित्यजेत् ॥ १३ ॥
शीते वर्षासु चाद्यांस्त्रीन् वसन्तेऽन्त्यान् रसान् भजेत् ।
स्वादुं निदाघे शरदि स्वादुतिक्तकषायकान् ।
शरद्वसन्तयो रूक्षं शीतं घर्मघनान्तयोः ॥
अन्नपानं समासेन विपरीतमतोऽन्यथा ।
नित्यं सर्वरसाभ्यासः स्वस्वाधिक्यमृतावृतौ ॥

---

सगुक्तमिति—नातिरूक्षम् । क्षौद्रवदिति—मधुयुक्तम् । एतच्च वार्षिकदेहक्लेदशोधनार्थं ज्ञेयम् । वर्जनीयमाह, नद्यीत्यादि ।—उदमन्थं,—उदकप्रधानो मन्थः, अहःस्वप्नं,—दिवास्वप्नः ॥ १२ ॥

शरद्विधिमाह, वर्षेत्यादि ।—उचितं—समवेतम्, "उच समवाये" इत्यस्य रूपम् । समवायोऽत्र सततास्वादरूपः सम्बन्धः, तेन शीतसमवेताङ्गानामित्यर्थः । सहसा दृष्टतमेव । आचितमिति—सञ्चितं वर्षासु । प्राय इति वचनात् कदाचित् वर्षासु शीतमधुरादिसेवया पित्तचयाभावात् शरदि प्रकोपो न भवत्यपीति दर्शयति । तिक्तं घृतं—पञ्चतिक्तघृतादिकम् । क्वथितं पय इति—शृतं दुग्धम् । प्रदोषे चेति—चकारोऽवधारणे, प्रदोष एवेत्यर्थः । वर्जनीयमाह, तुषारेत्यादि ॥ १३ ॥

ऋतुभेदे रसानाह, शीत इत्यादि ।—वाग्भटस्य ।—शीत इति—हिमशिशिरयोः । आद्यान् त्रीन् इति ।—स्वाद्वम्ललवणरसान् । अन्त्यानिति—कटुतिक्तकषायान् । शरद्वसन्तयोरित्यादौ भजेदित्यनेन पूर्वोक्तेनान्वयः । अतः अन्यथेति ।—हिमशिशिरयोश्च विपरीतमिति—स्निग्धम्, उष्णमन्नपानं भजेदित्यर्थः । नित्यमि-

ऋत्वोरन्त्यादिसप्ताहावृतुसन्धिरिति स्मृतः।
तत्र पूर्वो विधिस्त्याज्यः सेवनीयोऽपरः क्रमात्॥
इत्युक्तमृतुसात्म्यं यच्चेष्टाहारव्यपाश्रयम्।
उपशेते यदौचित्यादोकसात्म्यं तदुच्यते॥
देशानामामयानाञ्च विपरीतगुणं गुणैः।
सात्म्यमिच्छन्ति सात्म्यज्ञाश्चेष्टितञ्चाद्यमेव च॥
तत्र नित्यं प्रयुञ्जीत स्वास्थ्यं येनानुवर्त्तते।
अजातानां विकाराणामनुत्पत्तिकरञ्च यत्॥

---

त्यादि।—नित्यं सर्वदा सर्वथा—यथा रसानामभ्यासः कार्यः। एवञ्च सति "शीते वर्षासु चाद्यांस्त्रीन्" इत्यादि यदुक्तं तद्विरुध्यते इत्यत आह, तस्याधिकारमित्यादि।—यस्मिन् ऋतौ यो रस. सेव्यत्वेनोक्तः तस्याधिकमात्रे तदभ्यासः तात्पर्यमिति भावः। ऋत्वोरित्यादि।—पूर्वऋतोरन्त्यसप्ताहः, तथा परऋतोराद्यसप्ताहः इति सप्ताहद्वयं ऋतुसन्धिरित्यर्थः। क्रमादिति—न सहसा त्यागशीलने विधेये। अत्र हेतुर्वाग्भटेनोक्तो यथा—"असात्म्यजा हि रोगाः स्युः सहसा त्यागशीलनात्" इति; सात्म्यात्यागादसात्म्यसेव नाचरेदित्यर्थः। उपसंहरति इत्युक्त-मित्यादि।—ऋतुसात्म्यप्रसङ्गेनाभ्याससात्म्यमप्याह, उपशेते इत्यादि।—उपशेते—सुखयति, अपथ्यमपि तद्विकारं न जनयति। कुतः?—इत्याह, औचित्यादिति—अभ्या-सात्। अपथ्यमपि हि निरन्तराभ्यासात् विषमिवाशीविषस्य नोपघातकं भवतीति भाव.। ओकः,—अभ्यासः, तेन सात्म्यमोकसात्म्यम्। देशसात्म्यं रोगसात्म्यञ्च दर्शयति, देशानामित्यादि।—देशानाम्—अनूपादीनां, गुणैः,—स्नेहगौरवादिभिः सह विपरीतगुणं स्नेहगौरवविपरीतरौक्ष्यलाघवयुक्तं मुद्गशाकलमांसमध्वादि। खाद्य-मदनीयम्, चेष्टितञ्च व्यायामादि, देशसात्म्यमिच्छन्त्यायुर्वेदविद इत्यर्थः। एवमामय-*विपरीतञ्च शीतविकारे उष्णमित्यादि रोगसात्म्यमित्यर्थः।* गुणशब्दोऽत्र धर्मवाच-वचन, तेन विपरीतप्रभावाणामपि ग्रहणम्; ततश्च प्रभाववैपरीत्यात् तद्विपरीतार्थ-कारिणाञ्च ग्रहणम्; आमयशब्देन आमयहेतुरपि गृहीतव्यः, तेन हेतुविपरीतस्यापि सात्म्यस्य ग्रहणम्। इदानीं ग्रन्थविस्तरभयात् संक्षेपेण स्वास्थ्यपरिपालनोपायमाह, तत्रेत्यादि।—स्वास्थ्यमिह उद्रेककधातुवैषम्यविरहितधातुसाम्यम्; तच्च साम्यमुभ-

नगरी नगरस्येव रथस्येव रथी यथा।
स्वशरीरस्य मेधावी कृत्येष्ववहितो भवेत् ॥ १४ ॥

इति स्वस्थाधिकारः।

गौड़ाधिनाथरसवत्यधिकारिपात्र-
नारायणस्य तनयः सुनयोऽन्तरङ्गात्।
भानोरनु प्रथितलोध्रवलीकुलीनः
श्रीचक्रपाणिरिह कर्तृपदाधिकारी ॥ १५ ॥
यः सिद्धयोगलिखिताधिकसिद्धयोगा-
नत्रैव निक्षिपति केवलमुद्धरेद्वा।

---

यथा परिपाल्यते। विशुद्धाहाराचाराभ्यां सदा क्षीयमाणशरीरपोषणेन प्रत्यवायहेतु-परिहारेण च, यथा दीपपरिपालनं स्नेहवर्त्तिदानात् पोषणेन क्रियते, तथा निर्वा-पकहेतुवाताद्यपरिहारेण च। तत्र श्लोकपूर्वार्द्धेन स्वास्थ्यपोषकहेतुरुक्तः, उत्तरा-र्द्धेन तु स्वास्थ्यविघातकहेतुपरिहारोऽभिधीयत इति न पौनरुक्त्यम्। अनुत्पत्तिरिह उत्पादकसामग्रीविघटनम्। इदानीमुक्तस्यानुक्तस्य च स्वस्थविधेरवधानेन कर्त्तव्यता-माह, नगरीत्यादि।—नगरी रथी चेति नगररथयोरधिपः, कृत्येषूक्तेष्वनु-क्तेषु च ॥ १४ ॥

इति स्वस्थाधिकारविवृतिः।

इदानीं ग्रन्थपरिसमाप्तौ पित्रादीनामुत्कीर्त्तनपूर्वकं स्वनाम निर्दिशन्नाह, गौडाधिनाथेत्यादि।—गौडाधिनाथः—नयपालदेवः, तस्य रसवती—महानसं, तस्याऽधिकारी, तथा पात्रमिति—मन्त्री, ईदृशो यो नारायणस्तस्य तनयः, सुनय इति—नीतिमान्, अन्तरङ्गादिति—लब्धान्तरङ्गपदविकात् भानोरनु नारायणस्य तनय इति योज्यं, तेन भानोरनुज इत्यर्थः। विद्याकुलसम्पन्नो हि भिषगन्तरङ्ग इत्यु-च्यते। लोध्रवलीकुलीन इति—लोध्रवलीसञ्ज्ञक दत्तकुलीनश्च ॥ १५ ॥

य इत्यादौ।—सिद्धयोग इति—वृन्दकृतसंग्रहस्य सञ्ज्ञा, तल्लिखितयोगमपेक्ष्या-धिका ये च सिद्धयोगा अत्र स्वयं उक्तास्तानधिकयोगान् अत्रैव सिद्धयोगे यो निक्ष-

भट्टत्रयत्रिपथवेदविदा जनेन
दत्तः पतेत् सपदि मूर्द्धनि तस्य शापः ॥ १६ ॥

समाप्तोऽयं ग्रन्थः ।

---

यति, तथा यो वा मानधिकस्त्रियोगान्वितः संग्रहादुद्धरेत् दूरीकुर्यात्, तस्य मूर्द्धनि ईदृशेन पुंसा दत्तः शापः पतेत्। कीदृशेन पुंसा ?—भट्टत्रयत्रिपथवेदविदा। कारिका, वृहट्टीका, तत्त्वटीकेति भट्टत्रयम् , त्रिपथवेदः,—ऋग्यजुःसामरूपः, तद्विदा ॥ १६ ॥

अस्तद्व्याख्यानतमसा सुप्तार्थे चक्रसंग्रहे ।
प्रकाशयितुमस्माभिर्निर्मिता तत्त्वचन्द्रिका ॥
आसीत् सभायां गौडेश्वरस्य लब्धप्रतिष्ठः किल शालिहीनः ।
वाणीविलासं कविसार्वभौमं विजित्य यः प्राप यशःसमुद्रम् ॥
काकुत्स्थवंशजनयपतोऽभूत् ततोऽपि लक्ष्मीधरसेननामा ।
तस्मादभूदुद्धरणस्तनूजस्तस्मादनन्तस्तनयोऽस्य जज्ञे ॥
मालञ्चिकाग्रामनिवासभूमेर्गौडावनीपालभिषग्वरस्य ।
अनन्तसेनस्य सुतो व्यधत्त टीकामिमां श्रीशिवदाससेनः ॥
टीकासु पूर्वैर्विहितासु येऽर्था ये वा गुरुभ्योऽधिगता मयापि ।
सन्त्यत्र ते यत्तदलं श्रमेण टीकान्तरान्वेषणजेन धीराः ॥
श्रीशिवदाससेनविरचिता तत्त्वचन्द्रिका समाप्ता ॥

---

सम्पूर्णोऽयं ग्रन्थः ।

---

# परिशिष्टम् ।

कफान्वितवायोर्लक्षणम् ।

प्राक्सञ्चितं यस्य बलासजालमन्वेति भूयः प्रबलः समीरः ।
तेनाहतस्तं प्रविधाय शुष्कं कुर्य्यात् प्रवृद्धोऽथ विकारवृन्दम् ॥
त्वक्स्फोटनं पाणिपदोक्षणानां दाहोऽतिशोषो वदनस्य तोदः ।
हृत्कम्पदौर्बल्यमतिश्रमत्वं भ्रान्तिर्मृषोद्भावनजल्पनञ्च ॥
वैस्वर्य्यमालस्यमथाविपाको ह्युदासचिन्ता रुचिगात्रभङ्गम् ।
निद्राक्षयं मूत्रपुरीषवद्धं तमःप्रवेशो गमनेऽप्यशक्तिः ॥
श्लेष्मान्वितोऽयं कथितः समीरः करोति नानागदवृन्दमेषः ॥

सूतिकाकालः ।

यावन्न दृश्यते पुष्पं यावद् वा चीरपोऽर्भकः ।
सूतां प्रजायिनीं विद्यान्मासा नष्टा दशैव तु ।
तस्मिन् यो जायते व्याधिः स स्मृतः सूतिकागदः ॥

अन्यच्च—

प्रसूता सार्द्धमासान्ते दृष्टे वा पुनरार्त्तवे ।
सूतिकानामहीना स्यादिति धन्वन्तरेर्मतम् ॥

सम्पूर्णम् ।